साहित्ये नित्ये सति जगन्निर्माणादिकार्यकरणकर्मण्यता, तदभावे लौकिकलोकवदौदासीन्यं च प्रमाण-प्रमाणीकरणार्थेन तर्केण प्रथमत एव प्रतिपादयद्भिः, तथा तत्तद्वाक्याभासैः स्वस्वमहिम्नैव सर्गादिकर्तृत्वेन प्रागभिमतानां हरिहरब्रह्मादीनामपि परमेश्वरीसमुपासकत्वं तत्प्रसादाधिगतवैभवत्वं चागम-प्रसिद्धं प्रकटयद्भिः, तत्राप्यनेकजन्मजातसंजातसुकृतजातानां प्रणमनस्तवनादिविधानसामर्थ्यं व्यतिरेकेण तदभाववतां तदसामर्थ्यं च निरूपयद्भिः, तद्द्वारा चात्मनोऽतिभक्तस्य भगवतीमभिमुखयद्भिः, 'सखीषु स्मेरा ते मयि जननि दृष्टिः सकरुणा' इति वदिष्यद्भिर्भगवत्पादैरेवाविष्कृतमिति देवतायाः भगवत्याः सर्वोत्कृष्टताध्वनिः। अत्रादौ 'विद्यासु श्रुतिरुत्कृष्टा रुद्रैकादशिनी श्रुतौ। तत्र पञ्चाक्षरी तस्यां शिव इत्यक्षरद्वयम्॥' इत्यादिपुराणवचनादशेषविशेषशब्दविशिष्टस्य, 'शिवः शूली महेश्वरः', 'श्वःश्रेयसं शिवं भद्रम्', 'शिव एको ध्येयः शिवंकरः', 'अतो मोक्षार्थिभिः सर्वैः शिव एव शिवंकरः। ध्येयः सर्वं परित्यज्य शिवादन्यत्तु दैवतम्॥' इत्यादिकोशश्रुतिस्मृत्यादिप्रसिद्धदेवताकल्याण-समभिधायिनोऽनन्तकल्याणगुणवचनस्य, 'शिवेति मङ्गलं नाम यस्य वाचि प्रवर्तते। भस्मीभवन्ति राजेन्द्र महापातककोटयः॥' इति वचनात् अभिवदनमात्रेणैव समस्तदुरितविदारकस्य शिवशब्दस्य, तथा च शं सुखं तनुते, 'ऊष्माणः सुखखेदश्रीनिर्वाणनिचयः क्रमात्' 'शो वल्मीके शिवे कूर्मे' इत्यादिच्छन्दःशासनकोशप्रसिद्धेः समग्रसौख्यप्रदानप्रख्यातस्य लक्ष्मीबीजस्य प्रबन्धप्रधानाभिधेय-भगवतीप्रकाशकषोडशाक्षरीमन्त्रालंकारकमलाबीजप्रधानस्य स्मरणमात्राभिमतेष्टप्रदातुः प्रथमोष्मणः, तथा सुधाबीजत्वेन बहुकृतेष्टवर्यधुर्यतयाऽतिकृपालवालविलोचनशैलभूपालबालालीलाविलासेन कालिदासेन कविकुलशिरोमणिना रघुवंशकाव्यमुखे 'वागर्थाविव' इति श्लोके प्रथमोपात्ततया, तथा भूवादिसूत्रे 'भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते' इत्यभिधाय 'माङ्गलिकाचार्यो मङ्गलार्थं मध्यतो वकारं प्रयुङ्क्ते' इत्याद्युक्त्वा भगवद्भिर्भाष्यकृद्भिर्भाषितमङ्गलार्थत्वस्य वकारस्य च पाणिनि-वद्द्वितीयतया निर्देशात्, तथा 'प्रकृत्या यगणो नित्यं श्रीकरः कथ्यते बुधैः। करोत्यर्थानादिलघुर्य-गणो वारिदैवतः॥' 'यो वार्यादिलघुर्धृतिम्' इत्यादिवचनैरमृतमयत्वेनाखिलमनोरथसंधानसमर्थ-तया 'यामिनीवेन्दुना मुक्ता नारीव रमणं विना। लक्ष्मीरिव ऋते त्यागान्न वाणी भाति नीरसा॥' इति वचनाद्विष्ण्वादिसर्वदेवतात्मकनवरसालंकारम् 'कृत्वा काव्यमवाप विश्वमहितां कीर्त्तिं कवि-ग्रामणीः श्रीहर्षः श्रियमद्भुतां हरिहरो लोकेऽर्जुनक्ष्माभुजः। मृत्योस्त्रासमपाचकार मलयक्ष्मामण्ड-लाखण्डलस्तत्किंचिन्न विलोक्यते न किल यत्काव्यात्समुन्मीलति॥' इत्यादिनाऽतिप्रशस्ततयाऽशेष-कवीश्वरादृतं व्यञ्जनावृत्त्यैव धर्माधर्मप्रवर्तनानिवर्तनासाधारणकारणं काव्यप्रबन्धमेव सर्वनिबन्ध-नातिशयितं मन्वानेनादिकविना भगवता वल्मीकजन्मना महत्यादिकाव्यकवयितृसुचरितफले रामायणाभिधेये प्रबन्धे 'तपःस्वाध्यायनिरतम्' इति प्रथमादृतस्यातिसौम्यस्य यगणस्य चोपादाना-देतत्प्रबन्धाध्येत्रध्यापकपाठकानां समस्तसमीहितावाप्तिर्भगवतीप्रसादान्निरन्तरायं भवतीति सूचि-

तम् । वर्णगणाद्यशेषदोषदूषणनिपुणयोर्देवतामङ्गलाभिधानयोः कृत्स्नाभीष्टप्रदानप्रवीणता कियती वक्तव्या? न हि समूलघातं घातुकान्निहत्यातिरिक्तजनावनकर्मठस्य प्रभोस्तत्संस्मरणमात्रेणैव दुर्जनपलायने जाते तस्याश्रितसज्जनपरिपालनदाक्ष्यमद्भुतं वक्तव्यम् । यदाहुः 'मङ्गलार्थाभिधाने च देवनामाङ्कनेऽपि वा । गणो न दूष्यो वर्णश्च देवताधिष्ठिताश्मवत् ॥' 'भद्रादिवाचकं यद्भवति पदं यच्च देवतावाचि । तदनिन्द्यमाहुरार्याः काव्यादौ वर्णतोऽपि गणतोऽपि ॥' इति । आहुश्च भाष्यकाराः 'सिद्धे शब्दार्थसंबन्धे' इत्यत्र सिद्धपदव्याख्यानावसरे—'माङ्गलिक आचार्यो मङ्गलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते वीरपुरुषाण्यायुष्मत्पुरुषाणि चाध्येतारश्च सिद्धार्था यथा स्युः' इति । प्रसादकृतोऽप्याहुः 'आदौ मङ्गलार्थे शब्दे प्रयोज्ये श्रीशब्दप्रयोगोऽध्येतॄणां लक्ष्मीसौभाग्यादि भूयादित्येवमर्थम्' इति । शिवशब्दोऽयमपि सिद्ध्यादिमङ्गलशब्देषु लक्षणदीपिकायां परिगणितो द्रष्टव्यः । न च श्लोकशतनिबद्धस्य ग्रन्थस्याकाव्यरूपत्वात्काव्यादौ कर्तव्येयं वर्णगणादिमीमांसा नात्रोपयुज्यत इति वाच्यम् । 'व्यङ्ग्यप्रधानमुत्तमं काव्यम्,' 'अदोषौ सगुणौ सालंकारौ शब्दार्थौ काव्यम्,' 'शाणोल्लीढमिव ज्वलद्द्युति पदं बन्धोऽर्धनारीश्वरश्लाघालङ्घनजाङ्घिको दिवि लतोल्लिलेव चार्थोद्गतिः । किंचिच्चूर्णितचन्द्रमण्डलगलत्पीयूषहृद्यो रसस्तत्किंचित्कविकर्ममर्म न पुनर्वाग्डिण्डिमाडम्बरः ॥' इत्यादिकाव्यलक्षणलक्षितत्वेनास्यापि रामायणादेरिव काव्यशब्दभाजनत्वोपपत्तेः, व्यङ्ग्यप्रधानतयोत्तमकाव्योक्तियोग्यतावगतेश्च । न हि सर्गनिबन्धनाभावोऽकाव्यताप्रयोजकः, 'असर्गनिबन्धनं सूर्यशतकादिकमपि काव्यमेव' इति विद्यानाथोक्तिव्याघातापत्तेः, सूर्यशतककर्तुर्मयूरकवेः काव्यकर्तृषु श्रीहर्षादिषु 'काव्यं यशसे—' इत्यादिश्लोकतात्पर्यविवरणावसरेषु परिगणनाविधायककाव्यप्रकाशकारोक्तिविरोधापत्तेश्च । वस्तुतस्त्वत्रानन्दलहरी सौन्दर्यलहरीति व्यवहारेण, एतत्प्रबन्धव्याख्यात्रा लक्ष्मीधरेण तत्र तत्र 'अहः सूते सव्यम्—' इत्यादिश्लोकेषूत्तमं काव्यमिति कथनेन, अपरेण व्याख्यात्रा रामकविनोन्मीलनादिपरिच्छेदभेदोक्त्या चेदं मेघसंदेशवत्काव्यं भवितुमर्हत्येव । किं चास्य काव्यरूपता 'कवीनां संदर्भस्तबकमकरन्दैकरसिकम्' 'शिवे शृङ्गारार्द्रा' इत्यादिना देव्या नवरसात्मककाव्यप्रबन्धाकर्णनौत्सुक्यं वर्णयतां 'शरज्ज्योत्स्ना—' इत्यादिश्लोकत्रयेण भगवत्यनुग्रहात्काव्यकर्तृत्वं कथयताम् 'दयावत्या दत्तं द्रविडशिशुरास्वाद्य तव यत्कवीनां प्रौढानामजनि कमनीयः कवयिता' इति वदिष्यतामाचार्याणां संमतैवेति दिक् । ननु प्रबन्धप्रधानफलभाजो नायकस्यात्रानधिकृतत्वान्नेदं काव्यमित्यवसीयत इति वक्तुं न युक्तम्, सकलजगत्कारणभूताया हरिहरादिसर्वदेवतोपासिताया भगवत्या एवात्र नायिकात्वेनाभिमतत्वात् । न च लोके स्त्रीनायककाव्यानुपलब्धिः, रामायणस्यैवोपलब्धत्वात् । रामायणे हि 'काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत्' इति वदतो मुनेः सीताया एव नायिकात्वेनाभिमतत्वात् । आहुश्च तद्व्याख्यातारः 'सीतायाश्चरितमित्यनेन तस्याः

प्रबन्धनायिकात्वं सूचितम्; तेन प्रबन्धस्य लक्ष्मीप्राधान्यं द्योतितम्; तस्यैवोपपादकं रामायणमिति कृत्स्नस्य सीतायाश्चरितत्वेऽपि रामायणव्यपदेशो रामचरितस्य तदुपयुक्तत्वज्ञापनार्थः' इति ॥

अत्र भगवतिपदं देवतासंमुखीकरणार्थमध्याहर्तव्यमिति लक्ष्मीधरः। तदसारम्, आचार्यप्रबन्धं व्याख्यातुमुद्युञ्जतः प्रथमत एव तत्र दोषोद्घाटनरूपस्यातिजघन्यस्याश्रुतपदानुसंधानलक्षणस्याध्याहारस्य कल्पनानर्हत्वात्, शिवः शक्त्येत्यादिवाक्यस्य संबुद्ध्यपेक्षां विनैव परिपूर्णतयाऽपरिपूर्णतावस्थालब्धावकाशस्याध्याहारस्य प्रवेशाभावाच्च। न च 'स च यत्र क्वचिदवस्थितस्याप्यविरुद्धः' इति शास्त्रदीपिकायामुक्तत्वाद्व्यपेतवाक्यश्रुतपदानयनरूपस्य तस्य प्रवेशः संभवत्येव, यथा विश्वजिद्वाक्ये फलसंबन्धाविधातरि ज्योतिष्टोमवाक्यश्रुतस्वर्गकामपदाध्याहारस्तद्वदिति वाच्यम्, अस्यैव प्रथमश्लोकत्वेन देवीसंबुद्ध्यन्तवतां पूर्वतरश्लोकान्तराणामभावात्तदनवकाशात्, तत्कल्पनाप्रयोजकाभावाच्च। न च संमुखीकरणमेव तत्प्रयोजनम्, तस्य चानुपयुक्तत्वमिति वक्ष्यमाणत्वात्, संबोधनप्रधानस्य युष्मच्छब्दस्यात्र प्रयोगाभावेन तत्कल्पनानवकाशाच्च। न चोत्तरवाक्ये तत्प्रयोगोऽस्तीति वाच्यम्, पूर्ववाक्ये संबोधनमपहायान्यत्र तत्कल्पने वाक्ययोरसांगत्यप्रतीतेः। न च यथा 'अथातो धर्मजिज्ञासा,' 'अथातो ब्रह्मजिज्ञासा' इत्यादौ प्राथमिकसूत्रान्तराभावेऽप्यश्रुतपदानुसंधानरूपकर्तव्यपदाध्याहारो भाष्यकारादिभिरङ्गीकृतः, तद्वदत्रापि भविष्यतीति वाच्यम्, सूत्राणां श्रुत्यनुगृहीतन्यायरूपत्वेन तत्र तव्यप्रत्ययान्ताध्ययनश्रवणविधिगर्भस्थस्यैव कर्तव्यपदस्य तयोरैकार्थ्यावगमायाध्याहारोऽङ्गीकृतः। तदुक्तं विवरणाचार्यैः 'मूलमूलिनोः समानार्थकत्वाय कर्तव्यपदमध्याहर्तव्यम्' इति। अन्यत्राप्युक्तम्, "अध्ययनश्रवणविधिसमानार्थकत्वाय कर्तव्यमिति पदमध्याहर्तव्यम्; अध्याहृतं च भाष्यकृता 'धर्मजिज्ञासा कर्तव्या' 'ब्रह्मजिज्ञासा कर्तव्या' इति; तथा च धर्मब्रह्मणोर्ज्ञानाय विचारः कर्तव्य इति सूत्रयोः श्रौतार्थः संपद्यते" इति। प्रकृते च भगवतिपदाध्याहारमूलवचनान्तरानुपलम्भात्। न च 'परोऽपि शक्तिरहितः शक्तः कर्तुं न किंचन। शक्तः स्यात्परमेशानि शक्त्या युक्तो भवेद्यदि ॥' इति चतुःशतीयवचनस्यैवैतच्छ्लोकप्रणयनमूलत्वेनात्रत्यमहेशानिपदापरपर्यायभगवतिपदाध्याहरणं साध्वेवेति वाच्यम्, 'सत्यज्ञानमयी साक्षात्परब्रह्मस्वरूपिणी। ब्रह्मविष्णुमहादेवा अस्याः पुत्रा वरानने। चतुर्थोऽहं महेशानि सुतस्तस्या महेश्वरि। तस्याः पतिर्ब्रह्मरूपी स्वयं साक्षात्सदाशिवः। सैव साक्षाज्जगद्धात्री सैव विश्वेश्वरेश्वरी ॥' इति दक्षिणामूर्तिसंहितोक्तेः स्वजायां महेश्वरीं प्रति स्वपितृशिवसामर्थ्यप्रकटना महेशानेन; तत्र पारोक्ष्योक्तिरूपत्वेनात्र तन्मूलताकल्पने पारोक्ष्योक्तिप्रसञ्जनात्। न चेष्टापत्तिः, शक्तिभगवत्यभेदबोधकयुष्मच्छब्दघटितोत्तरसंदर्भविरोधापत्तेः। तस्मान्नाध्याहारकल्पना युक्ता। ननु च 'उपर्यध्यधसः सामीप्ये' इत्यनुशासनादधि समीपादाह्रियत इति व्युत्पत्त्याऽध्याहारशब्दोऽत्र समीपश्रुतपदानुसंधानलक्षणानुषङ्गार्थोऽस्त्विति वाच्यम्, 'संनिधावनुषङ्गः स्यादध्याहृतिरसंनिधौ' इति वेदभाष्यकारोक्ततद्भेदव्यवहारोच्छे-

दाङ्गीकारेऽपि पूर्वतरश्लोकान्तराणामभावात्, उत्तरश्लोकेषु भगवतीवाचकसंबुद्ध्यन्ताभावात्, भावे वोत्तरश्रुतानां पूर्वत्रानुषञ्जनस्य शास्त्रकारासंमतत्वात्, तादृशार्थस्यानुषङ्गपदार्थीभावानर्हत्वाच्च तत्कल्पनानौचित्यात्। अत एव व्याकरणादौ 'उपदेशेऽजनुनासिक इत्', 'हलन्त्यम्' इत्यादौ पूर्वसूत्रोपात्तानामेव पदानामनुषङ्गो नोत्तरश्रुतानामित्यलमतिप्रसङ्गेन ॥

यत्तूक्तं रामकविना—"अत्र श्लोके भगवत्याः संबुद्धिपदं नास्ति, अतोऽध्याहर्तव्यमिति ये केचिदाहुस्ते भ्रान्ताः, 'हरि' इति पदस्य संबुद्धिरूपेण वर्तमानत्वात् 'हरिर्ना कपिलेत्रिषु' इति वचनात्कपिलवाचिनो हरिशब्दस्य भेद्यलिङ्गत्वात्; ततश्च 'कृदिकारादक्तिनो ङीष्वक्तव्यः' इति ङीषि कृते 'हरी' इति दीर्घान्तो गौरीशब्दसमानार्थः। तस्य संबुद्धौ हे गौरीतिवद्धे हरीति भवति, इति।" तदप्यचारुतरम्, हरीशब्दस्य भगवतीवाचकत्वाभावात्, तद्वाच्यताकल्पनेऽप्रयुक्तदोषापत्त्या परोक्तमध्याहारदोषं परिहर्तुमुद्यतस्यात्मनो व्यवहितपदान्वयरूपदोषापाताच्च। न चाकाङ्क्षायाः संनिधानाद्बलीयस्त्वात् 'यस्य येनार्थसंबन्धो दूरस्थेनापि तेन सः। अर्थतोऽप्यसमर्थानामानन्तर्यमकारणम् ॥' 'अर्थतोऽप्यसमर्थानामानन्तर्येऽपि संबन्धः' इति मीमांसावार्तिकसूत्राभ्यां न व्यवहितपदान्वयनं दोष इति वाच्यम्, आलंकारिकैस्तदनभ्युपगमात्। न च तत्रैव संबुद्ध्यन्तत्वेनान्वीयतामिति वाच्यम्, वाक्ययोरसांगत्यप्रतीतेः। यच्चोक्तं "त्रिपुरसुन्दरीमहाभट्टारिकायाः 'बालार्कमण्डलाभासाम्' इत्यादिध्यानेषु कपिलवर्णस्य प्रसिद्धत्वाद्धरिशब्दप्रयोग" इति, तदप्यज्ञानविलसितम्, 'पलाशपुष्पसंकाशां जपापुष्पसमप्रभाम्। उद्यद्भानुसमप्रख्यां पद्मरागसमद्युतिम् ॥ देवीमारक्तसर्वाङ्गीम्' इत्यादिना मन्त्रचिन्तामण्यादिषु देव्या रक्तवर्णवत्ताप्रसिद्धेः, 'कवीन्द्राणां चेतःकमलवनबालातपरुचिं भजन्ते ये सन्तः कतिचिदरुणामेव भवतीम्।' 'दिवं सर्वामुर्वीमरुणिमनिमग्नां स्मरति यः,' 'पावकाब्धौ निमग्नं यो दिवं भूमिं विचिन्तयेत्,' 'अनाद्यन्ता शंभोर्जयति करुणा काचिदरुणा,' 'प्रकृत्या रक्तायास्तव सुदति दन्तच्छदरुचेः' इत्यादिश्लोकेषु भगवतीस्वरूपं वर्णयतामाचार्याणां देव्याः कपिलरूपतानङ्गीकारात्। 'यानि सौम्यानि शोणानि शृङ्गाररसभाञ्जि च। तान्यम्बाशक्तिपातेन संपन्नानीति निश्चयः ॥' इत्यागमवचनमूलक–'प्रवालेषु पद्मरागेषु कुङ्कुमेषु बालादित्येषु तटित्सु वह्निशिखासु' इत्यादिना देव्यारुण्यप्रतिफलनवर्णनारूप–'प्रकृत्या रक्तायाः' इति श्लोकीयस्वोक्तिविरोधापत्तेश्च। यच्चोक्तं कपिलकपिशपाटलरक्तादीनां प्रायिकत्वादैक्यमेवेति, तदपि धीवर्गे वर्णभेदं परिगणयतोऽमरसिंहस्यासंमतत्वाच्चिन्त्यमेव। न च कपिलवर्णे रक्तवर्णस्यापि प्रतिभानाल्लक्षणयाऽस्य तद्वाचकत्वं भविष्यतीति वाच्यम्, वाच्यार्थानुपपत्त्यादिलक्षणाबीजाभावेऽपि लौहित्यलक्षणामङ्गीकृत्य भगवतीरूपार्थकल्पने गौरवापत्तेः, अभिधाबोधितत्वेन वर्णान्तरस्य परिहरणीयत्वात्। न च बालार्कमण्डलस्य कपिलवर्णताऽङ्गीकर्तुं शक्या, 'शोणानि भौमतीक्ष्णांशुताम्रकुङ्कुमतक्षकाः। गुञ्जेन्द्रगोपखद्योतविद्युत्कुञ्जरबिन्दवः। दृग्बिम्बाधरजिह्वासृङ्-

मांससिन्दूरधातवः ॥' इत्यादिना रक्तान्परिगणयता 'तरुणतरणिकान्तिव्रातसंसर्गरक्तकमलदलनिकायप्रायकामप्रभोर्मिः । अभिनवरविरश्मिद्योतितप्राच्यभूभृच्छिखरलसदशोकस्मेरपुष्पोपमानः ॥' इत्यादिना रक्तानामुपमानीकरणचातुरीमुपदिशता काव्यकल्पलताकृताऽरुणारुणस्य रक्तवर्णताकथनेन तद्विरोधापत्तेः । 'वहन्ती सिन्दूरं प्रबलकबरीभारतिमिरत्विषां बृन्दैर्बन्दीकृतमिव नवीनार्ककिरणम्' इति सीमन्तमध्यवर्ति सिन्दूरं काव्यकल्पलतायां शोणत्वेनोपवर्णितं नवीनकिरणत्वेनोत्प्रेक्षितवतामाचार्याणामसंमतत्वाच्च । किं च भगवत्युपासकस्य हरेरभिधानाभावाच्च न हरिपदस्य संबुद्धिपरता वक्तुं शक्या । न चादिशब्देन विष्णोर्ग्रहणमित्युक्तमेवेति वाच्यम्, आदिशब्दस्य श्रुतिस्मृतिकोशादिषु विष्णुवाचकत्वादर्शनात् । न च तथाऽपि सर्वेषामादित्वात्, आदित्वादादिरिति योगबलेन कल्प्यत इति वाच्यम्, व्याख्येयप्रबन्धप्रतिपाद्यदेव्यौत्कट्यहानिप्रसङ्गात्, 'ब्रह्मविष्णुमहादेवा अस्याः पुत्रा वरानने' इत्याद्यागमवचनेभ्यस्तदसिद्धेश्च । यच्च नारायणस्यादिशब्दवाच्यत्वानयनाय 'अप एव ससर्जादौ' इत्यादिस्मृत्युपन्यसनं कृतं तदपि न, 'यस्याज्ञया जगत्स्रष्टा विरिञ्चिः पालको हरिः । संहर्ता कालरुद्राख्यो नमस्तस्मै पिनाकिने ॥' इत्यादिवचनेभ्यः पालनाधिकृतस्य विष्णोः सर्जनाधिकाराभावात् । न चादिसृष्टजलशायित्वादादिर्नारायण इति लक्षणयोच्यत इति वक्तुं युक्तम्, क्लिष्टकल्पनाप्रयोजनाभावात् । 'इन्द्रश्च विश्वे च देवाः' इत्याद्यारण्यकोपनिषदुक्तेन्द्रादिकथनयोग्यस्य तस्य हरिपरताकल्पनानौचित्याच्च । न च 'आदिनारायणः' इत्यादिप्रयोगात्तत्परत्वं कल्प्यम्, 'आदिशक्तिः,' 'आदिलक्ष्मीः' इत्यादिप्रयोगात्तत्परत्वकल्पनस्याप्युचितत्वात् । वस्तुतस्तु, 'विष्णुः शिवः सुरज्येष्ठो मनुश्चन्द्रो धनाधिपः । लोपामुद्रा तथाऽगस्त्यः स्कन्दः कुसुमसायकः । सुराधीशो रौहिणेयो दत्तात्रेयो महामुनिः । दुर्वासा इति विख्याता एते मुख्या उपासकाः ॥' इत्यादिमानसोल्लासादिवचनेभ्यः सर्वसुरर्वसूपासकाग्रगण्यत्वेन मन्त्रप्रथमखण्डऋषित्वेन च 'हरिस्त्वामाराध्य—' इति वक्ष्यमाणोक्त्या च प्रथमोपात्तस्य हरेः संबुद्धिपदलाभलोभेन प्राधान्यमपहाय कस्यचिन्नामग्रहणादादिसृष्ट्यग्रहणोक्तावतिशयितोपासकत्वकथनोपक्रमभङ्गादाचार्यतात्पर्यपर्यालोचनाविधानं न भवेदिति न हरिपदं संमुखीकरणार्थकं भवितुमर्हतीति परस्य भ्रान्ततामापादयितुं प्रवृत्तोऽयं स्वयमागमरहस्यापरिशीलनभ्रान्तः सन् 'भीषयितुं गतो बिभाय' इति लोकन्यायमनुससारेत्यलमतिशोधनेन ॥

कैवल्याश्रमातु— संबुद्धिपदमीमांसामकुर्वाणाः पूर्वोक्तोभयमतानुवादितयाऽस्मदुक्तोत्तरैः पूज्या एवेति न पृथक्चिन्तितव्यम् । वस्तुतस्त्वत्र न संबुद्धिवाचकपदापेक्षा, तत्कल्पने 'शिवः शक्त्या—' इत्याद्युक्तेः पारोक्ष्यप्रसञ्जनद्वारा शक्तिभगवत्योर्भेदप्रतीतिप्रसङ्गात् । न चेष्टापत्तिः, उत्तरसंदर्भविरोधापत्तेः ; शक्तिपदस्य भगवतीपरत्वाङ्गीकारेऽपि 'त्वया' इत्यनुच्यमाने संदेहानिवृत्तेः, शक्तिशिवयोर्माहात्म्यवर्णनार्थं भगवतीसंमुखीकरणानुपपत्तेश्च । न च पौराणिककथावदिद-

मप्यन्यार्थं भवत्विति शङ्कनीयम्, करिष्यमाणयुष्मच्छब्दव्यवहारेण तयोरभेदावगमात्। अथापि यद्यभेदबोधनार्थमेव त्वामित्युत्तरवाक्ये युष्मच्छब्दोपादानात्, आचार्यैर्लघुस्तवे 'माया कुण्डलिनी—' इत्यादिनाऽभेदस्योक्तत्वात्, संबोधनाकाङ्क्षा न विरमतीति यद्यभिसंधिस्तर्ह्यत्र डवतुप्रत्ययान्तं भवतीति पदमेव तत्पदत्वेनोच्यताम्। न ह्यस्मिन्योजनेऽध्याहारादिदोषाः प्रतिभान्ति। न च तिङन्तपदाभावः शङ्क्यः, शक्तशब्दस्य निष्ठान्तस्य श्लिष्टतयैव भवनार्थकथनशक्तत्वात्; प्रत्युत तत्प्रयोगे पौनरुक्त्यं दुष्परिहरं भवेत्, 'गतार्थानां प्रयोगे पौनरुक्त्यं दोष इति वामनः' इति तत्र तत्र मल्लिनाथपादोक्तेः। अतः 'भवति' इत्येतदेव संबुद्धिपदं योजनीयम्। तथा चायमर्थः— भाति प्रकाशते स्वयंप्रकाशरूपत्वादिति भवती; यद्वा भासयत्युपासकलोकं सर्वमिदं चेति भवती, 'तस्य भासा सर्वमिदं विभाति' इति श्रुतेः। भातेर्डवतुप्रत्यये डित्त्वसामर्थ्याद्भस्यापि टेर्लोपे 'उगितश्च' इति ङीपि संबुद्धौ नदीह्रस्वः। हे भवति स्वयंप्रकाशरूपे भक्तजनवत्सले भगवति, उत्तरार्धोक्तहरिहरादिसर्वदेवसेव्यत्वार्थोपयोगीदं संबोधनम्। अथ वा, भवति जायते त्रिपुरसुन्दर्यादिरूपेण जगुदनुग्रहायेति वा, भवत्यनया शंभुः शक्तिमानिति वा भवती। सर्वादिगणे उगित्त्वेन पठिताद्भवतेः 'उगितश्च' इति ङीपि नदीह्रस्वः। अथ वा, भवं संसारं भक्तजनानां कल्याणं वा तनोतीति भवती, संसारस्य कल्याणस्य वा कल्पिकेत्यर्थः। भवं शिवं तनोति समर्थमिति वा भवती। भवस्य संसारस्य कल्पनाद्वा भवती। तनोतेरौणादिको डिप्रत्ययः। ततः 'कृदिकारादक्तिनो ङीष्वा वक्तव्य' इति ङीष्, नदीह्रस्वः। तस्याः संबुद्धिर्हे भवति। निराकारस्यापि परमेश्वरस्य जायाभावापत्यादिसंसारकल्पिके देवि। उक्तं चाचार्यैः सकलजननीस्तवे—'सुता दक्षस्यादौ किल सकलमातस्त्वमुदभूः सदोषं तं हित्वा तदनु गिरिराजन्यतनया। अनाद्यन्ता शंभोरपृथगपि शक्तिर्भगवती विवाहाज्जायाऽसीत्यहह तव को वेत्ति चरितम्॥' इति। शिवः, असङ्गत्वात्प्रकृतिमूलैरनास्कन्दितानन्तसुखचिन्मात्ररूपः। अथ वा, शेतेऽनेनेति शिवं कल्याणम्। 'शीङ् स्वप्ने' इति धातोरौणादिको वन्प्रत्ययो ह्रस्वश्च निपातनादिति व्याख्यासुधाकारः। तदस्यास्तीति शिवः कल्याणगुणाकरः शंकरः, 'अथ वाऽशेषकल्याणगुणैर्युक्तः स ईश्वरः। शिव इत्युच्यते सद्भिः शिवतत्त्वार्थवेदिभिः॥' इति पुराणवचनात्। अथ वा, शिवमस्त्यस्याः, शिवो वाऽस्ति भर्तृत्वेनास्याः, शेते हरिहररुद्रेश्वरभूतखट्वायां कशिपुरूपे सदाशिव इति वा, शिवाऽस्यानुकूल्यवती सर्वमङ्गलात्मिका गौर्यस्यास्ति पत्नीत्वेनेति शिवः, 'उमासहायं परमेश्वरं विभुम्' 'न शिवेन विना शक्तिर्न शक्तिरहितः शिवः' 'उमाशंकरयोरैक्यं यः पश्यति स पश्यति' इति श्रुतिस्मृतिभ्याम्। अर्शआदित्वान्मत्वर्थीयोऽच्प्रत्ययः। 'शिवं भद्रं शिवः शंभुः शिवा गौरी शिवाऽभया' इति शाश्वतः। अत्रादौ शक्तिसाहित्येनैवेश्वरस्य नामापि श्रूयते। अन्यथा नेति वक्ष्यमाणशक्तिप्राधान्यप्रतिपादनाय तत्साहित्येनैवाऽस्मिन्ध्यात इष्टार्थसिद्धिरितरथा नेत्युमासहायमित्यादिश्रुतितात्पर्यं पर्यालोचयद्भिर्भग-

वत्पादैस्तयोरत्यानुकूल्यसूचकोऽन्तर्निगूहितभागवततत्त्वः शिवशब्द एव गूढाभिसंधिना प्रयुक्त इत्यवगन्तव्यम्। आहुश्च पौराणिकाः—'तस्मात्सह तया शक्त्या हृदि पश्यन्ति ये शिवम्। तेषां शाश्वतिकी सिद्धिर्नेतरेषामिति श्रुतिः॥' इति। उक्तं चाम्बास्तवे—'अज्ञातसंभवमनाकलितान्ववायं भिक्षुं कपालिनमवाससमद्वितीयम्। पूर्वं करग्रहणमङ्गलतो भवत्याः शंभुं क एव बुबुधे गिरिराजकन्ये॥' इति। अथ वा, वशते कामयते, वष्टि प्रकाशत इति वा शिवः। कामनार्थाद्दीप्त्यर्थाच्च वशतेरशंआद्यचि वर्णव्यत्ययेन रूपसिद्धिः। यदाहुः शब्दाभियुक्ताः—'हिंसिधातोः सिंहशब्दो वश कान्तौ शिवः स्मृतः। वर्णव्यत्ययतः सिद्धः पश्यकः कश्यपो यथा॥' इति। अथ वा, मनुष्याणां शिवमिच्छति, भक्तजनाञ्शिवयतीति वा शिवः। 'तत्करोति' इति ण्यन्तात्पचाद्यच्। एवम् 'समेधयति यन्नित्यं सर्वार्थानामुपक्रमम्। शिवमिच्छन्मनुष्याणां तस्माद्देवः शिवः स्मृतः॥' इति भारते। अथ वा, शेरतेऽस्मिन्मुनिमनांसीति शिवः, 'सर्वनिघृष्वरिष्वलष्वशिव—' इत्यादिना औणादिको वन्प्रत्ययान्तो निपातः। यद्वा, शेते सुखेन बिन्दुरूपेण त्रिकोणे षड्विंशकत्वात्मकत्वादिति शिवः। यद्वा, 'शिः शंभौ शिवशान्तयोः' इति नानार्थात् शीन् शान्तान्, 'शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च। ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्॥' इति गीतासूक्तत्वात् शीन् शमदमादिसंपन्नान्ब्राह्मणान्वाति 'ब्राह्मणो भगवान्रुद्रः' इति स्मृतेः, स्वयमपि ब्राह्मणत्वेन भक्तवत्सलतया तदाधिपत्यं प्राप्यागच्छतीति शिवः, 'सोमोऽस्माकं ब्राह्मणानां राजा' इत्यादिश्रुतेः। 'वा गतिगन्धनयोः' इति धातोः 'आतोऽनुपसर्गे कः' इति कप्रत्ययः। यद्वा, 'रुद्रो वा एष यदग्निस्तस्यैते द्वे तनुवौ घोराऽन्या शिवाऽन्या' इति श्रुतेः शिवाख्याऽनुग्राहिका तनुरस्यास्तीति शिवः, 'या ते रुद्र शिवा तनूरघोराऽपापकाशिनी' इति श्रुतेः। एवंविधः परमेश्वरः। शक्नोति कार्यनिष्पादन इति शक्तिः, तया। केवलचितो विकाराराहित्यात्कारणत्वासंभवात्तदभेदाध्यासेन नियमेन तत्परतन्त्रतया देवस्य सर्वजगदुत्पत्तिस्थितिलयकारणत्वनिर्वोढतया वर्तमानत्वाच्छक्तिशब्दाभिधेययाऽऽवरणविक्षेपात्मिकया मायया, 'ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति श्रुतेः। युक्तो यदि, ऐन्द्रजालिको मन्त्रादिभिरिव संयुतश्चेत्तर्हि प्रभवितुं प्रकर्षेण भवितुं, 'आत्मन आकाशः संभूतः' इति श्रुतेः। आकाशादिप्रपञ्चं निर्मातुं तद्रूपेणावस्थातुं वा शक्तः समर्थः शक्तिमांश्च भवतीत्यभिसंधिः। यदिरेवकारार्थो वा। युक्त एव शक्त इत्यर्थः। एतेन वादिभिरभिमताः कालस्वभावनियत्यादीनां जगत्कारणत्ववादाः परास्ताः। तथा च श्रुतिः—'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्। संयोग एषां न त्वात्मभावात्' इति। 'स ईक्षत बहु स्यां प्रजायेयेति' 'सोऽकामयत बहु स्यां प्रजायेयेति' 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादिश्रुतिभ्योऽविद्याशबलितस्यैव जगन्निर्माणशक्तत्वादिति भावः। उक्तमेवार्थं व्यतिरेकमुखेन द्रढयति—**नेत्यादि**।

एवं न चेत्, एवंप्रकारया शक्त्या युक्तो न यदि, दीव्यति क्रीडतीति देवः नानाविधप्रपञ्चसर्जनक्रीडनेच्छावानिति भावः। अत एव कामनाक्रीडार्थकयोः शिवदेवपदयोरन्वयव्यतिरेकोपात्तयोर्न पार्थक्यं पौनरुक्त्यापत्तिश्चेति मन्तव्यम्। किं चैतेन 'लोकवत्तु लीलाकैवल्यम्' इति न्यायसिद्धोऽर्थो नित्यतृप्तस्यापि परमेश्वरस्य जगन्निर्मातृत्वनियन्तृत्वादिकं सर्वं निरभिसंधिकमेव लीलारूपम्, यथा समस्तसुखासक्तस्य प्रभोर्मृगयादिविलास इति सूचितः। तथा च श्रुतिः—'क्रीडार्थं सृष्टिरित्यन्ये भोगार्थमपि चापरे' इति। स्मृतिरपि 'क्रीडतो बालकस्येव चेष्टां तस्य निशामय' इति। स्पन्दितुं किंचिच्चलितुमपि, सृष्ट्यादिकं तु दूरापेतमिति भावः। 'स्पदि किंचिच्चलने' इति धातुः। न कुशलो न समर्थः। खल्वित्यवधारणे संभावनायां वा। तथा निश्चीयते संभाव्यते चेत्यर्थः। 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्। तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्॥' इति श्रुतेः। 'निषेधवाक्यालंकारजिज्ञासानुनये खलु' इति कोशादस्य नञर्थकताङ्गीकारे शक्तिसंयोगे स्पन्दितुं समर्थ एवेत्यभिसंधिः। 'निर्विकल्पो निरञ्जनः' 'आकाशवत्सर्वगतश्च नित्यः' इति श्रुतेर्निराकारस्यापरिच्छिन्नस्य विभोरीश्वरस्य परिच्छिन्नपदार्थवृत्तिस्पन्दनायोगात्; 'तमेकनेमिं त्रिवृतम्' इत्यादिश्रुतेः, इति वेदान्त्यभिमतोऽर्थः॥

शिं स्वप्नं वाति गच्छतीति व्युत्पत्त्या शिव उदासीनोऽस्वतन्त्रः। यद्वा, उपदेशेन वाति ब्रह्मादीनिति शिवः, 'स पूर्वेषामपि गुरुः कालेनानवच्छेदात्' इति योगसूत्रात्पुरुषविशेषः परमेश्वरः 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' इति योगसूत्रनिर्दिष्टः, शक्त्या समर्थया 'अजामेकाम्' इत्यादिश्रुतिप्रतिपाद्यया सत्त्वरजस्तमोगुणात्मिकया प्रकृत्या युक्तो यदि, अन्धपङ्गुन्यायेन मिलितश्चेत्, तर्हि प्रभवितुं तत्साहित्यात्स्वयमपि स्रष्टृत्वादिव्यवहारं प्राप्तुं भोगाननुभवितुं चेत्यर्थः। 'अर्थवती हि सा, न हि तया विना परमेश्वरस्य स्रष्टृत्वं सिध्यति, शक्तिविरहितस्य प्रवृत्त्यनुपपत्तेः' इति सांख्यशास्त्रीयोक्तिभिरिति भावः। सत्त्वरजस्तमोगुणात्मिका प्रकृतिरेव क्लेशकर्मविपाकाशयैरपरामृष्टं पुरुषशब्दवाच्यमीश्वरमधिष्ठाय महदहंकारपञ्चतन्मात्रादिक्रमेण जगत्सृजति, बीजमिव संस्कृतं क्षेत्रमधिष्ठायाङ्कुरादिक्रमेण वृक्षादि। पुरुषस्तूदासीन एव वर्तत इति सांख्यसिद्धान्तः। आहुश्च—'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः॥' इति। एवं न चेत् प्रकृतियुक्तो न यदि तर्हि, दीव्यति जडप्रकृतिकत्वात्स्वपिति प्रकृत्याऽन्धपङ्गुन्यायेनाधिष्ठितः सन् गच्छतीति वा देवः पुरुषः, क्रीडाद्यर्थेषु दीव्यतेरनुशासनात्। स्पन्दितुं किंचिदपि कर्तुं न कुशलः खलु समर्थो न भवत्येव, उदासीनत्वादिति सांख्यमतोऽर्थः॥

एतद्ग्रन्थप्रतिपाद्यसांख्यमतानुसारिदेवतापक्षीयार्थस्तु—शिवः सकलकल्याणगुणाकरः, 'माया च शुद्धविद्या च महेश्वरसदाशिवौ। तस्याः पतिर्ब्रह्मरूपी स्वयं साक्षात्सदाशिवः॥' तत्र

'कशिपुश्च सदाशिवः' इति वचनात्पञ्चविंशतितत्त्वात्मा परमेश्वर्याः कशिपुत्वेन प्रतिपाद्यः, 'तन्मध्ये बैन्दवं स्थानं तत्रास्ते परमेश्वरी। सदाशिवेन संयुक्ता' इति वचनाद्बैन्दवस्थानगतः 'संहारश्च हरायत्त उत्पत्तिर्भवनिर्मिता। रक्षा तु मृडसंलक्ष्या सृष्टिस्थितिलये शिवः। नियुक्तः परमेशान्या जगदेवं प्रवर्तते॥' इत्यागमात्सृष्ट्यादिनियुक्तभवमृडहराणां महेश्वरस्य च कारणभूतः सदाशिवः कैलासवासी परमात्मा। अत एव नोत्तरवाक्यस्थहरपदेन पौनरुक्त्यम्। शक्त्या, 'श्रियं लक्ष्मीमौपलामम्बिकां गां षष्ठीं जयामिन्द्रसेनेत्युदाहुः' इत्यायुष्यसूक्तसहकृतया, 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति श्रुत्युपबृंहितया, 'तस्याङ्कमण्डलारूढा शक्तिर्माहेश्वरी परा। महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरा॥' इत्यादिशैवपुराणप्रसिद्धया 'पराऽस्य शक्तिर्विविधैव श्रूयते' 'आविरासीन्महादेवी गौरी गिरिवरात्मजा' इति श्रुतिस्मृतिनिर्दिष्टाभिधेयया स्वस्य जायाभावमापन्नया समर्थया हैमवत्या युक्तो यदि संयुक्तश्चेद्विहरमाणो यदि, तर्हि प्रभवितुं प्रकृष्टो भवितुं प्रपञ्चनिर्माणरूपसंतानं कर्तुं प्रभूभवितुं च शक्तः समर्थः। शक्तिः शक्ता वा देव्यस्यास्तीति वा शक्तः शक्त्यभिन्नश्चेति तयोरविनाभावो वाऽर्थः, 'शक्तिशक्तिमतोर्भेदं वदन्त्यपरमार्थतः। अभेदमनुपश्यन्ति योगिनस्तत्त्वचिन्तकाः॥' इति कौर्मोक्तेः; जायासंयुक्तलौकिकपुरुषवदेवेति भावः। अत्र त्वया युक्तश्चेत्प्रभवितुं शक्त इति वक्तव्ये शक्त्या युक्तो यदीति पारोक्ष्योक्तिस्तस्याः शक्तिपदसूचितसामर्थ्यातिशयद्योतनार्थेत्यवगन्तव्यम्। इदं चासंदिग्धे संदिग्धवचनं स्थूणानिखननन्यायेनेशस्य तत्साहित्यदृढीकरणार्थम्; 'वेदाः प्रमाणं चेत्' 'यदि प्रविशेत्....चरित्वा प्रविशेत्' इत्यादिना लोकवेदयोः प्रसिद्धत्वात्। उक्तं च शाबरभाष्ये—'संनिपातश्चेद्यथोक्तमन्ते स्यात्' इति सूत्रव्याख्यानावसरे 'नन्वयं संनिपात एव व्यक्तमसंदिग्धे संदिग्धवचनमेतद्यथा—ईजाना बहुभिर्यज्ञैर्ब्राह्मणा वेदपारगाः। शास्त्राणि चेत्प्रमाणं स्युः प्राप्तास्ते परमां गतिम्॥' इति। प्रायुङ्क्त च श्रीभोजः—'उच्चैर्गतिर्जगति सिध्यति धर्मतश्चेत्' इति। शक्तियुक्त एव शक्त इत्यर्थः। 'सा शिवा परमा देवी शिवाभिन्ना शिवंकरी। जगत्कारणतापन्नः शिवोऽयं मुनिसत्तमाः॥ सा तस्यापि भवेच्छक्तिस्तया हीनो निरर्थकः।' इत्यारभ्य 'एषा सा साक्षिणी शक्तिः शंकरस्यापि शंकरी। शिवाभिन्नस्तया हीनः शिवः साक्षान्निरर्थकः॥' इत्यादिसूतसंहितोक्तेरिति भावः। अथ लौकिकजायापतिशक्तिदृष्टान्तशक्तियुक्तत्वसाधनाभ्यां शिवस्य जगत्सर्गसाधकानुमानेऽनुकूलतर्कमाह—**न चेदिति**। एवं न चेत् जायया शक्त्या युक्तो न यदि देवोऽपि जगत्सर्जनसमर्थोऽपि, देवमस्यास्तीति देव इति व्युत्पत्त्येन्द्रियबलवानपीत्यभिसंधिः। 'देवमाख्यातमिन्द्रियम्' इति विश्वः। स्वयंप्रकाशस्वरूपः क्रीडापरतन्त्रो वा स्पन्दितुं चलितुं संतत्युत्पादनपोषणलेशमपि विधातुं च न कुशलः शक्तः। कुशलमस्यास्तीति कुशलः क्षेमवांश्च कल्याणरूपोऽपि न, ब्रह्मचारिवद्विधुरवदेवेति भावः। अत्र 'सोमः पवते जनिता मतीनां जनिता पृथिव्या जनिताऽग्नेर्जनिता सूर्यस्य

जनितेन्द्रस्य जनितोत विष्णोः' इत्यादिश्रुतिषु उमया सहितः सोम इति व्युत्पत्तेः 'सृष्टिस्थिति-विनाशानां हेतुभूते सनातनि। गुणाश्रये गुणमये नारायणि नमोऽस्तु ते ॥' इति देवीमाहात्म्योक्तेः, सृष्ट्यादिकारणीभूतोमासाहित्येनैवेशस्याम्न्यादिदेवसृष्टिविधानसामर्थ्योक्तिरित्यभिप्रायः। उक्तं च चतुःशत्याम्—'परोऽपि शक्तिरहितः शक्तः कर्तुं न किंचन। शक्तः स्यात्परमेशानि शक्त्या युक्तो भवेद्यदि ॥' इति। यद्वा, एवं न चेद्देवो न खलु कुशलोऽपि। शक्तिसाहित्याभावे क्रीडाया द्विनिष्ठत्वादेकस्य क्रीडाविशेषासंभवात् स्वयं क्रीडनार्थकदेवीसाहित्यसूचकदेवपदवाच्यो न भवत्येव। तथा कुशलः कुत्सितं शलते संवृणोतीति कुशल इति व्युत्पत्त्या स्वकीयचर्माम्बरत्वदिगम्ब-रत्वादिलोकप्रसिद्धकौत्सित्यावरणार्थककुशलपदवाच्योऽपि न भवत्येव। स्पन्दितुमपि शक्तो नेत्यर्थः। चर्माम्बरत्वादिदेवकौत्सित्यावरणस्य देवीकृतत्वादिति हृद्गतोऽर्थः। तदुक्तमम्बास्तुतौ—'चर्माम्बरं च शवभस्मविलेपनं च भिक्षाटनं च नटनं च परेतभूमौ। वेतालसंहतिपरि-ग्रहता च शंभोः शोभां वहन्ति गिरिजे तव साहचर्यात् ॥' इति। अथ वा, कुशं तृणविशेषं लात्यादत्तेऽनुगृह्णातीति वा कुशलो न, तृणमात्रमप्यादातुमनुग्रहीतुं च शक्तो न, किमुत सृष्ट्यादिकं कर्तुमित्यभिसंधिः। अथ वा, कुशमपि लाति खण्डयतीति कुशलः, सोऽपि न। तृणमात्रमपि खण्डयितुं शक्तो न, किमुत त्रिपुरसंहारजलंधरवधादिकं कर्तुमित्यभिसंधिः। यद्वा, कुशं विषापरपर्यायं जलं लात्यादत्त इति कुशलः सोऽपि न। सकलजगत्संहरणोद्युक्तकालकूट-पानं विधाय तत्कण्ठे धर्तुं न क्षमत इत्यभिसंधिः। उक्तं च सकलजननीस्तवे—'विधेर्मुण्डं दत्त्वा यदकुरुत पात्रं करतले हरिं शूलप्रोतं यदगमयदंसाभरणताम्। अलंचक्रे कण्ठं यदपि गरलेनाम्ब गिरिशः शिवस्थायाः शक्तेस्तदिदमखिलं ते विलसितम् ॥' इति। यद्वा न कुशल एव, यदि कुशलस्तर्हि नखलुकुशल एव, नखं नखरं लुनाति च्छेदयतीति नखलुर्नखच्छेदकः शस्त्रविशेषः। इदं चोपलक्षणं खड्गादीनाम्, स इव कुशलः। यथाऽतितीक्ष्णधारो नखादिच्छेदनसमर्थोऽपि नखल्वादिः पौरुषहस्तव्यापारमन्तरा नखादिच्छेदं कर्तुं न शक्नोति, एवं समर्थोऽप्ययं देवो भवद्व्यापार-मन्तरा न शक्नोतीति भावः। अत एवाहुः—'सहकारशक्तिविरहिणी सहजशक्तिरनुकारिणी' इति। उक्तं च चर्चास्तवे—'इच्छानुरूपमनुरूपगुणप्रकर्षा संकर्षणि त्वमभिनृत्य यदा बिभर्षि। जायेत नस्त्रिभुवनैकगुरुस्तदानीं देवः शिवोऽपि भुवनत्रयसूत्रधारः ॥' इति। स्पन्दितुं पादप्रक्षेपरूपं ताण्डवादिकं च कर्तुं त्वत्सामर्थ्यं विना न शक्त इत्यर्थः। तदुक्तमम्बास्तवे—'कल्पोपसंहरण-केलिषु पण्डितानि चण्डानि खण्डपरशोरपि ताण्डवानि। आलोकनेन तव कोमलितानि मातर्ला-स्यात्मना परिणमन्ति जगद्विभूत्यै ॥' इति। अत्रोत्तरवाक्यं न वक्तव्यमेव। शिवः शक्त्येत्याद्यन्वयेनै-वोभयमेलनाभावे सृष्ट्याद्यभावरूपस्य व्यतिरेकस्य लभ्यमानत्वात्, आर्थिकार्थस्य शाब्दतायां पौनरुक्त्यस्य दुष्परिहरत्वात्। सत्यम्; उक्तानुमाने दार्ढ्यसंपादनाय वह्निसाधकानुमाने यदि वह्निर्न स्यादित्यादि-

वदत्रापि प्रमाणानुग्राहकज्ञानविशेषरूपं तर्कं शिष्यानुजिघृक्षया प्रकाशितवन्तो भगवत्पादाचार्याः । इति देवतापक्षीयोऽर्थः ॥

किं च, शिवः शिवशब्दः, शक्त्या मातृकाकोशप्रसिद्धेः कृतगुणयोरकारेकारयोरुत्पन्नेनैकारेण युक्तो यदि लक्षणया तत्प्रकृतिभ्यामकारेकाराभ्यां युक्तो यदि, तर्हि सकललोकानुग्रहार्थं देवतावाचकपदतया निष्पत्तुं शक्तः समर्थः, शक्तिशक्तिमतोः शिवयोरभिधायकश्च भवति । अकारेकारसंयोगाभावे शृव् इत्येवंरूपतया स्वस्वरूपानिष्पत्तेर्निरर्थक एव भवतीत्यर्थः । एवं न चेत् इकाराकारयुक्तो न चेत्, देवः कान्त्यर्थकोऽयं शब्दः स्पन्दितुं निष्पत्तुं समस्तमङ्गलात्मिकां देवतां समभिधातुं च कुशलो न खलु न क्षमः । इति शब्दपरार्थः ॥

अथ च, 'शब्दजातमशेषं तु धत्ते शर्वस्य वल्लभा । अर्थस्वरूपमखिलं धत्ते मुग्धेन्दुशेखरः ॥' इति वायुसंहितावलाच्छिवशब्देन लक्षणया वा शिवोऽस्ति धारयितृत्वेनास्येति व्युत्पत्त्या वा शिवशिरोधृतोऽभिधेयसंघ उच्यते । शक्तिशब्देन पूर्ववदेव तच्छिरोधृता शब्दशक्तिरुच्यते । तथा च शिवः अर्थसंघः शक्त्या शब्दसंघेन युक्तो यदि 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' इत्यनुशासनात्तयोर्नित्यसंबन्धात् 'अर्थं बुद्ध्वा वाक्यरचना' इति न्यायाच्च शब्दविरहितस्यार्थस्यासार्थक्यात्परमेश्वरः पार्वत्यैव संबद्धश्चेत् तर्हि प्रभवितुं नानाविधप्रकाशेन विद्वदाह्लादं कर्तुं शक्तः समर्थः शक्तिमांश्च भवति । 'शक्तं पदम्' 'समर्थः पदविधिः' इति पाणिनिनिर्देशात् समर्थः शक्तः स्वकार्यनिर्वर्तने क्षम इत्यर्थः । 'स्वार्थप्रतिपादनं हि स्वकार्यं शब्दानाम्' इति न्यासकारः । आहुश्च—'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनिर्विद्धमिव ज्ञानं सर्वं शब्देन भासते ॥' इति । एवं न चेत् दीव्यत्यनया व्यवहरतीति देवः व्यवहारयोग्योऽर्थसंघः स्पन्दितुं तं विना ईषत्कालमप्यवस्थातुं व्यहारक्षमीभवितुं च न कुशलः खलु समर्थो न । शब्दोऽप्येवमर्थं विना यदृच्छाशब्दवत्त्याज्य एवेति सूचितम् । इत्यर्थपरार्थः ।

अथ वा, शिवः शब्दप्रपञ्चः, शक्त्या 'शब्दानां जननी त्वमत्र भुवने वाग्वादिनीत्युच्यसे त्वत्तः केशववासवप्रभृतयोऽप्याविर्भवन्ति ध्रुवम् । लीयन्ते खलु यत्र कल्पविरमे ब्रह्मादयस्तेऽप्यमी सा त्वं काचिदचिन्त्यरूपमहिमा शक्तिः परा गीयसे ॥' इति लघुस्तोत्रोक्त्या, परस्य शब्दब्रह्मणः प्रधानावस्थारूपया शक्तिरिति शाक्तैः, चितिरिति शैवैः, कुण्डलिनीति योगिभिः, प्रकृतिरिति सांख्यैः, ब्रह्मेति पाराशरिभिः, बुद्धिरिति बौद्धैः, स्वशक्त्युन्मिषितगोत्वाद्युपाधिरहितमहासत्तेति जातिवादिभिः, तथाविधोपाधिरहितं केवलं द्रव्यमिति द्रव्यवादिभिश्चैकाऽप्यनेकनामभिर्व्यवह्रियमाणया निजैकाश्रयमायाख्यशक्तिकल्पितानेकोपाधिभेदभिन्नस्वरूपया पराशक्त्या युक्तो यदि तर्हि प्रभवितुं पश्यन्तीमध्यमावैखरीरूपेणाविर्भवितुं मध्यमावस्थायां च विमर्शविमृश्यांशयोर्वाच्यवाचकरूपशब्दार्थरूपं नित्यतत्संबन्धरूपं

चावाप्तुं च शक्तः; एवं न चेत् पराशक्तियुक्तो न यदि देवः शब्दब्रह्म स्पन्दितुं ताल्वोष्ठादिस्थानकरण-प्रयत्नैर्निष्पत्तिं प्राप्तुं च न कुशलः खलु शक्तो नेत्यर्थः। 'वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा। उद्यतार्था च पश्यन्ती सूक्ष्मा वागनपायिनी॥' इति तल्लक्षणम्। इति शब्दोत्पत्तिनिरूपणपरार्थः।

अथवा, 'उभयस्यास्य देवस्य विग्रहे यन्त्रकल्पना। विना यन्त्रेण चेत्पूजा देवता न प्रसीदति॥' इति श्रुतिस्मृतिभ्यां देवतादेहरूपयन्त्रपरार्थस्तु—'चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः। नवचक्रैश्च संसिद्धं श्रीचक्रं शिवयोर्वपुः॥' इत्यागमाच्छिवशब्देन नवयोन्यात्मके श्रीचक्रे वर्तमानं शिवात्मकं चक्रचतुष्टयमुच्यते। शक्तिशब्देन चावशिष्टं शक्त्यात्मकं चक्रपञ्चकमुच्यते। तथा चायमर्थः—शिवस्तदात्मकं चक्रचतुष्टयं शक्त्या तदात्मकेन चक्रपञ्चकेन युक्तो यदि मिलितश्चेत् तर्हि प्रभवितुं प्रकर्षेण भवितुं वसुकोणदशारयुग्माद्यनेकप्रकारेण विस्तारं प्राप्तुं सृष्टिस्थितिलयान्कर्तुं वा शक्तः समर्थः। शिवशक्त्यात्मकोऽपि भवितुमित्यर्थः। अथवा, 'त्रिकोणरूपिणी शक्तिर्बिन्दुरूपः शिवः स्वयम्। अविनाभावसंबन्धस्तस्माद्बिन्दुत्रिकोणयोः॥' इत्यागमवचनाच्छिवशब्देन बिन्दुरुच्यते, शक्तिशब्देन तदात्मकं त्रिकोणमुच्यते। तथा चायमर्थः—शिवो बिन्दुः शक्त्या त्रिकोणेन युक्तो यदि श्लिष्टश्चेत् तर्हि वसुकोणाद्यनेकप्रकारेण विस्तारं प्राप्तुं सृष्ट्यादिकं कर्तुं च शक्तः। अस्मादेव चक्रादुत्पत्तिस्थितिलयादेर्वक्ष्यमाणत्वादिति भावः। एवं न चेत् शिवशक्त्यात्मकचतुष्कपञ्चकरूपं चक्रद्वयं बिन्दुत्रिकोणद्वयं वा मिलितं न यदीत्यर्थः। देवी च देवश्च देवौ पार्वतीपरमेश्वरावस्यास्मिन् वा स्त इति देवः, देवयोः शरीररूपं नित्यनिवासस्थानं वा चक्रमित्यर्थः। मत्वर्थीयोऽच्प्रत्ययः। यद्वा दकारोऽयं हरस्याच्छिववचनः, एकारोऽयं चाच्त्वान्मातृकाकोशे शक्तिरिति प्रसिद्धेश्च शक्तिवचनः। तथा च दकारैकारवाच्यौ पार्वतीपरमेश्वरौ वाति गच्छति स्वीयतया नित्यनिवासरूपत्वादिति भावः। शिवयोर्नित्यनिवासभूतं सकलशक्तिदेवलोकात्मकत्वेन श्रुतिप्रसिद्धं चक्रं स्पन्दितुमपि विस्तारं प्राप्तुं सृष्ट्यादिकं संभावयितुमपीत्यर्थः। अपिः संभावनायाम्। कुशलः लोकानां स्वपरिज्ञानपूजनाभ्यां क्षेमप्रदाता न खलु। अन्यथा स्वस्वरूपानिष्पत्तेरित्यर्थः। चक्रोत्पत्तिपूजाद्यभिज्ञस्य फलं श्रुतिसिद्धम्—'इह चामुत्र चान्वेति विद्वान्देवासुरानुभयान्। यो वै तां ब्रह्मणो वेद अमृतेनावृतां पुरीम्। तस्मै ब्रह्म च ब्रह्मा च आयुः कीर्तिं प्रजां ददुः॥' इति। यद्वा, कुशलः, कुशब्देन भूमिरुच्यते, 'गोत्रा कुः पृथिवी' इति कोशात्, 'शं कल्याणे सुवर्णे च' इति कोशादक्षीणसुवर्णवाचिना शवर्णेनाक्षीणसुवर्णरूपो मेरुरुच्यते, कैलासमध्यवर्त्ययं लकारो लाघवात्कैलासमाह। तथा च कुश्च शश्च लश्च कुशलाः भूमेरुकैलासाः सन्त्यत्र प्रस्ताररूपेणेति कुशलः भ्वादिप्रस्तारभावमापन्नः, स्पन्दितुं विस्तारं प्राप्तुं न खलु शक्त इत्यर्थः। नात्र विशेष्यीभूतचक्रशब्दस्य नपुंसकत्वाल्लिङ्गान्तरगतैर्देवादि-पदैस्तदभिधानं विरुद्धमिति शङ्कनीयम्, कलत्रदारादिपदैः स्त्र्यभिधानस्य सर्वसंमतत्वात्। न च

तत्र 'नियतलिङ्गानां न विशेष्यलिङ्गता' इति न्यायानुगतिरस्तीति वाच्यम्, अत्रापि विभक्तिविपरिणामस्य 'लिङ्गमनित्यं लोकाश्रयत्वाल्लिङ्गस्य' इति भाष्यकारोक्तेश्च गतेराश्रयणीयत्वात्, शब्दतश्चक्रनिरूपणाभावाच्च। वस्तुतस्तु नपुंसकलिङ्गस्य स्त्रीपुंसाधारण्यान्नपुंसक एव यत्किंचिदुभयोश्चिह्नमस्तीति नपुंसकस्य न पुंलिङ्गपदविशेषणता दोषाय। अत एव व्याकरणे 'तस्येदम्', 'तस्यापत्यम्', 'तदस्य संजातम्' इत्यादौ सर्वसाधारणं नपुंसकमेव पाणिनिना प्रयुक्तमिति युक्तोऽयं विशेषणविशेष्यभावः। इति यन्त्रपरार्थः॥

अतः, अमूम्। एवमीश्वरस्यापि सृष्ट्यादिशक्तिप्रदात्रीं श्रुतिषु प्रत्यक्षसिद्धां त्वाम् अपरोक्षानुभवरूपिणीं भवतीम्। सार्वविभक्तिकस्तसिः। उक्तं च भट्टपादैः—'इदमस्तु प्रत्यक्षं समीपतरवर्ति चैतदो रूपम्' इतीदमः प्रत्यक्षार्थकत्वम्। उक्तं चैकावलौ—'यदिदं किंचेति लोकवेदयोर्दर्शनात्, एवमिदमदसावपि यच्छब्दासंनिधाने प्रसिद्धिं परामृशतः, इतरथा प्रत्यक्षायमाणमर्थम्' इति। यत्तूक्तं लक्ष्मीधरेण—'अतोऽस्माद्धेतोः' इति, तच्चिन्त्यम्। अतो हेतोरित्युक्ते कुतो हेतोरित्याकाङ्क्षा यच्छब्दविषयोदेति। न च दृश्यते पूर्ववाक्ये यच्छब्दः। अवश्यं च तत्प्रयोगेण भाव्यम्। उत्तरवाक्यस्थस्येदमो यच्छब्दस्य पूर्ववाक्ये तच्छब्दोपादाननिवारण इव यच्छब्दोपादाननिवारणसामर्थ्याभावात्। न चाध्याहारात्तल्लाभः, यतो हेतोरीश्वरस्यापि शक्तिसाहित्याभावे प्रभवनासामर्थ्यमतो हेतोरित्यर्थसांगत्यं च भविष्यतीति वाच्यम्, अस्मदुक्तरीत्या समीचीनगतौ सत्यामगतिककल्पनारूपस्याध्याहारस्य कल्पनानर्हत्वात्। आचार्यप्रबन्धव्याख्यानोद्यतस्याध्याहारकल्पनारसिकस्य तव तत्रत्यस्वारस्यभञ्जनपूर्वकमनन्ताध्याहारं कुर्वतः पाण्डित्यस्य रसिकजनविसंवादितापत्तेश्च। अथ वा, अस्तु वा हेतुत्वम्। अथापि हेतुः कुत्रान्वियात्? हरिहरादीनां देव्याराधने वा, अकृतपुण्यस्य प्रणमनस्तवनाप्रभवने वा? नाद्यः, हर्यादीनां देवीसमाराधनस्य शक्तिसाहित्याभावप्रयुक्तशिवदौर्बल्याशङ्कामूलकत्वाभावात्, तदाशङ्कापूर्वकतद्विधानस्यानुपयोगाच्च। स्वेषां सृष्ट्यादौ निरतिशयसामर्थ्यावाप्त्यपेक्षत्वात्तदुपासनस्य हेत्वन्वयेऽपि शब्दास्वारस्याच्छिवस्य प्राधान्यहानिः प्रसज्येत। न द्वितीयः, शिवस्त्वत्साहित्यं विना किंचिदपि कर्तुं न शक्नोति, अतः अकृतपुण्यः प्रणामादिकं कर्तुं कथं शक्नोतीत्यत्रापि हेत्वनपेक्षणात्, आम्रप्रश्नकोविदारोत्तरयोरिवासांगत्यप्रतीतेश्च। वस्तुतः सांनिध्यादाराध्यामित्यनेनैवान्वेतुमाकाङ्क्षते। न च तत्र हेतूपयोगः, प्रत्युत संभूयोपासितव्याविति तात्पर्यम्। 'त्वामाश्रिता महाभागे प्राप्नुवन्त्यचिरेण माम्। केवलं त्वामनादृत्य मां भजन्ते विचेतसः॥ न यान्ति मम सायुज्यं कल्पकोटिशतैरपि।' इति स्कान्दपुराणावगतं प्रथमार्धेन सूचयित्वा द्वितीयार्धे संभूय तदुपासनं विधातृहरिहराद्युपासकान्प्रदर्शयताम् 'न शिवेन विना शक्तिः', इत्यारभ्य 'वर्धते नात्र संशयः' इत्यन्तानि सूतसंहितावचनानि पर्यालोचयतामाचार्याणामभिप्रायविरोधादुपेक्ष्यं तत्। अतोऽस्मद्योजनैव साधुः। हरति भक्तानां दुःखमिति

हरिर्विष्णुः, हरः कालरुद्रः। यत्तूक्तं रामकविना लक्ष्मीधरेण च–हरः शिव इति, तन्न, प्रपञ्चलयाधिकृतस्य कारणपुरुषस्य हरस्य शिवशब्दवाच्यत्वाभावात्; शिवपदव्याख्यानावसरे शिवशब्दार्थं सदाशिवं बिन्दुरूपं द्रुहिणहरिहरेशानकारणमुक्त्वाऽत्र हरपदस्य शिवमभिधेयीकुर्वतः पूर्वोत्तरविरोधागमविस्मृत्योः प्रसञ्जनात्। उक्तं च—'संहारश्च हरायत्त उत्पत्तिर्भवनिर्मिता। रक्षा तु मृडसंलक्ष्या सृष्टिस्थितिलये शिवः। माया च शुद्धविद्या च महेश्वरसदाशिवौ॥' इति। विशेषेण रिञ्चति सृजति प्रपञ्चमिति विरिञ्चः। पचाद्यच्। 'विरिञ्चो द्रुहिणः शि........' इति शब्दार्णवे। आदिशब्देनेन्द्रादयो गृह्यन्ते। तैर्विष्णुरुद्रब्रह्मादिभिराराध्याम्। अपिशब्दादन्यैश्चाराध्यां सृष्ट्यादिकर्तृभिः सेव्याम्, सर्वेषामप्यविद्यासंवलितत्वादिति भावः। त्वां मायाऽविद्यादिपदवाच्यामघटितघटनापटीयसीं भवतीम्। उक्तं चेदं सकलजननीस्तवे—'शिवस्त्वं शक्तिस्त्वं त्वमसि समयस्त्वं समयिनी त्वमात्मा त्वं दीक्षा त्वमयमणिमादिर्गुणगणः। अविद्या त्वं विद्या त्वमसि निखिलं त्वं किमपरं पृथक्त्वत्तः किंचिद्भगवति न वीक्षामह इमे॥' इति। लघुस्तोत्रेऽपि 'माया कुण्डलिनी' इत्यादि। वक्ष्यन्ति चाचार्याः—'महामाये विश्वं भ्रमयसि' इति। कृतं पुण्यं येन स न भवतीत्यकृतपुण्यः। अनेकजन्मार्जितसुकृतपुञ्जतया विविधतपश्चरणोपासनादिभिः प्राप्तचित्तशुद्धिः कृतवेदान्तपरिश्रमो यो न भवति स पुमान्, प्रणन्तुं नमस्कर्तुं त्वत्स्वरूपं परिज्ञातुं चेत्यर्थः। तदनन्तरं स्तोतुम्, अहो माये कियती ते सामर्थ्यसंपत्तिः, 'ज्ञानिनामपि चेतांसि देवी भगवती हि सा। बलादाकृष्य मोहाय महामाया प्रयच्छति॥' इति मार्कण्डेयोक्तेः। यन्महतोऽप्यावृणोतीति स्तोत्रं कर्तुं च। वेति विकल्पे समुच्चये वा, उभयत्र कोशप्रसिद्धेः। कथं केन प्रकारेण प्रभवति समर्थो भवति, न कथंचिदपीत्यर्थः। अनेकजन्मजातसंपादितपूर्वोपासनाभिः कृतवेदान्तपरिश्रमः सद्गुरुकटाक्षसमासादितस्वस्वरूपः 'अहं ब्रह्मास्मि' इति ज्ञानवान्परिहृतमायाजालो यः स एव त्वत्स्वरूपं परिज्ञाय त्वदीयविनोदे पुनर्माये मां मा प्रवेशयेति प्रणन्तुं त्वदीयकौशलं स्तोतुं च शक्तो भवति, नान्य इति भावः। उक्तं च मार्कण्डेयेन—'विष्णुः शरीरग्रहणमहमीशान एव च। कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान्भवेत्॥' इति वेदान्त्यभिमतोऽर्थः प्रथमः॥

सांख्यपक्षे—अतः अमू हरिहरविरिञ्चादिभिः सत्त्वतमोरजःप्रधानैरपि देवैराराध्यां त्रिगुणात्मिकायास्तवैकैकं गुणं प्रत्येकमुपादाय सेव्याम्। तदीयगुणोपादानमेव तस्या आराधनेति भावः। उक्तं च भागवते—सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते। सृष्ट्यादये हरिविरिञ्चिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः॥' इति। त्वां मूलप्रकृतिरूपिणीं भवतीम्। अत्रोक्तमम्बास्तवे—'यामामनन्ति मुनयः प्रकृतिं पुराणीं विद्येति यां श्रुतिरहस्यविदो गृणन्ति। तामर्धपल्लवितशंकररूपमुद्रां देवीमनन्यशरणः शरणं प्रपद्ये॥' इति। मार्कण्डेयेन

चोक्तम्—'महाविद्या महामाया महामेधा महास्मृतिः। महामोहाऽसि भवती महादेवी महेश्वरी॥ प्रकृतिस्त्वं च सर्वस्य गुणत्रयविभावनी।' इति। अकृतपुण्यः 'सत्त्वात्संजायते ज्ञानम्' इति स्मृतेस्त्वदीयसत्त्वगुणसमवाप्तज्ञानरहितः, प्रणन्तुं स्तोतुं वा समर्थमप्युदासीनमेव सन्तं पुरुषमधिष्ठाया-चेतनैव सती विचित्रविविधप्रपञ्चसर्जनभारं वहन्ती, अविहिततद्दूषणमनवरतसौभाग्यमेव कामयमाना पतिव्रताशिरोमणिस्त्वमिति नमस्कारस्तवने विधातुं कथं प्रभवति, न कथंचिदपीत्यर्थः। अनवरताभ्यस्तकापिलतन्त्रः सद्गुरूपदिष्टः सूक्ष्मदर्शी यः स एव तत्र शक्तो नान्ये पामरा इति भावः। उक्तं च मार्कण्डेयेन—'हेतुः समस्तजगतां त्रिगुणाऽपि दोषैर्न ज्ञायसे हरिहरादि-भिरप्यपारा। सर्वाश्रयाऽखिलमिदं जगदंशभूतमव्याकृता हि परमा प्रकृतिस्त्वमाद्या॥' इति। इति सांख्याभिमतोऽर्थो द्वितीयः॥

अतः अमूम्, अत्यमङ्गलचरितस्यापि शिवस्योक्तप्रकारेणानुग्राहिकामारण्यकादिसर्वोप-निषत्प्रसिद्धाम्, हरिहरविरिञ्चादिभिः ब्रह्मविष्णुरुद्रैः सर्जनाद्याधिपत्यकामुकैः पतित्वकामुकेन शिवे-नान्यैश्चाराध्यां सेव्याम्। अत्रोक्तं दक्षिणामूर्तिसंहितायाम्—'एनामाराध्य विश्वेशीं महात्रिपुरसुन्दरीम्। ब्रह्मविष्णुमहेशाद्या आधिपत्यानि लेभिरे। पतित्वमाप्तवान्देवः साक्षात्परशिवः स्वयम्॥' इति। यद्वा, हरिहरादिभिर्भृत्यभावं संप्राप्य सेव्याम्। अत्रोक्तं भैरवयामले—'शिवात्मके महामञ्चे महेशानोप-बर्हिणि। अतिरम्यतले तत्र कशिपुश्च सदाशिवः॥ भृतकाश्च चतुष्पादा महेन्द्रश्च पतद्ग्रहः। तत्रास्ते परमेशानी महात्रिपुरसुन्दरी॥' इति। वक्ष्यति च कविः—'गतास्ते मञ्चत्वं द्रुहिणहरि-रुद्रेश्वरभृतः' इति। यद्वा, हरिहरविरिञ्चादिभिः, महिषासुरकुपितदैवतविज्ञापनाकर्णनकुपितैर्हरि-हरादिभिराराध्याम्, कोपविनिर्गतस्वस्वतेजःसंमेलनेन सिद्धामुत्पन्नां तत्तद्देवतेजःसंसिद्धमुखाद्यवयवां तैश्च शूलादिस्वीयायुधप्रदानेन बहुमतां चेत्यर्थः। अत्रोक्तं मार्कण्डेयपुराणे—'इत्थं निशम्य देवानां वचांसि मधुसूदनः। चकार शंभुः कोपं च भ्रुकुटीकुटिलाननः॥ ततोऽतिकोपपूर्णस्य चक्रिणो वदनात्ततः। निश्चक्राम महत्तेजो ब्रह्मणः शंकरस्य च॥ अन्येषां चैव देवानां शक्रादीनां शरीरतः। निर्गतं सुमहत्तेजस्तच्चैक्यं समगच्छत॥ अतीव तेजसः कूटं ज्वलन्तमिव पर्वतम्। ददृशुस्ते सुरास्तत्र ज्वालाव्याप्तदिगन्तरम्॥ अतुलं तत्र तत्तेजः सर्वदेवशरीरजम्। एकस्थं तदभून्नारी व्याप्तलोकत्रयं त्विषा॥ यदभूच्छांभवं तेजस्तेनाजायत तन्मुखम्। याम्येन चाभवन्केशा बाहवो विष्णुतेजसा॥ सौम्येन स्तनयोर्युग्मं मध्यमैन्द्रेण चाभवत्। वारुणेन च जङ्घोरू नितम्बस्तेजसा भुवः॥ ब्रह्मणस्तेजसा पादौ तदङ्गुल्योऽर्कतेजसा। वसूनां च कराङ्गुल्यः कौबेरेण च नासिका॥' इत्यारभ्य 'अन्येषां चैव देवानां संभवस्तेजसां शिवा' इत्यनन्तरम् 'शूलं शूलाद्विनिष्कृष्य ददौ तस्यै पिनाकभृत्। चक्रं च दत्तवान्कृष्णः' इत्याद्यायुधदानमपि तत्रैव द्रष्टव्यम्। यद्वा,

हरिहरविरिञ्चादिभिः विष्णुयामलरुद्रयामलब्रह्मयामलानि आदिशब्देन भैरवयामलादिकमुच्यते, तैराराध्याम्, विष्णुयामलादिसर्वागमप्रतिपाद्यामित्यर्थः। अपि-शब्देनाप्येतदन्यनिगमेतिहासादिकं समुच्चिनोति। त्वां शिवजायाम् 'यत्कुमारी मन्द्रयते' इत्यादिश्रुतिप्रतिपाद्यां हैमवतीम्, अकृतपुण्यः बहुजन्मसु भवदीयपादपङ्कजसेवयाऽनधिगतसुकृतः पुमान्, यो वा को वा भवत्विति विशिष्यानिर्देशः। 'अश्रुतासः श्रुतासश्च। यज्वानो येऽप्ययज्वनः' इति श्रुतेः देवीपूजायां सर्वेषामधिकारादिति। प्रणन्तुं भवत्तत्वं परिज्ञाय मानसिकवाचिककायिकरूपेण प्रकर्षेण नन्तुं स्वीयदुर्दशां शब्दापयितुं चेति ध्वनिः। 'णम प्रह्वत्वे शब्दे च' इति धातुः। स्तोतुं वा कथं प्रभवति, केन हेतुना शक्नुयात्? तद्धेतोः सुकृतस्य पूर्वमनार्जितत्वाद्ब्रह्मादिदुर्विज्ञेयत्वाच्च तस्या इति भावः। तदुक्तं मार्कण्डेयेन—'यस्याः प्रभावमतुलं भगवाननन्तो ब्रह्मा हरश्च न हि वक्तुमलं बलं च' इति। यदि प्रभवति तर्हि, कथयतीति कथा, स्वयं जननी वदति रहस्यमपि, तत्त्वं कथयन्ती मा लक्ष्मीवागादिरूपिणी भवती यस्य स कथमः, लब्धभवत्कटाक्षानुग्रहः। अस्याश्च कमलारूपत्वमम्बास्तुतौ— 'दाक्षायणीति कुटिलेति गुहायनीति कात्यायनीति कमलेति कलावतीति। एका सती भगवती परमार्थतोऽपि संदृश्यसे बहुविधा ननु नर्तकीव॥' इति। स चासौ कृतपुण्यश्च यः स एव प्रभवति प्रणामादिकं कर्तुं शक्नोति प्रभुरपि भवतीत्यर्थः। वयं च 'पूर्वजन्मकृतैः पुण्यैर्ज्ञात्वेमां परदेवताम्। पूजयेदागमोक्तेन विधानेन समाहितः॥' इत्यागमाद्भवत्कृपाकटाक्षवीक्षणलब्धप्रसादास्त्वां प्रणन्तुं स्तोतुं च कथंचित् प्रभवेम। तत्र स्तवनार्थं मदीयवाणीप्रेरणमेव निदर्शनमिति भावः। वक्ष्यन्ति चाचार्याः—'मयि जननि दृष्टिः सकरुणा' 'दयावत्या दत्तं द्रविडशिशुः' इत्यादि। उक्तं चाचार्यैश्चर्चास्तवे—'सौन्दर्यविभ्रमभुवो भुवनाधिपत्यसंपत्तिकल्पतरवस्त्रिपुरे जयन्ति। एते कवित्वकुमुदप्रकरावबोधपूर्णेन्दवस्त्वयि जगज्जननि प्रणामाः॥ देवि स्तुतिव्यतिकरे कृतबुद्धयस्ते वाचस्पतिप्रभृतयोऽपि जडीभवन्ति। तस्मान्निसर्गजडिमा कतमोऽहमत्र स्तोत्रं तव त्रिपुरतापनपत्नि कर्तुम्॥ मातस्तथाऽपि भवतीं भवतीव्रतापविच्छित्तये स्तुतिमहार्णवकर्णधारः। स्तोतुं भवानि स भवच्चरणारविन्दभक्तिग्रहः किमपि मां मुखरीकरोति॥' इति। इति प्रकृतदेवतापक्षीयोऽर्थस्तृतीयः॥

अतः अमूं हरिहरविरिञ्चादिभिरपि आराध्यां जप्यमानामित्यर्थः। त्वां भवद्वाचकं शिवनामेत्यर्थः। वाच्यवाचकयोरभेदोपचारः। प्रणन्तुं स्तोतुं वा समस्तपापनिबर्हणदक्षतया नमस्कर्तुं स्तोतुं च अकृतपुण्यः कथं प्रभवति। कृतपुण्य एव भवद्वाचकशिवनामस्तवननमनादिसमर्थो भवति। इति शब्दपरार्थस्तुरीयः॥

अतः अमूं हरिहरविरिञ्चादिभिराराध्यां त्वां शब्दार्थरूपिणीं भवतीं नित्यसंबन्धवतीं प्रणन्तुं स्तोतुं वा, अकृतपुण्यः कथं प्रभवति। इत्यर्थपरार्थः पञ्चमः॥

अतः अमूं हरिहरविरिञ्चादिभिराराध्यां सेव्यामभिवन्द्याम्, उच्चार्यमाणामित्यर्थः। चतुष्पदवागुच्चरणलाभाद्देवानामित्यर्थः। तथा च श्रुतिः—'चत्वारि वाक्परिमिता पदानि, तानि विदुर्ब्राह्मणा ये मनीषिणः, गुहा त्रीणि निहिता नेङ्गयन्ति, तुरीयं वाचो मनुष्या वदन्ति' इति। त्वां सकलब्रह्मविवर्तकारणपराशक्तिरूपां भवतीम्, अकृतपुण्यः प्रणन्तुं नमस्कर्तुं स्तोतुं वा शब्दापयितुं चेत्यर्थः। कथं प्रभवति, न प्रभवत्येवेत्यर्थः। उक्तं चाम्बास्तवे—'व्योमेति बिन्दुरिति नाद इतीन्दुलेखारूपेति वाग्भवतनूरिति मातृकेति। निष्यन्दमानसुखबोधनिजस्वरूपे विद्योतसे मनसि भाग्यवतां जनानाम्॥' इति। इति शब्दोत्पत्तिनिरूपणपरार्थः षष्ठः॥

अत इदम् 'इमानुकं भुवना सीषधेम' इति श्रुतिप्रतिपाद्यं सर्वदेवतात्मकं हरिहरविरिञ्चादिभिर्विष्णुरुद्रब्रह्मादिदेवैः, 'इन्द्रश्च विश्वे च देवाः' इति श्रुतेः। आराध्यां देवताप्रसादाय पूजिताम्, 'इह चामुत्र चान्वेति, विद्वान्देवासुरानुभयान्' इति श्रुतेः। यद्वा, हरिः सूर्यः, 'यमानिलेन्द्रचन्द्रार्क' इत्याद्यमरः। हरोऽग्निः, 'हरा रुद्राग्निगर्दभाः' इति रत्नमाला। विरिञ्चशब्देन सूर्याग्निसाहित्यादौचित्याद्विशेषेण रिञ्चति विदधाति लोकानन्दमित्यर्थाश्रयणाद्वा चन्द्र उच्यते। 'रिच वियोजनसंपर्चनयोः' इति धातोः पृषोदरादित्वान्नुम्। आदिशब्देन वशिन्यादिशक्तय उच्यन्ते। तैः खण्डत्रयाधिदैवतैः सूर्याग्नीन्दुभिर्वशिनीत्रिपुरसुन्दरीवामादिसर्वशक्तिभिश्चाराध्यां यथार्हमष्टदलादितत्तत्स्थानेषु स्थित्वा सेव्याम्। एतदुत्तरत्र स्फुटीकरिष्यते। यद्वा, हरिहरविरिमित्येषां पौनःपुन्येन पठितानां वर्णानामन्तःस्थेषूष्मसु च दर्शनादन्तःस्था ऊष्माणश्चाष्ट वर्णा लाघवादनेन गृह्यन्ते। चकारोऽकारश्चादिर्येषां ते चादय इति योजनायामादिशब्दस्य प्रत्येकमभिसंबन्धाच्चादिशब्देन चकाराद्या मकारान्ता विंशतिर्वर्णा गृह्यन्ते। आदिपदेनाकाराद्या ङकारान्ता एकविंशतिर्वर्णा गृह्यन्ते। ककारषकारमेलनात्मकः क्षकारो गृहीत एव। अथ वा, हरिहरविरिञ्चैरधिष्ठानदेवताभिः आदिभिः 'अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः। हकारोऽन्त्यः कलारूपो वर्णोऽहंताप्रकाशकः॥' इत्यागमादहमिति प्रत्याहारेण गृहीतैरकारादिहकारान्तवर्णैः पञ्चाशद्भिरिति वा, आराध्याम्। त्रिषोडशधा त्रिपुरसुन्दरीप्रभृतिषोडशनित्यास्वन्तर्भूय ताभिः सहाष्टद्विकतामापद्याष्टदले स्थित्वा वाऽष्टवर्गात्मकतयाऽष्टदले स्थित्वा वा संसेवितामित्यर्थः। एवंविधां त्वां देवतादेहरूपं यन्त्रं तद्रूपिणीं भवतीं वा। अत्र युष्मदो लिङ्गत्रयसाधारण्यात् 'अलिङ्गे युष्मदस्मदी' इति वचनाद्वा चक्राभिधेयत्वार्हतायामप्याराध्यामित्यस्य स्त्रीलिङ्गतया न तद्विशेषणीभवनार्हतेति न शङ्क्यम्। 'अकारोद्भव आकारः' इति मन्त्रशास्त्रे आकारस्याकारकारणकत्वकथनात्, पाणिनीयशास्त्रे च वर्णोपदेशवेलायामकारस्यैव ग्रहणमुक्त्वा तस्मादेवाकारग्रहणात्, उणादिषु च 'अत्रतेष्टिलोपश्च, दीर्घो वा' इति विकल्पविधानाच्च अनेन प्रकृतिलक्षणायाः सर्वसंमतत्वात्। लिङ्गविपरिणामो वा

पाठसौकर्यात्कर्तव्यः । अथ वा, लिङ्गभेदेऽपि न तद्विशेषणता दोषाय, यथाऽऽहुः—' विशेष्येण सहैकार्थं भवेद्यत्र विशेषणम्। तत्र लिङ्गादयः प्रायो विशेष्यस्था विशेषणे ॥' इत्यभिधाय ' लिङ्गसंख्याविभेदेऽपि विशेषणविशेष्यता । विभक्तिः पुनरेकैव विशेषणविशेष्ययोः ॥' इति । अत एव ' राज्यश्रीप्रथमावतारपदवीमारुह्य सिंहासनम् ' इत्यादयः साधव इत्याहुः । प्रणन्तुम्, ' कला विद्या परा शक्तिः श्रीचक्राकाररूपिणी । तन्मध्ये बैन्दवं स्थानं तत्रास्ते परमेश्वरी ॥ सदाशिवेन संयुक्ता सर्वमन्त्रातिगामिनी । चक्रं त्रिपुरसुन्दर्या ब्रह्माण्डाकारमीश्वरी ॥ पञ्चभूतात्मकं चैव तन्मात्रात्मकमेव च ।' इत्याद्यागमं विज्ञाय नमस्कर्तुं सकलदेवतारूपं तत्स्तोतुं वा, अकृतपुण्यः कथं प्रभवति ? सकलजगदात्मकम् ' लोकस्य द्वारमर्चिमत्पवित्रम् ' इत्यादिश्रुतिप्रसिद्धं तत्परिज्ञाय कृतसुकृतः प्रणामादि विधातुं शक्नोतीत्यर्थः । इति यन्त्रपरार्थः सप्तमः ॥

अथ ' मन्त्रोऽन्वर्थादिसंज्ञकः । जप्तव्यो मन्त्रिणा नैनं विना देवः प्रसीदति । क्रियाकर्मेज्यकर्तॄणामर्थं मन्त्रो वदत्यथ । मननात्त्राणनान्मन्त्रः ' इति श्रुतेर्मन्त्रजपस्यावश्यिकत्वेन यन्त्रस्वरूपस्येव तत्स्वरूपस्यापि दर्शयिष्यमाणत्वादादौ ' ओंकारो गुणबीजं प्रणवस्तारो ध्रुवश्च वेदादिः । अस्य तु वेदादित्वात्सर्वमनूनां प्रयुज्यते चादौ ॥' इत्याचार्योक्तेः प्रणवस्य सर्वमन्त्राग्रिमत्वात्तदुद्धारः कथ्यते—' अकारः क्षत्रिये नेत्रे हरमौलौ हरे हरौ । अमरेशस्तथा विष्णुरिन्धिका च गजाङ्कुशः ॥ दक्षकर्णश्च विजय उकारो मन्मथो विधिः । मः शिवश्चन्द्रमा वेधाः ' इति कोशप्रसिद्धेरुकारो मकारश्च शिवशब्देनोच्यते । तथा च शिव उकारो मकारश्च शक्त्या बिन्दुयुक्तेनाकारेण युक्तो यदि, ' अकारो बिन्दुसंयुक्तः शक्तिरस्य द्विजोत्तमाः । उकारश्च मकारश्च द्वयं बीजं प्रकीर्तितम् ॥ ' इति सूतसंहितायाम् । तर्हि प्रभवितुं प्रणवरूपो भवितुं नादादिरूपेण परापश्यन्त्याद्यवस्थाभिः स्वरवर्णपदवाक्यात्मकं प्रकर्षमवाप्तुं च शक्तो भवति, शक्तिवाचकोऽपि भवतीत्यभिसंधिः । ' ओंकारपञ्जरशुकीम् ' इति नवरत्नमालिकायाम् । उक्तं च —' ओंकारप्रभवा वेदा ओंकारप्रभवाः स्वराः ' इत्यादि । एवं न चेत् शक्त्या युक्तो न चेत्, देवः पूर्वोक्तकोशे अमरेश इति प्रसिद्धेरुकारो मकारश्च स्पन्दितुं किंचिदपि चलितुं प्रणवाक्षरमुत्पादयितुम् उकारमकाराकारबिन्दूनां संयोगाभावात् कुशलो न खलु, ' तस्य वाचकः प्रणवः ' इति योगसूत्रात्, ' उभार्धविग्रहो देवो रुद्रः सत्यादिलक्षणः । संसारतारकस्यास्य प्रणवस्यार्थ उच्यते ॥ ' इति सूतसंहितावचनाच्च । सांहित्युपनिषदि ' ओमिति ब्रह्म ' इत्यादिना प्रकटितसार्वात्म्यं परमेश्वरवाचकं प्रणवमुत्पादयितुं न शक्नोतीति भावः । अतः अमूं हरिहरविरिञ्चादिभिराराध्यां ब्रह्मविष्णुमहेश्वरैरक्षरदेवतीभूय तथाऽन्यैरग्निवायुसूर्यैर्मुनिभिः गायत्रीत्रिष्टुब्जगत्यभिधानैश्छन्दोभिः रक्तशुक्लकृष्णैर्वर्णैः जाग्रत्स्वप्नसुषुप्त्यवस्थाभिः भूम्यन्तरिक्षस्वर्गस्थानैः उदात्तानुदात्तस्वरिताभिधानैः स्वरैः ऋग्यजुःसामाभिधानैर्वेदैः गार्हपत्याद्यग्निभिः प्राह्णादिभिः कालैः

सत्त्वादिभिर्गुणैः सृष्ट्यादिभिः कर्मभिश्च यथायोगं वर्णेषु स्थित्वाऽऽराध्यां त्वां प्रणवरूपिणीं भवतीं प्रणन्तुं स्तोतुं वा, अकृतपुण्यः कथं प्रभवति, न प्रभवत्येवेत्यर्थः। इति प्रणवरूपार्थोऽष्टमः ॥

अथ 'मातृका परमा देवी मन्त्रमाता महेश्वरी' इति वचनान्मन्त्रमातृरूपत्वान्मातृकार्थः कथ्यते—'ककारादिक्षकारान्ता वर्णास्ते शिवरूपिणः। समस्तव्यस्तरूपेण षट्त्रिंशत्तत्त्वविग्रहाः॥' इत्यागमात्कादिक्षान्तो वर्णसङ्घः शिवशब्देनोच्यते। 'अकारादिविसर्गान्ताः स्वराः षोडश शक्तयः। नित्याषोडशिकात्मानः परस्परममी युताः॥' इति वचनाच्छक्तिरित्यनेनादयः षोडश स्वरा उच्यन्ते। तथा च शिवः कादिसङ्घः शक्त्या आदिस्वरसङ्घेन युक्तो यदि श्लिष्टश्चेत्, तर्हि प्रभवितुं प्रकर्षेण भवितुं वेदपुराणेतिहासादिरूपेण गुम्भनयोग्यतां प्राप्तुं शक्तः समर्थः, 'शिवशक्तिमया वर्णाः शब्दार्थप्रतिपादकाः। शिवः स्वरपराधीनो न स्वतन्त्रः कदाऽप्यसौ॥' इति वचनात्। एवं न चेत्, देवः शिवः कादिः स्पन्दितुं ताल्वोष्ठादिभिः सुखोच्चारणं प्राप्तुं कुशलो न खलु। स्वरसंमेलनाभावे क् ख् ग् घ् इत्येवंरूपतया, उच्चारणायोग्यत्वान्निरर्थकत्वाच्चेति भावः। अतः अमूं हरिहरविरिञ्चादिभिरपि आराध्यामुपास्यां त्वां मातृकारूपिणीं भवतीम् 'अकारादिक्षकारान्तैर्वर्णैरत्यन्तनिर्मलैः। अशेषशब्दैर्या भाति तामानन्दपरां नुमः॥' इति वचनात्, प्रणन्तुं स्तोतुं वा पञ्चाशद्वर्णात्मिकैव वेदेतिहासाद्यनेकरूपेण विस्तीर्णेति, अकृतपुण्यः कथं प्रभवति। इति मातृकापरार्थो नवमः ॥

अथ मन्त्रपरार्थः—शिवः ककारः शक्त्या एकारेण युक्तो यदि संयोगं प्राप्तश्चेत्, ककारानन्तरमेकार उच्चारितश्चेदित्यर्थः। शिवशक्तिशब्दयोः ककारैकारपरत्वं मन्त्रोद्धारश्लोके वक्ष्यन्त्याचार्याः। तथा चायमर्थः—शिवा त्रिपुरसुन्दर्यस्यास्ति देव्यात्मनेति शिवः ककारः। अर्शआद्यच्। अथ वा 'क्रोधीशो धातृसंज्ञश्च' इति मातृकाकोशाच्छिवः ककार उच्यते। एवं शक्त्यात्मकहृष्टाकलावचनस्य प्रकृत्यभिधानमिति ज्ञेयम्। अथ वा शक्तिरेकारः, 'चण्डीशः पद्मनाभश्च शक्तिः सूक्ष्मोऽमृताक्षरः। उड्डीशः कामरूपश्च एकारश्च त्रिकोणकः॥' इति मातृकाकोशात्। यत्तूक्तं लक्ष्मीधरेण—'शिवशब्देन त्रिपुरसुन्दरीनामधेया कला कथ्यते, तेन ककारो लक्ष्यते' इति, तन्न, पुंलिङ्गस्य शिवशब्दस्य त्रिपुरसुन्दरीवाचकत्वाभावात्। न चानेन शिवशब्देन शिवाशब्दलक्षणा युक्ता, शब्दलक्षणेव लिङ्गलक्षणाया अश्रुतचरत्वात्, प्रकृते वाच्यार्थानुपपत्त्याद्यभावाच्च, कोशाश्रयेण ऋज्वर्थमपहाय क्लिष्टकल्पनाप्रयोजनाभावाच्च। एवं शक्त्यादिस्थलेऽपि दूषणमूह्यम्। 'ककाराय कपूर्वादिदेवतापूजिताय च' इति सूतसंहितोक्तेर्वा शिवः ककारः। तर्हि प्रभवितुं मातृकारूपेण गुम्भनं प्राप्तुं शक्तः। एवं न चेत् प्राथमिकः ककार एकारयुक्तो न यदि, कौ भुवि शेते वर्तत इति कुशः पृथिवीबीजभूतो लो लकारो यस्य सः, कर्मधारयो वा। यद्वा कुशोऽङ्कुशीभूतः, स्वोपरि

वर्तमानत्वादिति, लो यस्य स कुशलो देव ईकारः । 'गोविन्दश्च त्रिमूर्तीशः शान्तिः स्याद्वामलोचनः । नृसिंहास्त्रं तथा माया ईकारश्च सुरेश्वरः ॥' इति कोशात्सुरेश्वरापरपर्यायेण देवशब्देन ईकारोक्तिरविरुद्धा । अथ वा, दीव्यति माद्यति स्त्रीपुरुषेष्विति वा, कामदेवपदे 'विनाऽपि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वाच्यः' इत्यनुशासनात् 'देवदत्तो दत्तः, इत्यादिवन्नामैकदेशे नामग्रहणाद्वा- देवशब्देन मदन उच्यते । तेन तद्बीजमीकार उच्यते । स्पन्दितुं चलितुं मन्त्रे उच्चारणं प्राप्तुं न खलु शक्तः, कुशलोऽपि देवोऽपि स्पन्दितुं न शक्त इति वाऽर्थः । पूर्वपूर्वबीजोच्चारणानन्तरभावित्वादुत्तरोत्तरबीजोच्चारणस्येति भावः । एवं प्रथमखण्डीयाश्चत्वारो वर्णा अत्र प्रतिपादिताः । अतोऽनन्तरं हरिहरविरिञ्चादिभिः, हरिशब्दस्य सूर्याचन्द्रमसोरुभयोरभिधानत्वात्, अनेन खण्डद्वयान्तर्गतमुभयार्थकं हद्वयं सद्वयं चेति कथ्यते । हरशब्देन शिवशब्दापरपर्यायेणैकः ककारो गृह्यते । विरिञ्चशब्देन ब्रह्मवाचिनाऽपरः ककारो गृह्यते, तस्यापि ब्रह्माभिधायकत्वात् । 'इन्द्रश्च विश्वे च देवाः' इति श्रुतावुपासकत्वेनोक्तस्यैवेन्द्रस्यादिशब्दाभिधेयीभवनार्हत्वात्तद्वाचकेनादिशब्देन 'शक्रो लकारः' इति कोशप्रसिद्धेरिन्द्रबीजं लकारद्वयमुच्यत इत्येवं खण्डद्वयान्तर्गता अष्टौ वर्णा उक्ता इत्येवं द्वादश वर्णा उद्धृताः । किं चात्रैव हरिहरविरिञ्चेत्यादिपदमध्ये हलामक्ष्वन्तर्भावाङ्गीकारमते विरिमित्यनयोर्वकाररेफयोरिकारयोरन्तर्भावात्प्रथमहरिशब्दस्थहकाररेफयोर्वकारोपरितनेकारस्य सानुस्वारेकारस्य च सवर्णदीर्घं कृत्वा श्लिष्टोच्चारणे एकहृल्लेखालाभः । तथा तदनन्तरहरपदस्थहकाररेफयोर्वकारोपरितनेकारसानुस्वारेकारयोः सवर्णदीर्घानन्तरं श्लिष्टोच्चारणे द्वितीयहृल्लेखालाभः । तथा हरपदस्थस्य रेफस्य तदुपरितनाकारेऽन्तर्भावात्कृतपररूपस्याकारस्य वकारोपरितनेकारान्तर्भूतसानुस्वाररेफोपरितनेकारेण सवर्णदीर्घानन्तरं श्लिष्टोच्चारणे तृतीयहृल्लेखालाभ इति खण्डत्रयस्थहृल्लेखात्रयोद्धारोऽपि लभ्यत इति । 'दशपञ्चकभेदेन प्रपञ्चस्य विलासिनः । साक्षिणी चाक्षरी यस्मात्तस्मात्पञ्चदशाक्षरी ॥' इति निरुक्त्या पञ्चदशाक्षरी प्रोक्ता । तथा, आद्यस्य साचः प्रथमोष्मणो विरिंचपदमध्यस्थसानुस्वाररेफेण सवर्णदीर्घं विधाय श्लिष्टोच्चारणे प्रधानकमलाबीजलाभोऽपि भवति । अत्र च भगवत्पादाचार्याः षोडशाक्षरीमन्त्रप्रधानस्य कमलाबीजस्य कृत्स्नमन्त्राक्षरव्याप्तिं प्रकाशयितुं मन्त्रवर्णान्मध्ये विन्यस्य तत्प्रत्याहाररूपेण संपुटीकृत्य प्रायुञ्जन्निति ध्येयम् । अत एव हरिहरविरिमित्यनेन त्रीणि भुवनेश्वरीबीजानि सूचयित्वा 'चस्तुरुष्के स्वरे चापे चकारे चन्द्रमस्यपि' इति नानार्थाच्चास्य चन्द्रस्यादिश्चादिः, तत्प्रथमसंभूतत्वात्, चं चन्द्रमत्ति तच्छोभां भुङ्क्ते इति वा चादिर्लक्ष्मीरित्यमुमर्थं मनसि निधाय तेन तद्बीजसूचनापूर्वकं तस्याः कृत्स्नाभिव्याप्तिप्रदर्शनाय बहुवचनमवोचन्निति तात्पर्यम् । अथवा, चादिभिः स्वरादिभिर्मातृकाक्षरैर्मन्त्रे प्रत्याहाररूपेण गुप्तैरित्यर्थः । आराध्यां सिद्धाम्, 'राध साध संसिद्धौ' इति धातुः । हरिहरादिभिर्जप्यां वा । तदुक्तं दक्षिणामूर्तिसंहितायाम्—'अनयैव पुरा ब्रह्मा सृष्टिकर्तृत्वमाप्तवान् । हरिः पालनकर्तृत्वं रुद्रः संहारकर्तृताम् ॥

षोडशार्णा महाविद्या ब्रह्मरूपा जगन्मयी। सर्वानन्दमयी साक्षात्सर्वसाम्राज्यदायिनी ॥' इति। त्वां मन्त्ररूपिणीं भवतीं कादिविद्यारूपिणीं प्रणन्तुं स्तोतुं पञ्चदशकलात्मकैः पञ्चदशभिरेव वर्णैः कृत्स्नं प्रपञ्चं व्याप्यासीति स्तवितुं वा, अकृतपुण्यः कथं प्रभवति। इति कादिविद्योद्धाररूपार्थो दशमः ॥

अथ हादिविद्योद्धाररूपोऽर्थः—'शक्तिः प्राणश्च जीवश्च मन्त्रो नादः शिवो रविः। कषोरक इति संज्ञाः स्युर्हकारस्य शिवोदिताः ॥' इति शारदातिलकोक्तेः शिवो हकारः शक्त्या सकारेण पराबीजत्वात्सकारस्य। सकारस्य पराबीजत्वं मन्त्रोद्धारश्लोके वक्ष्यन्त्याचार्याः। 'सहशक्तिः' इति मन्त्रान्तरे च दृश्यते। युक्तो यदि संयुतश्चेत् तर्हि प्रभवितुं मन्त्ररूपेण गुम्भनं प्राप्तुं शक्तः। एवं न चेत्, देवः ककारः कुशलो लकारश्च स्पन्दितुं मन्त्रवर्णतया स्पन्दनं प्राप्तुं न खलु न शक्तः खल्विति प्रथमखण्डीयवर्णचतुष्टयमुक्तम्। अनेनैवार्धेन द्वितीयखण्डीयाः पञ्च वर्णा अप्युच्यन्ते। शिवशक्तिदेवपदानि हकारसकारककाराभिधेयानि समानान्येव। खमाकाशं लुनाति तद्बीजत्वादिति खलुराकाशबीजं हकारः। कुशलो लकारश्च स्पन्दितुमपि न शक्त इत्यर्थः। हरिर्वायुः, तेन च तद्बीजं सकार उच्यते। हरः ककारः। वेर्वकारस्याधो रिञ्चति प्रकाशत इति विरिञ्चो लकारः। तैरेतैर्द्वादशभिर्वर्णैर्हकारादिभिः सर्वमन्त्रमूलकारणैस्त्रिभिर्गौरीबीजैश्च पूर्वोक्तप्रकारेणात्रैव सूचितैरित्यर्थः। आराध्यां सिद्धां कामेश्वरीवाचकलोपामुद्रोपासितहादिविद्यारूपिणीं त्वां मन्त्रं तद्रूपिणीं भवतीं च प्रणन्तुं स्तोतुं वा, अकृतपुण्यः कथं प्रभवति? किं तु दक्षिणामूर्तिसंहितोक्तमस्य माहात्म्यमवबुध्याराधितुं कृतपुण्य एव समर्थः। इति हादिविद्यापरार्थ एकादशः। अयं च वर्णोपदेशवेलायां पाणिनिना प्रथमतो निरूपितत्वादुत्कटोऽतिगोपनीयोऽपि प्रकाशितो गोप्तव्यः ॥

पञ्चाक्षरीपरार्थोऽपि प्रतीयते—शिवशब्दः शक्त्या, आवृत्त्याश्रयणात् 'नमः शक्तिरुदीरिता' इति प्रसिद्धेर्नमःशब्देन शिवशब्दादुत्पन्न 'ङे' इत्येतच्चतुर्थीविभक्तिलब्धेनैकारेण च युक्तो यदि, तर्हि प्रभवितुम् 'ङेर्यः' इति यादेशे 'सुपि च' इति दीर्घे च क्रियमाणे मन्त्ररूपेणोत्पत्तुं परमेश्वरं समभिधातुं च शक्तः। एवं न चेत् देवः शिवशब्दः स्पन्दितुं पञ्चाक्षरीमन्त्ररूपेण चलितुं च न कुशलः खलु, लोकानां शिवयोरैक्यबोधकोऽपि नेत्यर्थः। अतः अमूं हरिहरविरिञ्चादिभिराराध्यां जप्यमानां त्वां पञ्चाक्षरीमन्त्ररूपिणीं भवतीं प्रणन्तुं स्तोतुं वा, अकृतपुण्यः कथं प्रभवति। इति पञ्चाक्षरीरूपार्थो द्वादशः।

अथ 'गुरुविद्यादेवतानामैक्यं संभावयेद्धिया' इति वचनाद्गुरुरूपार्थोऽपि प्रकाश्यते। तत्र चायमर्थः—'देहजात्यादिसंबन्धान्वर्णाश्रमसमन्वितान्। वेदाञ्शास्त्राणि सर्वाणि पादपांसुमिव त्यजेत् ॥ न गुरुं संत्यजेन्नित्यं जानन्नस्य कृतं नरः। गुरुभक्तिं सदा कुर्याच्छ्रेयसे भूयसे नरः ॥'

'ऋतस्य दातारमनुत्तरस्य निधिं निधीनां चतुरन्वयानाम्। ये नाद्रियन्ते गुरुमर्चनीयं ते वै लोकान्निर्विशन्त्यप्रतिष्ठान् ॥' इत्यादिवचनेभ्यो गुरुभक्त्यामवश्यविधेयायां स किमात्मक इति प्रश्ने 'गुरुरेव शिवस्तस्य नान्य इत्यब्रवीच्छ्रुतिः' इति श्रुत्या यदुक्तं स परमार्थ एव। 'यः शिवः सर्वभूतानामीश्वरः स्वत एव तु। ईशानः सर्वविद्यानां स एवादिगुरुर्बुधाः ॥ * * * यथाऽहं ज्ञानदो गुरुः ॥ शुद्धस्फटिकसंकाशं द्विनेत्रं द्विभुजं गुरुम्। वराभयकरं देवं परमानन्दरूपिणम् ॥ भक्ताज्ञानतमोभानुं मूर्ध्नि पङ्कजसंस्थितम्। सदाशिवमयं नित्यं श्रीगुरुं प्रणमाम्यहम् ॥ अनन्तमपरिच्छिन्नं तत्त्वं येन प्रकाशितम्। सच्चिदानन्दमपरं श्रीगुरुं शिवमाश्रये ॥' इत्याद्यभेदवचनेभ्यः शिवो गुरुरित्युच्यते। तथा च शिवयति शिष्यान्मन्त्रतत्त्वोपदेशेनेति शिवो गुरुः। 'सिद्धस्य विप्रवर्यस्य षोडशार्णप्रजापिनः। संप्रदायविशुद्धस्य शिष्योऽवश्यं भवेच्छिवः ॥' इति वचनोक्तगुणसंपन्नतया कल्याणमूर्तिर्वा, शक्त्या सामर्थ्येन मन्त्रजपदेवतानुसंधानवश्याकर्षणादिरहस्यविज्ञानरूपेणेत्यर्थः। युक्तो यदि तर्हि शिष्यः प्रभवितुं प्रकृष्टो भवितुं शक्तः परशुरामादिवदित्यर्थः। परमशिवरूपगुर्वनुग्रहात्स्वयमुत्कटो भवतीत्यभिप्रायः। एवं न चेत्, गुरुः समर्थो न चेत्, देवोऽपि प्रकाशमानोऽपि शिष्यः, देवताऽपीत्यर्थः। स्पन्दितुं किंचिदपि सामर्थ्यमवाप्तुं कुशलो न खलु, देवतानुग्रहभाङ् न भवत्येवेत्यर्थः। अतः अमूं हरिहरविरिञ्चादिभिरप्याराध्याम्, सर्वेषामपि मन्त्ररहस्यस्य गुरुपरम्परागतत्वादिति भावः। त्वां गुरुमूर्तिरूपिणीं भवतीम्। अत्रोक्तमम्बास्तवे—'विद्यां परां कतिचिदम्बरमेव केचिदानन्दमेव कतिचित्कतिचिच्च मायाम्। त्वां विश्वमाहुरपरे वयमामनामः साक्षादपारकरुणां गुरुमूर्तिमेव ॥' इति। प्रणन्तुं स्तोतुं वा अकृतपुण्यः कथं प्रभवति। इति गौरवार्थस्त्रयोदशः ॥

अथ देव्याश्चन्द्रकलारूपत्वात्तद्रूपार्थोऽपि प्रतीयमानो विविच्यते—शिवशब्देन शिवतत्त्वात्मिका दर्शाख्या चान्द्री कलोच्यते। न च पुंलिङ्गेनानेन स्त्र्यभिधानं विरुद्धमिति शङ्कनीयम्, प्रतापरुद्रीये स्त्रियामेव गणपतिराजदुहितरि रुद्र इति पुंलिङ्गप्रयोगदर्शनात्। आहुश्च तत्र रत्नापणकृतः—"प्राचामियं शैली यदयं लिङ्गव्यत्यासेन निर्देश इति; 'यथा पुंव्यक्तौ शिखण्डिनि' इति। तथा शतपथब्राह्मणे इन्द्रं पुमांसमपि 'सुब्रह्मण्यों सुब्रह्मण्यों सुब्रह्मण्योमिति स्त्रियमिह त्रिराहेति' इति"। तथा च शिवो दर्शाख्या चान्द्री कला शक्त्या शक्तितत्त्वात्मिकया दृष्टाख्यया कलया युक्तो यदि, तर्हि प्रभवितुं प्रकृष्टतां दर्शनयोग्यतामुपासनयोग्यतां च प्राप्तुं शक्तो भवति। प्राथमिककलाया अतिसूक्ष्मतया द्वितीयकलायोगेनैव दर्शनयोग्यत्वादिति भावः। अत एवाह भारविः—'प्रतिपच्चन्द्रमिव प्रजा नृपम्' इति। 'तस्य प्रतिपद्यदर्शनाद्द्वितीयाचन्द्रमिवेत्यर्थः' इति घण्टापथे। एवं न चेत्, दीव्यति प्रकाशत इति देवो दर्शाख्या कला स्पन्दितुमपि किंचिदपि प्रकाशं जगदाप्यायनं च प्राप्तुं कर्तुं च दर्शतादिकला अनुग्रहीतुं चेत्यर्थः। न कुशलः न समर्थः। स्वदर्शनेन लोकानां सौख्यप्रदानशक्तश्च नेत्यर्थः।

ताश्च कला वेदे प्रसिद्धाः 'दर्शा दृष्टा दर्शता विश्वरूपा सुदर्शना। आप्यायमानाप्यायमानाप्याया सूनृतेरा' इत्यादिना। अतः अमूं चन्द्रकलारूपिणीं हरिहरविरिञ्चादिभिराराध्यां सेव्याम्। यद्वा, 'प्रथमां पिबते वह्निः' इत्यादिक्रमेण सोमोत्पत्त्युक्तप्रकारेण वा सेव्याम् 'दर्शाद्याः पूर्णिमान्ताश्च कलाः पञ्चदशैव तु। षोडशी तु कला नित्या सच्चिदानन्दरूपिणी॥' इति सुभगोदयोक्तां सकलजगदाप्यायिकां भगवतीम्, अकृतपुण्यः पूर्वजन्मार्जितपुण्यरहितः प्रणन्तुं स्तोतुं वा कथं प्रभवति। पुण्यवत एव चन्द्रकलायां भक्तिरुदेति। तद्रूपेणापीष्टार्थप्रदात्री त्वमेवेति भावः। अतो हरिहरादिष्विव किंचित्पुण्यलेशेन स्तवनोद्युक्ते मयि निरतिशयप्रसादमासादयेति तात्पर्यम्। इति कलारूपार्थश्चतुर्दशः॥

अन्य श्लोकस्य संग्रहवाक्यरूपत्वादुत्तरश्लोकानामस्यैव विवरणवाक्यरूपत्वादुत्तरत्र प्रतिपाद्योऽर्थः सर्वोऽप्यत्र संगृहीतः, यथा विवरणवाक्यरूपाध्यायचतुष्टयप्रतिपाद्यार्थप्रतिपादनं संग्रहवाक्यरूपायां चतुःसूत्र्यामिति संतोष्टव्यम्। अत्र शिवेत्यादीनां सर्वेषां पदानामभिप्रायगर्भत्वात्परिकरपरिकराङ्कुरावलंकारौ। किं च, पूर्ववाक्ये शिवयोर्निरतिशयसाहित्योक्तेर्नित्यशृङ्गारित्वप्रतीतेः साध्यसाधनभावनिर्देशरूपानुमानादत्र समासोक्तिः। लौकिकाशक्तपुरुषवृत्तान्तप्रतीतेर्वस्त्वलंकाररसात्मकस्त्रिविधो ध्वनिः। पूर्ववाक्यस्योत्तरवाक्यं प्रति हेतुत्वात्काव्यलिङ्गं क्वचिच्छ्लेषोऽपीति सर्वं रमणीयम्। माधुर्यं गुणः, 'या पृथक्पदता वाक्ये तन्माधुर्यं प्रकीर्त्यते' इति तल्लक्षणात्। पाकोऽत्र द्राक्षापाकः, 'द्राक्षापाकः स कथितो बहिरन्तःस्फुरद्रसः' इति लक्षणात्। वृत्तिरत्र कैशिकी, तदुक्तं शृङ्गारतिलके— 'या नृत्तगीतप्रचुरोपभोगवेषाङ्गसंकीर्तनचारुबन्धा। माधुर्यवृत्ताल्पसमासरम्या वृत्तिः स्मृताऽसाविह कैशिकीति॥' इति। रीतिरत्र वैदर्भी, 'बन्धपारुष्यरहिता शब्दकाठिन्यवर्जिता। नातिदीर्घसमासा च वैदर्भीरीतिरिष्यते॥' इति। अलमतिविस्तरेण॥

अरुणाकरुणावीक्षाप्रेरितेनातिविस्तरम्। विविधानागमग्रन्थांष्टीकाः प्राचीननिर्मिताः॥
आलोच्य सावधानेन शास्त्रसारमनेकशः। प्रोक्तः श्लोकाभिधेयोऽयं भजता गणनायकम्।
असूयां दूरतः कृत्वा सुधीभिरवधार्यताम्॥ १॥

## आनन्दगिरीया

ओंनमः श्रीपरदेवतायै।

परां संवित्कलां नौमि सन्ध्याबिन्दुविभूषिताम्।
अधः शतयात्मिकां रक्तां सच्चिदानन्दसूत्रिताम्॥

इहानन्दाब्धिमध्ये मां मग्नं रक्षतु शांकरः ।
मदोल्लासिस्फुरद्भृंगकपोलः पार्वतीसुतः ॥

इह खलु निखिलपुराणस्मृतीतिहासादिसांगरहस्यचतुर्वेदार्थसमस्तशास्त्रार्थाखिलतन्त्रार्थेभ्यो निबिडमनस्तमोऽभोधेः झटिति सन्तारकारकं -- परमसुखसेव्यं सन्मयं जगद्विदित्वा अनिर्वचनीयं किमपि प्रस्तूयमानः शिवशक्तिस्मरणरूपं मंगलमवातारयत् । सकलमन्त्रमयी मातृका, सा च कामकला, सा परस्पराक्षरलयक्रमा । अतोऽस्मदादिभक्तानुग्रहाय देव्याः स्तुतिमारब्धुमनाः साधकशिरोऽलङ्कारचूडामणिः श्रीशङ्करः साक्षात् स्वयं शङ्करः सूक्ष्मकामकलास्वरूपः सूक्ष्मां कामकलां प्रभावितसकलमन्त्रार्थां प्रस्तौति—**शिव** इति । अत्रैषा अक्षरयोजना - हे परमेश्वरि हे अविनाशिनि शक्ते अकृतपुण्यः पुमांस्त्वां प्रणन्तुं स्तोतुं वा कथं प्रभवति । न कृतं पुण्यं येन स तथा । तथा च प्राचीनजन्मपरंपरोपार्जितपुण्यपुञ्जसंपद्विहीनः, त्वां प्रणन्तुं कायवाङ्मनोभिः नमस्कारगोचरीकर्तुं स्तावकवाक्यपुष्पोपहारैः पूजयितुं वा कथं समर्थो भवति । न कथमपि । ब्रह्मादीनामपि मनोरथ-पथातीतं तव चरणकमलं सकृदपि स एव नमस्कर्तुं शक्नुयात् यस्य महती पुण्यसंपत्तिः स्यात् । तथा च शारदायां-"पूर्वजन्मकृतैः पुण्यैर्ज्ञात्वेमां परदेवताम् । आगमोक्तविधानेन पूजयेत्सुसमाहितः ।" आर्यापि - " मलिनमनस्तनुवाचामारामति देवि किं मतिः सहसा । सुकृतशतैरुपलक्ष्यं तव पदपद्मं समस्तशुभसद्म ।" तथापि हे मातः, अज्ञानवशादहन्तु पुण्यसंपद्विहीनोऽपि तव चरणकमलं स्तोतुं प्रणन्तुं च प्रतिज्ञां कृतवानस्मीति, अज्ञानवर्तिनि अनन्यशरणे मयि दीनतमे, तथा कृपाकटाक्षविक्षेपः करणीयो येन तव चरणारविन्दवन्दनोपवर्णनानन्दरूपः प्रतिज्ञातार्थो मत्तो निर्वाहमासादयेत् । अनन्य-भावेनोपरतानां स्वीयहृदाशयानां मनोरथोऽपरिचितार्थफलकाभिमानादिप्रभवः इति भावः । अत्र दैन्योक्तिः, कृपां विनान्यद्वितथम् । व्यञ्जनया कृपाप्रार्थनम् । अनुपपत्तिप्रतिसन्धानानपेक्षपदार्थ-वाक्यार्थाविनाभावो व्यञ्जना । किंलक्षणां त्वां ? अतो हेतोः हरिहरविरिञ्च्यादिभिरप्याराध्यां, हरिः श्रीकृष्णः हरः श्रीमहादेवः, विरिञ्चिर्ब्रह्मा, ते आदौ येषां, तैरप्युपास्याम् । आदिशब्दादागमोक्ता मन्वादयः । अत्र तद्गुणसंविज्ञानो बहुव्रीहिः, लंबकर्णादिवत् इति । त्रैलोक्याराध्यैरपि तवाराधकैः इत्यपिशब्दो विरोधाभासद्योतनाय, अनुक्तानां समुच्चायको वा । विषयान्तरपरित्यागेन तदेकतानैः कायवाङ्मनोभिर्नमनं पूजनं ध्यानं स्तवनमाराधनमपि तद्योग्यां आराध्यामित्युपचारेण, तेषां प्राणत्वेन नित्यानुसरणीयापि त्वमसि । अतः सदाशिवसंयोगादुद्भिद्यमानतद्गुणबिम्बभूतायां त्वयि प्रति-बिम्बतया प्राप्तजन्मानः खलु कृष्णादयः, अत एव तेषां स्तवनमपि । एवं च सकलपुण्यकर्माधिष्ठातारः परमपुण्यात्मानः कृष्णादयोऽपि स्वे स्वे कार्ये त्वामाराध्यैव प्रभवन्ति नान्यथा । तर्हि का कथा अस्मदादीनां अपुण्यवताम् ।

अत्र कश्चित्, अत्रश्लोके सम्बुद्धिपदं नास्तीति कष्टसृष्टया गौरीसमानार्थकतां कृत्वा हरीति संबोधनं करोति। आदिशब्देन चादिपुरुषत्वात् श्रीकृष्ण इति व्याख्याति। स आगमशास्त्रे साहित्ये चानभिज्ञ इति। तथा हि आदिशब्देन यदि श्रीकृष्णः, तदा श्रीशंकरचरणाभिप्रेतागमप्रोक्त-श्रीविद्योपासकानां मन्वादीनां त्यागप्रसङ्गात्। तथा च मानसोल्लासज्ञानार्णवौ—"मनुश्चन्द्रः कुबेरश्च मन्मथस्तदनन्तरम्। लोपामुद्रा तथागस्त्यः स्कन्दो विष्णुस्तथा शिवः। दत्तात्रेयो मुनिश्रेष्ठः (मुनिः शक्रः) दुर्वासाश्च त्रयोदश। उपासते महाविद्यां द्वादशोक्तास्तवानघे।" तथा "विष्णुः शिवः सुरश्रेष्ठो (ज्येष्ठो) मनुश्चन्द्रो धनाधिपः। लोपामुद्रा तथाऽगस्त्यः स्कन्दः कुसुमसायकः। सुराधीशो रौहिणेयो दत्तात्रेयो महामुनिः। दुर्वासा इति विख्याताः (ते मुख्याः) एतां विद्यामुपासकाः।" इत्यागमानभिज्ञत्वम्। किञ्च संबुद्धिपदाभावेऽपि संबुद्धिं व्याप्य युष्मच्छब्द-प्रयोगपरामर्शादध्याहृतसंबुद्धिपदान्वयबोधस्य सुवचत्वात्। अपि च। तनीयांसं पांसुं, सुधासिन्धो-र्मध्ये, त्वामलिख्य प्रणयकुपितां, ज्याकृष्टिबद्धखटिकामुखपाणि, गंगास्तु शिरसि, दृष्टो रंगावतार इत्यादौ संबोधनपदाभावेन दोषापत्तेः। अध्याहारस्य च द्वारं पिधेहीत्यादौ शास्त्रेणादृतत्वात्। न च शाब्दी आकांक्षा शब्देनैव पूर्यत इति न्यायेनोच्यत इति वाच्यम्। किंच काव्ये पदार्थवाक्यार्थादविनाभाविनि भासमाने काव्यस्योत्तमत्वं व्यंग्यप्रधानत्वात्। तथा च मम्मटः—"इदमुत्तममतिशयिनि व्यंग्ये" इत्यादि। तथा च साहित्यानभिज्ञत्वम्। तस्मादस्माभिर्व्या-ख्यातं तदेव सम्यक्। किञ्च संबोधन एवाग्रहश्चेत् तदा यदीत्यत्र पदच्छेदं कृत्वा यत् इ इति मंगलस्मारकलक्ष्मीवाचकेकारः संबोधनपरः कर्तव्य इति।

अतः इति। यत इत्यत आह—यदीत्यादि। यदि यस्माच्छिवस्त्वया शक्त्या युक्तो भवति तदा ब्रह्मादिजनने प्रपञ्चाकारे विवर्ते वा शक्तो भवति। प्रभुतां कर्तुं समर्थो भवति। केवलस्य असंगस्य उदासीनस्य परमात्मनः कर्तृकर्मक्रियाकारकफलविलक्षणत्वेन पर्युदासित्वान्न ततो ब्रह्माद्युत्पत्तिरित्याह—न चेदेवं देव इत्यादि—नन्वेवं 'यतो वा इमानि भूतानि जायन्त', इतिश्रुतेः का गतिरिति चेन्न, यतः इत्यस्याविद्यायुक्तादिति व्याख्यानात्। नन्वेवं शक्तेरपि कथं जनकत्वं, शक्तिशब्देन कार्यानुकूलोऽतीन्द्रियः स्वभावभूतो धर्म इति, तस्य च कार्याभावव्याप्याभावप्रतियोगितया अनुकूलतामात्रं, न कारणत्वं दण्डत्वादिवदन्यथासिद्धत्वात्, इति चेत्सत्यम्। तथापि शक्तिशब्देन प्रपञ्चजननी पारमेश्वरी महामायोच्यते। नतु वह्न्यादिशक्तिरिव। तदुक्तमाचार्यचरणैः-"इत्येषा सहकारि-शक्तिरसमा माया दुहन्तीततो मूलत्वात्प्रकृतिः प्रबोधनतो विद्येति यस्यादिमा। देवोऽसौ विगतप्रपञ्च-रचनाकल्लोलकोलाहलः साक्षात्साक्षितया मनस्यभिरतिं बध्नातु शान्तोद्यमे"। इति। तस्याः शक्तिपद-वाच्यत्वं "देवात्मशक्तिं स्वगुणैर्निगूढामि" तिश्रुतेः। मार्कण्डेयेऽपि "हेतुः समस्तजगतां" इत्यादि।

केवलं जडायास्तस्याः कार्योपादिततदुत्पादनेनैव तनोपरागस्योपेक्षणीयतया परमात्मसन्निधानमात्रम्। अत एवानादिसिद्धाध्यासात् शक्तिशक्तिमतोरभेदोऽयुतसिद्धाख्यः। अत एव शिवशक्तिमयं सर्वं जगदिति। केवलं उपासकानां यद्भेदभावनं तद्वासनावशात्, चित्रगतनारीकन्धरादिवत्। वस्तुतः समसमयावच्छेदेन शक्तिशक्तिमतोर्भेदभावनं न भवत्येव। तदुक्तं "शक्तिशक्तिमतोर्भेदं वदन्त्यपरमार्थतः। अभेदमनुपश्यन्ति मुनयस्तत्वचिन्तकाः।" इति। गुरूपदिष्टतत्वमस्यादिवाक्यार्थानुसन्धानात् ब्रह्माकारान्तःकरणवृत्तिसमयेऽपि भेदभावनं नास्ति। अविद्याया अभावात् इति॥

इदानीमागमोक्तमार्गानुसारेण मन्त्रोद्धारकतया पद्यं व्याख्यायते। आगमे शिवशक्तिपदयोर्यत्र संकेतः कृतः, तयोर्योगपद्याद्बीजं उत्पद्यते। तन्मन्त्रतया पूर्वार्धं व्याख्येयम्। तथा हि सकलमन्त्रमूलत्वात्प्रथमं मातृकामन्त्रोद्धारः। शिवशब्देन ककारादिव्यञ्जनसमूहः, शक्तिशब्देनाकारादयः षोडश स्वरा इति। तदुक्तमागमे-"ककारादिक्षकारान्ता वर्णास्ते शिवरूपिणः। अकारादिविसर्गान्ताः स्वराः षोडशशक्तयः"॥ इति। तयोर्योगे क ख ग घ ङ इत्येवं वर्णा उच्चारणयोग्यतया पदं वाक्यं घटयितुं शक्ता नान्यथेति स्वरसंबन्धमन्तरा व्यञ्जनसमूहस्योच्चारयितुं अशक्यत्वात्। तदुक्तं "विना स्वरैस्तु नान्येषां जायते व्यक्तिरञ्जसा। शिवशक्तिमयान्प्राहुः तस्माद्वर्णान्मनीषिणः" इति। तदुक्तम्—"अंब तावकपदद्वयार्चकस्त्वन्मयो भवति नात्र विस्मयः। यत्त्वया हि विवशो वशीकृतः शक्तिरेव समभूच्छिवः स्वयम्" इति। आर्यापि-"त्वमविद्यावशगत्वाज्जगदाकारो विवर्तसे विष्णो। अत एवाधिष्ठानं तत्र भुजंगे यथा रज्जुः"॥ अथवा-मन्त्रः-शिवः अकारः, शक्तिरेकारः, तयोर्योगे ऐकारो जायते। अग्रे बिन्दुः शालिनीति। एवं वाग्बीजात्मकश्चेद्भवति तदा वाग्जालं प्रसूयते नान्यथेति। एवं मन्त्रान्तरेऽपि ज्ञातव्यमिति। प्रथमश्लोकार्थः॥

अत्र शिवशक्त्यादीनामतिरहस्यार्थो व्याख्येयः। ब्रह्म कामकलायुक्तं प्रपञ्चोद्धारे शक्तम्। न चेदनया संगतं, निष्क्रियं निराकारं स्पन्दशून्यं सदाऽऽस्ते। हे परे परसंविन्मयि! गुणत्रये बिन्दुत्रये एतैः समं अकृतपुण्यस्त्वां स्तोतुं, अतो ज्ञातुं देवता केयं कस्मात् क केनेति, विष्णुरप्यकृतपुण्यः त्वां प्रणन्तुं स्तोतुं वा कथं प्रभवतु। न कथमपीति। एतैः कल्पे कल्पे समुपास्यमानापि अगम्यासि यतः। तथा यामले "कल्पे कल्पे महेशानि चिन्तयामि परां कलाम्। ज्ञातुं नाद्यापि शक्तोऽहं संविदानन्दसुन्दरीम्"। तथा "विष्णुर्भूत्वा हरो भूत्वा धाता भूत्वा महेश्वरि। भूत्वा महेश्वरो देवि सदापूर्वः शिवः शिवे। न चैनां कलयेत्कालीं कोटिजन्मशतैरपि। नाद्यापि यस्या जानन्ति स्वरूपारूपभावनाम्"। इत्याद्यलम्। परार्द्धमात्रात्मिका संविन्मात्रा अग्नीषोमरूपबिन्दुगुणत्रयवती कामकला, सा तु मात्रायत्तगुणत्रयबिंबिता प्रपञ्चोद्धारं कुर्वाणा जायत इति भावः।

## तात्पर्यदीपिनी

श्रीगणेशाय नमः

श्रीविजयादुर्गायै नमः ।

अविघ्नमस्तु ।

पाशांकुशाभयवरान् दधतीं कराब्जैः
सच्चिन्मयां त्रिणयनामुदितार्ककान्तिम् ।
चित्तप्रसादजननीं भुवनेश्वरीं तां
वन्दे विरिञ्चिशिवविष्णुनुतां शरण्याम् ॥

प्रणम्य जनकं रुद्रमंबां भागीरथीं तथा ।
आनन्दलहरीस्तोत्रं व्याकरोमि यथामति ॥

इह खलु शंकरभगवत्पूज्यपादः श्लोकशतेन श्रीसुन्दरीं स्तौति—**शिवः इति**—शिवः सर्वमंगलोपेतः सदाशिवः परमात्मा यदि शक्त्या जगन्निर्माणशक्त्या युक्तोऽवच्छिन्नो भवति, तर्हि प्रभवितुं प्रपञ्चं निर्मातुं शक्तः समर्थो भवति ; जगत्सर्जनादौ शबलस्यैव सामर्थ्यमिति शेखरितार्थः । विपक्षे बाधकमाह । एवं शक्त्या युक्तो देवः, दीव्यतीति देवः, न चेत्तर्हि स्पन्दितुमपि चलितुमपि, प्रपञ्चरूपं सन्तानं निर्मातुमपि, खलु इति निश्चये, न कुशलः समर्थो न भवेत् । निराकारस्य विभोराकाशतुल्यस्य स्पन्दनायोगादिति हृद्गतोऽर्थः । तस्माज्जननादौ प्राधान्यं शक्त्याभिगतमेवेत्यर्थः । तथोक्तं वामकेश्वरतन्त्रे - "परोऽपि शक्तिरहितः शक्त्या युक्तो भवेद्यदि । सृष्टिस्थितिकलाः कर्तुं अशक्तः शक्त एव च" इति । अत्र गमकमाह - अतः अस्माद्धेतोः अकृतपुण्यः, न कृतं पुण्यं येन सः, न पूर्वजन्मार्जितपुण्यनिचयः पुरुषस्त्वां भगवतीं प्रणन्तुं कायिकादित्रिविधं नमस्कर्तुं स्तोतुं वा केवलं स्तुतिमात्रमपि कर्तुं वा कथं प्रभवति । न कथमपीत्यर्थः । अस्याशयं स्फुटयति - किं भूतां त्वां ? हरिहरविरिञ्च्यादिभिरप्याराध्यां, हरिर्विष्णुः, हरः शिवः, विरिञ्चिर्ब्रह्मा ते आदयो येषां तैः, आदि-शब्दादिन्द्रादयः संगृह्यन्ते । तैस्तत्पुत्रैराराध्यां पूज्याम् । हरिस्त्वत्पादाराधनसंपादितमेव जगत्पालन-सामर्थ्यं वहति । हरस्त्वच्चरणारविन्दभजनसंपादितं जगत्संहरणसामर्थ्यं धत्ते । ब्रह्मापि जगत्सर्जनादौ सामर्थ्यं वहति । एतेषां कृतिनां यदि त्वदनुग्रहापेक्षा तर्हि कुतस्तरामन्येषामकृतिनां व्यापार-सामर्थ्यमिति भावः ॥

## पदार्थचन्द्रिका

श्रीगणेशाय नमः ।

श्रीभवानीशंकराभ्यां नमः ।

नमामि परमं सांबं सत्यमद्वयमव्ययम् ।
उमां च यत्कटाक्षेण देवो विष्णुर्महानभूत् ॥
वामांगीकृतवामांगि कुण्डलीकृतकुण्डलि ।
आविरस्तु पुरो वस्तु भूतिभूत्यंबरांबरम् ॥
श्रीशंकरकृतां पुण्यां सौन्दर्यलहरीं स्तुतिम् ।
प्रायः प्रत्यक्षरं कुर्वे व्याख्यां विद्वन्मनोरमाम् ॥

ननु कथं परमहंसपरिव्राजकाचार्यस्य परित्यक्तसकलविषयसुखस्य परब्रह्मविदः श्रीशंकरभगवतो भवान्याः सौन्दर्यवर्णने प्रवृत्तिः, अनौचित्यात् इति चेत्, न। भवान्या ब्रह्मरूपत्वेन ब्रह्मस्वरूपवर्णनमेव भवानीवर्णनमिति नानौचित्यमिति वदामः। ननु कथं ब्रह्मस्वरूपता भवान्याः। ङीपि स्त्रीत्व-प्रतीतिरिति चेत् श्रीकृष्णावतारेषु पुंस्त्वप्रतीतेरिव स्त्रीत्वप्रतीतेः। ननु तथापि किमत्र प्रमाणमिति चेत् "स्त्री संज्ञो लोकभावनं" इति, "चितिरूपेण या कृत्स्नमेतद्व्याप्य स्थिता जगत्" इति पुराणवाक्यं प्रमाणमिति ब्रूमः। अथवा शक्तिशक्तिमतोस्तदोपचारात् ब्रह्मरूपत्वं भवान्या इति न किञ्चिदसमञ्जसमिति ॥

अथ व्याख्या। चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्तिकामः परमशिष्टशिरोमणिः श्रीशंकराचार्यः परब्रह्मानुसन्धानरूपं मङ्गलमाचरति **शिव** इति - शिवोऽविकृतचैतन्यम्। शक्तिर्माया। शक्त्या युक्तो यदि शिवो भवति तर्हि प्रभवितुमीशितुं जगन्नियन्तुं इत्यर्थः। शक्तः समर्थो भवतीत्य-नुषज्यते। देवः शिवो न चेदेवं शक्त्या युक्तो न तर्हि स्पन्दितुं चेष्टितुमपि कुशलः शिक्षितः समर्थो न भवतीत्यर्थः। खलु निश्चितम्। कुतः पुनः सृष्ट्यादिकरणसामर्थ्यं तस्येत्यभिप्रायः। हे भवानि! यतस्त्वदधीनमेव शिवस्य परमेश्वरत्वम्। अतस्त्वां हरिहरविरिञ्चादिभिरप्याराध्यां आराधयितुं योग्यां। अकृतपुण्यः प्राचीनानेकजन्मोपार्जितपुण्यपुञ्जरहितः, साधारणो जनः प्रणन्तुं नमस्कुर्तुं स्तोतुं वा कथं प्रभवति समर्थो भवति न कथमपीत्यर्थः। एतेनानेकजन्मोपार्जितनित्यनै-मित्तिकनिष्कामकर्मजनितशुद्धान्तःकरण एव भगवदाराधन इव भगवत्या आराधने अधिकारी भवतीति सूचितम्। हरिहरविरिञ्च्यादिभिरित्यत्र 'कर्तृकरणयोस्तृतीये'ति कर्तरि तृतीया। आदि शब्देन इन्द्रादयो गृह्यन्ते। हरिहरशब्दस्याधिसंज्ञत्वादभ्यर्हितत्वाच्च पूर्वनिपातः। ननु न चेदित्यनेन शक्त्ययोगो वक्तुमनुचितः। तस्य क्वचिदपि अप्रसिद्धेरिति चेत्, मैवं; मोक्षदशायां शक्त्ययोगस्य निश्चयात्। कुशलः शिक्षिते त्रिष्विति मेदिनीकारः ॥

## डिण्डिम भाष्यम्

श्रीगणेशाय नमः ।

कपोलनिःस्यन्दिमदाम्बुधारासन्तर्पितालिव्रजहुङ्कृतोत्थैः ।
उद्गीयमानं गिरिराजपुत्र्याः पुत्रं गणेशं हृदि चिन्तयामि ॥ १ ॥

समस्तवेदशास्त्रौघसारभूतार्थसङ्ग्रहम् ।
आनन्दलहरीस्तोत्रं व्याकरोमि यथामति ॥ २ ॥

स्तोत्रमेतद्वदन्त्येके शिवेन परिभाषितम् ।
तस्यैवांशावतारेण शङ्करेणेति केचन ॥ ३ ॥

केचिद् वदन्त्यादिशक्तेर्ललिताया महौजसः ।
दशनेभ्यः समुद्भूतमिति नानाविधा श्रुतिः ॥ ४ ॥

स्तोत्रे गुरुमुखाम्भोजाद्बोद्धव्यागममातृका ।
कामेश्वर्याः प्रसादेन भुक्तिं मुक्तिं व्रजेन्नरः ॥ ५ ॥

"अत्र श्लोके भगवत्याः सम्बुद्धिपदं नास्ति अतोऽध्याहर्तव्यम्" इति केचिदाहुः, ते भ्रान्ताः; 'हरि' इति पदस्य सम्बुद्धिरूपेण वर्तमानत्वात् । 'हरिर्ना कपिले त्रिषु' इति वचनात् कपिलवाचिनो हरिशब्दस्य मेद्यलिङ्गत्वात् । ततश्च 'कृदिकारादक्तिनो ङीष् - इति वक्तव्यम्,' इति ङीषि कृते 'हरी' इति गौरीशब्दसमानार्थ आगमे प्रसिद्धः, तस्य सम्बुद्धौ 'हे गौरि' इतिवत् 'हे हरि' इति भवति । एतत्स्तोत्राधिदेवताया भगवत्याः श्रीसुन्दरीमहाभट्टारिकायाः "बालार्कमण्डलाभासाम्" इत्यादिध्यानेषु कपिलवर्णस्य प्रसिद्धत्वात् हरिशब्दप्रयोगः । कपिलकपिशपाटलरक्तादीनां प्रायस्तावदैक्यमेव । हे हरि गौरि परमेश्वरि ! शिवो महादेवो निरञ्जनः परब्रह्मापरपर्यायः शक्त्या युक्तः प्रतिरूपिण्या स्वासाधारणचिच्छक्तिकलया संयुक्तश्चेत्तदा प्रभवितुं शक्तः । अत्र प्रभवनं नाम सृष्टिस्थितिसंहारतिरोधानानुग्रहाख्यप्रपञ्चनचातुर्यम् । तत्तच्छक्तिरूपिण्या सृष्ट्यादिसामर्थ्यमय्या त्वया विना न समर्थो भवति । परमेश्वरस्त्वामेव शक्तिरूपिणीं स्वयं नित्यां व्यापिनीं स्वतन्त्रां च सचिवीकृत्यैव यतः सर्वं कार्यं करोति, त्वां विना निश्चेष्टो निरानन्दो निष्प्रकाशो घटकाष्ठकुड्यादिवदेव भवति । एवं परब्रह्मणोऽत्यन्तोपादेयभूताम् तदनन्तरं तत्सन्निधानमात्रेण लोचनत्रयात् तमोरजःसत्वेभ्यः स्वकीयसाधारणगुणेभ्य एव त्वया सृष्टैः हरविरिञ्च्यादिभिरपि महादेवब्रह्मविष्णुभिरपि त्वत्पुत्रैः स्वस्वकार्यसम्पत्तये आराध्यां पूजनीयाम् । हरश्च विरिञ्चिश्चादिश्च ते हरविरिञ्च्यादयः द्वन्द्वसमासः तैः । सर्वेषामादित्वादादिसृष्टिरूपजलाधिदेवतात्वादादिर्नारायणः । 'अप एव ससर्जादौ'

इति स्मृतिः । "आपो नारा इति प्रोक्ता" इत्यादिना मनुवचनेन आदिसृष्टिजलशायित्वान्नारायण-प्रसिद्धिः । एवंभूतां त्वां प्रणन्तुं भक्तिश्रद्धाप्रकर्षेण नमस्कर्तुम्, स्तोतुं वा पञ्चस्तोत्रादिबहुविधवाक्य-पुष्पाञ्जलिभिः उपहर्तुं वा अकृतपुण्यः जन्मान्तरसहस्रेष्वसञ्चितसुकृतबहुतरराशिः पुरुषः कथं प्रभवति प्रभुर्न भवेत् । त्वत्प्रणामे त्वत्स्तवे च पुण्यवतामेव प्रवृत्तिर्न पापानामित्यर्थः । 'न खलु कुशलः स्पन्दितुमपि' इत्यत्र वाक्ये भगवतः काचिदपि क्रिया किञ्चिच्चलनात्मिकापि न सम्भवति इति अवसीयते । 'स्पदि किञ्चिच्चलने' इति धातोः क्रियारम्भे प्रसिद्धत्वात् । अत एवानेन धातुना स्पष्टक्रियया इच्छा-ज्ञानयोरप्याक्षेपः । अत एव स्पन्दितुमपि इत्यत्र ज्ञातुमपि-ईषितुमपि-कर्तुमपि इति अर्थत्रयं लभ्यते । परमेश्वरस्य अनन्तकोटिशक्तिमण्डलप्रधानभूतं इच्छाज्ञानक्रियाख्यं शक्तित्रयमेवास्ति तदपि त्वया विना न सम्भवति किम्पुनरनन्ता अन्याः स्रष्टृत्वादिशक्तय इति यावत् ॥ १ ॥

## गोपालसुन्दरीयम्

श्रीगणेशाय नमः

वारंवारमुदारसस्मितमुखः शिक्योपरि स्थापितं,
हारं हारमुदूखलोपरिगतं हैयङ्गवीनं हठात् ।
आयान्तीं पुरतो विलोक्य जननीमादाय यष्टिं करे,
धावंधावमिह प्रकाशितभयः पायात्स भावार्भकः ॥

कह्लारोत्पलकैरवाम्बुजदलन्माकन्दसन्मञ्जरीः
कोदण्डं करपङ्कजेन दधतीं पुण्ड्रेक्षुदण्डोद्भवम् ।
सौवर्णाङ्कुशपाशपाणिमरुणामारक्तवस्त्रावृता-
माताम्राम्बुजसंस्थितां त्रिनयनां चन्द्रार्धचूडां भजे ॥

[ प्रणम्य शङ्कराचार्यचरणाम्बुरुहद्वयम् ।
आनन्दलहरीस्तोत्रं विष्णुपक्षेऽपि लक्ष्यये ॥ ]

ननु हरिहरविरिञ्च्यादिदेववृन्दमपास्य किमिति कात्यायनीस्तुतेराचरणमिति शिष्यशङ्काम-पनिनीषुराह - **शिवः शक्त्येति** । कल्याणरूपः सदाशिवः अविद्यातत्कार्योपार्जितजन्ममरणाद्यनेकक्लेश-रूपामङ्गलरहितत्वात्, शक्त्या कर्तुमकर्तुमन्यथाकर्तुं शक्त्या त्रिगुणात्मकप्रवृत्त्या विद्यापरनामधेयया यदि युक्तः परिष्वक्तो भवति तदा प्रभवितुं प्रभुतां विधातुं शक्तः समर्थो भवति, सृष्ट्यादिकार्येऽनु-ग्रहलक्षणं यत्कारणं तत्र शक्तो भवति, अविद्यावच्छिन्नस्यैव ब्रह्मणो जगन्निर्माणे शक्तत्वादिति भावः । ननु स्वतः प्रयोजनाभावात् कथं तस्य सृष्ट्यादौ प्रवृत्तिरित्यत आह - **देव इति** । दीव्यति क्रीडति

इति देवः, तथा च क्रीडार्थमेव प्रवर्तते भगवान् सृष्ट्यादौ न पुनः प्रयोजनमुद्दिश्येति भावः। न चेदेवं तथा चेन्न युक्तः तदा स्पन्दितुमपि न कुशलः न क्षमः, तस्य स्वतो निर्धर्मकत्वादिति, तदुक्तम्—"शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यते।" इति। एतेन निर्गुणस्य सृष्ट्याद्यकर्तृत्वाद् गुणत्रयात्मकमायानुग्रहापेक्षोक्ता इदञ्च वेदान्तिमते अन्यमतेऽपि पुरुषस्य शिवस्य भवानीरूपशक्तिसंयोगादेव जगत्कर्तृत्वं नान्यथेत्युक्तम्, तेन च क्षित्यादिकं स्त्रीपुंसोभयजन्यं कार्यत्वात् मनुजपशुपक्षिसरीसृपादिशरीरवदित्यनुमानं सूचितम्। न च कार्यत्वस्य कर्तृजन्यत्वमात्रव्याप्यत्वेन दृष्टान्तमात्रगतधर्मस्य साध्यत्वेनोत्कर्षसमापत्तेः, नवाङ्कुरादेः पक्षकुक्षिनिक्षेपवन्ममापि घटादेस्तथात्वात्, न च सकर्तृकत्वानुमाने प्रमाणमात्रसहकारिलाघवादेव तत्सिद्धिपराहतत्वमिति वाच्यम्। द्वयोरपि प्रत्येकमेकत्वसङ्ख्याकार्यत्वात्। अन्यादृशैकत्वस्य गुरुत्वात् अनुमितावुपनीततद्भावस्वीकारेऽतिप्रसङ्गाच्च प्रत्येकसाधनाच्च तव "विश्वतश्चक्षुः" इत्यादि श्रुतेः विपक्षबाधकवन्ममापि "अजामेकाम्" इत्यादिश्रुतेर्विपक्षबाधकत्वात्। अथ च शिवः शवशब्दः शक्त्या एकारेण अकार इकारात्मकेन यदि युक्तो भवति तदा प्रभवितुं स्वकार्यं भगवदुपस्थितिं कर्तुं शक्तो भवति, न चेदेवं तदा स्पन्दितुमपि ओष्ठपुटविभागमपि कर्तुं न शक्तः, शकारवकारयोर्निःस्वरूपयोरुच्चारयितुमशक्यत्वात्। अत एव "शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यते", इत्यत्र नामपदमनुच्चार्यमाणस्वार्थसूक्ष्मपदञ्चोपात्तम्।

अथवा शिवः ककारादिक्षकारान्तः पञ्चत्रिंशद्वर्णात्मकः शक्त्या अकारादिविसर्गान्तषोडशस्वररूपया युक्तो यदि भवति, तदा प्रभवितुं वेदादिरूपतया व्यक्तीभवितुं शक्तो भवति। न चेदेवं तदा स्पन्दितुमपि तावत्ोष्ठपुटस्पन्दनमपि कर्तुं न कुशलः क्षमः। तदुक्तं शारदायाम्—"विना स्वरैस्तु नान्येषां जायते व्यक्तिरञ्जसा। शिवशक्तिमयानाहुरस्माद् वर्णान् मनीषिणः॥" मातृकाभूषणेऽपि—"ककारादिक्षकारान्ता वर्णास्ते शिवरूपिणः। समस्तव्यस्तरूपेण षट्त्रिंशत्तत्त्वविग्रहाः॥ अकारादिविसर्गान्ताः स्वराः षोडश शक्तयः। नित्याः षोडशकात्मानः परस्परसमायुताः॥ शिवशक्तिमया वर्णाः शब्दार्थप्रतिपादकाः। शिवः स्वरपराधीनो न स्वतन्त्रः कथञ्चन॥ स्वराः स्वतन्त्रा जायन्ते न शिवस्तु कदाचन।"

अथवा शिवो हकारः शक्त्या बालातृतीयबीजरूपया तेन प्रासादपरामन्त्रोद्धारः प्रभवितुं मन्त्ररूपतां गन्तुं स्पन्दितुमदृष्टविशेषजननमपि कर्तुं समर्थः। यद्वा शिवो बिन्दुः शक्त्या विसर्गेण तेनानुत्तरमन्त्र उक्तः। तदुक्तं शिवदृष्टौ—"अहं बिन्दुर्विसर्गस्त्वमावयोर्योगतः परः। प्रकाशितोऽनुत्तराख्यो वर्णो वर्णेष्वनुत्तरः।" इति। योगिनीहृदयेऽपि—"शून्याकाराद् विसर्गान्ताद् बिन्दुः प्रस्पन्दसंविदः। प्रकाशपरमार्थत्वात् स्फुरत्तालहरीयुतात्॥ प्रसूतं विश्वलहरीस्थानं मातृत्रयात्मकम्॥" इति। एतेन 'शक्तः प्रभवितुं' इत्यपि व्याख्यातम्।

अथ वा शिवो हकारः शक्त्या एकारेणेति द्व्यक्षरः वाग्वादिनीमन्त्र उक्तः "अनन्तो लकुलीशश्च विद्या वाग्वादिनी मता।" इति विद्याप्रकाशिनीवचनात्। अथवा सैव पञ्चाक्षरोद्धारोऽयं यथा शिवः शिवशब्दशक्त्या एकारेण नमःपदेन च युक्तः शक्तिस्तुर्यवर्णोऽयमित्यादावेकारस्य "प्रणवो बीजमाख्यातं नमः शक्तिरुदीरिता" इत्यादौ नमःपदस्य च शक्तिपदार्थताप्रतिपादनात् एकारेण च चतुर्थ्येकवचने ङे इत्यस्योक्तिः, ङकारलोपात् प्रभवितुं मन्त्ररूपेणाभीष्टादिफलं दातुम्। न चेदेवमित्यादेः प्रातिपदिकमात्रस्य मन्त्ररूपताभावेन यत्किञ्चित्फलदानेऽप्यसमर्थ इत्यर्थो ज्ञेयः, यतः शिवस्यापि सामर्थ्यप्रदा भवती अतो हेतोस्त्वां प्रणन्तुं स्तोतुं वा अकृतपुण्यः अनुपार्जितसुकृतः कथं प्रभवति समर्थो भवति। न केवलं पञ्चब्रह्मान्तर्गतसदाशिवस्यैव त्वत्सापेक्षताऽपि तु ब्रह्मान्तरस्यापि इत्याह—"हरिहरविरिञ्च्यादिभिरपि" विष्णुशिवब्रह्मादिभिराराध्यां समर्चनीयामित्यर्थः। पाशाद्यक्षराभिप्रायेण वा योजनीयमिदं पद्यम्। यथा—द्वितीया, अतस्त्वामाराध्यामिति पदच्छेदः, तेन शिवः शक्त्यभिन्नः परमात्मा नाम, ॐकारेण पाशबीजेन शक्त्या भुवनेश्वरीबीजेन हरिहरविरिञ्च्यादिभिः क्रोंकारेण यदि युक्त इत्यन्वयः। हरिपदेन ॐकारस्य हरपदेन रेफस्य विरिञ्चिपदेन ककारस्योक्तेः वैपरीत्येन योजने तद्बीजलाभात् इति। अयं तु पञ्चदशीविद्यान्तर्गतमध्ये बीजात्मकमधुमतीबीजमुद्धरति शिव इति, शिवो हकारः शक्त्या सकारेण हरिहरविरिञ्च्यादिभिः लकारहकारककारवैपरीत्येन यदि युक्तः शक्तः शक्तियुक्तो भुवनेश्वरीप्रान्त इत्यर्थः। यद्वा सकलश्रीविद्यामन्त्रमूलभूतनवार्णमेरुमन्त्रोद्धारोऽत्र ज्ञेयः। यथा-शिवो हकारः शक्त्या सकारेण एकारेण ईकारेण च हरिहरविरिञ्च्यादिभिरपि यदि युक्तः हरिर्लकारः हरो बिन्दुः "अहं बिन्दुर्विसर्गस्त्व"मित्युक्तेः, विरिञ्चिः ककारः आदिपदेन रेफनादौ तदा प्रभवितुं नानाश्रीविद्यामन्त्रतामुपगन्तुं शक्तः समर्थः, न चेदेवं तदा स्पन्दितुमपि एकमन्त्रतामप्युपगन्तुं न कुशलः। तदुक्तं ज्ञानार्णवे "मूलविद्यां शृणु प्रौढे सकलागमसेविताम्। सर्वदर्शनविद्यां च चित्कलामव्यये शिवे॥ भूमिश्चन्द्रः शिवो माया शक्तिः कृष्णाध्वमादनौ। अर्धचन्द्रश्च बिन्दुश्च नवार्णो मेरुरुच्यते॥ महात्रिपुरसुन्दर्या मन्त्रा मेरुसमुद्भवाः।" इति। सङ्गोपनार्थं चाचार्येण ज्ञानार्णवीयक्रमेण नोक्तमिति ज्ञेयम्। यद्वा शिवपदेन ककारतकारहकाररेफाः, शक्तिपदेन ईकारैकारसकारमायाबीजानि प्रभवितुं पञ्चदशीमन्त्रतां गन्तुम्। अत एव "इन्द्रो मायाभिः पुरुरूप ईयते" इति श्रुतिरप्यमुमेवार्थमाह। यद्वा शिवो गोपालाष्टादशाक्षरः। शक्त्या पञ्चदश्या अष्टादशाक्षरप्रत्येकपदादौ पञ्चदशीमन्त्रस्य क्रमेणैककूटदानेन तन्त्रे सुन्दरीगोपालमन्त्रोद्धारादि व्याकुर्मः।

अथवा शिवशब्देनोर्ध्वमुखत्रिकोणचतुष्टयं शक्तिशब्देनाधोमुखत्रिकोणपञ्चकमुच्यते, उभयं मिलित्वा श्रीचक्रं यदुक्तम्—"चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः। शिवशक्त्यात्मकं ज्ञेयं

श्रीचक्रं शिवयोर्वपुः ॥" प्रभवितुं सृष्ट्यादिकर्तुं श्रीचक्रादेव सृष्टिस्थितिसंहृतयो भवन्ति इत्यागमिनः । तदुक्तं कामिके 'त्वगसृङ्मांसमेदोऽस्थिधातवः शक्तिमूलकाः । मज्जाशुक्रप्राणजीवधातवः शिवमूलकाः । नवधातुरयं देहो नवयोनिसमुद्भवः ' इति[1] । नवयोनिः श्रीचक्रं शिवः शिरःस्थितसहस्रदलकमलकर्णिकावस्थितः शक्त्या मूलाधारोत्थापितकुण्डलिन्या प्रभवितुमणिमादिसिद्ध्या सकलजीवाद्युत्कर्षमुत्पादयितुं स्पन्दितुमीषत्सिद्धिमपि प्राप्तुमित्यर्थः ॥ अथ "कदाचिदाद्या ललिता पुंरूपा कृष्णविग्रहा । वेणुनादसमारम्भादकरोद्विवशं जगत्" । इति मन्त्रराजवचनात् "स्त्रीणां त्रैलोक्यजातानां कामोन्मादैकहेतवे । वंशीधरं कृष्णदेहं चकार द्वापरे युगे" इति महाकालसंहितावचनाच्च कृष्णस्यापि कात्यायनीरूपतया तत्परतयाऽपि व्याकुर्मः ।

ननु मीमांसकादिमते जगत्कर्तुरीश्वरस्याभावात् निर्विषयिणीयं स्तुतिरित्याशङ्कापनयनार्थतामुपहसति—**शिव** इति । "शी स्वप्नमचिर्यां" वाति गच्छति इति शिवः, "शीङ् स्वप्ने" "वा गतिगन्धनयो"रिति धातुभ्यां निष्पन्नः शिवशब्दवाच्यः । मायोपहितचैतन्यस्यैव ईश्वरत्वात्, शिव ईश्वरः शक्त्या शरीरेण यदि युक्तः स्यात्तदा प्रभवितुं सृष्ट्यादिकर्तुं शक्तः स्यात् तथा च क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवदित्याद्यनुमानं तदावेदकमपास्तं शरीरजन्यत्वोपाधेरनेनोक्तेः । न चेदेवं शरीरयुक्तो चेत्तदा स्पन्दितुमपि प्रयत्नादिकमपि भवितुं कर्तुं न कुशलः, शरीरव्यतिरेकेण प्रयत्नादेरनुपपत्तेः । नित्यप्रयत्नादौ मानाभावात् । अतो हेतोस्त्वां प्रणन्तुं स्तोतुं वा अकृतपुण्यो मीमांसकादिः कथं प्रभवति समर्थो भवति, आ विस्मये सम्बोधने वा । हरिहरविरिञ्च्यादिभिरपि इन्द्रशिवब्रह्मादिभिरप्याराध्यः समर्चनीय हे इति भगवत्सम्बोधनम् ॥ १ ॥

## गौरीकान्तस्य आनन्दलहरी टीका

श्रीगणेशाय नमः ।

श्रीअंबिकायै नमः ।

ह्रींकारोत्तमरम्यहर्म्यनिलयां प्रासादमध्यस्थितां
मायाख्यां भुवनेश्वरीं निरुपमां ब्रह्मादिभिर्वन्दिताम् ।
योगीन्द्रैकनिषेवितां त्रिजगतां सद्भूतिनाशस्थलीं
ज्ञानानन्दमयीं महोदयकरीं काञ्चिद्भजे देवताम् ॥ १ ॥

---

1. अत्र परिगणने धातूनां नवसंख्या न पूर्यते

सम्यग्वाग्भवकामशक्तिजपनासक्तान् स्वभक्तान्मुदा
सम्यग्वाग्भवकामशक्तिसहितान् कामं करोतीह या ।
सेन्द्रानन्दमयी सुरासुरनरैरानन्दितैर्वन्दिता
साऽऽस्तां नः शिवगेहिनी शिवकरी श्रीसुन्दरी सर्वदा ॥ २ ॥

परमात्माप्रृथग्भूतां प्रणम्य परमेश्वरीम् ।
आनन्दलहरीटीका गौरीकान्तेन तन्यते ॥ ३ ॥

गौरीकान्तसार्वभौमभट्टाचार्यसुधीरिमाम् ।
आनन्दलहरीटीकां तनुते विदुषां मुदे ॥ ४ ॥

शिष्टाचारपरिप्राप्तं प्रारीप्सितविघ्नविघातप्रयोजनकं शिवशक्तिस्मरणरूपं मङ्गलं कृत्वा शिष्यान् शिक्षयितुमादौ निबध्नन् विनयातिशयार्थं ब्रह्मादिभिराराध्याया भगवत्याः स्तुतिकरणे स्वस्यासंभावनां प्रकाशयति—**शिव** इति । शिवशब्दस्यार्थस्मरणद्वारेव दधिहविरादिन्यायेन स्वतोऽपि मंगलत्वमिति हर इत्याद्यपहाय शिव इत्युक्तम् । शिवं कल्याणं बन्धशोकाद्यभावलक्षणमस्तीति शिवः । अर्श आद्यचि रूपम् । परमेश्वर इत्यर्थः । शक्यते कर्तुं अनयेति शक्तिः । वेदान्तनये मूलाविद्या मायेत्यादि पदवाच्या, सांख्यनये प्रकृतिरूपा, न्यायनये सिसृक्षारूपा वा । तथा च शिवस्त्वया शक्त्या सहकारिण्या युक्तः सहकृतो यदि, तदेत्यध्याहार्यम् । प्रभवितुं प्रभुताश्रयीभवितुं शक्तः समर्थो भवति । प्रभुता जगत्कर्तृत्वं, सहकारिसमवहितस्यैव तस्य जगत्कर्तृत्वादिति भावः । एवं त्वया शक्तया युक्तश्चेद्यदि न भवति, तदा देवः स्पन्दितुं किंचित् क्रियां कर्तुमपि न कुशलः समर्थ इत्यर्थः । यद्यपि विभोस्तस्य अशरीरिणः स्पन्दरूपायाः क्रियायाः संभवो नास्ति, तथाप्यत्र क्रिया, सृष्ट्यादिकार्यरूपा ज्ञेया । यद्यपि शक्तेर्नित्यतया शिवस्य तद्युक्तत्वाभावः कदापि न संभवति, तथापि अपादानरूपो बोध्यः । यदि त्वया सहकारिण्या युक्तो न स्यात्, तर्हि किमपि कर्तुं कुशलो न स्यात् । यः सहकारि समवहितो न भवति स किञ्चित्कार्यं न करोति । यथा अरण्यस्थो दण्ड इति । अथवा फलजननोन्मुखताविशिष्टाया नित्याया अपि प्रलये भावः । विश्लेषणाभावात्तु एतेनेश्वरस्येव अन्वयव्यतिरेकबलात् सृष्ट्यादिकं प्रति शक्तिरूपाया भगवत्या अपि हेतुत्वमिति दर्शितम् । क्रीडार्थधातुजदेवपदेन च प्रयोजनं विनापि बाललीलयेव जगत्कर्तृत्वं तस्येति सूचितम् । यत ईश्वरस्यापि सृष्टिकरणे त्वत्सापेक्षणताऽस्ति अतो हरिहरविरिञ्च्यादिभिः विष्णुरुद्रब्रह्मादिभिरपि । आदिपदादिन्द्रादिपरिग्रहः । आराध्यां स्वस्वकर्मणि प्रजासर्गावनप्रलयादौ साहाय्यार्थे भजनीयां त्वां प्रणन्तुं भक्तिश्रद्धातिशयेन नमस्कर्तुं स्तोतुं स्तुतिविषयीकर्तुम् । अकृतपुण्योऽनुपार्जितत्वच्चरणारविन्दभजनजन्यसुकृतसञ्चयः, मादृशो जनः कथं प्रभवति समर्थो भवति । अपि तु न समर्थ इत्यर्थः ।

एतेन विनयातिशयार्थं ब्रह्मादिस्तव्याया भगवत्याः स्तुतिकरणे स्वस्यातीवासंभावना दर्शिता । अत्र ईश्वर एकः क्षित्यादिकर्ता शिवाख्योऽतिरिक्तः, प्रजासर्गादिकर्तारो ब्रह्मादयश्च भिन्ना इति मताभिप्रायेण हरिहरेत्यभिहितम् । अत्र "हे हरि हे कपिले" इति संबोधनं, 'हरिर्णा कपिले त्रिषु' इत्यमरकोशात् हरविरिञ्च्यादीत्यादिपदात् विष्ण्वपरिग्रहः इति कस्यचिद्व्याख्यानमशुद्धम् । प्रकृते देव्या रक्तवर्णत्वात् । तद्वक्ष्यति—प्रकृत्या रक्ताया इति । कपिलरक्तयोः प्रायेणैक्यमिति न युक्तं, पर्यायभेदेन व्यवहारभेदेन च लोकशास्त्रविरोधात् । द्वितीयपद्यवत् अत्रापि संबोधनपदाभावे क्षतेरभावात् । अवश्यापेक्षणीयत्वे भवतीत्येव संबोधनमस्तु । भवति ! भिक्षां देहि इतिवत् । अस्तिभवतीत्यादिक्रियाया ऊह्यत्वाददोषः । प्रभवतीत्यस्य दीपकालङ्कारेण सर्वत्रान्वयः ।

अत्र किञ्चित् तान्त्रिकव्याख्यानं लिख्यते । कादिक्षान्तपञ्चत्रिंशद्वर्णसमुदायरूपः शिवः अकारादिषोडशस्वरूपया शक्त्या युक्तो यदि, तदा प्रभवितुं मन्त्रादिरूपतया प्रकर्षेण भवितुं स्तुत्यर्थं शक्तो भवति । एवं न चेत् तदा स्पन्दितुमपि स्वजनकीभूतताल्वादिसंयोगानुकूलताल्वादिस्पन्दजनकयत्नविषयीभवितुमपि न कुशलः । व्यंजनानां स्वरसहितानामेवोच्चारणे योग्यत्वात् । एवमग्रेऽपि । तदुक्तं शारदातिलके " विना स्वरैस्तु नान्येषां जायते व्यक्तिरञ्जसा । शिवशक्तिमयान्प्राहुस्तस्माद्वर्णान्मनीषिणः" इति । मातृकामण्डले-" ककारादिक्षकारान्ता वर्णास्तु शिवरूपिणः । समस्तव्यस्तरूपेण षट्त्रिंशत्तत्वविग्रहाः ॥ अकारादिविसर्गान्ताः स्वराः षोडशशक्तयः । नित्याषोडशकात्मानः परस्परसमायुताः । शिवशक्तिमया वर्णाः शब्दार्थप्रतिपादकाः । शिवः स्वरपराधीनो न स्वतन्त्रः कदाचन । स्वराः स्वतन्त्रा जायन्ते न शिवस्तु कदाचन ॥" इति । तन्त्रान्तरेऽपि-" शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यते" इति। नामधामपदं उच्चारणमित्यर्थे । सूक्ष्मे अनुच्चारणीये। यथा ज्ञानार्णवेऽपि " कलामण्डलमाख्यातं शक्तिरूपं महेश्वरि । ककारादिक्षकारान्ता वर्णास्तु शिवरूपिणः" । कलामण्डलं स्वरसमूहम् । यद्वा-शिवः शिवपदं शक्त्या एकारेण, एकारस्य सन्ध्यक्षरतया सन्धौ तत्प्रकृतिभूताभ्यां अकारेकाराभ्यां युक्त इति । अन्यत्समानम् । यद्वा शिवो बिन्दुः शक्त्या बालातृतीयबीजेन सौः इत्यनेन युक्त इति। अन्यत्समानम् । यद्वा शिवो हकारः शक्त्या विसर्गेण। तेनानुत्तराख्यमन्त्र उक्तः। तदुक्तं शिवदृष्टौ-"अहं बिन्दुर्विसर्गस्त्वं आवयोर्योगतः परः । प्रकाशितोऽनुत्तराख्यो वर्णो वर्णेष्वनुत्तर" इति । योगिनीहृदयेऽपि "शून्याकाराद्विसर्गान्ताद्बिन्दुप्रस्पन्दसंविदः । प्रकाशपरमार्थत्वात्स्फुरत्तालहरीयुतात् । प्रसृतं विश्वलहरीस्थानंमातृत्रयात्मकं" इति । यद्वा-शिवो हकारः शक्त्या आकारेण "तेन वाग्वादिनी मतेति" वचनात् । अनन्त आकारः लकुलीशो हकारः । यद्वा तु आमा आराध्यामिति पदच्छेदः । आमा आकारेण शक्त्या ह्रींकारेण हरिहरेत्यादिना क्रोंकार उक्तः । तेन शिवः शक्त्या भिन्नः परमात्मा एतेन बीजत्रयेण युक्तः संबद्ध इत्यादिक्रमेण योज्यम् । अत्र हरिरोंकारः, हरो रेफः,

विरिञ्चिः ककारः वैपरीत्येन योजनात् तादृशबीजलाभः। तेन पाशाद्यक्षरमन्त्रोद्धारः। यद्वा-सकलश्रीविद्यामन्त्रमूलभूतनवार्णमेरूद्धारः-शिवो हकारः शक्त्या सकारेण ईकारेण एकारेण च हरिहरविरिञ्च्यादिभिरपि यदा युक्त इत्यन्वयः। हरिरत्रलकारः हरो बिन्दुः"अहंबिन्दुरि" त्याद्युक्तेः। विरिञ्चः ककारः आदिपदेन नादरेफौ। प्रभवितुं सकलश्रीविद्यामन्त्रघटकीभवितुमित्यर्थः। तदुक्तं ज्ञानार्णवे-"मूलविद्यां शृणु प्रौढे सकलागमसेविताम्। सर्वदर्शनवन्द्यां च चित्कलामव्यये शिवे। भूमिश्चन्द्रः शिवो माया शक्तिः कृष्णाध्वमादनौ। अर्धचन्द्रश्च बिन्दुश्च नवार्णो मेरुरुच्यते। महात्रिपुरसुन्दर्या मन्त्रा मेरुसमुद्भवाः" इति। भूमिर्लकारः, चन्द्रः सकारः, शिवो हकारः, माया ईकारः, कृष्णाध्वा रेफः, मादनः ककारः, संगोपनार्थं वर्णानुक्रमो न लिखितः। किन्तु ज्ञानार्णवीयो ग्राह्य इति ध्येयम्। अथवा श्रीचक्रोद्धारोऽत्र, शिव ऊर्ध्वमुखत्रिकोणचतुष्टयरूपः, शक्त्या अधोमुखत्रिकोणपञ्चकेन युक्तः, प्रभवितुं श्रीचक्ररूपतया सृष्ट्यादि कर्तुं इत्यर्थः। तत एव सृष्ट्यादि इत्यागमविदः। तदुक्तं कामिकायां "चतुर्भिः शिवचक्रैस्तु पंचचक्रैश्च शक्तिभिः। शिवशक्त्यात्मकं ज्ञेयं श्रीचक्रंशिवयोर्वपुः। त्वगसृङ्मांसमेदोस्थिधातवः शक्तिमूलकाः। मज्जाशुक्रप्राणजीवा धातवः शिवमूलकाः। नवधातुरयं देहो नवयोनिसमुद्भव" इति। नवयोनिः श्रीचक्रम्। अन्यदपि बहुपल्लवितं योजनाभावात् ग्रन्थगौरवाच्चोपेक्षितम्॥

**तनीयांसं पांसुं तव चरणपङ्केरुहभवं**
**विरिञ्चिस्सञ्चिन्वन् विरचयति लोकानविकलम्[1]।**
**वहत्येनं शौरिः कथमपि सहस्रेण शिरसां**
**हरस्संक्षुद्यैनं[2] भजति भसितोद्धूलनविधिम्॥ २॥**

தனீயாம்ஸம் பாம்ஸும் தவசரண பங்கேருஹபவம்
1 1 1 1 1 4
விரிஞ்சிஸ்ஸம்சின்வன் விரசயதி, லோகானவிகலம் |
1 1 1 1
வஹத்யேனம் சௌரிः கதமபி ஸஹஸ்ரேண சிரஸாம்
1 1 2
ஹரஸ்ஸம்க்ஷுத்யைனம் பஜதி பஸிதோத்தூலன விதிம் ||
3 4 1 4 1 3 4 4

तव पदकमल परागलेश का संपादन कर चतुरानन,
करता है निर्माण चौदहों लोकों का, अविकल पावन।
धारण करता है हरि उसको सहस सिरों पर किसी तरह,
भस्म बना उसको, निज तन पर धारण करता हर अहरह॥

---

१. लोकानविकलान् २. संक्षुभ्यैनं

## लक्ष्मीधरा

तनीयांसं अतिसूक्ष्मं, पांसुं रजःकणं, तव भवत्याः देव्याः, चरणपङ्केरुहभवं चरणौ पङ्केरुहे इव ताभ्यां भवं, विरिञ्चिः ब्रह्मा-विरिञ्चिशब्द इकारान्तः, 'विरिञ्चिश्च विरञ्चनः' इति अमरशेषे अभिधानात्। संचिन्वन् सम्पादयन्, भाण्डीकुर्वन् इत्यर्थः, विरचयति विविधान् करोति, लोकान् लोक्यन्त इति लोकाः स्थावरजङ्गमात्मकप्रपञ्च इत्यर्थः। यद्वा ऊर्ध्वलोकाः सप्त भूरादयः, अधोलोकाः सप्त अतलादयः, एवं चतुर्दशलोकान्। अविकलं परस्परासङ्कीर्णं यथा भवति तथा। यद्वा यावत्प्रलयमेषां वैकल्यं यथा न भवति तथा। वहति प्रापयति रक्षति, एनं पांसुकणं चतुर्दशलोकात्मकतया अवस्थितम्। शौरिः शूरस्य यदोरपत्यं शौरिः-बलभद्रः; तेन शेषो लक्ष्यते; शेषावतारत्वात् बलभद्रस्य। यद्वा शृणाति हिनस्ति दशतीति शौरिः सर्पराजः, शेष इति यावत्। यद्वा-शौरिः विष्णुः। तथोक्तं चतुश्शत्याम्-"शिशुमारात्मना विष्णुः सप्तलोकानधःस्थितान्। दध्रे शेषतया लोकान् भूरादीनूर्ध्वतःस्थितान् ॥"—इति।

शेषपक्षेऽपि शेष एव विष्णुः, रक्षणे विष्णोरेवाधिकारात्। कथमपि कथंचित्, सहस्रेण शिरसाम्। हरः अन्तकाले प्रपञ्चं हरतीति हरः, संक्षुद्य सम्यक् मर्दयित्वा एनं चतुर्दशभुवनात्मकतया अवस्थितं पादरजःकणं भजति सेवते, उपदिहतीत्यर्थः। भसितोद्धूलनविधिं भसितेन यदुद्धूलनं उपदेहनं अङ्गरागकरणं, तस्य विधिः अनुष्ठानं, तं तथोक्तम् ॥

अत्रेत्थं पदयोजना—हे भगवति, विरिञ्चिः तव चरणपङ्केरुहभवं तनीयांसं पांसुं संचिन्वन् लोकान् अविकलं विरचयति। हे भगवति, शौरिरेनं शिरसां सहस्रेण कथमपि वहति। हे भगवति, एनं संक्षुद्य हरः भसितोद्धूलनविधिं भजति ॥

अयं भावः—ब्रह्मविष्णुमहेश्वराणां प्रपञ्चविषयसृष्टिस्थितिलयकर्तृत्वं भगवत्याः पादाब्जरेणुमहिमायत्तमिति ॥ २ ॥

## सौभाग्यवर्धनी

'प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति' इत्युक्तम्। त्वया मां स्तोतुं, मत्स्वरूपं मत्प्रभावं ज्ञात्वा स्तुतिः करणीया। किं मत्स्वरूपं ज्ञातम्, को वा मत्प्रभावो ज्ञातः? इत्यत्रोत्तरमाह—**तनीयांसमिति**। तनीयांसं सूक्ष्मं तव चरणपङ्केरुहभवं पांसुं रजःकणं विरिञ्चिः संचिन्वन्नेकीकुर्वन्विरचयति सृजति; लोकान् चतुर्दशभुवनानि। तव चरणप्रणामतः शिरसि लग्नैः पांसुभिः संचितैः सर्वान् लोकान् सृजति। अविकलं यथा भवति तथा निर्व्याजेनेत्यर्थः। एनं पांसुं शौरिः विष्णुः शेषरूपः शिरसां सहस्रेण वहति। पञ्चाशत्कोटिविस्तीर्णं भूमिरूपं तव चरणपङ्केरुहभवं

मकरन्दकणं कथमपि वहतीत्यर्थः । हरः, हरतीति हरः संहर्ता संक्षुद्य चूर्णीकृत्य भसितोद्धूलनविधिं भस्मस्नानविधिना भस्मोद्धूलनविधिं करोति । पृथिव्यादिपञ्चभूतानि भस्मसात्करोतीत्यर्थः । तथा च भस्मस्नानमन्त्रः—'अग्निरिति भस्म, वायुरिति भस्म, जलमिति भस्म, स्थलमिति भस्म, व्योमेति भस्म, सर्वं ह वा इदं भस्म, मन एतानि चक्षूंषि भस्मानि' इति । एतावता पृथिव्यादिपञ्चभूतानि तव चरणपङ्केरुहभवमकरन्दकणाः, एतादृश्यास्तव स्वरूपं प्रभावं वेत्तुं शिव एव समर्थः । को वा अस्मदादिर्वराक इति भावः । तदुक्तं भगवता दत्तात्रेयेण योगिना—'यत्पादपद्ममकरन्दकणा धरित्री यन्मध्यवर्तिविवरं गगनं समग्रम् । यद्गात्रसङ्गिकिरणत्रसरेणुरर्कस्तस्यास्तवाम्ब वपुषो मितिरीशवेद्या ॥' इति । चरणान्येव पङ्केरुहाणि । चरणाश्चत्वारः शुक्लरक्तमिश्रनिर्वाणा इति । तत्र सत्त्वप्रधानः शुक्लः, रजःप्रधानो रक्तः, तमःप्रधानो मिश्रः, गुणातीतो निर्वाणः । तेषां ध्यानस्थानानि—शुक्लरक्तयोराज्ञाचक्रं द्विदलम्, मिश्रस्य हृत्कमलम्, निर्वाणस्य सहस्रदलं द्वादशान्तस्थम् । शुक्लरक्तयोः ब्रह्मविष्णू ध्येयौ, मिश्रे रुद्रः, निर्वाणे साक्षात्परमानन्दनिर्भरः सदाशिवरूपः सहस्रदलकमलकर्णिकारूपः चन्द्रमण्डलगलत्सुधाभिराप्लाव्यमानश्चिन्तनीयः । तथा च श्रुतिः—'चरणं पवित्रं विततं पुराणम् । येन पूतस्तरति दुष्कृतानि । तेन पवित्रेण शुद्धेन पूताः । अति पाप्मानमरातिं तरेम । लोकस्य द्वारमर्चिमत्पवित्रम् । ओजस्वद्भ्राजमानं महस्वत् । चरणं नो लोके सुधितां दधातु ।' इति । तथा च तव रक्तचरणपङ्केरुहभवं पांसुं रजोगुणं संचिन्वन् विरिञ्चिः लोकान् सृजति । विष्णुः शुक्लचरणपङ्केरुहभवं पांसुं सत्त्वगुणं संचिन्वन्नेनं विधिसृष्टं प्रपञ्चं शिरसां सहस्रेण वहति । प्रपञ्चभारं वहति धत्ते रक्षति इत्यर्थः । हरः मिश्रचरणपङ्केरुहभवं पांसुं तमोगुणं संचिन्वन् विधिसृष्टप्रपञ्चं चूर्णीकृत्य भसितोद्धूलनविधिं भजति । तदुक्तं दत्तात्रेयेण महायोगिना—'भ्रूमध्यगौ विधिहरी तव रक्तशुक्लौ पादौ रजोऽमलगुणौ खलु सेवमानौ । सृष्टिस्थिती वितनुतो हृदये तृतीयमङ्घ्रिं भजन्हरति विश्वमुदग्रमुग्रः ॥ तुर्यं तवाम्ब चरणं निरुपाधिबोधं सान्द्रामृतं शिवपदे सततं नमामि ॥' इति । सांप्रदायिको रहस्यार्थो गुरुगम्यः । इति द्वितीयपद्यार्थः ॥ २ ॥

## अरुणामोदिनी

एवं स्तवनहेतुभूतं भगवतीप्रसादं संप्रार्थ्य श्लोकोक्तानां हरिहरादीनां समाराधितभगवतीप्रसादासादितं सामर्थ्यं प्रकटयति—**तनीयांसमिति** । अत्र सर्वत्र संबोधनप्रधानस्य युष्मच्छब्दस्यावस्थानान्न संबुद्धिप्रयोगाभावदोषः । हे भगवति, विरचयति प्रपञ्चमिति विरिञ्चिर्ब्रह्मा । 'रच प्रतियत्ने' इति धातोः स्वार्थण्यन्तादच इप्रत्ययः । पृषोदरादित्वादकारस्येत्वं नुमागमश्च । 'विरिञ्चो द्रुहिणः शिञ्जो विरिञ्चिर्द्रुहिणो मतः' इति शब्दार्णवे । तव सकलजगत्कारणभूताया भवत्याः,

चरणौ पङ्केरुहे इवेत्युपमितसमासः। अन्यथा पङ्केरुहयोः प्राधान्येन तद्रजसो वक्ष्यमाणसामर्थ्या-संभवादिति। यदाहुः—'उपमायां तु पूर्वस्य पदार्थस्य प्रधानता। रूपके तूत्तरपदार्थस्य प्राधान्यमिष्यते॥' इति। ताभ्यां भवो जन्म यस्य तम्, तत्संभूतमित्यर्थः। **कैवल्याश्रमास्तु** 'चरणान्येव पङ्केरुहाणि' इति विगृह्य चरणाश्चत्वार इत्याहुः। तच्चिन्त्यम्, 'तव हि चरणावेव निपुणौ', 'शिरसि दयया धेहि चरणौ', 'हसत इव ते चण्डि चरणौ', 'सरोजं त्वत्पादौ' 'उपरि तव पादाम्बुजयुगम्', 'छलादाचक्षाणं चरणयुगलं चारुचरिते' इत्यादौ द्विवचनमेव प्रयुञ्जतां शिवापदाम्भोजयुगलार्चकानामागमरहस्यज्ञानामाचार्याणामसंमतत्वादिति। गुणत्रयावस्थितिश्च शबलवर्णे संभवत्येवेत्येतदर्थं न पादबाहुल्यकल्पना युक्ता। अतिशयेन तनुस्तनीयान्। तमतिसूक्ष्मं पांसुं रेणुम्, परमाणुरूपमित्यर्थः। 'द्विवचनविभज्य...' इत्यादिना ईयसुन्प्रत्ययः। जातावेकवचनम्। परमाणूनित्यर्थः। संचिन्वन्राशीकुर्वन्, ईक्षणेनैव क्रियावतो वा कुर्वन्नित्यर्थः। सिसृक्षोरीश्वरस्येच्छाव-शादुत्पन्नक्रिययोः परमाण्वोः संयोगाद्द्व्यणुकमुत्पद्यते, ततस्तत्त्रयसंयोगात्त्र्यणुकमित्यादिक्रमेण पृथिव्यादि-सकलप्रपञ्चसृष्टिं वदतोः सर्वज्ञयोः कणादाक्षपादयोर्जगत्कारणत्वेनाभिमताः परमाणवोऽपि भवदीयपद-पङ्कजातिसूक्ष्मपांसव एव, न त्वन्ये स्वबुद्धिकल्पिताः, तेषामेतादृशसामर्थ्यासंभवादिति भावः। लोकान्, चतुर्दश भुवनानीत्यर्थः। अविकलमसंकीर्णं यथा तथेति रचनासामर्थ्योक्तिः। यद्वा, अविभिः पर्वतैः कला व्यवस्था यस्मिंस्तत्, मेर्वादिपर्वतैः कृतव्यवस्थमित्यर्थः। 'अवयो मेषशैलार्काः' इत्यमरः। यद्वा, अस्य विष्णोर्विः पक्षी गरुडः, तं कलयति तेजोवैचित्र्येणेति पांसुविशेषणम्। अविकलानिति पाठेऽप्ययमेवार्थो लोकविशेषणत्वेनोह्यः। विरचयति विदधाति, सृजतीति यावत्। ब्रह्माऽनेकतपोभिर्भवत्पदपङ्कजं समाराध्य जगत्सर्जनसमर्थास्तत्संबन्धिनः परमाणुरूपान्पांसून्संगृह्य भवत्प्रसादासादितया निजशक्त्या तेषु क्रियां समुत्पाद्य द्व्यणुकादिक्रमेण पृथिव्याद्यनेकप्रपञ्चं संसृज्य विरचयतीति विरिञ्चिरित्यन्वर्थाभिधानं भजतीति भावः। तथा शूरस्य यदोरपत्यं शौरिः। 'शूरः स्याद्यादवे भटे' इति विश्वः। तद्वंशजत्वाद्वृष्णित्वेऽपि बाह्वादित्वादिञ्प्रत्ययः। भूभरणार्थं शूरकुलेऽवतीर्णो भगवानादिविष्णुः स्थितिकर्ता। 'देवकीनन्दनः शौरिः' इत्याद्यमरः। एवं ब्रह्मणा चतुर्दशलोकात्मतया निर्मितं त्वदीयपदपांसुं शिरसां मूर्ध्नाम्, नपुंसकतया भारवाहनासमर्थानामिति भावः। सहस्रेण, सहस्रसंख्याकैः शिरोभिः, न त्वेकेनेत्यस्यातिदुर्भरत्वं सूचितम्। 'विंशत्याद्याः सदैकत्वे संख्याः संख्येयसंख्ययोः' इत्येकत्वम्। 'मुखैः सहस्रेण' इति प्रयोगश्च। कथमपि यत्नगौरवेण वहति धरति, रक्षतीत्यर्थः। अत्र श्रुतिः प्रमाणम् 'सहस्रशीर्षा पुरुषः' इत्यादिः। विष्णुश्च त्वदाराधनावाप्तमहिम्नैव निर्बाधं निखिललोकरक्षणं कुर्वाणः शौरिपदेनान्वर्थनाम्नोच्यत इति भावः। यत्तूक्तं **लक्ष्मीधरेण**—'शूरस्य यदोरपत्यं शौरिर्बलभद्रः, तेन शेषो लक्ष्यते, शेषावतारत्वाद्बलभद्रस्य। यद्वा शृणाति हिनस्ति दशतीति शौरिः सर्पराजः शेष इति यावत्' इति, तन्न; शौरिपदस्य बलभद्रवाचकत्वाभावात्, प्रथमं

सशौरिपदान्यूनचत्वारिंशद्विष्णुनामानि गणयित्वाऽनन्तरं वसुदेवनामद्वयमुक्त्वाऽनन्तरं बलभद्रनामानि परिगणयतोऽमरस्यास्य बलभद्रवाचकत्वानभिमतेश्च। लक्षणादिक्लिष्टकल्पनयाऽस्य शेषत्वेनोक्तेः प्रकृतानुपयुक्तत्वात्, सृष्टिस्थित्यादिकर्तृप्रकरणे तस्य प्रवेशाभावाच्च। यच्चोक्तम्—'यद्वा शौरिर्विष्णुः' इति, तदपि प्रथमवक्तव्यं वापक्षमाश्रित्योक्तमित्यज्ञानविलसितमेव। यच्चोक्तम्—'शेषपक्षेऽपि शेष एव विष्णुः, रक्षणे विष्णोरेवाधिकारात्' इति, तदपि ऋजुमार्गेण सिध्यन्तमर्थमपहायामार्गमाश्रित्य पुनस्तमेवाश्रयतो घट्टकुटीप्रभातवृत्तान्तानुसरणं स्यादिति मन्दम्। हरति सर्वमिति हरः कालरुद्रः। पचाद्यच्। एवं चतुर्दशलोकात्मकं विष्णुना रक्षितं पांसुं संक्षुद्य सम्यक् चूर्णीकृत्य संमर्द्य चेत्यर्थः। भसितेन भस्मना यदुद्धूलनमुपदेहनं तस्य विधिं विधानम्, 'विधिर्विधाने दैवे च' इत्यमरः। निदर्शनालंकारः। भजति सेवते, भसितमिवोपदेहनं करोतीत्यर्थः। हरोऽपि भवत्प्रसादमहिम्नैव हरतीति हर इत्यन्वर्थाभिधानो भवति। इत्युत्तरोत्तरं विरिञ्च्यादीनामेतादृशसामर्थ्यसंपत्तिर्भवत्प्रसादा-सादितैवेति भावः। निदर्शनास्वभावोक्त्योः संसृष्टिः॥ २॥

## आनन्दगिरीया

ननु ब्रह्मादयो मामाराध्य स्वकार्यसृष्ट्यादौ समर्था भवन्तीत्युक्तम्। तत्र तैर्मदाराधनेन को वाऽतिशयः प्राप्तो यद् द्वारा सृष्ट्यादि कुर्वन्तीत्याशङ्क्याह—**तनीयांसमिति**—हे शक्ते हे सर्वव्यापिनि, परमेश्वरि, ब्रह्मादीनां तव चरणकमलपादुकाग्रे भूमौ उन्मादाद्यहेतुक-दण्डवत्पतनरूप-कायिकनमस्कार-व्याजेन लुठतां, तनीयः कणतया लब्धास्तव चरणकमलगलिताः सूक्ष्मा रजःकणाः। तान् शिरसि धृत्वा स्वकार्यं कुर्वन्ति ब्रह्मादय इति। तत्र विरिञ्चिर्ब्रह्मा तनीयांसं तव चरणपंकेरुहभवं, तव चरणपांसुं शिरसि संचिन्वन् संचितं कुर्वन्, प्रसादेन लब्धसामर्थ्यः, अविकलान् संपूर्णावयवान् सजातीयेभ्यः सजातीयान्वा लोकान् विरचयति सृजति। सृष्टिरूपे कार्ये तव चरणरजःकणप्रसादस्यैवायं महिमा इत्यर्थः। आश्चर्यमपि, पांसुः सूक्ष्मादपि सूक्ष्मतमः, अप्रमितगरिम्णा ब्रह्माण्डमण्डलाकारेण परिणमत इति। अन्यच्च एकशिरसा श्रीकृष्णशरीरेण तनीयानपि तव चरणरजःकणो वोढुमशक्य इति सहस्रशीर्षां विशेषमूर्तिमुपादाय सहस्रेणापि शिरोभिः पृथिव्याद्याकारेण परिणतं शौरिर्वहति रक्षति। शिरस्सहस्रेणाप्यनायासेन न वहति, किन्तु महता कष्टेनेत्याह—कथमपीति। शौरिः श्रीकृष्णः तवाराधनावशसंप्राप्तचरणरजःप्रसादमहिम्नैव पृथिवीं बिभर्ति पालयति च। विरिञ्चिनोत्पादितं श्रीकृष्णेन रक्षितं ब्रह्माण्डमण्डलं हरः श्रीमहादेवः प्रसादतया प्राप्तं तव चरणकमलगलितं पांसुं संक्षुद्य, ललाटलोचनकालानलज्वालया भस्मसाच्चूर्णीकृत्य, भस्मोद्धूलनविधिं भजतीति। भसितं भस्म, तेनोद्धूलनं स्नानमङ्गावलेपनं, तस्य विधिरिव विधिः यस्य तं भजति, सेवते। तथा च ब्रह्मादयस्तव चरणसाहाय्यातिशयेन सृष्ट्यादिकुर्वन्तीति युक्तं त्वामाराध्येत्यादि॥

अथ सांप्रदायिकोऽर्थः—यदस्याः परमेश्वर्याः चत्वारश्चरणाः। रक्तशुक्लाख्यौ चरणौ स्वाज्ञाचक्रे द्विदले वर्तेते। मिश्रो हृदयेऽनाहतचक्रे। निर्वाणः सहस्रदले। तत्र रक्तरूपं त्वच्चरण-गलितं रजोगुणं पांसुं प्राप्य रुद्रः संहरति। निर्वाणरूपं तव चरणगलितं प्राप्य निर्भरानन्दसंविदापन्नो योगी भवतीति। तत्राज्ञाचक्रे ब्रह्मविष्णू ध्येयौ, हृदयचक्रे रुद्रः, सहस्रदलकमले सदाशिवः। तथा चागमे-"भ्रूमध्यगौ विधिहरी तव रक्तशुक्लौ पदौ रजोऽमलगुणौ खलु वेदवेद्यौ। सृष्टिस्थिती वितनुतो हृदये तृतीयमंघ्रिं भजन्हरति विश्वमुदग्रमुग्रः। तुर्यं तवांब चरणं निरुपाधिबोध्यं सान्द्रामृतं शिवपदे सततं स्मरामि" इति। सृष्टिसमयबोधितादृष्टवदात्मसंयोगोत्पादितक्रियावद्भ्यां परमाणुभ्यां द्व्यणुक त्र्यणुकादिक्रमेण महती पृथिवी महत्य आपो महान्वायुः उत्पद्यत इति पृथिवीत्यादि भूतपञ्चकमाकलय्य परमेश्वरीचरणगलितानि रजांस्येव सहकारिणी प्राप्य लब्धसामर्थ्या विरिञ्च्यादयः सृष्ट्यादि कुर्वन्तीति-न्यायानुसारेण व्याख्यातम्। परमेश्वर्या अनादित्वात्, तच्छरीरस्यापि नित्यत्वात्, सृष्ट्याद्युपादान-भूताः परमाणवः तव चरणगलितत्वान्नित्याः कार्यभूता यदा तदा अनित्या इति वदन् कश्चिद्बभ्राम ॥

तस्य मूलपरमरहस्यार्थः। तनीयांसमित्येनं कामकलात्मानं पांसुं जगत् अजः गुणांशं सञ्चिन्वन् कामकलैव आत्मा अनन्तो यथा एवं चिन्तयन् सगुणमयं जगदुद्वहति स्थिरम्। हरोऽपि स्मरजगद्दग्धा तमोगुणमयं संहारमूर्तिमेनं भस्मांगरागं भजते च, उन्मत्त इवास्ते। तव स्वरूपं भजन्तो महेश्वरि तवचरणस्मृतिप्रसादलेशोपचितभाग्यपुञ्जाः युष्मच्छरणविविदिषासमुत्कटाः, कपटपटुचित्तं च दग्ध्वा भस्मोद्धूलनकृतांगरागाः विजने त्वां विविदिषवो ध्यायन्तीति भावः।

## तात्पर्यदीपिनी

पूर्वोदाहृतमेव हरिहरविधीनां त्वदाराधनसामर्थ्यं स्फुटं व्याचष्टे **तनीयांसमिति।** हे मातः विरिञ्चिर्ब्रह्मा तव भवत्याः चरणपंकेरुहभवं, चरणावेव पंकेरुहे कमले, ताभ्यां भवः समुत्पन्नः तं, तनीयांसं अतिसूक्ष्मं पांसुं, रहः एकान्ते, सञ्चिन्वन् मनोरूढं कुर्वन्, अविकलं परस्परा-संकीर्णं यथा भवति तथा, लोकान् लोक्यन्त इति लोकास्तान् स्थावरजंगमात्मकचतुर्दशभुवनानि, विरचयति विविधान्करोति। न हि लोकरचनायामेतस्य मतेर्विचारणा किं तु सुप्तप्रतिबुद्धन्यायेन स्वव्यापारं करोतीत्यर्थः। तथा शौरिः शूरस्यापत्यं पुमान् शौरिर्बलदेवः, यद्वा शृणाति हिनस्ति कर्षति इति शौरिः सर्पराजः शेष इति यावत्। यद्वा शौरिर्विष्णुः। एनं पांसुकणं चतुर्दशभुवनात्म-कयाऽवस्थितं शिरसां सहस्रेण कथमपि कथंचित् वहति। यथोक्तं चतुःशत्यां—"शिशुमारात्मना विष्णुः सप्तलोकानवस्थितान्। दध्रे शेषतया लोकान् भूरादीनूर्ध्वसंस्थितान्।" इति। हरः अन्तकाले प्रपञ्चं हरतीति हरः, एनं पूर्वोक्तं पांसुं संक्षुभ्य संमर्दयित्वा भसितोद्धूलनविधिं भजति। भसितेन भस्मना यदुद्धूलनं अंगरागकरणं तस्य विधिः अनुष्ठानं तत्तथोक्तम्। अयमाशयः। ब्रह्मविष्णु-महेश्वराणां प्रपञ्चविषयसृष्टिस्थितिलयकर्तृत्वं भवत्याश्चरणरजःपरमाणुमूलमित्यर्थः।

## पदार्थचन्द्रिका

अथ त्रिपुरसुन्दर्याश्चरणप्रसादलेशलब्धसृष्ट्यादिकर्तृत्वं दर्शयन् मायाशक्त्यादिशब्दवाच्यां भवानीं स्तौति ।—**तनीयांसमिति** । विरिञ्चिर्ब्रह्मा लोकान्विरचयति विशेषेण रचयति । विरचनक्रियां विशिनष्टि - अविकलमिति—विगता कला तत्कर्मकौशलं यस्य विरचनकर्मणः तद्विकलं । न विकलं अविकलं । अथवा विगताः कलाः अंशाः तद्रहितं विकलं, न विकलमविकलम्, सांगमित्यर्थः । क्रियाव्ययविशेषणानां क्लीबत्वं एकवचनान्तत्वं च वाच्यमिति वचनात् क्लीबत्वम् । विरिंचेर्लोकसर्जने कुतः सामर्थ्यमित्याकांक्षायां भवानीचरणकृपालेशमेव हेतुं वदन्, विरिंचिं विशिनष्टि—सञ्चिन्वन्निति - किं कुर्वन्? अध्याहारेण जननि तव चरणपंकेरुहभवं पांसुं तनीयांसं, अतिशयेन तनुं सूक्ष्मं संचिन्वन्, बर्तुलीकुर्वन् । हेतोः शतृप्रत्ययः । विरिञ्चेर्विश्वजननसामर्थ्यं त्वच्चरणप्रसादलेशाधीनमिति तात्पर्यार्थः । इदानीं श्रीविष्णोरपि जगत्पालनसामर्थ्यं त्वत्पादपद्मप्रसादलेशाधीनमेवेत्याह—वहतीति । शौरिः शूरपुत्रः श्रीकृष्णः । एवं त्वच्चरणपंकेरुहपांसुं, सहस्रेण शिरसा, सहस्रसंख्याकेन शिरसा । शिरसामिति पाठे संबन्धे षष्ठी । संख्यासंख्यावतोश्चाधाराधेयभावः संबन्धः । वहति धारयति । कथमपि उद्रिक्तया भक्त्या । सहस्रशिरस्त्वमस्य 'सहस्रशीर्षा पुरुष' इत्येवमादिषु श्रुतिषु प्रसिद्धम् । हरस्यापि जगत्संहर्तृत्वं त्वत्पादप्रसादलेशजमेवेत्याह हर इति । हरः संक्षुभ्य, कथमेनं जगत्संहरेयं इति संक्षोभं प्राप्य पुनरेव त्वच्चरणपांसुं भजति सेवते । कथं भूतं? भसितोद्धूलनविधिं, भसितं भस्म, तस्योद्धूलनं, ऊर्ध्वप्रक्षेपः, तस्य विधिं विधायकं, येन पांसुना जगत् दग्धं तद्भस्म ऊर्ध्वं उत्क्षिप्तमित्यर्थः । हरः संक्षुद्यैनमिति पाठे 'क्षुद संचूर्णन' इत्येतस्मात् संक्षुद्येति । तथा चायमर्थः । हरतीति हरः जगत्संहारकारः श्रीकालाग्निरुद्रः । एवं हरिहरविरिञ्चिसेव्यो यस्तं तव चरणपांसुं संक्षुद्य चूर्णयित्वा भसितोद्धूलनविधिं स्वे देहे भस्मलेपविधिं जाबालोपनिषदुक्तप्रकारेण भजति । विधिशब्दोऽत्र भावप्रधानः । ननु भजधातोः उभयपदित्वात् कथं परस्मैपदमेवोदाहृतमिति चेत् मैवं - 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इति पाणिनिवचनेन, निमित्ते सति, हरकर्तृकपांसुभजनस्य प्रलयद्वारा सकलसंसारिविश्रमणफलकस्य परस्मैपदोदाहरणस्यैव संभवत्वात् । न हि स्वात्मारामस्य कालाग्निरुद्रस्य किञ्चित् स्वकीयं प्रयोजनमस्ति जगत्संहारे कृते लोकानुग्रहाय । चरणप्रसादेन हरिहरविरिञ्चीनां सृष्ट्यादिसामर्थ्यं । सैव परमसेव्येत्युक्तं भवति ।

## डिण्डिमभाष्यम्

हे भगवति! तव चरणपङ्केरुहभवं त्वत्पादपद्मसमुद्गतं, तनीयांसं अतिसूक्ष्मं पांसुं परागं, सञ्चिन्वन् सृष्टिबीजत्वेन सम्पादयन्, अविकलान् सम्पूर्णान् लोकान् - भूः - भुवः-सुवः-महः-जनः-तपः-सत्यम् इत्याख्यान्, विरचयति विविधवैचित्र्यव्यतिकरविचित्रत्वेन सृजति । तमेव पांसुं

भूम्यादिसप्तलोकात्मना परिणतं भवज्ज्येष्ठपुत्रेण ब्रह्मणा सृष्टं तदनन्तरस्त्वत्पुत्रो हरिः सहस्रफणामण्डल-मण्डितशेषाभिधानकुण्डलीश्वरतनुर्भूत्वा शिरसां सहस्रेण वहति । "सहस्रशीर्षा पुरुषः" इति विष्णोः सहस्रशीर्षत्वं वेदप्रसिद्धम् । एवं लोकात्मना परिणतं नारायणेन धृतं, तमेव पांसु अन्तिमस्त्वत्पुत्रो हरो महादेवः कल्पान्तकाले अतिविकटललाटलोचनज्वालाकबलितत्वाद् विभूत्याकारमापन्नं सङ्क्षुद्य-हस्तावमर्दनेन धूलीकृत्य भसितोद्धूलनविधिं भस्मलेपनकृत्यं भजति सेवते । तवानादित्वात्त्वच्छरीरस्यापि नित्यसिद्धत्वात् त्वच्चरणांभोजपरागभूताः पृथिव्यादिचतुर्भूतसृष्ट्युपादानभूताः परमाणवोऽपि नित्या एव, कार्यरूपास्ते यदा भवन्ति तदा अनित्या इति वैशेषिकस्मृतिः । ब्रह्मविष्णुरुद्रादीनां सृष्ट्यादि-क्रीडारसचमत्कारानुभावा अपि त्वच्चरणपांसुपरमाणुमूला इत्यर्थः ॥

## गोपालसुन्दरी

ननु विरिञ्च्यादेरेव सृष्टिकर्तृत्वेनेश्वरत्वमतः कथं तदाराध्यत्वं ममेत्याह—**तनीयांसम्** इति । सूक्ष्मं तव चरणपङ्केरुहभवं त्वत्पादाम्बुजोद्भूतं पांसु पञ्चभूतरजःकणं, विरिञ्चिर्ब्रह्मा, सञ्चिन्वन् एकीकुर्वन्, लोकान् चतुर्दश भुवनानि, अविकलं सामग्रीवैकल्यरहितं यथा स्यात् तथा, विरचयति सृजति, एनं पांसु चतुर्दशभुवनतया परिणतं शौरिः शेषरूपतया, शिरसां सहस्रेण फणासहस्रेण, कथमपि कष्टेन, वहति बिभर्ति । हरः संहर्ता, एनं पांसु चतुर्दशभुवनतया परिणतं सङ्क्षुद्य चूर्णीकृत्य, भसितोद्धूलनविधिं भस्मस्नानं, भजति करोति । अत एव - "अग्निरिति भस्म वायुरिति भस्म ज्योतिरिति भस्म मन एतानि भस्मानि" इति, भस्मस्नानमन्त्रेषु भूतादीनां भस्मत्वोक्तिरिति विष्णुपक्षव्याख्या ॥

भवानीपक्षे तु - चरणाश्चत्वारः शुक्लरक्तमिश्रनिर्वाणाख्याः, सत्वप्रधानः शुक्लः, रजःप्रधानो रक्तः, तमःप्रधानो मिश्रः, गुणातीतो निर्वाणः । शुक्लरक्तयोराज्ञाचक्रम्, मिश्रस्य हृत्कमलम्, निर्वाणस्य सहस्रदलं स्थानम् । शुक्ले विष्णुः, रक्ते ब्रह्मा, मिश्रे रुद्रः, निर्वाणे सदाशिवः; तथा रक्तचरणपङ्केरुहभवं पांसु रजोगुणं सञ्चिन्वन् विरिञ्चिर्लोकान् सृजति । शुक्लचरणपङ्केरुहभवं पांसु सत्वगुणं सञ्चिन्वन् विष्णुरवति । मिश्रचरणपङ्केरुहभवं पांसु तमोगुणं सञ्चिन्वन् हरः संहरति । तदुक्तं दत्तात्रेयेण - "भ्रूमध्यगौ विधिहरी तव रक्तशुक्लौ, पादौ रजोमलगुणौ खलु सेव्यमानौ । सृष्टिस्थिती वितनुतो हृदये तृतीयमङ्घ्रिं भजन् हरति विश्वमुदग्रमुग्रः । तुर्यं तवांब चरणं निरुपाधि बोधसान्द्रामृतं शिवपदे सततं नमामि ।" इति ॥

## आनन्दलहरीटीका

पूर्वं हरिहरादिभिराराध्यामित्युक्तम् । सा चाराधना कीदृशीत्यत्राह - **तनीयांसमिति**— विरिञ्चिर्ब्रह्मा तव चरणपंकेरुहभवं त्वत्पादपद्मस्थं, तनीयांसं सूक्ष्मतमं, पांसुं धूलिं परमाणुरिति

शास्त्रप्रसिद्धं, चिन्वन् संयोजयन्, लोकान् भुवनानि, अविकलं सामग्रीवैकल्यरहितं यथा स्यात्तथा विरचयति द्व्यणुकादिं जनयति इत्यर्थः। एनं पांसुं पृथिव्यादिरूपं शौरिः वासुकिस्वरूपः, कथमपि कष्टेन, शिरसां सहस्रेण वहति धारयति। हरो रुद्रः एनं संक्षोभ्य प्रलयकाले संक्षोभं प्राप्य भस्मसात्कृत्वा इत्यर्थः। भसितोद्धूलनविधिं भस्मना उद्धूलनं, उद्धतधूलितां देहस्य, धूलीप्रक्षणमिति यावत्। तस्य विधिं विधानं भजति करोति। भस्मस्नानं करोतीति भावः। एतेन त्रयाणामपि ब्रह्मादिदेवानां त्वच्चरणरजः प्रभावादेव स्वस्वकार्यकरणमिति दर्शितम्।

तान्त्रिकमते देव्याश्चत्वारश्चरणाः शुक्लरक्तमिश्रनिर्वाणाख्याः। शुक्लरक्तौ सत्वरजःप्रकृती आज्ञाचक्रस्थौ। मिश्रस्तामसो हृदयकमले। निर्वाणो निर्गुणः सहस्रकमलस्थः। राजसचरणरजसा सृष्टिः, सात्विकचरणरजसा पालनं, तामसचरणरजसा संहारः। तदुक्तं दत्तात्रेयेण" - भ्रूमध्यगौ विधिहरी तव रक्तशुक्लौ पादौ रजोमलगुणौ खलु सेव्यमानौ। सृष्टिस्थिती वितनुतो हृदये तृतीयमंघ्रिं भजन् हरति विश्वमुदग्रमुग्रः। तुर्यं तवांघ्र चरणं निरुपाधिबोधसान्द्रामृतं शिवपदे सततं नमामि" इति।

**अविद्यानामन्त-स्तिमिर-मिहिरद्वीपनगरी[1]**
**जडानां चैतन्य-स्तबक-मकरन्द-स्रुतिझरी[2] ।**
**दरिद्राणां चिन्तामणिगुणनिका जन्मजलधौ**
**निमग्नानां दंष्ट्रा मुररिपु-वराहस्य भवति[3] ॥ ३ ॥**

அவித்₃யாநாம் அந்த₁ ஸ்தி₁மிர மிஹிரத்₃வீபநக₃ரீ
ஜடா₃நாம் சைதன்₁ய ஸ்த₁ப₃₁க₁ மக₁ரந்த₃ ஸ்ருதி₁ ஜ₄ரீ |
த₃ரித்₃ராணாம் சிந்₁தா₁மணிகு₃ணநிகா₁ ஜன்மஜலதௌ₄
நிமக்₃நாநாம் த₃ம்ஷ்ட்₁ரா மு₁ராரிபு₁வராஹஸ்ய ப₄வதி ||

वह कण, अंतस्तम नाशक द्वादशरविकांति स्रवण युगपत्
अज्ञों के हित; जड मंदों के लिए कल्पसुम-गुच्छ महत्
भरता हो जिस से चैतन्य मकरंद प्रवाह दिव्य अविरत,

1. मिहिरोद्दीपनकरी, मिहिरोद्दीपनगरी.
2. स्रुतिसिरा, स्रुतिशिरा, स्रुतिसृतिः, ध्रुतिनदी.
3. भवती.

रंकों के हित है चिंतामणि पुंज, भव-जलधि-मग्न गलित-
दीनों का उद्धारक ढाढ वराह विष्णु की है धवलित ॥

## लक्ष्मीधरा

एषः पांसुः अविद्यानां अविद्याऽऽविष्टचित्तानां, अज्ञानिनामित्यर्थः, न तु अविद्यमान विद्यानां, अविद्यायाः भावरूपत्वात् । अर्श - आदित्वात् अच्प्रत्ययः, अविद्यावन्तः अविद्या इति । यद्वा-अविद्याऽऽविष्टचित्ता अपि उपचारेण अविद्या इति । तेषां अन्तस्तिमिरमिहिरद्वीपनगरी - अन्तस्तिमिरं अन्तस्थिताज्ञानम् ; अज्ञानस्य तिमिरत्वारोपणं आवरकत्वसाम्यात् , यथा बाह्यपदार्थान् आवृणोति तमः, तथा आन्तरपदार्थं आत्मानं आवृणोति अविद्या । तस्य तिमिरस्य मिहिरद्वीपनगरी, मिहिरस्य सूर्यस्य द्वीपः समुद्रमध्ये उदयप्रदेशः ; तत्र नगरी पत्तनं, वासगृहमिति यावत् । जडानां मन्दानां, दुर्मेधसां, चैतन्यस्तबकमकरन्दस्रुतिझरी - चेतनैव चैतन्यं, स्वार्थे ष्यञ् , चेतना नाम आत्मगतपदार्थप्रबोधकारिणी चित्तविस्ताररूपा काचन शक्तिः, तदेव स्तबकः कल्पवृक्षगुच्छः, तस्य मकरन्दः पुष्परसः, तस्य स्रुतिः स्रवणं निष्यन्दः, तस्य झरी प्रवाहः । दरिद्राणां दीनानां, चिन्तामणिगुणनिका चिन्तामणेः रत्नविशेषस्य, गुणनिका गुणना आम्रेडनं, समूह इति यावत् । जन्मजलधौ जन्मैव संसार एव जलधिः समुद्रः, संसारे समुद्रत्वारोपणं अपारत्वसामान्यात् । तत्र निमग्नानां - नितरां उन्मज्जनराहित्येन मग्नानाम् । दंष्ट्रा - स्पष्टम् । मुररिपुवराहस्य - मुरो नाम दैत्यः, तस्य रिपुः विष्णुः, अयं मुररिपुशब्दः विशेषणवाच्यपि विशेष्यं विष्णुमेव कथयति, शब्दस्वाभाव्यात् । न चात्र पङ्कजादिपदवत् शक्तिसङ्कोचः, द्रव्यवाचकत्वादस्येति । तस्य वराहः अवतारविशेषः ; तस्य तथोक्तस्य, भवति वर्तते ॥

अत्रेत्थं पदयोजना - हे भगवति ! तव पादाब्जरेणुः एषः अविद्यानां अन्तस्तिमिरमिहिर-द्वीपनगरी, जडानां चैतन्यस्तबकमकरन्दस्रुतिझरी, दरिद्राणां चिन्तामणिगुणनिका, जन्मजलधौ निमग्नानां मुररिपुवराहस्य दंष्ट्रा भवति ॥

अत्र परिणामालङ्कारः आरोप्यमाणस्य आरोपणविषयात्मतया स्थितेः । तथाच मङ्खकसूत्रम् - ' आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः ' इति । अस्यैवार्थः आरोप्यमाणस्य प्रकृतोपयोगित्वं आरोपविषयात्मतया स्थितिनिबन्धनमेवेति फलाभिप्रायेणोक्त इति । यद्वा - उल्लेखालङ्कारः, नगर्यादि-रूपेण पांसोरुल्लेखनात् रूपकं वा भवतु, प्रकृतोपयोगो न विवक्ष्यत इति ॥ ३ ॥

## सौभाग्यवर्धनी

अविद्यानामिति । अविद्यानां - न विद्यते विद्या येषां ते अविद्याः, तेषामन्तस्ति-मिरमनेकजन्मसंचितं दुर्वासनासमासादितमहं ममेति बुद्धिविजृम्भिततापत्रयसंपादितमज्ञानं तस्य

मिहिरोद्दीपनकरी सूर्योन्मीलनकरी; तन्नाशकविद्योद्बोधिनीति यावत्। क्वचित्पाठः—तिमिरमिहिरद्वीपनगरीति। मिहिराणां द्वीपं द्वादशादित्यानां भूमिः तत्र नगरी तेषां निजवसतिः, द्वादशादित्या यत्र युगपदुदयं प्राप्नुवन्ति तादृशद्वीपनगरी। यतः सर्वदा परिभ्रमणं कुर्वतः सूर्यस्य गिरिकुहरकोटराद्यन्तर्गततिमिरनाशकत्वं नास्ति, ततः तदपेक्ष्याप्यधिकतरप्रकाशकारिणीत्यर्थः। जडानाम्;—कर्तव्याकर्तव्यबुद्धिप्रकाशशून्यानाम्, चैतन्यस्तबकः उत्तरोत्तरलोकोत्तरबुद्धिचमत्कारव्यतिकरः, तस्य मकरन्दस्रुतिः सहृदयविद्वज्जनानन्दसंदोहसंपादकरसविशेषधारा, तस्याः सृतिः सरणिः। दरिद्राणां चिन्तामणिगुणनिका चिन्तामणिमयी माला। जन्मजलधौ जन्मेत्युपलक्षणम्; जन्ममरणादिबहुविधक्लेशसंचयवीचिमालिनीमग्नानाम्, मुररिपुवराहस्य विष्णुरूपादिवराहस्य दंष्ट्रा तदुद्धारकारी भवति। एतादृश्यास्तव स्तुतौ प्रवृत्तस्य मम अविद्याजडस्य दारिद्र्यं जन्ममरणादिक्लेशसमुद्रोन्मज्जनानि न सन्ति; सर्वथेति भावः। एतावता—'बालार्ककोटिरुचिरां स्फटिकाक्षमालां कोदण्डमिक्षुजनितं स्मरपञ्चबाणान्। विद्यां च हस्तकमलैर्दधतीं त्रिनेत्रां ध्यायेत्समस्तजननीं नवचन्द्रचूडाम्॥' इति कामराजमातृकादेवता सूचिता भवति। आदौ श्रीविद्योपासकानां कामराजमातृकान्यासस्यावश्यिकत्वात्तस्या ध्यानं सूचितम्। अथ वा त्रयाणां वेदानां पुरा त्रिपुरेति वाग्भवबीजस्य त्रिपुरारूपतयोक्तत्वात् तदेव बीजं सूचितम्। तथा हि—ऋग्वेदसामवेदयोरादिवर्णावकारौ। तथा यजुर्वेदस्यादिवर्ण इकारः। सामवेदादिवर्णयजुर्वेदादिवर्णयोः संधौ कृते एकारो भवति। पुनः ऋग्वेदाकारस्य एकारेण संधौ कृते ऐकारो भवति। तेन अर्धेन्दुना सहितः स वाग्भवो भवति। तदुक्तं कादिमते—'अकारादिः सामवेदो ऋग्वेदस्तु तदादिकः। यजुर्वेद इकारादिस्तेषां संयोगतः शुचिः॥ तन्निष्पत्तिं शृणु प्राज्ञे प्रोक्तामुद्धारतः क्रमात्। विलिख्य योजयेत्पूर्वं शब्दशास्त्रानुसारतः॥ गुणसंध्या ऋग्यजुषोस्ततस्तेनापरं तथा। वृद्धिसंध्या समायुञ्ज्याद्युत्पन्नं शुचेर्वपुः॥ तेन त्रयीमयी विद्या कार्यकारणयोगतः। बिन्दुसर्गात्मनोरैक्यरूपा सा त्वावयोर्वपुः॥ तेन बीजेन विश्वात्मरूपता सम्यगीरिता॥' इति। प्रथमाकार अविद्यानिवर्तकः, द्वितीयो जडतानिवर्तकः, इकारः कामितफलदः, अर्धेन्दुः कैवल्यदः। तेन वाग्भवरूपता प्रतिपादिता परदेवतायाः। तदुक्तं त्रिपुरार्णवे—'हरत्यज्ञानमज्ञानाज्जडिमानमतः पुनः। इतः कामान्वितनुते कैवल्यं कलया विधोः॥ वाग्भवं प्रथमं बीजं वेदानां पुरतो यतः। त्रिपुरासंज्ञया भद्रे त्वद्रूपा विश्वविग्रहा॥ वाच्यवाचकरूपेण व्याप्नोत्यमितवैभवम्॥' इति॥ ३॥

## अरुणामोदिनी

नन्वचेतने पदपांसौ कथमेतादृशी शक्तिरित्याशङ्क्य तन्महिमानं प्रकटयन्ति—

**अविद्यानामिति।** हे देवि, त्वदीयपदपांसुरित्यनुषङ्गः। विद्या देवताज्ञानमात्मज्ञानं वा, तस्या अन्याऽविद्या कर्मविधिनिष्पाद्यं ज्योतिष्टोमादिकर्मेत्यर्थः, 'विद्यां चाविद्यां च' इत्यत्र तथा व्याख्यानात्। अथ वा, न विद्याऽविद्या, अज्ञानमित्यर्थः। सैषामस्तीत्यविद्याः कर्मिणोऽज्ञानिनश्च। अथ वा, न

विद्यते विद्या देवतोपास्तिर्येषां तेऽविद्याः उपासनारहिता इत्यर्थः । अथ वा, 'अकारो ब्रह्मविष्णवीश....' इत्यादिकोशात् आन् ब्रह्मविष्णवीशान्विदन्ति जगत्कारणतयेत्यविद्याः, विरिञ्चादीनेव जगत्कर्तृन्मत्वा भ्रान्ता इत्यर्थः । तेषामन्तरन्तःकरणे यत् तिमिरवत्तिमिरमावरकमज्ञानं तस्य मिहिरद्वीपनगरी सूर्योदयप्रदेशस्थितपत्तनविशेषः, तमोनिवारक इति भावः । यद्वा, अविद्यानां विद्याभ्यासरहितानामीषदभ्यस्तविद्यानां चान्तरन्तःकरणं तदेव तिमिरमन्धं तमो मलिनत्वादिति भावः । तस्य मिहिरद्वीपनगरी सूर्याविर्भावस्थानपत्तनविशेषः । 'उद्दीपनकरी' इति पाठे मिहिर इवोद्दीपनं करोतीत्यर्थः । अत्रान्तःकरणे तिमिरत्वारोपेणाविद्यावस्तु रात्रित्वप्रतीतेरेकदेशविवर्ति परंपरितं रूपकम् । तथा जडानां बुद्धिहीनानाम्, 'जडः स्तब्धे बुद्धिहीने' इति रत्नमाला । चेतनैव चैतन्यम्, चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । 'प्रतिपज्ज्ञप्तिचेतनाः' इत्यमरः । तदेव स्तबको गुच्छः, 'स्याद्गुच्छकस्तु स्तबकः' इत्यमरः । तस्य मकरन्दस्रुतिझरी पुष्परसनिष्यन्दप्रवाहविशेषः । सम्यग् ध्याता सती संवित्प्रवाहं जनयतीत्यर्थः । अत्रापि चैतन्ये स्तबकत्वरूपणेन जडेषु वृक्षत्वप्रतीतेरेकदेशविवर्ति पूर्वोक्तमेव रूपकम् । तथा दरिद्राणां दुर्गतानाम्, 'दरिद्रौ रङ्कदुर्गतौ' इत्यमरः । चिन्तामणेश्चिन्तितार्थप्रदस्य रत्नविशेषस्य गुणनैव गुणनिका, आम्रेडनम्; इष्टार्थदानेऽपरश्चिन्तामणिरित्यर्थः । 'प्रत्ययस्थात्' इत्यादिना कात्पूर्वस्येकारः । तथा जन्मजलधौ संसारसमुद्रे निमग्नानां निमज्जताम्; अपारसंसाराम्बुधिनिपतितानामित्यर्थः । मुरो नामासुरः, तस्य रिपुर्मुरारिर्विष्णुः; स चासौ वराहश्च मुररिपुवराहः । निषादस्थपत्यधिकरणन्यायेनात्र कर्मधारय एव साधुः । तस्य दंष्ट्रा दन्तविशेषः, भवति जायते । अपारसंसारसमुद्रनिमग्नानामुद्धर्ता च भवतीत्यर्थः । अविद्यानामविद्याया जगत्कारणत्ववादिनामन्तस्तिमिरमिहिरद्वीपनगरी, ईदृशतत्त्वप्रकाशनद्वारा निःसारितान्तरतमःस्तोमा, तथा जडानामचेतनस्य प्रधानस्य जगत्कारणत्ववादिनां कपिलमतानुसारिणां चैतन्यस्तबकमकरन्दस्रुतिझरी तद्विरोधिचैतन्यावभासिका, तथा दरिद्राणामतिकृपणतया परमाणुजगत्कारणत्ववादिनां चिन्तामणिगुणनिका विचारातिशयप्रदात्री, तथा जन्मजलधौ संसारसमुद्रे निमग्नानां शिश्नोदरपरायणानामित्यर्थः । मुररिपुवराहस्य दंष्ट्रा भवति, महाभारतादिधर्मोपदेशेनोद्धारकश्च भवतीत्यर्थान्तरमपि प्रतीयते । सर्वथा भवत्पदपांसुरेव सर्वानुग्राहक इति भावः । 'भवती' इति ङीबन्तपाठे, एवंविधा त्वं सर्वाज्ञाननाशिका, जडानां जाड्यनिवर्तनापूर्वकं विज्ञानातिशयप्रदात्री, दुर्गतानामपरश्चिन्तामणिः, संसारसमुद्रमग्नानामुद्धारिका च त्वमेवेति रूपणमवगन्तव्यम् । मालापरंपरितरूपकाणां संसृष्टिः । यत्तूक्तं लक्ष्मीधरेण 'अत्र परिणामोऽलंकारः' इति, तन्न, आरोप्यमाणस्यात्रोपरञ्जकत्वेन प्रकृतोपयोगित्वाभावात्, 'प्रसन्नेन....' इत्यादिपरिणामालंकारोदाहरणपरिशीलिनामनृजुत्वात् । यत्तु 'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः' इति लक्षणं कथितं तदपि समासोक्त्यादावतिव्याप्तत्वाच्चिन्त्यमेव । यत्तु 'अथ वोल्लेखालंकारः' इत्युक्तं, तदप्यज्ञानविलसितमेव, 'स्त्रीभिः कामोऽर्थिभिः स्वर्द्रुः' इत्यादाविव

ग्रहीतृभेद एव तदुत्थानात्। यदपि 'रूपकं वा भवतु' इत्युक्तं, तदपि प्रथमवक्तव्यमनन्तरोक्तमित्यलंकारशास्त्रपरिज्ञानं लक्ष्मीधरस्य कियद्वर्णनीयमित्युपेक्ष्यते ॥ ३ ॥

## आनन्दगिरीया

ननु ब्रह्मादीनामत्युन्नततया सहजसिद्धज्ञानसत्त्वं लक्ष्मीवत्त्वं, नित्यमुक्तत्वं च। तेन तेषां मदाराधनं सुकरम्। इदानींतनानां अज्ञानपटलावृतानां अज्ञानिनां परमजडतया काष्ठायमानानां दरिद्राणां अनादिप्रवाहायातजन्ममरणप्रबन्धान्धकाराकारसंसारसागरनिमग्नानां कथं आराधनं, कथं च लोकोत्तरकार्यकारित्वं इत्याराधनप्रक्रिया विरिञ्चादिविषयिणी न तु इदानीन्तनगोचरेति व्यर्थ इव ते स्तोत्रप्रयास इत्यत आह-अविद्यानामिति-सर्वविद्यात्मिके हे परमेश्वरि, अविद्यानामन्तस्तिमिरमिहिरद्वीपनगरी भवती। नास्ति विद्या अज्ञाननिवर्तिका प्रकाशरूपा सारस्वती येषां तेऽविद्याः तेषां यदन्तस्तिमिरं हृदयान्तर्वर्ति ध्वान्तं, तदर्थं तन्नाशाय मिहिरद्वीपनगरी, मिहिरस्य द्वादशात्मनः सूर्यस्य निवासस्थानभूतो द्वीपः, तन्मध्ये प्रकाशमयी नगरी सर्वान्धकारशमनी वर्तते, सा त्वम्। यथा तत्र नगर्यां अन्तर इव पीठकादौ कोटरादौ वा किं बहूनां गोलकाकाराणां पिठराणामपि मध्येऽन्धकारः स्थातुं न शक्नोति, तथा अविद्यानां त्वं चेत् मन्त्रस्मरणाद्युत्पादितमनोवृत्तिगोचरीभूता, तदैव सर्वाज्ञानान्धकारनिवृत्तिर्भवतीति एतावता विद्याप्रभवमन्त्रोपासकानां येषां केषामपि त्वं विज्ञानप्रसादिनीति न प्रथमो दोषः। पुनः कीदृशी त्वं, जडानां चैतन्यस्तबकमकरन्दस्रुतिशिरा—जडानां कर्तव्याकर्तव्यविवेकाभावेन, बाह्यव्यवहारौपयिकमपि ज्ञानं येषां नास्ति ते जडाः, तेषां, चैतन्यस्तबकमकरन्दस्रुतिशिरा, स्तबको नाम गुच्छाः। तथा चामरे—"स्याद्गुच्छकस्तु स्तबकः" इति। तत्र स्तबके एतादृशी काचन शिरा भवती। या अहर्निशं मकरन्दं पुष्परसं स्रवति। तथालक्षणोपेता स्तबकमकरन्दस्य स्रुतिः श्रवणं तस्य शिरा वीथिसरणिः, शिरा निर्झर इति यावत्। अत्रागमः—कल्पद्रुमस्तबको भवन्मन्त्रः। तत्र चैतन्यज्ञानरूपमकरन्दप्रवाहसरणिः त्वत्प्रसादत इति न द्वितीयो दोषः। चैतन्यपदसमभिव्याहारात् स्तबको मन्त्रः। पुनः कीदृशी - दरिद्राणां निर्धनानां चिन्तामणिगुणनिका चिन्तामणि माला। अन्येषां चिन्तितार्थफलप्रदः चिन्तामणिरेकः, तवोपासकानां त्वावर्तमानचिन्तामणिपरंपरारूपा माला त्वमेव। कोटिचिन्तामणिकल्पा नानाविधसंपत्प्रदात्री त्वमेवासीति न तृतीयो दोषः। पुनः कीदृशी—जन्मजलधौ निमग्नानां मुररिपुवराहस्य दंष्ट्रा यथा वराहावतारेण श्रीकृष्णेन प्रलयपयोधिजले निमग्ना मेदिनी निजदंष्ट्रयोद्धृता, तथा संसारसागरनिमग्नानामुद्धाराय मुररिपोः परमात्मनः वराहस्य वनभूमिदारकस्य दंष्ट्रेव दंष्ट्रा ब्रह्माकारान्तःकरणवृत्तिरूपा त्वमेवासीति न चतुर्थो दोषः। तस्मात् त्वदुपासनां कृत्वा तवैव स्तोत्रपाठकाः सर्वेऽपि विवेकविद्याज्ञानविनयविज्ञानलक्ष्मीविलासलक्षणान् भोगान् भुक्त्वा भवत्प्रसादादनिष्टनिवृत्त्युपलक्षितपरमानन्दभाजो भवन्तीति सार्थकः स्तोत्रप्रयास इति ॥

अथातो गूढरहस्यार्थः। अकार एव विद्या, तद्रूपाणां वर्णानां अन्तः मध्यवर्णपदानां........ अघोरूपा शक्तिः, मिहिर प्रकाशकत्वात् सूर्यस्वरः, द्वीपं स्थानं पृथ्वी तद्बीजं, महामाया, नगरी लज्जा-बीजं, जडानां पश्वादीनां चैतन्यः कामराजकूटः, कन्दर्पोद्धारः, स्तबकः शिवचन्द्रद्वयानन्द पृथ्वीप्रवाहरूपा माया। चिन्तामणिश्च गुणनिका च तत्तथा नन्दिविद्या। जन्मजलधौ आद्यान्तकूटाद्ये प्रकृतिः शक्तिः सकारः तद्वती। अत्र कूटद्वयोद्देशे चैकवचनम्॥ आभ्यां विद्याभ्यां मिता षट्कूटा वैष्णवी विद्या सर्वतः समुद्धरणे दंष्ट्रेव भवती। हे परांब, तथा एनां जप्त्वा वारं वारं भुवनोरुभारं तिरस्कुर्वन्ती सर्व-संकटादुद्धरतीति भावः। प्रकृतार्थस्तु स्पष्ट एव। "अन्तर्गा मनवः प्रोक्ताः चाधोगा शक्तिरिष्यते। प्रकाशाख्यं पदं त्वेकं विमर्शाख्यं द्वितीयकम्॥ तृतीयं मिलितं प्रोक्तं निर्वाणं तुर्यसंज्ञकम्। एतच्चतुष्टयं प्रोक्तं बीजं कामकलात्मकम्॥ चैतन्यः कामदेवोऽयं शिवेन्दु प्र....स्यादिति।" तथा धारवेतन्त्रे-"नन्दिकेश्वरविद्येयं चिन्तामणिरपीष्यते।" रुद्रयामले-"चिन्तामणिरयं मन्त्रश्चिन्तामणिरिवापरः। चिरं चिन्तामणिर्ध्यातुः पुंसश्चिन्तामणिः स्वयम्"। इति एतद्वाक्यानुसारादुद्धारात् वैष्णवी षट्कूटद्वयं वा अन्यतन्त्रानुसारेण सर्वत्र बाहुल्यं वा, षट्कूटा वैष्णवी एकैव वेति को वेद आगमानामनन्तत्वात् इत्यलम्।

## तात्पर्यदीपिनी

ननु भगवत्याः पुत्राः स्वतः सिद्धिमहिमानः त्वत्प्रसादात्सृष्ट्यादि सामर्थ्यवन्त एव। तद्व्यतिरिक्तानां निर्विद्याजडदरिद्रजन्ममग्नानां अस्वतन्त्राणां पुरुषाणामपि परिपालने तद्दोषव्युदासेन तन्महिमोत्पादने यदि भगवत्याः शक्तिः, तदा खलु तस्याः जगन्मातृत्वं; तदभावे तदाराधनेन किं फलमित्याशंक्य, यथा ब्रह्मविष्णुरुद्रादीनां अनुग्राहिका तथैवान्येषां तमोवृतानां जन्तूनामप्यनुग्राहिका भवतीत्याह। अविद्यानामिति—हे परमेश्वरि भवती त्वं, अविद्यानां ज्ञानशून्यानां अविद्यातिमिरनिकर-निरुद्धदृष्टीनां, अन्तस्तिमिरमिहिरद्वीपनगरी असि। अन्तस्तिमिरस्य आन्तराज्ञानस्य मिहिरमयी सूर्यप्रधाना द्वीपनगरी प्रकाशहेतवे सूर्यमयद्वीपमध्यस्थब्रह्मपुरी भवती। यथा द्वीपमध्यवर्तिनी नगरी सा तत्तद्वीपप्रदेशसौन्दर्यादपि समधिकसौन्दर्यशालिनी भवतीति न्यायात् मिहिरद्वीपस्य प्रकाशम-यत्वेऽपि तन्मध्यगतनगर्या अत्यन्तप्रकाशमयत्वमित्यभिप्रेतम्। अविद्यामयं तिमिरं निरस्य मूढानामपि स्वप्रकाशकारिणी। हे मातः, त्वं जडानां चैतन्यकलाविहीनानां रक्षणाय त्वमेव चैतन्यस्तबकमक-रन्दस्रुतिशिरा। चैतन्यरूपस्तबकः पुष्पगुच्छः, तस्य मकरन्दस्य स्रुतिः मधुस्रवणं तस्य शिरा प्रवाहः असि। हे मातः दरिद्राणां धनहीनानां चिन्तामणिगुणनिका चिन्तामणेः रत्नविशेषस्य गुणनिका आम्रेडनं समूह इति यावत्। चिन्तामणिः खलु सर्वाभीष्टप्रदः ततोऽपि सहस्रगुणादानशक्तिमती त्वम-सीत्यर्थः। हे मातः त्वं जन्मजलधौ जन्मैव जलधिः समुद्रः संसारसागरः तस्मिन् निमग्नानां नितरां

उन्मज्जनराहित्येन मग्नानां मुररिपुवराहस्य मुरस्य मुरनामकदैत्यस्य रिपुर्विष्णुः स एव वराहः तस्य दंष्ट्रा भवसि। हरिवराहदंष्ट्रया कल्पान्तोद्रिक्तसप्तसागरमग्नायाः पृथिव्या उद्धारः। एतदुक्तं भवति—ब्रह्मादीनां स्वतनुजन्मनां यथा महामहिमत्वसंपादिका, तथा करुणावशात् सर्वानुग्रहेच्छया च, अविद्य-जड-दरिद्र-दुरात्मनामपि भगवत्येव परिपालिकेति ॥ ३ ॥

## पदार्थचन्द्रिका

एवं तावत् जगदीश्वराणामप्यनुग्राहकत्वं उक्तं श्रीभवान्याः । इदानीं पुरुषार्थचतुष्टय-समर्पकत्वेन सकलसंसारिणामपि अनुग्राहकत्वं दर्शयन् स्तौति - **अविद्यानामिति**—अविद्याः अविद्यया अनुष्ठीयमानानि ज्योतिष्टोमादिकर्माणि, तासामन्तस्तिमिरमिहिरोद्दीपनकरी भवति । अन्तर्मध्ये शरीरस्य, तिमिरं धर्माधर्माज्ञानं, तस्य नाशकत्वात् मिहिरः सूर्य इव, धर्मादिज्ञानं तस्योद्दीपन-करी। अन्तस्तिमिरमिहिरोद्वीपनगरीति पाठे अन्तस्तिमिराणां नाशकत्वात् मिहिर इव यानि धर्मज्ञानानि तेषामुद्द्वीपनगरीव द्वीपमध्ये शरीरे नगरीव नगरी भवती निवासस्थानमित्यर्थः। एतेन धर्मज्ञानद्वारा धर्मानुष्ठानहेतुत्वमुक्तं - "विद्यां चाविद्यां च यस्तद्वेदोभयं सह" इत्येवमादिश्रुतौ धर्मे अविद्याशब्दवाच्यत्वं प्रसिद्धमेव। विषयसुखहेतुत्वमाह - जडानामिति - जडानां विषयलंपटानां संसारिणां चैतन्यानि स्रक्चन्द-नादिविषयज्ञानानि तानि स्तबका इव। अत्यन्तरमणीयत्वात्। तज्जन्यो मकरन्द इव विषयसुखं तस्य श्रुतिशिरा निस्सारणनाडी भवती। एतेन "एतस्यैवानन्दस्येत्ये"वमादिश्रुतिषु विषयानन्दहेतुत्वं प्रसिद्धमेव भवान्याः। इदानीं अर्थहेतुत्वमाह - दरिद्राणामिति । दरिद्राणां चिन्तामणिगुणनिका चिन्तामणिचिन्ता भवती। चिन्तामणिर्यथा चिन्तितः सेवकेभ्यः फलं प्रयच्छति तद्वत्त्वमपीत्यर्थः। यद्वा चिन्तामणिगुणनिका चिन्तामणिः शून्यांकः। चिन्तामणिबाहुल्यमित्यर्थः। मोक्षहेतुत्वमाह - जन्मजलधौ संसारे निमग्नानां सेवकानां मुररिपुवराहस्य दंष्ट्रेव भवती ज्ञानद्वारा संसारोद्धारहेतुत्वात्। एतेन पुरुषार्थचतुष्टयसमर्पकत्वेन सैव परमसेव्येत्युक्तं भवति । "भवेद्गुणनिका नृत्ये शून्यांके पाठमिश्रिता"वितिमेदिनीकारः ॥ ३ ॥

## डिण्डिमभाष्यम्

ननु भगवत्याः पुत्राः स्वतः सिद्धमहिमानस्तत्प्रसादात् सृष्ट्यादिसामर्थ्यवन्त एव, तद्व्यतिरिक्तानां अविद्याजडदरिद्रमग्नानां स्वतन्त्रपुरुषाणामपि पालने तद्दोषव्युदासने तन्महि-मोत्पादने यदि भगवत्याः शक्तिः खलुतसाज्जगन्मातृत्वं, तदभावे तदाराधनेन किं फलमित्या-शङ्क्य यथा ब्रह्मविष्णुरुद्रादीनामनुग्राहिका तथैवान्येषां तमसावृतानां जन्तूनामप्यनुग्राहिका भवतीत्याह - **अविद्याना**मित्यादि। हे परमेश्वरि! अविद्यानां ज्ञानशून्यानां, अनाद्यविद्यातिमिरनिकर-निरुद्धदृष्टीनां प्रकाशहेतवे अन्तस्तिमिरस्य आन्तराज्ञानान्धकारस्य मिहिरद्वीपनगरी सूर्यमयद्वीपमध्यस्थ-महापुरी, भवती त्वं भवसि। यद्यद् द्वीपमध्यवर्तिनी या या नगरी तत्तद् द्वीपप्रदेशसौन्दर्यादपि

समधिकसौन्दर्यशालिनी सा सा भवतीति न्यायात्; मिहिरद्वीपस्य प्रकाशमयत्वेऽपि तन्मध्यगतनगर्या अत्यन्तप्रकाशमयत्वमभिप्रेतम्। अविद्यामयं तिमिरं निरस्य मूढानामपि त्वं प्रकाशकारिणी। जडानां चैतन्यकलाविहीनानां रक्षणाय त्वमेव चैतन्यरूपस्य स्तबकस्य पुष्पगुच्छस्य मकरन्दश्रुतेः स्तुतिमधुरश्रवणस्य शिरा प्रवाहिणी भवसि। 'झरी' इति पाठेऽपि स एवार्थः। एवं दरिद्राणां धनहीनानां, सर्वाभीष्टप्रदाद् देवमणेः अपि गुणनिका सहस्रगुणदानशक्तिमती त्वं भवसि। अत्र गुणनिकाशब्देन चिन्तामणेरप्यतिशय उच्यते। चिन्तामणेरपि त्वं दानशक्त्या समधिकेति बहुप्रकारवर्णना आवृत्तिपरम्परारूपा इत्यर्थः। गुणनिका पुनः पुनरावृत्तिः। अथ जन्मजलधौ पुनः पुनरुत्पत्तिसागरे निमग्नानामभ्युद्धरणाय, इति शेषः; मुररिपुवराहस्य श्रीकृष्णमयक्रोडस्य दंष्ट्रा त्वं भवसि। हरिवराहदंष्ट्रया खलु कल्पान्तोद्रिक्तसप्तसागरमग्नायाः पृथिव्या उद्धारः स्मर्यते। एतदुक्तं भवति - ब्रह्मादीनां स्वतनुजन्मनां यथा महामहिमत्वसम्पादिका तथा करुणावशात् सर्वानुग्रहेच्छया च अविद्याजडदरिद्रजन्मदुःखानामपि भवत्येव परिपालिकेति ॥ ३ ॥

## गोपालसुन्दरी

अविद्यानां - विद्या धर्मप्रतिपादकशास्त्रम्; तद्रहितानां, अन्तस्तिमिरस्य अज्ञानरूपान्धकारस्य मिहिरः सूर्यः ज्ञानं, तद्दीपनकरी तत्प्रकाशिका, जडानां कामादिशास्त्रीयज्ञानरहितानां अचतुराणां, चैतन्यं ज्ञानं, तस्य स्तबकः, प्रकरः समूहः, तद्रूपो यो मकरन्दः पुष्परसः, तस्य श्रुतिं क्षरणं तस्य सिरा सरणिः। दरिद्राणां निर्धनानां, चिन्तामणिगुणनिका चिन्तामणिमयी माला। जन्मजलधौ संसारसागरे निमग्नानां, मुररिपुवराहस्य विष्णुरूपादिवराहस्य, दंष्ट्रा उद्धारकरी भवतीत्यर्थः। अत्र विशेषणचतुष्टयेन धर्मार्थकाममोक्षजनकत्वं भगवत्याः प्रतिपादितम्। धर्मस्य तच्छास्त्रज्ञानसाध्यत्वात् तत्प्रदानं प्रथमेनोक्तम्। कामस्य चातुर्यसाध्यतया तत्प्रदानं द्वितीयेनोक्तं, तृतीयतुर्ययोरर्थमोक्षदानार्थकत्वस्य च स्पष्टत्वमेवेति विज्ञेयम्। अथ च फलदानद्वारा वाग्भवबीजात्मकत्वं भगवत्याः सूचितम्। तदुक्तं त्रिपुरार्णवे—"हरत्यज्ञानमज्ञानाज्जडिमानमतः पुनः। इतः कामान् वितनुते कैवल्यं कलया विधोः॥ वाग्भवं प्रथमं बीजं वेदानां पुरतो यतः। त्रिपुरासंज्ञया भद्रे त्वद्रूपा विश्वविग्रहा॥ वाच्यवाचकरूपेण व्याप्नोत्यमितवैभवम्" इति॥

**विष्णुपक्षे**—भवति त्वयि विद्यमाना त्वदङ्कस्थास्य विष्णोः, 'स्त्रीपुंयोगादाख्यायाम्' इति ङीप्, 'ई लक्ष्मीरविद्यानाम्', इत्याद्युक्तरूपेत्यर्थः। तथा चाहं त्वयि प्रपन्नो विद्यादिरहितो भविष्यामि इति किमत्र चित्रमिति भावः॥ ३ ॥

## आनन्दलहरी

पूर्वं भगवत्याः स्तुतिकरणे स्वस्यासामर्थ्यं "कथमकृते" त्यादिना दर्शितम्। इदानीं सामर्थ्यं विद्याभावप्रयुक्तं वा, स्वोदरपूरणप्रयासैरेव जन्मयापने कुतः स्तुतिरितिदारिद्र्ययुक्तं वा, जन्ममरण-

प्रवाहपतितानामल्पकालस्थायित्वेन वा ममैतादृशमसामर्थ्यं त्वत्कृपायां सत्यां नास्तीति मद्विधोऽपि स्तुतिसमर्थ इत्याह—**अविद्यानामिति** ।

अविद्यानां तत्वज्ञानरूपविद्यारहितानां अन्तः मनसि तिमिरस्यान्धकारस्य अज्ञानरूपस्य मिहिरो विनाशकत्वात्सूर्यतुल्यं तत्तत्वज्ञानं तदुद्दीपनकरी तत्प्रकाशजनिका, मिहिरद्वीपनगरीति पाठे मिहिरद्वीपं सूर्यलोकः तन्नगरी महाप्रकाशवतीति भावः । जडानां शास्त्रीयज्ञानरहितानां चैतन्यस्तबकस्य ज्ञान-समूहरूपपुष्पगुच्छस्य यो मकरन्दः विज्ञजनप्रमोदरूपो रसः तस्य एका मुख्या श्रुतेः श्रवणस्य शिरा प्रणालीरूपा । झरीति पाठे निर्झररूपेत्यर्थः । नदीत्यपि क्वचित्पाठः । दरिद्राणां धनहीनानां चिन्तामणेः अभीष्टार्थप्रदरत्नविशेषस्य गुणनिका माला । आवृत्तिरिति कश्चित् । जन्मजलधौ भवसागरे निमग्नानां पृथ्विस्थानिनां मुररिपुवराहस्य विष्णुरूपादिशूकरस्य दंष्ट्रा दन्तः, उद्धारकरी भवतीत्यर्थः । एतेन त्वत्कृपायां सत्यां च स्तुतिकरणे काप्यनुपपत्तिर्नास्तीति दर्शितम् ॥

**त्वदन्यः पाणिभ्यामभयवरदो दैवतगणः**
**त्वमेका नैवासि प्रकटितवराभीत्यभिनया ।**
**भयात् त्रातुं दातुं फलमपि च वांछासमधिकं**
**शरण्ये लोकानां तव हि चरणावेव निपुणौ ॥ ४ ॥**

த்வதன்ய: பாணிப் யாமபயவரதோ தைவத கண:
1 3 1 4 4 3 3 1 3
த்வமேகா நைவாஸி ப்ரகடித வராபீத்யபினயா |
1 1 1 1 4 1 4
பயாத்த்ராதும் தாதும் பலமபி ச வாஞ்சாஸமதிகம்
4 1 1 1 3 1 2 1 2 4
சரண்யே லோகானாம் தவ ஹி சரணௌவேவ நிபுணௌ ||
1 1

अन्यदेवगण अभयवरदमुद्रायें रचते हाथों से,
तू हि एक न करती है वह अभिनय मां, निजहाथों से ।
भय से करें त्राण, दान देते इच्छा से मीबढकर,
भक्तों का हे लोक-शरण्ये ! तव चरण ही निपुणा हठकर ॥

## लक्ष्मीधरा

त्वत्-भवत्याः सकाशात्, अन्यः इतरः, पाणिभ्यां हस्ताभ्यां, अभयवरदः अभयं भयराहित्यं, भयात् त्राणमिति यावत्, वरः इष्टार्थः, तौ ददातीति अभयवरदः, एकेन हस्तेन अभयदः अन्येन वरद इत्यर्थः । दैवतगणः देवता एव दैवतानि । प्रज्ञादित्वात्स्वार्थे अण्,

'स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते,' यथा चेतनैव चैतन्यमिति। तेषां गणः इन्द्रादयः आदित्यादयश्च गणदेवताः। त्वं भवती एका मुख्या, एकसंख्यासंख्येया वा, नैवासि न भवस्येव। प्रकटितवराभीत्यभिनया, प्रकटितः प्रकाशितः, हस्ताभ्यामिति शेषः, वरः इष्टार्थः अभीतिः अभयं भयात्त्राणं तयोरभिनयः अभिव्यञ्जनं यस्याः सा तथोक्ता। हस्ताभ्यामभयवरप्रदानं सर्वदैवतसाधारणमिति सर्वेषामसाधारणं अभयवरप्रदानप्रकारमाह—भयात् त्रातुं संसाराद्रक्षितुं दातुं फलं वाञ्छितार्थानुरूपं, अपि चेति समुच्चये, वाञ्छासमधिकं वाञ्छायाः कामनायाः सम्यगधिकं कामितार्थादधिकमित्यर्थः। शरण्ये शरणार्हे! लोकानां चतुर्दशभुवनानाम्। तव भवत्याः। हिशब्दः इत्यर्थे, इति संचिन्त्येत्यर्थः। चरणौ पादौ। एवकारः अवधारणे। निपुणौ समर्थौ॥

अत्रेत्थं पदयोजना—हे भगवति, लोकानां शरण्ये, त्वदन्यो दैवतगणः पाणिभ्यामभयवरदः। एका त्वं पाणिभ्यां प्रकटितवराभीत्यभिनया नैवासि हि इति संचिन्त्य तव चरणावेव भयात्त्रातुं वाञ्छासमधिकं फलमपि च दातुं निपुणौ॥

अयं भावः—हस्ताभ्यामभयवरदानं सर्वसाधारणमिति कृत्वा त्वच्चरणावेव तादृशाभयवरप्रदाने स्वयमेव व्यापृतौ। अतस्तव न कर्तव्यं हस्ताभ्यामभयवरप्रदानम्, प्रयोजनाभावात्, सर्वसाधारण्यप्रसङ्गात्, लोकैकशरण्यत्वव्याघाताच्चेत्युपदेश इति। अत्र व्यतिरेकालंकारः स्पष्टः। वाक्यलिङ्गकः काव्यलिङ्गालंकारोऽपि स्पष्टः। तयोरङ्गाङ्गिभावेन संकरः॥ ४॥

## सौभाग्यवर्धनी

यदि स्तुतिं कर्तुं प्रवृत्तोऽसि, मम स्तुत्या किम्? मदन्या देवतागणाः हरिहरगणेशादयः प्रत्यक्षतो वराभयकराः सन्ति तान् स्तुहि; तेषां स्तुत्या समीहितं भविष्यतीत्यत आह—**त्वदन्य** इति। श्लोकार्थः स्पष्टः। सत्यमुक्तं वराभयकरा त्वं न भवसि। वराभययोः कृत्यं भयात्त्राणं समीहितफलवितरणं च। एतद्द्वयमपि तव चरणावेव दातुं निपुणौ। त्वदन्यदैवतेषु नटानामिव वराभयाद्यभिनयमात्रम्। तथा तवाभिनयो नास्ति। किं च, अन्यदैवगणा उपासिताः वरेण शरीरपोषणेन यावद्वाञ्छितं तावदेव ददते। तव चरणौ वाञ्छितादप्यधिकं वितरतः; यतस्त्वं लोकानां शरण्या; येऽप्यन्ये दैवतगणाः तेषामपि त्वमेव शरण्या। ते तु प्रतिदिनमुत्पत्तिप्रलयाभ्यामवसीदन्ति। तस्मात्तव स्मृतिर्निश्चलसिद्धिदायिनीति भावः। तदुक्तं क्रमस्तुतौ—'ईशत्वभावकलुषाः कति नाम सन्ति ब्रह्मादयः प्रतिदिनं प्रलयाभिभूताः। एकः स एव जननि स्थिरबुद्धिरास्ते यः पादयोस्तव सकृत्प्रणतिं करोति॥' इति। इति चतुर्थश्लोकार्थः॥ ४॥

## अरुणामोदिनी

एवं पदपांसुमहिमानं प्रकटय्य तदधिकरणयोश्चरणयोर्माहात्म्यं प्रकटयिष्यन्तो देव्यां देवतान्तरसाधारण्यभ्रान्तिं निराकुर्वन्ति—**त्वदिति**। हे देवि, त्वदिति पञ्चम्येकवचनम्; भवत्याः,

अन्य इतरः, भवत्प्रसादलब्धातिशय इत्यर्थः। देवा एव देवताः, स्वार्थे तल्प्रत्ययः। देवता एव दैवतानि, प्रज्ञादित्वात्स्वार्थेऽण्प्रत्ययः; तेषां गणो देवसङ्घः, मनोरथप्रदातृतया पामराभिमतो भवत्प्रसादलब्धविभवो देवसङ्घः, पाणिभ्यां हस्ताभ्यामभयं भयराहित्यं वरोऽभीष्टम्, तौ ददातीत्यभयवरदः। हस्ताभ्यामभयवरदो न तु मनसेत्यभिसंधिः, प्रतारणपरतन्मुद्राधारणादिति भावः। यद्वा, पाणिभ्यां न त्वेकपाणिना, अपि तु द्वाभ्यामिति, हस्तद्वयेन स इष्टार्थं ददाति, अस्माभिरपि तेनैव दातव्यमिति लोकन्यायानुसार्यसूयासंपृक्तोपहासो वाऽर्थः। यद्वा, पाणिभ्यामभयवरदो दैवतगणस्त्वतिधार्मिकसाधारणधार्मिकयोः साधारणस्य चिह्नबाहुल्यदर्शनात्, 'मुद्रा व्याजे लाञ्छने च' इति कोशाद्व्याजार्थकहस्तधृतमुद्रो देवतात्वेन गण्यमानस्त्वदन्यः भवत्या अन्य एव, अतितुच्छरूप एवेत्यर्थः। एकाऽद्वितीयरूपा, सर्वदेवताकारणभूतेत्यर्थः, त्वं भवत्येव सकलदेवतामुख्या त्वमेव पाणिभ्यां प्रकटितः प्रकाशितः वराभीत्योरिष्टाभययोरभिनयो व्यञ्जनं यस्याः सा नैवासि नाभूः। 'अधोमुखो वामहस्तः प्रसृतो वरमुद्रिका। ऊर्ध्वीकृतो दक्षहस्तः प्रसृतोऽभयमुद्रिका॥' इत्युक्तलक्षणवराभयमुद्रयोर्धारणाभावात्। किं तु 'चतुर्बाहुं त्रिलोचनाम्' इत्यादिध्यानेषु चतुर्षु हस्तेषु धनुर्बाणाङ्कुशपाशानां चतुर्णां धारणोक्तेरित्यर्थः। यदि त्वमपि हस्ताभ्यामभयवरदानसूचकतन्मुद्राधारणमकरोस्तर्हि भवत्या देवतासाधारण्यप्रसञ्जनद्वारा भक्तेष्टार्थवितरणे यादृच्छिकतैव प्रतीयेत, निरङ्कुशैश्वर्यादिवितरणं न प्रतीयेतेत्यर्थः। सर्वाभीष्टदातुर्मुद्राधारणमप्रयोजकमित्यर्थः। ननु देव्याऽपि दानस्य हस्तदेयत्वाद्देव्या बाहुचतुष्टयान्यस्यानुपलम्भादिष्टार्थं कथं वा देयाद्देवी, कुतश्च विश्वासो भक्तजनानामित्याशङ्कायामाह— **भयादिति**। शरणं रक्षणमर्हतीति शरण्या; शरणं श्रीचक्राख्यं गृहमर्हतीति वा शरण्या; तस्याः संबुद्धिः, हे शरण्ये, भक्तजनरक्षणदीक्षिते भगवतीति संबोधनम्। एतेन देव्यन्येषामशरण्यत्वं सूचितम्। 'तदर्हति' इति यत्प्रत्ययः। भयात् आध्यात्मिकादेर्दारिद्र्यादेः संसाराच्च यद्भयं तस्मात्, त्रातुं रक्षितुम्, भक्तजनानित्यर्थः। तथा लोकानां भुवनानां वाञ्छायाः समधिकं मनोरथादधिकं फलमभीष्टं दातुं वितरितुं च तव भवत्याः, सर्वदेवताविभवदाया इति भावः। चरणौ पादावेव नान्यौ। चरत्यनेनेति व्युत्पत्त्या गत्यर्थकत्वेन ज्ञानार्थकत्वादिष्टार्थवितरणशक्ततया पाणिभ्यामधिकाविति भावः। निपुणावभिज्ञौ, 'प्रवीणे निपुणाभिज्ञ....' इत्याद्यमरः। हीत्यवधारणे। 'हि हेताववधारणे' इत्यमरः। अयमभिप्रायः—भवदन्येषां देवानामिष्टार्थदानसामर्थ्यमेव नास्ति; यदि तत्संभवेत्तदानीं त्वमेवेष्टार्थदात्री, 'येऽपि ब्रह्मादयो देवा भवन्ति वरदायिनः। त्वद्रूपां शक्तिमासाद्य ते भवन्ति वरप्रदाः॥' इति वचनात्, 'फलमत उपपत्तेः' इति बादरायणसूत्रात्, 'यो यो यां यां तनुं भक्तः' इत्यादिवचनाच्च। भवच्चरणयोश्च भयहरणं वाञ्छितादधिकेष्टदानं चातिदुःखिनोः समाधिसुरथयोर्निदर्शनमभूदिति। व्यतिरेकालंकारः॥ ४॥

## आनन्दगिरीया

ननु तनीयांसमित्यादिना देवतान्तरपरित्यागेन ममैव चरणयोः रजःकणं शिरस्याधाय ब्रह्मादयः स्वकार्ये समर्था भवन्तीत्युक्तमस्ति। (तदयुक्तं) अन्यदैवतस्यापि कृपाकटाक्षवरदाभयमुद्राधारिकर-कमलस्य विद्यमानत्वात् इत्याशंक्य तव चरणयोरेव सर्वातिशायि सामर्थ्यमस्तीति स्तौति। एतैरगम्योपासना किं मभोपासनायासेनेत्यलं स्तुत्या इत्यत आह—त्वदन्य इति। हे लोकानां शरण्ये लोकानां चतुर्दशभुवनानां शरण्ये शरणाय योग्ये, शरणागतपरित्राणपरायणे, हि यस्मात्, फलं दातुं तव चरणावेव निपुणौ भवतः। अत्रापि काकाक्षिन्यायेन लोकानां इति योजनीयम्। तस्मात्तव चरण कमलगलितं रज एव प्रसादबुद्ध्या ब्रह्मादिभिरधारि नान्यत्। ननु फलमात्रं तु गणेशादिदैवतमपि ददात्येवेति को वातिशयश्चरणयोरित्यत आह—किं लक्षणं फलं, वाञ्छासमधिकं वाञ्छितादप्यधिकम्। अन्यदेवताः कल्पद्रुमकामधेनुप्रभृतयश्च महाकठिनतमोपासनया ध्यातॄणामिच्छागोचरमपि फलं पूर्णं दातुमसमर्थाः, तव चरणौ तु वाञ्छितादप्यधिकं फलं दातुं समर्थौ। अयं भावः—विद्याधनपुत्रादिकामनयोपास्यमानायां त्वयि, उपासनायाः परिपाकवशेन तव चरणसाक्षात्कारे जाते तन्नान्तरीयकाणां धर्मार्थकाम मोक्षाणां अकामविषयाणामपि प्राप्तिर्भवति। धनादिकं तु क्षुद्रं फलं वाञ्छावशादपि भवति, इति वाञ्छिताधिकधर्मादिप्राप्तौ तव चरणमहिमैव कारणमिति। अतिशयान्तरमाह—भयात् त्रातुं आधिभौतिकभयादपि त्रातुं रक्षितुं, शरणागतवज्रपञ्जरत्वादित्यर्थः। अस्याः परमेश्वरीमूर्तेर्हस्ते भुवनेश्वरीवत् वरदाभयमुद्राधारित्वं नास्तीति ज्ञातव्यम्। ननु मदन्योऽपि देवतागणो वरदाभयमुद्राधारित्वात्फलदाने समर्थ एवास्तीत्याशंक्याह—त्वदन्य इति। त्वदन्यो दैवतगणः पाणिभ्यामभयं वरं च दत्ते, तद्द्वयमपि तव चरणावेव दातुं समर्थाविति। यदा क्षुद्रः प्रभुः यद्ददाति, तद्विचार्य स्वहस्तेन ददाति। महाप्रभुस्तु चरणपीठाग्रेऽनुवर्तमानां संपदमपि अनायासलीलालसदृङ्मण्डलालोकनलीलया सेवकादि-द्वारा दत्ते इति तव चरणापेक्षयाऽन्यो देवतागणः क्षुद्र इत्यर्थः। देवतान्तरं यद्भुजाभ्यां दत्ते, तत्तव चरणावेव ददाते इति ध्वनिः। अपि च त्वदन्यो दैवतगणः पाणिभ्यामभयवरदो भवति। अभयवरदे वर्तेते यस्यासौ अभयवरदः, वरदाभयमुद्राधारीत्यर्थः। मुद्रा त्वभिनयः स चार्थशून्यः कायवाग्व्यापारविशेषः, पताकातिपताकार्धचन्द्रादिः। तथा च यथा सभापतिं सामाजिकान्वा संतोषयितुं रामभूमिकां आदाय, उपागतसकलरामोपकरणव्यात्तकरणः, राम एवायं, अयमेव वा श्रीराम इति सभापतिमनश्चमत्काराधायकेऽपि नटे रामोपकरणकार्यसमुद्रबन्धन-लंकादहन—दशमुखादिहनन—सीतालिङ्गनादि किमपि न भवति चेष्टामात्रत्वात्। तथा, अर्थशून्यं चेष्टामात्रं भुजाभ्यां दधत् देवतासमूहः तव चरणयोरनुपदर्शितवराभयमुद्रयोः सर्वाभिवाञ्छितफलं ददतोः सादृश्यं कथं प्राप्नुयादिति। देवतान्तरवत् त्वं वराभयादिकं नाभिनयसीत्याह-त्वमेवैकेति। एवमनेन प्रकारेण, त्वमेव प्रकटितवराभीत्यभिनया न भवसि। प्रकटितौ वराभीत्यभिनयौ यया सा। त्वमेवेति विशेष्यसंगतैवकारेण

अन्ययोगव्यवच्छेदकेन देवतान्तरप्रकटित (मिथ्याप्रकटित) वराभीत्यभिनयाभावो व्यवच्छिद्यते। अत एव त्वमेका मुख्या। सर्वदेवेष्वित्यर्थात्। केवला वा। एवं च मूर्धातिशयशालिनौ तव चरणावेवोपासनीयाविति। अत्र रहस्यार्थः। पूर्वार्धे यथार्थः। जगत् भयात् त्रातुं चतुर्वर्गफलं दातुं प्रकाशविमर्शाख्यौ चरणौ तव कामकलात्मिकायाः। कामकलाप्रसंगे "स्मृत्या नित्यं महेशानि भवदंघ्रिचतुष्टयम्। पदार्थज्ञानतो देवि सद्यो मोक्षाय कल्पते। प्रत्यहं परिणीतस्य तव कामकलातनुम्। नमन्ति विबुधाः पादौ" इत्याद्यलम्।

## तात्पर्यदीपिनी

ननु अभिमतसिद्धिदात्री सकलापि देवता वराभयचिह्नितकरसरोरुहा दृश्यते। एतत्स्तोत्रवाच्या श्रीसुन्दरी तु पाशांकुशधनुःशरहस्तैव दृश्यते। तस्मात्तदाराधकः पूजायां वरदानाभयप्रदानचिह्नाभावात् कथं प्रवर्ततामिति चेत्तत्राह - **त्वदन्य** इति - हे परमेश्वरि त्वद्व्यतिरिक्तो दैवतगणः देवा एव दैवतानि, तेषां गणः, इन्द्रादिदेवसमूहः, पाणिभ्यां हस्ताभ्यां अभयवरदः अभयं अभयदानं, वर इष्टार्थः, तौ ददातीति - स तथोक्तोऽस्ति। एकेन हस्तेनाभयदः, इतरेण वरद इत्यर्थः। त्वं एका मुख्या प्रकटितवराभीत्यभिनया प्रकटितः प्रकाशितः हस्ताभ्यां वरः इष्टार्थः, अभीतिः भयात् त्राणं, तयोः अभिनयः व्यञ्जनं यस्याः सा तथोक्ता एतादृशी नैवासि। ननु तर्हि कुतः अस्याः सकाशादभिमतवांछितप्राप्तिः भक्तानाम्? तत्राह - हे शरण्ये शरणार्हे, हि इति निश्चये, लोकानां, भयात् भेदरूपात् संसारमोहात् त्रातुं रक्षितुं च, परं वांछासमधिकं इष्टादप्यधिकं फलं अणुत्वेन्द्रादिकं दातुमपि तव चरणावेव निपुणौ दक्षौ। त्वच्चरणप्रभावादेव वराभययोः सिद्धयोः सतोः, त्वया वराभीत्यभिनयः कथं कर्तव्यः। वराभययोर्निर्देशेन स्वर्गमोक्षयोः कथनम्। वरेण स्वर्गः, अभयेन मोक्षः। लोके या काचिद्देवता स्वर्गदात्री सा न मुक्तिदा। या मुक्तिदा सा न स्वर्गदा। उभयं दातुं तवैव सामर्थ्यम्। यथोक्तं नमोभरस्तोत्रे - "यत्रास्ति भोगो न हि तत्र मोक्षो यत्रास्ति मोक्षो न हि तत्र भोगः। श्रीसुन्दरीतर्पणतत्पराणां भोगश्च मोक्षश्च करस्थ एव"। इति वचनात् सर्वदेवताभ्यः समधिकप्रभावा त्वं, नान्या देवता इति भावः।

## पदार्थचन्द्रिका

इदानीं तत्तद्देवताभ्योऽधिकफलदातृत्वेन भवानीं स्तौति - **त्वदन्य** इति। त्वदिति पञ्चम्यन्तम्। त्वत् त्वत्तोऽन्यो दैवतगणः पाणिभ्यां कराभ्यामभयवरदः, अभयेन भयाभावेन सह वरं ददातीति तथा। अथवा न विद्यते भयं यस्मिन्सोऽभयः, स चासौ वरश्च, तं ददातीति तथा। सर्वं हि वाक्यं क्रियया परिसमाप्यत इति च। येन भवतीति क्रियापदमध्याहार्यम्। त्वदन्य इत्येकं पदं वा। पञ्चमी भयेनेति योगविभागात्समासः। इदानीं तत्तद्देवताभ्योऽधिकफलदातृत्वमाह

भवान्याः - त्वमिति। प्रकटितवराभीत्यभिनया त्वमेका केवला नैवासि। किन्तु हे लोकानां शरण्ये तव चरणावपीत्यन्वयः। वरश्च अभीतिश्च वराभीती ते अभिनयति, आभिमुख्येन नयति प्रापयतीति तथा तत्तत्कर्मफलदात्रीत्यर्थः। चरणौ विशिनष्टि - भयात्त्रातुं वांछासमधिकं फलं च दातुं निपुणौ चतुरौ। ज्योतिष्टोमेन स्वर्गकामो यजेतेत्येवमादि श्रुतिप्रसिद्धवांछातोऽधिकं फलं मोक्षरूपम्। हि शब्दः श्रुतिप्रसिद्धमाह। एवकारोऽप्यर्थः। चरणशब्दोऽत्र निष्कामभक्तिलक्षकः। तत्तत्कर्मफलदातृत्ववैषम्यं भवान्याः सकामनिष्कामभेदेनेति द्रष्टव्यम्। शरणशब्दो रक्षितृवाचको रक्षणपरो द्रष्टव्यः। तथा च सति शरणं कर्तुमर्हति योग्या भवतीति शरण्या तत्संबोधनं तथा। अथवा तत्तद्देवतारूपेण तत्तत्कर्मफलदातृत्वं भवान्याः दर्शयन् सकामनिष्कामभक्तिभेदेन तत्तत्कर्मफल-वैचित्र्यमाह। त्वदिति। त्वत्तोऽन्योऽन्यत्वेन प्रतीयमानो दैवतगणस्त्वमेव नैवासि। किं तु त्वमेव तत्तद्रूपासि इत्यर्थः। ननु तत्तत्कर्मफलदातृत्वं तत्तद्देवतासु प्रसिद्धमित्यत आह - एकेति। प्रकटितवरा-भीत्यभिनया तत्तत्कर्मफलदात्री एका मुख्या त्वमेव। भवान्या निष्कामभक्तेरधिकफलत्वमाह - भयादित्यादिना। अस्मिन्पक्षे एवकारोऽवधारणार्थ एव। लौकिकसाधारणतत्तत्कर्मफलदातृत्वमन्तर्यामिण एव सकलश्रुतिप्रसिद्धं तदभेदाच्च भवान्या इति भावः। अन्यत्समानम्। एतच्च 'फलमत उपपत्तेरि'त्यत्र निर्णीतमेव भाष्यकारैः।

## डिण्डिमभाष्यम्

नन्वभिमतदात्री सर्वापि देवता लोके वराभयचिह्नितकरसरोरुहा दृश्यते, एतत्स्तोत्रवाच्या श्रीसुन्दरी महाभट्टारिका देवता तु पाशाङ्कुशधनुःशरहस्तैव दृश्यते। तस्मात्तत्साधकस्तत्पूजायां वरप्रदानाभयप्रदानचिह्नाभावात् कथं प्रवर्तताम् इत्याह—**त्वदन्य इत्यादि।**

हे परमेश्वरि! त्वदन्यस्त्वत्तो व्यतिरिक्तः दैवतगणो दैवतसमूहः पाणिभ्यामेवाभयप्रदो न तु वस्तुतः। त्वदन्यासां देवतानामिष्टवरप्रदानाशक्तित्वादभिनयरूपमर्थशून्यं वराभयसूचकहस्तचेष्टा-संस्थानमात्रं वर्तते। यतः अभिनये अर्थो नास्ति। (यथा नटो रामवेषं गृहीत्वा समुद्रशोषणाग्निबाण-मोक्षाभिनयं करोति, न तु तेन समुद्रशोषणं कार्यमुत्पद्यते। तथा त्वदितरदेवताहस्ताभ्यामेवाभिनयरूपं निरर्थकं वराभयमुद्राग्रहणं करोति) त्वं तु न तथा, यतस्त्वमेकैवेह प्रकटितवराभीतिमुद्रा-भिनया नासि। तर्हि कुतस्त्वत्सकाशात् प्रपन्नानां भक्तानामभिवाञ्छितप्राप्तिरिति ते ब्रूमः—तव चरणावेव भयाद् भेदरूपात् संसाररूपात् मोहात् त्रातुं रक्षितुं वाञ्छासमधिकम् इष्टादभ्यधिकं फलं दातुं निपुणौ दक्षौ त्वच्चरणप्रभावादेव वराभयाभिनययोः सिद्धयोर्नटवत्त्वया वराभयाभिनयो न कर्तव्यः। वराभययोर्निर्देशेन भगवत्या देययोः स्वर्गमोक्षयोरेव कथनम्; वरेण स्वर्गोऽभयेन मोक्षः। लोके या काचिद्देवता स्वर्गदात्री सा तु न मुक्तिदात्री, या मुक्तिदात्री, सा न स्वर्गदा; उभयं दातुं तवैव

सामर्थ्यम्। तथा चोक्तमीश्वरविरचिते **मनोहरस्तोत्रे**—"यत्रास्ति भोगो न हि तत्र मोक्षो यत्रास्ति मोक्षो न हि तत्र भोगः। श्रीसुन्दरीतर्पणतत्पराणां भोगश्च मोक्षश्च करस्थ एव॥" इति वचनात्। (सर्वदेवताभ्योऽपि समधिकप्रभाववत्त्वं तवैव नान्यस्य देवतायाः। यतस्त्वमेव लोकानां शरण्या शरणदयोग्या) बुभुक्षवो मुमुक्षवश्च तयोर्भोगमोक्षयोरुभयोरपि सुरथक्षत्रिये समाधिनाम्नि वैश्ये च त्वया प्रतिपादितयोर्दृष्टत्वादसाधारणगुणगौरवास्पदं त्वमेव। वाञ्छासमधिकशब्देन देवीमाहात्म्ये सुरथवरप्रदानं सूचितम्। यतः स सुरथो भ्रष्टराज्यः सन् त्वामुपास्य स्वकीयभ्रष्टराज्ये पुनः प्राप्तौ अभिलाषी महेन्द्रसमानाधिकारवत्त्वैश्वर्यवान् कृतस्त्वयेति॥ ४॥

## गोपालसुन्दरी

मदन्या देवता कुतो न सूयत इत्यत आह - **त्वदन्यो** दैवतगणः पाणिभ्यामेव अभयवरदः, अभयवरदमुद्राधारकः, त्वं पुनरेका प्रकटितयोः वराभीत्योः अभिनया उपायतया तथा नासि, तवाभिनयमात्रधारणं नास्ति, अपितु वराभयदातृत्वमपि। तत्र हेतुमाह - भयादिति, भयात्त्रातुं वाञ्छासमधिकं फलं दातुं तव चरणावेव निपुणौ इत्यन्वयः। यद्वा त्वमेकैका नासि अपि तु त्वमेकैका प्रकटितवराभीत्यभिनयाऽसि। अपितु त्वदन्योऽपि दैवतगणः पाणिभ्यामभयवरदः। एतावता साम्येऽपि वैलक्षण्यं ततो भवत्या इत्याह - भयादित्यादि। अथवा पाणिभ्याभयवरदस्त्वदन्यत्वेन प्रतीयमानो दैवतगणः त्वमेवैका नासि, अपि तु त्वमेव कीदृशी त्वं प्रकटितवराभीत्यभिनया तथापि भयात्त्रातुं वाञ्छासमधिकं फलं दातुं तव चराणावेव त्वच्चरणत्वेनोपस्थितावेव निपुणौ इत्यभ्युच्चयः।

**विष्णुपक्षे**—त्वदन्यो दैवतगणो गणेशादिपाणिभ्यामेवाभयवरदः, प्रकटितवराभीत्यभिनया एका गौरी त्वं नासि, अपि तु त्वमेव भयात् त्रातुं वाञ्छासमधिकं फलं दातुं लोकानां शरण्ये गणनायां प्रस्तुते तव चरणावेव निपुणौ गणनार्हौ, इ लोकानां कामेन्द्रशिवब्रह्मणां शरण्ये हे इति सम्बोधनं वा एकाक्षरकोशे इकारलकारोकारककाराणां कामादिवाचकत्वेनोक्तत्वात्॥ ४॥

## आनन्दलहरी

भगवत्या अन्यतो वैलक्षण्यं दर्शयति **त्वदन्य इति**—हे लोकानां शरणीकरणार्हे त्वदन्यो दैवतगणः पाणिभ्यामेवाभयवरदः हस्ताभ्यामेवाभयवरौ ददाति। न पादाभ्याम्। एका केवला त्वं तथा नैवासि। ननु ममापि हस्तयोर्वराभयमुद्रे स्त इति कथं तथाविधा नास्मीत्यत आह प्रकटितेति—प्रकटितौ प्रकाशितौ वराभीत्योरभिनयौ समुद्रे यया सा तथा। यद्वा त्वं एका प्रकटितवराभीत्यभिनया नासि पाशांकुशधनुर्बाणधरत्वात्। तर्हि कथं मद्भक्तानां वराभयलाभ इत्यत्राह - हि यतः भयाद्रक्षितुं, वांछातः इच्छाविषयात् समधिकमपि फलं दातुं च तव चरणावेव कुशलौ दक्षौ, न तत्र हस्तयोर्व्यापारो

ऽपेक्षितः। किं तु भक्तोपासनार्थं तव तथा अभिनय इति भावः। केचित्तु—त्वदन्यो दैवतगणः पाणिभ्यामेवाभयवरदः, न तु वस्तुगत्या। त्वं तथाविधा नासि। यतस्त्वत्पादावेव फलदौ इत्याहुः। अन्ये तु प्रकटितवराभीत्यभिनया, त्वमेका नासि। अपि तु त्वदन्योऽपि दैवतगणः पाणिभ्यामभयवरदः। एतावता साम्येऽपि तवान्यद्वैलक्षण्यं अस्तीति दर्शयति भयादितीति प्राहुः।

**हरिस्त्वामाराध्य प्रणतजनसौभाग्यजननीं**
**पुरा नारी भूत्वा पुररिपुमपि* क्षोभमनयत्।**
**स्मरोऽपि त्वां नत्वा रतिनयनलेह्येन वपुषा**
**मुनीनामप्यन्तः प्रभवति हि मोहाय महताम्॥ ५॥**

ஹரிஸ்த்வாமாராத்ய ப்ரணதஜன ஸெளபாக்யஜனனீம்
1 4 1 1 4 3
புரா நாரீ பூத்வா புரரிபுமபி க்ஷோபமனயத்;
1 4 1 1 1 4
ஸ்மரோபி த்வாம் நத்வா ரதி நயனலேஹ்யேன வபுஷா
1 1 1 1 1
முனீனாமப்யந்த: ப்ரபவதி ஹி மோஹாய மஹதாம்.
1 1 1 4 1

प्रणतभक्त-सौभाग्यदायिनी! तेरा आराधन करके,
नारी बन हरि पुरा समय, पुररिपु हर का मन भी करके।
मथ बैठा; स्मर भी नत हो तेरे आगे रतिदृशास्नपित-
काया से, महान मुनियों का भी कर पाया मन मोहित!॥

## लक्ष्मीधरा

हरिः विष्णुः त्वां भवतीं चक्ररूपिणीं च आराध्य पूजयित्वा जपित्वा ध्यात्वा च। अत एव त्रिपुरसुन्दरीप्रस्तारभेदेषु एकस्य प्रस्तारस्य ऋषिः विष्णुः। ऋषिर्नाम वेदस्थितो मन्त्रो येन दृष्टः स इति। अत एवाहुः 'दर्शनादृषिः' इति। इयं पञ्चदशाक्षरीविद्या ऋग्वेदे आम्नाता—'चत्वार ईं बिभ्रति क्षेमयन्तः' (ऋ. ५. ४७. ४) इत्यादौ। न चात्र ईकारत्रयम्, हृल्लेखात्रयस्यैव श्रुतत्वात्, इति वाच्यम्। षोडशकलात्मकस्य श्रीबीजस्य गुरुसंप्रदायवशाद्विज्ञेयस्य स्थितत्वात् चतुर्णामीकाराणां सिद्धेः मूलविद्यायाः वेदस्थितत्वं सिद्धम्। अत्र केचित्तु कुलसमयाचारानभिज्ञाः 'चत्वार ईं बिभ्रति क्षेमयन्तः' इत्यादिश्रुतिबोधिताश्चत्वार ईकाराः ईकारेण सार्धं हृल्लेखात्रयमित्याहुः। तन्न, ईकारस्य ईकारत्वोक्तेरयुक्तत्वात्, मूलविद्यायाः षोडशवर्णात्मकत्वात्;

* स्मररिपुमपि

षोडशवर्णात्मकत्वं च षोडशनित्याप्रकृतिभूतत्वान्मूलविद्यायाः । एतच्च 'चतुःषष्ट्या तन्त्रैः' इति 'शिवः शक्तिः कामः' इति च श्लोकद्वयव्याख्यानावसरे निपुणतरमुपपादयिष्यामः । किं चास्य मन्त्रस्य वेदमूलत्वं संज्ञानानुवाकेन (तै. ब्रा. ३. १०. १) 'इयं वाव सरघा' (तै. ब्रा. ३. १०. १०) इत्यनुवाकेन च प्रतिपाद्यत इति वक्ष्यते ॥

प्रकृतमनुसरामः—प्रणतजनसौभाग्यजननीं प्रकर्षेण नताः प्रणताः कायिकवाचिकमानसिकनमस्कारवन्तः जनाः भक्तलोकाः तेषां सौभाग्यस्य जननी प्रसवित्री, तां पुरा पूर्वं नारी कान्ता भूत्वा नारीरूपं धृत्वा पुररिपुं त्रिपुरान्तकं; अपिशब्दो जितेन्द्रियत्वं संभावयति, क्षोभं मनोविकारं अनयत् नयति स्म । 'गतिबुद्धि' इत्यादिसूत्रेण द्विकर्मकत्वम् । स्मरोऽपि मन्मथोऽपि । अपिशब्दः पूर्वोक्तविष्णुधर्मं समुच्चिनोति यथा विष्णुर्भवन्मन्त्रस्य ऋषिः एवं स्मरोऽपि । त्वां भवतीं नत्वा शरणमुपगम्य, श्रीचक्रं सम्यगभ्यर्च्य त्वन्मूलविद्यां सम्यगभ्यस्य त्वत्प्रभावापन्नसत्त्वः, रतिनयनलेह्येन, रतेः स्वपत्न्याः नयनाभ्यां लेह्येन लेहनार्हेण, रतिनयनैकदृश्येनेत्यर्थः । यद्वा, रतिर्नाम अतिसुन्दरी तस्याः नयनपेयेन इत्यतिसौन्दर्यं कामदेहस्येति । वपुषा देहेन । मुनीनां जितेन्द्रियाणाम् । अपिशब्दः संभावनायाम् । अन्तः अन्तरङ्गे चित्तवृत्तौ । प्रभवति समर्थः । हि प्रसिद्धौ । मोहाय शब्दादिविषयवाञ्छोत्पादनाय । महतां महात्मनाम् ॥

अत्रेत्थं पदयोजना—हे भगवति, प्रणतजनसौभाग्यजननीं त्वां हरिराराध्य पुरा नारी भूत्वा पुररिपुमपि क्षोभमनयत् । स्मरोऽपि त्वां नत्वा रतिनयनलेह्येन वपुषा महतां मुनीनामप्यन्तर्मोहाय प्रभवति हि ॥

पुरा किल नारायणः स्त्रीरूपधारी कनकस्वामिनं प्रलोभ्य अवधीत् । तादृशं स्त्रीरूपं शंभुना प्रार्थितः सन् तस्मै दर्शयित्वा तं व्यामोहयामासेति कथा अनुसंधेया । मन्मथोऽपि सकलमुनिमनःसंक्षोभं कुर्वाणः प्रवर्तते । एतच्च वामकेश्वरमहातन्त्रे चतुःशत्यां निरूपितम्—'एतामेव पुराऽऽराध्य विद्यां त्रैलोक्यमोहिनीम् । त्रैलोक्यं मोहयामास कामारिं भगवान्हरिः ॥ कामदेवोऽपि देवेशीं देवीं त्रिपुरसुन्दरीम् । समाराध्याभवल्लोके सर्वसौभाग्यसुन्दरः ॥' इति । अतश्च यत्र यत्र रतिमूलकं मनःसंक्षोभकरणं भवति, तद्भगवतीप्रसादलभ्यमिति वक्तुं कवेरयमारम्भः ॥ ५ ॥

## सौभाग्यवर्धनी

तर्हि मम प्रभावः कुत्र दृष्टः यद्दृष्टान्तेन मम स्तुतिरारब्धेत्यत आह—**हरिस्त्वामिति** । हरिः विष्णुस्त्वां प्रणतजनसौभाग्यजननीं समाराध्य पुरा अमृतमथनादनन्तरं द्रष्टुमागतं, येन रूपेण दानवा मोहिताः तव तद्रूपं दिदृक्षोऽहमिति पृष्टवन्तं मदनारिं नारायणीरूपं

प्रकटीकृत्य क्षोभमनयत्। मदनपरवशं कृतवानित्यर्थः। येन स्मर्तव्यतां प्रापितः स्मर इति नाम प्राप्तवान् सोऽपि पुनः रतिनयनलेह्येन वपुषा प्राप्तविग्रहेण महतामपि मुनीनां विश्वामित्रगौतमादीनां मोहाय प्रभवतीति प्रकटार्थः। गुप्तार्थस्तु—हरिस्त्वां हे प्रणतजनसौभाग्यजननि ईमिति तुरीयवर्णरूपामाराध्य अग्रे वक्ष्यमाणप्रकारेण भावयित्वा नारीरूपमासाद्य पुररिपुमपि क्षोभमनयत्। तव रूपमासाद्येत्यर्थः। यत्किंचित्प्राकृतनार्याः मदनारेः क्षोभकरणं न संभवति यत एतावता षट्कूटया विद्यया त्वामुपास्य अग्रे वक्ष्यमाणया कामकलया भावनया भावयित्वा तव सारूप्यं प्राप्य मदनारिं मोहितवानिति भावः। षट्कूटविद्या तु लोपामुद्रोपासितविद्यया नन्दिकेश्वरोपासितविद्यया च भवति। तदुक्तं ज्ञानार्णवे—'लोपामुद्रां पुनर्देवि विलिखेत्तदनन्तरम्। नन्दिकेश्वरविद्या च षट्कूटा वैष्णवी भवेत्॥' इति। लोपामुद्राविद्या अग्रे वक्ष्यते। नन्दिकेश्वरविद्या तु ज्ञानार्णवे—'कामराजाख्यविद्याया वाग्भवे मादनं त्यजेत्। चन्द्रं तत्रैव संयोज्य कामराजमतःपरम्॥ हित्वा चन्द्रं मुखे कुर्याद्विद्येयं नन्दिपूजिता॥' इति। विद्येयं स्पष्टीभविष्यत्यग्रे। लोपामुद्राविद्योद्धारेण कामराजविद्या चाग्रे वक्ष्यते। स्मरोऽपि अनेनैव विधिना कामराजविद्यामुपास्य महामुनीनां मोहको जात इति भावः। इति पञ्चमपद्यार्थः॥ ५॥

## अरुणामोदिनी

भगवतीचरणयोरतिमनोरथफलदातृत्वमेवाह—**हरिरिति**। हे देवि, हरिर्विष्णुरादिभक्तः पुरा पूर्वं प्रणतानां साष्टाङ्गं दण्डवत्पतनं कुर्वतां स्तोत्रादीनि शब्दापयतां च जनानाम्। पूजाजपादिकं विनाऽपि केवलनमस्कारोऽपि फलद इत्यभिप्रायः। उक्तं च मार्कण्डेयेन—'भक्त्या नताः स्म विदधातु शुभानि सा नः' इति। सौभाग्यं सुभगत्वं सौरूप्यसौशील्यादिकं जनयत्युत्पादयति ददातीति ताम्। पशुपुत्रवित्तार्तिदारिद्र्यनाशनादिविविधाभीष्टप्रदां, न त्वितरदेवतावत्संपीड्य भुञ्जानामित्यर्थः। उक्तं च मार्कण्डेयेन—'स्तुता संपूजिता पुष्पैर्धूपगन्धादिभिस्तथा। ददाति वित्तं पुत्रांश्च मतिं धर्मे तथा शुभाम्॥ सा चिन्तिता च विज्ञानं तुष्टा ऋद्धिं प्रयच्छति। आराधिता सैव नृणां भोगस्वर्गापवर्गदा॥ शरणागतदीनार्तपरित्राणपरायणा। सर्वस्यार्तिहरा देवी' इति। त्वां विद्यारूपिणीं चक्ररूपिणीं च भवतीम्, आराध्योपास्य। मन्त्रप्रथमखण्डप्रस्तारयोर्ऋषित्वादस्येति भावः। नारीभूत्वा मोहिनीरूपं धृत्वेत्यर्थः। पुररिपुं त्रिपुरान्तकं रुद्रमपि, अतिक्रोधितयाऽविज्ञातशृङ्गाररसतत्त्वमपीत्यर्थः। अथ वा रुद्रं नारीभूत्वा, अनरिररिर्भूत्वाऽरीभूत्वा, स न भूत्वा नारीभूत्वा सुहृद्भूत्वापि नित्यसहवासादिज्ञातस्वरूपोऽपि अविदितस्वरूप इव वनितादर्शनजन्यं चित्तविकारमनयत् प्रापयतिस्म। नयतिर्द्विकर्मकः। अत्राविदितशृङ्गाररसस्यापि तदुत्पादनोक्त्या विष्णोः सौन्दर्यातिशयः सूच्यते।

नन्वेकत्र कृतोऽनुग्रहो न सार्वत्रिकोऽनियतत्वादित्याशङ्कायामाह - **स्मरोऽपीति ।** आस्तां मूर्तिमद्देवताया विष्णोस्त्वदुपास्तिलब्धवैभवादेतादृशसामर्थ्यवत्ता, अपि तु स्मरः स्मृतिलब्धजन्मा अनङ्गतया प्रसिद्धो मदनोऽपि त्वां पूर्वोक्तरूपिणीं भवतीं, नत्वा नमस्कृत्य, रतेरतिसुन्दर्याः, स्वप्रियायाः "रतिः कामप्रियायां च" इति विश्वः । नयनाभ्यां लेह्येनास्वाद्येन,- अत्यादरदृश्येनेत्यतिसौन्दर्यवत्ता सूचिता । वपुषा देहेन, महतां मुनीनां जितेन्द्रियाणां मननशीलानां मनीषिणामपि, किमुतान्येषामित्यपेरर्थः । अन्तरन्तःकराणानां मोहाय मूर्च्छनायै, "मोहमिच्छन्ति मूर्च्छायाम्" इति विश्वः । प्रभवति । अलमर्थयोगोऽपि चतुर्थी । अतोऽत्र हरिस्मरयोस्त्रिपुरान्तकसकलमुनिमोहकातिसौन्दर्यसम्पत्तिसमवाप्तिर्भवत्प्रसादलब्धेति न भवत्पदपङ्कजादन्योऽभयवाञ्छिताधिकवरप्रदाता इत्यभिप्रायः । अत्रोक्तं **वामकेश्वरतन्त्रे**—

"एतामेव पुरा ध्यात्वा विद्यां त्रैलोक्यमोहिनीम् ।
त्रैलोक्यं मोहयामास कामारिं भगवान् हरिः ।
कामदेवोऽपि देवेशीं महात्रिपुरसुन्दरीम् ।
समाराध्याभवल्लोके सर्वसौभाग्यसुन्दरः ॥"—इति ॥ ५ ॥

## आनन्दगिरीया

प्रथमचक्रेश्वरीमुद्धरन्नाह - **हरिस्त्वामिति ।** तनीयांसं पांसुमित्यादौ शेषरूपेणाराधकत्वमुक्तम् । इदानीं श्रीकृष्णरूपेणाह - हरिः श्रीकृष्णः पुरा पूर्वं महादेवतपोभंगसमये त्वामाराध्य नारीभूत्वा स्मररिपुं महादेवमपि क्षोभमनयत् । तवाराधनमन्तरा नानाप्रकारैरपि महादेवतपोभङ्गः कृष्णस्यासाध्यमिति कृत्वा मनोवाक्कायकर्मभिः त्वामाराध्य आराधनाभ्यासेन त्वत्सायुज्यं मोहिनीरूपं प्राप्य दग्धमदनमपि महादेवं कामोल्लासलंपटं चकार । महादेवनयनानलदग्धोऽपि कामो भवद्दर्शनात् पुनरुद्दिदीपे । क्षोभं तपोभंगानुकूलं मनोवैराग्यमन्यत् । तादृशं निरतिशयसौन्दर्यं कथं प्राप्तमित्यत आह - किंलक्षणां त्वां - प्रणतजनसौभाग्यजननीं, प्रणतस्य लोकोत्तरसौभाग्यसंपत्प्रदात्रीमित्यर्थः । उपासना च श्रीकृष्णेन लोपामुद्रानन्दिकेश्वराभ्यां मिलिताभ्यां उत्पादितया षट्कूटया वैष्णव्या विद्यया अंकिता सैव मोहिनी भवतीति । अथवा हे प्रणतजनसौभाग्यजननि त्वां ई तुरीयवर्णरूपां सुन्दरीं आराध्येत्यग्रे पूर्ववत् । तर्हि परमेश्वरस्य सर्वप्रकारेण समर्थस्य श्रीकृष्णस्य रूपसंपत्त्या तपोभंगजनने को हेतुरिति चेत्, मद्भर्तरि श्रीसदाशिवरूपे श्रीमहादेवे पौरुषेण कोऽपि किमपि कर्तुं न शक्नोतीति, परमेश्वरी निगर्ध एवेत्यवेहि । तदुक्तमस्माभिरस्मत्कृते महिम्नः स्तोत्रे - "परित्यज्यात्मीयं हर मुररिपुः पौरुषमपि प्रसन्नं त्वां कर्तुं परमकमनी योषिदभवत् । ततः पूर्णः कामैरमितमहिमा तत्करुणया तपोभंगेऽपि त्वं त्रिपुरदहनासि व्यवसितः" । इति । अपरे तु कीदृशेन

रूपेण त्वया दैत्या मोहिता इति महादेवेन पृष्टः श्रीकृष्णो महादेवदर्शनाय मोहिनीरूपमादद इत्याहुः। किञ्च यस्याः प्रसादितपरमसामर्थ्येन श्रीकृष्णेन परमकमनीयतमं मोहिनीरूपं दधता मामुज्जीवयित्वा मद्रिपुरपि श्रीमहादेवो मद्बाणगोचरीकृत्य तपस्त्याजितः। अहमपि तामेव ध्यायामीति विचार्य स्मरः कन्दर्पस्त्वां सकृदपि नत्वापि साभिलाषान्तःकरणो रतिकटाक्षचुम्बितेन वपुषा मुनीनामपि मोहाय प्रभवति।

अत्र पञ्चमश्लोकस्य रहस्यव्याख्येयं - हरिः अकारः, त्वां आं, आराध्य, प्रणतजनसौभाग्यजननीं परा, पुरा पूर्वं नारी भूत्वा बिन्दुत्रयं ज्ञात्वा, अर्थात् हरिः क्षोभकः प्रथमचक्रेश्वरीरूपां ध्यात्वा, स्मरस्तथा रतिनयनलेह्येन वपुषा रतिः अं नयनत्रयं तेन च बिन्दुचतुष्टयलेह्येन वपुषा स्वरूपेण, इयमपि एतावतापि केचित्। इति। प्रथमचक्रेश्वरी मन्त्रोद्धारः। त्रैलोक्यमोहनचक्रेश्वरी त्रिपुरामन्त्रः अं आं सौः॥

## तात्पर्यदीपिनी

ननु लोके बह्वयो देवता विष्णुमन्मथप्रधाना दृश्यन्ते। ताभ्य एव वाञ्छितप्राप्तिः कर्तव्या। किं दूरस्थितया अतिदुःखेनोपास्यमानया भगवत्या, इत्याशंकायां विष्ण्वादिदेवतानामपि भगवतीपूजामन्तरेण न समीहितसिद्धिरित्याह **हरिस्त्वामिति**— हे परमेश्वरि, हरिः विष्णुः, पुरा पूर्वस्मिन्काले, नारीभूत्वा स्त्रीवेषं गृहीत्वा, पुररिपुमपि महादेवमपि, क्षोभं चित्तप्लावनं अनयत् नीतवान्। प्रणतजनसौभाग्यजननीं प्रणता ये जनास्तेषां सौभाग्यं जनयतीति तथोक्तां तां भक्तजनसुभगत्वदात्रीं, त्वां भवतीं, आराध्य पूजयित्वा। त्वं भक्तजनपराधीनासि यतः, स्वनाथस्यापि वञ्चनार्थमुद्यता तद्वञ्चनसामर्थ्यं वितरय्य भक्तानुग्रहः संपादित इति रहस्यम्। तथैव स्मरोऽपि रतिनयनलेह्येन रत्याः कामपत्न्याः, नयने नेत्रे, ताभ्यां लेह्यं पेयं, तेन अतिमनोहरेण, वपुषा शरीरेण, महतामपि मुनीनां मननशीलानां वसिष्ठविश्वामित्रादीनां, अन्तः चित्ते, मोहाय वनितामुखपंकजावलोकनजनितचित्तविक्षेपाय, हि निश्चयं, प्रभवति समर्थो भवति। किं कृत्वा। त्वां नत्वा नतिमात्रं विधाय। तदुक्तं चतुःशत्यां—"एवमेव पुरा ध्यात्वा विष्णुस्त्रैलोक्यमोहिनीम्। त्रैलोक्यं मोहयामास कामारिं भगवान् हरिः। कामदेवोऽपि देवेशि महात्रिपुरसुन्दरीम्। समाराध्याभवल्लोके सर्वसौभाग्यसुन्दरः" इति। अतश्च यत्र यत्र रतिमूलकं मनःसंक्षोभकरणं, तत् भगवतीप्रसादलभ्यमिति वक्तुं कवेरयमारम्भः। अतः सकलदेवतामूलभूतां त्वां विसृज्य, इतरदैवतेषु कथं प्रसज्जन्ति सन्त इत्यर्थः।

## पदार्थचन्द्रिका

एवं तावत्तत्कर्मफलदातृत्वमन्तर्यामिरूपेण भवान्या अभिधायेदानीं तत्तन्मोहकत्वं हरिस्मरयोः श्रीभवान्यधीनमेवेति भवानीं स्तौति—**हरिरिति** प्रणतजनसौभाग्यजननीं भक्तजन

सौन्दर्यहेतुभूतां, अथवा प्रणतजनानां सौभाग्याय जननीं मातरमिव। पुत्राणां च सौन्दर्यं मात्रधीनमेवेति प्रसिद्धमेव। पुरा अमृतनिमित्तं देवदैत्यकलहानन्तरं श्रीभगवतो महादेवस्य मोहिनीरूप-दिदृक्षासमये नारीभूत्वा मोहिनीरूपं कृत्वा स्मररिपुमपि क्षोभं मोहमनयत्। अनेन जगन्मोहनकन्दर्प-नाशकस्य श्रीमहादेवस्येतरामोह्यत्वमुक्तम्। स्मरोऽपि महतां मुनीनां च वसिष्ठपराशरप्रभृतीनामपि अन्तः प्रभवति मनसि प्रभुत्वेन वर्तते। तानपि मोहयतीत्यर्थः। तत्र हेतुस्त्वां नत्वेति। स्मरः कीदृग्विधः? रतिनयनलेह्येन वपुषोपलक्षितः। रतिः कामपत्नी तस्या नयनयोः लेह्येन सादरावलोकन-विषयेणेत्यर्थः। अथवा रतिः स्त्र्यादिदर्शनजन्यं सुखं, तद्युक्ते नयने ताभ्यां लेह्यं सादरं दृश्यं स्त्रीशरीरं, तेन कारणेन सुन्दरं रूपादिवपुर्दृष्ट्वा सर्वोऽपि लोको मुह्यतीति जगत्सुप्रसिद्धमेव।

## डिण्डिमभाष्यम्

ननु लोके बह्व्यो देवता दृश्यन्ते विष्णुमन्मथप्रधानास्ताभ्य एव वाञ्छितप्राप्तिः, किं दूरस्थितया अतिदुःखेनोपास्यया भगवत्या इत्याशङ्क्य विष्ण्वादिदेवतानामादिभगवतीपूजामन्तरेण न समीहितसिद्धिरित्याह - **हरिरित्यादि।**

हे भगवति! प्रणतजनसौभाग्यजननीं भक्तजनसुभगत्वदात्रीं, त्वामाराध्य भगवतीं पूजयित्वा, पुरा पूर्वस्मिन्काले नारी भूत्वा स्त्रीवेषं गृहीत्वा, हरिः श्रीकृष्णः, पुररिपुमपि महादेवमपि, क्षोभमनयत् चित्तविप्लवं नीतवान्। स्मरोऽपि कामदेवोऽपि, त्वां नत्वा भवतीं नमस्कृत्य, रतिनयनलेह्येन स्वकलत्र-भूतरतिदेवतालोचनास्वाद्येन, वपुषा, महतां मुनीनामपि विश्वामित्रवसिष्ठादीनामपि अन्तः चित्ते, मोहाय वनितामुखपङ्कजावलोकनजनितविक्षेपाय प्रभवति। यतो विष्णुमन्मथादिदेवता अपि त्वत्सका-शादेव प्राप्तमाहात्म्याः कार्यकारिण्यः अतः सकलदेवतामाहात्म्यमूलभूतां त्वां विसृज्य परदैवतेषु कथं प्रसज्यन्ते सन्तः? त्वदन्यदेवतोपासनाफलं त्वत्स्वरूपनिरूपणावसानमेव तच्च साक्षादुपासितया भवत्यैव साधनीयम् त्वदुपासकदेवतान्तरोपासनासाध्यत्वं तु शिरोवेष्टनेन नासिकास्पर्शनवत् निरर्थक-मित्यर्थः॥

## गोपालसुन्दरी

मम प्रभावः कुत्र दृष्ट इत्यत आह - **हरिरिति।** पुरा अमृतमथनानन्तरं हरिर्विष्णुः, त्वां प्रणतजनसौभाग्यजननीं आराध्य, नारीभूत्वा मोहिनीरूपं विधाय, स्मरहरमपि क्षोभं मदनाधीनत्वमनयत्, येन स्मरोऽपि भस्मीकृतस्तस्य मदनाधीनत्वं तव प्रसादेनैव, अन्यथाऽसम्भावितमे-वेति भावः। यद्वा हे प्रणतजनसौभाग्यजननि! ईं ईकाररूपां त्वामाराध्य इत्यन्वयः, स्मरोऽप्यनेनैव प्रकारेण त्वां नत्वा वपुषा शरीरेण महतां मुनीनामन्तर्मोहाय प्रभवति इत्यन्वयः। वपुषा कीदृशेन

रतिनयनलेह्येन, रतिः कामस्त्री तन्नयनाभ्यामास्वादनीयेन अतिसुन्दरेण इत्यर्थः । तदुक्तं वामकेश्वर-तन्त्रे—"एतामेव पुरा ध्यात्वा विद्यां त्रैलोक्यमोहिनीम् । त्रैलोक्यं मोहयामास कामारिं भगवान् हरिः ॥ कामदेवोऽपि देवेशि महात्रिपुरसुन्दरीम् । समाराध्याभवल्लोके सर्वसौभाग्यसुन्दरः ।" इति ॥ तैत्तिरीयश्रुतिरपि - "जनको ह वै वैदेहः अहोरात्रैः समाजगामेति ।" जनक एतद्विद्या-प्रवर्तको विदेहः कामः अहोरात्रैरहोरात्रात्मकैः पञ्चदशाक्षरीमन्त्रवर्णैः दर्शपूर्णिमान्तकलात्मकैः समाजगाम तं मन्त्रमाहृतवानिति तदर्थः ।

**विष्णुपक्षे**—हरिः इन्द्रः गौतमशापानन्तरं त्वामाराध्य नारीभूत्वा, प्रणतजनसौभाग्यजननीं गौरीं तथा स्मरहरमपि क्षोभं विस्मयमनयत्, प्रापयामासेत्यर्थः ; शेषं समानम् ॥

## आनन्दलहरी-टीका

त्वदाराधनस्य अत्यन्तासंभावितफलजनकत्वं दृष्टमेवेत्याह - **हरिरिति** - प्रणतजनानां भक्तानां सौभाग्यजननीं ऐश्वर्यकारिणीम् । यद्वा - हे प्रणतजनसौभाग्यजननि ! ईं कामकलारूपां त्वां, आराध्य संसेव्य, पुरा अमृतमथनकाले, हरिः नारीभूत्वा मोहिनीरूपं विधाय स्मरहरं शिवमपि क्षोभमनयत्, स्मराधीनतां प्रापितवानित्यर्थः । येन स्मरो दग्धः, सोऽपि स्मराधीनो बभूवेत्यसंभावितम् । स्मरः कामोऽपि त्वां नत्वा रतेर्नयनलेह्येन वपुषाऽऽविष्टः सन्, महतां मुनीनामपि, अन्तर्मनसि, मोहाय विकाराय प्रभवति समर्थो भवतीत्यर्थः । तदुक्तं वामकेश्वरतन्त्रे, "एतामेव पुरा ध्यात्वा विद्यां त्रैलोक्यमोहिनीम् । त्रैलोक्ये मोहयामास कामारिं भगवान् हरिः ॥ कामदेवोऽपि देवेशि महात्रिपुरसुन्दरीम् । समाराध्याभवल्लोके सर्वसौभाग्यसुन्दर" इति ॥

**धनुः पौष्पं मौर्वी मधुकरमयी पञ्च विशिखाः**
**वसन्तः सामन्तो मलयमरुदायोधनरथः ।**
**तथाप्येकः सर्वं हिमगिरिसुते कामपि कृपां**
**अपांगात्ते लब्ध्वा जगदिद-मनङ्गो विजयते ॥ ६ ॥**

தனு: பௌஷ்பம் மௌர்வீ மதுகரமயீ பஞ்ச விசிகா:
4 1 1 4 1 1 2
வஸந்த: ஸாமந்தோ மலய மருதா யோதனரத:;
1 1 3 4 2
ததா ப்யேக: ஸர்வம் ஹிமகிரிஸுதே காமபி க்ருபாம்
1 2 1 3 1 1 1 1
அபாங்காத்தே லப்த்வா ஜகதிதமனங்கோ விஜயதே.
1 3 1 3 4 3 3 3 3 1

सुममय धनुष, मधुपगण ज्या है, पांच प्रसून विशिख जिस के,
ऋतु सामंत वसंत, तथा मलय पवन चंचल, रथ जिस के।
वह अनंग असहाय अकेला रह कर भी हिमगिरितनये!
पा तव करूणापांग जीत बैठा है अगजग, दयामये!

## लक्ष्मीधरा

यद्यपि पूर्वस्मिन् श्लोके भगवतीप्रसादासादितं मन्मथस्य प्रागल्भ्यमुक्तम्, तथाऽपि मन्मथस्य अनङ्गविद्यायां मन्मथप्रस्तारस्य ऋषित्वात् तदायत्तमतिप्रागल्भ्यमाह—**धनुरिति।** अत्र पद्ये यत्तदोरध्याहारः। उभयाध्याहारः सकलकविसमयसिद्धः। रघुवंशे 'वागर्थाविव संपृक्तौ' इत्यत्र यौ संपृक्तौ तौ वन्दे इति। तथा 'ये नाम केचिदिह नः प्रथयन्त्यवज्ञाम्' इत्यादौ य उत्पत्स्यते तं प्रत्येष यत्न इति। धनुः आयोधनसाधनं चापः पौष्पं पुष्पमयम्। पुष्पाणामतिमृदुलत्वात् स्पर्शासहत्वात् नमनाकर्षणादिचापकार्यानर्हत्वमिति तात्पर्यम्। मौर्वी शिञ्जिनी मधुकरमयी मधुकरैः भ्रमरैः प्रचुरा, भ्रमरपङ्क्तिनिर्मितेत्यर्थः। परस्परासंबद्धानां शिञ्जिनीत्वं न संगच्छत इति तात्पर्यम्। पञ्च पञ्चसंख्यासंख्येयाः विशिखाः बाणाः। पञ्चानां विक्षेपणे तूष्णींभाव एव शरणमिति तात्पर्यम्। किं च, 'पञ्च विशिखाः' इत्यनेन तद्विशिखानां प्रसूनात्मकत्वप्रसिद्धेः विशिखकार्यकारित्वाभाव इति तात्पर्यम्। वसन्तः कालविशेषः, 'वसन्तौ मधुमाधवौ' इत्यभिधानात्। सामन्तः सचिवः। तस्य कालात्मकत्वात् साचिव्यकारित्वं न संगच्छत इति तात्पर्यम्। मलयमरुत् दक्षिणानिलः आयोधनरथः आयोधनस्य युद्धस्य साधनं स्यन्दनः। मलयमरुतो मलये स्थितत्वात् न सार्वत्रिकत्वम्, सार्वत्रिकत्वेऽपि न सर्वदा सद्भावः, सर्वदा सद्भावेऽपि नीरूपत्वाद्रथकार्यकारित्वाभावः इति तात्पर्यम्। तथाऽपि उक्तप्रकारे सार्वजनीने सिद्धेऽपि एकः असहायशूरः सर्वं सकलं प्रपञ्चम्। हिमगिरिसुते, हिमप्रधानो गिरिः हिमगिरिः, शाकपार्थिवादित्वात्साधुः, तस्य सुता नन्दिनी, तस्याः संबुद्धिः। कां अनिर्वाच्याम्। अपिशब्दः संभावनायाम्। कृपां अनुकम्पाम्। अपाङ्गात् कटाक्षात् ते तव लब्ध्वा प्राप्य। जगत् जङ्गमात्मकं लोकम्, स्थावरात्मकस्याप्रसक्तेः। इदं परिदृश्यमानम्। अनङ्गः अङ्गरहितः। अत्र साधकस्यापि दौर्बल्यं सूचितम्। हस्ताभावादेव चापाकर्षणशरसंधाने अप्यसंभाविते। पादाभावाच्च रथादौ स्थितिरप्यसंभाविता। वक्त्रनयनाद्यभावात् वयस्येन मधुना सार्धं संभाषणसंनिरीक्षणसहासनादयः असंभाव्या इति तात्पर्यम्। विजयते, 'विपराभ्यां जेः' इत्यात्मनेपदम्॥

अत्रेत्थं पदयोजना—हे हिमगिरिसुते, यस्य अनङ्गस्य धनुः पौष्पम्, मौर्वी मधुकरमयी, विशिखाः पञ्च, सामन्तो वसन्तः, आयोधनरथः मलयमरुत्, तथाऽपि सोऽनङ्गः एकः ते

अपाङ्गात् कामपि कृपां लब्ध्वा सर्वमिदं जगत् विजयते। अत्र विभावनालंकारः, विजयसाधनाभावेऽपि विजयोत्पत्तेः। 'कारणेन विना कार्योत्पत्तिर्विभावना' इति लक्षणम् ॥ ६ ॥

## सौभाग्यवर्धनी

भवतु हरिर्मत्सारूप्यमासाद्य पुररिपोः क्षोभकरः। मदनो रावणादिवत्करालदर्शनः सन् मुनीनां मोहकः कुतो न स्यादित्यत आह—**धनुरिति।** पुष्पमयं धनुः सुकुमारतरं न वज्रसारायमाणम्। ज्या चञ्चलतरचञ्चरीकमयी; पञ्च विशिखाः, नाधिकाः, तेऽपि पौष्पाः; सहायो वसन्तः कादाचित्कः समयः। स्मररथः मलयानिलः मन्दगमनः। तथाऽपि एतत्सर्वं जगत्स्वयमनङ्गः, हे हिमगिरिसुते दयारसशीतले विजयते। तवापाङ्गात् कामपि कृपां विशिष्य निर्वक्तुमशक्यां लब्ध्वा विजयते। एतावता रावणादिवन्न क्रूरदर्शनः, अतिसौम्यदर्शनः, आयुधादयोऽप्येतादृशाः, तथाऽपि जगद्विजयते इति यत् तद्भवत्याः कृपाकटाक्षमहिम्नेति भावः ॥ ६ ॥

## अरुणामोदिनी

पूजाजपादिमहिमप्रकटनपूर्वकं भगवत्या भक्तवात्सल्यातिशयं द्योतयन्नाह—**धनुरिति।** हिमप्रधानो गिरिर्हिमगिरिर्हिमवान्, तस्य सुता, तस्याः संबुद्धिर्हे हिमगिरिसुते, भक्तवात्सल्यप्रकटनार्थैव दक्षगृहं विहाय हिमवद्गृहेऽवतीर्णे देवि, शीतलहिमवत्पुत्रिकाया भगवत्या भक्तजनदयापरत्वं नाद्भुत मित्यभिप्रायः। पूर्वश्लोकोपात्तस्यानङ्गस्य धनुः विजयप्रधानसाधनं चापः, पौष्पं पुष्पविकारः, तन्निर्मितम्, पुष्पधन्वेति प्रसिद्धेः। अस्ति हि मदनस्य प्रथमं विजयसाधनम्। दाढर्यविचारे सति ध्वनतीति धनुरिति व्युत्पत्तिलिङ्गाभ्यां, तत्रापि सान्ततया कोलाहलीकरणदौर्बल्यविनाशनशीलताः सूचिताः; एकवचनेन धनुरन्तराभावः सूचितः। तदपि पुष्पविनिर्मितमित्यनेन पुष्प्यति विकसतीति पुष्पमिति व्युत्पत्त्या तत्कारणके चापेऽपि कादाचित्कविकसनविनश्यत्तामार्दवदृढकार्याशक्तताः सूचिताः। अपि च, नमनाकर्षणादितत्कार्यानर्हत्वं च सूचितम्। विजयप्रधानसाधनं च धनुर्ध्वननस्वभावं तदप्येकं तदपि पुष्पनिर्मितमित्यन्ते, विजयानुपयुक्ततयाऽतिफल्गुतैव प्रतिभातीत्यर्थः। तथा मौर्वी ज्याऽपि, धनुर्विचार आस्ताम्, तदधिष्ठितो गुणोऽपीत्यर्थः। मधुकरमयी मधुव्रतविकारः। विकारार्थे मयट्। 'टिड्ढाणञ्' इत्यादिना ङीप्। मूर्वाया इयमिति व्युत्पत्त्या सिरामयत्वस्त्रीत्वाभ्यामतिकर्कशत्वं क्षणवैराग्यादाकर्षणाधिक्ये त्रुटनशीलत्वं प्रकृतकार्यानुपयोगित्वं च सूच्यते। साऽपि मधुकरमयीत्यनेन मधुविधानभिक्षाशनव्यग्रनिःस्नेहदेहस्वभावतया ज्यारूपेण स्थित्ययोग्यता सूच्यते। परस्परासंश्लिष्टानां व्यग्रचित्तानां बहूनां भिक्षाभुजां तद्रूपावस्थानानर्हत्वादित्यभिप्रायः। आस्तामेतत्, तथा विशिखा बाणाश्चारविन्दादयः पञ्च, पञ्चसंख्यापरिमिताः। विगताः शिखा येषामिति व्युत्पत्त्या कुण्ठितधारत्वं प्रतीयते। लिङ्गात्सामर्थ्यसूचनेऽपि पञ्चेत्यनेन परिमितबाणविनियोगे

जातेऽनन्तरं तूष्णींभावात्पराजयावाप्तिः पञ्चत्वावाप्तिस्वभावता च सूच्यते। बाणाश्च विशिखास्तेऽपि पञ्चेतीदमप्यतिनिःसारमेवेत्यर्थः। न हि मरिष्यद्भिरसमर्थैः परिमितैः कार्यं साध्यत इति धनुर्मौर्वीशराणां सर्वेषामपि विजयानुपयोगित्वं सूचितम्। आस्तां तावद्धनुरादिचिन्ता, सत्सहाये लब्धे किमलभ्यमस्तीत्याशङ्कायामाह—वसन्तः कालविशेषः सामन्तः सहायः, लिङ्गदाढर्यात्सामर्थ्यसूचनेऽपि तस्य कालरूपत्वेनाचेतनत्वात्कादाचित्कत्वाच्च शत्रुवाचकसामन्तपदवाच्यत्वाच्च स्वसमयपर्यन्तावस्थातृत्वमसमयपरित्यक्तृत्वं युद्धानुपयुक्तत्वं च सूच्यते। आ समन्ताद्योधनमायोधनमित्यनेन सारथ्यभावः सूचितः। अत्र रथो युद्धे तृतीयसाधनं स्यन्दनः, मलयमरुन्मलयानिलः। अत्र मलयानिलस्य कादाचित्कत्वान्मलयाद्रावेव वर्तमानत्वाद्वा, म्रियतेऽनेनेति व्युत्पत्त्या मारकस्वभावत्वाच्च न रथीभवनयोग्यतेति व्यज्यते। स चायोधनरथ इत्यनेन 'रथ गतौ' इत्यनुशासनाद्रथेर्गत्यर्थकत्वादसमये पलायनशीलता सूच्यते। सोऽपि मलयजन्यः, सोऽपि दूरवर्ती, सोऽपि मारकस्वभाव इति सर्वमप्यतिजर्जरमित्यभिप्रायः। लोके वीरभटा धनुरादिदृढसाधनाः सन्त एव जयं प्राप्ता दृश्यन्ते। मदनस्य तु जगद्विजयोद्यतस्य न किंचिदपि दृढं साधनं प्रतीयत इति समुदायार्थः। तथाऽपि, यद्यप्येवमतिमृदुलसाधनस्तथाऽपीत्यर्थः। अनङ्गो मदनः, न विद्यतेऽङ्गं शरीरमस्येति व्युत्पत्त्या हरललाटनेत्रनिर्दग्धाङ्गत्वाद्धस्तपादाद्यवयवसंघातरूपदेहराहित्येन साधकस्य वीरस्याप्यस्य च धनुरादीनामिव शरसंधानधनुराकर्षणरथावस्थानसचिवसंलापादयो न सन्तीति सूचितम्। स च, एकः असहाय एव मन्, ते तृणमपि मेरूकुर्वत्या भवत्या अपाङ्गात्कटाक्षात्, सनामतयाऽनङ्गे प्रीत्यतिशयोऽनेन सूच्यते। कामप्यनिर्वचनीयां कृपां परदुःखप्रहाणेच्छालक्षणां दयां लब्ध्वा प्राप्य, शिवनिर्दग्धशरीरस्य स्वस्योत्पत्तिं सामर्थ्यातिशयं चावाप्येत्यर्थः। शिवललाटाक्षिदाहितस्य मदनस्य देवीकटाक्षात्पुनरुत्पन्नत्वादित्यभिप्रायः। तदुक्तम् - कामोऽक्षितो यतो जातस्तस्याः कामेशयोषितः। कामाक्षीति ततः ख्यातिं सा गता काञ्चिकापुरे॥' इति। उक्तं चाम्बास्तवे—'दग्धं यदा मदनमेकमनेकधा ते मुग्धे कटाक्षविधिरङ्कुरयांचकार। धत्ते तदाप्रभृति देवि ललाटनेत्रं नित्यं ह्रियैव मुकुलीकृतमिन्दुमौलिः॥' इति। सर्वं समस्तमिदं परिदृश्यमानं जगद्विजयते, जित्वा चेदं सर्वोत्कर्षेण वर्तत इत्यर्थः। अतस्तृणस्यापि मेरूकरणे, मूकस्यापि मुखरीकरणे, पङ्गोरपि पर्वतप्लवनीकरणे च शक्ताया भवत्याः प्रसादादलभ्यं किमिवास्तीत्यभिप्रायः। उक्तं च मदनेन—'अपि यदि विशिखाः शरासनं वा कुसुममयं ससुरासुरं तथाऽपि। जगदिदमखिलं वरोरु नाज्ञामिदमतिलङ्घ्य धृतिं मुहूर्तमेति॥' इति। अत्र धनुः पौष्पमित्यादीनि अनङ्गविशेषणानि तस्यातिलघुत्वसूचनद्वारा भगवतीकृपावाप्तिरूपस्य वाच्यस्य सिद्धिं कुर्वन्तीति वाच्यसिद्ध्यङ्गं नाम गुणीभूतव्यङ्ग्यम्॥ ६॥

## आनन्दगिरीया

ननु मदनः स्वकीययोत्कृष्टया साधनसंपत्त्यैव मुनीन् जितवान् भवेदित्याशंक्य, अतितुच्छ-साधनो मदनः परमेश्वर्याः कृपापांगमहिम्नैव मुनीन् जितवानिति, कियत् जगदपि जिगायेति च साधनसंपदं दर्शयति **धनुरिति**। यद्यपि कामस्य साधनसंपत्तिः जगज्जयक्षमा नास्ति, तथापि कामो जगत् जिगाय। साधनाभावं वर्णयति - धनुः पौष्पं शिरीषकुसुमसुकुमारं करतलाक्षमम्। मौर्वी मधुकरमयी कुसुमपरिमलश्रेणीरूपा, म्लानकुसुमे परिमलाभावेन स्वयमेव त्रुटयति। विशिखा बाणाः पञ्च नाधिकाः। सामन्तोऽनुसर्तव्यो बलवान् राजा वसन्तः, ऋतुदिनेषु गच्छत्सु प्रत्यहमपचीय-मानतया दुर्बलः। आयोधनरथो मलयानिलः, निरङ्कुशः अनियतगतिः तिर्यग्गमनशीलतया रणाङ्गणे नाभिमुखगतिः। तर्हि कथं कामो जयतीत्यत आह - किं कृत्वा, हिमगिरिसुते, कामपि कृपां लोकोत्तरां कृपामातन्वानं नयनोपान्तपातं सर्वार्थसाधकशिरोमणिरूपं प्राप्य। आश्चर्यमिदं, यदेकोऽसहायोऽतनुः निःस्वरूपस्तथापि तवापाङ्गमहिम्नैव तादृगिति। रहस्यार्थः, सर्वाशापूरकचक्रेश्वरीं त्रिपुरेशीं बालामाह - धनुराकारशब्देन वाचकत्वेनापि धनुराकारतया विशिष्टा शिखा धारणशिखा अं, वसन्तः सहित स अन्तः, स् औः सामन्तयुक्तः। मलयेति नादबिन्दुवलितः। यद्यप्येवमेकोऽपि किञ्चानंगोऽपि तथाप्य-निर्वचनीयां बालां लब्ध्वा द्वितीयचक्रस्थाने तया अत्र प्रेरित इत्यलम्। त्रिपुरेशी द्वितीयचक्रेश्वरी बाला–ऐं क्लीं सौः ॥ ६ ॥

## तात्पर्यदीपिनी

अन्यदेवतोपासनया संपन्नमहिमानः पुरुषा जगज्जिगीषवो भवन्ति। त्वामुपास्य प्रचुरतर-माहात्म्यपूरितयत्किञ्चित्साधना अपि जगज्जिगीषवो भवन्तीत्याह - **धनुः पौष्पमिति** - हे हिमगिरिसुते, हिमप्रधानो गिरिः तस्य सुता कन्या, तत्संबुद्धिः। अनंगः न विद्यते अंगं शरीरं यस्य स तथोक्तः, स्वयं शरीरशून्यः। तथा एकः असहायः शूरः, इदं परिदृश्यमानं जगत्सकलं प्रपञ्चं, विजयते वशीकरोति। अदृश्यमानेन दृश्यमानस्य पराजयो विधीयत इत्यर्थः। एवं तर्हि अनंगस्य धनुर्बलं भविष्यति? नेत्याह। धनुः चापं, पौष्पं पुष्पात्मकं, तेन कार्यकरणसामर्थ्यं न भवति, मृदुलत्वात् स्पर्शासहत्वाच्च। तथा मौर्वी प्रत्यञ्चा सापि मधुकरमयी। अत्र प्राचुर्यार्थे मयट्। मधुकरैः प्रचुरा, प्रचुरभ्रमरपंक्त्या निर्मितेत्यर्थः। न हि तेषां चपलस्वभावानामेकत्र स्थितिः, यथा सायकसन्धानं भवेत्। परस्परासंबद्धानां शिञ्जिनीत्वं न संगच्छतीति तात्पर्यार्थः। तथा विशिखा बाणाः पञ्च पञ्चसंख्याः बाणाः संख्येयाः। पञ्चानां विक्षेपे तूष्णीं भाव एव। एषां प्रसूनात्मकत्वप्रसिद्धेः शरकार्यकारि-त्वाभाव इति तात्पर्यम्। तर्हि मन्त्रबलं भविष्यति? नेत्याह—सामन्तः सचिवो, वसन्तो मधुः, तस्य कालात्मकत्वात्, कुसुमोद्भेदकोकिलरवानुमेयत्वेन च साचिव्यकारित्वं न संगच्छत

इत्यर्थः । तर्हि रथबलं भविष्यति ? नेत्याह । मलयमरुत् दक्षिणानिलः, आयोधनरथः आयोधनस्य युद्धस्य साधनं स्यन्दनः । मलयमरुतो मलयस्थितत्वान्न सार्वविषयकत्वं, तत्त्वे वा न सर्वदा सद्भावः, तथात्वेऽपि नीरूपत्वात् रथकार्यकारित्वाभावः । एवं यद्यपि सर्वदुर्बलोऽपि जगज्जयति । किं कृत्वा, ते तव, अपाङ्गात् कटाक्षात् प्रसरन्तीं, कामपि अनिर्वचनीयां कृपां दयां, लब्ध्वा प्राप्य । तवानेन कृपापूरितापांगावीक्षितेन किं किं न भवतीत्यर्थः । पतितः कृपणो मूकोऽपि भवत्याः कृपावलोकनेन पूज्यः सुभगः सर्वज्ञश्च भवति ॥ ६ ॥

## पदार्थचन्द्रिका

पूर्वोक्तमेव विवृण्वन् स्तौति - **धनुरिति**—हे हिमगिरिसुते, यद्यपि तादृक् सहायसंपत्तिर्नास्ति, तथापि ते तव कामपि निरुपमां कृपां, अपांगात् नेत्रान्तात् अपांगद्वारा, लब्ध्वा प्राप्य, इदं प्रत्यक्षं सर्वमपि जगत् प्राणिजातं, अनंगो विजयत इत्यन्वयः । एकः केवलः । स्वत एव सामर्थ्यं चेत् किं सहायसंपत्त्या इत्यत उक्तं अनंग इति । कामस्य तादृक् सहायासंपत्तिमेव दर्शयति । धनुः पौष्पं, पुष्पमेव पौष्पं, स्वार्थे अण् । मौर्वी ज्या मधुकरमयी मधुकररूपा, ताद्रूप्ये मयट् । पञ्च विशिखाः पञ्चैवेत्यवधारणं द्रष्टव्यम् । वसन्तः सेनापतिः । मलयमरुदायोधनरथः सांग्रामिको रथः । अत्र पुष्पस्य मृदुत्वेन, मधुकराणां तरलत्वात् धनुषि सदाऽसत्वेन, विशिखानामल्पत्वेन वसन्तस्य सामन्तत्वेन अमूर्तत्वेन शौर्याद्यभावेन, मलयमरुतः कादाचित्कत्वेन कार्याक्षमत्वं द्रष्टव्यम् । विपरासां जैरिति सूत्रेणात्मनेपदं विजयत इत्यत्र । " अपांगस्त्वंगहीने स्यान्नेत्रान्ते तिलकेऽपि च " इति मेदिनीकारः ॥ ६ ॥

## डिण्डिमभाष्यम्

अन्यदेवतोपासनासम्पन्नमहिमानः पुरुषाः सुदृढसाधनाः सन्तो जगज्जिगीषवो भवन्ति भगवतीमुपास्य तु प्रचुरतरविचित्रमाहात्म्यपूरिता यत्किञ्चनसाधना अपि जगज्जिगीषवो जायन्ते इत्याह—**धनुरित्यादि** । अनङ्गः स्वयं शरीरशून्यः, तथाप्येकः, धनुस्तु पौष्पं-पुष्पमयं, मौर्वी-ज्या, मधुकरमयी-स्वेच्छासञ्चारचपलभ्रमररूपा, विशिखाः-पुष्पमयाः पञ्चैव, वसन्तो बहुतरकुसुममधुरः जटाकारोऽतिरूप्यः सामन्तः मित्रभूपतिः ; अतिचञ्चलो मलयमारुतः तावदायोधनरथः समरयानम् ; एवं दुर्बलसाधनोऽपि अयं मन्मथः, हे हिमगिरिसुते तुहिनशैलात्मजे ! कामप्यनिर्वाच्यां, अपाङ्गात्-कटाक्षात् प्रसरन्तीं, कृपां दयां, लब्ध्वा, जगदिदं भुवनमेतत् , विजयते वशीकरोति ॥ ६ ॥

## गोपालसुन्दरी

ननु पुरुषस्य नारीरूपग्रहणं नार्या वा पुरुषरूपग्रहणमाश्चर्यजनकमिति भवतु, तत्र मत्प्रसादोपयोगः कन्दर्पस्य तु मुनिमोहकत्वं स्वसामग्रीसम्पत्त्यैव भविष्यतीति, अत आह—**धनुः पौष्पम्**

इति । तथा च तदीया सामग्र्येव नेदृशीति भावः । धनुः पौष्पं पुष्पमयं सुकुमारं न वज्रोपममित्यर्थः । मौर्वी ज्या मधुकरमयी भ्रमरमयी मधुकराणामाकर्षणादिकालेऽस्थैर्यमनेन द्योत्यते । विशिखा बाणाः पञ्चैव न त्वधिकाः, वसन्तः ऋतुः कादाचित्कः सामन्तः सहायः, मलयमरुत् दक्षिणानिलो मन्दगमनः आयोधनरथः युद्धसाधनो रथः स्वयमप्येकः द्वितीयचेतनसहायरहितः अनङ्गः शरीरेणापि शून्यः, तथापि हे गिरिसुते! ते तव अपाङ्गात् नेत्रप्रान्तात् कामपि अनिर्वचनीयां कृपां लब्ध्वा सर्वं न तु यत्किञ्चित् जगत् संसारवर्तिप्राणिसमूहं विजयते इत्यर्थः ।

**विष्णुपक्षे**—कृपां कीदृशीं हिगगिरिसुते काम् हिमगिरिसुता इकः कामो वाञ्छा, यत्र इः कामः कः स्वार्थे यादृशीं भगवत्कृपामासाद्य कामो जगद्वशीकरोति, तादृशकृपाविषयो यद्यहं स्यां तदाहमपि कान्तं वशीकुर्यामित्याशयेन तादृशकृपाभिलाषो भगवत्या इत्याशयः । यद्वा हिमगिरिसुतायामिकः कामोऽर्थान्महेशस्य यतः महेशनिष्ठपार्वतीविषयकाभिलाषजननशक्तिः कामस्य भगवत्कृपात एवेति भावः ॥ ६ ॥

## आनन्दलहरी टीका

ननु स्मरस्य सुन्दरांगत्वान्मोहकत्वं च स्वभावत एवेति किमसंभावितमित्याकांक्षायामाह - **धनुरिति**—धनुः पौष्पं पुष्पभवं, न वंशादिनिर्मितम् । मौर्वी ज्या मधुकरमयी भ्रमरमयी नाकर्षणयोग्यरज्ज्वादिमयी । विशिखा बाणाः पंच न त्वधिकाः, तेऽपि कुसुममया न कठिनाः इति बोध्यम् । वसन्तो वर्षमध्ये मासद्वयं सन्निकृष्टः सामन्तोऽमात्यः अधीश्वरो वा । मलयस्य मरुदनिलो मन्दगतिरदृढः आयोधनस्य युद्धस्य रथः । स्वयमनंगः शरीररहितः तत्राप्येकः द्वितीययोधरहितः । एतादृश एवंबलसाधनोऽपि, ईदृशी सामग्री यद्यपि, तथापि हे हिमगिरिसुते, ते तव, अपांगात् नयनान्तात्, कामपि अनिर्वचनीयां कृपां लब्ध्वा प्राप्य इदं जगत् संसारिसंघं सर्वं निरवशेषं विजयते इत्यतीवासंभावितमिति भावः । सामन्तः स्यादधीश्वर इत्यमरः ॥ ६ ॥

**क्वणत्काञ्चीदामा करिकलभकुम्भस्तननता[1]**
**परिक्षीणा मध्ये परिणतशरच्चन्द्रवदना ।**
**धनुर्बाणान् पाशं सृणिमपि दधाना करतलैः**
**पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका ॥ ७ ॥**

க்வணத் காஞ்சீதாமா கரிகலப கும்பஸ்தனநதா
1 1 1 3 1 1 4 1 4 1 1

பரிக்ஷீணா மத்யே பரிணதசரச்சந்த்ர வதநா.
1 4 1 1 1 3 3

---

१. स्तनभरा.

தனுர்பாணன் பாசம் ஸ்ருணிமபி ததாந கரதலை:
4 3 1 3 4 1
புரஸ்தாதாஸ்தாம் ந: புரமதிதுராஹோ புருஷிகா.
1 1 3 1 1 2 1 1 1

सम्मुख हो प्रगट हमारे आहोपुरुषिका* त्रिपुरहर की,
शिंजन्मणिमेखलाकलित करिकलभकुंभस्तननत श्री की-
अमृतमूर्ति, क्षीण अवलग्ना परिणत शारदेन्दुवदना
धनुष बाणपाशांकुश धर कर हाथों में करुणासदना ॥

## लक्ष्मीधरा

सुधासिन्धोर्मध्ये इति उत्तरश्लोकोपयोगितया समयिनां चतुर्विधैक्यानुसन्धानमहिम्ना मणिपूरे भगवत्या यादृशं स्फुरति रूपं तादृशं प्रस्तौति । **क्वणत्काञ्चीदामेति** । क्वणत्काञ्चीदामा शिञ्जन्मणिमेखला, करिकलभकुम्भस्तननता - करिकलभकुम्भतुल्याभ्यां स्तनाभ्यां ईषन्नम्रमध्येत्यर्थः । परिक्षीणा - कृशा, मध्ये - अवलग्ने तनुमध्येत्यर्थः । परिणतशरच्चन्द्रवदना - परिणतः परिपूर्णकलः, शरदि शरत्काले, चन्द्रः इन्दुः तद्वद्वदनं यस्यास्सा; धनुरिक्षुचापं, बाणान् - पुष्पमयान्, पाशं दाम, सृणिं - अंकुशं, अपिशब्दः उक्तमेव समुच्चिनोति । दधाना - बिभ्रती, करतलैः - चतुर्भिः हस्ताम्बुजैः, पुरस्तात् - हृदयकमलमध्ये मणिपूरान्निर्गत्येतिशेषः, आस्तां - उपविशतु, नः - अस्माकं, पुरमथितुः - त्रिपुरान्तकस्य । यद्वा पुराणि त्रीणि वर्णानि त्रिपुराबीजानि मथ्नातीति, मथित्वा नवनीतं करोति । यस्मिन् रुद्रयामले, स रुद्रः पुरमथितेत्युच्यते । आहोपुरुषिका - आहोशब्दस्य आश्चर्यवाचित्वं, पुरुषशब्दस्य प्रत्यगात्मवाचिनः अहंशब्दवाच्यत्वं लक्ष्यते; अतः अहो अहंभावः - आहोपुरुषिका अहंकार इति यावत् । रुद्रस्याहंकाररूपित्वं भगवत्याः शिवश्शक्त्येत्यादिश्लोकव्याख्याने प्रपञ्चितम्, प्रपञ्चयिष्यते च ॥

अत्रेत्थं पदयोजना—क्वणत्काञ्चीदामा करिकलभकुम्भस्तननता मध्ये परिक्षीणा परिणतशरच्चन्द्रवदना धनुः बाणान् पाशं सृणिमपि करतलैः दधाना पुरमथितुराहोपुरुषिका नः पुरस्तादास्ताम् । अत्र यद्वक्तव्यं तत्तु 'तवाज्ञाचक्रस्थं' इत्यादिश्लोकषट्कव्याख्यानान्ते निपुणतरमुपपादयिष्यते । तत्तत एवावधार्यम् ॥ ७ ॥

## सौभाग्यवर्धनी

तर्हि मां कीदृशीं ध्यात्वा स्तौषीत्यत आह—**क्वणत्काञ्चीति** । क्वणत् काञ्चीदाम यस्याः सा क्वणत्काञ्चीदामा, डाबन्तः । करिशावककुम्भस्तनभरा । करिशब्दोऽत्रोपरञ्जकः;

---

* रुद्राहंकाररूपिणी भगवती

यथा—स्तनचूचुकमिति । कलभशब्देनैव करिशाबकस्य प्राप्तत्वात् । अथवा, करिषु कं प्रकाशं लभत इति करिकलभः करिवर इति यावत् । तस्य कुम्भौ तयोरिव स्तनभरौ यस्याः सा । परिक्षीणा मध्ये क्षाममध्या, राकाशशाङ्कानना, ऐक्षवं धनुः पुष्पमयबाणान् पाशं सुवर्णमयम्, सुवर्णमयमङ्कुशं च धारयन्ती । तदुक्तं मनोरमायाम्—'सौवर्णौ पाशाङ्कुशौ वामदक्षिणकरयोर्ध्येयौ' इति । अधस्तनकरयोर्वामदक्षिणक्रमेण धनुर्बाणा ध्येयाः । उपरितनयोः वामदक्षिणक्रमेण पाशाङ्कुशौ ध्येयौ । केषांचित्संप्रदाये शक्तीनां दक्षिणवामकरयोगेन पाशाङ्कुशौ ध्येयौ; अन्येषां च वामदक्षिणक्रमेणेति । पुरस्तादास्तां नः प्रत्यक्षा भवतु । प्रार्थनायां लोट् । पुरमथितुराहोपुरुषिका, अहोपुरुषशब्दाद्वुञि कृते शब्दोऽयं सिद्धः । दर्पातिशयसंभावना; 'आहोपुरुषिका दर्पाद्या स्यात्संभावनाऽऽत्मनि' इत्यमरः । त्रिपुरं दिधक्षुः दर्पातिशयेन आत्मनि तृणप्रायमेतत्त्रिपुरमिति यान् संभावनादीन् कृतवान् सा भवल्लक्षणा पुरस्तादास्तां नः । पुरारेर्या अकुण्ठिता शक्तिः सा त्वमेव, त्वद्युक्तः सर्वत्र प्रभवति इति 'शिवः शक्त्या युक्तो यदि भवति' इति पूर्वोक्तार्थः स्मारितः । न इति बहुवचनं संतोषातिशयेनात्मनो गौरवख्यापनार्थम् ॥ ७ ॥

## अरुणामोदिनी

एवं भगवत्याः सर्वाभीष्टदातृत्ववर्णनामुखेन पञ्चश्लोक्या देवतान्तरसाधारण्यभ्रान्तिं निराकृत्य, तत्स्वरूपं विवर्णयिषुरादावागमप्रसिद्धं तद्ध्यानं निबध्नाति—**क्वणदिति** । काञ्ची मेखला दामेव काञ्चीदाम क्वणच्छब्दायमानं काञ्चीदाम मेखलाकलापो यस्याः सा । 'स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा' इत्यमरः । अत्र क्वणदित्यनेन सम्यग्ध्यातृहृत्कमलं प्रत्यागमनं सूच्यते । करिकलभो गजशाबः । अत्र 'कलभः करिशाबकः' 'त्रिंशद्वर्षस्तु कलभः' इत्यादिकोशात्कलभशब्दस्यैव करिशाबकवचनशक्तत्वेऽपि सामान्यविशेषभावाश्रयणान्न पौनरुक्त्यम् । यथाऽऽह वामनः—'एवं करिकलभकर्णावतंसादिषु सामान्यविशेषभावाश्रयणान्न पौनरुक्त्यम्' इति । अत एव 'आनिन्यिरे वंशकरीरनीलैः' इत्यादयः साधव इत्याहुर्मल्लिनाथचरणाः । यद्वा, करिषु कलेन शोभया भाति, कं लभत इति वा करिकलभो गजश्रेष्ठः, तस्य कुम्भनिभाभ्यां स्तनाभ्यां नता नम्रा, योग्यतयेषन्नम्रेत्यर्थः । तथा मध्ये वलग्ने परिक्षीणा, शातोदरीत्यर्थः । अत एव करिकलभकुम्भस्तननतेति वा । परिणतः पूर्णो यः शरच्चन्द्रः, तत्तुल्यं स एव वा वदनं यस्याः सा । धनुर्बाणान्पाशं यन्त्रं सृणिमङ्कुशं च । अपीत्युक्तानामेव समुच्चये । 'अङ्कुशोऽस्त्री सृणिर्द्वयोः' इत्यमरः । करतलैर्हस्ततलैश्चतुर्भिरित्यर्थः । दधाना बिभ्राणा । मथ्नातीति मथिता, पुराणां मथिता, तस्य त्रिपुरान्तकस्य । एतेन रुद्रस्य भगवतीप्रसादादत्युत्कटकार्यकरणसामर्थ्यं सूचितम् । अहो इत्यहमर्थेऽव्ययम् । अहो चासौ पुरुषश्चेत्यहोपुरुषः । 'सुप्सुपा' इति समासः । अहोपुरुषस्य भाव आहोपुरुषिका ।

मनोज्ञादित्वाद्वुञ्। आहोपुरुषिका पुरमथितुः शक्त्याविष्करणरूपा देवीत्यर्थः। 'आहोपुरुषिका दर्पाद्या स्यात्संभावनाऽऽत्मनि' इत्यमरः। प्राथमिकश्लोकोपात्तसंभूयोपास्तिसूचनाय पुरमथिते-त्यादिपदद्वयोपादानमित्यवगन्तव्यम्। नः ध्यानार्थं प्रवृत्तानामस्माकं पुरस्तादग्रे संवित्कमले वा, आस्तामुपविशतु, निवासं प्राप्नोतु। एवंप्रकारेण ध्यायेदिति कवेरभिसंधिः ॥ ७ ॥

## आनन्दगिरिया

त्वामाराध्येत्युक्तम्। तत्राराधनस्य ध्यानपूर्वकत्वात् ध्यानं द्विविधं बाह्यमाभ्यन्तरं च, बाह्यं बहिरिन्द्रियगोचरं प्रकाशितम्। आभ्यन्तरं मानसं मनोमात्रगम्यम्। तत्रान्तरस्य सूक्ष्मतया स्थूलारुन्धतीन्यायेन बाह्याधीनतया ब्रह्मादिभिः क्रियमाणं बाह्यध्यानमाह—**क्वणदिति।** पुरमथितुराहोपुरुषिका नोऽस्माकम् पुरस्तादास्ताम्। श्रीमहादेवेन पुरत्रयदाहावसरे 'अहमेव पुरुषः, एनं क्षणमात्रेण दहामी' त्यहंकारदर्पाभ्यां कृताभ्यां या आत्मनि पौरुषसंभावना, या च केवला परमेश्वर्यादि-शक्तिरेव, अन्यथा तद्विनिर्मुक्तस्य तस्याशक्तत्वादित्युक्तमधस्तात्; सा अस्माकं लोचनगोचरतया पुरः परिस्फुरत्विति। प्रार्थनायामाशिषि वा लोट्। तस्यास्त्रैलोक्यमोहनस्वरूपमाह—क्वणत्काञ्चीदामेत्यादि। क्वणत् निनदत् शब्दायमानं काञ्चीरूपं दाम यस्याः सा। पुनः कीदृशी, करिकलभकुंभस्तननता करिणो वन्या गजाः, कलभा बालाः यस्मादसौ करिकलभ ऐरावतः तस्य कुम्भाविव यौ स्तनौ ताभ्यां नता नम्रा। यद्यपि पुनरुक्तिभयादेवं व्याख्यातं करकङ्कणधनुर्ज्यादिशब्दानां पुनरुक्तिर्न दोषायेति, भर्तयेति शब्दा (?) सूत्रात् नेयं पुनरुक्तिर्दोषाय, तथापि कलभकुंभोपमानेन परमेश्वरीकुंभयोरवनम्रताहेतुमाह-प्रौढिमा न लक्ष्य इति। पुनः कीदृशी, मध्येऽवलग्ने क्षीणा, पुनः शरत्कालीननिशाकरमुखी। सरभससमुद्धतशत्रुसंहार-कारीणि सुरासुरसंमोहनान्यायुधान्याह - धनुरित्यादि - धनुश्चापं, बाणाः शराः, पाशो रज्जुः, सृणिरङ्कुशः, करतलेऽस्मिन् तत्तदायुधधारणयोग्ये करतले दधानां, करतलैरित्यपि पठन्ति। धनुरैक्षवं, बाणाः कौसुमाः। पाशाङ्कुशौ सौवर्णौ। धनुर्बाणावधस्तनयोः वामदक्षिणयोः करयोः, उपरितनयोः करयोः पाशाङ्कुशौ धत्ते। ध्यानमपि तथैव। नानाग्रन्थेष्वस्यार्थस्य प्रतिपादितत्वात्, चर्वितचर्वणप्रसंगभयात् अल्पमेवोक्तमिति। अत्र तृतीयचक्रे सर्वसंक्षोभणाख्यचक्रेश्वरीं त्रिपुरसुन्दरीमाह - क्वणत्काञ्ची लज्जा ह्रीम्। करिकलभकुंभस्तनभरा कामः। अमध्ये अपरिक्षीणा नमध्ये अन्ते शरच्चन्द्रवदना परा। इयं पुस्तकाक्षवरदाभयकरा। कथमेतादृशी धनुर्बाणानित्यादि धत्ते। तथा रुद्रयामले - "ध्यानाशक्तौ तु सर्वासां ध्यानं तत्तु समं स्मृत"मिति। आहोपुरुषिका अहमहमित्यध्यासात्मिका अहमिका। जडायाः प्रकृतेर्यत्र अहमहमित्यहमिका, ध्यानावलंबनी या सा। सर्वसंक्षोभणतृतीयचक्रस्य चक्रेश्वरी-त्रिपुरसुन्दरीमन्त्रः (ऐं क्लीं ह्सौं) ह्रीं क्लीं सौः ॥ ७ ॥

## तात्पर्यदीपिनी

ननु भगवत्याः परप्रकृतिरूपायाः नानायुधधारिण्यो नानावर्णा नानाचेष्टाः, तासु सर्वास्वपि, या मूर्तिः अविनाशिनी सर्वलोकप्रसिद्धा, सा चेन्न दृश्यते, तदा सर्वध्यानकांक्षिणः पुरुषाः किंरूपां चिन्तयेयुः इत्याशङ्कायां, भगवत्याः सर्वध्यानमण्डलेषु सर्वोत्तमं ध्यानविशेषमाह—**क्वणत्काञ्चीति**-पुरमथितुः पुरं मथ्नाति स पुरमथिता, तस्य त्रिपुरान्तकस्य शंभोः आहोपुरुषिकाऽहंकारशक्तिः नः अस्माकं पुरस्तादग्रतः हृदयकमले आस्तां आविशतु। आहोपुरुषिकाशब्दः पुरुषकृते अभिमाने वर्तमानोऽपि तदभिमानमूलभूतां तामप्याचष्टे, कार्यकारणयोरभेदोपचारात्। महादेवस्य सर्वगुणसमुदायेभ्यः, परमेश्वरीभर्तृत्वमेव अनन्यसाधारणं अखिलसुरासुरदुर्लभं अनर्गलं माहात्म्यं, यतः श्मशानाद्यमंगलशीलस्यापि तस्य चतुर्दशभुवनपूज्यता जाता। तदुक्तमंबास्तवे-"चर्मांबरञ्च शवभस्मविलेपनं च भिक्षाटनं च नटनं च परेतभूमौ। वेतालसंहतिपरिग्रहता च शंभोः शोभां वहन्ति गिरिजे तव साहचर्यात्'' इति॥ तस्याः स्वरूपमाह। किं भूता अहंकारशक्तिः? क्वणत्काञ्चीदामा, क्वणत् सिञ्जमानं काञ्च्याः कटिमेखलायाः दाम कलापो यस्याः सा तथोक्ता। पुनः करिकलभकुंभस्तननता करिणः कलभः पोतकः, तस्य कुंभौ, ताविव स्तनौ, ताभ्यां नता ईषत् नम्रा। पुनः मध्ये अवलग्ने परिक्षीणा कृशिमशालिनी। पुनः परिणतशरच्चन्द्रवदना परिणतः संपूर्णः यः शरदि चन्द्रः तदनुकारि वदनं यस्याः सा तथोक्ता। पुनः करतलैः कराब्जैः, धनुः चापं, बाणान् शरान्, पाशं रज्जुं, सृणिं अंकुशमपि दधाना धारयन्ती। एतद्रूपा हरस्य योऽहमित्यभिमानः स तत्कृत एवेत्यवधारणीयम्॥ ७॥

## पदार्थचन्द्रिका

एवं तावत् श्रीभवान्याः महिमानमनुवर्ण्य, इदानीं तत्तद्योगिध्येयपादपद्मां श्रीमूर्तिं वर्णयन् तद्दर्शनं प्रार्थयते - **क्वणदिति** - पुरमथितुर्महादेवस्य, आहोपुरुषिका आहंकारिकस्वात्मविषयकोत्कर्षप्रत्ययहेतुभूता भवानी नोऽस्माकं पुरस्तादास्तां प्रत्यक्षीभवतु इत्यर्थः। 'आहोपुरुषिका या स्याद्दर्पात्संभावनात्मनी'त्यमरः। पुराणां मथिता पुरमथिता। नन्वा तृजकाभ्यां कर्तरीति षष्ठीसमासनिषेधः, तस्य तत्प्रयोजको हेतुश्चेति सूत्रे क्वाचित्कत्वज्ञापनात्। भवानीं विशिनष्टि - क्वणदित्यादि। क्वणत् शब्दायमानं कांचीनां मेखलानां दाम परंपरा यस्याः सा। करिकलभः करिशावकः तस्य कुंभौ मूर्धांशौ तद्वत् यौ स्तनौ तयोर्भरः भारः यस्याः सा। कलभशब्दोऽत्र करिशावकमात्रपरः। मध्ये कटिप्रदेशे परिक्षीणा कृशा। परिणतः पूर्णः शरच्चन्द्रः तद्वद्वदनं यस्याः सा। शरद्ग्रहणं नैर्मल्यसूचनाय। अथ क्रमेण चतुर्भिः करतलैः चतुरो धनुरादीन् दधाना। सृणिमंकुशम्। स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथेत्यमरः॥ ७॥

## डिण्डिमभाष्यम्

यद्यपि भगवत्याः परप्रकृतिरूपिण्या नानायुधधारिण्यो नानावर्णा नानाचेष्टाश्च मूर्तयो दृष्टास्तासु सर्वास्वपि या मुख्या मूर्तिरविनाशिनी सर्वलोकप्रसिद्धा सर्वागमतन्त्रमता च या सा चेन्न प्रदर्श्यते तदा सकलध्यानकाङ्क्षिणः पुरुषाः किं रूपं चिन्तयेयुरित्याकाङ्क्षया भगवत्याः सर्वध्यानमण्डलेषु निष्कृष्ट-सर्वोत्तरध्यानविशेषमाह—**क्वणदित्यादि** ।

क्वणत् सिञ्जत् काञ्चीदाम मेखलाकलापो यस्याः सा तथोक्ता । "डाबुभाभ्यामन्यतरस्याम्" इति डाप् । करिकलभकुम्भस्तननता गजपोतकमस्तकसन्निभकुचकुम्भावनम्रा, मध्ये परिक्षीणा अवलग्नकृशिमशालिनी, परिणतशरच्चन्द्रवदना सम्पूर्णशारदनिशाकरानुकारिललितलपना । धनुश्चापं, बाणान् शरान्, पाशं रज्जुम्, सृणिमङ्कुशम्, एतत्सकलजनसम्मोहनमायुधचतुष्टयम् करतलैः पाण्युदरैः दधाना धारयन्ती पुरमथितुर्महादेवस्य आहोपुरुषिका अहो पुरुषोऽहमित्यात्मनि सम्भावनारूपा परमेश्वरी नः अस्माकम् पुरस्ताद् अग्रतः आस्ताम् उपविशतु । 'आहोपुरुषिका' शब्दपुरुषकृतेऽभिमाने वर्तमानोऽपि तदभिमानमूलभूतां तामप्याचष्टे; कार्यकारणयोरभेदोपचारात् । महादेवस्य सर्वगुणसमुदा-येभ्योऽपि परमेश्वरीभर्तृत्वमेव । अनन्यसाधारणं अखिलसुरासुरदुर्लभं, अनर्गलमाहात्म्यम् यत्प्रभावात् श्मशानवासाद्यमङ्गलशीलस्यापि तस्य चतुर्दशभुवनपूज्यता जाता । उक्तं च अम्बास्तवे—"चर्माम्बरञ्च शवभस्मविलेपनञ्च, भिक्षाटनञ्च नटनञ्च परेतभूमौ । वेतालसंहतिपरिग्रहता च शम्भोः, शोभां वहन्ति गिरिजे तव साहचर्यात् ॥" किञ्च 'अहो पुरुषोऽहम्' इत्यभिमानश्च भगवत्या कृतेन पुरुषत्वेनैव शम्भोः सम्भवति । स एव पुरुषो नान्य इत्यत्र श्रुतिरेव साक्षिणी—"पुरुषो वै रुद्रः सन्महो नमो नमः" इति । किञ्च पुरुषत्वं नाम पुंस्त्वगुणयोगित्वम्, तच्चाक्षयबिन्दुप्रवाहसम्पन्न-शरीरत्वम्, यतः स भगवान् पार्वत्या सह अनवरतसम्भोगसंसक्तोऽपि अक्षीणबिन्दुरेव दृश्यते । बाणलिङ्गादौ भगवतः सर्वदा लिङ्गयोनिसम्बन्धसम्पद्यमानपरमानन्दनिरन्तरत्वं सर्वलोकप्रसिद्धमेव । स खलु पुरुषो भवति यः स्वयमखण्डितोत्साहसम्भोगशक्तिः स्त्रीणामष्टविधकामसम्भोगाम्बुविद्रावणो भवति । सामान्यस्त्रीणामपि "कामस्त्वष्टगुणः स्मृतः" इति वचनादष्टगुणकामभोगवत्त्वं वर्तते, किम्पुनस्त्रैलोक्यगृहिणीचूडामणेः सन्ततकामसम्भोगाधिष्ठानमूर्तेर्भगवत्याः । कामकलासम्पूर्णत्वं तस्यामन-वरतप्रवृत्तस्य हरस्य योऽयं महापुरुषोऽयमित्यभिमानः स तत्कृत एवेत्यवधारणीयम् ॥ ७ ॥

## गोपालसुन्दरी

**भगवतीस्वरूपमाह—क्वणदिति ।** क्वणत् शब्दायमानं काञ्चीदाम क्षुद्रघण्टिकास्रक् यस्याः सा तथा, करिकलभः करिशावकः तत्कुम्भवत् स्तनभरो यस्याः सा तथा, करिशब्दश्चात्रोपरञ्जकः, करिषु कं प्रकाशं लभते इति करिकलभः, करिश्रेष्ठ इत्यर्थः इति केचित्, मध्ये उदरे परिक्षीणा

कृशा, परिणतः परिपूर्णः शरत्कालीनो यश्चन्द्रः तद्वद्वदनं मुखं यस्याः सा, तथा करतले धनुः कोदण्डं बाणान् पाशं रज्जुविशेषं सृणिमङ्कुशं दधाना धारयन्ती नोऽस्माकं पुरस्तादग्रे आस्तां तिष्ठतु, कीदृशी पुरमथितुः शिवस्य आहोपुरुषिका अहो पुरुषोऽहमित्यभिमानरूपा। "आहोपुरुषिका दर्पाद्या स्यासम्भावनात्मनि" इत्यमरः। अत्र पाशधनुषोरूर्ध्वाधोवामकरयोः अङ्कुशबाणयोरूर्ध्वाधोदक्ष-करयोर्ध्यानम्। केचित्तु दक्षोर्ध्वकरे पाशं वामोर्ध्वकरेऽङ्कुशं शक्तीनामिच्छन्ति। अत्र धनुरैक्षवं, बाणा रक्तकमलनीलकमलकल्हारकैरवसहकारमञ्जरीरूपास्तन्त्रराजादावुक्ताः, अङ्कुशं नानारत्नखचित-सुवर्णमयं, पाशो रक्तपट्टनिर्मितः।

**विष्णुपक्षे**—नोऽस्माकं पुरमथितुः जाग्रत्स्वप्नसुषुप्त्यवस्थानाशकस्य अस्मन्मोक्षप्रदस्य विष्णोरग्रे आहोपुरुषिका पार्वतीरूपा आस्ताम् तिष्ठतु अप्रयोजकत्वात्, मोहिनीमूर्तेः शिवक्षोभः-करायास्ततोऽप्यधिकसुन्दरत्वादित्याशयः। "ऊर्ध्वाभ्यां मणिवंशवादनवरं मुद्रालसत्पुस्तकम्, पाशं चाङ्कुशमैक्षवं धनुरिषुं सम्यग्दधानं करैः॥ गोपीगोपपरीवृतं सुरतरोर्मूलेस्थितं हारिणं, स्त्रीवेषं मणि-भूषणोज्ज्वलममुं कृष्णं भजे सुन्दरम्॥" इति सुन्दरीगोपालाभिप्रायेण वेदं सङ्गमनीयम्॥ ७॥

## आनन्दलहरीटीका

ध्यानोपयुक्तं भगवत्याः स्वरूपमाह-**क्वणदिति**-क्वणत् शब्दायमानं काञ्च्याः क्षुद्रघंटिकाया दाम माला यस्याः सा तथा। डाबुभाभ्यामन्यतरस्यामिति डाप् टिलोपः। करिकलभो हस्तिशावकः। तत्कुंभयोरिव स्तनयोर्भरो यस्याः सा तथा। भरेत्यत्र नतेति पाठे तादृशस्तनाभ्यां नम्रेत्यर्थः। यद्यपि कलभः करिशावक इत्यभिधानात्करिपदवैयर्थ्यमायाति, तथाऽप्यत्र कलभशब्दः शावकमात्रपरः। अतिप्रौढत्वख्यापनार्थं वा करिपदं करिषु कं सुखं प्रौढतानिमित्तं लभत इति करिकलभः। करिश्रेष्ठ इति वाऽर्थः। परिणतः परिपूर्णो यः शरत्कालीनश्चन्द्रः तद्वद्वदनं यस्याः, सा तथा। धनुरिक्षुमयं, बाणान् पञ्च रक्तकमल-नीलकमल-कह्लार-कैरव-सहकारमञ्जरीरूपान्, तन्त्रराजाद्युक्तान्। पाशं रक्तपदसूत्रनिर्मितं, सृणिमंकुशं, नानारत्नघटितं सुवर्णमयं, करतलैश्चतुर्भिः, दधाना धारयन्ती, पुरमथितुः शिवस्य, आहोपुरुषिका अहमेव पुरुष इति आत्मनि बहुमानहेतुभूता नः अस्माकं, पुरस्तादग्रे, आस्तां तिष्ठतु। आहोपुरुषिका दर्पाद्या स्यात्संभावनात्मनीत्यमरः। अत्र पाशधनुषी ऊर्ध्वाधो वामकरयोः, अंकुशबाणपञ्चके तथैव दक्षिणकरयोरिति भावः। केचित् दक्षिणोर्ध्वकरे अंकुशमिति वदन्ति॥ ७॥

**सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते**
**मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे।**
**शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयां**
**भजन्ति त्वां धन्याः कतिचन चिदानन्दलहरीम्॥ ८॥**

ஸுதாஸிந்தோர் மத்யே ஸுரவிடபிவாடீ பரிவ்ருதே
4 4 4 1 1 1 1 1

மணித்வீபே நீபோபவனவதி சிந்தாமணிக்ருஹே ;
3 1 1 1 1 1 1 1 3

சிவாகாரே மஞ்சே பரமசிவ பர்யங்க நிலயாம்
1 1 1 1 1

பஜந்தி த்வாம் தன்யா: கதிசன சிதாநந்தலஹரீம்.
4 1 1 4 1 1 1 1 3 3

सुधासिन्धु के बीच सुरद्रुमवाटीगण से परिवेष्टित,
मणिमय अंतरीप में शुभ कदंब उपवनमध्य विनिर्मित,
चिन्तामणि मंदिर में शिवाकार मंचोपरि समलंकृत,
परमशिवास्तरण का बना अधिवास मनोहर शुचि संस्कृत,
शासन करनेवाली चिदानंदलहरी का तव चिंतन-
करते हैं भाग्यवान कतिचन भगवति माते ! सन्त सुजन ! ॥

## लक्ष्मीधरा

**सुधासिन्धोरिति ।** सुधासिन्धोः अमृतसमुद्रस्य, मध्ये, सुरविटपिवाटीपरिवृते - सुरविटपिनां कल्पवृक्षाणां वाटीभिः परिवृते, मणिद्वीपे - मणिमये अन्तरीपे, नीपोपवनवति - नीपैः कदम्बैः उपवनवति, चिन्तामणिगृहे चिन्तामणिविरचिते मन्दिरे, शिवाकारे - शिवात्मके शक्तिरूपे, त्रिकोण इति यावत्, मञ्चे खट्वायां, परमशिवपर्यङ्कनिलयां परमशिव एव पर्यङ्कः तल्पं - तत्र निलयः अवस्थितिर्यस्याः तां, भजन्ति सेवन्ते, त्वां भवतीं, धन्याः - त्वत्प्रसादवशात् कृतार्थाः, कतिचन विरलाः, चिदानन्दलहरीं - उत्सेकरूपाम् ।

अत्रेत्थं पदयोजना हे भगवति सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयां त्वां चिदानन्दलहरीं कतिचन धन्याः भजन्ति । अत्रेदमनुसन्धेयम् - भगवत्पादाचार्याः समयमतपारदृश्वानः समयाचारप्रवीणाः समयरूपां भगवतीं स्तुवन्ति । समयाचारो नाम आन्तरपूजारतिः ; कुलाचारो नाम बाह्यपूजारतिः इति रहस्यम् । एतच्च तवाधारे मूले सह समयया इत्यादिश्लोकव्याख्यानावसरे निपुणतरमुपपादयिष्यामः । श्रीचक्रस्य वियच्चक्रमिति नामान्तरमस्ति । वियच्चक्रत्वं तु वियत्पूज्यत्वात् । वियत्पूज्यत्वं द्विविधम् - दहराकाशजं, बाह्याकाशजं चेति । बाह्याकाशजं नाम बाह्याकाशावकाशे पीठादौ, भूर्जपत्र-शुद्धपटहेमरजतादिपट्टतले लिखित्वा समाराधनम् । एतदेव कौलपूजेत्याहुर्वृद्धाः । तदुत्तरत्र स्फोर्यते । दहराकाशजं नाम हृदयाकाशावकाशे चक्रस्य पूजनम् । इदमेव समयपूजेत्याहुः

समयिनः। एतदप्युत्तरत्र स्फोर्यते। तत्र नवयोनिष्वधःस्थितशिवात्मकयोनिचतुष्कस्योपरि ऊर्ध्वस्थितशक्त्यात्मकयोनिपञ्चकादधःप्रदेशस्य बैन्दवस्थानस्य नाम सुधासिन्धुरिति। 'बिन्दुस्थानं सुधासिन्धुः पञ्च योन्यः सुरद्रुमाः। तत्रैव नीपश्रेणी च तन्मध्ये मणिमण्टपम्॥ तत्र चिन्तामणिकृतं देव्या मन्दिरमुत्तमम्। शिवात्मके महामञ्चे महेशानोपबर्हणे॥ अतिरम्यतरे तत्र कशिपुश्च सदाशिवः। भृतकाश्च चतुष्पादा महेन्द्रश्च पतद्ग्रहः॥ तत्रास्ते परमेशानी महात्रिपुरसुन्दरी। शिवाऽर्कमण्डलं भित्त्वा द्रावयन्तीन्दुमण्डलम्। तदुद्भूतामृतस्यन्दिपरमानन्दनन्दिता। कुलयोषित्कुलं त्यक्त्वा परं वर्षणमेत्य सा॥' इति भैरवयामले वामकेश्वरमहातन्त्रे बहुरूपाष्टकविद्यायां कथितम्। 'देव्या मन्दिरमुत्तमम्' इत्यस्यार्थः— देवीमन्दिरं त्रयश्चत्वारिंशत्त्रिकोणात्मकं श्रीचक्रमुच्यते। अत उक्तं 'शिवाकारे मञ्चे' इति। त्रिकोणात्मकश्रीचक्रस्य बैन्दवस्थानं प्रत्यङ्गत्वात्, बैन्दवस्थानस्य प्रधानत्वात्, प्रधाने गुणस्यान्तर्भावात् तदन्तर्भाव उक्त इति रहस्यम्। 'भृतकाः' इत्यस्यार्थः—भृतकाः भृत्याः द्रुहिणहरिरुद्रेश्वराः। एतच्च 'गतास्ते मञ्चत्वं द्रुहिण....' इत्यादिश्लोकव्याख्यानावसरे वक्ष्यते। 'शिवार्कमण्डलं भित्त्वा' इत्यस्यायमर्थः— शिवा नाम शक्तिः कुण्डलिनी अर्कमण्डलं हृत्कमलोपरि स्थितं भित्त्वा भिन्नं कृत्वा अवयुत्य आच्छाद्येत्यर्थः। अर्कमण्डलोपरि स्थितं ब्रह्मद्वारं पिधाय सहस्रकमलान्तःस्थितमिन्दुमण्डलं दशति द्रावयति। अत एव कुलयोषित् कुण्डलिनीशक्तिः कुलं कुलमार्गं सुषुम्नामार्गं त्यक्त्वा तत्रैवेन्दुमण्डले आस्थाय परं वर्षणं उत्कृष्टवर्षणं द्विसप्ततिसहस्रनाडीषु प्रवर्षणम्; कृत्वेति शेषः। सा कुण्डलिनी पुनः स्वस्थानमेत्य स्वाधिष्ठानं प्राप्य स्वपितीति तात्पर्यम्। शिवादीनां मञ्चत्वोपधानत्वपतद्ग्रहत्वावस्थापन्नत्वं कामरूपत्वाद्देवानामत्यन्तासन्नसेवार्थं घटते। इममेवार्थं संक्षेपेणोक्तवान्सदाशिवः—
'सुधाब्धौ नन्दनोद्याने रत्नमण्टपमध्यगाम्। बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम्॥ पाशाङ्कुशशरांश्चापं धारयन्तीं शिवां श्रियम्। ध्यात्वा च हृद्गतं चक्रं व्रतस्थः परमेश्वरीम्॥ पूर्वोक्तध्यानयोगेन चिन्तयन् जपमाचरेत्।' इति। अनेन 'क्वणत्काञ्चीदामा' इति, 'सुधासिन्धोर्मध्ये' इति श्लोकद्वयमेकीकृत्य व्याख्यातमित्यवगन्तव्यम्॥ ८॥

## सौभाग्यवर्धनी

ध्यानमुक्तम्; कुत्र ध्येयाऽहमित्यत आह—**सुधासिन्धोरिति**। अमृताम्बुधिमध्ये कल्पवृक्षवाटिकावृते कदम्बोपवनयुते नवरत्नखचितद्वीपे चिन्तामणिघटितकुड्यस्तम्भप्राकारतोरणादिमण्डितगृहे शिवाकारभाजि मञ्चे, सदाशिव एव मञ्चीभूत इत्यर्थः। तथा मञ्चचरणीभूतविधिहरिरुद्रेश्वरविलसिते मञ्चीभूते सदाशिवे परमासने परमशिवपर्यङ्कनिलयां परमशिवः गुणातीतः सकलप्रपञ्चसाक्षी सच्चिदानन्दसुन्दरः त्वदपेक्षया पर्यङ्कतां प्राप्त इत्यर्थः। तत्र निषण्णां त्वां धन्याः कतिपये पश्चिमजन्मानः

चिदानन्दलहरीं परमां शिवाविनाभूतां भजन्ति। तदुक्तं रुद्रयामले—'यस्य नो पश्चिमं जन्म न स्वयं यो महेश्वरः। स न प्राप्नोति परमां दशपञ्चाक्षरीमिमाम्' ॥ इति। अनेन ध्यानयोगेन भजतो जन्ममरणदुःखाम्बुधेरुन्मज्जनं भवतीति भावः। शिव एकारः एकादशस्वरः; तेन त्रिकोणं, परमशिवो बिन्दुः तन्निलयां श्रीचक्रान्तर्गतत्रिकोणमध्यबिन्दुनिलयां भजन्तीति -सांप्रदायिकार्थो गुरुगम्यः ॥ ८ ॥

## अरुणामोदिनी

एवं ध्यातव्यदेवतास्वरूपमभिधाय ध्यानप्रणालीमुपदिशति—**सुधासिन्धोरिति**। हे देवि, सुधासिन्धोरमृताब्धेर्मध्ये मध्यभागे, तत्र च सुरविटपिनां कल्पतरूणां वाटीभिः शाखाभिः परिवृते परितः समन्ताद्वृते वेष्टिते, मणिद्वीपे वज्रवैडूर्यादिमाणिक्यखचितेऽन्तरीपे, तत्र च नीपैः कदम्बैरु-पवनमारामोऽस्यास्तीति तस्मिन्। 'कदम्बवनवासिनीम्' इत्यादिप्रयोगाद्देव्याः कदम्बवनवास-रसिकत्वादिति भावः। चिन्तामणिभिश्चिन्तितार्थप्रदैर्माणिक्यविशेषैर्निर्मिते गृहे सद्मनि। तत्र च शिवस्य पञ्चवक्त्रस्य महेशितुराकार इवाकारो यस्य तस्मिन्मञ्चे सिंहासने। परमशिवपर्यङ्क-निलयामतिकल्याणास्तरणनिवासिनीम्, चित्स्वरूपश्चासावानन्दश्च चिदानन्दो निरतिशयसुखम्, तस्य लहरीं प्रवाहरूपां त्वां भवतीं कतिचन केचिद्धन्याः सुकृतिनो भजन्ति सेवन्ते, कति न भजन्ति च, भजन्त्येवेति वाऽर्थः। प्रथमं सुधासिन्धुं निधाय तन्मध्ये कल्पवृक्षपरीतरत्ना-न्तरीपसंस्थितनीपोद्यानवनमध्यस्थरत्नमण्डपान्तःसंस्थिते सिंहासनेऽतिकल्याणोपबर्हणोपरि संस्थितां चिदानन्दरूपिणीं देवीं क्वणदित्यादिश्लोकोक्तप्रकारेण ध्यायेदित्युपदेशः। तथा चोक्तम्—"सुधाब्धौ नन्दनोद्याने रत्नमण्डपमध्यगाम्। बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम् ॥ पाशाङ्कुशौ शरांश्चापं धारयन्तीं शिवां श्रियम्। ध्यात्वा च हृद्गते चक्रे व्रतस्थः परमेश्वरीम्। पूर्वोक्तध्यान-योगेन संचिन्त्य जपमाचरेत् ॥' इति। उक्तं चाचार्यैः—'सुधासिन्धुमध्ये मणिद्वीपरम्ये सुकल्पद्रुमा-कल्पकादम्बसत्रे। स्फुरत्स्वर्णसिंहासने रत्नपीठे भवाङ्के निषण्णां भजाम्यन्नपूर्णाम् ॥' इति। इति प्रातीतिकार्थः ॥

आगमरहस्यार्थस्तु—नवयोन्यात्मके श्रीचक्रे शिवात्मकयोनिचतुष्कस्योपरि शक्त्यात्मक-योनिपञ्चकस्याधःप्रदेशे वर्तमानस्य बिन्दुस्थानस्य सुधासिन्धुरिति नाम। तस्य मध्ये मध्यभागे सुरविटपिनां कल्पसंतानहरिचन्दनमन्दारपारिजातरूपसुरतरुत्वेनागमोक्तानां पञ्चानां योनीनां वाटीभिर्वेष्टनैः। 'वेष्ट परिवेष्टने' इति धातुः। परिवृते व्याप्ते मणिद्वीपे मणिमयरत्नद्वीपवत्स्थिते नीपैः कदम्बैरुपवनवति, यद्वा नयन्ति चक्रस्वरूपमिति नीपा रेखाः, ता एवोपवनं तद्वति, चिन्ता-मणिनिर्मिते गृहे, पुष्यरागपद्मरागगोमेधवज्रवैडूर्यनीलमुक्तारत्नमरकतादिनिर्मितप्राकारानन्दवापि-

कादिसहिते, शिवायाः शक्त्या आकारो रूपं यस्य तस्मिञ्शिवात्मके, यद्वा शिवा एकारस्तदात्मके त्रिकोण इत्यर्थः। मञ्चे ब्रह्मविष्णुरुद्रेश्वरपादसहितायां खट्वायाम्, परमश्चासौ शिवश्च परमशिवः सदाशिवः, स एव पर्यङ्कोऽवसक्थिका कशिपुरित्यर्थः। स निलयो यस्यास्ताम्, तत्र नित्यनिवासिनीमित्यर्थः। चिदानन्दलहरीं ज्ञानानन्दप्रवाहिनीं त्वाम्, भक्ताभीष्टदात्रीं भवतीमित्यर्थः। कतिचन केचिद्धन्याः सुकृतिनो हरिहरादयो भजन्ति सेवन्ते, हरिहरद्रुहिणरुद्रा भृतकत्वमिन्द्रश्च पतद्ग्रहतां च प्राप्य नित्यं भवतीमेव सेवन्त इत्यर्थः। तदुक्तं भैरवयामले वामकेश्वरतन्त्रे—'बिन्दुस्थानं सुधासिन्धुः पञ्च योन्यः सुरद्रुमाः। तत्रैव नीपश्रेणी च तन्मध्ये मणिमण्डपम्। तत्र चिन्तामणिकृतं देव्या मन्दिरमुत्तमम्। शिवात्मके महामञ्चे महेशानोपबर्हिणि। अतिरम्यतले तत्र कशिपुश्च सदाशिवः। भृतकाश्च चतुष्पादा महेन्द्रश्च पतद्ग्रहः। तत्रास्ते परमेशानी महात्रिपुरसुन्दरी। शिवार्कमण्डलं भित्त्वा द्रावयन्तीन्दुमण्डलम्। तनूद्भूतामृतस्यन्दिपरमानन्दनन्दिता। कुलयोषित्कुलं त्यक्त्वा परं पुरुषमेति सा॥' इति। इत्यागमरहस्यार्थः॥

ग्रन्थपरार्थोऽपि प्रतीयते—हे देवि, सुरा देवा एव विटपिनः कल्पतरवः, इष्टार्थदातृत्वात्। तेषां वाटीभिः स्थलविशेषैः परिवृते, श्रीशैलादितत्तत्प्रसिद्धदेवतास्थलचिह्नित इत्यर्थः। मणिमया द्वीपा यस्मिंस्तत्तदुपासनयोग्यस्थलसहित इत्यर्थः। नीपोपवनवति कदम्बवनयुक्ते, चिन्तामणिनिर्मितानि गृहाणि देवालयानि यस्मिंस्तस्मिन्। सुधाशब्देन सुष्ठु दधाति भुवनमिति व्युत्पत्त्या सुधावदतिधवलत्वाद्वा सुधा इत्यनेन हिमाचल उच्यते। तथा च सुधामारभ्य आसिन्धोः सिन्धुपर्यन्तं हिमाचलमारभ्य सेतुपर्यन्तं मध्यदेशे शिवाकारे अतिधवलत्वात्स्फटिकमणीमयतया शिवसदृशे मञ्च्यत इति मञ्चे पूज्ये कैलास इत्यर्थः। परमशिवः सदाशिवः, यद्वा परमौ च तौ शिवौ च परमशिवौ, तस्य तयोर्वा पर्यङ्क उत्सङ्गो निलयो यस्यास्तां, पार्वतीपरमेश्वराभ्यामङ्के निधायानुगृहीतामित्यर्थः। अत एव भगवत्पादाः स्तोत्रमेतद्विधाय कैलासं गत्वा तत्रैतामेव स्तुतिं पार्वतीपरमेश्वरसमीपे पठ्यमानां दृष्टवन्त इति प्रसिद्धिः। चिच्छक्तेर्देव्याः प्रतिपादिकामानन्दलहरीं तदभिधेयां त्वां प्रबन्धमित्यर्थः। यद्वा, चनचितां प्रत्येकाव्ययत्वे आनन्दलहरीं प्रबन्धं, त्वां च कतिचिद्धन्या न भजन्तीति काकुः। भजन्त्येवेत्यर्थः। इति ग्रन्थमहत्त्वप्रतिपादकार्थः॥

अथ च सुष्ठु राजते प्रकाशत इति सुरो जीवः; स एव विटपी, आपादमस्तकं विस्तीर्य वर्तमानत्वात् तस्य वाट्या वेष्टनेन परितो वृते धृते; तदभावे देहस्थित्यभावात्। किं च, मणिमया मणिवत्प्रकाशमानाः द्वीपाः देवतानिवासस्थानत्वाद्द्वीपतुल्या मूलाधारादिस्थानविशेषाः। यद्वा, मणिरूपा द्वीपाः शिवेन स्वनिवासस्थानतया विष्णुं प्रति कथिताः ब्रह्मरन्ध्रमुखचक्षुःश्रोत्रगण्डोष्ठदन्तमूर्धहस्तपादादिसंधिपार्श्वनाभिहृदयादयो यस्मिंस्तस्मिन्। नयन्ति शरीरं गमनागमनव्यापारैरिति नीपाः प्राणापान-

ஸுதாஸிந்தோ ர்மத்யே ஸுரவிடபிவாடீ பரிவ்ருதே
4 4 4 1 1 1 1 1
மணித்வீபே நீபோபவனவதி சிந்தாமணிக்ருஹே;
3 1 1 1 1 1 1 1 3
சிவாகாரே மஞ்சே பரமசிவ பர்யங்க நிலயாம்
1 1 1 1 1
பஜந்தி த்வாம் தன்யா: கதிசன சிதாநந்தலஹரீம்.
4 1 1 4 1 1 1 1 3 3

सुधासिन्धु के बीच सुरद्रुमवाटीगण से परिवेष्टित,
मणिमय अंतरीप में शुभ कदंब उपवनमध्य विनिर्मित,
चिन्तामणि मंदिर में शिवाकार मंचोपरि समलंकृत,
परमशिवास्तरण का बना अधिवास मनोहर शुचि संस्कृत,
शासन करनेवाली चिदानंदलहरी का तव चिंतन -
करते हैं भाग्यवान कतिचन भगवति माते ! सन्त सुजन ! ॥

## लक्ष्मीधरा

**सुधासिन्धोरिति ।** सुधासिन्धोः अमृतसमुद्रस्य, मध्ये, सुरविटपिवाटीपरिवृते - सुरविटपिनां कल्पवृक्षाणां वाटीभिः परिवृते, मणिद्वीपे - मणिमये अन्तरीपे, नीपोपवनवति - नीपैः कदम्बैः उपवनवति, चिन्तामणिगृहे चिन्तामणिविरचिते मन्दिरे, शिवाकारे - शिवात्मके शक्तिरूपे, त्रिकोण इति यावत्, मञ्चे खट्वायां, परमशिवपर्यङ्कनिलयां परमशिव एव पर्यङ्कः तल्पं - तत्र निलयः अवस्थितिर्यस्याः तां, भजन्ति सेवन्ते, त्वां भवतीं, धन्याः - त्वत्प्रसादवशात् कृतार्थाः, कतिचन विरलाः, चिदानन्दलहरीं - उत्सेकरूपाम् ।

अत्रेत्थं पदयोजना हे भगवति सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयां त्वां चिदानन्दलहरीं कतिचन धन्याः भजन्ति । अत्रेदमनुसन्धेयम् - भगवत्पादाचार्याः समयमतपारदृश्वानः समयाचारप्रवीणाः समयरूपां भगवतीं स्तुवन्ति । समयाचारो नाम आन्तरपूजारतिः; कुलाचारो नाम बाह्यपूजारतिः इति रहस्यम् । एतच्च तवाधारे मूले सह समयया इत्यादिश्लोकव्याख्यानावसरे निपुणतरमुपपादयिष्यामः । श्रीचक्रस्य वियच्चक्रमिति नामान्तरमस्ति । वियच्चक्रत्वं तु वियत्पूज्यत्वात् । वियत्पूज्यत्वं द्विविधम् - दहराकाशजं, बाह्याकाशजं चेति । बाह्याकाशजं नाम बाह्याकाशावकाशे पीठादौ, भूर्जपत्र-शुद्धपटहेमरजतादिपट्टतले लिखित्वा समाराधनम् । एतदेव कौलपूजेत्याहुर्वृद्धाः । तदुत्तरत्र स्फोर्यते । दहराकाशजं नाम हृदयाकाशावकाशे चक्रस्य पूजनम् । इदमेव समयपूजेत्याहुः

समयिनः । एतदप्युत्तरत्र स्फोर्यते । तत्र नवयोनिष्वधःस्थितशिवात्मकयोनिचतुष्कस्योपरि ऊर्ध्वस्थितशक्त्यात्मकयोनिपञ्चकादधःप्रदेशस्य बैन्दवस्थानस्य नाम सुधासिन्धुरिति । ‘बिन्दुस्थानं सुधासिन्धुः पञ्च योन्यः सुरद्रुमाः । तत्रैव नीपश्रेणी च तन्मध्ये मणिमण्टपम् ॥ तत्र चिन्तामणिकृतं देव्या मन्दिरमुत्तमम् । शिवात्मके महामञ्चे महेशानोपबर्हणे ॥ अतिरम्यतरे तत्र कशिपुश्च सदाशिवः । भृतकाश्च चतुष्पादा महेन्द्रश्च पतद्ग्रहः ॥ तत्रास्ते परमेशानी महात्रिपुरसुन्दरी । शिवाऽर्कमण्डलं भित्त्वा द्रावयन्तीन्दुमण्डलम् । तदुद्भूतामृतस्यन्दिपरमानन्दनन्दिता । कुलयोषित्कुलं त्यक्त्वा परं वर्षणमेत्य सा ॥’ इति भैरवयामले वामकेश्वरमहातन्त्रे बहुरूपाष्टकविद्यायां कथितम् । ‘देव्या मन्दिरमुत्तमम्’ इत्यस्यार्थः — देवीमन्दिरं त्रयश्चत्वारिंशत्त्रिकोणात्मकं श्रीचक्रमुच्यते । अत उक्तं ‘शिवाकारे मञ्चे’ इति । त्रिकोणात्मकश्रीचक्रस्य बैन्दवस्थानं प्रत्यङ्गत्वात्, बैन्दवस्थानस्य प्रधानत्वात्, प्रधाने गुणस्यान्तर्भावात् तदन्तर्भाव उक्त इति रहस्यम् । ‘भृतकाः’ इत्यस्यार्थः—भृतकाः भृत्याः द्रुहिणहरिरुद्रेश्वराः । एतच्च ‘गतास्ते मञ्चत्वं द्रुहिण....’ इत्यादिश्लोकव्याख्यानावसरे वक्ष्यते । ‘शिवार्कमण्डलं भित्त्वा’ इत्यस्यायमर्थः—शिवा नाम शक्तिः कुण्डलिनी अर्कमण्डलं हृत्कमलोपरि स्थितं भित्त्वा भिन्नं कृत्वा अवयुत्य आच्छाद्येत्यर्थः । अर्कमण्डलोपरि स्थितं ब्रह्मद्वारं पिधाय सहस्रकमलान्तःस्थितमिन्दुमण्डलं दशति द्रावयति । अत एव कुलयोषित् कुण्डलिनीशक्तिः कुलं कुलमार्गं सुषुम्नामार्गं त्यक्त्वा तत्रैवेन्दुमण्डले आस्थाय परं वर्षणं उत्कृष्टवर्षणं द्विसप्ततिसहस्रनाडीषु प्रवर्षणम्; कृत्वेति शेषः । सा कुण्डलिनी पुनः स्वस्थानमेत्य स्वाधिष्ठानं प्राप्य स्वपितीति तात्पर्यम् । शिवादीनां मञ्चत्वोपधानत्वपतद्ग्रहत्वावस्थापन्नत्वं कामरूपत्वाद्देवानामत्यन्तासन्नसेवार्थं घटते । इममेवार्थं संक्षेपेणोक्तवान्सदाशिवः—‘सुधाब्धौ नन्दनोद्याने रत्नमण्टपमध्यगाम् । बालार्कमण्डलाभासां चतुर्बाहां त्रिलोचनाम् ॥ पाशाङ्कुशशरांश्चापं धारयन्तीं शिवां श्रियम् । ध्यात्वा च हृद्गतं चक्रं व्रतस्थः परमेश्वरीम् ॥ पूर्वोक्तध्यानयोगेन चिन्तयन् जपमाचरेत् ।’ इति । अनेन ‘क्वणत्काञ्चीदामा’ इति, ‘सुधासिन्धोर्मध्ये’ इति श्लोकद्वयमेकीकृत्य व्याख्यातमित्यवगन्तव्यम् ॥ ८ ॥

## सौभाग्यवर्धनी

ध्यानमुक्तम्; कुत्र ध्येयाऽहमित्यत आह—**सुधासिन्धोरिति** । अमृताम्बुधिमध्ये कल्पवृक्षवाटिकावृते कदम्बोपवनयुते नवरत्नखचितद्वीपे चिन्तामणिघटितकुड्यस्तम्भप्राकारतोरणादिमण्डितगृहे शिवाकारभाजि मञ्चे, सदाशिव एव मञ्चीभूत इत्यर्थः । तथा मञ्चचरणीभूतविधिहरिरुद्रेश्वरविलसिते मञ्चीभूते सदाशिवे परमासने परमशिवपर्यङ्कनिलयां परमशिवः गुणातीतः सकलप्रपञ्चसाक्षी सच्चिदानन्दसुन्दरः त्वदपेक्षया पर्यङ्कतां प्राप्त इत्यर्थः । तत्र निषण्णां त्वां धन्याः कतिपये पश्चिमजन्मानः

व्यानोदानसमानाख्या मुख्यप्राणाः, नागकूर्मकृकरदेवदत्तधनंजयोपप्राणाश्च; नितरां पाति शरीरमिति वा नीपाः पूर्वोक्ता इन्द्रियाधिष्ठानदेवताश्च, तैरुपवनवति उद्यानवनयुक्ते। संकल्पविकल्पात्मकत्वात् चिन्तारूपं आत्माधिष्ठानत्वान्मणिवत्प्रकाशमानत्वान्मणिरूपं च गृहं गुहात्वेनोपनिषद्भिर्निरुक्तं हृदयपुण्डरीकं यस्मिंस्तस्मिन्। 'यद्वा,' चिन्तामणीनामिष्टार्थवितरणप्रवणतया --चिन्तामणिरूपाणाम्। 'श्रीपर्वतः शिरःस्थाने केदारस्तु ललाटके। वाराणसी महाप्राज्ञा भ्रुवोर्घ्राणस्य मध्यमे॥ भ्रुवोर्घ्राणस्य यः संधिरिति जाबालिका श्रुतिः। कुरुक्षेत्रं कुचस्थाने प्रयागो हृत्सरोरुहे॥ चिदम्बरं तु हृन्मध्यमाधारः कमलालयः।' इति पुराणोक्तानां श्रीपर्वतादीनां पुण्यक्षेत्राणां गृहे निवासस्थाने शिवाकारे सकलदेवतावासत्वात् शिवात्मके, अत एव मञ्चे पूज्ये तदात्मतया भावनार्हे इत्यर्थः। सुष्ठु दधाति शरीरमिति सुधः, मूलाधारः पादेन्द्रियं वा, उभयाभावे शरीरधारणाभावात्। आ समन्तात्सेधति सिञ्चति नाडीमार्गमिति आसिन्धुः, शिरःस्थितश्चन्द्रः; सुधसहितस्य आसिन्धोः पादशिरसोर्मध्ये मध्यभागे परमशिवः अतिकल्याणरूपमनाहतं चक्रम्, तदेव पर्यङ्कः स निलयो यस्यास्तां नित्यं हृत्कमलवासिनीं चिदानन्दलहरीं त्वां कतिचनाध्यात्मे सेवन्त इति प्रतिपाद्यप्रतिपादकसंवलितार्थः॥ ८॥

## आनन्दगिरीया

अत्रारभ्य श्लोकत्रयेण कुण्डलिनीं स्तौति **सुधासिन्धोरिति**। हे परमेश्वरि, मातः धन्याः केचन त्वां भजन्ति। कुत्रेत्यत आह - सुधासिन्धोरित्यादि। अमृतसागरमध्ये यो मणिद्वीपः कल्पवृक्षवाटीपरिवृतः, तत्र चिन्तामणिनिर्मितं गृहं शालाप्राकारतोरणापवरकवेदिकायुक्तं परितः प्रफुल्लकदंबवनवायुसुरभीकृतं, तत्र गृहे समीचीनयथोचितवेदिकायां श्रीचक्रमालिख्य तत्र श्रीचक्रमध्ये यः त्रिकोणाकारः श्रीकण्ठः सदाशिवो मञ्चत्वेन ध्येयः, तस्य च ब्रह्मविष्णुरुद्रमहेश्वराः चत्वारो देवाश्चरणत्वेन ध्येयाः। तन्मध्ये यो बिन्दुः स सदाशिवः परमः शिवपर्यंकत्वेन ध्येयः, तत्र निलयः स्थानं यस्याः, एतादृशीं त्वां पञ्चदशाक्षरया लोपामुद्राविद्यया भजन्ति, ध्यायन्ति धन्याः एवं भजन्तीत्यर्थः। कीदृशीं त्वां चिदात्मनः संयोगे प्रादुर्भूतानन्दलहरीं इति। अयं तु सांप्रदायिकोऽर्थः। परे तु समुद्रद्वीपकल्पद्रुमादीन् वाग्भवकामराजादिबीजपूर्वकचतुर्थ्यन्ततत्तन्नाममन्त्रैश्चत्वारिंशद्भिस्तान् पूजयेत् इति। तदस्मत्संप्रदायाननुसारित्वात्प्रपञ्चसारादावदृष्टत्वात् अस्माभिर्न लिखितम्। पूजाविधिस्तु षोडशोपचारैः चतुर्गुणितैः वर्तेत इति विशेषः। अत्रारभ्य रहस्यार्थः - सुधेति शरीराभ्यन्तरे, चतुर्दशकमले मणिद्वीपे मूलाधारे नीपोपवनवति। चिन्तामणिः शिवलिङ्गः। तद्गृहे स्वयंभूलिङ्गाधिष्ठाने गुणत्रयात्मकस्वयंभूलिंगे पीठे शिवः प्रकाशः, तत्पर्यंकगतां कोटिसूर्यप्रतीकाशामिति प्रतिपादितत्वात्। चिदानन्दलहरीमेव त्वां कुण्डलिनीं स्तुवन्तीति। तथा च कुण्डलिनीचिन्तनपरस्य सर्वं ज्ञायेतेति भावः। एवंभूतां चिन्तयतः किं न स्यात्॥ ८॥

## तात्पर्यदीपिनी

भगवत्या मुख्यमंगध्यानं अवगतमेव। तदावासभूतसमुद्रद्वीपनगरमन्दिरशय्यासनादिकं यावन्नोपदिश्यते, तावत् ध्यातॄणां ध्यानसंपत्तिः कुत इत्यत आह—**सुधासिन्धोरिति** - हे मातः कतिचन विरलाः तत्रापि धन्याः कृतपुण्यपुञ्जाः त्वां-चिदानन्दलहरीं, चित् ज्ञानं, आनन्दः निरतिशयसुखं, तयोः लहरीं त्वां भवतीं, भजन्ति सेवन्ते। भजनस्थानमाह - किंविधां त्वां ? सुधासिन्धोः अमृतसमुद्रस्य, मध्ये अन्तरालप्रदेशे, सुरविटपिवाटीपरिवृते सुराणां विटपिनः कल्पवृक्षाः, तेषां वाटी वनं, तया परिवृतं वेष्टितं तस्मिन्, मणिद्वीपोपवनवति, नीपानां कदंबवृक्षाणां उपवनानि उद्यानानि यस्मिन्, तथोक्ते कदम्बोद्यानसंपन्ने, चिन्तामणिगृहे चिन्तामणिनिर्मितगृहे, तस्याभ्यन्तरवर्तिनि शिवाकारे ब्रह्मविष्णुरुद्रेश्वराख्यैः चतुर्भिः शिवैः मञ्चपादचतुष्टयतामापन्नैः, परमशिवेन सदाशिवाख्येन मञ्चोपरिफलकाकारधारिणा उत्तानशायिना साञ्जलिना संपन्ने मञ्चे खट्वायां तदुपरि स्थितस्य परमेश्वरस्य कामेश्वरस्य समानरूपवर्णायुधालंकारवस्त्रमाल्यादियुक्तस्य सर्वाकारसमानस्य पुंस्त्वप्रख्यापकश्मश्रवादिमात्रभिन्नस्य भगवतः पर्यंके निलयो यस्याः सा तथोक्ता ताम्। अनेन श्लोकेन अमरसुधानिधिसिन्धुनानावृक्षमहीधरादयः, सुरविटपिशब्देन कल्पवृक्षवाटिकादयः, मणिद्वीपशब्देन नवरत्नशालादयः नीपोपवनशब्देन श्यामलांभः, चिन्तामणिगृहशब्देन चतुर्द्वाराणिमादिचक्रादयः शिवाकारमञ्चशब्देन बिन्दुस्थानमध्यवर्तिमहामञ्चजवनिकावितानादयः सर्वेऽपि चतुश्चत्वारिंशन्मन्दिरमन्त्रवाच्याः ध्वनिताः ते मन्त्राः पद्धतिभ्योऽवगन्तव्याः ॥ ८ ॥

## पदार्थचन्द्रिका

एवं भवानीं संप्रार्थ्येदानीं तस्या बहिरंगध्यानमाह—**सुधासिन्धोरिति**। हे हिमगिरिसुते, धन्याः प्राचीनानेकजन्मोपार्जितपुण्यपुञ्जशुद्धान्तःकरणास्ते च कतिचन कतिपयास्त्वां भजन्ते सेवन्ति ध्यायन्तीत्यर्थः। भवानीं विशिनष्टि-सुधासिन्धोर्मध्ये, तत्रापि मणिद्वीपे, तत्रापि चिन्तामणिगृहे, तत्रापि मञ्चे स्थितो यः परमशिवपर्यङ्कः आस्तरणरूपः सदाशिवः स निलय आश्रयो यस्यास्ताम्। अत्र मध्य इत्येवमादि सप्तम्यन्तपदचतुष्टयं व्यधिकरणं द्रष्टव्यम्। सुधा अमृतं तस्य सिन्धुः क्षीरसागरः, तस्य मध्ये। मणिद्वीपं विशिनष्टि-सुरेति। सुरविटपिनः कल्पवृक्षाः, तेषां वाटी, उपवनं तेन परिवृते। चिन्तामणिगृहं विशिनष्टि-नीपेति। नीपानामुपवनं तद्विद्यते यस्मिंस्तथा तस्मिन्। अत्र निपात्ययोगाभिप्रायेण मतुप्प्रयोगः। अन्यथा बहुव्रीहिणैव नीपोपवनसंबन्धेन मतुपो वैयर्थ्यं स्यात्। चिन्तामणिनिर्मितं गृहं चिन्तामणिगृहं, तस्मिन् मञ्चे उपवेशनस्थाने। तद्विशिनष्टि - शिवाकारे द्रुहिणहरिरुद्रेश्वरमयत्वान्मंगलरूपे। ध्येयस्य भवानीस्वरूपस्यानन्दरूपतामाहचिदिति। चिच्चासौ आनन्दश्च चिदानन्दो ब्रह्म, तस्य लहरीव लहरी ताम्। लहरीशब्देनात्रैवं

ध्वनितम् । यथा समुद्रलहरी, भिन्नत्वेन प्रतीयमानापि भवानी परमार्थतो न भिन्ना, किन्तु ब्रह्मैव । अथवा चितः शास्त्रजन्यानि ज्ञानानि, आनन्दा विषयसुखानि, तेषां लहरी परंपरा यस्याः सा ताम् । यद्वा चित् ब्रह्मान्तःकरणवृत्तिः, आनन्दाः तद्भक्तिजन्यानि सुखानि, तेषां लहरी यस्याः सा ताम् ॥ ८ ॥

## डिण्डिमभाष्यम्

भगवत्या मुख्यमङ्गलध्यानमवगतमेव । तत्सदानासभूतसमुद्रद्वीपनगरमन्दिरशय्याऽऽसनादिकं यावन्नोपदिश्यते तावद् ध्यातॄणां ध्यानसम्पत्तिः कुत इत्याशङ्क्याह - **सुधासिन्धोरिति** । सुधासिन्धोरमृतसमुद्रस्य मध्ये अन्तरालप्रदेशे, सुरविटपिवाटीपरिवृते दिव्यकाननवृक्षवेष्टिते, मणिद्वीपे रत्नमयान्तरीपे ; पुनः किम्भूते ? नीपोपवनवति कदम्बोद्यानसम्पन्ने, तन्मध्यस्थिते देवमणिनिर्मितमन्दिरे ; ततोऽन्तर्वर्तिनि शिवाकारे ब्रह्मविष्णुरुद्रेश्वराख्यैः चतुर्भिः शिवैर्मञ्चपादचतुष्टयतामापन्नैः पञ्चमशिवेन सदाशिवाख्येन मञ्चोपरिफलकाकारिणा उत्तानशायिना साञ्जलिना सम्पन्ने मञ्चे खट्वायां तदुपरि स्थितस्य परमशिवस्य कामेश्वरस्य स्वसमानरूपवर्णायुधालङ्कारवस्त्रमाल्यादियुक्तस्य सर्वाकारसमानस्य पुंस्त्वप्रख्यापनमात्रलक्षणभिन्नस्य भगवतः पर्यङ्के निलयो निवासो यस्याः सा तथोक्तां तां चिदानन्दलहरीरूपां सच्चिदानन्दप्रवाहलक्षणमयीं, त्वां भगवतीं, कतिचन ध्यायिनः पुण्यजन्मानो, भजन्ति सेवन्ते । अनेन श्लोकेनारम्भे सुधानिधिः सिन्धुः नानावृक्षमहोद्यानादयः, सुरविटपिशब्देन कल्पवाटिकादयः, मणिद्वीपशब्देन चतुर्द्वाराणिमादिचक्रादयः, नीपोपवनशब्देन बिन्दुस्थानमध्यवर्तिमहामञ्चजवनिकावितानादयः सर्वेऽपि चतुश्चत्वारिंशन्मन्दिरमन्त्रवाच्यादयो ध्वनिताः । तदुक्तं महायोगपद्धतौ, तत्र मन्त्रा एते—
"अमृताम्भोनिधये नमः, रत्नद्वीपाय नमः, नानावृक्षमहोद्यानाय नमः, कल्पवाटिकायै नमः, हरिचन्दनवाटिकायै नमः, सन्तानवाटिकाय नमः, पारिजातवाटिकायै नमः, कदम्बवनवाटिकायै नमः, पुष्परागरत्नप्राकाराय नमः, पद्मरागरत्नप्राकारायः नमः, गोमेधरत्नप्राकाराय नमः, वज्ररत्नप्राकाराय नमः, इन्द्रनीलरत्नप्राकाराय नमः, मुक्तारत्नप्राकाराय नमः, मरकतरत्नप्राकाराय नमः, विद्रुमरत्नप्राकाराय नमः, माणिक्यरत्नप्राकाराय नमः, सहस्रस्तम्भमण्डपाय नमः, अमृतवापिकायै नमः, आनन्दवापिकायै नमः, बालातपोद्गाराय नमः, चन्द्रिकोद्गाराय नमः, महाशृङ्गारपरिघायै नमः, महापद्माटव्यै नमः, चिन्तामणिगृहराजाय नमः, पूर्वाम्नायमयपूर्वद्वाराय नमः, उत्तराम्नायमयोत्तरद्वाराय नमः, दक्षिणाम्नायमयदक्षिणद्वाराय नमः, पश्चिमाम्नायमयपश्चिमद्वाराय नमः, रत्नप्रदीपवलयाय नमः, महासिंहासनाय नमः, ब्रह्ममयैकमञ्चपादाय नमः, विष्णुमयैकमञ्चपादाय नमः, रुद्रमयैकमञ्चपादाय नमः, ईश्वरमयैकमञ्चपादाय नमः, सदाशिवमयमञ्चफलकाय नमः, हंसतूलतूलिकायै नमः, हंसतूलमहोपधानाय नमः, कौस्तुभास्तरणाय नमः, महावितानकाय नमः, महाजवनिकायै नमः, इति । एते सर्वत्र नमोन्ता वाङ्मयकमलापुरःसरा मन्दिरमन्त्राः" एतेन श्लोकेन सूचिता भवन्ति ।

'भजन्ति त्वाम्' इत्यत्र भजनं नाम पूजनम्। तच्च चतुःषष्ट्युपचारात्मकम्। तच्च भगवत्याः श्रीसुन्दरीभट्टारिकाया असाधारणचिह्नं, नान्यासां देवतानाम्। अन्यासान्तु कासाञ्चित् पञ्चोपचाराः, कासाञ्चित् षोडशोपचाराः, ततोऽप्यधिकानां कासाञ्चिच्चतुर्विंशत्युपचाराः। सर्वदेवताचक्रसिंहासनाधिरूढायाः श्रीललितामहाभट्टारिकायाश्चतुःषष्ट्युपचाराः कर्तव्याः तन्मन्त्राश्चतुःषष्टिप्रकारा आगमशास्त्रप्रसिद्धा लिख्यन्ते—"आवाहनानन्तरं पाद्यं कल्पयामि नमः, अर्घ्यं कल्पयामि नमः, इति क्रमेण आभरणावरोपणं, सुगन्धितैलाभ्यङ्गम्, मज्जनशालाप्रवेशनम्, मञ्चमण्डपमणिपीठोपवेशनं, दिव्यस्नानार्थमुद्वर्तनमुष्णोदकस्नानं, कनककलशच्युततीर्थाभिषेकः, धौतवस्त्रपरिमार्जनम्, अरुणदुकूलपरिधानम्, अरुणदुकूलोत्तरीयम्, आलेपनमण्डपप्रवेशनम्, आलेपनमण्डपमणिपीठोपवेशनम्, चन्दनागुरुकुङ्कुमशङ्कुमदमृगमदकर्पूरकस्तूरीगोरोचनादिदिव्यगन्धेन सर्वविलेपनं केशभारस्य कालागरुधूपं, मल्लिकामालतीजातीचम्पकाशोकशतपत्रपूगकुड्मलीपुन्नागकह्लारमुख्यसर्वर्तुकुसुममालां, भूषणमण्डपप्रवेशनम्, भूषणमण्डपमणिपीठोपवेशनम्, नवमणिमुकुटं, शशिशकलसीमन्तसिन्दूरतिलककरणं, कालाञ्जनं, नीलीयुगलं, नासाभरणम्, अधरयावकं, प्रथमभूषणं, कनकचिन्ताकं, पदकं, महापदकं, मुक्तावलीम्, एकावलीछन्नकेयूरयुगलचतुष्टयं, वलयावलिम्, ऊर्मिकावलीम्, काञ्चीदाम, कटीसूत्रम्, सौभाग्याभरणम्, पादकटकम्, रत्ननूपुरम्, पादाङ्गुलीयकम्, एककरे पाशम्, अन्यकरे अङ्कुशम्, इतरकरे पुण्ड्रेक्षुचापम्, अपरकरे पुष्पबाणान्, श्रीमणिमाणिक्यपादुके स्वसमानवेषाभिरावरणदेवताभिः सह महाचक्राधिरोहणम्, कामेश्वराङ्कपर्यङ्कोपवेशनम्, अमृतासवचषकम्, आचमनीयम्, कर्पूरवीटिकाम्, आनन्दोल्लासविलासहासम्, मङ्गलारार्तिकम्, छत्रचामरयुगलम्, दर्पणतालवृन्तम्, गन्धपुष्पम्, धूपदीपनैवेद्यम्—कल्पयामि नमः; इति चतुःषष्ट्युपचारमन्त्राः।" एतैर्यत्पूजनम् तद्भावनापूर्वकम्, तदेव भगवत्या भजनमिति भजन्तीति क्रियापदनिर्देशस्यार्थः इत्यलमतिप्रसङ्गेन ॥ ८ ॥

## गोपालसुन्दरी

**सुधासिन्धोः**रमृताम्बुधेर्मध्ये, सुरविटपिनां कल्पवृक्षाणां या वाटी तयाः परिवृते वेष्टिते, मणिद्वीपे नवरत्नरचितद्वीपे, नीपोपवनवति कदम्बारामरमणीये, चिन्तामणिगृहे चिन्तामणिरत्नरचितकुड्यस्तम्भादियुक्तमन्दिरे, शिवाकारे मञ्चे शिवानां ब्रह्मविष्णुरुद्रेशानामाकारो मूर्तिर्यत्र तादृशे मञ्चे खट्वारूपे, परमशिवः सदाशिव एव पर्यङ्ककशिपुतया स्थितः तस्मिन् निलयोऽवस्थानं यस्यास्ताम्। "ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः। एते पञ्च महाप्रेताः पादमूले व्यवस्थिताः ॥" इति वचनात्। तदुक्तं रुद्रयामले—"यस्य नो पश्चिमं जन्म न स्वयं यो महेश्वरः। स न प्राप्नोति परमां दशपञ्चाक्षरीमिमाम् ॥" इति। एतादृशीं त्वां कतिचन धन्याः पश्चिमजन्मानः स्मरन्ति। "सृष्टिचक्रं सुधासिन्धुः सौभाग्यं सुरवाटिकाः। दशारयुगलं रत्नद्वीपं नीपवनं तथा ॥ चिन्तामणिगृहं रम्यमष्टारं

परमेश्वरि। त्रिकोणं मञ्चरूपं तु बिन्दुकं च सदाशिवः॥" इति वचनादर्थो वा। अथ च सुधासिन्धुरासवसमूहः सुरविटपिकुलवृक्षः भूषारूपो मणिरेव द्वीपो यत्र नीपोपवनः। चिन्तैव मणिर्यस्मात् तादृशे गृहे अवलरूपे, शिवाकारे वराङ्गरूपे, परमशिवो बिन्दुः, चिदानन्दलहरीं सर्वेषामानन्दानामित्यादि श्रुत्युक्तरूपामित्यर्थः। पर्यालोचनया पञ्चमयागोऽन्यत्र सूचितः। कीदृशीं चिदानन्दलहरीं विज्ञानसुखतरङ्गात्मिकामित्यर्थः। शिव एकारस्तेन त्रिकोणं परमशिवो बिन्दुः। श्रीचक्रान्तर्गतत्रिकोणमध्यनिलयामित्यर्थ इत्यपि वदन्ति।

**विष्णुपक्षे**—नीपोपवनवति बृन्दावनेऽपि तत्सत्त्वात् सौन्दर्यातिशयने शिवमप्याकारयतीति, शिवाकारे कल्याणरूपे वा मञ्चे खट्वायां, हे परमशिव परमकल्याणस्वरूप! पर्यङ्कनिलयां चिदानन्दलहरीरूपां त्वां कतिचन पुरुषा भजन्तीत्यर्थः॥ ८॥

## आनन्दलहरीटीका

विशेषान्तरमप्याह—**सुधेति**। सुधासिन्धोः अमृतसमुद्रस्य मध्ये, सुरविटपिनां देववृक्षाणां या वाटी, तया परि सर्वतो वृते मणिद्वीपे जलमध्यस्थतटप्रदेशे नीपानां कदम्बानामुपवनं आरामः क्रीडावनं तद्वति, चिन्तामणिरूपरत्ननिर्मिते गृहे मञ्चे खट्वायां, कीदृशे? शिवानां ब्रह्मविष्णुरुद्रेश्वराणामाकारा मूर्तयः, पादचतुष्टयरूपेण वर्तन्ते यत्र, तादृशे। परमशिवः सदाशिव एव पर्यङ्कः पादचतुष्टयोपरिस्थितफलकरूपः, तत्र निलय आसनं यस्याः सा तथा, ताम्। तदुक्तं तन्त्रे—"ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः। एते पञ्च महाप्रेताः"। महाप्रेतत्वं नाम महावीरत्वम्। प्रेताः प्रकर्षेण इताः देवीशरीरसंसर्गातिशयं प्राप्ताः। भट्टारिकया देव्या कामेश्वरांगेन संगः। कामेश्वरस्य शिवेन संगः, सदाशिवस्य मञ्चस्थमध्यफलकतां प्राप्तस्य, मञ्चेषु खट्वापादमूले व्यवस्थिता इति। पुनः कीदृशीं—चिदानन्दलहरीं ज्ञानसुखयोस्तरङ्गाकृतिम्। अथवा सकलश्रीविद्यामन्त्रनिदानभूतकामेशीबीजस्वरूपां च। चिदानन्दपदेन कामपरेण ककारो लभ्यते। अन्यवर्णानां स्वरूपपरिग्रहः। तदुक्तं ज्ञानार्णवे—"सकला भुवनेशानी कामेशीबीजमुद्धृतम्। अनेन सकला विद्याः कथयामि वरानने" इति। कतिचन अनिर्वचनीया धन्याः। त्वत्कृपया श्लाघनीयाः एतादृशीं त्वां भजन्तीत्यन्वयः॥ ८॥

**महीं मूलाधारे कमपि मणिपूरे हुतवहं**
**स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि।**
**मनोऽपि भ्रूमध्ये सकलमपि *भित्वा कुलपथं**
**सहस्रारे पद्मे सह रहसि पत्या विहरसे॥ ९॥**

---

* जित्वा कुलपथं, भित्वाऽऽकुलपथं.

மஹீம் மூலாதாரே கமபி மணிபூரே ஹுதவஹம்
4 1 1 1 1
ஸ்திதம் ஸ்வாதிஷ்டானே ஹ்ருதி மருதமாகாச முபரி |
2 1 4 2 3 1 1 1
மனோபி ப்ரூமத்யே ஸகல மபி பித்வா குலபதம்
1 4 4 1 1 4 1 1 1 2
ஸஹஸ்ராரே பத்மே ஸஹ ரஹஸி பத்யா விஹரஸே ||
1 3 1 1

मूलाधार चक्रगत पृथिवी को, मणिपूरतत्व जलको,
स्वाधिष्ठानाधिष्ठित अग्नितत्व को, हृदयगतानिल को,
ऊपर के विशुद्ध में गगन तत्वको, भ्रुकुटीगत मनको ;
सब का भेदन कर कुलमार्ग पार कर सहसा सुखमन को,
सहस्रारकमल में अंततो गत्वा पहुंच परमपावन
करती हो विहार पति के सँग एकान्त में भूतभावना ! ॥

## लक्ष्मीधरा

महीं पृथिवीतत्त्वं, मूलाधारे मूले गुदस्थाने सर्वाधारभूतं चक्रं मूलाधारभूतमिति, तस्मिन् मूलाधारे। "सर्वाधारा मही यस्मात् मूलाधारतया स्थिता। तदभावे तु देहस्य पातस्स्यादुद्गमोऽपि वा॥" इति रुद्ररहस्ये। पृथिवीतत्त्वात्मकस्य मूलाधारस्याभावे देह ऊर्ध्वं वा गच्छेत्, अधो वा पतेदित्यर्थः। कं उदकतत्त्वम्। अपिशब्दः स्वाधिष्ठानोक्तवह्निं समुच्चिनोति। मणिपूरे मणिपूरचक्रे, यत्र स्थिता भगवती मणिभिः तत्प्रदेशं पूरयति, स देशो मणिपूरः। समयिनां आन्तरपूजावसरे तृतीयकमले नानाविधमणिगणखचितभूषणार्पणं देव्याः कर्तव्यमिति रहस्यम्। हुतवहं अग्नितत्त्वम्, स्थितं प्रतिष्ठितं, स्वाधिष्ठाने स्वाधिष्ठाननामके चक्रे, कुण्डलिन्याः भगवत्याः स्वयमधिष्ठाय (स्वेच्छयाधिष्ठाय) ग्रन्थिं कृत्वा अवस्थानं स्वाधिष्ठानम्। यथोक्तं योगदीपिकायां—"रुद्रग्रन्थिरयं शक्तेः स्वाधिष्ठानाग्रसीमनि" ॥ इति। यद्यपि आधारचक्रस्योपरि स्वाधिष्ठानं वर्णनीयं, तथापि आकाशादितत्त्वोत्पत्तिक्रममवलम्ब्य व्युत्क्रमेण मणिपूरचक्रवर्णनं कृतमित्यनुसन्धेयम्। एतच्च 'तवाज्ञाचक्रस्थम्' (३६ श्लोकः) इत्यादि-श्लोकषट्कव्याख्यानावसरे सम्यगुपवर्णितम्। हृदि हृदयाकाशे अनाहतनामनि चक्रे, अनाहतनादस्थानत्वात् अनाहतनामास्य। मरुतं मरुत्तत्त्वम्, आकाशं आकाशतत्त्वम्, उपरि पूर्वोक्तानामुपरि विशुद्धिचक्रे, शुद्धस्फटिकसङ्काशत्वात् विशुद्धिनामास्य। मनः मनस्तत्त्वम्, अपिशब्दः उक्तसमुच्चयार्थः, भ्रूमध्ये भ्रुवोरन्तराले आज्ञाचक्रे, अत्र आङ् ईषदर्थः, ज्ञा ज्ञानम्, ईषत् ज्ञानं यत्र जायते साधकानां भगवतीविषयम्। ब्रह्मग्रन्थिभेदनातिव्यग्रतया भगवत्या आज्ञाचक्रे क्षणमात्रावस्थानात् साधकानां

तटिल्लेखारूपेण अवभासनात् आज्ञाचक्रनामास्य। स्थितमिति लिङ्गव्यत्ययेन सर्वत्रानुषज्यते। सकलं सर्वम्। अपि समुच्चये। भित्त्वा कुलपथं सुषुम्नामार्गम्। सहस्रारे सहस्रदले पद्मे कमले सह मिलित्वा रहसि एकान्ते पत्या सदाशिवेन विहरसे क्रीडसे॥

अत्रेत्थं पदयोजना—हे भगवति, मूलाधारे महीं, कं मणिपूरे हुतवहमपि, स्वाधिष्ठाने हुतवहमेव, हृदि मरुतं, आकाशमुपरि, मनोऽपि भ्रूमध्ये आकाशमपि, स्थितमिति विभक्तिव्यत्ययेन सर्वत्रानुषज्यते। सकलं कुलपथमपि भित्त्वा सहस्रारे पद्मे रहसि पत्या सह विहरसे॥

अत्रेदमनुसंधेयम्—मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्ध्याज्ञात्मकानि षट् चक्राणि। एतानि पृथिव्यग्निजलपवनाकाशमनस्तत्त्वात्मकानि। तानि तत्त्वानि तेषु चक्रेषु तन्मात्रतयाऽवस्थितानि। तन्मात्रास्तु गन्धरूपरसस्पर्शशब्दात्मकाः। आज्ञाचक्रस्थितेन मनस्तत्त्वेन एकादशेन्द्रियगणः संगृहीतः। एवमेकविंशतितत्त्वानि प्रतिपादितानि। पत्या सह रहसि सहस्रपत्रे विहरसे इत्यनेन तत्त्वचतुष्टयं सूचितम्। तच्च मायाशुद्धविद्यामहेश्वरसदाशिवात्मकं तत्त्वचतुष्टयम्। एवं मिलित्वा पञ्चविंशतितत्त्वानि मायापर्यन्तानि मायया युक्तत्वात् प्राकृतानि। माया महेश्वरेण संयुक्ता सती तस्य जीवभावमापादयति। स जीवः प्राकृत एव। शुद्धविद्या तु सदाशिवेन युक्ता सती सादाख्या कलेति व्यवह्रियते। अतो भगवती चतुर्विंशतितत्त्वान्यतिक्रान्ता सदाशिवेन पञ्चविंशेन सार्धं विहरमाणा षड्विंशतत्त्वत्वमापन्ना परमात्मेति गीयते। एतदुक्तं भवति—सादाख्या कला पञ्चविंशेन सदाशिवेन मिलिता षड्विंशा भवति, मेलनस्य तत्त्वान्तरत्वात्। न चोभयोर्मेलनमुभयात्मकम्। तस्य तादात्म्यरूपत्वात् तत्त्वान्तरमेवेति रहस्यम्। यत्तु श्रुतिवाक्यम्—'पञ्चविंश आत्मा भवति' (तै. ब्रा. १. २. ६) इति, तत्तु सदाशिवतत्त्वप्रतिपादनपरम्, न मेलनपरमिति ध्येयम्। ननु (कथं) बैन्दवस्थानं श्रीचक्रस्य मध्यस्थितम्, शिवचक्राणां चतुर्णामुपरि शक्तिचक्राणां पञ्चानामधस्तादवस्थितत्वात्। सहस्रारपद्मस्य तु शिरःस्थितत्वात् सर्वेषामुपरि वर्तमानत्वात्, तस्य बैन्दवस्थानत्वं नोपपद्यत इति चेत्, निशम्यतां भागवतमतरहस्यम्—'चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः। शिवशक्तिमयं ज्ञेयं श्रीचक्रं शिवयोर्वपुः॥' इत्यादौ शक्तिचक्राणि त्रिकोणाष्टकोणदशारद्वितयचतुर्दशकोणात्मकानि पञ्च चक्राणि। शिवचक्राणि तु अष्टदलषोडशदलमेखलात्रितयभूपुरत्रयात्मकानीति। अतः शक्तिचक्राणां बाह्यतः शिवचक्राणि। शिवस्य शक्तिबाह्यत्वायोगात् तानि शिवचक्राणि बिन्दुरूपेणाकृष्य शक्तिचक्रान्तरे स्थापितानि। अत एव बिन्दुः शिवचक्रचतुष्टयात्मकः शक्तिचक्रेषु पञ्चसु व्यश्नुवान—समाप्त इति शिवशक्त्योरैक्यमिति केचित्॥

अन्ये तु—बिन्दुत्रिकोणयोरैक्यं, अष्टकोणाष्टदलाम्बुजयोः, दशारयुग्मषोडशदलाम्बुजयोः, चतुर्दशारभूपुरयोरैक्यम्। अनेन प्रकारेण शिवशक्त्योरैक्यमित्याहुः। अत्र बिन्दुशब्देन शिवचक्र-

चतुष्टयप्रतिनिधिभूतो वर्तुलाकारो लक्ष्यते, न तु चतुष्कोणमध्यवर्ती बिन्दुः। स तु सहस्रकमलान्तर्गतः आधारस्वाधिष्ठानदशदलप्रकृतिभूतः शिवशक्तिमेलनाविष्टतनुः सादाख्यं षड्विंशं तत्वम्। तेन सह नादबिन्दुकलानामैक्यं नास्ति, तस्य नादबिन्दुकलातीतत्वात्। एतच्च पुरस्तात्प्रपञ्चयिष्यते। अत एव सहस्रकमलान्तर्गतचन्द्रमण्डलमध्यवर्ती सुधासिन्धुरेव भगवत्या विहरणस्थानमिति 'सहस्रारे पद्मे सह रहसि पत्या विहरसे' इति 'सुधासिन्धोर्मध्ये' इति श्लोकद्वयस्यैक एवार्थ इति रहस्यम्। इममेवार्थं भैरवयामले चन्द्रज्ञानविद्यायां शिव आह पार्वतीम्—'चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः। नवचक्रैश्च संसिद्धं श्रीचक्रं शिवयोर्वपुः॥ त्रिकोणमष्टकोणं च दशकोणद्वयं तथा। चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च च॥ बिन्दुश्चाष्टदलं पद्मं पद्मं षोडशपत्रकम्। चतुरश्रं च चत्वारि शिवचक्राण्यनुक्रमात्॥ त्रिकोणे बैन्दवं श्लिष्टमष्टारेऽष्टदलाम्बुजम्। दशारयोः षोडशारं भूगृहं भुवनाश्रके॥ शैवानामपि शाक्तानां चक्राणां च परस्परम्। अविनाभावसंबन्धं यो जानाति स चक्रवित्॥ त्रिकोणमष्टकोणं च दशकोणद्वयं तथा। मनुकोणं चतुष्कोणं कोणचक्राणि षट् क्रमात्॥ मूलाधारं तथा स्वाधिष्ठानं च मणिपूरकम्। अनाहतं विशुद्ध्याख्यमाज्ञाचक्रं विदुर्बुधाः॥ तवाधारस्वरूपाणि कोणचक्राणि पार्वति। त्रिकोणरूपिणी शक्तिः बिन्दुरूपः शिवः स्मृतः॥ अविनाभावसंबन्धस्तस्माद्बिन्दुत्रिकोणयोः।' इति। इतः पूर्वम्—'अधोमुखं चतुष्कोणं शिवचक्रात्मकं विदुः' इत्यनुसारेण 'अधोमुखानि चत्वारि त्रिकोणानि शिवात्मकानि' इत्युक्तिः 'शिवचक्राणि बाह्यानि तद्रूपेणावस्थितानि' इत्येवंपरेति ध्येयम्॥

यद्वा, कौलमतानुसारेण अधोमुखानि चत्वारि त्रिकोणानि शिवात्मकानि, ऊर्ध्वमुखानि पञ्च त्रिकोणानि शक्त्यात्मकानि। कौलमते संहारक्रमेण लेखने नवत्रिकोणात्मकं श्रीचक्रम्। एतत्सर्वं 'चतुर्भिः श्रीकण्ठैः' इत्यादिश्लोकव्याख्यानावसरे वक्तव्यमपि 'सहस्रारे पद्मे सह रहसि पत्या विहरसे' इत्यत्रावश्यं वक्तव्यत्वात् उभयोपयोगितया अत्रैव किंचित्कथितम्। विस्तरस्तु तत्रैवावधार्यः॥ ९॥

## सौभाग्यवर्धनी

ध्यानं त्रिविधम्—स्थूलं सूक्ष्मं परं चेति। क्वणत्काञ्चीदामेति स्थूलध्यानमुक्तम्। चिदानन्दलहरीमित्यनेन परं ध्यानमुक्तम्। इदानीं सूक्ष्मध्यानमाह—**महीमिति**॥ षट् चक्राणि मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्ध्याज्ञाऽऽख्यानि क्रमेण पृथिव्यादिपञ्चमहाभूतानां मनसश्च स्थानानि। एतच्चक्रषट्कं कुलपथमित्युच्यते। तदुपरि शिरसि सहस्रदलमकुलपथमित्युच्यते। हे कुण्डलिनीस्वरूपे परमेश्वरि, महीं मूलाधारे भित्त्वा, चतुर्दलपद्मं महीस्थानं भित्त्वेत्यर्थः। स्वाधिष्ठाने कं जलं भित्त्वा षड्दलं भित्त्वा, मणिपूरे हुतवहस्थितिं दशदलं भित्त्वा; अत्र व्यत्ययेन योजना, स्वाधिष्ठानमणिपूरकयोः

शांभवमतानुसारेण संज्ञाव्यत्ययो वा। हृदि मरुतमनाहतं द्वादशदलं भित्त्वा, आकाशमुपरि कण्ठे विशुद्ध्याख्यं षोडशदलं भित्त्वा, भ्रूमध्ये मानसस्थाने द्विदलं भित्त्वा; एतच्चक्रषट्कं कुलपथमित्युच्यते; अकुलपथे सहस्रारे सहस्रदले रहसि पत्या परमशिवेन सह विहरसे। एतावता एवं सूक्ष्मध्यान-योगेनोपास्यमाना भूमित्यागादियोगसिद्धिं दिशसि। सहस्रदलेन संयुज्यमाना निर्वाणपदवीं दिशसीति भावः। तदुक्तं रहस्यसिद्धिसोपाने—कुण्डलिन्या महीभेदे योगी त्यजति मेदिनीम्। सलिलस्थानयोगेन जले चलति योगवित्॥ वह्नेर्भेदे जलमिव स्पृशत्यग्निं ज्वलच्छिखम्। मरुद्भेदे शीघ्रगतिर्याति क्रोशशतं क्षणात्॥ व्योमभेदे खे चरति मनोभेदे मनोगतिः। यत्र कामयते तत्र याति लोकत्रयेऽपि च॥ संयोजयञ्छिवपदे शिव एव प्रजायते। कर्ता हर्ता च सर्वत्र सुरासुरनमस्कृतः॥' इति। सूक्ष्मध्यानेन सूचितं कुण्डलिन्या भूमिकात्रयमुन्नेयम्। भूमिका अन्वयभूमिका प्रत्यावृत्तिभूमिकेत्यनेन पद्येनोक्ता॥ ९॥

## अरुणामोदिनी

एवं ध्यानप्रणालीमुपदिश्य योगशास्त्रप्रसिद्धकुण्डलिनीरूपत्वेन भगवतीं स्तौति—**महीमिति।** हे देवि आ समन्ताद्ध्रियते शरीरमनेनेति आधारः। मूले गुदस्थाने स्थित आधारो मूलाधारः। अथवा, मूलं सर्वेषां चक्राणामादिकारणम्; स चासावाधारश्च मूलाधारस्तस्मिन्, सर्वचक्राधारे चतुर्दलत्वेन कुण्डलिनीशक्तेर्नित्यनिवासत्वेन प्रसिद्धे मूलाधाराख्ये चक्रे, 'गुदलिङ्गा-न्तरे चक्रमाधाराख्यं चतुर्दलम्। अस्ति कुण्डलिनी ब्रह्मशक्तिराधारसंपुटे॥ आब्रह्मरन्ध्रमृजुतां नीतेयममृतप्रदा।' इति वचनात्। स्थितमिति नपुंसकस्य विभक्ति(लिङ्ग)विपरिणामेन सर्वत्रान्वयः। स्थितां तन्मात्रगन्धात्मना सूक्ष्मरूपेणावस्थितां महीं भुवं पृथिव्यप्तेजोवाय्वाकाशमनसामाद्यं पृथिवी-तत्त्वमित्यर्थः। मूलाधारे महीतत्त्वावस्थितिश्च रुद्ररहस्य उक्ता, 'सर्वाधारा मही यस्मान्मूलाधारतया स्थिता। तदभावे तु देहस्य पातः स्यादुद्गमोऽपि वा॥' इति। तथा मणिभिर्नानारत्नैः पूर्यते भूष्यते देवी अत्रेति, मूलाधारादुत्थापिताया देव्या मणिपूरकचक्रे भूषणैर्भूष्यत्वादिति मणिपूरे नाभिसंस्थे अन्वर्थनामनि दशदले चक्रे 'नाभौ दशदलं चक्रे मणिपूरकसंज्ञितम्' इति वचनात्। स्थितम्, तन्मात्र-रसात्मना सूक्ष्मरूपेणावस्थितं कं जलं तत्तत्वमित्यर्थः। तथा भगवत्याः शक्त्याः स्वयमात्मना सर्वा-कारत्वेन ग्रन्थिं कृत्वा अधिष्ठीयत इति वा, सुष्ठु अधिष्ठीयत इति वा स्वाधिष्ठानं मूलाधारोपरितनं षड्दलमग्नितत्त्वात्मकं कमलम्; 'स्वाधिष्ठानं लिङ्गमूले षट्पत्रं च क्रमस्य च' इत्यागमात्। तस्मिन् स्थितं रूपतन्मात्ररूपेण सूक्ष्मरूपेणावस्थितं हुतवहमग्नितत्त्वमित्यर्थः। अत्र यद्यपि, 'मूलाधारं तथा स्वाधिष्ठानं च मणिपूरकम्। अनाहतं विशुद्ध्याख्यमाज्ञाचक्रं विदुर्बुधाः॥' इत्यागमान्तर-पर्यालोचनया मूलाधारानन्तरं स्वाधिष्ठानमेव वक्तव्यम्, तथाऽपि 'आत्मन आकाशः संभूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी,' 'आपो वा अग्नेरायतनम्, 'अद्भ्योऽग्नि-

ब्रह्मतः क्षत्रं पृथिव्यप्तेजोवाय्वाकाशाः ’ इत्यादिश्रुतिसूत्रक्रममवलम्ब्य मणिपूरमुक्तवानिति ध्येयम् । किं चेदम्, ‘ तवाज्ञाचक्रस्थम् ’ इत्यादिश्लोकषट्कश्रौतक्रममवलम्ब्यावरोहणक्रमेणैव आत्माकाशमरुदग्निजलपृथिवीतत्त्वात्मकानि आज्ञाप्रभृतीनि कमलान्युपदिश्य ध्यानं निबध्नतां ‘ मनस्त्वं व्योम त्वम् ’ इति श्लोके, ‘ नरं ’ ‘ क्षितौ षट्पञ्चाशत् ’ इति श्लोके च तमेव क्रममुपदर्शयतां स्मृत्यपेक्षया श्रौतक्रमस्य प्राबल्यं प्रतिपादयतामाचार्याणामपि संमतमेवेत्यवगन्तव्यम् ॥

यत्तूक्तं रामकविना—नाभिलिङ्गमूलचक्रप्रसिद्धयोर्मणिपूरस्वाधिष्ठानशब्दयोः सामीप्यादन्योन्यपदवाच्यता मधुमाधवशब्दयोर्माधवमासयोरेवेति, तच्चिन्त्यम्, मूलाधारादिव्यवहारोच्छेदापत्तेः, मध्वादिशब्दानां वसन्तमासयोः कोशाप्रसिद्धेश्चेति, ‘ आचार्यतात्पर्यमपि अस्मदुक्तानुसारि ’ इत्यनन्तरोक्तिश्च चिन्त्या । तथा हृदि हृदयाकाशसंस्थिते द्वादशदले केनाप्यनाहतत्वादनाहतमित्यन्वर्थनामनि चक्रे । ‘ हृदयेऽनाहतं चक्रं शिवस्य प्रणवाकृति । पूजास्थानं तदिच्छन्ति दलैर्द्वादशभिर्युतम् ॥ ’ इति वचनात् । स्थितं तन्मात्रस्पर्शरूपेण सूक्ष्मात्मनाऽवस्थितं मरुतं वायुतत्त्वम् । तथा उपरि अनाहतचक्रादूर्ध्वप्रदेशे स्वप्रकाशे षोडशदले शुद्धस्फटिकवर्णतया विशुद्धिरित्यन्वर्थनामनि कण्ठस्थिते कमले । ‘ कण्ठे तु भारतीस्थानं विशुद्धिः षोडशच्छदम् ’ इति वचनात् । स्थितं तन्मात्रशब्दात्मना सूक्ष्मरूपेणावस्थितमाकाशतत्त्वं च । तथा भ्रुवोर्मध्यं तस्मिन् भ्रुवोरन्तरस्थद्विदले आ ईषज्ज्ञानं भगवतीविषयं साधकानां भवति क्षणमात्रावस्थायित्वाद्देव्यास्तत्रेति वा, आ समन्ताज्ज्ञायतेऽस्मिन्निति वाऽऽज्ञेत्यन्वर्थनामनि कमले । ‘ भ्रूमध्ये द्विदलं चक्रमाज्ञासंज्ञं प्रचक्षते ’ इति वचनात् । स्थितं ; मनो मनस्तत्त्वं चेति एतत्सकलं समस्तमपि मूलाधारादिचक्रस्थितपृथिव्यादिशब्दसंगृहीतानि भूततन्मात्रज्ञानेन्द्रियपञ्चकमनोमायाशुद्धविद्यामहेश्वरसदाशिवान्तं सर्वं तत्त्वजालं कमलद्विकद्विकोपरि स्थितं रुद्रविष्णुब्रह्मनामकं ग्रन्थित्रयं चेति तत्सर्वमित्यर्थः । कुलपथं सुषुम्नामार्गम् । षट् चक्राणि कुलपथमुच्यत इति केचित् । भित्त्वा साधककौशलवशादुत्थापिता भुजङ्गरूपा बिसतन्तुनिभा स्वयं सग्रन्थीनि षट् कमलानि निर्भिद्य निर्गच्छती सतीत्यर्थः । सहस्रमराणि दलानि यस्य तत् सहस्रारं सहस्रदलम्, तस्मिन् पद्मे ब्रह्मरन्ध्रसंस्थिते कमले । ‘ चक्रं सहस्रपत्रं तु ब्रह्मरन्ध्रसमन्वितम् ’ इति वचनात् । रहसि, एकान्ते, पत्या सह सदाशिवेन साकं, विहरसे क्रीडसि । योगवेदिना साधकेन सम्यग्वायुनिरोधान्मूलाधारादुत्थाप्य षट्कमलग्रन्थिभेदनपूर्वकं सहस्रारकमलमानीय तत्र शिवेन सह प्रापितविहारा योगशास्त्रप्रसिद्धा कुण्डलिनीशक्तिश्च भवत्येव नान्येत्यभिप्रायः । अत एवाहुराचार्याः— ‘ माया कुण्डलिनी क्रिया मधुमती ’ इत्यादिना । अत्रोक्तं वामकेश्वरतन्त्रे—‘ भुजङ्गाकाररूपेण मूलाधारं समाश्रिता । शक्तिः कुण्डलिनी नाम बिसतन्तुनिभा शुभा ॥ मूलकन्दं फणाग्रेण दष्ट्वा कमलकन्दवत् । मुखेन पुच्छं संगृह्य ब्रह्मरन्ध्रसमन्विता ॥ पद्मासनगतः स्वस्थो गुदमाकुञ्च्य साधकः । वायुमूर्ध्व-

गतिं कुर्वन्कुम्भकाविष्टमानसः ॥ वाय्वाघातवशादग्निः स्वाधिष्ठानगतो ज्वलन् । ज्वलनाघातपवनाघातैरुन्निद्रितोऽहिराट् ॥ रुद्रग्रन्थिं ततो भित्त्वा विष्णुग्रन्थिं भिनत्त्यथ । ब्रह्मग्रन्थिं च भित्त्वैव कमलानि भिनत्ति षट् ॥ सहस्रकमले शक्तिः शिवेन सह मोदते । सा चावस्था परा ज्ञेया सैव निर्वृतिकारणम् ॥' इति ॥ उपासकानां च, 'त्रिकोणमष्टकोणं च दशकोणद्वयं तथा । मनुकोणं च षट्कोणं कोणचक्राणि षट् क्रमात् ॥ मूलाधारं तथा स्वाधिष्ठानं च मणिपूरकम् । अनाहतं विशुद्ध्याख्यमाज्ञाचक्रं विदुर्बुधाः ॥' इत्यागमादुक्तचक्रषट्कमेव सुधासिन्धुरिति ; तदेव चन्द्रमण्डलम् । तत्रैव शिवयोर्विहारश्चेति रहस्यम् ॥ ९ ॥

## आनन्दगिरीया

बाह्यध्यानमुक्त्वा परमेश्वर्या महामायायाः कुण्डलिन्यास्तु ध्यानमाह — **महीमिति** । षट्चक्रम् । अथ परमेश्वर्याः कुण्डलिन्या भूमिकात्रयं, उत्पत्तिभूमिका लयभूमिका प्रत्यावृत्तिभूमिका चेति । तत्रोत्पत्तिभूमिकाध्यानमुच्यते महीमित्यादि । अत्रैवमागमप्रक्रिया । शरीरे षट्चक्राणि सन्ति मूलाधारस्वाधिष्ठानमणिपूरानाहताज्ञाविशुद्धयाख्यानि । तेषां स्थानानि—"गुदात्तु द्व्यंगुलादूर्ध्वं मेढ्राच्च द्व्यंगुलादधः । मूलाधारमिदं प्रोक्तं भूमिस्तत्र प्रतिष्ठिता । तदुपरि लिंगमूले स्वाधिष्ठानं, तत्र जलं तिष्ठति । तदुपरि नाभिमूले मणिपूरं, तत्र तेजः । तदुपरि हृदयेऽनाहतं, तत्र वायुः । तदुपरि कण्ठे आज्ञाचक्रं, तत्राकाशम् । तदुपरि, भ्रूमध्ये विशुद्धिचक्रं, तत्र मनः । अत्र प्रतिचक्रं कमलमप्यास्ते । मूलाधारे चतुर्दलपद्मं, स्वाधिष्ठाने षड्दलं, मणिपूरे दशदलं, अनाहते द्वादशदलं, आज्ञायां षोडशदलं, विशुद्धौ द्विदलम् । एवं चक्रषट्कमागमशास्त्रे कुलपथमिति परिभाषितम् । एतच्चक्रषट्कस्योपरि ब्रह्मरन्ध्रे निर्वाणचक्रम् । तत्र सहस्रदलकमलं, तस्य परिभाषा अकुलपद्मम् । तत्र केवलः परमात्मा सदाशिव आनन्दमयस्तिष्ठति । एवं स्थिते, मूलाधारचक्रे, महामाया कुण्डलिनीरूपेणोत्पद्यते । तत्र वर्तमानं चतुर्दलकमलाकारं भूमण्डलमतिक्रम्य, स्वाधिष्ठाने सूत्राकारेणागच्छति । तत्रापि षड्दलं जलचक्रमतिक्रम्य मणिपूरे गच्छति । तत्रापि दशदलं तेजश्चक्रमतिक्रम्यानाहते गच्छति । तत्रापि द्वादशदलं पवनचक्रमतिक्रम्य आज्ञाचक्रे गच्छति । तत्रापि षोडशदलचक्रमुलंघ्य भित्वा विशुद्धौ गच्छति । ततो द्विदलं भित्वा निर्वाणे सहस्रदले वर्तमानेन सदाशिवेन सह मिलित्वा लीना भवतीति क्रीडतीवोत्प्रेक्ष्यते । तेनोत्पत्तिलयभूमिके उक्ते । इति ध्यानमुपदिशन् स्तौति । मूलाधार इत्यादिना । छन्दोऽनुरोधेन स्वाधिष्ठानपदं प्राप्तं नोक्तं, किन्तु मणिपूरकं प्रोक्तम् । सकलमपि षट्चक्रमपि । योगशास्त्रे तत्तच्चक्रे वर्तमानभूम्यादिभेदेनास्य फलमप्युक्तम् । भूभेदे भूत्यागी समर्थो योगी भवति । जलभेदे जलात्मकः, तेजोभेदे वह्निरिव, वायुभेदे त्वरागतिः ; नभोभेदे खेचरः, स्वात्मनो भेदे स्वेच्छागतिः, निर्वाणभेदे सदाशिव इति । भूमित्यागादिसिद्धयोऽपि योगिनां भवन्ति । एवं सूक्ष्मान्तरं ध्यानमुक्तम् । अयमर्थस्तु

अस्माभिः श्रीगुरूपदिष्टमार्गेण कृतः। ननु कुलपथगामिनां कुलपथत्यागादि विरुद्धमिति चेत्सत्यम्। स्वस्वामिप्रेमपरतन्त्रमनसां स्वीयानामपि स्वाधीनपतिकानां पतिशुश्रूषादिकुलाचारमपि परित्यजन्तीनां सुस्निग्धसाधुसख्यादिसाहाय्ये न कोऽपि दोषः, तद्वदिति तदुक्तं भवेत्। देहलीं व्यतिक्रम्य भावरूपकुलपथमतिक्रम्यापि अभिसारन्यायेन स्वस्वामिसमीपोपसर्पणे न कोऽपि दोषस्तद्वदिति। तदुक्तं भरतेन "कान्ताभिसरणे स्वीया लज्जानाशादिशंकया। सत्रासचपलापांगतरंगितविलोचना। सुस्निग्धैक-सखीमात्रयुक्ता याति समुत्सुका। एषा प्रिये तु निद्राणे पार्श्वे तिष्ठति निश्चला। भावेन बोधयत्येनं शीतैः स्रग्दामचन्दनैः॥" इति। शब्दच्छलाश्रयणेऽपि न दोषः। कला शोभा। त्वन्महितं यथा स्यात्तथा विहरसीति। अत्र मूलविद्यायां मायात्रयं, तस्य द्वादश व्यञ्जनानि, द्वादश स्वराः, तेषामपि ....द्वादश। त्रिभिर्द्वादशभिः षट्त्रिंशज्जायते इति प्रतिचक्रं षट्कूटाक्षरदेवतापूजनमप्यान्तरयागांगं वदन्ति केचित्। पुनः, रहस्यार्थमाह-षट्चक्रेभ्यस्त्वामुत्थाप्य भाग्योदयादकुलारविन्दं प्रापयन्, गुरूपदिष्टविधिना षट्चक्रभेदक्रमेण शिरःसहस्रदलकमले ब्रह्मानन्दघने शिवे सामरस्यगतां, पुनस्तथैवा-वरोहक्रमेणान्तरेव त्वां चिन्तयतः किं न स्यात्॥ ९॥

## तात्पर्यदीपिनी

ननु अन्तर्यागबहिर्यागावुभावपि आगमप्रसिद्धौ। अन्तर्यागं विना बहिर्यागो न फलप्रद इति श्रूयते। तदन्तर्यागविधानं कथं न प्रकाशयत इत्यत आह-**महीमिति**। हे मातः, त्वं सहस्रारे सहस्रं अराः पत्राणि यस्य तत्, तस्मिन्, पद्मे रहसि अन्यागोचरे पत्या सदाशिवेन सह विहरसे क्रीडसे। किं कृत्वा? सकलमपि कुलपथं, कौ पृथिव्यां लीयते, तत्कुलं, तस्य पन्थाः संचरणमार्गः तं, शरीरसञ्चरणमार्गं भित्वा। शरीरे किं भेदितं तत्राह-मूलाधारे गुदस्थाने महीं पार्थिवचक्रं भित्वा। "गुदात्तु द्व्यंगुलादूर्ध्वं मेढ्रात्तु द्व्यंगुलादधः। मूलाधारमिति ज्ञेयं भूमिस्तत्र-प्रतिष्ठिता"। एवं प्रकारेण अन्येष्वपि स्थानेषु भित्वा उलंघ्य इति शब्दो योजनीयः। मणिपूरे मणिपूरकचक्रे, कं उदकतत्वमपि भित्वा, तदुपरि स्वाधिष्ठाने, स्वया अधिष्ठीयते तत्स्वाधिष्ठानं, तत्र चक्रे नाभौ, हुतवहस्थितिं हुतवहस्याग्नेः स्थितिमवस्थानं भित्वा। तदुक्तं योगदीपिकायां-"रुद्रग्रन्थिरियं शक्तेः स्वाधिष्ठानाग्रसीमनी"ति। यद्यपि मणिपूरशब्दो नाभिचक्रे प्रसिद्धः, स्वाधिष्ठानशब्दश्च लिंगमूले प्रसिद्धः, तथाप्यन्योन्यसामीप्यात् अन्योन्यपदवाच्यता मधुमाधवयोरिव प्रसिद्धा। तस्याः प्रसिद्धेः स्तोत्रकर्तुः प्रामाणिकचूडामणेः भगवतः शंकराचार्यस्य निर्देशादेव समूलता अंगीकर्तव्या। पुनः हृदि अनाहते स्थाने, मरुतं वायुचक्रं भित्वा, उपरि पूर्वोक्तानामुपरि विशुद्धिचक्रे, आकाशं आकाशतत्वं भित्वा। विशुद्धित्वमधिकसंकाशत्वात्। भ्रूमध्ये भ्रुवोरन्तराले आज्ञाचक्रे, मनः मनस्तत्वं भित्वा। अपि शब्दः समुच्चयार्थः। अत्रापि आज्ञाविशुद्धिचक्रयोः कण्ठकूपभ्रूमध्य-

वाचकता सामीप्यात् पूर्ववदेव अन्योन्यसाधारणी दृश्यते। अत्रेदमनुसन्धेयं - मूलाधार - स्वाधिष्ठान - मणिपूरक - विशुद्धयाज्ञात्मकानि षट्चक्राणि। एतानि पृथिव्यग्निजलपवनाकाशमनस्तत्वात्मकानि। तेषां तत्वानि तेषु तन्मात्रतया स्थितानि। तन्मात्रास्तु गन्धरूपरसस्पर्शशब्दात्मकाः आज्ञाचक्रस्थितेन मनस्तत्वेन एकादशेन्द्रियगणः संगृहीतः। एवं एकविंशतितत्वानि प्रतिपादितानि। पत्या सह रहसि सहस्रारे पद्मे विहरस इत्यनेन तत्वचतुष्टयं सूचितम्। तच्च माया - शुद्धविद्या - महेश्वर - सदाशिवात्मकं तत्वचतुष्टयम्। एवं मिलित्वा पञ्चविंशतितत्वानि प्रतिपादितानि ॥ ९ ॥

## पदार्थचन्द्रिका

इदानीमन्तरंगध्यानमाह - **महीमिति**। हे हिमगिरिसुते त्वं सकलं कुलपथं, कुलं षट्चक्रस्थमह्यादिसमूहः पन्था इव कुलपथः, तं भित्वा उलंघ्य, सहस्रारे सहस्रदले पद्मे, रहसि अन्यागम्ये सति, पत्या अधिकृतचैतन्येन शिवाख्येन सह विहरसि रमसे। कुलपथमेवाह - महीमिति। मूलाधारे आधारचक्रे स्थितां महीं, मणिपूरे चक्रे कं जलं, स्वाधिष्ठाने नाभौ स्थितं हुतवहं, हृदि अनाहतचक्रे स्थितं मरुतं, उपरि तदुपरि कण्ठे विशुद्धचक्रे आकाशं, भ्रूमध्ये आज्ञाचक्रे मनः। भित्वेति सर्वत्र संबध्यते। आकुलेति पाठे आकुलपथं विषमपथम्। अयमर्थः—अस्ति सद्योमुक्तिपक्षः क्रममुक्तिपक्षश्च। तत्र ज्ञानिनस्तु इहैव समवलीयन्ते। 'न तस्य प्राणा उत्क्रामन्तीति' श्रुतिप्रामाण्यात् इहैव मुक्ता भवन्ति। एवं देहेऽपि मह्याद्यावरणं भित्वा योगिनः सहस्रारे पद्मे वर्तमानं ब्रह्म प्राप्नुवन्तीति दर्शयितुं भवान्याः षट्चक्रभेदनपूर्वकपतिसहितरमणकथनम्। तत्तु तस्याः षट्चक्रभेदनहेतुकमेव स्वात्मरमणं नित्यशुद्धबुद्धस्वरूपत्वात्तस्याः। जित्वेति पाठे एक एवार्थः ॥ ९ ॥

## डिण्डिमभाष्यम्

ननु अन्तर्यागबहिर्यागावुभावपि प्रसिद्धौ अन्तर्यागं विना केवलं बहिर्यागः पूर्वोक्तः चतुश्चत्वारिंशन्मन्दिरचतुःषष्ट्युपचारमन्त्रयुक्तोऽपि न फलप्रद इति प्रसिद्धिः श्रूयते, तदन्तर्यागविधानं कथं प्रकाशत इत्याशङ्कायामाह—**महीमिति**।

मूलाधारे वर्तमानां महीं पार्थिवचक्रं जित्वा—"गुदात्तु द्व्यङ्गुलादूर्ध्वं मेढ्रात्तु द्व्यङ्गुलादधः। मूलाधारमिति प्रोक्तं भूमिस्तत्र प्रतिष्ठिता"। एवं प्रकारेणान्येष्वपि स्थानेषु जित्वा उलङ्घ्य इत्ययं शब्दो योजनीयः। मणिपूरे लिङ्गस्थाने कं जलचक्रं जित्वा। मणिपूरशब्दो यद्यपि नाभिचक्रे प्रसिद्धः। तथापि अन्योन्यसामीप्यादन्योन्यपदवाच्यता मधुमाधवमासयोरिव प्रसिद्धः। तस्याः प्रसिद्धेः तत्स्तोत्रकर्तुरिति प्रामाणिकचूडामणेर्भगवतः शङ्कराचार्यस्य निर्देशादेव समूलताङ्गीकर्तव्या। स्वाधिष्ठाने नाभिचक्रे स्थितं हुतवहमग्निचक्रं जित्वा उलङ्घ्य। हृदि अनाहतस्थाने मरुतं पवनचक्रं

जित्वा, उपरि गलरूपे आकाशं नभश्चक्रं जित्वा। अत्राप्याज्ञाविशुद्ध्योः कण्ठरूपभ्रूमध्यवाचकता सामीप्यात्पूर्ववदेवान्योन्यसाधारणी द्रष्टव्यताम्। आज्ञा विशुद्धिः, विशुद्धिराज्ञा, इत्युभयतः प्रसिद्धिर्दृश्यते। अथ विशुद्धिनाम्नि भ्रूमध्ये मनश्चित्तचक्रं जित्वा। एवं प्रकारेण सकलमपि कुलपथं शरीरचक्रमार्गं जित्वा। अकुलपथे सहस्रारे पद्मे-परंज्योतिःस्वरूपा त्वं परंज्योतिःस्वरूपेण श्रीकामेश्वरमहाभट्टारकेण सह सार्धं, पत्या भर्त्रा विहरसे क्रीडां करोषि। ननु भवदुक्तेषु मूलाधारादिस्थितभूतचक्रादिषु मूलमन्त्राक्षरजनिततत्तद्देवतापूजनं चेन्न स्यात्, तदा तत्तच्चक्रकथनमपि व्यर्थं स्यादित्याशङ्कायामुच्यते—अत्र सहस्रारशब्दो मूलाधारादिषु सर्वत्र सम्बध्यते। हस्रेण सह वर्तते इति सहस्राणि। सहस्राणि अराणि दलानि यस्य तत् सहस्रारम्। हं बीजरूपं महादेवं स्रावयन्ति द्रावयन्ति स्वात्मीकुर्वन्ति इति हस्राणि षट्त्रिंशत्सङ्ख्यानि विद्याक्षराणि, तेषां विद्याक्षराणां मूलाधारादिषु षोढा, तदक्षरादीनामपि शिष्टाः कल्पेश्वरादिदेवताः पूज्याः। तत्र मन्त्रा मूलाधारमहीचक्रे षट्—कं कल्पेश्वराय नमः, अं अनुगम्यम्बायै नमः, अं अनुग्रहेश्वरनाथाय नमः, इं इदङ्गमदनाथाय नमः, ईं ईड्यम्बायै नमः। अथ स्वाधिष्ठाने-ललिताम्बायै नमः, हं हतिगनाथाय नमः, रं रेचकनाथाय नमः, इं इंबम्बायै नमः, मं महःपितृनाथाय नमः। अथ मणिपूरे - हं हरिण्यम्बायै नमः, अं अन्तःकरणनाथाय नमः, सं सारसाम्बायै नमा, हं हरनाथाय नमः, रं रतिनाथाय नमः। आज्ञाचक्रे-ईं ईड्येतरनाथाय नमः, कं कनकदाम्रनाथाय नमः, मं मदनास्वादननाथाय नमः, सं सहादनाथाय नमः, अं अवलम्बनाथाय नमः, अं अम्बुगणनाथाय नमः। विशुद्धौ लं लमरेप्युनाथाय नमः, अं अवकाशनाथाय नमः, हं हठनाथाय नमः रं रटच्छर्दिनाथाय नमः, इं इति हर्यम्बायै नमः, मं महम्बायै नमः। अथ ब्रह्मरन्ध्रोपरि कुलस्थाने—षट्कोणोपरि सर्वतत्वकमलं विभाव्य समस्तशक्तितत्वनाथायै नमः, श्रीललितामहाभट्टारिकायै नमः, इति मन्त्रः। एवमेतेषु चक्रेषु मन्त्रावरणदेवतापूजनाख्योऽन्तर्यागः प्रकाशितः। चक्रावरणदेवतापूजनाख्यान्तर्यागस्तु क्षितौ षट्पञ्चाशदिति भाविनि श्लोके कथ्यते ॥९॥

## गोपालसुन्दरी

क्वणत्काञ्चीत्यादिना स्थूलध्यानं, चिदानन्दलहरीमित्यादिना परं ध्यानमुक्त्वा सूक्ष्मध्यानमाह— महीमिति। मूलाधारे चतुर्दले, महीं पृथिवीं स्वाधिष्ठाने जलं मणिपूरे नाभिचक्रे स्थितं तद्हुतवहं स्वाधिष्ठानमणिपूरयोः संज्ञाव्यत्ययः शान्तनवमतेनेति। हृदि अनाहते मरुतं, वायुमुपरि कण्ठे विशुद्धिचक्रे आकाशं, (भ्रूमध्ये आज्ञाचक्रे आकाशं), भ्रूमध्ये आज्ञाचक्रे मनः अन्तःकरणम्; एवं सकलमपि कुलपथं षट्चक्रं जित्वा सहस्रारे द्वादशान्ते कैलाससंज्ञके, पत्या कान्तेन शिवेन सह, रहसि एकान्ते विहरसीत्यर्थः। सिद्धिसोपाने, "कुण्डलिन्या सहाभेदे योगी त्यजति मेदिनीम्। सलिलस्थानयोगेन जले चरति योगवित्। वह्निभेदे जलमिव स्पृशत्यग्निं ज्वलच्छिखम्। मरुद्भेदे

शीघ्रगतिर्याति क्रोशशतं क्षणात् ॥ व्योमभेदे खे चरति मनोभेदे मनोगतिः । यत्र कामयते तत्र याति लोकत्रयेऽपि च ॥ संयोजयन् शिवपदे शिव एव प्रजायते । कर्ता हर्ता च सर्वत्र सुरासुर-नमस्कृतः॥'' इति सिद्धिविशेषोऽप्युक्तः। कुण्डलिनीरूपापि त्वमेवेति विष्णुपक्षेऽपि तात्पर्यम् ॥ ९ ॥

## आनन्दलहरी टीका

श्लोकाभ्यां स्थूलध्यानमुक्त्वा सूक्ष्मध्यानमाह - **महीमिति** - मूलाधारे चतुर्दलचक्रे महीं पृथ्वीं भित्वेत्यग्रतनेन संबन्धः। एवमग्रेऽपि। तदुक्तं—गुदात्तु द्व्यंगुलादूर्ध्वं मेढ्रात्तु द्व्यंगुलादधः। मूलाधार-मिति प्रोक्तं भूमिस्तत्र प्रतिष्ठिता '' इति। कं जलमपि मणिपूरे षड्दलचक्रे, हुतवहमग्निं स्वाधिष्ठाने दशदलचक्रे नाभौ स्थिते। यद्यप्यन्यत्र मूलाधारस्वाधिष्ठानमणिपूरेति नाभिपद्मस्य मणिपूरसंज्ञा, तथाऽप्यत्र, शैवकल्पे स्वाधिष्ठानमणिपूरयोः संज्ञावैपरीत्यमिति तथाऽभिधानम्। अत एवाग्रे षट्चक्र-वर्णनश्लोकषट्केऽपि तथैवाभिधास्यते। केचित्तु कमपि स्वाधिष्ठाने हुतवहं मणिपूरे स्थितमिति व्यवधानेन योजयन्ति। हृदि अनाहते द्वादशदले वायुं, उपरि कण्ठे विशुद्धिचक्रे षोडशदले आकाशं, भ्रूमध्ये आज्ञाचक्रे द्विदले मनो मानसं; एवं क्रमेण सकलमपि सर्वमेव कुलपथं षट्चक्ररूपं भित्वा प्रविश्य सहस्रारे शिरःस्थितसहस्रदलकमले रहसि निर्जने पत्या परशिवेन सह विहरसे एवं रूपेण ध्यातव्यासीत्यर्थः। एतद्-ध्यानसिद्धेः फलमुक्तं सिद्धिसोपाने—"कुण्डलिन्या महीभेदे योगी त्यजति मेदिनीम्। सलिलस्थानयोगेन जले चरति योगवित्। वह्निभेदे जलमिव स्पृशत्यग्निं ज्वलच्छिखम्। मरुद्भेदे शीघ्रगतिर्याति क्रोशशतं क्षणात्। व्योमभेदे खे चरति मनोभेदे मनोगतिः। यत्र कामयते तत्र याति लोकत्रयेऽपि च। संयोजयन् शिवपदे शिव एव प्रजायते। कर्ता हर्ता च सर्वत्र सुरासुरनमस्कृतः'' इति ॥ ९ ॥

**सुधाधारासारैश्चरणयुगलान्तर्विगलितैः**
**प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसः* ।**
**अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं**
**स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणि ॥ १० ॥**

ஸுதாதாராஸாரைஸ்சரணயுகலாந்தர்விகலிதை:
4 4 3 1 3 1

ப்ரபஞ்சம் ஸிஞ்சந்தீ புனரபி ரஸாம்னாய மஹஸ: ;
1 1 1 1 1 1

அவாப்ய ஸ்வாம் பூமிம் புஜகநிபமத்யுஷ்டவலயம்
4 4 3 4 4 1

ஸ்வமாத்மானம் க்ருத்வா ஸ்வபிஷி குலகுண்டே குஹரிணி.
1 1 1 1 1 1 3 1

---

* रसाम्नायमहसा

चरण युगल अंतर्विगलित अमृतधारावर्षण द्वारा
साधक-तन के नाडीमार्ग सहस्रद्विसप्तति का पूरा
सिंचन कर के, अमृतकिरण-नाडी से हो वापस मुड़कर,
सर्पाकृति कुंडली लगा निज गृह की ओर पुनः बढ कर
कमल-कंद रूपी उस मूलाधार चक्र के भीतर घुस,
सोती है कमलतंतु सा धर सूक्ष्म रूप भगवति बरबस ! ॥

## लक्ष्मीधरा

सुधाया अमृतस्य धाराणामासारैः संपातैः। अत्रासारशब्द एव धारासंपातवचन इति धाराशब्दसाहचर्यादासारशब्दः संपातमात्र इति न पौनरुक्त्यम्। यद्वा, सुधाया आधारभूता आसारा धारासंपाताः, तैः, चरणयुगलान्तर्विगलितैः चरणयुगलस्य पादारविन्दद्वितयस्य अन्तर्विगलितैः मध्यप्रदेशात् स्रवद्भिः, प्रपञ्चं द्विसप्ततिसहस्रसंख्याकनाडीमार्गं सिञ्चन्ती सेक्त्री, पुनरपि सेचनानन्तरमपि रसाम्नायमहसः चन्द्रसकाशात्। रसाम्नायमहःशब्दो यामलेषु कलानिधौ प्रसिद्धः; रसस्य सुधाया आम्नायो गुणानामाधिक्यमिति यावत्, तदात्मकं महः कान्तिर्यस्य सः रसाम्नयमहा इति व्युत्पत्तेः। अवाप्य प्राप्य स्वां स्वकीयां भूमिं आधारचक्रं भुजगनिभं सर्पसदृशं अध्युष्टवलयं अधिष्ठितकुण्डलनाविशेषं स्वं निजं आत्मानं कृत्वा स्वस्वरूपमवलम्ब्य उषित्वा स्वपिषि निद्रासि कुलकुण्डे कुः पृथिवीतत्त्वं लीयते यत्र तत्कुलं आधारचक्रम्। लक्षणया सुषुम्नामार्गः कुलमित्युच्यते। अत एव कौलाः कुलपूजकाः आधारसेवकाः इति कौलत्वं तेषामिति रहस्यम्। एतदुत्तरत्र प्रस्फोर्यते। कुलमार्गस्य सुषुम्नाया मूले यत्कुण्डं कमलकन्दाकारं आधारकन्दं तस्मिन् कुहरिणि, कमलकन्दमध्यस्थितच्छिद्रतुल्यं छिद्रं यस्य कुण्डस्य तत्तथोक्तम्। आधारकन्दमध्यस्थितसुषिरमध्ये बिसतन्तुनिभा तत्र कुण्डलिनीशक्तिः वर्तत इति तात्पर्यम् ॥

अत्रेत्थं पदयोजना—हे भगवति, चरणयुगलान्तर्विगलितैः सुधाधारासारैः प्रपञ्चं सिञ्चन्ती रसाम्नायमहसः सकाशात् स्वां भूमिं पुनरप्यवाप्य भुजगनिभमध्युष्टवलयं स्वमात्मानं कृत्वा कुहरिणि कुलकुण्डे स्वपिषि ॥

अत्रेदमनुसंधेयम्—शिरःस्थितं चन्द्रमण्डलं सर्वयोगशास्त्रसिद्धम्। तत्तु समयिनां मते श्रीचक्रमेव चन्द्रमण्डलम्, षोडशकलात्मकत्वात्। श्रीविद्यायाः प्रतिपदादिषोडशदिनेषु कलावृद्धिक्षययोः वक्ष्यमाणत्वात् चन्द्रमण्डलमेतदेव। बाह्यस्थितमपि चन्द्रमण्डलं श्रीचक्रमेवेति सुभगोदयव्याख्याने निदर्शितम्। तत्तु महारहस्यम्। अतश्च शिरःस्थितसहस्रदलकमलान्तर्गतश्रीचक्रात्मकशशिबिम्बमध्यस्थिताया भगवत्याश्चरणकमलनिर्णेजनजलैः सुधामयैः साधकस्य सकलशरीरं

संप्राव्य पुनः भुजङ्गरूपेण आधारकुण्डं प्रविश्य सुषुम्नामवष्टभ्य सा भगवती स्वपितीति। यथोक्तं वामकेश्वरमहातन्त्रे—'भुजङ्गाकाररूपेण मूलाधारं समाश्रिता। शक्तिः कुण्डलिनी नाम बिसतन्तुनिभाऽऽशुभा ॥' आशुभा, क्षणप्रभा, विद्युन्निभा इत्यर्थः। 'मूलकन्दं फणाग्रेण दष्ट्वा कमलकन्दवत्। मुखेन पुच्छं संगृह्य ब्रह्मरन्ध्रं समाश्रिता ॥ पद्मासनगतः स्वस्थो गुदमाकुञ्च्य साधकः। वायुमूर्ध्वगतिं कुर्वन्कुम्भकाविष्टमानसः ॥ वाय्वाघातवशादग्निः स्वाधिष्ठानगतो ज्वलन्। ज्वलनाघातपवनाघातैरुन्निद्रितोऽहिराट्। रुद्रग्रन्थिं ततो भित्त्वा विष्णुग्रन्थिं भिनत्त्यतः। ब्रह्मग्रन्थिं च भित्त्वैव कमलानि भिनत्ति षट् ॥ सहस्रकमले शक्तिः शिवेन सह मोदते। सा चावस्था परा ज्ञेया सैव निर्वृतिकारणम् ॥' इति। श्रुतिरपि भगवत्याः चरणाम्बुजसुधाधारासारैः प्रपञ्चसेचनं प्रतिपादयति। तथा हि—'लोकस्य द्वारमर्चिमत्पवित्रम्। ज्योतिष्मद्भ्राजमानं महस्वत्। अमृतस्य धारा बहुधा दोहमानम्। चरणं नो लोके सुधितान् दधातु ॥' (तै.ब्रा.३.१२.३) ॥ अस्यार्थः—लोकस्य स्वनिवासस्थानस्य सायुज्यस्य वा साष्टर्यादेर्वा ब्रह्मलोकादेर्वा द्वारं, तत्प्रापकमित्यर्थः। अर्चिमत् अर्चींषि मयूखाः अस्य सन्तीति अर्चिमत्, अर्चिष्मदित्यर्थः। छान्दसः सकारलोपः। मयूखाः किरणाः। पवित्रं स्वयमतिशुद्धं अन्यशुद्धिहेतुश्च। 'ज्योतिष्मद्भ्राजमानं महस्वत्' इत्याम्रेडनं अर्चिष्मत्त्वस्तुत्यर्थम्। यद्वा—'त्रिखण्डं मातृकाचक्रं सोमसूर्यानलात्मकम्' इति वक्ष्यते। 'अर्चिष्मत्' इत्यनेन आग्नेयान्यर्चींष्यष्टोत्तरशतं कथ्यन्ते। 'ज्योतिष्मत्' इत्यनेन ऐन्दवानि षट्त्रिंशदुत्तरशतं ज्योतींषि निर्दिश्यन्ते। 'महस्वत्' इत्यनेन भानवीयानि षोडशोत्तरशतं महांसि किरणाः संगृह्यन्ते। एतच्च 'क्षितौ षट्पञ्चाशत्' इति श्लोकव्याख्यानावसरे निपुणतरमुपपादयिष्यामः। अमृतस्य धाराः सुधाप्रवाहान् बहुधा बहुप्रकारेण द्विसप्ततिसहस्रनाडीमार्गेषु दोहमानं किरत् चन्द्रमण्डलगतसुधाधाराप्रवाहान् स्वनिर्णेजनपवित्रितान् वर्षदित्यर्थः। तच्चरणम्, 'चरणशब्दो नपुंसकः, 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इत्यमरः। नः अस्मान् साधकान् लोके प्रपञ्चे सुधितान् तृप्तान्; यद्वा, संजातबुद्धिप्रकाशान् सुधियः, कृत्वा दधातु पुष्णातु ॥

नन्वयं मन्त्रः अपाघास्विष्टिषु याज्यात्वेनाम्नातः। मन्त्राणां समवेतार्थप्रकाशनशीलत्वात्, 'चरणाय स्वाहा' इति चतुर्थ्यर्थोपहितशब्दस्यैव देवतात्वात्, एतद्व्याख्यानं न संगच्छत इति चेत्; उच्यते—

अत्राहुः भगवत्पादाः—'सिद्धमन्नं परित्यज्य भिक्षामटति दुर्मतिः' इति। अयमाशयः—वेदस्य सकर्तृकत्वासिद्धेः फलदानसमर्थत्वेन सर्वविद्वदभिमतं वृद्धव्यवहारावसितशक्तिकं 'लोकस्य द्वारम्' इत्यादिविशेषणविशिष्टत्वार्हं भगवत्याश्चरणमेव 'चरणाय स्वाहा' इत्यत्र चरणशब्देनाभिधीयत इति ॥ १० ॥

## सौभाग्यवर्धनी

अपरे त्वाहुः—**सुधाधारासारैरिति** । सुधाधारासारैरमृतधारासंपातैः चरणयुगलान्तर्विगलितैः भ्रूमध्यगतशुक्लरक्तचरणमध्यमार्गतो निष्यन्दमानैः प्रपञ्चं मानसस्थानादिषट्चक्ररूपं कुलपथं सिञ्चन्ती; एतेनान्वयभूमिकोक्ता । प्रत्यावृत्तिभूमिकामाह—पुनरपि रसाम्नायाः षडाम्नायाः पूर्वदक्षिणपश्चिमोत्तरो-र्ध्वानुत्तराः; एते शक्तेराम्नायाः स्थानानि, पार्थिवाप्यानलवायव्यनाभसमानसादिशांभवाम्नायाः; एतेषां स्थानानि अनुत्तरादिक्रमेण, भ्रूमध्यादिमानसादिक्रमेण वा । तेषां महसा । एतेषां षण्णां प्रकाशक-तेजसा स्वां भूमिमवाप्य मूलाधारमवाप्य । भुजगनिभमध्युष्टवलयं सार्धत्रिवलयम्, आत्मानं कृत्वा कुलकुण्डे मूलाधारान्तर्गतचतुर्दलपद्मकर्णिकामध्यवर्तित्रिकोणे स्वपिषि । कुहरिणि कुहरं रन्ध्रविशेषः तद्वति गुप्तस्थान इत्यर्थः । एतेन पद्यद्वयेन कुण्डलिनीरहस्यसोपानमभिहितम् । तदुक्तं चतुःशत्याम्—'मूलादिब्रह्मरन्ध्रान्तं रक्तोर्णातन्तुसंनिभाम् । कुलकुण्डलिनीं नित्यां विद्युदुल्लासदृक्तनुम् ॥ मत्तालिकुलझं-कारसदृक्षतरनादिनीम् । उन्नीयोन्नीय चक्रेषु क्रमात्स्यन्दति वैभवम् ॥ अनुभूय परं गत्वा पीत्वा कुलपरामृतम् । अकुलात्कुलसंभूय (कुलकं भूयः) कुलादकुलकं महः ॥ एवं मां सुन्दरीं ध्यायेत्सूक्ष्मध्यानं प्रकीर्तितम् ॥' इति ॥ १० ॥

## अरुणामोदिनी

विहारानन्तरं कृत्यमाह—**सुधाधारेति** । हे देवि, चरणयुगलस्य पदद्वन्द्वस्यान्तरभ्यन्तराद्वि-गलितैर्गलद्भिः सुधाधाराणाममृतसंततीनामासारैर्वेगवर्षणैः; 'आसारः स्यात्प्रसरणे वेगवर्षे सुहृद्बले' इति विश्वः । प्रपञ्चं द्विसप्ततिसहस्रसंख्याकनाडीमार्गं सिञ्चन्ती सेचमाना; 'लोकस्य द्वारमर्चिम-त्पवित्रम् । ज्योतिष्मद्भ्राजमानं महस्वत् । अमृतस्य धारा बहुधा दोहमानम् । चरणं नो लोके सुधितां दधातु ।' इति श्रुतेः । इह च भगवत्याः सुषुम्णामार्गेण सहस्रारान्तर्गतत्वात् 'तासां मूर्धानमभि-निःसृतैका' 'सुषुम्णा तिसृषु श्रेष्ठा वैष्णवी मुक्तिमार्गदा' इत्यागमात् प्रधाननाड्यां सुषुम्णायां सेचने जाते पिण्डाण्डब्रह्माण्डयोरैक्याद्ब्रह्माण्ड इव पिण्डाण्डेऽपि सर्वासु नाडीष्वाह्लादो जायत इत्युक्तम् । रसा आम्नायन्तेऽस्मिन्निति रसाम्नायममृतमयं महस्तेजो यस्य तस्मात्; सहस्रारपद्म-वर्तिनोऽक्षीणकलाचन्द्रात्, तत्सकाशादित्यर्थः । महसीति पाठे रसाम्नायं रसावृत्तिरूपं महस्तेजो यस्याः सा आनन्दरूपिणी अत्यन्ततृप्ता....शादुन्मताति सतीत्यर्थः । पुनर्भूयोऽपि स्वां स्वकीयां भूमिं निवासस्थानं 'भूमिः क्षितौ स्थानमात्रे' इति विश्वः । मूलाधारमित्यर्थः । अवाप्य प्राप्य भुजगनिभं सर्पाकारं स्वं स्वकीयमात्मानं देहं सहस्रारावाप्तये ऋजूकृतमित्यर्थः । अध्युष्टोऽधिष्ठितो वलयः कुण्डलना येन तं सन्तं कृत्वा विधाय कुण्डलितं कृत्वेत्यर्थः । कुहरं बिलमस्यास्तीति तस्मिन् इह सच्छिद्रवति, सर्वप्रियत्वाच्छिद्रस्येति भावः । कुलकुण्डे कुण्डाकारे कुले निवासगृहे । यद्वा

कुः पृथिवीतत्त्वं लीयतेऽस्मिन्निति कुलं मूलाधारः। तदेव कुण्डं निवासस्थानभूतः करण्डविशेषः तस्मिन् स्वपिषि निद्रासि। कुहरिणीत्यस्य देवीसंबुद्धिपरत्वं केचिदिच्छन्ति। शिरसि चन्द्रमण्डलं वर्तत इति योगशास्त्रप्रसिद्धेश्चन्द्रमण्डलश्रीचक्रयोरुभयोरपि षोडशकलात्मकत्वेनैक्याच्छिरःस्थित-सहस्रारान्तर्गतश्रीचक्रचन्द्रमण्डलीयस्वचरणनिर्णेजनसुधाजलैः साधकशरीरं संप्लाव्य पुनरप्या-धारचक्रं भुजङ्गाकारेणैवावाप्य सुषुम्नामवष्टभ्य स्वपिति भगवतीत्यभिप्रायः। आधारकमलकन्दसुषिरमध्ये बिसतन्तुनिभा कुण्डलिनी वर्तत इत्यागमः॥ १०॥

## आनन्दगिरीया

इदानीं लयभूमिकां प्रत्यावृत्तिभूमिकां चाह—**सुधाधारेति**। अत्र योगशास्त्रे प्रकारः। यदा योगी पद्मासने उपविश्य योगमभ्यस्यति, तदा गुल्फाभ्यां गुदमूलं निष्पीड्य प्राप्तप्राणधारणया, मूलाधारात्कुण्डलिनीं महामायां प्रपञ्चजननीं उत्थाप्य स्वाधिष्ठानमानयति, तद्भित्वा अग्रे मणिपूरमानयति, तदपि भित्वा, अनेन क्रमेण सकलमपि कुलपथं भित्वा यदा ब्रह्माण्डमण्डले निर्वाणचक्रमारोहति, तत्र वर्तमानसहस्रदलकमले कुण्डलीमानीय तत्र वर्तमानेन चिदानन्दात्मना सदाशिवेन संयोज्य, तत्रामृत-कुण्डे खेचरीसाहाय्येन जिह्वामानीय तत्संयोगे, अमृतबिन्दवो धारा वा अमृतस्य स्रवति। पश्चात् सा धारा येन पथा कुण्डलिनी समागता, तत्र तत्र गत्वा मूलाधारपर्यन्तमायाति। तदनु सर्वस्मिन् शरीरे तदमृतं विस्तार्य शरीरमाप्याययति। तदा योगी जीवन् वर्तते। पश्चाद्यदा खेचरीं विघटयति, तदा कुण्डलिनी ततो वियुज्य स्वप्रकाशेन तेजसा तत्तच्चक्रं प्रकाशयन्ती तत्तच्चक्रतेजसा आत्मानं प्रकाशयन्ती परमेश्वरी कुण्डलिनी मूलाधारमायाति। तदा सा कुण्डलिनी मूलाधारचक्रे आत्मानं सार्धत्रिवलयाकारं सर्पशरीरमिव कृत्वा स्वपिति। तदा योगी जागर्ति इति। तथा च योगशास्त्रे—"मूलादि-ब्रह्मरन्ध्रान्तं रक्तोर्णातन्तुसन्निभाम्। कुलकुण्डलिनीं नित्यां विद्युद्वल्लीसदृक्तनुम्। मत्तालिकुलझंकार-सदृक्षतरनादिनीम्। उन्नीयोन्नीय चक्रेषु क्रमादायाति बैन्दवम्। अनुभूय परं गत्वा पीत्वा कुलपथामृतम्। अकुलात्कुलकं भूयः कुलादकुलकं सदा। एवं तां सुन्दरीं ध्यायेत्सूक्ष्मं ध्यानं प्रकीर्तितम्।" इति। तदनुरोधे चायं श्लोकः—तथाहि - हे कुहरिणि, कुहरा स्वाधिष्ठानादि चक्राणि, ते प्राप्यत्वेन विद्यन्ते यस्यास्तस्याः, तत्संबोधनं, सप्तम्यन्तं वा। त्वं पुनरपि स्वां भूमिं मूलाधारचक्रं, रसाम्नायमहसा, रसशब्देन षट्संख्याका आम्नायाः, विशुद्धादीनि षट्चक्राणि तत्प्रकाशकानि, तत्प्रकाशकत्वेन स्वप्रकाशकेन स्वतेजसा स्वप्रकाशवत्तेजसा वा मार्गेण अवाप्य प्रत्यावृत्त्या प्राप्य, तत्र कुलकुण्डे मूलाधारे स्वपिषि सुप्ता भवसि। किं कृत्वा स्वमात्मानं भुजगनिभं कृत्वा, भुजगस्य निभेव निभा यस्य, निभा प्रकाशः, तमेवाह - किंलक्षणमात्मानं, अध्युष्टवलयं सार्धत्रयमण्डलाकारमित्यर्थः। किं कुर्वन्ती, प्रपञ्चं सिंचन्ती, प्रपंचं चक्रषट्कावच्छिन्नं शरीरं सिंचन्ती आप्याययन्ती। एषा लयभूमिका।

कैः सुधाधारासारैः अमृतधारासंपातैः जिह्वाग्रलग्नकुण्डलिनीयोगाद्ये च्युता मधुबिन्दवः त एवामृत-धारासाराः, तैरित्यर्थः। किंलक्षणैस्तैः, चरणयुगलान्तर्विगलितैः, ततः स्रुत्वा भ्रूचक्रे वर्तमानं यच्छुक्लरक्ताख्यं चरणयुगलं तदन्तरालमागत्य पुनरग्रे गमनाय ततो विगलितैः। यदा ब्रह्मलोकादागत्य भगवती भागीरथी श्रीहरिचरणकमलान्तरालमागत्य तदाप्लाव्य अग्रे चलिता पृथ्वीमाप्याययति तथेत्यर्थः। अथवा एतत्पद्यद्वयं क्रमेणारोहावरोहपरतया व्याख्येयम्। तथाहि - प्रथमं मूलाधारे, चतुर्दलं पीतवर्णं कमलं ध्यात्वा तत्कर्णिकायां सूर्यसोमाग्निमयं त्रिकोणं विभाव्य, तन्मध्ये जपाकुसुम-बन्धूकसन्निभं सूर्यकोटिप्रतीकाशं चन्द्रकोटिसुशीतलं सत्वरजस्तमोगुणाक्रान्तं कामाख्यं बिन्दुं विचिन्त्य तदूर्ध्वं कुण्डलिनीशक्तिं चिद्रूपामष्टत्रिंशत्कलायुक्तां पञ्चदशवर्णश्रीविद्यारूपां तटित्कोटिप्रभादीप्तां बिसतन्तुतनीयसीं प्रसुप्तभुजगाकारां सार्धत्रिवलयाकारेण स्थितां स्वेच्छादण्डाहतां कृत्वा उत्थाप्य, गुरूपदिष्टविधिना, सुषुम्नामार्गेण मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्धाज्ञाख्यषट्चक्रभेदक्रमेण ब्रह्मरन्ध्रस्थितविमलसहस्रदलं कमलं प्रापय्य तत्रस्थितपरमामृतधारया वर्णमय्या कुण्डलिनीं तां सन्तर्प्य स्थापयतीति आरोहक्रमः। तत्परतया प्रथमं पद्यं; तदुच्यते 'सहस्रारे पद्मे सह रहसि पत्या विहरसे' इति। पुनश्चावरोहः। पुनः सुधास्रोतःस्वरूपिणीं अकुलामृतरूपेण सुषुम्नान्ततदाधार - तत्तद्धातु - तत्तद्वर्ण - तत्तद्दैवत - तत्तच्चक्रिणीं भ्रूमध्यस्थितचरणयुगलविगलितामृतधारया आप्लावयन्तीं आज्ञाविशुद्ध्यादिक्रमेण मूलाधारं नीत्वा तथैव सदा सर्पाकारेण स्थापयेदित्यवरोहः। तदुच्यते - 'अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणि' - अयं हि योगिनो मार्ग इति। सुधाधारासारैः इति श्लोकस्य रहस्यार्थः—प्रपञ्चं सिञ्चन्ती चरणसंचरणक्षरद-मृतासारेण सामरस्यरसाम्नायेन, एकनित्यानन्दघनेन, मूलाधारस्थशिवलिङ्गं भुवं, भुजगाकारेण लिंगं वेष्टमाना, कुहरिणी कुहरं ब्रह्म, तदन्तर्गता सा तन्मयीति यावत्। "मूलाधारगता शक्तिः सूक्ष्माकारा महेश्वरी। सर्पाकारेण चिल्लिंगमावृत्यास्ते कुलाकुले। यामुत्थाप्य लभेद्ब्रह्म कुलान्ते स्वप्रकाशकम्। एतदुत्थानमात्रेण साधकः संप्रपश्यति। यदुत्थानेन देवेशि वयमाज्ञाकराः सदा" इति॥ १०॥

## तात्पर्यदीपिनी

ननु यथा अन्तर्यागः प्रधानपूजांगं, तथा कुण्डलिनीशक्त्युत्थानमपि पूजांगमेव, तदकरणे पूजासमग्रफलप्राप्तिर्नास्तीति तत्प्रकाशको य आगमरहस्यभूतः श्लोकः कथं न प्रकाश्यते? तत्राह। **सुधाधारासारैरिति**। हे कुहरिणि कुण्डलिनीशक्तिस्वरूपे परमेश्वरि! कुहरो नाम मूलाधारादिषु युक्तं रन्ध्रस्थानमण्डलं, सोऽस्याः कुण्डलिनीशक्तेर्निवासस्थानत्वेनास्तीति कुहरिणी, तत्संबुद्धिः। त्वं कुलकुण्डे शरीरमध्ये स्वाधिष्ठानसमीपे सुषुम्नारन्ध्रान्मुखमाक्षिप्य सुखेन स्वपिषि। किं कृत्वा? स्वमात्मानं अध्युष्टवलयं कृत्वा, अध्युष्टमधिगतं वलयं येन स तथा तं कृत्वा विधाय। किं भूतमात्मानं?

भुजगनिभं, भुजगो अहिः तन्निभा यस्य तं बिसतन्तुनिर्भासाहिसदृशमित्यर्थः। कथं भूता त्वं? चरणयुगलान्तर्विगलितैः चरणयुगलस्य पादारविन्दद्वितयस्य, अन्तः मध्यप्रदेशात्, विगलिताः, तैः सुधाधारासारैः सुधाया या धाराः तासां आसाराः संपाताः, तैः प्रपञ्चं द्विसप्ततिसहस्रसंख्याकं नाडीमार्गं सिञ्चन्ती सेक्त्री, पुनः पुनरपि सेचनानन्तरमपि, रसाम्नायमहसः रसस्य सुधायाः आम्नायः गुणानामाधिक्यं पंचात्मिकं महः कान्तिर्यस्य स रसाम्नायमहः, तस्माच्चन्द्रात्सकाशात्, स्वां भूमिं स्वाधिष्ठानं अवाप्य, अत्यन्ततृप्ता इति शेषः। एवं त्वयि महामायारूपिण्यां सुप्तायां योगिनः परमानन्दरूपाः जागरूका भवन्ति। त्वयि जागरूकायां संसारबन्धविच्छेदाभावात्। वृद्धाः सन्तः स्वातन्त्र्यविरहादस्वातन्त्र्यमयतन्द्रीप्रविष्टा भवन्तीत्यर्थः। श्रुतिरपि भगवत्याश्चरणांबुजसुधाधारासारैः प्रपञ्चसेचनं प्रतिपादयति। तथा हि - "लोकस्य द्वारमर्चिमत्पवित्रं ज्योतिष्मद्भ्राजमानं महस्वत्। अमृतस्य धारा बहुधा दोहमानं चरणं नो लोके सुधितां दधातु" इति ॥ १० ॥

## पदार्थचन्द्रिका

इदानीं कुण्डलिनीशक्तिरूपाया भवान्या ध्यानमाह - **सुधेति**। हे हिमगिरिसुते त्वं कुलकुण्डे स्वपिषीत्यन्वयः। कुः पृथ्वी लीयते आश्लिष्टा भवति अस्मिन्निति कुलं मूलाधारचक्रम्। तत्कुण्डमिवेति कुलकुण्डं तस्मिन्। किं कृत्वा, स्वां भूमिं मूलाधारमवाप्य, तत्र स्वमात्मानं स्वकीयं देहं भुजगनिभं भुजगसदृशं कृत्वा। पुनरात्मानं विशिनष्टि - अध्युष्टवलयं, अध्युष्टशब्दः सार्धत्रितयसंख्यावाचको लोके प्रसिद्धः। अध्युष्टं मण्डलं वलयं यस्य तम्। किं कुर्वती, सुधाधारासारैः सुधाधारा आसारा इव वर्षधारा इव, तैः प्रपञ्चं सिञ्चन्ती। कथं भूतैः चरणकमलयोरन्तर्मध्यं तस्माद्विगलितैः, पुनरपि पुनर्वारं वारं निरन्तरमित्यर्थः। रसाम्नायमहसा रसाम्नायश्च महश्च तयोः समाहारः, रसाम्नाय-महस्तेजः। अत्रोपलक्षणे तृतीया। रसाम्नायः स्वरूपसुखं, महः स्वरूपचैतन्यम्।

## डिण्डिमभाष्यम्

ननु यथान्तर्यागप्रधानपूजाङ्गं तथा कुण्डलिनीशक्त्याः स्थानमपि पूजाङ्गमेव, तदकरणे पूजासमग्र-फलप्राप्तिर्नास्ति, तत्प्रकारको योगागमरहस्यभूतः श्लोकः कथं न प्रकाश्यत इत्याशङ्क्याह—**सुधेत्यादि**। हे कुहरिणि कुण्डलिनीशक्ते! शक्तेर्निवासस्थानत्वेनास्तीति कुहरिणी कुण्डलिनीशक्तिः, तदस्यास्त्य-स्मिन्निति मतुबधिकारे 'अत इनि ठनौ' इति सूत्रेण इनिप्रत्ययः, 'ऋन्नेभ्यो ङीप्' इति ङीप्, 'रषाभ्यां नो णः समानपदे' इति णत्वम्। एवंभूता कुहरिणी शक्तिः मूलाधारादिषट्चक्रभेदिनी भूत्वा ब्रह्मरन्ध्रोपरि मतद्द्वादशसहस्रदलकमलकर्णिकास्थितरक्तशुक्लचरणयुगलान्तरं चुम्बति ततः परामृतं सेचयन्ती तेन प्रपञ्चमाप्लावयन्ती तदमृताप्लावनसञ्जातपरमानन्देन योगिना पुनरपि स्वभूमीभूतमूलाधार-स्थानमानीता तदनन्तरं ध्यानशक्त्योत्थापितयोगाग्निना दग्धभोगमण्डला यत्रामृतपूर्वं सुषुम्ना(म्णा)दण्ड-

उद्धारमात्मनैव सदा भुज्यमानं यदा मुञ्चति तदा कुण्डलिनी महामाया शक्तिः सुप्ता भवति निर्व्यापारा भवति। निर्विघ्नमेव परब्रह्मद्वारे सुषुम्ना(म्णा)दण्डरन्ध्रे यथेष्टं प्रविश्य परमामृतं भुक्त्वा सिद्धशरीरो भूत्वा परमशिव इव नित्यशरीरः परमयोगी सर्वाणिमाद्यैश्वर्ययुक्तो विहरति इति योगशास्त्रप्रसिद्धिः तमेवार्थमनेन श्लोकेनाह—श्लोकार्थस्तु—हे कुहरिणि कुण्डलिनि! चरणयुगलान्तः प्रागुक्तशुक्लचरणयुगलमध्याद् विगलितैर्निःसृतैः सुधाधारासारैरमृतधारासमूहैः करणभूतैः प्रपञ्चं शरीरं सिञ्चन्ती आप्लावयन्ती। अत्र प्रपञ्चपदेन देहस्याभिधानम्, अण्डप्रपञ्चपिण्डप्रपञ्चयोरैक्याभिधानार्थम्। तदुक्तं योगदीपिकायाम्—

"अण्डे तु ये प्रपञ्चाः स्युः पिण्डे ते च प्रतिष्ठिताः। लघुत्वं गुरुताश्चैते न भेदस्त्वण्डपिण्डयोः॥"

तथाहि—अण्डे लोकालोकगिरिः, पिण्डे त्वचः। अण्डे जलधिः, पिण्डे रक्तम्। अण्डे गङ्गादि नद्यः, पिण्डे इडापिङ्गलादि नाड्यः। अण्डे भास्करादिनवग्रहाः तिमिरनिराकरणार्थं, देहप्रकाशकाः पिण्डे एकादशेन्द्रियाणि, अण्डे ब्रह्म, पिण्डे मनः, अण्डे महामेरुः, पिण्डे हृदयकमलम्। अण्डे पर्वताः, पिण्डेऽस्थीनि। अण्डे तदभिमानी जीवात्मा, पिण्डे देहाभिमानी जीवात्मा। अण्डे सहस्रचतुर्युगाकारदिवसावसाने सहस्रचतुर्युगाकारसर्वनिशायाम्, अवान्तरप्रलयजलप्लावनरूपा ब्रह्मणो निद्रा, पिण्डे दिवसावसाने रात्रौ निद्रा। अण्डे रात्रेरनन्तरम् उत्थानपर्यन्तं वर्तमानान्येव सूर्यादिनवग्रहचक्रेन्द्रियाणि प्रकाशयन्ते, पिण्डे प्रबोधानन्तरमिन्द्रियप्रचारः। अण्डे सहस्रचतुर्युगसम्मितदिवसकल्पनानुरूपशतसंवत्सरावसाने ब्रह्मरूपिणो जीवाजीवात्मनामण्डादुत्क्रमणं तदधिष्ठितशरीरस्य ब्रह्माण्डस्य महादेवेन काशिनाममहाश्मशाने स्वललाटवह्निना दहनं, पिण्डे तु मानुषदिवसानुरूपं संवत्सरशतान्ते पापसम्बन्धात्ततोऽर्वाग् वा जीवात्मनो देहादुत्क्रमणे तस्य बन्धुभिः श्मशानादिदाहः। एवं सर्वत्र चिन्त्यमाने अण्डप्रपञ्चपिण्डप्रपञ्चयोरैक्यमेवेति योगशास्त्ररहस्यप्रख्यापनाय प्रपञ्चशब्देन देहस्याभिधानम्। एवम्भूतशरीरं सिञ्चन्ती सा पुनरपि भूयोऽपि रसाम्नायमहसा उपलक्षिता अमृतसेचनजनितरसानन्दस्य य आम्नायः पुनः पुनरभ्यासस्तस्य महसा तेजसा अत्यन्ततृप्तिवशादुन्मत्ता सती स्वां भूमिं मूलाधारमवाप्य भुजगनिभं सर्पाकारतामापन्नम् अध्युष्टवलयं योगाग्निना प्लुष्टवलयम्। 'उष' दाहे इत्युष्धातोरधिपूर्वात् क्तप्रत्यये 'ष्टुना ष्टुः' इति ष्टुत्वम्-अध्युष्टम्। एवंभूतं स्वमात्मानं कुलकुण्डे देहसिद्धिस्थाने कृत्वा निवेश्य सुषुम्ना(म्णा)रन्ध्रान्मुखमाक्षिप्य सुखेन स्वपिषि। त्वयि महामायारूपिण्यां सुप्तायां योगिनः परमानन्दे मुक्ता जागरूका भवन्ति, त्वयि जागरूकायां संसारबन्धविच्छेदाभावाद् बद्धाः सन्तः स्वातन्त्र्यविरहात् पारतन्त्र्यमयनिद्रातन्त्रे प्रविष्टा भवन्ति॥ १०॥

## गोपालसुन्दरी

कुण्डलिन्यास्तावद् भूमिकात्रयं तत्रोन्नयभूमिका महीमित्यादिनोक्ता, अन्वयभूमिकां प्रत्यावृत्तिभूमिकां चाह—सुधाधारासारैरिति। सुधाधारासारैरमृतधारासम्पातैश्चरणयुगलान्तर्विगलितैः भ्रूमध्य-

गतशुक्लरक्तचरणमध्यमार्गतो निष्पन्दितैः प्रपञ्चं मानसं स्थानादिषट्चक्ररूपं कुलपथं सिञ्चन्तीत्यनेनान्वयभूमिकोक्ता प्रत्यावृत्तिभूमिकामाह—पुनरपीति। रसाम्नाया पूर्वदक्षिणपश्चिमोत्तरोर्ध्वानुत्तराः शक्तेराम्नायाः स्थानानि पार्थिवाप्यानलवायव्यनाभसमानसाः शाम्भवाम्नायाः एतेषां स्थानानि उत्तरादिक्रमेण भ्रूमध्यादिमानसादिक्रमेण वा एतेषां महसा एषां षण्णां प्रकाशकतेजसा स्वां भूमिं मूलाधारमवाप्य लब्ध्वा, आत्मानं स्वस्वरूपं भुजगनिभं सर्पाकारम् अध्युष्टवलयं सार्धत्रिवलयं कृत्वा कुलकुण्डे मूलाधारान्तर्गतचतुर्दलपद्मकर्णिकामध्ये वर्तिनि त्रिकोणे कुहरिणि कुहरं रन्ध्रविशेषस्तद्वति गुप्तविषये (स्थाने) स्वपिषि, तदुक्तम्-"मूलादिब्रह्मरन्ध्रान्तं रक्तोर्णातन्तुसन्निभाम्। कुलकुण्डलिनीं नित्यां विद्युद्वल्लीसमाकृतिम्। मत्तालिकुलझङ्कारसदृक्षतरनादिनीम्। उन्नीयोन्नीय चक्रेषु क्रमात् स्यन्दति वैभवं॥ अनुभूय परं गत्वा पीत्वा कुलपरामृतम्। अकुलात्कुलकं भूयः कुलादकुलकं महः॥ एवं मां सुन्दरीं ध्यायेत्सूक्ष्मध्यानं प्रकाशितम्॥ इति पूर्ववदेव **विष्णुपक्षे** सङ्गतिः॥ १०॥

## आनन्दलहरीटीका

अत्र कुण्डलिन्या भूमिकाचतुष्टयम्। तत्र पूर्वश्लोके षट्चक्रभेदरूपोन्नयभूमिका, परशिवसंयोगरूपलयभूमिका च दर्शिता। इदानीं पुनः परावृत्तिरूपप्रत्यावृत्तिभूमिकां स्वस्थानावस्थानरूपविश्रान्तिभूमिकां च दर्शयति। **सुधेति**। सुधाया अमृतस्य धाराणां आसारैः संपातैः चरणयुगलस्य भ्रूमध्यस्थितस्य सितरक्तरूपस्य अन्तर्मध्यात् विगलितैः निर्गतैः, प्रपञ्चं [रसाः] षडाम्नायाः स्थानानि ज्ञानादि षट्चक्राणि। शक्तितन्त्रे मूलाधारादिषट्चक्राण्येव, क्रमे पूर्वदक्षिणपश्चिमोत्तरोर्ध्वानुत्तराख्याः षडाम्नायाः इत्युच्यन्ते। शैवतन्त्रे तु पार्थिवाप्यानलवायव्यनाभसमानसा इत्युच्यन्ते। तेषां महसा तेषां प्रकाशकेन स्वीयतेजसा विशिष्टा त्वम्। एतदज्ञात्वैव कश्चित् रसाम्नायमहसा आनन्दाभ्यासतेजसेति व्याचष्टे। अवाप्येति। स्वां भूमिं स्वस्थानं मूलाधारमवाप्य स्वमात्मानं स्वीयाभ्यासतः स्वीयं शरीरं भुजगनिभं सर्पाकारं अध्युष्टवलयं सार्धं त्रिवलयं योगशास्त्रप्रसिद्धं कृत्वा, कुलकुण्डे मूलाधारान्तर्गतचतुर्दलकमलकर्णिकामध्यस्थितत्रिकोणे कुहरिणि रन्ध्रविशेषवति स्वपिषि। शयनं करोषि। कुहरं षट्चक्रमध्यरन्ध्रं तदाश्रयत्वेन विद्यते यस्याः सा। तथा तत्संबोधनं कुहरिणि? इति कश्चित्। एतादृशभावनैव सूक्ष्मध्यानम्। तदुक्तं तन्त्रे-"मूलादिब्रह्मरन्ध्रान्तं रक्तोर्णातन्तुसन्निभाम्। कुलकुण्डलिनीं नित्यां विद्युद्वल्लीसदृक्तनुम्। मत्तालिकुलझंकारसदृशस्वरनादिनीम्। उन्नीयोन्नीय चक्रेषु क्रमात्स्यन्दति वैभवम्। अनुभूय परं गत्वा पीत्वा कुलपरामृतम्। अकुलात्कुलकं भूयः कुलादकुलकं महः। एवं मां सुन्दरीं ध्यायेत् सूक्ष्मध्यानं प्रकाशित"मिति॥ १०॥

चतुर्भिः श्रीकण्ठैः शिवयुवतिभिः पञ्चभिरपि[1]
प्रभिन्नाभिः शंभोर्नवभिरपि[2] मूलप्रकृतिभिः ।
[3]चतुश्चत्वारिंशद्वसुदल[4]कलाश्रत्रिवलय-
त्रिरेखाभिः सार्धं तव शरणकोणाः[5] परिणताः ॥ ११ ॥

சதுர்பி: ஸ்ரீகண்டை: சிவயுவதிபி: பஞ்சபிரபி
1 1 4 1 2 1 4 1 1 4 1

ப்ரபின்னாபி: ஶம்போர்நவபி ரபி மூலப்ரக்ருதிபி: ;
1 4 4 4 4 1 1 1 1 4

சதுஸ்சத்வாரிம்ஶத் வஸுதலகலாச்ரத்ரிவலய—
1 1 1 1 3 3 1 1

த்ரிரேகாபி: ஸார்தம் தவ ஶரணகோணா: பரிணதா:
1 2 4 4 1 1

बिंदु, अष्टदल, षोडशदल, चतुरश्राकृति से संशोभित
तीन, आठ, दो दश, एवं चौदह कोणों से परियोजित
शिवशक्त्यात्मक नव चक्रों का योग लिए क्रमशः पावन,
तेरा दिव्य निवासस्थल श्रीचक्र सोहता मनभावन !
वसुदल, षोडशदल, तीन वलय, रेखा त्रितय लिए रह कर,
चवालीस कोणों से विलसित होता है वह सुषमाकर ॥

## लक्ष्मीधरा

पूर्वश्लोके इन्दुमण्डलात्मकं श्रीचक्रमित्युक्तम् । तदेव श्रीचक्रमुपदिशति । **चतुर्भिरिति ।** चतुर्भिः चतुस्संख्यासंख्येयैः, श्रीकण्ठैः श्रृणाति हिनस्तीति श्रीः विषं कण्ठे यस्यासौ श्रीकण्ठः हरः; ते कोणाः अपि श्रीकण्ठाः, तादात्म्यात्तद्व्यपदेशः, अत एव बहुवचनसिद्धिः । श्रीकण्ठात्मकैरित्यर्थः । शिवयुवतिभिः शक्तिभिः इत्यर्थः, पूर्ववत् बहुवचनसिद्धिः । शक्त्यात्मकैरित्यर्थः । पञ्चभिः । अपिशब्दो भेदे, प्रभिन्नाभिः प्रकर्षेण भिन्नाभिः । प्रकर्षस्तु शिवशक्तिचक्रमध्ये बैन्दवस्थानस्य विद्यमानत्वात्; एतच्च समयमतेन सृष्टिक्रमेण पञ्चचक्रलेखने ज्ञेयम् । कौलमतेन संहारक्रमेण नवयोनिचक्रलेखने ऊर्ध्वाधोमुखतया अवस्थितिप्रभिन्नत्वं ज्ञेयम् । तेनोभयं पृथक् पृथक् स्थितमित्यर्थः । शंभोरिति पञ्चमी, शंभुशब्देन चत्वारः श्रीकण्ठाः उच्यन्ते । नवभिः नवसंख्यैः, अपिशब्दो वक्ष्यमाणबाहुल्यं समुच्चिनोति । मूलप्रकृतिभिः प्रपञ्चस्य मूलकारणैः, अत एव तेषां योनिशब्दव्यवहारः । नवयोनयो नवधात्वात्मकाः । तथाचोक्तं कामिकायाम् "त्वगसृङ्मांसमेदोस्थि-धातवश्शक्तिमूलकाः । मज्जाशुक्लप्राणजीवधातवश्शिवमूलकाः ॥ नवधातुरयं देहो नवयोनिसमुद्भवः ।

1. पञ्चभिरधः 2. नवभिरिति 3. त्रयश्चत्वारिंशद् 4. कलाब्ज 5. भवनकोणाः, चरणकोणाः

दशमी योनिरेकैव परा शक्तिस्तदीश्वरी॥'' इति [1]दशमयोनिः बैन्दवस्थानम्, तदीश्वरी, तस्य देहस्येत्यर्थः। 'एवं पिण्डाण्डं उत्पन्नं तद्वत् ब्रह्माण्ड उद्बभौ। पञ्चभूतानि शाक्तानि मायादीनि शिवस्य तु॥ माया च शुद्धविद्या च महेश्वरसदाशिवौ। पञ्चविंशति तत्वानि तत्रैवान्तर्भवन्ति ते॥'' एकादशेन्द्रियाणि शब्दादितन्मात्राः तच्छब्देन परामृश्यन्ते। "शिवशक्त्यात्मकं विद्धि जगदेतच्चराचरम्।" चरं पिण्डाण्डं, अचरं ब्रह्माण्डं इत्यर्थः।

केचित्तु एकपञ्चाशत्तत्त्वान्याहुः। तथा हि—'पञ्च भूतानि तन्मात्रपञ्चकं चेन्द्रियाणि च। ज्ञानेन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाणि च॥ त्वगादिधातवः सप्त पञ्च प्राणादिवायवः। मनश्चाहंकृतिः ख्यातिर्गुणाः प्रकृतिपूरुषौ॥ रागो विद्या कला चैव नियतिः काल एव च। माया च शुद्धविद्या च महेश्वरसदाशिवौ॥ शक्तिश्च शिवतत्त्वं च तत्त्वानि क्रमशो विदुः॥' इति। एतान्येकपञ्चाशत्तत्त्वानि वायव्यसंहितादिशैवपुराणेषु सर्वेषु प्रतिपादितानि। अस्यार्थः—पञ्च भूतानि पृथिव्यप्तेजोवाय्वाकाशात्मकानि कार्यकारणरूपेणावस्थितानि। गन्धादितन्मात्रपञ्चकं पृथिव्यादीनां कारणभूतम्। ज्ञानेन्द्रियाणि श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मकानि। कर्मेन्द्रियाणि वाक्पाणिपायूपस्थात्मकानि। धातवः त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्लानि। वायवः प्राणापानव्यानोदानसमानाः। मनः मननात्मिका शक्तिः। अहंकृतिः अहंकारजनिका शक्तिः। ख्यातिः ज्ञानम्। गुणाः सत्त्वरजस्तमांसि। प्रकृतिः मूलप्रकृतिः। पुरुषो जीवः। रागः इच्छा। विद्या जनितविकल्पज्ञानम्। कलाः षट्युत्तरत्रिशतसंख्याकाः। नियतिः नियामिका शक्तिः। कालः संहरणशक्तिः। माया ऐन्द्रजालिकादिज्ञानम्[2]। शुद्धविद्या मोचकज्ञानम्। महेश्वरः रजोगुणाविष्टः सृष्टिकर्ता। सदाशिवः सृष्टिस्थितिकर्ता। शक्तिः महेश्वरसदाशिवयोः रक्षणसर्जनशक्तिः। चकारात् कालात्मिका[3] संहारिणी शक्तिश्च। शिवतत्त्वं शुद्धबुद्धमुक्तस्वरूपम्। एतेषु सर्वेषु तत्त्वेषु कतिचन तत्त्वानि कुत्रचिदन्तर्भवन्ति। त्वगादिसप्तधातवः भूतेष्वन्तर्भवन्ति। प्राणादिवायवः वायावन्तर्भवन्ति। अतो भूतेष्वेव तेषामन्तर्भावः। अहंकारस्य मनस्यन्तर्भावः। ख्यातेर्विद्यायामन्तर्भावः। गुणानां प्रकृतावन्तर्भावः। प्रकृतेस्तु शक्तावन्तर्भावः। पुरुषस्य महेश्वरेऽन्तर्भावः। कलायाः शुद्धविद्यायामन्तर्भावः। नियतेस्तु शक्तावेवान्तर्भावः। कालस्य महेश्वरे सदाशिवे चान्तर्भावः। शक्तेस्तु शुद्धविद्यायामन्तर्भावः। शिवतत्त्वस्य सदाशिवतत्त्वेऽन्तर्भावः इति तत्त्वानि पञ्चविंशतिरेव—पञ्च भूतानि तन्मात्रपञ्चकं पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनस्तत्त्वं मायाविशुद्धविद्यामहेश्वरसदाशिवात्मकानि चत्वारि। एतानि पञ्चविंशतितत्त्वानि सर्वसंमतानि, श्रुत्यनुगृहीतत्वात्। तथा च श्रुतिः—'पञ्चविंश आत्मा भवति' (तै. ब्रा. १. २. ६) इति। अतश्च षट्त्रिंशत्तत्त्वानीत्यादितत्त्वविकल्पः

---

१. दशमो धातुरेकैव २. ऐन्द्रजालिकाद्यज्ञानम्। ३. कालस्य

श्रुत्यनुसारेण पञ्चविंशतितत्त्वपर इत्यनुसंधेयम् । अतश्च सर्वतत्त्वातीतं शिवशक्तिसंपुटम् । तस्मादेव जगदुत्पत्तिः । तदुक्तं सुभगोदये—'परोऽपि शक्तिरहितः शक्तः कर्तुं न किंचन । शक्तः स्यात्परमेशानि शक्त्या युक्तो भवेद्यदि ॥' इति । अत्र बहु वक्तव्यमस्ति । तत्तु सुभगोदयव्याख्यानावसरे निपुणतरमुपपादितमस्माभिरिति अलमतिविस्तरेण । प्रकृतमनुसरामः ॥

चतुश्चत्वारिंशत् एतत्संख्याभिः वसुदलकलाश्रत्रिवलयत्रिरेखाभिः; वसवोऽष्टौ, तेन वसुशब्देन अष्टसंख्या लक्ष्यते । वसुदलं अष्टदलम् । कलाश्रं कलाः षोडश । तेन कलाशब्देन षोडशसंख्या लक्ष्यते । अश्रशब्देन दलं लक्ष्यते । अतः कलाश्रं षोडशदलमित्यर्थः । त्रिवलयं त्रयाणां वलयानां समाहारः त्रिवलयं, त्रिमेखलमित्यर्थः । तिरेखाः प्राकारवलयाकाररेखाः, भूपुरत्रयमित्यर्थः । एतच्च भूपुरत्रयं चतुर्दिक्षु द्वारयुक्तम् । तथा चोक्तम्— 'बिन्दुत्रिकोणवसुकोणदशारयुग्ममन्वश्रनागदलसंयुतषोडशारम् । वृत्तत्रिभूपुरयुतं परितश्चतुर्द्वाः श्रीचक्रमेतदुदितं परदेवतायाः ॥' इति । श्रुतिरपि—'सतद्वाट्टारगमं ता । सꣳहार्यं नगरं तव ।'' (तै. आ. १. ३१.) इति । अस्यार्थः—सतद्वा, चतुर्द्वारमित्यर्थः । छान्दसो वर्णलोपश्च । अट्टारगमं अट्टारैः प्राकारवलयैः त्रिभिः अगमं दुर्गमम् । ता तानीमानि भूतानि । भगवति, तव नगरं पुरं श्रीचक्रात्मकं संहार्यं संहारकमित्यर्थः । पृथिव्यादिमहेश्वरान्तानि तत्त्वानि तत्रैव लीयन्त इति तात्पर्यम् ॥

केचिदेवं व्याचक्षते—संहार्यं संहारक्रमेण लेखनीयमिति, तन्न, कौलमत एव संहारक्रमेण चक्रस्य लेखनीयत्वादिति । प्रकृतमनुसरामः—ताभिः सार्धं सह तव भवत्याः शरणकोणाः शरणं गृहं बैन्दवं मन्दिरं, तच्च कोणाश्चेति द्वन्द्वसमासः । ततः कोणाश्चतुश्चत्वारिंशदित्यर्थः ॥

ननु बिन्दुत्रिकोणेत्यादिक्रमेण त्रिकोणबिन्दुभ्यां योगे षट्चत्वारिंशत्कोणाः, बिन्दुपरित्यागे पञ्चचत्वारिंशत्कोणा इति चेत्, सत्यम्, प्रस्तारवशात् त्रिकोणस्याधःस्थितं कोणद्वयमष्टकोणेऽन्तर्गतम् । ततश्च कोणाः त्रिचत्वारिंशदेवेति । शरणेन सार्धं कोणा इति द्वन्द्वसमासगत्या व्याख्यातम् । यद्वा, त्रयश्चत्वारिंशदिति पाठान्तरम् । तत्र स्पष्ट एवार्थः । परिणताः परिणामं प्राप्ताः । अयमर्थः—त्रिकोणाष्टकोणदशकोणयुगलचतुर्दशकोणात्मकानि शक्तिचक्राणि । अष्टदलषोडशदलमेखलात्रयभूपुरत्रयात्मकानि चत्वारि शिवचक्राणि । त्रिकोणे वसुदलं वसुकोणे षोडशदलं दशारयुग्मे मेखलात्रितयं भुवनाश्रके भूगृहं अन्तर्भूतमिति परिणतमित्युच्यते । एतच्च पूर्वमेव प्रतिपादितम् ॥

अत्रेत्थं पदयोजना—हे भगवति, चतुर्भिः श्रीकण्ठैः शंभोः सकाशात्प्रभिन्नाभिः पञ्चभिः

शिवयुवतिभिः नवभिरपि मूलप्रकृतिभिः तव शरणकोणाः वसुदलकलाश्रत्रिवलयत्रिरेखाभिः सार्धं परिणताः सन्तः चतुश्चत्वारिंशदिति ॥

अत्रेदमनुसंधेयम्—अस्मिन् चक्रे अष्टाविंशतिमर्मस्थानानि । सन्धयस्तु चतुर्विंशतिः । ननु मर्माणि चतुर्विंशतिरेव, कथमष्टाविंशतिः ? 'द्विरेखासंगमस्थानं सन्धिरित्यभिधीयते । त्रिरेखासंगमस्थानं मर्म मर्मविदो विदुः ॥' इति । उच्यते—अष्टदलषोडशदलमेखलात्रयभूपुरत्रयाणां शिवचक्राणां त्रिरेखासंगमस्थानत्वाभावेऽपि वाचनिकी मर्मसंज्ञा । यथोक्तं चन्द्रज्ञानविद्यायाम्—'मन्वश्रद्विदशाराष्टकोणवृत्तचतुष्टयम् । अष्टाविंशतिमर्माणि चतुर्विंशतिसन्धयः ॥'' इति । अस्यार्थः—चतुर्दशकोणे दशारयुग्मे अष्टकोणे च त्रिरेखासंगमस्थानगणनायां चतुर्विंशतिमर्मस्थानानि वृत्तचतुष्टयेन शिवचक्रात्मकेन सार्धं अष्टाविंशतिरिति ॥

एतत्सर्वं चक्रलेखनापरिज्ञाने ज्ञातुं दुःशकमिति चक्रलेखनप्रकारो निरूप्यते । स च द्विप्रकारः, सृष्टिक्रमेण संहारक्रमेण चेति । संहारक्रमेण लेखनं कौलमार्ग एव । तथाऽपि नवयोनिपरिज्ञानार्थं स प्रकारो निरूप्यते । संहारक्रमेण तावत्—पुरतो वृत्तमालिख्य, वृत्तमध्ये नव रेखाः लिखित्वा, पश्चिमरेखाप्रान्ताभ्यां त्रिकोणमुत्पाद्य, स्वापेक्षया षष्ठ्या रेखया योजयेत् । एवं प्राग्रेखाप्रान्ताभ्यां त्रिकोणमुत्पाद्य स्वापेक्षया सप्तम्या रेखया योजयेत् । पश्चिमद्वितीयरेखाप्रान्ताभ्यां त्रिकोणमुत्पाद्य स्वापेक्षया अष्टम्या योजयेत् । प्राग्द्वितीयरेखाप्रान्ताभ्यां त्रिकोणमुत्पाद्य स्वापेक्षया अष्टम्या योजयेत् । ततः प्राक्पश्चिमतृतीयरेखाप्रान्ताभ्यां [1]षट्कोणमालिखेत् । षट्कोणमध्यस्थितह्रस्वरेखात्रितये पश्चिमरेखाप्रान्ताभ्यां त्रिकोणमुत्पाद्य स्वापेक्षया पञ्चम्या योजयेत् । एवं प्राग्रेखाप्रान्ताभ्यां त्रिकोणमुत्पाद्य स्वापेक्षया पञ्चम्या योजयेत् । मध्यस्थितातिह्रस्वरेखाप्रान्ताभ्यां त्रिकोणमुत्पाद्य स्वापेक्षया तृतीयरेखया योजयेत् । एवं चतुर्विंशतिमर्माणि, चतुर्विंशतिसन्धयः, नवयोनिचक्रम् । एतत्कौलमतरहस्यम् ॥

सृष्टिक्रमस्तु समयमार्गः । स च निरूप्यते—आदौ त्रिकोणमालिख्य, मध्ये बिन्दुं निक्षिप्य, बिन्दोरुपरि त्रिकोणं भित्त्वा त्रिकोणान्तरं प्रागग्रं विलिख्य प्रथमत्रिकोणाग्रात् त्रिकोणान्तरं पश्चिमाभिमुखं विलिखेत् । एवं अष्टकोणचक्रमुत्पन्नम् । एतस्मादेव दशारमुत्पादयेत् । तद्यथा—अष्टकोणप्राक्पश्चिमरेखाप्रान्ताभ्यां षट्कोणमुत्पाद्य विदिग्गतमर्मस्थानेभ्यः चतुर्भ्यः चतुरस्त्रिकोणानुत्पाद्य अष्टकोणगतयोनेरुपरि दक्षिणोत्तरायतरेखा ईशानाग्निकोणत्रिकोणेषु योजयेत् । एवं पश्चिमतो योजयेत्, दशारं भवति । एतस्मादेव दशारात् पुनः दशारान्तरं उक्तरीत्या उत्पादयेत् । एतस्मादेव दशाराच्च चतुर्दशारमुत्पादयेत् । तद्यथा—प्रथमदशारपूर्वपश्चिमरेखाप्रान्ताभ्यां षट्-

---

1. षट्कोणमुत्पाद्य वृत्तेन योजयेत् ।

कोणमुत्पादयेत्। षट्कोणगतमर्मस्थानेभ्यः चतुर्भ्यः त्रिकोणचतुष्कमुत्पादयेत्। ततः उपरिस्थित-मर्मचतुष्टयात् दशारन्यायेन त्रिकोणचतुष्कमुत्पाद्य प्राक्पश्चिमरेखा मेलयेत्। एवं त्रयश्चत्वारिंश-त्कोणाः, चतुर्विंशतिसन्धयः चतुर्विंशतिमर्माणि इति। एतत् समयमतरहस्यम्। अस्मिन् चक्रे त्रिकोणमूर्ध्वमुखं लेखनीयम्। कौलचक्रे त्रिकोणमध्यगतो बिन्दुः। समयचक्रे [1]चतुष्कोणमध्यगतो बिन्दुः। कौलचक्रे कोणसंख्या नास्ति, नवत्रिकोणात्मकत्वात्। नवानां त्रिकोणानां मेलने मर्म-सन्धय एवोत्पद्यन्त इति महद्रहस्यम्। उभयचक्रसाधारणमत ऊर्ध्वं अष्टदलपद्मं, ततः षोडशदल-पद्मं, ततः मेखलात्रितयं, ततः चतुर्द्वारयुक्तं भूपुरत्रितयम्। इति श्रीचक्रोद्धारो विज्ञातव्यः॥

अत्र मेरुप्रस्तारकैलासप्रस्तारभूप्रस्ताराः त्रयः संभवन्ति। मेरुप्रस्तारो नाम नित्याषोडश-तादात्म्यम्। कैलासप्रस्तारो नाम मातृकातादात्म्यम्। भूप्रस्तारो नाम वशिन्यादितादात्म्यम्। एतत्सर्वं 'चतुःषष्ट्या तन्त्रैः' इत्यादिश्लोकव्याख्यानावसरे निपुणतरमुपपादयिष्यामः॥

अत्र रुद्रयामले विशेष उक्तः—'पृश्नयो नाम मुनयः सर्वे चक्रसमाश्रयाः। सेवमाना-श्चक्रविद्यां देवगन्धर्वपूजिताम्॥ अग्नीषोमात्मकं चक्रमग्नीषोममयं जगत्। अग्नावन्तर्बभौ भानुरग्नी-षोममयं स्मृतं॥ त्रिखण्डं मातृकाचक्रं सोमसूर्यानलात्मकम्। त्रिकोणं बैन्दवं सौम्यमष्टकोणं च मिश्रकं॥ चक्रं चन्द्रमयं चैव दशारद्वितयं तथा। चतुर्दशारं वह्नेस्तु चतुश्चक्रं च भानुमत्॥ एत-त्प्रसादादिन्द्राद्या वसवोऽष्टौ मरुद्गणाः। ये ये समृद्धा लोकेऽस्मिन् त्रिपुराचक्रसेवकाः॥ पुरत्रयं च चक्रस्य सोमसूर्यानलात्मकम्। महालक्ष्म्याः पुरं चक्रं तत्रैवास्ते सदाशिवः॥' इति। इममेवार्थं श्रुतिरप्याह तैत्तिरीयके अरुणोपनिषदि, 'इमा नुकं भुवना सीषधेम' (तै. आ. १. २७.) इत्यारभ्य 'ऋषिभिरदात्पृश्निभिः' इत्यन्ता। अरुणोपनिषन्नाम अरुणायाः भगवत्याः प्रतिपादिका उपनिषत्। 'भद्रं कर्णेभिः' इत्यारभ्य 'तपस्वी पुण्यो भवति' (तै. आ. १. प्रश्नः) इत्यन्ता अरुणोपनिषत् अरुणामेव प्रतिपादयति। इममर्थं दृष्टवान् अरुणकेतुः ऋषिः। श्रुत्यर्थस्तावत्—इमा नुकं भुवना सीषधेम। अस्यार्थः—पृश्नयो नाम मुनयः परस्परं संगिरन्ते। इमां चक्रविद्यां, नुकं वितर्के, भुवना भुवनानि, सीषधेम अवगच्छाम। चक्रविद्यामुपाश्रित्यैव भुवनान्यवतिष्ठन्त इति वितर्कयाम इत्यर्थः। यद्वा, इमां चक्रविद्यां भुवना भुवनात्मतया सीषधेम। [2]नुकं पृच्छायाम्; 'नु पृच्छायां वितर्के च' इत्यमरः। इन्द्रश्च विश्वे च देवाः। अस्य वाक्यस्यार्थः स्पष्ट एव। चक्रविद्यामुपाश्रित्यैव आसत इति शेषः। यज्ञं च नस्तन्वं च प्रजां च। आदित्यैरिन्द्रः सह सीषधातु। अस्यार्थः—यज्ञ-मग्निष्टोमादिकं नः अस्माकं तन्वं तनूं शरीरार्धं पत्नीमिति यावत्। प्रजां संतानम्। चकारात्सर्वाः संपदः। आदित्यैः मरुद्गणैः इन्द्रः सह चक्रविद्योपासनात्प्राप्तपरमैश्वर्यः इन्द्रश्चक्रविद्यामस्माकं

---

1. षट्कोण॰  2. नुः पृच्छायाम्। भुवनात्मतया कं पृष्ट्वा अवगच्छाम इत्यर्थः।

उपदिश्य सीषधातु संपादितवान्। प्राप्तकाले लोट्। आदित्यैरिन्द्रः सगणो मरुद्भिः। अस्माकं भूत्वविता तनूनाम्। मन्त्रद्वयस्यार्थः—तनूनां पुत्रमित्रकलत्रादीनां अविता रक्षकः भूतु भवतीत्यर्थः। इन्द्र एवास्माकं योगक्षेमसंपादक इति भावः। आप्लवस्व प्रप्लवस्व। पृश्नयश्चक्रविद्यां प्रस्तुवन्ति। आपादमस्तकं प्लवनं अमृतनिष्यन्दसेचनं कुरु। प्रकर्षेण प्लवनं द्विसप्ततिसहस्रनाडीमार्गेषु आसेचनं कुरु। आण्डीभव ज मा मुहुः। आण्डी पिण्डाण्डं ब्रह्माण्डं च, च्विप्रत्ययान्तः, भव पिण्डाण्डरूपेणास्मदीयेन ब्रह्माण्डरूपेण बाह्येन भवदीयेन प्राप्नुहि, भवत्सायुज्यं देहीत्यर्थः। अज अवगच्छ। मुहुर्मामवगच्छ अनुगृहाणेत्यर्थः। 'अज गतौ' इति धातोरकारलोपश्छान्दसः। सुखादीं दुःखनिधनाम्। अस्यार्थः—सुखमत्ति आदयतीति सुखादी सुखसंपादकः इन्दुः चन्द्रः बैन्दवस्थानगतः। खनिधनां खं बैन्दवस्थानमेव नितरां धनं यस्याः सा ताम्। यद्वा, सुखादीं सुखप्रथमां सुखात्मिकाम्; दुःखस्य निधनं नाशो यत्रेति दुःखनिधनां अविज्ञातदुःखगन्धामित्यर्थः। यद्वा, सुखादीं शोभनेन खेन इन्द्रियेण मनसा आदीं आद्यां, मनोवेद्यामित्यर्थः। दुःखनिधनां दुःखानां दुष्टेन्द्रियाणां चक्षुरादीनां अगोचरामिति। प्रतिमुञ्चस्व स्वां पुरम्। स्वां भगवतीं पुरं देहं प्रतिमुञ्चस्व अधितिष्ठ। मरीचयः स्वायंभुवाः। अस्यार्थः—स्वयं भगवत्याः सकाशात् भवा उत्पन्नाः मरीचयो मयूखाः; सर्वाणि भुवनानि आवृत्य वर्तन्त इति वाक्यशेषः। सूर्यचन्द्राग्नीनां प्रकाशकत्वं स्वायंभुवमरीचिप्रसादादेवेति उत्तरत्र वक्ष्यते। ये शरीराण्यकल्पयन्। अस्यार्थः- ये मयूखाः षष्ट्युत्तरत्रिशतसंख्याकाः शरीराणि कालात्मकानि षष्ट्युत्तरत्रिशतसंख्याकानि दिनानि, तान्येव संवत्सरः, 'संवत्सरो वै प्रजापतिः' (तै. ब्रा. १. ६. २.) इति श्रुतेः। ते ते देहं कल्पयन्तु। ते मरीचयः ते तव भगवत्याः देहं कल्पयन्तु देहमाश्रयन्तु। देहशब्देन देहावयवश्चरणमुच्यते। भवच्चरणोत्पन्ना इत्यर्थः। मा च ते ख्या स्म तीरिषत्। ते तव ख्या ख्यातिः ज्ञानं मा च तीरिषत् अस्मान् न जहातु, भवद्विषयज्ञानमस्माकं सदा सिद्ध्यत्वित्यर्थः। इतः परं पृश्नयश्चक्रविद्यानुष्ठाने त्वरमाणाः परस्परं संगिरन्ते—उत्तिष्ठत मा स्वप्त। अग्निमिच्छध्वं भारताः। राज्ञः सोमस्य तृप्तासः। सूर्येण सयुजोषसः। ऋचोऽयमर्थः—हे भारताः, भायां भारूपायां ज्योतीरूपायां चक्रविद्यायामिति यावत्, रताः उपासनारताः। यद्वा, भारत्याः सरस्वत्याः श्रीविद्यायाः उपासकाः। सामान्यविहितप्रत्ययस्य विशेषवाचित्वात् भारता इति। उत्तिष्ठत उपासनोपक्रमं कुरुत। मा स्वप्त अप्रमत्ता भवत। अग्निमिच्छध्वं स्वाधिष्ठानगताग्निं प्रज्वलयत। राज्ञश्चन्द्रस्य। उमया सहितः सोमः। चन्द्रमण्डलान्तर्गतबैन्दवस्थानगतत्वाद्देव्याः, चन्द्रस्य सोमशब्दवाच्यत्वसिद्धिः। तस्य चन्द्रस्य निष्यन्दैः तृप्तासः तृप्ताः। सूर्येण अनाहतचक्रविशुद्धिचक्रयोर्मध्ये स्थितेन सूर्येण सयुजा, अग्निचन्द्रयोर्मध्यवर्तिना इत्यर्थः। यद्वा, सूर्येण सयुजा राज्ञा तृप्तास इत्यन्वयः। कीदृशाः? उषसः प्लुष्टमायामयक्लेशाः। यद्वा, उषसः उषःकाले ध्यानरताः, तस्मिन् काले भगवतीनिदिध्यासनादे-

विहितत्वात्। इतः परं पूजासामग्रीमुपदिशन्ति पृश्नयः—युवा सुवासाः। युवा दृढाङ्गः स्वस्थः। सुवासा शुभ्रवस्त्रः। इदं शुभ्राभरणशुभ्रमाल्यादीनामुपलक्षकम्। एवंविधः सन् पूजयेदिति शेषः। श्रीचक्रस्य स्वरूपं तावदाहुः—अष्टाचक्रा नवद्वारा। अष्टकोण - दशकोणद्वितय - चतुर्दशकोण - अष्टपत्र-षोडशपत्र - त्रिवलय - त्रिरेखात्मकानि अष्टौ चक्राणि यस्याः सा अष्टाचक्रा। अत एव नवद्वारा नव द्वाराणि त्रिकोणरूपाणि यस्याः सा नवद्वारा। देवानां पूरयोध्या। देवानामिन्द्रादीनां पूज्यत्वेन संबन्धिनी पूः श्रीविद्यानगरम्। यद्वा, दीव्यन्तीति देवाः पञ्चविंशतितत्त्वानि, तेषां पूरधिष्ठानम्। यद्वा, सूर्यचन्द्राग्नीनां पूः, सोमसूर्यानलात्मकत्वात् श्रीचक्रस्य। तस्य पुरत्रयसमष्टिरूपत्वात् पूरित्येकवचनसिद्धिरिति ध्येयम्। अयोध्या असाध्या, मन्दभाग्यानामिति शेषः। तस्याꣳ हिरण्मयः कोशः। स्वर्गो लोको ज्योतिषाऽऽवृतः। अस्यार्थः—तस्यां पुरि श्रीचक्रमध्ये हिरण्मयः कोशः, सहस्रदलकमलकोश इत्यर्थः, बैन्दवस्थाने सहस्रदलकमलकोशस्य विद्यमानत्वात्। तस्य कोशस्य ज्योतिषा स्वर्गो लोकः आवृतः ज्योतिर्लोकः स्वर्गलोक इत्यर्थः। अथ पृश्नयः चक्रविद्योपासनायाः फलमाहुः—यो वै तां ब्रह्मणो वेद। अमृतेनावृतां पुरीम्। तस्मै ब्रह्म च ब्रह्मा च। आयुः कीर्तिं प्रजां ददुः। अयमर्थः—ब्रह्मणः ब्रह्मस्वरूपायाः भगवत्याः तां पूर्वोक्तां अमृतेन आवृतां चन्द्रमण्डलगलत्पीयूषधारावृतां पुरीं श्रीचक्ररूपां त्रिपुरायाः पुरं यो वेद, ज्ञानपूर्वकमर्चनं करोति, तस्मै विदुषे अर्चकाय, ब्रह्म च ब्रह्मस्वरूपा भगवती ब्रह्मा च ब्रह्मस्वरूपो भगवान्। चकारद्वयमुभयोर्मेलनं समुच्चिनोति, मिलितयोरेव बैन्दवस्थाने सहस्रारे सुधासिन्धुमध्ये मणिद्वीपे चिन्तामणिगृहे निवासात्। एतौ उभौ आयुः जीवितं कीर्तिं यशः प्रजां संतानं ददुः दद्यातामित्यर्थः। 'व्यत्ययो बहुलम्' इति वचनव्यत्ययः। शिवशक्त्योः तत्रैव निवासमाहुः—विभ्राजमानाꣳ हरिणीम्। यशसा संपरीवृताम्। पुरꣳ हिरण्मयीं ब्रह्मा। विवेशापराजिता। ऋचोऽयमर्थः—विभ्राजमानां अनन्तकोटिसंख्याककिरणैरिति शेषः, प्रकाशमानाम्। हरिणीं हिरण्यवर्णां 'हिरण्यवर्णां हरिणीम्' (श्रीसूक्तं) इति श्रुतेः। यशसा कीर्त्या सम्यक्परिवृताम्; ये ये लोके कीर्तिमन्तः ते सर्वे भगवतीप्रसादसमासादितकीर्तिमन्त इत्यर्थः। तां बैन्दवीं पुरं चिन्तामणिगृहं ब्रह्मा सदाशिवः, 'ब्रह्मा शिवो मे अस्तु सदाशिवोम्' (तै. आ. १०. ३९) इति श्रुतेः पुँल्लिङ्गब्रह्मशब्दसदाशिवशब्दयोरेक एवार्थः प्रतीतः। विवेश अपराजिता सादाख्या चन्द्रकला विवेश। वाक्यद्वयेन उभयोः प्रवेशभेदप्रतिपादनम्, 'बैन्दवे चिन्तामणिगृहे सदाशिवः सर्वदा संनिहितः, अपराजिता कुण्डलिनीशक्तिः षट्चक्राणि भित्त्वा भूयो भूयः प्रविशति' इतीममर्थं ज्ञापयितुम्। शिवशक्त्योस्तस्मिन् चक्रे अवस्थितिप्रकारमाहुः—पराङेत्यज्यामयी। पराङेत्यनाशकी। अस्यार्थः—पराङ् अधोमुखी चक्ररूपिणी। शिवशक्त्योर्मध्ये शक्तिः अज्यामयी ज्यानिरहिता नाशरहिता नित्या दुःखरहिता आनन्दमयी इत्यर्थः। एति वर्तते। यद्वा, अज्यामयी, ज्या भूमिः, तेन पञ्चभूतानि लक्ष्यन्ते, तन्मयी

न भवतीति अज्यामयी मनस्तत्त्वादिमयी, शिवचक्रात्मकचतुर्योन्यात्मिकेति यावत्, शिवयोनीनां बैन्दवस्थानादधः अवाङ्मुखतया अवस्थानात्। अनाशकी नाशरहिता शक्तिचक्रात्मकपञ्चयोन्यात्मिका पराङ् अधोमुखी एति, शक्तियोनीनामपि शिवयोन्यपेक्षया अवाङ्मुखत्वात्। एवं शिवयोनिशक्तियोन्योः परस्परमवाङ्मुखत्वं चक्रलेखनक्रमादवगम्यते। विदुषः फलमाहुः—इह चामुत्र चान्वेति। विद्वान्देवासुरानुभयान्। दीव्यन्तीति देवाः एकादशेन्द्रियाणि। असुराः असवः प्राणाः प्राणादिपञ्चवायवः तान् रान्ति आददत इति पञ्च तन्मात्रा उच्यन्ते। उभयान् उभयत्र देवासुरेषु अन्वितान् मायाशुद्धविद्यामहेश्वरसदाशिवान् यो विद्वान् पञ्चविंशतितत्त्वजातं विदित्वा शिवशक्तिसंपुटात्मकं पञ्चविंशतितत्त्वविलक्षणं षड्विंशतत्त्वं यस्तु वेत्ति स विद्वान् इह च इह लोके पूजातारतम्यवशात् अमुत्र च परलोके सार्ष्टिसालोक्यसामीप्यसारूप्यसायुज्यात्मिकया पञ्चविधया मुक्त्या अन्वेति युज्यते। सार्ष्ट्यादिस्वरूपं सप्रपञ्चं पुरस्तात् प्रपञ्च्यते। अथ देवासुरोभयज्ञानोपायमाहुः—यत्कुमारी मन्द्रयते। यद्योषिद्यत्पतिव्रता। अरिष्टं यत्किं च क्रियते। अग्निस्तदनुवेधति। अयमर्थः—कुण्डलिनीशक्तेरवस्थात्रयं विद्यते। यद्यस्मिन् चक्रे कुमारी कुमारावस्थामापन्ना प्रथमं सुप्तोत्थिता मन्द्रयते मन्द्रस्वरं करोति, कुण्डलिन्याः सर्पात्मकत्वात्। सर्पो हि सुप्तोत्थाने मन्द्रस्वरं करोति। तद्वदित्यर्थः। यद्योषित् यस्मिन् चक्रे कुलयोषित् विष्णुग्रन्थिपर्यन्तं गत्वा, रातीति शेषः, 'कुलयोषित्कुलं त्यक्त्वा राति विष्णोः प्रभेदने' इति सनत्कुमारवचनात्। यत् यस्मिन् चक्रे पतिव्रता पत्या सदाशिवेन सार्धं सहस्रदलकमले विहरमाणा। रिष्टं शुभाभावं, 'रिष्टं क्षेमे शुभाभावे' इत्यभिधानात्; तदन्यदरिष्टं शुभं, अमृतास्वादमित्यर्थः, यत्किञ्चित्क्रियते तत् स्वाधिष्ठानगतोऽग्निः अनुवेधति सहायं करोति। अतश्च अभ्यासवशात् वायुना अग्निं प्रज्वाल्य अग्निशिखानुविद्धविलीनचन्द्रमण्डलगलत्पीयूषधारानुभवे पञ्चविंशतितत्त्वातीता परमेश्वरी इति ज्ञातुं सुशकमित्युपदेशः। चक्रविद्योपासनं वर्णिनामाश्रमिणां ज्ञानिनामज्ञानिनां च फलदायकमित्यभिसंधायाहुः—अशृतासः शृतासश्च। यज्वानो येऽप्ययज्वनः। स्वर्यन्तो नापेक्षन्ते। अयमर्थः—अशृतासः अपक्वाः अक्षपितान्तःकरणकल्मषा इत्यर्थः। शृतासश्च पक्वाश्च, 'आज्जसेरसुक्' इत्यसुगागमः, क्षपितान्तःकरणकल्मषा इत्यर्थः। यज्वानः यजनशीलाः त्रैवर्णिकाः आश्रमिणश्च। अयज्वनः यागरहिताः शूद्रादयः। 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' (तै. सं. ७. १. १.) इति श्रुतिः त्रैवर्णिकैकनियताधिकारयज्ञशब्दवाच्याग्निष्टोमादिपरा। चक्रविद्योपासने शूद्राणामपि अधिकारचोदनात् निषादस्थपतिवत् वैदिके कर्मण्यधिकारसिद्धेः न काचित्क्षतिः। यन्तः, 'इण् गतौ' चक्रविद्यामवगच्छन्तः स्वः स्वर्गं नापेक्षन्ते। चक्रविद्योपासनाव्यतिरेकेण देवतान्तरोपासनायामनिष्टमाहुः—इन्द्रमग्निं च ये विदुः। सिकता इव संयन्ति। रश्मिभिः समुदीरिताः। असाल्लोकादमुष्माच्च। अयमर्थः—सुरासुरमुख्यवन्दितचरणारविन्दायाः सर्वभूता-

न्तर्यामिन्याः सर्वव्यापिन्याः जगदुत्पत्तिस्थितिलयहेतोश्चक्रविद्याया अन्यत्वेन ये इन्द्रमग्निं, चकारात् यमादिलोकपालान् पृथिव्यादिसदाशिवान्ततत्त्वानि च उपास्यत्वेन ये विदुः, ते सिकता इव वालुककणा इव संयन्ति, परस्परं विरला भ्रष्टा भवेयुरित्यर्थः। किं च, रश्मिभिः यमपाशैः, उत्तरप्रबन्धे 'अपेत वीत' इत्यादौ प्रतिपादितैः, समुदीरिताः संयता बद्धा भवेयुरित्यर्थः। किं च, अस्माल्लोकात् अमुष्माल्लोकाच्च भ्रष्टा भवेयुरिति शेषः। अत एव श्रुत्यन्तरम्—'अन्धं तमः प्रविशन्ति येऽविद्यामुपासते' (ई. उ. ९)। अयमर्थः—अविद्यां विद्याविरुद्धां ज्ञानमार्गविरुद्धां इन्द्रादिसेवां 'वाचं धेनुमुपासीत' (बृ. ७. ८. १) इत्येवमध्यारोपितसेवां च ये कुर्वते, ते अविद्वांसः अन्धं तमः प्रविशन्ति, अन्धतामिस्रं प्रविशन्तीत्यर्थः। चकारः प्रकरणसमाप्तिद्योतकः। ऋषिभिरदात्पृश्निभिः॥ पृश्निनामभिः ऋषिभिः एतत्सर्वमदात्, अदायि। कर्मणि लुङ्। छान्दसः कर्मणि प्रत्ययलोपः, कर्तृप्रत्ययव्यत्ययश्च। ऋषिभिः पृश्निभिरेवमुक्तमित्यर्थः। यद्वा, पृश्निभिः ऋषिभिः सहितः ऋषिसङ्घः एवमदात्, वाचमिति शेषः, उक्तवानित्यर्थः ॥ ११ ॥

## सौभाग्यवर्धनी

'शिवाधारे चक्रे' इत्यादि श्रीचक्रं सूचितम्। इदानीं श्रीचक्रस्य स्वरूपमात्रमाह—**चतुर्भिरिति।** चतुर्भिः श्रीकण्ठैः शिवैः शिवयुवतिभिः शक्तिभिः। शिवानामध ऊर्ध्वाग्रास्त्रिकोणाः शिवाः, अधोमुखकोणाः शक्तयः ताभिः प्रभिन्नाभिः शम्भोर्नवभिः मूलप्रकृतिभिः श्रीचक्रभूताभिर्नवयोनिभिः, त्रयश्चत्वारिंशत्कोणाः वसुदलकलाश्रत्रिवलयत्रिरेखाभिः अष्टदलषोडशदलवृत्तत्रयभूगृहत्रयैः सह तव चरणकोणाः परिणताः। तव चरणयोः कोणपरिणतय एवेत्यर्थः। तदुक्तं भवति—श्रीचक्रान्तर्गतबिन्दुरूपस्य शंभोरूर्ध्वाधःस्थितनवयोनिभिः श्रीचक्रमूलकारणभूताभिर्निष्पन्नत्रिकोणाष्टकोणदशारद्वयचतुर्दशाराणां त्रिचत्वारिंशत्कोणाः अष्टदलषोडशदलवृत्तत्रयचतुर्द्वारोपशोभितभूगृहत्रयैः सार्धं तव चरणकोणाः परिणताः। तव चरणकोणपरिणतिरूपं श्रीचक्रं विलसितमिति भावः। तदुक्तं संकेतपद्धतौ—'पञ्चशक्तिचतुर्वह्निसंयोगाच्चक्रसंभवः' इति। चतुर्वह्नयः रुद्रा इत्यर्थः, 'रुद्रो वा एष यदग्निः' इति श्रुतेः। अथर्वणश्रुतिरपि सौभाग्यकाण्डे—'तिस्रः पुरस्त्रिपथा विचर्षणा अत्राकथा अक्षराः संनिविष्टाः। अधिष्ठायैना अजरा पुराणी महत्तरा महिमा देवतानाम्॥ नवयोनिं नव चक्राणि दीधिरे नवैव योगा नव योगिन्यश्च। नवानां चक्रा अधिनाथाः स्योना नव भद्रा नव मुद्रा महीनाम्॥ एका स आसीत्प्रथमा सा नवासीदा सोनविंशादा सोनत्रिंशत्। चत्वारिंशादथ तिस्रः समिधा उशतीरिव मातरो माऽऽविशन्तु॥' इति। अस्योद्धारक्रमस्तु 'वृत्तं कृत्वेष्टमानेन सूत्रं पूर्वापरायतम्। विन्यस्य विभजेदष्टचत्वारिंशद्विभागतः॥ षष्ठे षष्ठे पञ्चमे च तृतीयेऽथ तृतीयके। चतुर्थेऽथ तृतीये च षष्ठे षष्ठांशके पुनः॥ विधाय नव चिह्नानि तेषु सूत्राणि तापयेत्॥ नव याम्योत्तराग्राणि तेषामुभयपार्श्वतः। आद्यद्वितीय-

तुर्याणां तथा पञ्चमषष्ठयोः ॥ अष्टमान्तिमयोर्विद्वानग्निबाणे कलांशकान् । पुराणद्वयष्टवेदाग्निसंख्यां-शान्मार्जयेत्क्रमात् ॥ शनिमध्ये रवेरन्तौ चन्द्रान्तौ केतुमध्यतः । मङ्गलान्तौ वृत्तमध्ये बुधान्तौ राहुमध्यतः ॥ गुरोरन्तौ भौममध्ये शुक्रान्तौ सोममध्यतः । शन्यन्तौ वृत्तमध्ये तु राह्वन्तौ रविमध्यतः । केत्वन्तौ बुधमध्ये तु योजयेत्क्रमतो बुधः ॥ मध्यवह्निस्फुरद्रूपमष्टद्विदशवह्निकम् । चतुर्दशानलद्योतं श्रीचक्रं जायते परम् ॥ तद्बहिर्वसुपत्राब्जं तद्बहिः षोडशच्छदम् । वृत्तत्रितयसं-शोभं त्रिरेखाञ्चितभूगृहम् ॥ त्रिधामनिलयं द्वारचतुष्टयसुशोभितम् । सर्वतेजोमयं दिव्यं सोमसूर्यानला-त्मकम् ॥' इति ॥ षोडशकलाः सप्तविंशतिनक्षत्राणि ; तेन त्रिचत्वारिंशत्कोणात्मना सोमरूपता । द्वादश कलाः द्वादश मूर्तयः, द्वादश राशयः, वेदत्रयी, उदात्ताद्याः स्वराः ; तेन त्रिचत्वारिंशत्को-णात्मना सूर्यरूपता । मध्यत्रिकोणः साक्षात्स्फुरद्रूपबिन्दुचक्रतेजोविलासः । तस्य विलासाः अष्टकोणा-त्मना अष्टौ मूर्तयः—जातवेदाः सप्तजिह्वः हव्यवाहनः कौमारतेजाः अश्वोदरजः वैश्वानरः विश्वमुखो देवमुख इति । दश कलाः, दश विभूतयः-विराट् स्वराट् सम्राट् अभिभूः सुभूः विभूः प्रभ्वी प्रभूतिः शिवा विभूतिः इति । दशकलात्मनाऽन्तर्दशारं, दशविभूत्यात्मना बाह्यदशारम् ; सात्त्विकराजसतामसजिह्वात्मना चतुर्दशारमिति वह्निरूपता ; तथा च श्रुतिः–'प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो अग्निर्भवेह । विश्वा आशा दीद्यानो विभाह्यूर्जं नो धेहि द्विपदे चतुष्पदे ' (तै. सं. ४. ६. ५.) इति । अस्यार्थः—अग्नेः प्राचीं दिशमनु पश्चात् प्रदिशं विदिशं प्रेहि प्रकर्षेण इहि गच्छ । सर्वत्र दीप्यस्व, विद्वान्, यतस्त्वं विद्वान् सर्वं रहस्यं वेत्सीति भावः । अग्नेरग्ने पुरः अग्निर्भवेह ; त्रिकोणस्य त्रिकोणस्य पुरः अग्निर्भवेह ; एतावता त्रिकोणचतुष्टयमूर्ध्वमुखं स्पष्टीकृतम् । विश्वा आशा दीद्यानः, आशा दिशः, विश्वा विश्वसंख्याः प्राप्य दीप्यमानः विभाहि; विश्वं भुवनं तत्संख्यां चतुर्दश, तेन चतुर्दशाररूपेण दीप्यस्वेति संपन्नोऽर्थः । ऊर्जं नो धेहि द्विपदे चतुष्पदे । मनुष्यगवादिचतुष्पदे अन्नं धेहि । एतच्चतुर्दशारदशारद्वयाष्टकोणबिन्दुभिः स्फुरद्रूपं दिव्यचक्रमष्टदलषोडशदलचतुरश्रत्रयगतद्वारचतुष्टयैः षट्त्रिंशत्तत्वात्मकैर्वेष्टितं परदेवताया आसन-मिति सिद्धम् । श्रुत्यन्तरं च—'ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रं घर्ममीमहे ' (तै. सं. १. ५. ११ ) इति । अस्यार्थः—विश्वानराणां संबन्धी वैश्वानरः ; सर्वदेवमुख इत्यर्थः, 'अग्निमुखा वै देवाः ' इति श्रुतेः । ऋतस्य ज्योतिषस्पतिम् । ऋतमग्निम्, 'अग्निर्वा ऋतम् ' इति श्रुतेः । जात्येकवचनम् । अग्निमात्रस्य पतिम् ; अजस्रं अचः अस्राणि यस्य सोऽजस्रः स चास्रं चतुर्दशास्रं वा, बिन्दुविसर्गयोरचां मध्ये गणनाभावाच्चतुर्दशैवाचः ; ईमहे जानीमहे । अथवा, विश्वसंबन्धी वैश्वः, वैश्वश्चासावनलश्च वैश्वानरः ; रलयोरभेदः । यथा 'सरिरस्य मध्यात् ' इति । विश्वाकारेण चतुर्दशभुवनरूपास्राकारेण दीप्यमानानामपरमजस्रं नवास्रं घर्मं सूर्यात्मकमीमहे इति चक्रोद्धारप्रपञ्चो गुरुमुखादवगतो ज्ञापितः ॥ ११ ॥

## अरुणामोदिनी

अथेदानीमिन्दुमण्डलात्मकं तादृशं चक्रमुपदिशति—**चतुर्भिरिति**। हे देवि, चतुर्भिः चतुःसंख्याकैः। श्रीः शोभा कण्ठे यस्य सः श्रीकण्ठः शिवः, राजकीयपुरुषो राजेत्यादिवदुपचारात्तदात्मकाः कोणा अपि श्रीकण्ठा इत्युच्यन्ते। अथ वा, श्रीकण्ठः शिवः एषां प्रतिपाद्यत्वेनास्तीति वा श्रीकण्ठाः कोणाः; अर्शआदित्वान्मत्वर्थीयोऽच्प्रत्ययः। तैः कोणैः, 'चतुर्भिः शिवरूपैश्च' इत्यागमात्। तथा शं परमानन्दं भावयतीति शिवासंस्पर्शेनेति व्युत्पत्त्या 'बिन्दुरूपः शिवः स्वयम्' इत्यागमाद्वा शंभुरित्यनेन बिन्दुरुच्यते। तथा च शंभोर्बिन्दुमादाय परिगृह्येति कर्मणि ल्यब्लोपे पञ्चमी; शुद्धपञ्चमीपक्षे 'अन्यारात्' इति सूत्रे अन्यशब्देनार्थग्रहणात्साधुत्वम्। प्रभिन्नाभिः प्रकर्षेण भिन्नाभिः, बिन्दुना मध्ये स्थित्वा विविक्ताभिरित्यर्थः॥

यत्तूक्तम्—शंभुशब्देन चत्वारः श्रीकण्ठा उच्यन्त इति, तदसत्। शंभुश्रीकण्ठपदयोः पर्यायत्वेन पौनरुक्त्यापत्तेः, शक्तेर्भिन्नैश्चतुर्भिरिति च वक्तव्यत्वप्रतीतेश्च। एतेन शंभुशब्देनोर्ध्वमुखत्रिकोणचतुष्कमुच्यत इत्यपि परास्तम्। पञ्चभिः पञ्चसंख्याकैः 'शक्तिरूपैश्च पञ्चभिः' इति वचनादिति भावः। शिवस्य युवतिर्जाया शक्तिः, तत्प्रतिपादकाः कोणाश्चोपचारात्तत्पदेनोच्यन्ते। अत्र युवतिपदेन यौति मिश्रीभवतीति व्युत्पन्नेन देवयोस्तद्देहयोश्चैक्यं सूच्यते। इत्येवंप्रकारेण नवभिर्नवसंख्याभिः। अत्रोक्तं चतुःशत्याम्—'चतुर्भिः शिवरूपैश्च शक्तिरूपैश्च पञ्चभिः। नवचक्रैश्च संसिद्धं श्रीचक्रं शिवयोर्वपुः॥ त्रिकोणमष्टकोणं च दशकोणद्वयं तथा। चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च च॥ बिन्दुश्चाष्टदलं पद्मं पद्मं षोडशपत्रकम्। चतुरस्रं च चत्वारि शिवचक्राण्यनुक्रमात्॥ त्रिकोणे बैन्दवं श्लिष्टमष्टारेऽष्टदलाम्बुजम्। दशारयोः षोडशारं भूगृहं भुवनाश्रके॥ शैवानामपि शाक्तानां चक्राणां च परस्परम्। अविनाभावसंबन्धं यो जानाति स चक्रवित्॥ त्रिकोणमष्टकोणं च दशकोणद्वयं तथा। मनुकोणं चतुष्कोणं कोणचक्राणि षट् क्रमात्॥ मूलाधारं तथा स्वाधिष्ठानं च मणिपूरकम्। अनाहतं विशुद्धाख्यमाज्ञाचक्रं विदुर्बुधाः॥ नवाधारस्वरूपाणि कोणचक्राणि पार्वति। त्रिकोणरूपिणी शक्तिर्बिन्दुरूपः शिवः स्वयम्। अविनाभावसंबन्धस्तस्माद्बिन्दुत्रिकोणयोः॥' इति॥ मूलप्रकृतिभिः प्रपञ्चसृष्ट्यादिकर्तृत्वेन सर्वतत्त्वात्मकत्वेन च मूलकारणैरित्यर्थः। तदुक्तम्—'त्वगसृङ्मांसमेदोऽस्थिधातवः शक्तिमूलकाः। मज्जाशुक्रप्राणजीवधातवः शिवमूलकाः॥ नवधातुमयो देहो नवयोनिसमुद्भवः। दशमी योनिरेवैषा परा शक्तिस्तदीश्वरी॥ यत्पिण्डाण्डं समुत्पन्नं तद्वद्ब्रह्माण्डमुद्भभौ। पञ्च भूतानि शाक्तानि मायादीनि शिवस्य तु॥ माया च शुद्धविद्या च महेश्वरसदाशिवौ। पञ्चविंशतितत्त्वानि तत्रैवान्तर्भवन्ति ते॥ शिवशक्त्यात्मकं विद्धि जगदेतच्चराचरम्॥' इति॥ यद्वा, मूलप्रकृतिभिर्वसुदलादीनां विकृतिरूपत्वात् मूलकारणैः, तथा वसुशब्देनाष्टसंख्योच्यते,

'अष्टौ वसवः' इति श्रुतेः। तेन वसुदलमष्टदलमित्यर्थः। कलाशब्देन षोडशसंख्योच्यते, इन्दुकलाः षोडशेति प्रसिद्धेः। अश्रशब्देन दलान्युच्यन्ते। तेन कलाश्रं षोडशदलमित्यर्थः। त्रयाणां वलयानां समाहारस्त्रिवलयम्; मेखलाकाररेखात्रयमित्यर्थः। पात्रादित्वान्न ङीप्। तिस्रश्च ता रेखाश्च त्रिरेखाः प्राकारवलयाकाररेखाश्चतुर्दिक्षु द्वारयुक्तं भूपुरत्रयमित्यर्थः। सर्वेषां द्वन्द्वः। ताभिः सार्धं वसुदलषोडशदलमेखलात्रयभूपुरत्रयैः सह परिणताः परिणामं प्राप्ताः। लोकोपकारार्थं चक्रात्मनाऽवस्थिताः तव भवत्याः शरणस्य श्रीचक्राख्यनिवासगृहस्य; 'शरणं गृहरक्षित्रोः' इति विश्वः। चरण इति पाठे चरणं श्रीचक्रम्; 'चरणं नो लोके सुधितां दधातु', 'चरणं पवित्रं विततम्' इत्यादिमन्त्रवर्णात्; चरन्तीत्यनेनोपासकाः सर्वानभीष्टार्थान्, चरन्त्यस्मिन्सर्वे लोका इति वा चरणं चक्रम्; तस्य कोणास्त्रयश्चत्वारिंशत् त्रिसंख्योत्तरा चत्वारिंशदित्यर्थः। नवयोनिभिः वसुदलकलाश्रत्रिवलयत्रिरेखाभिर्बिन्दुत्रिकोणाभ्यां च संख्यापूर्तिः। चतुश्चत्वारिंशदिति पाठे त्रिकोणाधःस्थितकोणद्वयस्याष्टकोणान्तर्गतत्वेन न संख्याविरोध इति लक्ष्मीधरः। चक्रलक्षणं तूक्तमाचार्यैः—'बिन्दुत्रिकोणवसुकोणदशारयुग्ममन्वश्रनागदलसंयुतषोडशारम्। वृत्तत्रयं च धरणीसदनत्रयं च श्रीचक्रमेतदुदितं परदेवतायाः॥' इति। अस्य श्रीचक्रस्य माहात्म्यं कथितं रुद्रयामले—'पृश्नयो नाम मुनयः सर्वे चक्रमुपाश्रिताः। सेवमानाश्चक्रविद्यां देवगन्धर्वपूजिताम्॥ अग्नीषोमात्मकं चक्रमग्नीषोममयं जगत्। अग्नावन्तर्बभौ भानुरग्नीषोममयं स्मृतम्॥ त्रिखण्डं मातृकाचक्रं सोमसूर्यानलात्मकम्। महालक्ष्म्याः पुरं चक्रं तत्रैवास्ते सदाशिवः॥' अत्र चक्रस्य सोमसूर्यानलात्मकत्वमवरोहणक्रमेणोक्तम्। श्रीचक्रस्य मूलाधारादिना षड्रूपस्य त्रिखण्डात्मनेति केचित्। 'सर्वतेजोमयं दिव्यं सोमसूर्यानलात्मकम्' इति वचनात्; षोडशकलानां तत्क्षेत्रसप्तविंशतिनक्षत्रैः सह त्रयश्चत्वारिंशत्कोणात्मना सोमरूपता। द्वादश कलाः, द्वादश नित्याः, द्वादश राशयः, वेदत्रयी, उदात्तादिस्वरास्तेन त्रिचत्वारिंशत्कोणा इति सूर्यरूपता। मध्यत्रिकोणः स्फुरद्रूपबिन्दुचक्रतेजोविलासस्तस्य विलासाः, अष्टकोणात्मका अष्टौ मूर्तयः,—जातवेदाः, सप्तजिह्वः, हव्यवाहनः, कौमारतेजाः, अश्वोदरः, वैश्वानरः, विश्वमुखः, देवर्षिः। दशकलाः दश विभूतयः—विराट्, स्वराट् सम्राड्, अभिभूः, सुभूः, प्रभूः, प्रभूतिः शान्ता, शिवा, विभूतिः; सात्त्विकराजसतामसजिह्वात्मना वह्निरूपतेत्यन्ये। महत्तामेतदीयां तां वदत्यारण्यक श्रुतिः। प्रेक्ष्यो लक्ष्मीधरात्सर्वो विशेषः साधुबुद्धिभिः। अत्रोपरम्यतेऽस्माभिरतिविस्तरभीरुभिः॥—इति ॥ ११ ॥

## आनन्दगिरीया

कुहरिणि इति कुण्डलिनीरूपां स्तुत्वा परदेवतायाश्चक्रमाह—**चतुर्भिरिति**। शिवाकारे मञ्च इत्यादिना सूचितं श्रीचक्रं निरूपयति। श्रीचक्रोद्धारः। हे मातः अमुना प्रकारेण विरचनेन

यत् चत्वारिंशत्तव चरणकोणाः परिणताः, चरणशब्देनात्र लक्षणया चरणाधानस्थानं सिंहासनं चक्रमुच्यते। तस्य कोणास्त्रिकोणाः कोष्ठाः त्रयश्चत्वारिंशज्जायन्ते। तथाहि, मध्ये बिन्दुयुक्त एकस्त्रिकोणः, ततोऽष्टौ त्रिकोणाः, तदनु द्विदश त्रिकोणाः तदनु चतुर्दश त्रिकोणाः। कथं जायन्त इति तत्प्रकारमाह—चतुर्भिः श्रीकण्ठैरित्यादि, नवभिः नवसंख्याकैः मूलप्रकृतिभिः श्रीचक्रस्य मूलकारणभूताभिर्मिलिताभिः इत्यर्थः। नवसंख्यां संपादयति—चतुर्भिः श्रीकण्ठैः पञ्चभिः शिवयुवतिभिः। श्रीकण्ठशब्देन पर्यायभूतरुद्रशब्दवाच्याः त्रेताग्निस्थानाः त्रिकोणाकारा वह्नयः। श्रीरुद्रशब्देन श्रुतौ वह्निरिति परिभाष्यते, रुद्रो वा एष यदग्निरिति। ते चोर्ध्वमुखाः। अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनं, अणुमनसोश्चाद्यन्तकर्माणि अदृष्टकारितानीति भाष्यात्। तथा चोर्ध्वमुखाश्चत्वारः त्रिकोणाः। अधोऽधः संलग्नाः तैः, शिवयुवतिशब्देन पञ्च योनयः त्रिकोणाकाराः। ताभिश्च किंलक्षणाभिः ताभिः शंभोः प्रभिन्नाभिः, शंभोः त्रिकोणचतुष्कात् प्रभिन्नाभिः विपरीताभिः। वैपरीत्यं चात्र अधोमुखतया। ताश्चाधोमुख्यो योनीनामधोमुखत्वनियमात्। एवं शिवशक्त्यात्मना श्रीकण्ठशिवयुवत्योः परस्परालिंगने जाते अन्योन्यसमागमेन त्रयश्चत्वारिंशत् त्रिकोणा जायन्ते। तदनु चाष्टदलषोडशदलादिदलैर्लेखनीयमित्याह-त्रयश्चत्वारिंशद्वसुदलकलाश्रत्रिवलयत्रिरेखाभिः सार्धमिति। अतः परं चक्रोद्धारः कथ्यते। "वृत्तं कृत्वेष्टमानेन मध्ये सूत्रं च पातयेत्। पूर्वपश्चिमलग्नाग्रं द्विचत्वारिंशवद्भवेत्। पूर्वदिग्भागतः कार्या रेखा दोषापनुत्तये। त्यक्त्वा षड्भागमध्येऽस्या रेखा याम्योत्तराञ्चिता। पञ्चभागांस्ततस्त्यक्त्वा द्वितीयापि तथा भवेत्। ततो भागचतुष्केण दूरतस्त्रितया भवेत्। ततो भागत्रयं त्यक्त्वा रेखा स्याच्च चतुर्थिका। भागद्वयं ततस्त्यक्त्वा रेखा कार्याऽथ पञ्चमी। ततो भागचतुष्केण षष्ठी रेखा ततो भवेत्। सप्तमी स्यात् त्रिभिर्भागैः चतुर्भागैस्तथाष्टमी। नवमी पञ्चभिर्भागैरेवं रेखा विधाय तु। अन्तरं च ततः षड्भिरंशैराद्यन्तरेखयोः। सूर्यादिग्रहनामानि नवानां धारयेत्क्रमात्। पार्श्वद्वयेऽपि कर्तव्यं रेखाग्राणां विमार्जनम्। अग्रयोरुभयोर्लुंपेत्सूर्यभागत्रयं त्रयम्। पञ्चभागान्प्रलुंपेत द्वितीयापार्श्वयोर्द्वयोः। भागस्तेन भवेदेवं अग्रयोः शनिसोमयोः। बुधरेखाग्रयोर्लुप्याद्भागान्षोडश यत्नतः। अष्टादश विलुप्येत भागान् गुर्वग्रयोर्द्वयोः। षोडशोभयतो लुप्येत् भागान्भृग्वग्रयोस्तथा। राहुकेत्वोः क्रमेण स्यादष्टषड्भागमार्जनम्। सूर्याग्रे चुंबतः शुक्रमध्यं सोमाग्रके पुनः। चुंबतः केतुमध्ये तु भौमाग्रे वृत्तचुंबके। बुधाग्रे राहुमध्यं तु चुंबतस्तद्वदेव हि। चुंबतः शशिमध्यं तु अग्रभागं बृहस्पतेः। पूर्वस्यां वृत्तमध्ये तु चुंबतोऽग्रे शनेरपि। राह्वग्रे सूर्यमध्ये तु चुंबतस्तद्वदेव हि। केत्वग्रे चुंबतो भौमं भृग्वग्रे सोमचुंबके॥" एवं चक्रलेखेन जाते मध्ये बिन्दुना शोभमानमेकं त्रिकोणं, ततोऽष्टत्रिकोणं, तत्परितो दशत्रिकोणं, ततोऽपि दशत्रिकोणं, ततश्चतुर्दशत्रिकोणमण्डितं, तद्बहिरष्टदलं, ततः षोडशदलं, ततो वृत्तत्रयं तदनु रेखात्रयविनिर्मितं चतुर्द्वारोपशोभितं चतुरस्रं

द्वादशकोणं श्रीचक्ररूपं सिंहासनं श्रीभुवनेश्वर्याः सिद्धमिति। सर्वतेजोमयं नित्यं सोमसूर्यानलात्मकम्। षोडश कलाः सप्तविंशतिनक्षत्राणि, तेन त्रयश्चत्वारिंशत्कोणात्मना सोमरूपता। द्वादश कलाः, द्वादश शक्तयः, वेदत्रयी उदात्तानुदात्तस्वरितास्त्रयः स्वरितप्रचयाः स्वराः द्वादश राशयः, तेन त्रिचत्वारिंशत्कोणात्मना सूर्यरूपता। मध्ये त्रिकोणः साक्षाद्रुद्ररूपः, अष्टकोणा अष्टौ मूर्तयः, जातवेदाः सप्तजिह्वो हव्यवाहनः कौमारतेजा अश्वोदरजो वैश्वानरो विश्वमुखो विश्वदेवः, दश कलाः, दश विभूतयः विराट् स्वराट् सम्राट् अभिभूः विभूः परिभूः प्रभ्वी द्युपतिः शान्ता शिवा, सात्त्विकराजसभेदे सप्तजिह्वात्मना चतुर्दशारं अनेन वह्निरूपतेति। एकं त्रिकोणमेव। तथा सति त्रिकोणाद्बहिर्वशिन्यग्रगता त्रिपुरा सिद्धा, तदग्रे त्रिपुरांबिकापूजनं मूलत्रिकोणे योगिनीत्रयं, तद्बहिरायुधपूजेति तन्त्रोक्तम्। कादिमते भैरवीशिवाभ्यां संयोज्य ॥ ११ ॥

## तात्पर्यदीपिनी

ननु भगवता सम्यगुक्तं यद्द्विःप्रकारोऽन्तर्यागः प्रकाशितः। बहिर्यागस्यावरणदेवतानामपि सिद्धयर्थं प्रागुक्तमन्दिरमन्त्रवाच्यनानाविधदिव्यप्रदेशजुष्टश्रीनगरमध्यस्थचिन्तामणिगृहमध्यस्थं नवयोनिचक्रमध्ये भगवत्या नित्याधिवासभूतं श्रीचक्रसिंहासनं न प्रकाश्यते तर्हि, बहिर्यागसिद्धिः कथमित्याशंक्याह- **चतुर्भिरिति** - हे परमेश्वरि, तव चरणकोणाः चरति गच्छति लोकं व्याप्नोति तच्चरणम्। यद्वा चरति सर्वमज्ञानतिमिरनिकुरुम्बं भक्षयति तच्चरणम्। तस्य कोणाः त्रिकोणाः, वसुदल-कलाश्र-त्रिवलय-त्रिरेखाः, ताभिः सार्धं परिणताः परिणामं प्राप्ताः त्रयश्चत्वारिंशद्भवन्ति। चत्वारिंशदग्रे त्रिशब्दः। किंभूताभिः? उक्तरेखाभिः, इति अमुना प्रकारेण शंभोः सकाशात्प्रभिन्नाभिः नवभिः नवसंख्ययोनिचक्रैः मूलप्रकृतिभिः मूलप्रकृतिरूपाभिः। इतीति किं? चतुर्भिः श्रीकण्ठैः शिवतत्त्वैः, पञ्चभिः शिवयुवतिभिरपि शक्तितत्त्वैः, एवं मिलित्वा नव मूलप्रकृतयो जाताः। अभेदं रहस्यं भैरवयामले चन्द्रज्ञानविद्यायां पार्वतीं प्रति शिव आह-"चतुर्भिः शिवचक्रैश्च शक्तिचक्रैश्च पञ्चभिः। नव चक्रैश्च संसिद्धं श्रीचक्रं शिवयोर्वपुः। त्रिकोणमष्टकोणं च दशकोणद्वयं तथा। चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च च। बिन्दुश्चाष्टदलं पद्मं पद्मं षोडशपत्रकम्। चतुरश्रं च चत्वारि नवचक्राण्यनुक्रमात्। त्रिकोणे बैन्दवं श्लिष्टं अष्टारेऽष्टारमंबुजम्। दशारे षोडशारं च भूगृहं भुवनाश्रके। शैवानामपि शाक्तानां चक्राणां च परस्परम्। अविनाभावसम्बन्धं यो जानाति स चक्रवित्। त्रिकोणमष्टकोणं च दशकोणद्वयं तथा। मनुकोणं चतुःकोणं कोणचक्राणि षट्क्रमात्। मूलाधारं तथा स्वाधिष्ठानं च मणिपूरकम्। अनाहतविशुद्धाख्यमाज्ञाचक्रं विदुर्बुधाः। तवाधारस्वरूपाणि कोणचक्राणि पार्वति"। त्रिकोणयोः। बिन्दुत्रिकोणवसुकोणद्वयषोडशारदशारवृत्तत्रयमनवः एवं नवयोनिचक्रमेतत् ॥ ११ ॥

## पदार्थचन्द्रिका

एवं भवानीध्यानमुक्त्वा तत्पूजापीठपर्यायं यन्त्रोद्धारमाह-**चतुर्भिरिति**। हे हिमगिरिसुते तव भवनकोणाः पूजापीठकोणाः त्रयश्चत्वारिंशत्संख्याकाः परिणताः, परिणामं प्राप्ताः, सिद्धा भवन्तीति शेषः। कथं भूता भवनकोणाः, वसुदलं अष्टदलं कमलं, कलाब्जं कलादलपद्मं षोडशदलाब्जम्। कलाश्रमिति पाठे एक एवार्थः। त्रिवलयानि त्रीणि च तानि वलयानि मण्डलानि च। तिस्रो रेखाः त्रिरेखाः ताभिः सार्धं सहिताः, परिणामहेतुभूताः। शक्तीराह-मूलेति-शंभोः श्रीमहादेवस्य संबन्धिनीभिः, जगन्मूलभूताभिः प्रकृतिभिः। कथं भूताभिः ? एवं प्रकारेण नवभिर्नवसंख्याकाभिः। नवत्वसंख्याप्रकारमेवाह-चतुर्भिः श्रीकण्ठैः पञ्चभिरपि पञ्चभिश्च शिवयुवतिभिः। प्रभिन्नाभिः श्रिताभिः, श्रीकण्ठैरिति शेषः। अधोमुखत्रिकोणो यः स्त्र्यवयवः शिवयुवतिवाच्यः। अपिशब्दश्चार्थे। एतेन समस्तदेवमयं यन्त्रमित्युक्तं भवति॥ ११ ॥

## डिण्डिमभाष्यम्

ननु भवता सम्यक्तया द्विप्रकारोऽन्तर्यागः प्रकाशितः। बहिर्यागस्यावरणदेवता-नाम-स्थान-सिद्ध्यर्थं प्रागुक्तमन्दिरमन्त्रवाच्यनानाविद्यादिव्यपदिष्टश्रीनगरमध्यस्थचिन्तामणिगृहमध्यस्थनवयोनिचक्रे भगवत्या नित्याधिवासरूपं श्रीचक्रसिंहासनं न प्रकाश्यते चेद् बहिर्यागसिद्धिः कथमित्याशङ्क्याह-**चतुर्भिरित्यादि**-हे भगवति! तव चरणकोणाश्चरन्त्यत्र सर्वा अप्यणिमाद्यावरणदेवता इति चरणं द्वारं चक्रसिंहासनम् - 'चर' गतिभक्षणयोरिति चरधातोः चरति - गच्छति सर्वमपि लोकं व्याप्नोति - चरति-भक्षयति सर्वमज्ञाननिकुरुंबमिति कर्तरि कारके सति अधिकरणव्युत्पत्त्या ल्युट्प्रत्यये चरणमिति सिद्धम्। चरणं चरणमिति कर्त्रर्थद्वयम्; अधिकरणार्थे चैकमिति त्रिधा निरुक्तिः। इत्थम्भूतचक्रसिंहासने ये कोणास्तत्तद्देवताधिष्ठानभूमिरेखास्ता विविच्य कीदृशलेखनप्रकारेण कीदृशाः कोणाः सम्भवन्तीति विविच्याह—चतुर्भिः श्रीकण्ठैः श्रीकण्ठा नाम त्रिकोणाकारा वह्निशब्दवाच्याः। तथा च श्रुतिः—"रुद्रोऽग्निः स्विष्टकृत्" इति। अत एवोर्ध्वज्वलद्रूपतया ऊर्ध्वमुखाः। अग्नेरूर्ध्वज्वलनं प्रत्यक्षसिद्धम्। एवम्भूता वह्निगृहा एवोच्यन्ते। शिवयुवतयो नाम त्रिकोणाकारा अधःप्रवर्तमानसुधावर्षणशीलत्वादधोमुखाग्राः पञ्चयोनय उच्यन्ते। एताभिश्च शम्भोः प्रभिन्नाभिः, शम्भुशब्देन ऊर्ध्वमुखत्रिकोणचतुष्कमुच्यते, तस्मात् प्रभिन्नाभिः अधोमुखतया विपरीतगामिनीभिः, योनिभिः पञ्चभिः पञ्चसङ्ख्यायुक्ताभिः पूर्वोक्तोर्ध्वमुखशिवत्रिकोणचतुष्कोणसहसंश्लेषे जाते उभयोर्मेलनात् प्रसिद्धाभिर्नवभिर्मूलप्रकृतिभिरप्यग्नीषोमात्मकनवयोनिचक्रैरन्योन्यसंश्लिष्टैः। सूक्ष्मत्रिकोणाः बिन्दुत्रिकोणवसुकोणदशारयुग्ममन्वस्राकारास्त्रयश्चत्वारिंशत्सङ्ख्याः स्वत एव भवन्ति सा च त्रयश्चत्वारिंशत् समष्टिश्च वसुदलम् अष्टदलं कलास्रं च षोडशपत्रं तदन्तर्गतत्रिवलयञ्च मण्डलत्रयञ्च त्रिरेखाश्च त्रिचतुरस्रं च एताभिः द्वन्द्वसमासेन समस्ताभिश्च त्रयश्चत्वारिंशद्वसुदलकलास्र-

त्रिवलयत्रिरेखाभिः सार्धं सह तव चरणकोणाः परिणताः परिपूर्णाः। एतच्चक्रसिंहासनलेखनप्रकारस्तु प्रकाश्यते। एकस्मिन् कुड्ये सिन्दूररेखया गोमयोपलिप्ते पत्रिके चतुरस्रे अध आरम्भक्रमेण उपर्युपरि सूर्यसोमाङ्गारकबुधबृहस्पतिशुक्रशनिराहुकेत्वाख्या नव रेखाः कर्तव्याः। तत्र रेखासु आदित्यादिचत्वारः शिवा बृहस्पत्यादिं पञ्च योनयः शक्तयः अधोमुखा आदित्यमुत्तमस्थाने ऊर्ध्वं वर्धयित्वा केतुं चुम्बयेत् तथा अङ्गारकं वर्धयित्वा मण्डलं चुम्बयेत् तथा बुधं वर्धयित्वा राहुं चुम्बयेत् एवं चत्वारः श्रीकण्ठा जाताः। अथ बृहस्पतिमुभयस्थाने अधो वर्धयित्वा अङ्गारकं चुम्बयेत् तथा शुक्रमधो वर्धयित्वा सोमं चुम्बयेत् तथा शनिं वर्धयित्वा मण्डलं चुम्बयेत् तथा राहुं वर्धयित्वा आदित्यं चुम्बयेत् तथा केतुं कृत्वा बुधं चुम्बयेत्, एवम् अन्योन्यसंश्लेषे कृतेऽर्धस्थानादधिकरेखां वर्जयेत् एवं कृते सति मध्ये त्रिकोणः, तत्परितोऽष्टकोणाः, तत् परितो दश दश कोणाः, तत्परितश्चतुर्दशकोणाः, इति एकाष्टदशदशचतुर्दशमेलनात् त्रयश्चत्वारिंशत् कोणाः सम्पद्यन्ते तत्परितो वृत्तत्रयात्मके ऽष्टदलषोडशदलपद्मे उभे चक्रे लेखनीये तद्बहिश्चतुरस्रमयं च एतेनैव चक्रसिंहासनलेखनप्रकारो व्याख्यातः ॥ ११ ॥

## गोपालसुन्दरी

श्रीचक्रमुद्धरति—**चतुर्भिरिति**। श्रीकण्ठैः शिवैरूर्ध्वमुखत्रिकोणैः चतुर्भिः चतुःसङ्ख्याकैः तथा शिवयुवतिभिः अधोमुखत्रिकोणैः पञ्चभिः पञ्चसङ्ख्याकैः, अधःप्रभिन्नाभिः सम्बद्धाभिरिति। अनेन प्रकारेण शम्भोर्नवभिर्मूलप्रकृतिभिः श्रीचक्रकारणभूताभिः नवयोनिभिः। यद्वा मूलप्रकृतिभिः प्रपञ्चस्य मूलकारणैः। यदुक्तं कामिकायाम्—"त्वगसृङ्मांसमेदोऽस्थिधातवः शक्तिमूलकाः। मज्जाशुक्रप्राणजीवधातवः शिवमूलकाः॥ नवधातुरयं देहो नवयोनिसमुद्भवः॥" इति नवयोनिः। श्रीचक्रम्। वसुदलमष्टदलं त्रिवलयं त्रिरेखा भूबिम्बरेखात्रयम्, एभिः सार्धं सह तव त्रयश्चत्वारिंशद् भवनकोणाः गृहकोणाः परिणताः। तदुक्तम्—"बिन्दुत्रिकोणवसुकोणदशारयुग्ममन्वस्रनागदलसङ्गतषोडशारम्। वृत्तत्रयञ्च धरणीसदनत्रयञ्च श्रीचक्रराजमुदितं परदेवतायाः।" इति। प्रस्तारवशात्त्रिकोणाधःस्थितकोणद्वयस्याष्टकोणान्तर्गतत्वात् त्रिचत्वारिंशत्त्वमिति प्राञ्चः। वस्तुतस्तु–भवनकोणा भवनरूपाणि त्रिकोणानि, तदुक्तं दक्षिणामूर्तिसंहितायां—"चत्वारिंशद्भिर्युक्तं त्रिभागैरपि पार्वति।" अस्योद्धारक्रमस्तु—"वृत्तं कृत्वेष्टमानेन सूत्रं पूर्वापरायतम्। विन्यस्य विभजेदष्टचत्वारिंशद् विभागतः॥ षष्ठे षष्ठे पञ्चमे च तृतीयेऽथ तृतीयके। चतुर्थेऽथ तृतीये च षष्ठे षष्ठांशके पुनः॥ विधाय नवचिह्नानि तेषु सूत्राणि पातयेत्। नवयाम्योत्तराग्राणि तेषामुभयपार्श्वतः॥ आद्यद्वितीयतुर्याणां तथा पञ्चमषष्ठयोः। अष्टमान्तिमयोर्विद्वानग्निवेदकलांशकान्॥ पुराणद्व्यष्टवेदाग्निसङ्ख्यांशान् मार्जयेत्क्रमात्। शनिमध्ये रवेरन्तौ चन्द्रान्ते केतुमध्यतः॥ गुरौ रवौ भौममध्ये शुक्रान्तौ सोममध्यतः। शन्यन्तौ वृत्तमध्यन्तु राह्वन्तौ रविमध्यतः॥ केत्वन्तौ बुधमध्ये तु योजयेत्क्रमतो बुधः।

मध्यवह्निस्फुरद्रूपमष्टद्विदशवह्निकम् ॥ चतुर्दशानलोद्योतं श्रीचक्रं जायते परम् । तद्बहिर्वसुपत्राख्यं तद्बहिः षोडशं दलम् ॥ वृत्तत्रितयसंशोभं त्रिरेखाञ्चितभूगृहम् । त्रिधामनिलयं द्वारचतुष्टयसुशोभितम् । सर्वतेजोमयं दिव्यं सोमसूर्यानलात्मकम् ॥ इत्यत्र रव्यादिसंज्ञा अधस्तनरेखामारभ्य ज्ञेयाः ।

**विष्णुपक्षे**—चतुर्भिश्चतुःसङ्ख्याकैः श्रीकण्ठैः शिवैः ब्रह्मरुद्रेश्वरसदाशिवरूपैः पञ्चभिः शिवयुवतिभिः- "श्रीविद्या त्वरिता चैव पारिजातेश्वरी तथा । त्रिपुरा पञ्चबाणेशी पञ्चकल्पफलाः स्मृताः ।", इत्यादिनोक्ताभिः शम्भोर्महेशस्य प्रकर्षेण भिन्नाभिः मूलप्रकृतिभिः जीवात्मना सह नवभिस्तया त्रिवलयं लोकत्रयं तदेव रेखात्रयं ताभिश्च सार्धं त्रयश्चत्वारिंशत् इन्द्रादिदेवतास्तव भवनमिव भवनं देहं, तस्य कोणा एकादश परिणताः, हे वसुदल ! वसु धनं ददातीति वसुदो दाता तं लात्यनुगृह्णाति इत्यर्थः, कलानां चतुःषष्टिकलानामुज्ज्वलचन्द्रप्रकाश हे इत्यर्थः ॥ ११ ॥

## आनन्दलहरीटीका

इदानीं पूजायन्त्रमुद्धरति । **चतुर्भिरिति** । श्रीकण्ठः शिवः । ऊर्ध्वमुखत्रिकोणपः । शिवस्याग्निरूपतया, तस्य चाग्नित्वेनोर्ध्वज्वलनस्वभावेन च तथा संकेतः । तैश्चतुर्भिरिति-अष्टकोणचक्रस्यैकं त्रिकोणमूर्ध्वमुखं, एवं दशारयुग्मस्य द्वयं, चतुर्दशारचक्रस्यैकमिति क्रमेण चतुर्भिः श्रीकण्ठैरूर्ध्वमुखत्रिकोणैः तव भवनकोणाः परिणता इत्यग्रतनेन संबन्धः । एवमग्रेऽपि । एवं शिवयुवतिभिः अधोमुखत्रिकोणैः पंचभिः पूर्वोक्तक्रमेण अष्टकोणादीनां चत्वारि त्रिकोणचक्राणि अधोमुखानि, मध्ये त्रिकोणचक्रमेकमधोमुखमिति पञ्च शिवयुवतय इति । एवं क्रमेण, प्रभिन्नाभिः संभिन्नाभिः मिलिताभिरिति यावत् । शंभोः शिवस्य संबन्धिनीभिः नवभिः मूलप्रकृतिभिः जगत्कारणीभूतप्रकृतिरूपाभिः शक्तिभिः सदधिष्ठानभूताभिः नवयोनिभिरित्यर्थः । केचित्तु शंभोः ऊर्ध्वमुखत्रिकोणचतुष्टयरूपात् प्रभिन्नाभिः प्रकर्षेण भिन्नाभिः अधोमुखाभिः इत्यर्थ इत्याहुः । पञ्चभिरपीत्यत्र 'पञ्चभिरधः' इति क्वचित् । सुगमः पाठः । भवनकोणाः कतीत्यपेक्षायामाह—त्रयश्चत्वारिंशदिति । मध्ये एकमधोमुखं त्रिकोणचक्रं, तद्बहिरष्टकोणचक्रं, तद्बहिर्दशयोनिचक्रं, तद्बहिरपरं दशयोनिचक्रं, तद्बहिश्चतुर्दशयोनिचक्रमिति मिलिताः त्रयश्चत्वारिंशदेव त्रिकोणा भवन्ति । भवनकोणा इत्यत्र कोणपदं त्रिकोणपरम् । कोणानां तु ऊनत्रिंशदधिकशतसंख्यता भवति । वसुदलमष्टदलपद्मं, कलाश्रं षोडशदलपद्मं, त्रिवलयं वेष्टनरूपवृत्तत्रयं, त्रिरेखाः चतुष्कोण-चतुर्द्वाररूपभूगृहत्रयम् । (ताभिः) सार्धं सह तव भवनस्यालयस्य श्रीचक्रस्य कोणाः परिणताः निष्पन्नाः इत्यर्थः । भवनेत्यत्र चरणेति पाठेऽप्ययमेवार्थः । तदुक्तं तन्त्रे "बिन्दुत्रिकोणवसुकोणदशारयुग्ममन्वस्रनागदलसंगतषोडशारम् । वृत्तत्रयं च धरणीसदनत्रयं च श्रीचक्रराज उदितः परदेवतायाः ॥" इति । अत्र यद्यपि मिलितानां कोणानां पञ्चचत्वारिंशत्संख्या श्रूयते तथापि त्रिकोणचक्रस्य एकयोनिरूपतया एकत्वमिति न त्रयश्चत्वारिंशदित्यनेन विरोध इति । चक्रलेखनप्रकारस्तु ज्ञानार्णवादौ द्रष्टव्यः ॥ ११ ॥

त्वदीयं सौन्दर्यं तुहिनगिरिकन्ये [1]तुलयितुं
कवीन्द्राः कल्पन्ते कथमपि विरिञ्चिप्रभृतयः ।
[2]यदालोकौत्सुक्यादमरललना यान्ति मनसा
[3]तपोभिर्दुष्प्रापामपि गिरिशसायुज्यपदवीम् ॥ १२ ॥

த்வதீயம் ஸௌந்தர்யம் துஹினகிரிகன்யே துலயிதும்
1 3 3 1 3 1 1 1
கவீந்த்ரா: கல்பந்தே கதமபி விரிஞ்சிப்ரப்ருதய: ;
1 3 1 1 1 1 2 1 1 1 4 1
யதாலோகௌத்ஸுக்யாதமரலலனா யாந்தி மனஸா
3 1 1 1 3 1
தபோபிர் துஷ்ப்ராபாமபி கிரிஶ ஸாயுஜ்யபதவீம்.
1 1 4 3 1 1 1 3 1 3

तेरी अनुपम सुंदरता के दर्शन को उत्सुक बनकर,
ऊर्वश्यादि देवकामिनियां मन ही मन दृढ चिंतन कर,
कठिन तपस्या के द्वारा भी दुर्लभ शिवसायुज्य विरल
पा लेती हैं भगवति ! तब ब्रह्मादि कवीन्द्र यदपि अविरल-
करते हैं प्रयत्न फिर भी क्यों कर वर्णन कर पायेंगे !
तेरी सुषमा की तुलना किस से मैया, कर पायेंगे ? ॥

## लक्ष्मीधरा

**त्वदीयं** तव संबन्धि त्वद्देहगतमित्यर्थः । सौन्दर्यं लावण्यम् । तुहिनगिरिकन्ये तुहिनप्रधानो गिरिः हिमाद्रिः, तस्य कन्या पुत्री, तस्याः संबुद्धिः । तुलयितुं तुलया समीकर्तुम् । कवीन्द्राः विद्वच्छ्रेष्ठाः कल्पन्ते शक्नुवन्ति कथमपि कथंचिदपि, न कल्पन्त इत्यर्थः । विरिञ्चिप्रभृतयः विरिञ्चिः ब्रह्मा प्रभृतिर्येषां ते हरीन्द्रादयः । यत् यस्मात्कारणात् आलोकौत्सुक्यात् आलोके भवत्सौन्दर्यालोके यदौत्सुक्यं तस्मात्, ल्यब्लोपे पञ्चमी, औत्सुक्यमवलम्ब्य । यद्वा, निमित्त-पञ्चमी । अमरललनाः देवयोषितः यान्ति प्राप्नुवन्ति मनसा अन्तःकरणेन तपोभिः कृच्छ्र-चान्द्रायणादिभिः दुष्प्रापां प्राप्तुमशक्यां, अपिर्विरोधे, गिरिशसायुज्यपदवीम् ॥

अत्रेत्थं पदयोजना—हे तुहिनगिरिकन्ये, त्वदीयं सौन्दर्यं तुलयितुं विरिञ्चिप्रभृतयः कवीन्द्राः कथमपि कल्पन्ते । यद्यस्मात्कारणात् अमरललनाः आलोकौत्सुक्यात् तपोभिः दुष्प्रापामपि गिरिशसायुज्यपदवीं मनसा यान्ति ॥

---

1 कलयितुं 2 यदालोक्यौत्सुक्यादमरललना 3 पशूनां दुष्प्रापामपि

अयमर्थः—वाणीपतिवाचस्पतिप्रभृतीनामपि त्वत्सौन्दर्यं सदृशान्तरं परिकल्प्य वर्णयितुमशक्यम्, त्वत्सदृशसुन्दरवस्त्वन्तराभावात्। ऊर्वशीतिलोत्तमादीनामप्सरसां त्वत्सौन्दर्यलेशतुलायामपि तत्कोटिप्रवेशो दूरत एवापास्तः। यतश्चाप्सरसः त्वत्सौन्दर्यदर्शने पुंभावं प्रार्थयमानाः पुरुषान्तरदुरधिगमे त्वत्सौन्दर्यवस्तुनि सदाशिवैकगम्ये दुर्लभसदाशिवसायुज्यमनोरथा वर्तन्ते इति। स्वयमेवाप्सरसः स्वसौन्दर्ये जुगुप्सितवत्य इति भावः। अत्र अनन्वयालंकारो ध्वन्यते, लोके कापि तुल्यवस्तुनः असद्भावात्, स्वस्य स्वयमेव तुल्यमिति प्रतीतेः ॥ १२ ॥

## सौभाग्यवर्धनी

इति श्रीचक्रमुक्त्वा तदधिष्ठात्र्याः परदेवतायाः सौन्दर्यगुणान् स्तोतुं भूमिकां रचयति—**त्वदीयमिति**। हे तुहिनगिरिकन्ये त्वदीयं सौन्दर्यं ब्रह्मादयः कवीन्द्राः वेदविद्याप्रणेतारः भवत्सौन्दर्यं तुलयितुमुपमानोपमेयभावेन वर्णयितुं कथमपि कल्पन्ते; न कथमपीत्यर्थः, उपमनाभावादिति भावः। यदालोक्य औत्सुक्यादौत्कण्ठ्याद्विशेषात् मनसा आलोक्य ध्यात्वा अमरललना देवाङ्गनाः तपोभिः दुष्प्रापां गिरिशसायुज्यपदवीं यान्ति; अमरभोगान्विहाय त्वद्ध्यानयोगेन शिवसायुज्यं प्राप्नुवन्तीति भावः। अथ वा, अमराणां ललनं विलासो येषां ते अमरविलासा अप्रतिहतवैभवाः तपोभिः दुष्प्रापां गिरिशसायुज्यपदवीं यान्ति। तव ध्यानयोगेन अमरोचितनानाभोगाननुभूयान्ते शिवसायुज्यं प्राप्ता इति भावः ॥ १२ ॥

## अरुणामोदिनी

एवं चक्रस्वरूपं निरूप्य तत्र स्थिताया भगवत्या रूपसंपदो निरूपयितुमाह—**त्वदीयमिति**। तुहिनगिरिर्हिमवान्, तस्य कन्या पुत्री तस्याः संबुद्धिः; हे तुहिनगिरिकन्ये, अत्यद्भुताकारेण बाल्यकाल एव हिमवन्मोहके भक्तवत्सले देवि; एतेन महाकुलीनत्वं सूचितम्। विरिञ्चिप्रभृतयः चतुर्मुखप्रमुखाः कवीन्द्राः कवयितृश्रेष्ठाः; अत्यद्भुतवर्णनाकुशला इत्यर्थः। तवेदं त्वदीयं तावकम् 'त्यदादीनि च' इति वृद्धसंज्ञा; 'वृद्धाच्छः' 'प्रत्ययोत्तरपदयोश्च' इति त्वादेशः। सौन्दर्यम्, 'अङ्गप्रत्यङ्गकानां यत्संनिवेशो यथोचितम्। संश्लिष्टसंधिबन्धं तत्सौन्दर्यमिति कथ्यते ॥' इत्युक्तलक्षणं रम्यत्वं तुलयितुमुपमातुं केनचित्समीकर्तुमित्यर्थः। कथमपि कथं वा कल्पन्ते शक्नुवन्ति; न कथंचिदप्युपमातुं शक्नुवन्तीत्यर्थः। कुत इत्यत्राह—**यदिति**। यस्य सौन्दर्यस्यालोके दर्शने; 'आलोको दर्शनोद्योतः' इति रत्नमाला। औत्सुक्यादानन्दात्; 'इष्टार्थोद्युक्त उत्सुकः' इत्यमरः। अमरललना उपमानीकरणा उर्वश्यादयः सुराङ्गनाः। तपोभिः कृच्छ्रचान्द्रायणादिभिरपि दुष्प्रापां प्राप्तुमशक्याम्; किमुतान्यैरित्यपेरर्थः। गिरिशसायुज्यपदवीं शिवैक्यानुसंधानसरणिम्, मनसा अन्तःकरणेन यान्ति। भवत्संभोगेच्छया अनेकतपोभिरपि दुर्लभं

भवन्नित्यसहचरशंकरसायुज्यं मनोभिराकाङ्क्षन्त इत्यर्थः। अतः स्त्रीणामपि मोहकं भवत्सौन्दर्यं लोकातिशायीति कविवर्णनागोचरं न भवत्येवेत्यभिप्रायः। हिमवतीव प्रवृत्तस्त्वदनुग्रहो मां प्रेरितवानित्यभिप्रायः। अत्रोत्तरवाक्यार्थस्य पूर्ववाक्यार्थं प्रति हेतुत्वात् काव्यलिङ्गमलंकारः। स चासङ्गतिप्रतीयमानानन्वयालंकाराभ्यां संकीर्यते ॥ १२॥

## आनन्दगिरीया

ननु हरिस्त्वामाराध्येत्यादौ यस्याः सायुज्यसंपन्नसौन्दर्यसंपत्त्या हरिर्महादेवमप्यमोहयदित्युक्तम्। तत्कीदृशं सौन्दर्यमित्याक्षिप्ते यद्यपि विशिष्य अशक्यनिर्वचनं, तथापि केनचित्प्रकारेण वर्णयति। **त्वदीयमिति**। हे तुहिनगिरिकन्ये, विरिञ्चिप्रभृतयो ब्रह्मादयः त्वदीयं सौन्दर्यं तुलयितुं कथमपि कल्पन्ते। निरतिशयशालि तव शरीरसौन्दर्यं रमणीयतां तुलयितुं निरूपयितुं इयत्तया ईदृक्तया वा वर्णयितुं कथमपि महता कष्टेन कल्पन्ते। कल्पनामात्रं कुर्वन्ति न तु हठाच्छक्नुवन्ति। अयं भावः, त्वं हि तुहिनगिरेः कन्या, स च सर्वरत्नप्रसवभूमिः, परमशीतलमधुरस्वभावश्च। तत्कन्यायास्तव रसप्रधानवाक्यात्मनो वर्णनस्य प्रयोगकारणतया तन्मनसा चिन्त्यमानेऽपि महामोहजनके सौन्दर्यसाभिलाषकुसुमसायकविकलान्तःकरणतया उत्पाद्यमानस्तंभखेदस्वरभङ्गप्रदापसात्विकवशात्तजडिमानमापन्नानां तेषां पदार्थत्वेनापि वक्तुं सामर्थ्यं दुर्लभं, किं पुनर्विशिष्य वर्णयितुमिति, अहो मनसापि यत्सौन्दर्ये विचिन्त्यमाने ब्रह्मादीनामप्येषा गतिः, तर्हि साक्षाल्लोचनगोचरे किं भवतीति सैव वेद। ननु ब्रह्मादीनां वेदाभ्यासयोगेन जडत्वाद्युक्तमेव वर्णनाक्षमत्वम्। अत आह-किलक्षणास्ते, कवीन्द्राः कवीनां वाल्मीकिप्रभृतीनामपीन्द्राः। कथमपीत्यस्यायं भावः—किं ते सर्वथा असमर्था एव। न। विशकलितपदार्थभावे पदमात्रप्रयोगं कुर्वन्ति। न तु संसर्गप्रतिपादकं वाक्यं रचयितुं ईशत इति। तदिति किम्? अमरललना देवाङ्गना यदालोक्य चक्षुषा साक्षाद्गोचरीकृत्य निरन्तरतदुपयोगकामाः। गिरिशसायुज्यपदवीं गिरिशसायुज्यस्य पदवीं प्रापकतां, यतस्त्वामनाराध्य गिरिशसायुज्यं न प्राप्यते। तदुक्तं स्कान्दे-"त्वामाश्रिता महाभागे प्राप्नुवन्त्यचिरेण माम्। केवलं त्वामनादृत्य मां भजन्तो विचेतनाः। नार्हन्ति मम सायुज्यं ब्रह्मकल्पशतैरपि" इति। अत्र निषेधे काकुमाश्रित्य न समर्थयति। तत्र हेतुः, उपमानाभावादिति तन्त्रः। शोकभीत्यादिना विक्रियमाणो हि ध्वनिः काकुः। स च प्रकृते न संभवति। उपमानाभावेऽपि अभूतोपमानोपमेयत्वाभ्यां वर्णनस्य भूयस्सु स्थानेषु दर्शनात्। यथा - "न पीयूषे रागो न च मधुरिमा विद्रुमदले, न माक्षीके दन्तक्षतललितभावोऽतिसुभगः। न बिंबे पक्केऽपि स्मितमधुरशोभाव्यतिकरः समं केन ब्रूमो दशनवसनं ते गिरिसुते"। तथा "उभौ यदि व्योम्नि पृथक्प्रवालावित्यादि। नापरतन्त्रेण मनसा मनोराज्यविजृंभणेन गिरिशसायुज्यपदवीं यान्ति। यास्तु यतन्ते, लोकान्तरातिशयशालिनो यस्य सौन्दर्यस्य निरन्तर-

दर्शनालिंगनचुंबनसंभाषणादिभोगस्तदा स्याद्यदा गिरिशसायुज्यं प्राप्य एता देहार्धे दधतः। एतावता ललनायास्तव सौन्दर्यं ललनानामपि काममोहाधायकं किमुत पुंसामिति भावः। किं लक्षणं सायुज्यपदवीं, तपोभिरपि दुष्प्रापाम्। तर्हि कस्मात्कामयन्त इत्यत आह-औत्सुक्यादिति। शंक्यमानेष्टवियोगानुस्मरणजन्योऽविचारितक्रियारंभे विलंबाभावः- औत्सुक्यम्। तस्माद्यद्यपि जानन्ति, महादेवस्य सायुज्यमत्यन्तदुर्लभं, तथापि तदभिलाषालसद्रूपप्रबलदोषमाहात्म्याविशेषसादृश्यदर्शने सत्यपि भ्रमात् अविचारितक्रियारंभ इति भावः। अथवाऽत्र त्वामित्यध्याहृत्य गिरिशसायुज्यप्राप्ति-कामनयापि त्वामेव मनसा यान्ति ध्यायन्ति। किंलक्षणां, कुलकल्पके - सर्वाराध्या महेशानी श्रीमत्त्रिपुरसुन्दरीत्यादिषु वदाचार्याभिप्रायः। त्वदीयं सौन्दर्यमित्यादिश्लोकस्य रहस्यार्थः— चतुर्थचक्रेश्वरी-सर्वसौभाग्यदायकचक्रे त्रिपुरवासिनीमन्त्रमाह-त्वदीयमिति त्वद्ब्रह्म व्योमेति सानुस्वारं ईयं वाक्, सौन्दर्यं द्वितीयं तुहिनगिरिकन्ये कामबीजं व्योमाक्षरस्यान्यनलाभा हव्यञ्जनं इनः चन्द्रः गिरिकन्या औविसर्गान्यनलाभा। कवीन्द्राः पुराणपुरुषा ब्रह्मादयस्त्वां जप्तुं वाञ्छन्ति। महत्सौभाग्यलाभार्थादेतद्बीजमालोक्य स्मृत्वा उत्कण्ठीभवद्धृदयान्मनसा तैरेव ब्रह्मादिभिर्दुरधिगमां ब्रह्मसायुज्यपदवीम्। भैरवयामले-यत्पुंसां च भवेदब्दाद्योषितां तत्क्षणादपि। तत्त्वमीशे तदेवासि स्त्रीरूपा जगदंबिके"। त्रिपुरवासिनीमन्त्रः ह्रीं क्लीं सौः। हैं हक्लीं हसौः। त्रिपुरावसिनी सर्वसौभाग्यदायकचक्रेश्वरीश्रीपादुकां पूजयामीति ॥ १२ ॥

## तात्पर्यदीपिनी

एवं चक्रस्य सिंहासनस्य विस्तारमुक्त्वा तत्रत्यानन्तकोटिशक्तिलावण्यसुधाप्रवाहमूलभूतां श्रीपरमेश्वरीं स्तौति-**त्वदीयमिति**। हे तुहिनगिरिकन्ये, तुहिनप्रधानो गिरिः प्रालेयपर्वतस्तस्य कन्या पुत्री तत्संबुद्धिः। विरिञ्चिप्रभृतयः, विरिञ्चिर्ब्रह्मा प्रभृतिरादिर्येषां ते। कवीन्द्राः कविषु विद्वत्सु इन्द्राः श्रेष्ठाः, हरीन्द्रादयः। त्वदीयं सौन्दर्यं त्वद्देहगतं लावण्यं तुलयितुं तुलया संमितं कर्तुं कथमपि कदाचिदपि कल्पन्ते। न कदाचिदपीत्यर्थः। अतः कारणात् अमरललनाः अमराणां देवानां ललनाः स्त्रियः औत्सुक्यात् त्वदालोकनजनितपरमानन्दात्, गिरिशसायुज्यपदवीं गिरिशेन सह आत्मन ऐक्याभिमानपद्धतिं मनसा चित्तेन यान्ति प्राप्नुवन्ति। किं कृत्वा? यत्सौन्दर्यं लोकातिशायि आलोक्य दृष्ट्वा। किंभूतां पदवीं, तपोभिर्दुष्प्रापां दुःखेन प्राप्तुमशक्याम्। अयमर्थः। यथा स्त्रीणां सौन्दर्यातिशयं दृष्ट्वा लोके पुरुषस्य चित्तनन्दनचमत्कारकोलाहलः तथा देवस्त्रीणां त्वत्सौन्दर्यातिशयमवलोक्य। त्वदालोकजनितपरमानन्दमनुभवितुं दुर्लभमपि त्वद्भर्तुः सायुज्यभावं मनसा चिन्तयित्वा स्वसौन्दर्यं जुगुप्सितवत्य इति भावः ॥ १२ ॥

## पदार्थचन्द्रिका

एवं तावत्पूजार्थं यन्त्रमुद्धृत्य तत्रैवंभूता भवानी पूजनीयेति स्मृतिसौन्दर्यं वर्णयति—

**त्वदीय**मिति द्वाभ्याम्। हे तुहिनगिरिकन्ये त्वदीयं सौन्दर्यं कवयितुं वर्णयितुं विरिंचिप्रभृतयः कवीन्द्राः कविश्रेष्ठाः कथमपि कल्पन्ते समर्था भवन्ति। अन्यत्र तादृक् सौन्दर्याभावात्, दृष्टान्तस्थलाभावात्। कथमपीत्युक्तम्। अन्यत्र तादृक् सौन्दर्याभावमेवाह - यदिति। यत्सौन्दर्यमालोक्य दृष्ट्वा, औत्सुक्यात् उत्कण्ठेच्छया हेतोः, अमरललनाः -देवांगनाः गिरिशसायुज्यपदवीं भवानीस्वरूपं मनसा यान्ति प्राप्नुवन्ति प्राप्तुं मनोरथं कुर्वन्तीत्यर्थः। ननु सत्यसंकल्पा देवाः, किमिति न प्राप्नुवन्ति? तत्राह - तपोभिर्दुष्प्रापां,–कृच्छ्रचान्द्रायणादिभिरप्यलभ्यां, सह युज्यते इति सयुक् पार्वती, तस्या भावः सायुज्यं, गिरिशे सायुज्यं गिरिशसायुज्यं, तस्य पदवीं आश्रयाम्। तुलयितुमिति पाठे तुल्यं कर्तुमित्यर्थः। तपोभिर्दुष्प्रापामित्यत्र पशूनामिति पाठे पशूनामदीक्षितानां, अदीक्षिताः पशव इत्यागमात्॥ १२ ॥

## डिण्डिमभाष्यम्

एवं चक्रस्य विस्तारमुक्त्वा तत्रत्यानन्तकोटिशक्तिलावण्यसुधाप्रवाहमूलभूतं श्रीललितामहाभट्टारिकायाः सौन्दर्यं स्तौति **त्वदीय**मित्यादि। हे तुहिनगिरिकन्ये! प्रालेयशैलनन्दिनि, त्वदीयं त्वत्सम्बन्धि, **सौन्दर्यं** श्रीमच्छरीरकीर्तिभरं, तुलयितुं उपमां प्रापयितुं, कथमपि यत्नेन, विरिञ्चिप्रभृतयो ब्रह्मविष्णुरुद्राः, **कवीन्द्राः** वाल्मीकिव्यासप्रभृतीनामपि मूलभूता आदिकवयः, कल्पन्ते समर्था भवन्ति; निषेधे काकुध्वनिः न भवन्तीत्यर्थः, त्वद्रूपस्यानुपमत्वात्। अत एव त्वत्सौन्दर्यं लोकातिशायि। यत्सौन्दर्यं आलोक्य **दृष्ट्वा, औत्सुक्यात्** तदालोकनजनितपरमानन्दाः अमरललना देवस्त्रियः, तपोभिः घोरतपस्याभिः अपि दुष्प्रापां प्राप्तुमशक्यां, गिरिशसायुज्यपदवीं गिरेरीशेन महादेवेन सह आत्मन ऐक्याभिमानपद्धतिं, मनसा यान्ति ; स्त्रीणां सौन्दर्यातिशयं दृष्ट्वा लोके पुरुषस्य चिदानन्दचमत्कारकोलाहलः, तथा स्त्रीणां नास्ति इति कृत्वा देवस्त्रीणां विचारोऽयं त्वत्सौन्दर्यातिशयमवलोक्य तदालोकनजनितपरमानन्दमनुभवितुं त्वद्भर्तुः परमेश्वरस्य सायुज्यभावनां दुर्लभामपि चिन्तयाम इति।

## गोपालसुन्दरी

**त्वदीयमिति**—हे तुहिनगिरिकन्ये! त्वदीयं सौन्दर्यं, तुलयितुं उपमानोपमेयभावेन वर्णयितुं, विरिञ्चिप्रभृतयः ब्रह्मादयः कवीन्द्राः, कथमपि कल्पन्ते न कथमपीत्यर्थः, उपमानाभावादित्यर्थः। अमरललना देवाङ्गना यत्सौन्दर्यं सालोक्यं मनसा गिरिशसायुज्यपदवीं यान्तीत्यन्वयः, एतेन वयं यदि शिवरूपा भवामः तदा एतस्याः सौन्दर्यमुपभुञ्जाम इत्युक्तं भवति। अथवा अमराणां ललनं विलासो येषां ते साधका औत्सुक्यात् औत्कण्ठ्यात्, सौन्दर्यं मनसा आलोक्य ध्यात्वा, तपोभिः दुष्प्रापां गिरिशसायुज्यपदवीं यान्ति प्राप्नुवन्ति इत्यर्थः इति मम प्रतिभाति। एतेन ध्यानस्य भोगमोक्षप्रदत्वमुक्तं भवति इति। **विष्णुपक्षे**—तुहिनगिरिकन्या गौरी ई लक्ष्मीस्तथा विरिञ्चिप्रभृतयः कवीन्द्रास्त्वदीयं सौन्दर्यं

तुलयितुं न समर्थाः। अमरललना भोगैकमात्रपरा अपि, यद्वा हे अमरललना अपि गोपयुवतयः अपि स्वतोऽशुचिस्वभावा यत्सौन्दर्यं मनसा आलोच्य ध्यात्वा, तव सायुज्यदवीं यान्ति; हे गिरिशेति सम्बोधनम्; गिरौ गोवर्द्धने गोपी रमयन् शेते, गिरिं मन्दराचलं क्षीरसमुद्रमथनेन श्यति तनूकरोति वा इत्यर्थः॥

## आनन्दलहरीटीका

तव सौन्दर्यमनिर्वचनीयमित्याह-त्वदीयमिति। हे तुहिनगिरिकन्ये हिमालयपुत्रि, त्वदीयं सौन्दर्यं तुलयितुं साम्येन वर्णयितुं ब्रह्मप्रभृतयः कवीन्द्राः कथमपि केनापि प्रकारेण कल्पन्ते समर्था भवन्ति? अपि तु नेति शिरश्चालनम्। उपमाभावादिति भावः। तदेव दर्शयति-अमरललना देवस्त्रियः यत्तव सौन्दर्यं आलोक्य, औत्सुक्यात् उत्सुकपदवीं महादेवस्वरूपतारूपां पदवीं गतिं मनसा यान्ति, गिरिशसायुज्ये मनोरथं कुर्वन्तीत्यर्थः। अयं भावः-त्वत्सौन्दर्यं दृष्ट्वा देवस्त्रीणामप्येवं मनोरथो भवति-यदि वयं केनचित्कर्मणा महादेवरूपा भवामः तर्हि अर्धनारीश्वरतया अस्याः शरीरार्धशोभां प्राप्नुयाम इति। एवं च सति देवस्त्रीणामपि तादृशमनोरथे, तव संपूर्णशरीरशोभायाः नास्त्येवोपमानमिति ध्वनिः। केचित्तु अमराणां ललना स्पृहा येषु तेऽमरललनाः साधकाः यत्तव सौन्दर्यं मनसा आलोक्य ध्यात्वा गिरिशसायुज्यपदवीं यान्तीत्यर्थ इत्याहुः॥

**नरं वर्षीयांसं नयनविरसं नर्मसु जडं**
**तवापाङ्गालोके पतितमनुधावन्ति शतशः।**
**गलद्वेणीबन्धाः कुचकलशविस्रस्तसिचया**
**हठात्त्रुटयत्काञ्च्यो विगलितदुकूला युवतयः॥ १३॥**

நரம் வர்ஷீயாம்ஸம் நயனவிரஸம் நர்மஸு ஜடம்
3

தவாபாங்காலோகே பதித மனுதாவந்தி ஶதஶ:;
1 1 3 1 1 1 1 4 1 1

கலத்வேணீபந்தா: குசகலஶவிஸ்ரஸ்தஸிசயா
3 3 3 4 1 1 1 1 1

ஹடாத்த்ருட்யத்காஞ்ச்யோ விகலித துகூலா யுவதய:.
2 1 1 1 1 1 3 1 3 1 1

नर, वह चाहे कितना भी बूढा हो, पूहड हो, जड हो
कामतंत्र में, काता हो आंखोसे, रोगी, अनगढ हो।
बनता है यदि लक्ष्य कटाक्ष-दृष्टि का तेरी, तो शतशः
धावित होती हैं उसके पीछे, युवतियां प्रेमपरवश,

खुले केशबंधन, कुचकलशों पर से खिसल फिसल पडते
आंचल, अकस्मात् टूटे रशनाकलाप औ खुल जाते
पाटंबर जैसे तैसे सम्हालती हुई, श्रीमाते ! ॥

## लक्ष्मीधरा

नरं मनुष्यमात्रं वर्षीयांसं अतिवृद्धं नयनविरसं नयनाभ्यां विरसं काचकामलपटला-दिनेत्रदोषयुक्तं, नर्मसु जडं नर्मसु रतिकलासु जडं अतिमूढं तव भवत्याः अपाङ्गालोके कटाक्षवीक्षणे पतितं, कटाक्षैकगोचरमित्यर्थः। अनुधावन्ति अनुधावमानाः शतशः शतसंख्याकाः, शतशब्दः संख्यातीतोपलक्षकः, भूर्भुवःस्वर्लोकस्थिताः सर्वा इत्यर्थः। गलद्वेणीबन्धाः गलन्तो वेणीबन्धा यासां ताः, कुचकलशविस्रस्तसिचयाः कुचकलशाभ्यां विस्रस्ताः शिथिलाः सिचयाः चेलाञ्चला यासां ताः, हठात्त्रुटयत्काञ्च्यः हठात् शीघ्रं त्रुटयन्त्यः गलन्त्यः काञ्च्यो रशनाकलापाः यासां ताः, विगलितदुकूलाः स्रस्तनीवीबन्धाः युवतयः तरुण्यः ॥

अत्रेत्थं पदयोजना—हे भगवति, वर्षीयांसं नयनविरसं नर्मसु जडं तवापाङ्गालोके पतितं नरं शतशः युवतयः गलद्वेणीबन्धाः कुचकलशविस्रस्तसिचयाः हठात् त्रुटयत्काञ्च्यः विगलित-दुकूलाः सत्यः, तादृशं नरं मदनमिति मत्वेति शेषः, अनुधावन्ति। एतादृशोन्मादनप्रयोगान् 'मुखं बिन्दुं कृत्वा' इत्यादिश्लोकव्याख्यानावसरे निपुणतरमुपपादयिष्यामः ॥

## सौभाग्यवर्धनी

यत्र ब्रह्मादयोऽपि यद्वर्णने कुण्ठितास्तत्र हि त्वत्सौन्दर्यवर्णने को वा वराकः, तथाऽपि तवैव दयाकलितापाङ्गकणिकापातेन तव सौन्दर्यादिगुणवर्णने प्रवृत्तोऽस्मीति वदन्नेवापाङ्गमहिमानं वर्णयति— **नरमिति।** नरं वर्षीयांसं वृद्धं कुरूपं नर्मसु क्रीडासु जडमनभिज्ञं तव कृपातरङ्गितापाङ्गपातेन अनु-गृहीतं विगलितकबरीभाराः कुचस्रस्तवसनाः हठात् त्रुटयत्काञ्च्यो विगलितदुकूला अनुधावन्ति शतशः अहमहमिकया पश्चाद्धावन्ति। लज्जापरित्यागेन तदेकचित्ता उन्मादाख्यव्यभिचारिभावपरवशा भ्रा-म्यन्ति। एतावता तवापाङ्गमहिमा एतादृशः; त्वत्सौन्दर्यगुणं कः समर्थो वेत्तुमिति भावः ॥ १३ ॥

## अरुणामोदिनी

'स्वयं समृद्धः परान्समृद्धान्करोति' इति न्यायेन देव्या अत्यद्भुतसौन्दर्यवत्त्वात्तत्करुणा-पात्रभूतोऽपि निकृष्टोऽपि मदनायत इत्याह—**नरमिति।** हे देवि ! अतिशयेन वृद्धो वर्षीयान् तमतिवृद्धम्; 'प्रियस्थिर....' इत्यादिना वृद्धशब्दस्य वर्षादेशः। 'द्विवचनविभज्य' इत्यादिना ईयसुन्; 'वर्षीयान्दशमी ज्यायान्' इत्यमरः। अत एव नयनाभ्यां विरसं द्रष्टुमक्षममित्यर्थः;

नयनविलासरहितमिति ध्वनिः । यत्तूक्तम्—काचकामलादिदोषयुक्तमिति, तदविचारितोत्तरम् । काचादीनां वार्धकानपेक्षत्वेन वर्षीयांसमिति विशेषणविरोधापत्तेः । अत एव नर्मसु शृङ्गारक्रीडासु ; 'क्रीडा खेला च नर्म च' इत्यमरः । जडमपटुं नरं मानुषमात्रमपि, तव भक्ताभीष्टार्थवितरणधुरीणाया भवत्या अपाङ्गालोके कटाक्षवीक्षणे, किमुत संपूर्णदृष्टाविति ध्वनिः । पतितं सन्तं भवत्कृपाकटाक्षपात्रीकृतं सन्तमित्यर्थः । शतशः शतसंख्यातिरिक्ता युवतयः शृङ्गाररसानुभवाभिज्ञाः ; सम्पूर्णयौवनाः स्त्रियः ; गलन्तः स्वयमेव विगलिताः वेणीबन्धाः यासां ताः, कुचकलशाभ्यां विस्रस्ताः स्वयमेव विच्युताः सिचया वसनानि यासां ताः ; दर्शितकुचमण्डलाः सत्यः हठादकस्मादेव त्रुट्यन्त्यः काञ्च्यो यासां ताः ; अत एव विगलितदुकूलाः स्रंसमानक्षौमाः सत्यः, अनुधावन्ति धावन्तमनुसृत्य पश्चादायान्तीत्यर्थः । शीघ्रगतावेव 'पाघ्राध्मा' इत्यादिना सर्तेर्धावादेशः । अहो त्वदीयकटाक्षमहिमा कियती वर्णनीयेति भावः । उक्तं च चर्चास्तवे—'यस्मिन्मनागपि नवाम्बुजपत्रगौरां गौरि प्रसादमधुरां दृशमादधासि । तस्मिन्निरन्तरमनङ्गशरप्रकीर्णसीमन्तिनीनयनसंततयः पतन्ति ॥' इति । अत्र वेणीबन्धगलनादीनां शृङ्गारानुभावानां निबन्धनात्प्रेयोऽलंकारः ॥ १३ ॥

## आनन्दगिरीया

ब्रह्मादयस्तव सौन्दर्यं विशिष्य वक्तुं न क्षमा इति यदुक्तं, तत्सत्यं कर्तुं सौन्दर्यसहचरापांगमहिम्ना सौन्दर्यमहिमानमाह—**नरं वर्षीयांसमिति** । हे परमेश्वरि हे पराणां मध्ये ईश्वरि, तवापांगो लोकोत्तरः, कथमिति चेत्तमाह - यस्मात्कारणात्तवापांगालोके पतितं नरमेतादृशमपि शतशोऽनेका नानाभावोन्मत्ता युवतयो धावन्ति, आलिंगितुं चुंबितुं आत्मानमुपभोजयितुमिति शेषः । पतितमित्यस्यायं भावः- त्वया बुद्धिपूर्वकतया नयनोपान्तपात्रीकृतमिति न, किन्तु दैवादनवधानेनैवापांगपातप्रभापटलपतितं यथा च शीतलजलसहचरिते पवनपटले पतितस्य । मनसा चिन्त्यमानस्यापि सर्वशरीरव्यापि सर्वोत्तमसौन्दर्यप्राप्तिर्भवति । तर्हि त्वया वात्सल्येनावलोक्यमाने किं वाच्यम् ? कथं धावन्तीत्यत आह-हठादिति । अहमहमिकयेत्यर्थः । तासां गतित्वरामाह गलद्वेणीबन्धाः वेणीबन्धशब्देन शिरोरत्नकुसुमहाराणामुपलक्षणम् । शीघ्रगतिवशेन ते विगलिताः । कुचकलशेभ्योऽधःस्रस्तविशकलितवसनाः त्रुट्यत्काञ्च्यो विगलितकटिपरिधानदुकूलाः । अथवा तवालोके जाते सति वर्षीयांसं प्रत्यपि पतितं यथा भवति तथा धावन्तीति वा । अत्र पतिता अत्र पतिता एवमेकैकशो धावन्ति इत्यर्थः । एतादृशमपीत्युक्तं तमाह-वर्षीयांसं अतिशयेन वृद्धं सुरतालिंगनादावक्षमं, नयनविरसं सुरतचातुर्यादिकामकलपाद्रष्टारं नर्मसु जडं क्रीडासु नखक्षतालिंगनचुंबनासनाद्यनभिज्ञं ग्राम्यं, तर्ह्येतादृशं दृष्ट्वापि कथं धावन्तीति चेन्न, परमेश्वरीकृपाकटाक्षसंबन्धेन वर्षीयानपि नवनवोद्दामकामाभिरामो जातः । कमलदलदीर्घलोचनतया शृंगाररसांगानि विवेचयितुं समर्थः

सकलकोकप्रणीतकामकलाकलापचतुर एतादृशो जात इति। अत्रोन्मादोऽस्य व्यभिचारी। नरं वर्षीयांसमित्यादिश्लोकस्य पञ्चमचक्रेश्वरीसर्वार्थसाधकचक्रेश्वरीत्रिपुराश्रीचक्रेश्वर्या मन्त्रोद्धारः। वर्षीयांसं हंस इति पुराणत्वात् सदातनत्वात्। नरं योनिराद्यबीजमेतत्। नयनं विशिष्टरसवान् मेदिन्याः ककारः, नर्म रतिः कः, सुजलं रसः अमृतं नित्यं ब्रह्म व्योम सानुस्वारमेतन्मन्त्रलाभात्, तवापांगालोके शिवशक्त्यात्मिकाया अपांगालोके औकारयोगो भवति। तथा चास्य मन्त्रस्य स्मर वशी लं धावन्तीति नित्यं मनुरिति। पञ्चमसर्वार्थसाधक चक्रेश्वरीमन्त्रः-ह्सैं ह्स्क्लीं ह्सौः। त्रिपुराश्रीचक्रेश्वरीश्रीपादुकां पूजयामि। नरं वर्षीयांसमिति श्लोकार्धे षष्ठचक्रेश्वरीमाह-गलद् भञ्जत् विगलत्पुष्पवेणीबन्धा एव वेणीतुल्याकारा शोभा लज्जा ह्रीं तथा—"अनयोद्रमितं विश्वं अस्यालंबितमीश्वरी। तस्मान्नास्याः परा विद्या वेणीबन्धाच्च ब्रह्मणः। तस्मादाद्येयमीशानी" त्यादि। कुचबिन्दुद्वयात्मकत्वात् चतुर्थस्वरोट्टंकनं कं ब्रह्मेन्द्रौ शतं, बिन्दुरन्यत्र लाभात्।

## तात्पर्यदीपिनी

आस्तां त्वदीयसौन्दर्यस्य वार्ता। सर्वथा सौन्दर्यलावण्यानधिकरणमपि नरः त्वद्दृष्टिदृष्टोऽतिमनोहरो भवति इत्याह - **नरं वर्षीयांसमिति** - हे भगवति, शतशः शतसंख्याकाः, भूर्भुवःस्वर्लोकस्थिता युवतयः, नरमनु लक्ष्यीकृत्य धावन्ति, हे नाथ अनुगृह्णीष्वेत्यनुकूलयन्तीत्यर्थः। किंभूता युवतयः? गलद्वेणीबन्धाः, गलन्तो वेणीबन्धाः चिकुरकलापा यासां ताः तथोक्ताः, पुनः कुचकलशविस्रस्तसिचयाः, कुचावेव कलशौ ताभ्यां विस्रस्ताः सिचया उत्तरीयवसनानि यासां तास्तथोक्ताः। हठाद्वेगेन त्रुट्यत्काञ्च्यः त्रुटयन्त्यः काञ्च्यो यासां ताः तथोक्ताः, जघनगलितरशनाकलापाः। पुनः, अत एव विगलितदुकूलाः विगलितानि दुकूलानि जघनपरिधानवस्त्राणि यासां तास्तथोक्ताः। किंविधं नरं? यतः कारणात्तवापांगालोके, अपांगयोः नेत्रकटाक्षयोः आलोकः, तस्मिन्पतितं निमग्नं कृपाकटाक्षवीक्षितम्। तर्हि सुभगो यौवनोन्नतो भविष्यति। नेत्याह - वर्षीयांसं, अतिशयेन वृद्धो वर्षीयान्, तं बहुकालवयस्कं, पुनः नयनविरसं नयनाभ्यां नेत्राभ्यां विरसः काचकामलादिदोषयुक्तः तम्। पुनः, नर्मसु जडं कामभोगकलापेषु अतिमूढं एवंभूतमपि नरं त्वत्कटाक्षवीक्षणं सञ्जातमन्मथरससौन्दर्यपूर्णाभिषिक्तमिव दृष्ट्वा अनुधावन्तीत्यर्थः।

## पदार्थचन्द्रिका

यस्याः कटाक्षनिरीक्षणपातमात्रेणैव रूपसौष्ठवरहितोऽपि पुमान् कामिनीर्मोहयति, तस्याः सौन्दर्यं किं वर्णनीयमित्यभिप्रायेणाह—**नर**मिति। युवतयस्तरुण्यः, एवंभूतमपि नरं, हठात्कामवैवश्यात्, अनुधावन्ति, नरं लक्ष्यीकृत्य शीघ्रं गच्छन्तीत्यर्थः। ननु किमत्राश्चर्यं तरुण्यस्तरुणमनुधावन्त्येवेत्यत आह—वर्षीयांसं अतिशयेन वृद्धो वर्षीयान्, तमपीत्यर्थः। ननु वृद्धोऽपि सुरूपश्चेत् तर्हि

तदनुधावनं संभवेदेवेत्यत आह-नयनविरसं, नयनयोर्विगतो रसो यस्मात्तं, नयनसुखाजनकमित्यर्थः । अत्र सर्वत्र अपिशब्दो द्रष्टव्यः । ननु कामकलाकौशलं चेत् युवत्यनुधावनं भवेदपि । तत्राह-नर्मसु तत्तल्लीलासु जडं मूढम् । ननु किमत्र कारणमित्यपेक्षायामाह—तवापांगालोके पतितं, तव कटाक्षनिरीक्षणविषयमित्यर्थः । युवतीर्विशिनष्टि—शतशोऽनेकसंख्याः, गलन् स्खलन् वेणीबन्धः केशबन्धो यासां ताः, कुचकलशाभ्यां विस्रस्ताः अधः पतिताः सिचयाः सूक्ष्मांबराणि यासां ताः, त्रुटचन्तः काञ्च्यो यासां ताः । स्त्रियः पुंवदिति सूत्रेण त्रुटचन्तीशब्दस्य पुंवद्भावः । विगलितं दुकूलं क्षौमं यासां ताः । एतेन एवंभूतस्यापि नरस्य त्वद्भक्तिवशात् जगन्मोहनरूपलाभो भवतीत्युक्तं भवति । अत एवाग्रे वक्ष्यति सरस्वत्या लक्ष्म्या इत्यत्राचार्यः ॥

## डिण्डिमभाष्यम्

ननु समस्तविद्यासिंहासनाधिरूढायाः श्रीललितामहाभट्टारिकायाः सकललोकातिशायि सौन्दर्यं वर्णितम् । सौन्दर्यं तावद् द्विप्रकारकं वेधकमवेधकञ्च । अवेधकं नाम पार्वतीलक्ष्मीसरस्वत्यादीनां सौन्दर्यम् । अवेधकं परं न स्वात्मीकरोति । यत्खलु सिद्धरसविद्धधातुन्यायेन परस्य स्वात्मीकरणचातुर्ययुक्तं सौन्दर्यं तद् वेधकं भवति । तच्च महाभट्टारिकाया एव सुलभम् । तस्य वेधकशक्तिसमुद्दीपकस्तुतिविशेषश्चेत्र क्रियते तदा तत्प्रसादभाजनता कुतः स्यादित्याशङ्क्याह—**नरमित्यादि**। हे **परमेश्वरि**! अपाङ्गेन कटाक्षेण आलोको दर्शनं अपाङ्गालोकः, यथा भाजनशक्त्यनुरूपं शक्तिपातात्मकवेधदीक्षारूपे आलोके तवापाङ्गालोके, पतितं निमग्नं, वर्षीयांसं बहुकालवयसं, नयनयोर्लोचनयोर्विरसं वैरूप्यभाजनं, नर्मसु जडं कामभोगकलापेषु जडं निश्चेष्टबुद्धिप्रवर्तनं, एवंभूतमपि यं कञ्चित् पामरं तत्क्षणमेव कटाक्षोद्वीक्षणसञ्जातमन्मथरससौन्दर्यपूर्णाभिषेकमिव दृष्ट्वा शतशः स्त्रियोऽनुधावन्ति मदनशरपरवशाः; किम्भूतास्ताः ? गलद्वेणीबन्धाः विगलितचिकुरकलापाः, कुचकलशविस्रस्तसिचया स्तनमण्डलविभ्रष्टोत्तरीयवसनाः, हठात् वेगेन, त्रुटचत्काञ्च्यः जघनगलितरशनाकलापाः, विगलितदुकूलाः परिच्युतपरिधानवस्त्राः, युवतयः अखण्डितयौवनोन्मेषशालिन्यो मृगीदृशः, अनुधावन्ति मां रक्ष रक्ष मन्मथशरदहनदग्धाशयामित्यनुसरन्त्यो धावन्ति । साक्षादेव मन्मथसौन्दर्यसम्पदामवाप्तो भवति भगवत्याः चरणपरिचरणशाली पुरुषमणिरिति । सिचयो रक्तवसनं स्त्रीवासश्चैव शाटक इति विश्वप्रकाशः ॥

## गोपालसुन्दरी

**नरमिति**—वर्षीयांसं वृद्धं, नयनविरसं कुरूपं, नर्मसु कामक्रीडासु जडमनभिज्ञं, एतादृशमपि नरं मनुष्यं, तवापाङ्गालोके अपाङ्गेन यदालोकनं तस्मिन्, पतितं तद्भाजनम्, शतशो युवतयोऽनुधावन्ति । कीदृश्यो गलद्वेणीबन्धा विगलितकबरीभाराः, कुचकलशाद्विस्रस्ता विभ्रष्टाः सिचयाः कञ्चुलिका यासां ताः, हठात् निष्कारणात्त्रुट्यत्काञ्च्यः छिन्नक्षुद्रघण्टिकाः, विगलितदुकूलाः भ्रष्टोत्तरीया इत्यर्थः । **विष्णुपक्षेऽप्येवम्** ॥ १३ ॥

## आनन्दलहरीटीका

त्वत्कृपा असंभावितार्थसाधिकेति भूयोऽपि दार्ढ्यार्थं दर्शयति-**नरमिति**-वर्षीयांसं वृद्धतमं, नयनयोर्विरसं अप्रियं, नर्मसु क्रीडासु जडं अशक्तं अनभिज्ञं वा, तव अपांगालोके नेत्रान्तदर्शने, पतितं विषयीभूतं चेत्, तदा ईदृशमपि नरं शतशो युवतयः अनुधावन्ति, स्वपतित्वेन वरयितुं यान्ति, हठात् मयैवायं वरणीय इति परस्परकलहेनेत्यर्थः। कीदृश्यः गलन्तः शिथिलीभवन्तो वेणीनां संयतकेशानां बन्धाः बन्धनानि यासां तास्तथा, कुचरूपा ये कलशाः कुम्भाः, तेभ्यो विस्रस्तानि भ्रष्टानि सिचयानि वसनानि यासां ताः, त्रुट्यन्त्यो गलन्त्यः काञ्च्यो मेखला यासां ताः, विगलितनि पतितानि दुकूलानि अधःपरिधानवस्त्राणि यासां ताः। कुचकलशेत्यादिना तु उत्तरीयवस्त्रपतनाभिधानमिति न पौनरुक्त्यम्। एतेन त्वत्कृपायाः किमप्यसाध्यं नास्तीति दर्शितम्। सिचयो लक्तवसनं क्लीवासश्चैव शाटके इति विश्वप्रकाशः ॥ १३ ॥

**क्षितौ षट्पञ्चाशद्द्विसमधिकपञ्चाशदुदके**
**हुताशे द्वाषष्टिश्चतुरधिकपञ्चाशदनिले ।**
**दिवि द्विष्षट्त्रिंशन्मनसि च चतुष्षष्टिरिति ये**
**मयूखास्तेषामप्युपरि तव पादाम्बुजयुगम् ॥ १४ ॥**

க்ஷிதௌ ஷட்பஞ்சாஶத்த்விஸமதிக பஞ்சாஶதுதகே
1 1 1 3 3 4 1 1 1 3 3 1
ஹுதாஶே த்வாஷஷ்டிஶ்சதுரதிக பஞ்சாஶதனிலே |
1 3 1 1 1 4 1 1 3
திவி த்விஷ்ஷட்த்ரிம்ஶன்மனஸி ச சதுஷ்ஷஷ்டிரிதி யே
3 3 1 1 1 1 1 1 1
மயூகாஸ்தேஷாமப்யுபரி தவ பாதாம்புஜயுகம் ||
2 1 1 1 1 1 3 3 3

भूमितत्व मे छप्पन, उदकतत्व में बावन, स्वाधिष्ठान-
अनलतत्व में बासठ, अनिलतत्व में चौवन, तथा महान्
गगनतत्त्व में किरण बहत्तर, मनस्तत्त्व में फिर चौसट
ज्वालाओं के उपर, बर सहस्रार में, इन सब से हट
तेरे चरणाम्बुज शोभित हैं सुधासिंधु में सुषुमावट ! ॥

## लक्ष्मीधरा

क्षितौ पृथिवीतत्त्वयुक्ते मूलाधारे षट्पञ्चाशत् षडुत्तरपञ्चाशत्संख्याकाः, द्विसमधिक-पञ्चाशत् द्वाभ्यां समधिका पञ्चाशत् उदके उदकतत्त्वयुक्ते मणिपूरस्थाने, हुताशे वह्नितत्त्वयुक्ते स्वाधिष्ठानचक्रे द्वाषष्टिः द्वौ च षष्टिश्च द्वाषष्टिः। 'विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्' इति

सूत्रेण द्विशब्दादिकारस्य आकारः। चतुरधिकपञ्चाशत् चतुःसंख्यया अधिका पञ्चाशत् अनिले वायुतत्वयुक्ते अनाहतचक्रे, दिवि आकाशतत्त्वयुक्ते विशुद्धिचक्रे द्विःषट्त्रिंशत् द्विरावृत्तषट्त्रिंशत्संख्याकाः द्विसप्ततिसंख्याका इत्यर्थः, मनसि मनस्तत्त्वयुक्ते आज्ञाचक्रे चतुःषष्टिः, इति एवंप्रकारेण ये प्रसिद्धाः शास्त्रेषु आगमेषु, स्वसंवेद्यत्वेन च योगिनां प्रसिद्धाः मयूखाः सन्ति तेषां मयूखानामप्युपरि सहस्रदलमध्यवर्तिचन्द्रबिम्बात्मके बैन्दवापरनामके सुधासिन्धौ तव भगवत्याः पादाम्बुजयुगं वर्तते विद्यते। एवं समयसंप्रदाय इति शेषः॥

अत्रेत्थं पदयोजना—हे भगवति, ये मयूखाः क्षितौ षट्पञ्चाशत्, उदके द्विसमधिकपञ्चाशत्, हुताशे द्वाषष्टिः, अनिले चतुरधिकपञ्चाशत्, दिवि द्विःषट्त्रिंशत्, मनसि चतुःषष्टिः इति तेषामुपरि तव पादाम्बुजयुगं वर्तत इति शेषः॥

अत्र षट्पञ्चाशदित्यादिसंख्याशब्दानां संख्येयपरत्वात् संख्येयानां मयूखानां बहुत्वेऽपि एकवचनान्तत्वमेव। यथा "विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः। संख्यार्थे द्विबहुत्वे स्तः"॥ न तु संख्येये इति नियमात्, संख्येयानां मयूखानां नियमाप्रसक्तेर्बहुवचनत्वं सिद्धम्। अत्रेदं तत्त्वम्—षट्पञ्चाशदित्यादिसंख्यानां संख्येयविशेषणत्वेऽपि न शुक्लादिगुणतौल्यम्; यथाऽऽह पदमञ्जरीकारः—'विंशत्यादयो गुणाः न शुक्लादिभिर्गुणैः समानधर्माणो भवितुमर्हन्ति। विंशत्यादयो हि तावत् पृथक्त्वयोगिषु द्रव्येषु वर्तन्त इति व्यासज्यवृत्तयः, शुक्लादयस्तु प्रत्येकपर्यवसायिनः' इति। अत्रेदमतिरहस्यम्—संख्येयपराणां संख्याशब्दानां बहुवचने षट्पञ्चाशतो मयूखा इति प्राप्तौ षट्त्रिंशदुत्तरशतोत्तरत्रिसहस्रसंख्याकाः भवेयुः। अतो न विवक्षितार्थसिद्धिरिति नियमफलमिति॥

अत्रेदमनुसंधेयम्—आधारस्वाधिष्ठानमणिपूरानाहतविशुद्ध्याज्ञाचक्रात्मकं श्रीचक्रं त्रिखण्डं सोमसूर्यानलात्मकम्। मूलाधारस्वाधिष्ठानचक्रद्वयमेकं खण्डम्। मणिपूरानाहतचक्रद्वयमेकं खण्डम्। विशुद्ध्याज्ञाचक्रद्वयमेकं खण्डम्। अत्र प्रथमखण्डोपरि अग्निस्थानम्। तदेव रुद्रग्रन्थिरित्युच्यते। द्वितीयखण्डोपरि सूर्यस्थानम्। तदेव विष्णुग्रन्थिरित्युच्यते। तृतीयखण्डोपरि चन्द्रस्थानम्। तदेव ब्रह्मग्रन्थिरित्युच्यते। 'सोमसूर्यानलात्मकम्' इति अवरोहणक्रमेणावगन्तव्यम्। तत्र प्रथमखण्डोपरि स्थितो वह्निः स्वज्वालादिभिः प्रथमखण्डमावृणोति। द्वितीयखण्डोपरि स्थितः सूर्यः स्वकीयैः किरणैः द्वितीयखण्डमावृणोति। तृतीयखण्डोपरि स्थितः चन्द्रः स्वकलाभिः तृतीयखण्डमावृणोति। आधारचक्रे महीतत्त्वात्मके वह्नेः षट्पञ्चाशज्ज्वालाः, मणिपूरके उदकतत्वात्मके स्वोपरिस्थिते द्विपञ्चाशज्ज्वालाः। एवमष्टोत्तरशतं वह्नेः ज्वालाः। सूर्यस्य अग्नितत्त्वात्मके स्वाधिष्ठाने द्वाषष्टिकिरणाः, अनिलतत्त्वात्मके चतुःपञ्चाशत्किरणाः। सूर्यकिरणानां मणिपूरं विहाय स्वाधिष्ठानप्रवेशः सूर्याग्न्योरेकत्वात्,

सूर्यान्तर्भावादग्नेश्च । स्वाधिष्ठानमणिपूरयोस्तु सूर्याग्निस्थानयोः मध्ये अग्निस्थाने सूर्यप्रवेशः सूर्यस्थाने अग्निप्रवेशः। [1]जगद्दहनाग्निशामकसंवर्तमेघात्मकसूर्यकिरणजनितवर्षोत्पत्त्यर्थम्। एतत्तु 'तटित्वन्तं शक्त्या' इत्यादिश्लोकव्याख्यानावसरे निपुणतरमुपपादयिष्यामः । एवं सूर्यस्य षोडशोत्तरशतं किरणा भवन्ति। चन्द्रस्य कलाः वियत्तत्त्वात्मके विशुद्धिचक्रे द्विसप्ततिः, मनस्तत्त्वात्मके आज्ञा-चक्रे चतुःषष्टिः। एवं चन्द्रस्य षट्त्रिंशदुत्तरशतं कलाः भवन्ति। यथोक्तं भैरवयामले भैरवाष्टक-प्रस्तावे—'अष्टोत्तरशतं वह्नेः षोडशोत्तरकं रवेः। षट्त्रिंशदुत्तरशतं चन्द्रस्य च विनिर्णयः॥' इति। एवं सोमसूर्यानलाः पिण्डाण्डब्रह्माण्डे आवृत्य वर्तन्ते। पिण्डाण्डब्रह्माण्डयोरैक्यात् पिण्डा-ण्डावृतिरेव ब्रह्माण्डावृतिरिति रहस्यम्। एवं [2]पिण्डाण्डमतीत्य वर्तते सहस्रकमलम्। तच्च ज्योत्स्नामयो लोकः। तत्रत्यश्चन्द्रमा नित्यकलः। एतच्च 'तवाज्ञाचक्रस्थम्' इत्यादिश्लोकव्या-ख्यानावसरे निपुणतरमुपपादयिष्यामः। 'आज्ञाचक्रोपरिस्थितश्चन्द्रः' इति यदुक्तं तत्तु चन्द्र-कलावस्थानमात्रम्, न तु चन्द्रस्य स्थानमिति। यदुक्तं सुभगोदये—षोडशकलानां षोडशनित्या-त्मकत्वात्। तासां प्रतिपदादिशुक्लपक्षकृष्णपक्षतिथ्यात्मकतया वृद्धिपक्षसद्भावात्, चन्द्रस्यापि सहस्र-कमलगतस्य वृद्धिक्षयौ भवत एवेति, तत्तु चन्द्रमसः वृद्धिक्षयौ न भवतः, किंतु षोडश-नित्यात्मकाः षोडश [3]चन्द्रकलाः प्रतिपदादिपौर्णमास्यन्ततिथिप्रवर्तिकाः, तथैव कृष्णप्रतिपदमारभ्य अमावास्यान्ततिथिप्रवर्तिकाः स्वात्मतिरोधानातिरोधानाभ्यामिति मन्त्रविद्रहस्यम्॥

इदमत्रानुसंधेयम्—श्रीविद्यायाः चन्द्रकलाविद्यापरनामधेयायाः पञ्चदशतिथिरूपत्वात् षष्ट्युत्तरत्रिशतं मयूखाः दिवसात्मकाः, तेन संवत्सरो लक्ष्यते। तस्य कालशक्त्यात्मकस्य संव-त्सरस्य प्रजापतिरूपत्वात्, प्रजापतेः जगत्कर्तृत्वात्, मरीचीनां जगदुत्पत्तिस्थितिलयकरत्वम्। ते च मरीचयः अस्मिन्ब्रह्माण्डे पिण्डाण्डे च षष्ट्युत्तरत्रिशतसंख्याकाः। एवमनन्तकोटिपिण्डाण्ड-ब्रह्माण्डेषु। एवमेव प्रतिब्रह्माण्डं प्रतिपिण्डाण्डं षष्ट्युत्तरत्रिशतसंख्याकाः मयूखाः। अतश्चा-नन्तमयूखाः। ते च मयूखाः सूर्यचन्द्राग्निसंपृक्ताः भगवतीपादारविन्दजन्मानः तांस्तान् लोकान् प्रकाशयन्ति। अयं च 'लोकस्य द्वारमर्चिमत्पवित्रम्' (तै. ब्रा. ३. १२. ३) इति श्रुत्या मयूखानां भगवतीपादारविन्दसंभव उक्तः। तथैव च 'मरीचयः स्वायंभुवाः' (तै. आ. १. २७) इति श्रुत्या तेषां मरीचीनां सृष्टिस्थितिलयकरत्वमुक्तम्। एतदुक्तं भवति—सूर्यचन्द्राग्नयः भगवतीपादारविन्दोद्भूतानन्तकोटिकिरणमध्ये कतिपयान् किरणानाहृत्य भगवतीप्रसादसमासादित-जगत्प्रकाशनसामर्थ्यात् जगन्ति प्रकाशयन्तीति। अतश्च सर्वलोकातिक्रान्तं चन्द्रकलाचक्रं बैन्दव-स्थानमिति। तत्र वर्तमानं चरणाम्बुजम्। अनेककोटिब्रह्माण्डपिण्डाण्डावच्छिन्नमयूखानां उपर्येव

---

1. जगद्दहनाग्निनामक० 2. पिण्डाण्डमावृत्य 3. चन्द्राः

वर्तमानत्वात् 'तेषामप्युपरि तव पादाम्बुजं वर्तते' इति सिद्धानुवादः, न त्वारोपस्तुतिरित्यनुसंधेयम् । यथोक्तं भैरवयामले चन्द्रज्ञानविद्यायां गौरीं प्रति महेश्वरेण—'साधु साधु महाभागे पृष्टं त्रैलोक्यसुन्दरि । गुह्याद्गुह्यतमं ज्ञानं न कुत्रापि प्रकाशितम् ॥ कलाविद्या पराशक्तेः[1] श्रीचक्राकाररूपिणी । तन्मध्ये बैन्दवस्थानं तत्रास्ते परमेश्वरी ॥ सदाशिवेन संपृक्ता सर्वतत्त्वातिगा सती । चक्रं त्रिपुरसुन्दर्याः ब्रह्माण्डाकारमीश्वरि ॥ पञ्चभूतात्मकं चैव तन्मात्रात्मकमेव च । इन्द्रियात्मकमेवं च मनस्तत्त्वात्मकं तथा ॥ मायादितत्त्वरूपं च तत्त्वातीतं च बैन्दवम् । बैन्दवे जगदुत्पत्तिस्थितिसंहारकारिणी ॥ सदाशिवेन संपृक्ता तत्त्वातीता महेश्वरी । ज्योतीरूपा पराकारा यस्या देहोद्भवाः शिवे ॥ किरणाश्च सहस्रं च द्विसहस्रं च लक्षकम् । कोटिरर्बुदमेतेषां परा संख्या न विद्यते ॥ तामेवानुप्रविश्यैव भाति लोकं चराचरम् । यस्या देव्या महेशानि भासा सर्वं विभासते ॥ तद्भासा रहितं किंचिन्न च यच्च प्रकाशते । तस्याश्च शिवशक्तेश्च चिद्रूपायाश्चितिं विना ॥ आन्ध्यमापद्यते नूनं जगदेतच्चराचरम् । तेषामनन्तकोटीनां मयूखानां महेश्वरि ॥ मध्ये षष्ट्युत्तरं तेऽमी त्रिशतं किरणाः शिवे । ब्रह्माण्डं व्यश्नुवानास्ते सोमसूर्यानलात्मना । अग्नेरष्टोत्तरशतं षोडशोत्तरकं रवेः । षट्त्रिंशदुत्तरशतं चन्द्रस्य किरणाः शिवे ॥ ब्रह्माण्डं भासयन्तस्ते पिण्डाण्डमपि शांकरि । दिवा सूर्यस्तथा रात्रौ सोमो वह्निश्च सन्ध्ययोः ॥ प्रकाशयन्तः कालांस्ते तस्मात्कालात्मकास्त्रयः । षष्ट्युत्तरं च त्रिशतं दिनान्येव च हायनम् ॥ हायनात्मा महादेवः प्रजापतिरिति श्रुतिः । प्रजापतिर्लोककर्ता मरीचिप्रमुखान्मुनीन् ॥ सृजत्येते लोकपालान् ते सर्वे लोकरक्षकाः । संहारश्च हरायत्तः उत्पत्तिर्भवनिर्मिता ॥ रक्षा तु मृडसंलग्ना सृष्टिस्थितिलये शिवः । नियुक्तः परमेशान्या जगदेवं प्रवर्तते ॥' इति । 'तामेवानुप्रविश्य' इत्यादिना 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' (कठ. ५. १५) इति श्रुत्यर्थोऽनूदितः । अत्र बहु वक्तव्यमस्ति, तदुत्तरत्र सम्यङ्निरूपयिष्यामः ॥ १४ ॥

## सौभाग्यवर्धनी

अपाङ्गमहिमानमभिधाय चरणमहिमानमाह—**क्षिताविति** । अत्रैवं व्यवस्था । अत्र पूर्वतन्त्रमुत्तरतन्त्रमिति द्वैविध्यम् । पूर्वतन्त्रे शक्तिपुरःसरम् ; उत्तरतन्त्रे शिवपुरस्सरम् । शक्तिपुरस्सरं शाक्तमुच्यते ; शिवपुरस्सरं शांभवमुच्यते । शांभवे शिवशक्त्योस्तेजोभिरेवोत्पन्ना आवरणदेवता रश्मय उच्यन्ते । शांभवं षडन्वयात्मकं तन्त्रम् । षडन्वयास्तु मानसनाभसवायव्यतैजसाप्यपार्थिवाः । एतेषामुत्पत्तिक्रम उच्यते । निर्गुणस्य सकलप्रपञ्चसाक्षिणः सच्चिदानन्दरूपस्य शिवस्य विश्वोत्पादनलीलासमुल्लसितस्फुरणविशेषादिनेशशक्तेः सकाशात् परा नाम शक्तिरुत्पद्यते । सा च प्रपञ्चोन्मीलनलीलानुग्राहकमनोऽ-

---

1. पराशक्तिः

धिष्ठात्री सती ब्रह्मरन्ध्रादिभ्रूमध्यान्तव्यापिनीमुपाधिसरणिं समासाद्य मज्जाधिदेवतेति निगद्यते। तया चेच्छाज्ञानक्रियाकुण्डलिनीमातृकेति देवता उत्पन्नाः, नभोवायुतेजोजलभूमिस्थानेषु कण्ठहृदयनाभिलिङ्गगुदोर्ध्वविभागेषु विशुद्धचनाहतस्वाधिष्ठानमणिपूरमूलाधारसंज्ञेषु विलसन्ति। ताश्च त्वगसृङ्मांसमेदोऽस्थिदेवताः। तथा चैताभिर्देवताभिः सचराचरं विश्वं समुज्जृम्भते। तन्मध्ये कुण्डलिनीमातृकाभ्यां षडन्वयं तन्त्रमेतच्छांभवमुत्पन्नं सर्गादौ; पश्चात्सकलः प्रपञ्च उत्पन्नः। तदुक्तं कुब्जिकातन्त्रे—'शिवस्य निष्प्रपञ्चस्य परमार्थशरीरिणः। चिदुल्लासात्परा जाता पञ्चानां मातृरूपिणी॥ अन्वयानां मार्गयोगात्सैका षोढा प्रजायते। परा चेच्छा तथा ज्ञानक्रियाकुण्डलिनीति च॥ मातृका चाष्टधा प्रोक्ता पराभेदास्ततः स्मृताः। कुण्डलिनीमातृकाभ्यां च षोढा भिन्नं मयूखकम्॥ नानाविधं सुविततं तन्त्रमेतत् षडन्वयम्। उत्पन्नं शांभवं पश्चाज्जगदेतच्चराचरम्॥' इति। तथा च श्रुतिः—'इयमेव सा या प्रथमा व्यौच्छत्। सा रूपाणि कुरुते पञ्च देवी। द्वे स्वसारौ वयतस्तन्त्रमेतत्। सनातनं विततं षण्मयूखम्' इति। अस्यार्थः—सा या प्रथमा व्यौच्छत् सा प्रसिद्धा इयमेव या प्रथमा जगदादिः व्यौच्छत् प्रकटीबभूव, परेति यावत्। सा रूपाणि पञ्च देवी दीव्यतीति देवी स्वलीलया इच्छाज्ञानक्रियाकुण्डलिनीमातृकेति पञ्चरूपाणि कुरुते। तत्र द्वे स्वसारौ कुण्डलिनीमातृके, एतच्छांभवं तन्त्रं षोढा विस्तीर्यमाणमयूखं सनातनं अनादिसिद्धपरम्परयाऽनुवर्तमानं वयतः विस्तारयतः पृथिव्यादिस्थानेषु षट्पञ्चाशदादिभेदेन मयूखजालं विस्तारयन्तीत्यर्थः। क्षितौ पार्थिवतत्त्वरूपा अष्टाविंशतिरश्मयः। पार्थिवतत्त्वानि तु पञ्च तन्मात्राः पञ्च भूतानि पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि अन्तःकरणचतुष्टयं कालः प्रकृतिपुरुषमहत्तत्त्वानीत्यष्टाविंशतिः। शिवशक्तिसंबन्धभेदेन द्विविधानि; तेन षट्पञ्चाशत्। तेषां नामानि अग्रे वक्ष्यन्ते। आप्यतत्त्वानि षड्विंशतिः—पञ्च भूतानि, पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि दश, तेषामर्था दश, मन इति। शैवशाक्तभेदेन द्विपञ्चाशत्। तैजसतत्त्वानि एकत्रिंशत्—पञ्च भूतानि पञ्च तन्मात्राः ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि सार्थानि मन इत्येकत्रिंशत्। शिवशक्त्योर्विभागेन द्विषष्टिः। वायव्यतत्त्वानि सप्तविंशतिः महत्तत्त्वन्यूनपार्थिवतत्त्वानि; शिवशक्तिविभागेन चतुःपञ्चाशत्। दिवि षट्त्रिंशत्—शिवः, शक्तिः, सदाशिवः, ईश्वरः, शुद्धविद्या, माया, कला, विद्या, रागः, कालः, नियतिः, पुरुषः, प्रकृतिः, अहंकारः, बुद्धिः, मनः, ज्ञानेन्द्रियाणि, कर्मेन्द्रियाणि, शब्दस्पर्शरूपरसगन्धाः पञ्च, पञ्च भूतानीति। शिवशक्तिविभागतः द्विसप्ततिः। मानसतत्त्वानि द्वात्रिंशत्। तथा हि—परा चतुर्विधा—परा पश्यन्ती मध्यमा वैखरीति। इच्छा पञ्चविधा—कर्तुं कारयितुमुपकर्तुं प्रतिकर्तुमुदासितुमिति। ज्ञाना चतुर्विधा। 'ज्ञानं द्विविधम्, सालम्बं निरालम्बं च। सालम्बं त्रिविधम्—ज्ञातृज्ञेयज्ञप्तिरूपेण। निरालम्बमपि त्वमहं त्वदीयं मदीयमिति चतुर्विधम्' इति योगिनीहृदये। क्रिया सप्तधा—इष्टं पूर्तं स्वाध्यायो जपः पूजा तपो दानमिति। कुण्डलिनी चतुर्विधा भूमिकाभेदेन—उन्नयः लयः प्रत्यावृत्तिर्विश्रान्तिरिति।

मातृकाऽष्टधा वर्गाष्टकभेदेन। एवं द्वात्रिंशत्तत्त्वानि मानसानि। एवं पार्थिवादितत्त्वरूपाः षष्ट्युत्तरत्रिशतं मरीचयः शांभवाः। तथा च कुब्जिकातन्त्रे—"आदौ परा चतुर्धा स्याद् द्वितीयेच्छा च पञ्चधा। तृतीया वेदधा ज्ञाना चतुर्थी सप्तधा क्रिया॥ पञ्चमी कुण्डली द्विर्धिः षष्ठी स्यान्मातृकाऽष्टधा। परातोऽजायतेच्छा हि सा च व्योमपतिः स्मृता॥ षट्त्रिंशन्नायिका प्रोक्ता कण्ठस्थानसमाश्रिता। इच्छातो जायते ज्ञाना सा च वायोरधीश्वरा॥ सप्तविंशतिरश्मीनां पतिः साऽनाहताश्रया। ज्ञानतोऽभूत्क्रिया व्यक्ता सा च वह्नीश्वरी मता॥ एकत्रिंशद्रश्मिपतिः स्वाधिष्ठानं समाश्रिता। क्रियातः कुण्डली व्यक्ता सा स्यात्सलिलनायिका॥ सप्तविंशतिरश्मीनां मणिपूरं समाश्रिता। कुण्डल्या मातृका जाता सा क्षितेरीश्वरी मता॥ अष्टाविंशतिरश्मीनामक्षीवाधारमाश्रिता। शिवशक्तिविभागेन द्विविधा शांभवाज्ञया॥ षष्ट्युत्तरं तु त्रिशतमेवं शंभुमरीचयः। परादिशक्तिभिः षड्भिर्नायकैः सहिता पुनः। द्विसप्तत्यधिकं त्रीणि शतान्याहुर्मनीषिणः॥ एषां स्मरणमात्रेण जीवन्मुक्तो महीं चरेत्। सर्वेषां स्मरणाशक्तः षट्सु चैकमपि स्मरेत्॥ एतेषां स्मृतितो लोकः पापहा पूजनात्पुनः। लक्ष्मीवान् ध्यानतो जीवन्मुक्तो रश्मिकुले वसेत्॥' इति॥ मूलाधारमध्ये अग्रे वक्ष्यमाणौ शिवौ पूज्यौ। एतयो रश्मयः—१ उड्डीश्वरः, २ उड्डीश्वरी ३ जलेश्वरः, ४ जलेश्वरी, ५ पूर्णेश्वरः, ६ पूर्णेश्वरी, ७ कामेश्वरः, ८ कामेश्वरी, ९ श्रीकण्ठः, १० गगना ११ अनन्तः, १२ स्वरसा, १३ शंकरः, १४ मतिः, १५ पिङ्गलः, १६ पातालदेवी, १७ नारदाख्यः, १८ नादा, १९ आनन्दः, २० हाकिनी, २१ आलस्यः, २२ डाकिनी, २३ महानन्दः, २४ लाकिनी, २५ योग्यः, २६ काकिनी, २७ अतीतः, २८ शाकिनी, २९ पादः, ३० हाकिनी, ३१ आधारेशः, ३२ रक्ता ३३ चक्रीशः, ३४ चण्डा, ३५ कुरङ्गीशः, ३६ कराला, ३७ मदग्रीशः, ३८ महोच्छुष्मा, ३९ अनादिविमलः, ४० मातङ्गी, ४१ सर्वज्ञविमलः, ४२ पुलिन्दा, ४३ योगविमलः, ४४ शम्बरी, ४५ सिद्धविमलः, ४६ वाचापरा, ४७ समयविमलः ४८ कुलालिका, ४९ मित्रेशः, ५० कुब्जा, ५१ उड्डीशः, ५२ लध्वी, ५३ षष्ठीशः, ५४ कुलेश्वरी, ५५ चर्याधीशः, ५६ अजा; सर्वत्र शिवे आनन्दनाथश्रीपादुकां पूजयामीति योजनीयम्। शक्तौ अम्बादेवीति पूजायाम्। एते पार्थिवरश्मयो मूलाधारे चतुर्दले पश्चिमादि प्रतिदलं सप्तसप्तकं पूर्यते। भावयेद्वा। अथवा, शिरसि षट्कोणं विचिन्त्य पश्चिमादितो रश्मीनां चतुष्कं पञ्चकं षट्कं चतुष्कं पञ्चकं पुनश्चतुष्कमिति पूज्याः। तदुक्तं पद्मवाहिन्याम्—'षट्कोणं शिरसि ध्यात्वा पश्चिमादिष्वनुक्रमात्। कोणेषु पूजयेदष्टाविंशकं च यथाक्रमात्॥ चतुष्कं पञ्चकं षट्कं चतुष्कं पञ्चकं पुनः। चतुष्कमिति संभिन्नाः क्रमात्पार्थिवरश्मयः॥' इति। भूमौ वा विलिख्य पूजयेत्। इति पार्थिवरश्मयः। एतेन क्षितौ षट्पञ्चाशदिति व्याख्यातम्। अथाप्यरश्मयः मणिपूरे; अत्र शांभवे स्वाधिष्ठानमणिपूरयोर्व्यत्ययः। रश्मयस्तु—१ सद्योजातः, २ माया, ३ वामदेवः, ४ श्रीः, ५ अघोरः, ६ पद्मा,

७ तत्पुरुषः, ८ अम्बिका, ९ अनन्तः, १० निवृत्तिः, ११ अनाथः, १२ प्रतिष्ठा, १३ जनाश्रितः, १४ विद्या, १५ अचिन्त्यः, १६ शान्ता, १७ शशिशेखरः, १८ उमा, १९ तीव्रः, २० गङ्गा, २१ मणिवाहः, २२ सरस्वती, २३ अम्बुवाहः, २४ कमला, २५ तेजोऽधीशः, २६ पार्वती, २७ विद्यावागीश्वरः, २८ चित्रा, २९ चतुर्विधेश्वरः, ३० सुकमला, ३१ उमागङ्गेश्वरः, ३२ मन्मथा, ३३ कृष्णेश्वरः, ३४ श्रिया, ३५ श्रीकण्ठः, ३६ लया, ३७ अनन्तः, ३८ सती, ३९ शंकरः, ४० रत्नमेखला, ४१ पिङ्गलः, ४२ यशोवती, ४३ साध्याख्यः, ४४ हंसानन्दा, ४५ परदिव्यौघः, ४६ वामा, ४७ मारदिव्यौघः, ४८ ज्येष्ठा, ४९ पीठौघः, ५० रौद्री, ५१ सर्वेश्वरः, ५२ सर्वमयी; एते आप्यरश्मयो मणिपूरे षड्दलेषु पूज्याः चतुष्कं चतुष्कं षट्कं चतुष्कं पञ्चकं त्रिकमिति। तदुक्तं पद्मवाहिन्याम्—'चतुष्कं च चतुष्कं च षट्कं भूयश्चतुष्ककम्। पञ्चकं त्रिकमित्येव भिन्ना जलमरीचयः॥' इति। पूर्ववच्छिरसि वा भूमौ वा पूजयेत्। इत्याप्यमरीचिप्रपञ्चः। एतेन द्विसमधिकपञ्चाशदुदक इति व्याख्यातम्। अथ तैजसरश्मयः—१ परापरः, २ चण्डेश्वरः, ३ परमः ४ चतुष्मती, ५ तत्परः, ६ गुह्यकाली, ७ अपरः, ८ संवर्ता, ९ चिदानन्दः, १० नीलकुब्जा, ११ अघोरः, १२ गन्धा, १३ समरसः, १४ रसा, १५ ललितः, १६ स्मरा, १७ स्वच्छः, १८ स्पर्शः, १९ भूतेश्वरः, २० शब्दः, २१ आनन्दः, २२ डाकिनी, २३ आलस्यः, २४ रत्नडाकिनी, २५ प्रभानन्दः, २६ चक्रडाकिनी, २७ योगानन्दः, २८ पद्मडाकिनी, २९ अतीतः, ३० कुब्जडाकिनी, ३१ स्वादः, ३२ प्रचण्डडाकिनी, ३३ योगेश्वरः, ३४ चण्डा, ३५ पीठेश्वरः, ३६ कोशला, ३७ कुलकोलेश्वरः, ३८ पावनी, ३९ कुक्षेश्वरः, ४० समया, ४१ श्रीकण्ठः, ४२ कामा, ४३ अनन्तः, ४४ रेवती, ४५ शंकरः, ४६ ज्वाला, ४७ पिङ्गलः, ४८ कराला, ४९ मदाख्यः, ५० कुब्जिका, ५१ कालरात्रीगुरुः, ५२ परा, ५३ सिद्धगुरुः, ५४ शान्त्यतीता, ५५ रत्नगुरुः, ५६ शान्ता, ५७ शिवगुरुः, ५८ विद्या, ५९ मेलगुरुः, ६० प्रतिष्ठा, ६१ समयगुरुः, ६२ निवृत्तिः; एते स्वाधिष्ठाने दले पश्चिमादिनवदले पुत्रिकात्रिकक्रमेण पूजयित्वा दशदले चतुष्कं पूजयेत्। षट्कोणपूजायां पञ्चकं पञ्चकं षट्कं चतुष्कं पञ्चकं षट्कमिति पूजयेत्। तदुक्तं पद्मवाहिन्यां चतुर्थाह्निके—'पञ्चकं पञ्चकं षट्कं चतुष्कं पञ्चकं पुनः। षट्कमित्थं क्रमाद्भिन्नास्तैजसकमरश्मयः॥' इति। एतेन हुताशे द्वाषष्टिरिति व्याख्यातम्। अथ वायव्यमरीचयः—१ खगेश्वरः, २ भद्रा, ३ कूर्मः, ४ आधारा, ५ मेषः, ६ कोशा, ७ मीनः, ८ मल्लिका, ९ ज्ञानः, १० विमलः, ११ महानन्दः, १२ शर्वरी, १३ तीव्रः, १४ लीला, १५ प्रियः, १६ कुमुदा, १७ कौलिकः, १८ मेनका, १९ डामरः, २० डाकिनी, २१ रामः, २२ राकिनी, २३ लामरः, २४ लाकिनी, २५ कामरः, २६ काकिनी, २७ सामरः, २८ साकिनी, २९ हामरः, ३० हाकिनी, ३१ आधारेशः, ३२ राका, ३३ चक्रीशः, ३४ बिन्दुः, ३५ कुकुरः, ३६ कुला,

३७ मयश्रीशः, ३८ कुब्जिका, ३९ हृदीशः, ४० कामकला, ४१ शिरसः, ४२ कुलदीपिका, ४३ शिखेशः, ४४ सर्वेशा, ४५ वर्मा, ४६ बहुरूपा, ४७ अस्त्रेशः, ४८ महत्तरी, ४९ परगुरुः, ५० मङ्गला, ५१ पराधिगुरुः, ५२ कोशटा, ५३ पूज्यगुरुः, ५४ रामा; एते अनाहते द्वादशदले पद्मे पश्चिमादि पूज्याः। तृतीयषष्ठनवमदलेषु त्रिकं त्रिकमन्येषु द्वयं द्वयम्। अथ वा, प्रथमान्त्यषष्ठयोस्त्रिकं वा, चतुष्कम्, अन्येषु द्वयं द्वयमिति। षट्कोणे पूजायां चतुष्कं पञ्चकं षट्कं चतुष्कं पञ्चकं त्रिकमिति पूजयेत्; भूमौ वा। तदुक्तं पद्यवाहिन्यां तृतीयाह्निके—'चतुष्कं पञ्चकं षट्कं चतुष्कं पञ्चकं त्रिकम्। इति क्रमेण भिन्नाः स्युर्वायवीया मरीचयः ॥' इति। एतेन चतुरधिकपञ्चाशदनिल इति व्याख्यातम्। अथ नाभसाः—१ हृदयः, २ कौलिकी, ३ घरः, ४ कान्ता, ५ भोगः, ६ विश्वा, ७ भयः, ८ योगिनी, ९ महः, १० ब्रह्मसारा, ११ शवः, १२ शबरी, १३ द्रवः, १४ कालिका, १५ रसः, १६ जुष्टचण्डाली, १७ मोहः १८ अघोरेशी, १९ मनोमयः, २० हेला, २१ केकः, २२ महारक्ता, २३ ज्ञानगुह्यः, २४ कुब्जिका, २५ खरः, २६ डाकिनी, २७ ज्वलनः, २८ शाकिनी, २९ महाकुलः, ३० लाकिनी, ३१ भियोज्ज्वलः, ३२ काकिनी, ३३ तेजः, ३४ शाकिनी, ३५ मूर्धा, ३६ हाकिनी, ३७ वामुः, ३८ पापघ्नी, ३९ कुलः ४० सिंहः, ४२ संहारः, ४१ कुलाम्बिका, ४३ विश्वंभरः, ४४ कामा, ४५ कौटिलः, ४६ कूनमाता, ४७ गालवः, ४८ कङ्काली, ४९ व्योमः, ५० व्योमा, ५१ श्वसनः, ५२ नादा, ५३ खेचरः, ५४ महादेवी, ५५ बाहुलः, ५६ महत्तरी, ५७ तातः, ५८ कुण्डलिनी, ५९ कुलातीतः, ६० कुलेशी, ६१ अजः, ६२ ईधिका, ६३ अनन्तः, ६४ दीपिका, ६५ एषः, ६६ रेचिका, ६७ शिखः, ६८ मोचिका, ६९ परमः, ७० परा, ७१ परः, ७२ चित्; एते विशुद्धिषोडशदले पूज्याः। आद्यन्तदलयोस्त्रिकं त्रिकम्, अन्येषु दलेषु द्वयं द्वयमिति। षट्कोणपक्षे प्रतिकोणेषु षट्कं षट्कं पूजयेत्। तदुक्तं पद्यवाहिन्यां तृतीयाह्निके—'षट्कं षट्कं पुनः षट्कं षट्कं षट्कं पुनश्च तत्। इति क्रमात्समुद्दिष्टा नाभसा दिव्यरश्मयः। साधकेन समभ्यर्च्यो मध्ये देवो यथाविधि ॥' इति। इति नाभसरश्मिप्रपञ्चः। अथ मानसरश्मयः—१ परः, २ परा, ३ भरः, ४ भरा, ५ चित्, ६ चित्परा, ७ महामाया, ८ महामायापरा, ९ सृष्टिः, १० सृष्टिपरा, ११ इच्छा, १२ इच्छापरा, १३ स्थितिः, १४ स्थितिपरा, १५ निरोधः, १६ निरोधपरा, १७ मुक्तिः, १८ मुक्तिपरा, १९ ज्ञानः, २० ज्ञानपरा, २१ सत्यः, २२ सतीपरा, २३ असत्यः, २४ असतीपरा, २५ सदसत्, २६ सदसतीपरा, २७ क्रिया, २८ क्रियापरा, २९ आत्मा, ३० आत्मपरा, ३१ इन्द्रियाश्रयः, ३२ इन्द्रियाश्रयपरा, ३३ गोचरः, ३४ गोचरापरा, ३५ लोकमुख्यः, ३६ लोकमुख्यापरा, ३७ वेदवत्, ३८ वेदवत्परा, ३९ संवित्, ४० संवित्परा, ४१ कुण्डलिनी, ४२ कुण्डलिनीपरा, ४३ सौषुम्नी, ४४ सौषुम्नीपरा, ४५ प्राणसूत्रः, ४६ प्राणसूत्रपरा, ४७ स्पन्दः, ४८ स्पन्दपरा, ४९ मातृकः,

५० मातृकापरा, ५१ स्वरोद्भवः, ५२ स्वरोद्भवापरा, ५३ वर्णजः, ५४ वर्णजापरा, ५५ शब्दजः, ५६ शब्दजापरा, ५७ वर्णज्ञातः, ५८ वर्णज्ञातापरा, ५९ वर्गजः, ६० वर्गजापरा, ६१ संयोगः, ६२ संयोगजापरा, ६३ मन्त्रविग्रहः, ६४ मन्त्रविग्रहापरा इति मानसरश्मयः आज्ञायां द्विदले पूज्याः। चतुष्कं च चतुष्टयं वामदले, चतुष्कं चतुष्टयं दक्षिणदले। षट्कोणपक्षे चतुष्कं पञ्चकं चतुष्कं सप्तकं चतुष्कमष्टकमिति। तदुक्तं पद्यवाहिन्यां प्रथमाह्निके—'चतुष्कं पञ्चकं चैव चतुष्कं सप्तकं पुनः। चतुष्कमष्टकं चेति क्रमान्मानसरश्मयः॥ मूलाधारादिचक्रेषु पूजयेद्वा प्रकारतः।' इति। रश्मिपूजास्थानानां ग्रन्थगौरवभयादेतावदेवोक्तम्। इति मानसरश्मिप्रपञ्चः। एतेन मनसि चतुःषष्टिरिति ये मयूखाः इत्येतद्व्याख्यातम्। तेषामुपरि तव पादाम्बुजयुगं सर्वरश्मीनां मूर्धन्यं सर्वप्रकाशकमिति यावत्, सर्वतत्त्वतेजोमयत्वात्। तदुक्तं मानसोल्लासे—'सर्वतत्त्वात्मतेजोभिरिद्धं तव पदाम्बुजम्। ध्यायन् शिववरारोहे साक्षात्तेजोमयो भवेत्॥' इति। अथवा, शिरसि तव निर्वाणचरणद्वयं पूर्वोक्तमानन्दरूपं सर्वेषां मयूखानामुपरि जागर्ति साक्षाच्छिवपदे; तस्यैव प्रसादेन सर्वतेजोविशेषाः प्रकाशन्त इति भावः॥ १४॥

### अरुणामोदिनी

एवं प्रासङ्गिकं देवीसौन्दर्यं कटाक्षकरुणां चोपवर्ण्य तत्पादाम्बुजमहिमानं स्तौति—**क्षिताविति**। हे भगवति, क्षितौ भूतत्त्वात्मके मूलाधारे षडधिका पञ्चाशत् षडुत्तरपञ्चाशद् ये मयूखाः, सन्तीत्यध्याहृतक्रियया यन्मयूखशब्दयोरन्वयः। तथा उदके जलतत्त्वात्मके मणिपूरे द्वाभ्यां समधिका च सा पञ्चाशच्चेति द्विसमधिकपञ्चाशत्; द्व्युत्तरपञ्चाशदित्यर्थः। एते च चक्रद्वये वर्तमानाः अष्टोत्तरशतं किरणा रौद्राः। तथा हुताशे अग्नितत्त्वात्मके (विशुद्धिचक्रात्मके) स्वाधिष्ठाने द्व्यधिकाः षष्टिर्द्वाषष्टिः; 'विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम्' इति दीर्घः। तथा अनिले वायुतत्त्वात्मके अनाहते चतुरधिका च सा पञ्चाशच्च चतुरधिकपञ्चाशत्; इत्येवं चक्रद्वयेऽप्युक्ताः षोडशोत्तरशतं किरणाः सौराः। तथा दिव्याकाशतत्त्वात्मके विशुद्धिचक्रे, द्वौ क्रियाभ्यावृत्ती, द्विः क्रियाभ्यावृत्तिगणने 'द्वित्रिचतुर्भ्यः सुच्' इति सुच्प्रत्ययः। षडुत्तरा त्रिंशत् षट्त्रिंशत्, द्विश्चासौ षट्त्रिंशच्चेति समासः। द्विरावृत्ता षट्त्रिंशत् द्विसप्ततिसंख्याका इत्यर्थः। मनसि मनस्तत्त्वात्मके आज्ञाचक्रे चतुरधिका षष्टिः चतुःषष्टिः। एते च चक्रद्वये स्थिताः षट्त्रिंशदुत्तरशतं किरणा ऐन्दवाः। एते च क्षितौ पार्थिवतत्त्वरूपा अष्टाविंशतिः; पञ्चतन्मात्राः, पञ्चभूतानि, ज्ञानेन्द्रियपञ्चकम्, कर्मेन्द्रियपञ्चकम्, अन्तःकरणचतुष्टयम्, कालः, प्रकृतिः, नियतिः, पुरुष इत्यष्टाविंशतिः; शिवयोरैक्येन षट्पञ्चाशत्। अप्सु पञ्चभूतानि, ज्ञानकर्मेन्द्रियाणि दश, तेषामर्थाः, मन इति पूर्ववद्द्विपञ्चाशत्। तैजसरश्मयः—पञ्चभूतानि, तन्मात्राः, ज्ञानकर्मेन्द्रियतदर्थाः, मन इति पूर्ववद् द्वाषष्टिः। वायव्यरश्मयः—महत्तत्त्वन्यूनपार्थिवतत्त्वानि, पूर्ववच्चतुः-

पञ्चाशत्। आकाशरश्मयः—शिवशक्तिसदाशिवेश्वरशुद्धविद्याः, माया, कला, विद्या, रागः, कालो नियतिः पुरुषः प्रकृतिरहंकारो बुद्धिर्मनो ज्ञानकर्मेन्द्रियाणि शब्दस्पर्शरूपरसगन्धाः पञ्चभूतानीति पूर्ववद्द्वासप्ततिः। मानसरश्मयः—शिवशक्तिसदाशिवेश्वरविरहिता उक्ता एव पूर्ववच्चतुःषष्टिः। एतेषां नामानि सौभाग्यवर्धन्यां द्रष्टव्यानि। एवंप्रकारेणागमप्रसिद्धाः पिण्डाण्डब्रह्माण्डे समवभासयन्तो ये मयूखाः सन्ति, तेषां संघीभूय षष्ट्युत्तरत्रिशतसंख्यापन्नानां मयूखानामप्युपरि ऊर्ध्वं स्थिते सहस्रारकमले तव भवत्याः पादाम्बुजयुगं पदद्वन्द्वं वर्तत इति शेषः। 'मूलाधारादिषट्चक्राणां त्रिखण्डं मातृकाचक्रम्' इति वचनात् लिद्विकत्वापत्तेः, प्राथमिकचक्रद्वयोपर्यग्निस्थानम्, तदेव रुद्रग्रन्थिः; द्वितीयखण्डोपरि सूर्यस्थानम्, तदेव विष्णुग्रन्थिः; उत्तरखण्डोपरि चन्द्रस्थानम्, तदेव ब्रह्मग्रन्थिरित्यागमात्तत्र तत्र स्थितानां सोमसूर्यानलानां किरणानामुक्तसंख्यारूपेणोक्तस्थानेषु प्रकाशः। एते च किरणाः 'लोकस्य द्वारमर्चिमत्पवित्रम्' 'मरीचयः स्वायम्भुवाः' इति श्रुतेः, सकलतत्त्वातीतसहस्रकमलान्तर्वर्तितेजोमयचन्द्रमण्डलस्थितभगवतीपादारविन्दजन्मानः। तांश्च तत्तदुपासनाशक्त्या यथायथं समुपादाय सोमसूर्यानला जगन्ति भासयन्तीति भवत्याः सर्वजगत्कारणत्वं वास्तवमेव प्रकाशितम्। उक्तं चाम्बास्तवे—'भूमौ निवृत्तिरुदिता पयसि प्रतिष्ठा विद्याऽनले मरुति शान्तिरतीतशान्तिः। व्योम्नीति याः किल कलाः कलयन्ति विश्वं तासां हि दूरतरमम्ब पदं त्वदीयम्॥' इति। "माहात्म्यमत्र रश्मीनां यामले भैरवाभिधे। रहस्यमनुपृच्छन्त्यै पार्वत्यै शम्भुनोदितम्॥ साधु साधु महाभागे पृष्टं त्रैलोक्यसुन्दरि। गुह्याद्गुह्यतमं ज्ञानं न कुत्रापि प्रकाशितम्॥ कला विद्या पराशक्तिः श्रीचक्राकाररूपिणी। तन्मध्ये बैन्दवं स्थानं तत्रास्ते परमेश्वरी॥ सदाशिवेन संयुक्ता सर्वतत्त्वातिगामिनी। चक्रं त्रिपुरसुन्दर्या ब्रह्माण्डाकारमीश्वरि॥ पञ्चभूतात्मकं चैव तन्मात्रात्मकमेव च। इन्द्रियात्मकमेवं च मनस्तत्त्वात्मकं तथा॥ मायादितत्त्वरूपं च तत्त्वातीतं च बैन्दवम्। बैन्दवे जगदुत्पत्तिस्थितिसंहारकारिणी॥ सदाशिवेन संपृक्ता तत्त्वातीता महेश्वरी। ज्योतीरूपा निराकारा यस्या देहोद्भवाः शिवे॥ किरणाश्च सहस्रं च द्विसहस्रं च लक्षकम्। कोटिरर्बुदमेवैषां परा संख्या न विद्यते॥ तामेवानुप्रविश्यैव भाति विश्वं चराचरम्। यस्या भासा महेशानि सर्वं विश्वं विभासते॥ तद्भासा रहितं किंचिन्न च यच्च प्रकाशते। तस्याश्च शिवशक्तेश्च चिद्रूपायाश्रितं विना॥ आन्ध्यमापद्यते नूनं जगदेतच्चराचरम्। तेषामनन्तकोटीनां मयूखानां महेश्वरि॥ मध्ये षष्ट्युत्तरं देवि त्रिशतं किरणाः शिवे। ब्रह्माण्डं व्यश्नुवानास्ते सोमसूर्यानलात्मना॥ अग्नेरष्टोत्तरशतं षोडशोत्तरकं रवेः। षट्त्रिंशदुत्तरशतं चन्द्रस्य किरणाः शिवे॥ ब्रह्माण्डं भासयन्तस्ते पिण्डाण्डमपि शांकरि। दिवा सूर्यस्तथा रात्रौ सोमो वह्निश्च संध्ययोः॥ प्रकाशयन्तः कालांस्ते तस्मात्कालात्मकास्त्रयः। षष्ट्युत्तरं च त्रिशतं दिनान्येव तु हायने॥' इत्यादि॥ १४॥

## आनन्दगिरीया

**क्षिताविति**-अत्रैवं व्याख्यानमसांप्रदायिकं-यत्पूर्वश्लोकोक्तमूलाधारादिचक्रे लादिबीजयुक्ते षट्पञ्चाशद्दलादिकमलानि मनसा चिन्तयित्वा प्रतिदलं देवतां ध्यात्वा पूजनीयमिति। यथा-मूलाधारचक्रे पृथ्वी तिष्ठति। तत्र लमिति पृथ्वीबीजयुक्तं षट्पञ्चाशद्दलं कमलं चिन्तयित्वा तत्र प्रतिदलं देवता पूज्या। तत्र प्रथमदले त्रिपुरां पूजयामि, द्वितीये त्रिपुरसुन्दरीं पूजयामीत्यादीनि। तदागमे बहुधा न दृष्टमिति। अत्रैवं व्याख्या सृष्टिसंहारक्रमाभ्यामुत्पत्तिपूजने। तथाहि ब्रह्माण्डमण्डले निर्वाणचक्रे सहस्रदले सदाशिवः परमात्मा परमानन्दोऽव्ययः सकलसाक्षी तिष्ठति। स शिवः। तत्र परमेश्वरी नानाशक्तिमती महामाया वर्तते। तत्र प्रपञ्चोत्पत्त्यनुकूलकालबलेन गुणोद्रेको भवति। तदा शिवशक्त्योः परा नाम काचन शक्तिरुत्पद्यते। सा निर्वाणमारभ्य भूमण्डलमभिव्याप्य तिष्ठति। तत्र भ्रूमध्ये मानसे चक्रे मनोऽधिष्ठायिनी भवति। पश्चादग्नेः-स्फुलिंगा इव शिवशक्त्योस्तेजसः सकाशात् आवरणदेवताः षष्ट्यधिकत्रिशतसंख्याका उत्पद्यन्ते। ते मयूखा इव मयूखाः। तदनु परायाः सकाशात् इच्छाज्ञानाक्रियाकुण्डलिनीमातृका नाम पञ्च शक्तय उत्पद्यन्ते। ताः क्रमेण, आज्ञानाहतमणिपूरस्वाधिष्ठानमूलाधाराधिष्ठायिन्यः भ्रूकण्ठहृदयनाभिलिंगगुदोर्ध्वभागे वसन्ति। पश्चाद्भ्रूमध्ये विशुद्धे चक्रे द्विदले द्वात्रिंशत्तत्वात्मके मनो विद्यते। तत्वानि-परा पश्यन्ती मध्यमा वैखरी, इच्छा पञ्चविधा, ज्ञानाभेदाश्चत्वारः, क्रियाभेदाः सप्त, कुण्डलिनीभेदाश्चत्वारः, मातृकाभेदा अष्टौ अकचटतपयशेति द्वात्रिंशत्। तानि मानसानि। तत्र प्रतितत्वं देवताद्वयं शिवशक्तिभेदेन पूजनीयम्। शांभवतन्त्रानुसारेण शिवप्राधान्येन पूजा। शाक्ततन्त्रानुसारेण शक्तिप्राधान्येनेति चतुःषष्टिदेवतारूपमयूखात्मकं प्रथमावरणम्। पश्चात्कण्ठे आज्ञाचक्रे षोडशदले इच्छाशक्तिसहिते षट्त्रिंशत्तत्वात्मकं नभस्तिष्ठति। तत्रापि प्रतितत्त्वं देवताद्वयमिति द्वासप्ततिदेवतात्मकं द्वितीयमावरणम्। पश्चादनाहतचक्रे ज्ञानशक्त्यधिष्ठिते द्वादशदले सप्तविंशतितत्वात्मा वायुस्तिष्ठति। उक्तन्यायेन चतुःपञ्चाशत्तत्वात्मकं तृतीयमावरणम्। पश्चान्मणिपूरेऽष्टदले क्रियाशक्तियुक्ते एकत्रिंशत्तत्वात्मकं तेजस्तिष्ठति। तत्राप्युक्तन्यायेन द्वाषष्टिदेवतात्मकं चतुर्थमावरणम्। तदनु ततः स्वाधिष्ठाने षड्दले कुण्डलिनीसहिते षड्विंशतितत्त्वात्मकं जलं तिष्ठति इत्युक्तन्यायेन द्विपञ्चाशद्देवतात्मकं पञ्चममावरणम्। पश्चान्मूलाधारचक्रे चतुर्दले मातृकायुक्ते अष्टाविंशतितत्वात्मिका पृथिवीति, उक्तन्यायेन षट्पञ्चाशद्देवतात्मकं षष्ठमावरणम्। इत्युक्तक्रमे पार्थिवानि तत्त्वानि, पञ्चभूतानि, पञ्च तन्मात्राः, दशेन्द्रियाणि, मनोबुद्धिचित्ताहंकाराः, प्रकृतिपुरुषौ कालो महत्तत्वमिति। एवं षष्ट्यधिकत्रिशतमयूखानामुत्पत्तिस्थानक्रममभिधाय संहारेण पूजाक्रमः। प्रथमं षष्ठावरणपूजा—तत्रायं प्रकारः-मूलाधारचक्रे पृथिवी तिष्ठति तत्र चतुर्दलकमलमस्ति। तत्र प्रतिदलं तत्वसप्तकं ध्यात्वा प्रतितत्वं शिवशक्तिविभागेन

देवतारूपमयूखद्वयं ध्यात्वा पूजयेत् । मध्ये शिवौ भावयेद्वा । पूजामन्त्रः-उड्डीश्वरशिवानन्दनाथ तव पादुकां पूजयामीति शिवपक्षे, उड्डीश्वरि अंबिके देवि तव पादुकां पूजयामीति शक्तिपक्षे । तत्र मूलाधारे क्षितितत्वेषु मयूखानां नामानि-उड्डीश्वरः, उड्डीश्वरी, जालेश्वरः, जालेश्वरी, पूर्णेश्वरः, पूर्णश्वरी, कामेश्वरः, कामेश्वरी, श्रीकण्ठः, गगना, अनन्तः स्वरसा, शंकरः, मर्त्या, पिङ्गलः, पातालदेवी, सादाख्यः नादा, आनन्दः, डाकिनी, अवश्यानन्दनाथः, शक्तिनी, मर्त्यानन्दः, लाकिनी, योग्यः, काकिनी, अनन्तः, साकिनी, पादः, हाकिनी, आधारेशः, रक्ता, चक्रीशः, चण्डा, कुरंगीशः, वाराही, मदश्रीशः, महोष्मा, अनादिविमलः, मातंगी, सर्वज्ञविमलः, पुलिन्दा, योगविमलः, शंबरी, सिद्धविमलः, वाचापरा, समयविमलः, कुलालिका, मित्रेशः, कुब्जा, उड्डीशः, वल्ली, षष्ठीशः, कुलेश्वरी, चर्याधीशः, कुलजा, (५६) भूमौ विलिख्य वा पूजनीया इत्याह-क्षितौ षट्पञ्चाशत् इति । अथ द्वितीयावरणपूजा-अथ आप्या रश्मयः-स्वाधिष्ठाने षड्दले षड्विंशतितत्वेषु, सद्योजातः, माया, वामदेवः, श्रीः, आधारः, पद्मा, तत्पुरुषः, अंबिका, अनन्तः, निवृत्तिः, अनाथः, प्रतिष्ठा, अनाश्रितमनाः, विद्या, अचिन्त्यः, शान्ता, शशिशेखरः, उमा, तीव्रः, गंगा, मणिवाहः, सरस्वती, अंबुवाहः, कमला, तेजोऽधीशः, पार्वती, विद्यावागीश्वरः, पूजा, चतुर्विधेश्वरः, सुकमला, उमांगेश्वरः, मन्मथा, कृष्णेश्वरः, साश्रया, श्रीकण्ठः, लवा, अनन्तः, सती, शंकरः, रत्नमेखला, पिंगलः, यशोवती, सदाख्यः, हंसनन्दा, मददिग्धः, द्यावा, परदिव्यौघः, ज्येष्ठा, पीठौघः, रौद्री, सर्वेश्वरः, सर्वमयी, तदुक्तं द्विसमधिकपञ्चाशदुदक इति द्वितीयावरणपूजा । अथ तैजसाः । पराशूरः, चण्डेश्वरी, परमः, बन्धुष्मती, परः, गुणकांबा, अपरः, संवर्ता, चिदानन्दः, नीलकुब्जा, अघोरः, गन्धा, डामराघोरः, समररसा, लीलारतः, रूपा, स्वच्छः, स्पर्शा, शीतेश्वरः, शब्दा, आनन्दः, डाकिनी, आलस्यः, रत्नडाकिनी, प्रेमानन्दः, चक्रडाकिनी, योगानन्दः, पद्मडाकिनी, अतीतः, कुब्जडाकिनी, स्वादः, प्रचण्डडाकिनी, योगेश्वरः, चण्डा, पीठेश्वरः, कौशांगा, पादः, प्रपञ्चडाकिनी, कुक्षेश्वरः, समया, श्रीकण्ठः, कामा, अनन्तः, रेवती, शंकरः, ज्वाला, पिंगलाक्षः, कराला, सदाक्षः, कुब्जिका, कालरात्रिः, गुरुपरा, सिद्धगुरुः, शीत्यतीता, रत्नगुरुः, शान्ता, शिवगुरुः, विद्या, मेरुगुरुः, प्रतिष्ठा, समगुरुः, विवृतिः, एतेन हुताशे द्वाषष्टिरिति । अथ तृतीयावरणम् । अथ वायव्यरश्मयः—अनाहते द्वादशदले-खगेशः, भद्रा, कूर्मः, साध्वी, आप्यासमेषः, अशोका, मीनः, मालिका, ज्ञानः, विमला, महानन्दः, शर्वरी, तीव्रः, लीला, प्रियः, कुमुदा, कौलिकः, मेनका, डामरः, डाकिनी, रामः, राकिनी, लामः, लाकिनी, कामरः, काकिनी, सामरः, साकिनी, महामरः, हाकिनी, आधारेशः, राका, चक्रीशः, बिन्दुः, कुरुरुः, कुकला, मध्वीशः, कुब्जिका, हृदीशः, कामकला, शिरसः, कुलदीपिका, शिखेशः, बर्बरी, चर्मा, बाहुरूपा, शस्त्रेशः, महत्तरी, परमगुरुः, मंगला, पराधिकगुरुः, सौकर्या, पूज्यगुरुः, समा । अनेन

चतुरधिकपञ्चाशदनिल इति । अथ नाभसाः । विशुद्धे षोडशदले - हृदयः, कौलिनी, कामः, धरित्री, भोगः, विश्वेशी, नयः, योगिनी, महः, ब्रह्मसारा, शिवः, शबरी, भवः, कालिका, सुरसः, जुष्टचाण्डालिनी, मोहः, अघोरेशी, मनोभवः, हेला, सेकः, महारक्ता, ज्ञातः, गुह्यकुब्जिका, ज्वरः, डाकिनी, ज्वलनः, ज्वलिनी, महाकूटः, लाकिनी, श्रियोज्ज्वलः, काकिनी, तेजः, शाकिनी, मूर्धा, हाकिनी, पायुः, पापघ्नी, कुलः, सिंहा, संहारः, कुलांबिका, विश्वंभरः, द्रुमा, कौटिलः, कर्ममाना, गालवः, काली, व्योमः, व्योमा, श्वसनः, नादा, खेचरः, महादेवी, बाहुजः, महत्तरी, ज्ञानः, कुण्डलिनी, विश्वः, कुलेश्वरी, अजः, ईषिका, मनः, दीपिका, ईशानः, अधिका, शंखः, मोचिका, परमः, परा, परः, चिता, एतेन दिवि द्विःषट्त्रिंशदिति । अथ मानसाः—आज्ञाचक्रे, द्विदले, परः, अपरा, भास्वान्, माता, [आनन्दः, आनन्दपरा] चित्, चित्परा, [चिद्देवः, अंबा] महामायः, महामायापरा, इच्छा, इच्छापरा, सृष्टिः, सृष्टिपरा, स्थितिपरा, निरोधः, निरोधपरा, मुक्तिः, मुक्तिपरा, ज्ञानः, ज्ञानपरा, सत्यः, सतीपरा, असत्यः, असतीपरा, सदसत्, सदसतीपरा, क्रियः, क्रियापरा, आत्मा, आत्मापरा, इन्द्रियाश्रयः, इन्द्रियाश्रयपरा, गोचरः, गोचरपरा, लोकमुख्यः, लोकमुख्यापरा, देवतः, देवतापरा, संवित्, संवित्परा, कुण्डली, कुण्डलिनीपरा, सौषुप्तः, सौषुप्तमयापरा, प्राणसूत्रः, प्राणसूत्रपरा, स्पन्दः, स्पन्दपरा, मातृकः, मातृकापरा, स्वरोद्भवः, स्वरोद्भवपरा, शब्दवान्, शब्दवतीपरा, वर्णजः, वर्णजापरा, वर्णज्ञातः, वर्णज्ञातापरा, वर्गजः, वर्गजापरा, संयोगः, संयोगापरा, मन्त्रविग्रहः, मन्त्रविग्रहापरा, एतेन मानसाः । द्विदले आज्ञाचक्रे चतुःकोष्ठकं वामदले चतुःकोष्ठकं दक्षिणे । एतेन मनसि च [1]चतुष्षष्टिरिति व्याख्यातम् ॥ हे परमेश्वरि ! एषां सर्वेषामुपरि शिरसि तव पादांबुजं, अथवा एतेषां उपरि निर्वाणचक्रे तव पादांबुजं, निरतिशयानन्दमयं पूजनीयं जागर्ति वसति । तत्प्रसादादेव सर्वतेजोविशेषाः प्रकाशन्त इति तदनु सर्वोऽपि प्रपञ्च इति । एवमिदं षष्ट्यधिकं शतत्रयं रश्मीनां, पञ्चचक्राधिष्ठायिन्यः, पराद्याः षट्शक्तयः, ता अपि शिवशक्तिविभागेन द्वेधा, इति सर्वं मिलित्वा द्वासप्तत्यधिकानि त्रीणि शतानि रश्मीनां भवन्ति । एतत्सर्वमभिसन्धाय, कुब्जिकातन्त्रे "शिवस्य निष्प्रपञ्चस्य, परशब्दानुकारिणः । चिदुल्लासात्परा जाता पञ्चानां मातृरूपिणी । अन्वयानां मार्गयोगात्सैका षोढा प्रजायते । परा चेच्छा तथा ज्ञाना क्रिया कुण्डलिनीति च । मातृका याऽष्टधा प्रोक्ताः पराभेदास्ततः स्मृताः । कुण्डलीमातृकाभ्यां वा षोढा भिन्नमयूखकम् । नानाविधं सुविततं मन्त्रमेतत् षडन्वयम् । उत्पन्नं शांभवं पश्चाज्जायते तच्चराचरम् ॥" तथा "आदौ परा चतुर्धा स्याद् द्वितीयेच्छा च पञ्चधा । तृतीया चतुर्विधा ज्ञाना चतुर्थी सप्तधा क्रिया । पञ्चमी कुण्डली द्विर्द्विः, षष्ठी स्यान्मातृकाऽष्टधा । परातो

---

१. अष्टषष्टिः गण्यन्तेऽत्र । व्याख्यानान्तरोपलब्धेभ्योऽधिकाश्चत्वारः कुण्डलिताः ।

जायते चेच्छा सा च व्योमपतिः स्मृता । षट्त्रिंशन्नाडिकायुक्ता कण्ठस्थानं समाश्रिता । इच्छातो जायते ज्ञाना सा च वायोरधीश्वरी । सप्तविंशतितत्वानां पतिः साऽनाहताश्रया । ज्ञानातोऽभूत्क्रिया शक्तिः सा च वह्नीश्वरी मता । एकत्रिंशद्रश्मिपतिः स्वाधिष्ठानं समाश्रिता । क्रियातः कुण्डली व्यक्ता सा स्यात्सलिलनायिका । षड्विंशद्रश्मयो मातुः मणिपूरं समाश्रिता । कुण्डल्या मातृका जाता सा क्षितेरीश्वरी मता । अष्टाविंशतिरश्मीनां अधिपा सा रसाश्रया । शिवशक्तिविभागेन द्विविधा शांभवाज्ञया । षष्ट्युत्तरं त्रिशतकमेवं शांभवरश्मयः । परादिशक्तिभिः षड्भिर्नायकैः सहितः पुनः । द्वासप्तत्यधिकत्रीणि शतान्याहुर्मनीषिणः । एषां स्मरणमात्रेण जीवन्मुक्तो महीं चरेत् । एतेषां स्मरणाशक्तः षट्पञ्चैकमपि स्मरेत् । एतेषां स्मरणाल्लोकः पापहा पूजनात्पुनः । लक्ष्मीवान्ध्यानतो जीवन्मुक्तो रश्मिकुले वसेत् '' इति । क्षितौ षट्पञ्चाशदित्यादिश्लोकस्य रहस्यार्थः-अत्र षटचक्रेश्वरीरूपं षडन्वयाधिदैवतं, तत्समीपे तत्स्वरूपं, अनयारेभेदं सूचयन् षडन्वयदेवता त्वमेवेत्याहार्यरहितस्वभावाऽसीत्याह क्षिताविति । तदेतेषां हृदयमयचिन्मयतेजोरूपा मयूखा अंप्रचाद्यात्मानः, एषामुपरि अप्राप्यदूरस्थले शुक्लरजतसंज्ञं, तथा च कुलोदयतन्त्रे "षट्चक्रे श्रीमहेशानि चक्रमध्ये निवासिनि । षडन्वयाधिदेवतारूपिणी त्वमसि प्रिये । वेधिका त्रिपुरा सिद्धा शक्तौ च त्रिपुरांबिका । व्यापिका या त्वं देवि भ्रुवं हंसौ ण सुन्दरः । मद्धृदये त्वमारक्ता चिदानन्दाद्यतात्मिका । निष्कलब्रह्मरूपा त्वं कदाचित्सकलात्मिका"। इति । क्षितितत्त्वमूलाधारविद्यायाः परितः षट्पञ्चाशत्कलारूपा ध्येया । शुभ्रामुदकतत्वलिंगविद्यां परितो द्विपञ्चाशत्कला ध्येया । रक्तां वह्नितत्वनाभिविद्यां परितः द्विषष्टिकला ध्येया । धूम्रां वायुतत्वहृदयविद्यां परितः चतुःपञ्चाशत्कला ध्येया । शुभ्रां तत्राकाशतत्वकण्ठविद्यां परितः द्वासप्ततिकला ध्येया । अवर्णां मनस्तत्वभ्रूविद्यां परितः चतुःषष्टिकला ध्येया ।

## तात्पर्यदीपिनी

ननु अन्तर्यागबहिर्यागाभ्यामेव भगवत्याराधनसिद्धिः, ; बाह्यावरणदेव्योऽप्यन्तर्यागेन पूज्याः, पश्चात् गन्धपुष्पादिभिः चरणकोणेष्वर्चनीयाः । अतस्तासां अन्तर्यागप्रकारं षट्चक्रावरणदेवता उद्दिश्याह-**क्षिताविति** हे परमेश्वरि ! तव पादाम्बुजयुगं तेषां मयूखानामुपरि वर्तते । तेषां केषाम् ? ये मयूखाः, क्षितौ लंबीजाढ्यपृथिवीतत्वयुक्ते मूलाधारचतुरस्रे षट्पञ्चाशत् षड्भिरधिकाः पञ्चाशद्वर्तन्ते । अत्र मयूखशब्दो देवतावाचकः । तेन लंबीजयुक्ते पार्थिवपीठे षट्पञ्चाशद्दलमण्डनमण्डितं सरोजं चिन्तनीयम् । तत्र षट्पञ्चाशद्देवताः पूजनीयाः । देवतानामधेयानि पद्धतिभ्योऽवगन्तव्यानि । पुनः, उदके अर्धचन्द्राकारवंबीजयुक्तजलतत्वयुक्ते षड्दले मणिपूरचक्रे द्विसमधिकपञ्चाशत्, द्वाभ्यां समधिका पञ्चाशत् । पुनः, हुताशे द्वाषष्टिः रंबीजाढ्यवह्नितत्वयुक्ते स्वाधिष्ठानचक्रे दशदले द्वाषष्टिः द्वाभ्यामधिका षष्टिः । पुनरनिले यंबीजाढ्यवायुतत्वयुक्ते अनाहतचक्रे द्वादशदले चतुरधिकपञ्चाशत्,

चतुर्भिरधिका पञ्चाशत्। पुनः दिवि हंबीजाढ्याकाशतत्वयुक्ते विशुद्धिचक्रे षोडशदले द्विःषट्त्रिंशत्-द्वाभ्यां गुणिता षट्त्रिंशत्, द्वासप्ततिरित्यर्थः। च परे, मनसि मनस्तत्वयुक्ते आज्ञाचक्रे द्विदले चतुः-षष्टिः, चतुरधिका षष्टिः। इत्येवं प्रकारेण ये प्रसिद्धाः। अत्रेदमनुसन्धेयं-आधारमणिपूरस्वाधिष्ठाना-नाहत-विशुद्ध्याज्ञाचक्रात्मकश्रीचक्रं त्रिखण्डं सोमसूर्यानलात्मकम्। मूलाधारस्वाधिष्ठानचक्रद्वयमेकं खण्डम्। मणिपूरानाहतद्वयमेकं खण्डम्। विशुद्ध्याज्ञाचक्रद्वयमेकम्। अत्र प्रथमखण्डोपरि स्थितो वह्निः ज्वालाभिः प्रथमखण्डमावृणोति। तदेव रुद्रग्रन्थिरित्युच्यते। द्वितीयखण्डोपरि स्थितः स्वकिरणैः तमावृणोति। यथोक्तं भैरवयामले "अष्टोत्तरशतं वह्नेः षोडशोत्तरकं रवेः। षट्त्रिंशदुत्तरशतं चन्द्रस्येति विनिर्णयः"। एवं सोमसूर्यानला अपि पिण्डाण्डब्रह्माण्डे आवृत्य वर्तन्ते॥

## पदार्थचन्द्रिका

अतः परं श्रीभवान्याः कालासंस्पृष्टं मान्त्रिकं न्यासं चाह तन्त्रेण—**क्षिताविति।** हे तुहिनगिरिकन्ये ते मयूखाः मयूखा इव पापतिमिरनाशकत्वात्, न्यासाः। तेषामप्युपरि न्यासानन्तरं तव पादाम्बुजयुगं पूजायोग्यं भवतीत्यर्थः। अपि संभावनायाम्। न्यासानेवाह-क्षिताविति-अत्र क्षित्यादिशब्देन तत्तच्चक्रमुच्यते। तथा च सत्ययमर्थः। क्षितौ मूलाधारे अकारादिपञ्चाशद्वर्ण-सहितानि ऐं ह्रीं श्रीं ऐं क्लीं सौः इति बीजानि न्यस्यानि। तथा उदके मणिपूरके अकारादिपञ्चा-शद्वर्णसहिते ऐं ऐं वाग्भवबीजे न्यसेत्। तथा हुताशे स्वाधिष्ठाने अकारादिपञ्चाशद्वर्णसहितानि ऐं ह्रीं श्रीं ऐं क्लीं सौं सं हं लं क्षं सं हं इति बीजानि न्यस्यानि। तथा अनिले अनाहतचक्रे अकारादि-पञ्चाशद्वर्णसहितानि ऐं ह्रीं सं हं इति बीजानि न्यस्यानि। तथा दिवि द्विःषडिति, विशुद्धि चक्रे अकारादिपञ्चाशद्वर्णसहितानि ऐं ह्रीं बीजसहितानि अकारादिषोडशस्वरसहितानि च ऐं ह्रीं सं हं इति बीजानि न्यस्यानि। तथा मनसि आज्ञाचक्रे अकारादिपञ्चाशद्वर्णसहितानि ऐं ह्रीं श्रीं ऐं क्लीं सौं सं हं इति बीजानि न्यस्यानि। कालपक्षेऽप्येवं योज्यम्। इति ये षष्ट्यधिकशतत्रयसंख्याका मयूखाः मयूखसदृशजगदायुःशोषकत्वात्, दिवसास्ते स्थूलशरीरलिंगशरीर एव प्रभवन्ति, न तु त्वत्पादांबुजयुगे। त्वत्पादांबुजयुगं तु तेषामप्युपरि विराजत इत्यर्थः। षष्ट्यधिकशतत्रयसंख्यामेवाह-षट्पञ्चाशदित्येवमादि स्थूलशरीरमाह क्षितावित्यादिना दिवीतिपर्यन्तेन। लिङ्गशरीरमाह-मनसीति। मनः शब्द उपलक्षक इत्येषां पञ्चदशानां करणे कार्ये तत्वत इति क्षित्यादिशब्देन स्थूलं शरीरं लक्ष्यते। केचित्तु भवानीचरणपूजाभूतक्षित्यादिषट्चक्रेषु स्थिता यास्ता देवताः तास्तावदस्मिन् शब्देन कथ्यन्त इत्याहुः इति। स च प्रकार आगमाद्बोद्धव्यः। विस्तरभयान्नापरं संख्यायत इति॥

## डिण्डिमभाष्यम्

नन्वन्तर्यागबहिर्यागाभ्यामेव भगवत्याः साधनसिद्धिः। बाह्यावरणदेवता अपि अन्तर्यागे न प्रथमं पूज्याः पश्चाद्गन्धपुष्पधूपदीपनैवेद्यादिभिश्चरणकोणेष्वर्चनीयाः। अतस्तासामन्तर्यागप्रकारप्रकाशनं

कथं नावलम्ब्यते इत्याशङ्कयाह—**क्षिताविति**—'महीं मूलाधारे' इति श्लोकोक्तरीत्या मूलाधारादिषु क्षित्यादिचक्राणि कल्पनीयानि-क्षितिचक्रे मूलाक्षितौधारवर्तिनि चतुरस्रे लं–बीजयुक्तपार्थिवपीठे षट्पञ्चाशद् दलमण्डलमण्डितं सरोरुहं चिन्तनीयम्। तेषु षट्पञ्चाशच्चक्रदेवताः पूजनीयाः। तत्र देवतानां नामधेयानि मिथुनमालामध्यगतानि द्रष्टव्यानि। नामानि कथ्यन्ते–आद्या त्रिपुरसुन्दरी [1]त्रिपुरसुन्दरः, हृदयदेवी हृदयदेवः, शिरोदेवी शिरोदेवः, शिखादेवी शिखादेवः, नेत्रदेवी नेत्रदेवः, कवचदेवी कवचदेवः, अस्त्रदेवी अस्त्रदेवः, कामेश्वरी कामेश्वरः, भगमालिनी भगमाली, नित्यक्लिन्ना नित्यक्लिन्नः, भेरुण्डा भेरुण्डः, वह्निवासिनी वह्निवासी, महावज्रेश्वरी महावज्रेश्वरः, शिवदूती शिवदूतः, त्वरिता त्वरितः, कुलसुन्दरी कुलसुन्दरः, नित्या नित्यः, नीलपताका नीलपताकः, विजया विजयः, ज्वालामालिनी ज्वालामाली, सर्वमङ्गला सर्वमङ्गलः, चित्रा चित्रः, महानित्या महानित्यः, परमेश्वरी परमेश्वरः, मित्रेशमयी मित्रेशमयः, षष्ठीशमयी षष्ठीशमयः, ओड्डीशमयी ओड्डीशमयः, चर्यानाथमयी, चर्यानाथमयः इति षट्त्रिंशदुद्दाममणिभूषणमण्डिताः मूलचक्रगता देव्यस्ततश्चतुर्गुणा इति क्षितौ षट्पञ्चाशद्देवताः ख्याताः। द्विसमधिकपञ्चाशदुदके कर्तव्याः—तद्यथा उदके मणिपूरकस्थाने अर्धचन्द्राकारे वं-बीजयुक्ते जलचक्रे द्विसमधिकपञ्चाशद्देवताः पूज्याः। द्विपञ्चाशद्दलमण्डलमण्डितसरोरुहं चिन्तयित्वा तत्र दलेषु देवताः पूज्याः। तासां नामानि-लोपामुद्रामयी लोपामुद्रामयः, अगस्त्यमयी अगस्त्यमयः, कालतापनमयी कालतापनमयः, धर्माचार्यमयी धर्माचार्यमयः, मुक्तकेशीश्वरमयी मुक्तकेशीश्वरमयः, दीपकलानाथमयी दीपकलानाथमयः, विष्णुदेवमयी विष्णुदेवमयः, प्रभाकरदेवमयी प्रभाकरदेवमयः, तेजोदेवमयी तेजोदेवमयः, मनोजदेवमयी मनोजदेवमयः, विष्णुदेवमयी विष्णुदेवमयः, कल्याणदेवमयी कल्याणदेवमयः, रत्नदेवमयी रत्नदेवमयः, रामानन्दमयी रामानन्दमयः, अणिमासिद्धिः अणिमासिद्धः, लघिमासिद्धिः लघिमासिद्धः, ईशत्वसिद्धिः ईशत्वसिद्धः, महिमासिद्धिः महिमासिद्धः, वशित्वसिद्धिः वशित्वसिद्धः, प्राकाम्यसिद्धिः प्राकाम्यसिद्धः, भुक्तिसिद्धिः भुक्तिसिद्धः, इच्छासिद्धिः इच्छासिद्धः, प्राप्तिसिद्धिः प्राप्तिसिद्धः, सर्वकामसिद्धिः सर्वकामसिद्धः, ब्राह्मी ब्राह्मः, माहेश्वरी माहेश्वरः, इति द्विपञ्चाशद्देवताचरणपरिचर्यां जलचक्रे समाप्य तदनंतरम्—नाभिमंडले कल्पान्तदीप्तकालानलकोटिसदृशं रं-बीजगर्भं त्रिकोणाकारं वह्निचक्रं चिन्तयित्वा हुताशे द्वाषष्टिरिति तत्र द्वाषष्टिदलमण्डितकमलं चिन्तयेत्। तत्र देवतानामानि—कौमारी कौमारः, वैष्णवी वैष्णवः, वाराही वाराहः, माहेन्द्री माहेन्द्रः, चामुण्डा चामुण्डः, महालक्ष्मी महालक्ष्मः, सर्वसङ्क्षोभिणी सर्वसङ्क्षोभणः, सर्वविद्राविणी सर्वविद्रावणः, सर्वाकर्षिणी सर्वाकर्षणः सर्ववशीकरणी सर्ववशीकरणः, सर्वोन्मादिनी सर्वोन्मादनः, सर्वमहांकुशा सर्वमहांकुशः, सर्वखेचरी सर्वखेचरः, सर्वाजा सर्वबीजः, सर्वयोनिः सर्वयोनिः, सर्वत्रिखण्डा सर्वत्रिखण्डः,

---

१ आद्यत्रिपुरसुन्दर इति पाठः स्यात्।

त्रैलोक्यमोहनचक्रस्वामिनी त्रैलोक्यमोहनचक्रस्वामी, प्रकटयोगिनी प्रकटयोगी, कामाकर्षिणी कामाकर्षी, (कर्षणः). बुद्ध्याकर्षिणी बुद्ध्याकर्षणः, अहङ्काराकर्षिणी अहङ्काराकर्षी, (कर्षणः), शब्दाकर्षिणी शब्दाकर्षी, (कर्षणः), स्पर्शाकर्षिणी स्पर्शाकर्षी, (कर्षणः), रूपाकर्षिणी रूपाकर्षी, (कर्षणः), रसाकर्षिणी रसाकर्षी, (कर्षणः). गन्धाकर्षिणी गन्धाकर्षी, (कर्षणः). चित्ताकर्षिणी चित्ताकर्षी, (कर्षणः) धैर्याकर्षिणी धैर्याकर्षी (कर्षणः). स्मृत्याकर्षिणी स्मृत्याकर्षी, (कर्षणः) नामाकर्षिणी नामाकर्षी, (कर्षणः) बीजाकर्षिणी बीजाकर्षी, (कर्षणः) इत्येता द्वाषष्टिदेवता वह्निचक्रे आराध्य वायुचक्रपूजां कुर्यात्। तदेतत्प्रतिपादयति—चतुरधिकपञ्चाशद्दलमण्डलं अनाहतस्थाने पवनं कमलं धूम्रवर्णं यं-बीजयुक्तं चिन्तयित्वा चतुःपञ्चाशद्देवतास्तत्र पूजयेत्। तासां नामानि-आत्माकर्षिणी आत्माकर्षणः, अमृताकर्षिणी अमृताकर्षणः, शरीराकर्षिणी शरीराकर्षणः, सर्वाशापरिपूरकचक्रस्वामिनी सर्वाशापरिपूरकचक्रस्वामी, गुप्तयोगिनी गुप्तयोगी, अनङ्गकुसुमा अनङ्गकुसुमः, अनङ्गमेखला अनङ्गमेखलः, अनङ्गमदना अनङ्गमदनः, अनङ्गमदनातुरा अनङ्गमदनातुरः, अनङ्गरेखा अनङ्गरेखः, अनङ्गवेगिनी, अनङ्गवेगी, (वेगः). अनङ्गाङ्कुशा अनङ्गाङ्कुशः, अनंगमालिनी अनङ्गमाली, सर्वसङ्क्षोभणचक्रस्वामिनी, सर्वसङ्क्षोभणचक्रस्वामी, गुप्ततरयोगिनी गुप्ततरयोगी, सर्वसङ्क्षोभिणी सर्वसङ्क्षोभणः, सर्वविद्राविणी सर्वविद्रावणः, सर्वाकर्षिणी सर्वाकर्षणः, सर्वाह्लादिनी सर्वाह्लादी, (ह्लादनः) सर्वसम्मोहिनी, सर्वसम्मोहनः, सर्वस्तम्भिनी सर्वस्तम्भी, (स्तम्भनः), सर्वजृम्भिणी सर्वजृम्भी, (जृम्भणः) सर्ववशङ्करी सर्ववशङ्करः, सर्वरञ्जिनी सर्वरञ्जी, (रञ्जनः). सर्वोन्मादिनी सर्वोन्मादी (मादनः), सर्वार्थसाधिका, सर्वार्थसाधकः, सर्वसम्पत्तिपूरणी सर्वसम्पत्तिपूरी, (रणः) इति चतुःपञ्चाशद्देवता वायुचक्रे। अथ दिवि आकाशचक्रे विशुद्धिस्थाने वृत्ताकारं हं-बीजमण्डितं द्वासप्ततिदलमण्डितं आकाशमण्डलं चिन्तयित्वा द्वासप्ततिदेवताः पूजयेत्। तासां नामानि यथा—सर्वमन्त्रमयी सर्वमन्त्रमयः, सर्वद्वन्द्वक्षयङ्करी सर्वद्वन्द्वक्षयङ्करः, सर्वसौभाग्यदायकचक्रस्वामिनी सर्वसौभाग्यदायकचक्रस्वामी, सम्प्रदाययोगिनी सम्प्रदाययोगी, सर्वसिद्धिप्रदा, सर्वसिद्धिप्रदः, सर्वसम्पत्प्रदा, सर्वसम्पत्प्रदः, सर्वप्रियङ्करी, सर्वप्रियङ्करः, सर्वमङ्गलकारिणी, सर्वमङ्गलकारी, सर्वकामप्रदा, सर्वकामप्रदः, सर्वदुःखविमोचनी सर्वदुःखविमोचनः, सर्वमृत्युप्रशमनी सर्वमृत्युप्रशमनः, सर्वविघ्ननिवारणी सर्वविघ्ननिवारणः, सर्वाङ्गसुन्दरी, सर्वाङ्गसुन्दरः, सर्वसौभाग्यदायिनी सर्वसौभाग्यदायी, सर्वार्थसाधकचक्रस्वामिनी सर्वार्थसाधकचक्रस्वामी, कुलोत्तीर्णयोगिनी कुलोत्तीर्णयोगी, सर्वज्ञा सर्वज्ञः, सर्वशक्तिः सर्वशक्तिः, सर्वैश्वर्यप्रदायिनी सर्वैश्वर्यप्रदायी, सर्वज्ञानमयी सर्वज्ञानमयः, सर्वव्याधिविनाशिनी सर्वव्याधिविनाशी, (विनाशनः). सर्वाधारस्वरूपा सर्वाधारस्वरूपः, सर्वपापहरा सर्वपापहरः, सर्वानन्दमयी सर्वानन्दमयः, सर्वरक्षास्वरूपिणी सर्वरक्षास्वरूपी, (स्वरूपः). सर्वेप्सितफलप्रदा सर्वेप्सितफलप्रदः, सर्वरक्षाकरचक्रस्वामिनी सर्वरक्षाकरचक्रस्वामी, निगर्भयोगिनी निगर्भयोगी, वशिनी वशी, कामेश्वरी कामेश्वरः, मोदिनी मोदी, (मोदनः) विमला

विमलः, अरुणा अरुणः, जयिनी जयी, सर्वेश्वरी सर्वेश्वरः, कौलिनी कौली इति द्वासप्ततिदेवता आकाशकमले पूज्याः। अनन्तरं भ्रूमध्ये मनश्चक्रं चिन्तयित्वा तत्र चतुःषष्टिदलमण्डलमण्डितं हं-संयुक्तं भं-बीजं मनःकमले चिन्तयित्वा तत्र चतुःषष्टिदेवता अर्चयेत्। तासां नामानि यथा—सर्वरोगहरचक्रस्वामिनी सर्वरोगहरचक्रस्वामी, रहस्ययोगिनी रहस्ययोगी, बाणिनी बाणी, चापिनी चापी, पाशिनी पाशी, अङ्कुशिनी अङ्कुशी, महाकामेश्वरी महाकामेश्वरः, महावज्रेश्वरी महावज्रेश्वरः, महाभगमालिनी महाभगमाली, महाश्रीसुन्दरी महाश्रीसुन्दरः, सर्वसिद्धिप्रदचक्रस्वामिनी, सर्वसिद्धिप्रदचक्रस्वामी, अतिरहस्ययोगिनी अतिरहस्ययोगी, श्रीश्रीमहाभट्टारिका श्रीश्रीमहाभट्टारकः, सर्वानन्दमयचक्रस्वामिनी सर्वानन्दमयचक्रस्वामी, परापररहस्ययोगिनी परापररहस्ययोगी, त्रिपुरा त्रिपुरः, त्रिपुरेश्वरी त्रिपुरेश्वरः, त्रिपुरसुन्दरी त्रिपुरसुन्दरः, त्रिपुरवासिनी त्रिपुरवासी, त्रिपुरश्रीः त्रिपुरश्रीमान्, त्रिपुरमालिनी त्रिपुरमाली, त्रिपुरसिद्धा त्रिपुरसिद्धः, त्रिपुराम्बा त्रिपुराम्बः, महात्रिपुरसुन्दरी महात्रिपुरसुन्दरः, महामहेश्वरी महामहेश्वरः, महामहाराज्ञी महामहाराजः, (राज्ञः) महामहाशक्तिः महामहाशक्तिः, (शक्तः) महामहागुप्ता महामहागुप्तः, महामहाज्ञप्ता महामहाज्ञप्तः, महामहानन्दा महामहानन्दः, महामहास्कन्दा महामहास्कन्दः, महामहाशया महामहाशयः, इति चतुःषष्टिदेवताश्चतुःषष्टिदलेषु अभ्यर्च्याः। इत्येवंप्रकारेण मयूखाः। पूर्वोक्तसङ्ख्याक्रममेलनेन षष्ट्युत्तरत्रिशतदलदेवता मयूखा इत्युच्यन्ते। मयूखत्वं चैतासां देवतानां भक्तजनहृदयपीडाकराज्ञानतिमिरनिरसनवपुष्ट्वाद्युक्तम्। य एते मयूखास्त्वदुदितास्त्वन्मयास्त्वामाश्रिता वर्तन्ते तेषामुपरि द्वादशान्तस्थाने तव पादाम्बुजयुगं देदीप्यते। तव पादाम्बुजयुगं रक्तशुक्लात्मकम्। तयोर्मन्त्रः—"महाश्रीचक्रनगरसाम्राज्ञीश्रीपादुकां पूजयामि" इत्येको मन्त्रः "महाश्रीचक्रनगरसम्राट् श्रीपादुकांपूजयामि" इत्येकोमन्त्रः। "एवं रश्मिक्रमं कुर्वन् साधको विजितेन्द्रियः। धनधान्यायुरारोग्यपाण्डित्यादिपदं व्रजेत्" एवं बाह्यचक्रदेवीनामन्तर्यागो निवेदितः ॥ १४ ॥

## गोपालसुन्दरी

अथ रश्मिक्रमं सूचयति-**क्षिताविति**। क्षितौ मूलाधारे षट्पञ्चाशद्दले पार्थिवतत्त्वरूपा अष्टाविंशतिरश्मयः। पार्थिवतत्त्वानि च पञ्चतन्मात्राणि, पञ्चभूतानि, पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, अन्तःकरणचतुष्टयं, कालः, प्रकृतिपुरुषमहत्तत्त्वानि, अष्टाविंशतिः। शिवशक्तिभेदेन द्विविधानि। तेन षट्पञ्चाशत्। एषां नामान्यग्रे वक्ष्यन्ते। उदके मणिपूरे द्विपञ्चाशद्दले आप्यतत्त्वानि षड्विंशतिः-पञ्चभूतानि, पञ्चकर्मेन्द्रियाणि, पञ्चज्ञानेन्द्रियाणि, तेषामर्था दश, मन इति शैवशाक्तभेदेन द्विपञ्चाशत्। हुताशने स्वाधिष्ठाने द्विषष्टिदले तैजसतत्त्वानि एकत्रिंशत्—पञ्चभूतानि, तन्मात्राणि, पञ्चज्ञानेन्द्रियाणि, पञ्चकर्मेन्द्रियाणि, तेषामर्था दश, मन इत्येकत्रिंशत्। शिवशक्त्योर्विभागेन द्वाषष्टिः। अनिले अनाहते चतुःपञ्चाशद्दले वायुतत्त्वानि सप्तविंशतिः- महत्तत्त्वन्यूनपार्थिवतत्त्वानि।

शिवशक्तिभेदेन चतुःपञ्चाशत् । दिवि विशुद्धिचक्रे द्विसप्ततिदले व्योमतत्त्वानि षट्त्रिंशत् । शिवशक्तिसदाशिवेश्वरशुद्धविद्यातत्त्वमायाकलाविद्यारागकालनियतिपुरुषप्रकृत्यहङ्कारबुद्धिमनःप्रज्ञानेन्द्रिय - कर्मेन्द्रियशब्दस्पर्शरूपरसगन्धपञ्चभूतानि इति शिवशक्तिविभागेन द्विसप्ततिः । मनसि आज्ञाचक्रे चतुः-षष्टिदले मानसतत्त्वानि द्वात्रिंशत्।- तथा-हि—परा चतुर्विधा-परा, पश्यन्ती, मध्यमा, वैखरीति। इच्छा पञ्चधा - कर्तुं कारयितुमुपकर्तुं प्रतिकर्तुमुदासितुमिति । ज्ञानं चतुर्विधम्–निरालम्बनं, सालम्बनञ्चेति, सालम्बनं त्रिविधम्—ज्ञातृज्ञेयज्ञप्तिरूपेण, विभिन्नरूपेण निरालम्बनं त्वम्-अहं-त्वदीयं मदीयं इति चतु-र्विधमपि एकत्वेन परिगणितम् । क्रिया सप्तधा-इष्टं पूर्तं स्वाध्यायः जपः पूजा तपः दानमिति । कुण्डलिनी भूमिकाभेदेन चतुर्विधा-उन्नयः लयः प्रत्यावृत्तिः विश्रान्तिरिति । मातृका अष्टधा-वर्गाष्टकभेदात् । एवं द्वात्रिंशत् । शिवशक्तिविभागेन चतुःषष्टिः । एवं पार्थिवादितत्त्वरूपाः षष्ट्युत्तरत्रिशतं मरीचयः शाम्भवाः । तदुक्तं कुब्जिकातन्त्रे—"आदौ परा चतुर्धा स्यात् द्वितीयेच्छात्र पञ्चधा । तृतीये वेदधा ज्ञाना चतुर्थी सप्तधा क्रिया ॥ पञ्चमी कुण्डली द्विर्द्विःषष्ठी स्यान्मातृकाऽष्टधा । परातो जायतेच्छा हि सा च व्योमपतिः स्मृता ॥ षट्त्रिंशन्नायिकाः प्रोक्ताः कण्ठस्थानसमाश्रिताः । इच्छातो जायते ज्ञाना सा च वायोरधीश्वरी ॥ सप्तविंशतिरश्मीनां पतिः साऽनाहताश्रया । ज्ञानातोऽभूत्क्रिया व्यक्ता सा च वह्नीश्वरी मता ॥ एकत्रिंशद्रश्मिपतिः स्वाधिष्ठानसमाश्रिता । क्रियातः कुण्डली व्यक्ता सा स्यात् सलिलनायिका ॥ सप्तविंशतिरश्मीनां मणिपूरं समाश्रिताः । कुण्डल्या मातृका जाता सा क्षितेरीश्वरी मता ॥ अष्टाविंशतिरश्मीनामधिपाधारमाश्रिता । शिवशक्तिविभागेन द्विविधा शाम्भवा-ज्ञया ॥ षष्ट्युत्तरं च त्रिशतमेवं शम्भुमरीचयः । परादिशक्तिभिः षड्भिर्नायकैः सहितः परः ॥ द्विसप्तत्यधिकत्रीणि शतान्याहुर्मनीषिणः । एषां स्मरणमात्रेण जीवन्मुक्तो महीं चरेत् ॥ सर्वेषां स्मरणाशक्तः षट्सु चैकमपि स्मरेत् । एतेषां स्मृतितो लोकः पापहा पूजनात् पुनः ॥ लक्ष्मीवान् ध्यानतो जीवन्मुक्तो रश्मिकुले वसेत् ॥" इति । तथा तत्रैव-"शिवस्य निष्प्रपञ्चस्य परमार्थ-शरीरिणः । चिदुल्लासात् परा जाता पञ्चानां मातृरूपिणी ॥ न्वयानां मार्गयोगात् सैका षोढा प्रजायते । परा चेच्छातथा ज्ञाना क्रिया कुण्डलिनीति च ॥ मातृका चाष्टधा प्रोक्ता पराभेदास्ततः स्मृताः । कुण्डली-मातृकाभ्याञ्च षोढा भिन्नमयूखकम् । नानाविधं शुचिततं तन्त्रमेतत्षडन्वयं । उत्पन्नं शाम्भवं पश्चाज्जग-देतच्चराचरम् ॥" अथ पार्थिवादिचक्रे रश्मीनां नामानि—उड्डीश्वरः उड्डीश्वरी, जालेश्वरः जालेश्वरी, पूर्णेश्वरः पूर्णेश्वरी, कामेश्वरः कामेश्वरी, श्रीकण्ठः, गगना, अनन्तः स्वरसा, शङ्करः, क्षितिः, पिङ्गलः, पातालदेवी, नादाख्यः, नादा, आनन्दः, डाकिनी, आलस्यः, पाकिनी, महानन्दः, लाकिनी, योग्यः, काकिनी, अतीतः शाकिनी, पादः, हाकिनी, आधारेशः, रक्ता, चक्रीशः, चण्डा, कुरङ्गीशः, कराला, मदध्रीशः, महोच्छुष्मा, अनादिविमलः, मातङ्गी, सर्वज्ञविमलः, पुलिन्दा, योगविमलः, शबरी, सिद्धविमलः, वाचापरा, समयविमलः, कुलालिका, मित्रेशः कुब्जा, उड्डीशः, लज्जा, सलयः, कुलेश्वरी,

चर्याधीशः, कुलजा (५६) एते पार्थिवरश्मयः। मूलाधारे षट्पञ्चाशद्दलं कमलं विचिन्त्य तत्कर्णिकाया-मग्रे वक्ष्यमाणौ शिवौ सम्पूज्य दलेषु रश्मयः पूज्याः। शिवे "आनन्दनाथश्रीपादुकां पूजयामि" इति योज्यम्। शक्तौ "अम्बादेवीश्रीपादुकां पूजयामि" इति योज्यम्। एवं सर्वत्र चक्रेषु। अथवा सर्वसिद्धिषट्कोणं विचिन्त्य पश्चिमादितो -रश्मीन् पूजयेत्। तदुक्तं पद्मवाहिन्याम्–"षट्कोणं शिरसि ध्यात्वा पश्चिमादिषु तु क्रमात्। कोणेषु पूजयेत् यत्नादष्टाविंशतिकं क्रमात्॥ चतुष्कं पञ्चकं षट्कं चतुष्कं पञ्चकं पुनः। चतुष्कमिति सम्भिन्ना क्रमात्पार्थिवरश्मयः॥" इति भूमावपि विलिख्य पूजयन्ति। अथाप्यरश्मयो मणिपूरे शाम्भवक्रमे स्वाधिष्ठानमणिपूरयोर्व्यत्ययः, ते च सद्योजातः, माया, महादेवः, श्रीः, अघोरः, पद्मा, तत्पुरुषः, अम्बिका, अनन्तः, निर्वृतिः, अनाथः, प्रतिष्ठा, जनाश्रितः, विद्या, अचिन्त्यः, शान्ता, शशिशेखरः, उमा, तीव्रः, गङ्गा, मणिवाहः, सरस्वती, अम्बुवाहः, कमला, तेजोधीशः, पार्वती, विद्यावागीशः, चिन्ता, चतुर्विधेश्वरः, सुकमला, उमा, गङ्गेश्वरः, मन्मथा, कृष्णेश्वरः, श्रिया, श्रीकण्ठः, लया, अनन्तः, सतीशेखरः, मेखला, पिङ्गलः, यशोवती, साध्याख्यः, हंसानन्दा, परदिव्यौघः, वामा, मारदिव्यौघः, ज्येष्ठा, रौद्रः, रौद्री, सर्वेश्वरः, सर्वमयी (५२) एते आप्या रश्मयः मणिपूरे षड्दले चतुष्कादिक्रमेण पूज्याः। तदुक्तं पद्मवाहिन्याम्। "चतुष्कं च चतुष्कं च षट्कं भूयश्चतुष्ककम्। पञ्चकं त्रिकमित्येव भिन्ना जलमरीचयः।" इति। तन्त्रान्तरे द्विपञ्चाशद्दलं विचिन्त्य तत्र पूजनमुक्तम्। एवमग्रेऽपि। अथ तैजसरश्मयः-परापरः, चण्डेश्वरी, परमः, चतुष्मती, तत्परः गुह्यकाली, अपरः संवर्ता, चिदानन्दः, नीलकुब्जा, अघोरः, गन्धा, सामारसः, रसा, ललितः, स्मया, स्वस्थः, स्पर्शा, भूतेश्वरः, शब्दा, आनन्दः, डाकिनी, आलस्यः, रत्नडाकिनी, प्रभानन्दः, चक्रडाकिनी, योगानन्दः, पद्मडाकिनी, अतीतः, कुब्जडाकिनी, खादः, प्रचण्डडाकिनी, योगेश्वरः, चण्डा, पीठेश्वरः, कोशला, कुलकौलेश्वरः, पावनी, कुक्षेश्वरः, समया, श्रीकण्ठः, कामा, अनन्तः, रेवती, शङ्करः, ज्वाला, पिङ्गलः, कराला, सादाख्यः, कुब्जिका, करालरात्रिगुरुः, परा, सिद्धगुरुः, शान्त्यतीता, रत्नगुरुः, शान्ता, शिवगुरुः, विद्या, मेलगुरुः, प्रतिष्ठा, समगुरुः, निवृत्तिः, एते स्वाधिष्ठाने दशदले पश्चिमादि नवदलेषु षट् षट् क्रमेण दशमदलेऽष्टकं पूजयेत्। पद्मवाहिन्यान्तु–"पञ्चकं पञ्चकं षट्कं चतुष्कं पञ्चकं पुनः। षट्कमित्थं क्रमाद्भिन्नास्तैजसाः क्रमरश्मयः"॥ इति षट्कोणे प्रयोजन-मुक्तम्॥ ६२॥ अथ वायव्या रश्मयः- खगेश्वरः, भद्रा, कूर्मः, आधारा, मेषः, शोकाद् दमीनः, मल्लिका, ज्ञानः विमला, महानन्दः, शर्वरी, तीव्रः, लीला, प्रियः, कुमुदा, कालिकः, मेनका, डामरः, डाकिनी, रामः, राकिनी लामः लाकिनी कामरः, काकिनी सामयः, साकिनी हामरः, हाकिनी आधारेशः, राका, चक्रीशः, बिन्दुः, कुरूरः, कुला, समयश्रीशः, कुब्जिका, हृदीशः, कामकला, शिरसः, कुलबाधिका, शिखेशः, वर्वरा, वर्मी, बहुरूपा, अशरलेशः, महत्तरी, परमगुरुः, मङ्गलाः, परादिगुरुः, कोसरा, पूज्यगुरुः, रामाः ५४। एतेऽनाहते द्वादशदले पश्चिमादि पूज्याः। तृतीये षष्ठनवदलेषु षट् षट् अन्येषु

चतुष्कं चतुष्कम्। अथवा प्रथमान्त्ययोः षट्कमष्टकम् अन्येषु चतुष्कं चतुष्कम्। पद्यवाहिन्यान्तु—"चतुष्कं पञ्चकं षट्कं चतुष्कं पञ्चकं त्रिकम्। इति क्रमेण भिन्नाः स्युः वायवीया मरीचयः।" इति षट्कोणपूजनमुक्तम्॥

अथ नाभसाः—हृदयः, कौलिकी, परः कान्ता, भोगः विश्वेशी, मयः, योगिनी, महः, ब्रह्मसारा शवः, शवरी, द्रवः, कालिका, रसः, जुष्टचाण्डाली मोहः, अघोरेशी, मनोमयः, हेला, सवकः, सहारक्ता, ज्ञानगुह्यः, कुब्जिका, खरः. डाकिनी, ज्वलनः, राकिनी, महाकूलः, लाकिनी, मयोज्वालः, काकिनी, तेजः, शाकिनी, मूर्धा, हाकिनी वायुः, पापघ्नी, कुलः सिंहा, संहारः, कुलाम्बिका, विश्वम्भरः, कामा, कौटिलः, कूर्ममाता, गालवः, कङ्काली, व्योमः, व्योमा, श्वसनः, नादा, खेचरः, महादेवी, बाहुलः, महत्तरी, तातः, कुण्डली, कुलातीतः, कुलेशी, अजः, इन्धिका, मननः, दीपिका, ईशः, रेचिका, शिखः, मोचिका, परमः, परा, परः, चित् एते विशुद्धौ षोडशदले आद्यन्तयोः अष्टकमन्येषु चतुष्कं चतुष्कम्। पद्यवाहिन्यान्तु—"षट्कं षट्कं पुनः षट्कं षट्कं षट्कं पुनश्च तत्। इति क्रमात् समुद्दिष्टा नाभसा दिव्यरश्मयः॥" इति षट्कोणे पूजनमुक्तम्।

अथ मानसे रश्मयः—परः, परापरा, भरा, भरापरा, चित्, चित्परा, महामाया, महामायापरा, इच्छा, इच्छापरा, सृष्टिः, सृष्टिपरा, स्थितिः, स्थितिपरा, निरोधः, निरोधपरा, मुक्तिः, मुक्तिपरा, ज्ञानः, ज्ञानपरा, सत्यः, सतीपरा, असत्, असतीपरा, सदसत्, सदसतीपरा, क्रिया, क्रियापरा, आत्मा, आत्मापरा, इन्द्रियाश्रयः, इन्द्रियाश्रयपरा, गोचरः, गोचरपरा, लोकमुख्यः, लोकमुख्यपरा, वेदवत्, वेदवत्परा, संवित्, संवित्परा, कुण्डलिनी, कुण्डलिनीपरा, सौषुम्णः, सौषुम्णपरा, प्राणसूत्रः, प्राणसूत्रपरा, स्पन्दः, स्पन्दपरा, मातृकः, मातृकापरा, स्वरोद्भवः, स्वरोद्भवपरा, वर्णजः, वर्णजापरा, शब्दजः, शब्दजापरा, वर्णज्ञातः, वर्णज्ञातापरा, वर्गजः, वर्गजापरा, संयोगजः, संयोगजापरा, मन्त्रविग्रहः, मन्त्रविग्रहापरा ६४ एते आज्ञायां द्विदले पूज्याः। चतुष्कचतुष्टयं वामदले चतुष्कचतुष्टयं दक्षिणदले। पद्यवाहिन्यान्तु—"चतुष्कं पञ्चकञ्चैव चतुष्कं सप्तकं पुनः। चतुष्कमष्टकं चेति क्रमान्मानसरश्मयः॥" इति षट्कोणे पूजनमुक्तम्। इति पद्यवाहिन्यामुक्तानि रश्मिनामानि। (मिथुनमालायान्तु एतेषां नामान्तराणि उक्तानि। तानि पूर्वस्मिन् डिण्डिमभाष्ये उक्तानि, चतुर्दशश्लोकव्याख्यानावसरे। अत्र नोक्तानि विस्तरभयात्)। अनेन प्रकारेण ये मयूखास्तेषामुपरि सहस्रारे तव पादाम्बुजयुगं रक्तशुक्लात्मकं तयोर्मन्त्रस्तु—"महाश्रीचक्रनगरसाम्राज्ञीरक्तश्रीपादुकां पूजयामि नमः" इति ब्रह्मरन्ध्रदक्षिणभागे, वामभागे, तु "श्रीमन्महाश्रीचक्रनगरसम्राट्शुक्लश्रीपादुकां पूजयामि नमः" इति। "एवं रश्मिक्रमं कुर्वन् साधको विजितेन्द्रियः। धनधान्यायुरारोग्यं पाण्डित्यादिपदं व्रजेत्। एवं तु चक्रदेवीनामन्तर्यागो निवेदितः॥" इति फलश्रुतिः।

यत्तु आधारादिषिट्चक्रे अग्निसूर्यसोमावस्थानं, तत्राग्नेरष्टोत्तरशतकिरणाः क्षितावुदके वसन्ति। हुताशेऽनिले च षोडशाधिकशतगभस्तयो भानोः। एवं दिवि मनसि च षट्त्रिंशदधिकगभस्तयः सोमस्य। तदुक्तं भैरवयामले-"अष्टोत्तरशतं वह्नेः षोडशोत्तरकं रवेः। षट्त्रिंशदुत्तरं तेजः सोमस्य परिकीर्तिताः।" इति व्याख्यानं तदपि युक्तं भिन्नमेव। विष्णुपक्षेऽपि समानम् ॥ १४ ॥

## आनन्दलहरीटीका

इदानीमन्तर्यजनक्रमं कथयति-**क्षिताविति**। क्षितौ मूलाधारचक्रे ये षट्पञ्चाशन्मयूखाः, शंभुतेजोजन्याः रश्मिसंज्ञाः शिवशक्तिरूपा आवरणदेवताः, तेषामपि उपरि भ्रूमध्यचक्रे तव पादांबुजयुगं शुक्लरक्तरूपं तिष्ठतीत्यन्वयः। एवमग्रेऽपि। अथ पार्थिवतत्वानि तावदष्टाविंशतिः, पञ्चतन्मात्राः, पञ्च भूतानि, पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, अन्तःकरणचतुष्टयं, काल-प्रकृति-पुरुष-महत्तत्वानीति। तेषां शैवतत्वशाक्ततत्वभेदात् द्वैविध्यं ; तेन षट्पञ्चाशद्भवन्ति। अत्र मूलाधारे षट्पञ्चाशद्दलकमलं विविच्य, तन्मध्ये कर्णिकायामग्रे ग्रन्थकारेण वक्ष्यमाणं तत्तच्चक्रस्थितं शिवशक्तियुग्मं संपूज्य दलेषु षट्पञ्चाशद्रश्मिदेवताः पूजनीया इति क्रमः। एवमग्रेऽपि द्विसमधिकेत्यादौ तत्तद्दलकमले पूजनं बोध्यम्। यद्वा मूर्ध्नि षट्कोणं विचिन्त्य पश्चिमादिकोणेषु पूजयेत् ॥ तदुक्तं तन्त्रान्तरे--- "षट्कोणं शिरसि ध्यात्वा पश्चिमादिषु च क्रमात्। कोणेषु पूजयेत्पश्चात् अष्टाविंशतिकं क्रमात्। चतुष्कं पञ्चकं षट्कं चतुष्कं पञ्चकं पुनः। चतुष्कमिति संभिन्नाः क्रमात्पार्थिवरश्मयः। चतुष्कं च चतुष्कं च षट्कं भूयश्चतुष्ककम्। पञ्चकं त्रिकमित्येवं भिन्ना जलमरीचयः। पञ्चकं पञ्चषट्कं च चतुष्कं पञ्चकं पुनः। षट्कमित्थं क्रमाद्भिन्नाः तैजसक्रमरश्मयः॥ चतुष्कं पञ्चकं षट्कं चतुष्कं पञ्चकं त्रिकम्। इति क्रमेण भिन्नाः स्युः वायवीया मरीचयः। षट्कं षट्कं पुनः षट्कं षट्कं षट्कं पुनश्च तत्। इति क्रमात्समुद्दिष्टाः नाभसा दिव्यरश्मयः॥ चतुष्कं पञ्चकं चैव चतुष्कं सप्तकं पुनः। चतुष्कमष्टकं चेति क्रमान्मानसरश्मयः।" इति। इदमपि शिवशक्तिभेदाद्द्विगुणं बोध्यम्। केचित्तु भूमौ लिखित्वापि पूजयन्ति। उदके मणिपूरे चक्रे, द्व्यधिकपञ्चाशन्मयूखाः, तत्रापि तत्वानि तावत् षड्विंशतिः। पञ्च भूतानि, पञ्च कर्मेन्द्रियाणि, पंच ज्ञानेन्द्रियणि, तेषां विषया दश, मनश्चेति। शैवशाक्तद्वैविध्यात् द्विपञ्चाशत् भवन्ति। हुताशे स्वाधिष्ठानचक्रे द्व्यधिकषष्टिः। तत्र तैजसतत्वान्येकत्रिंशत्-पञ्चतन्मात्राः, पंचभूतानि, दशेन्द्रियाणि, दश तेषां विषया मनश्चैकमिति। शैवशक्तिभेदात् द्व्यधिकषष्टिः। अनिले अनाहतचक्रे चतुःपञ्चाशत्। तत्र वायुतत्वानि तावत्सप्तविंशतिः। महत्तत्वं विना पृथिवीतत्वान्येवेति। शिवशक्तिभेदात् चतुःपञ्चाशत्। दिवि विशुद्धिचक्रे द्विः द्विगुणिता षट्त्रिंशत्। द्विसप्ततिरिति यावत्। तत्र व्योमतत्वानि षट्त्रिंशत्। शिवः, शक्तिः, सदाशिवः, ईश्वरः, विशुद्धविद्या, अविद्या, माया, केवलाविद्या, रागः कालः, नियतिः,

पुरुषः, प्रकृतिः, अहंकार-बुद्धि-मनो-ज्ञानेन्द्रिय (५)-कर्मेन्द्रिय (५)-शब्दस्पर्श-रूप-रस-गन्ध-पञ्च-भूतानीति। शिवशक्तिभेदेन द्विसप्ततिः। मनसि आज्ञाचक्रे, तत्र मानसतत्वानि द्वात्रिंशत्। परा पश्यन्ती मध्यमा वैखरी चेति चतुर्धा परा। कर्तुं कारयितुं प्रतिकर्तुं उपकर्तुं उदासितुं चेति पञ्चविधा इच्छा। ज्ञाना तावत्सममन्यतो द्विधा—सालंबना निरालंबना च। सालंबना त्रिधा ज्ञातृज्ञेयज्ञप्तिभेदात्। इति चतुर्धा ज्ञाना। क्रियाः सप्त-इष्टं पूर्तं स्वाध्यायः पितृतर्पणं पूजा तपो दानमिति। कुण्डली चतुर्विधा भूमिकाचतुष्टयभेदात्। ता यथा-उन्नयभूमिका षट्चक्रभेदरूपा, लयभूमिका पराशिवसंयोग-रूपा, प्रत्यावृत्तिभूमिका पुनः षट्चक्रभेदेन परावृत्तिः, विश्रान्तिभूमिका स्वस्थानावस्थानरूपा। मातृका अष्टधा वर्गाष्टकभेदात्। एवं द्वात्रिंशन्मानसतत्वानि। शैवशाक्तभेदात् चतुःषष्टिरिति। तदुक्तं कुब्जि-कातन्त्रे-"आदौ परा चतुर्धा स्यात्, द्वितीयेच्छा च पञ्चधा। तृतीया द्विविधा ज्ञाना चतुर्थी सप्तधा क्रिया। पञ्चमी कुण्डली द्विर्द्विःषष्ठी स्यान्मातृकाष्टधा। परातोऽजायतेच्छा हि सा व्योमपतिः स्मृता। षट्त्रिंशन्नायिकाः प्रोक्ताः कण्ठस्थानसमाश्रिताः। इच्छातो जायते ज्ञाना सा च वायोरधीश्वरी। सप्तविंशतिरश्मीनां पतिः साऽनाहताश्रया। ज्ञानातोऽभूत्क्रिया व्यक्ता सा च वह्नीश्वरी मता। एकत्रिंशद्रश्मिपतिः स्वाधिष्ठानं समाश्रिता। क्रियातः कुण्डली व्यक्ता सा स्यात्सलिलनायिका। सप्तविंशतिरश्मीशा मणिपूरसमाश्रिता। कुण्डल्या मातृका जाता सा क्षितेरीश्वरी मता। अष्टाविं-शतिरश्मीनामधिपाऽऽधारमाश्रिता। शिवशक्तिविभागेन द्विविधाः शांभवाह्वयाः। षष्ट्युत्तरं च त्रिशतं एवं शंभुमरीचयः। परादिशक्तिभिः षड्भिर्नायकैः सहिताः पुनः। द्विसप्तत्यधिकत्रीणि शतान्याहुर्मनीषिणः। एषां स्मरणमात्रेण जीवन्मुक्तो महीं चरेत्। सर्वेषां स्मरणेऽशक्तः षट्सु वैकमपि स्मरेत्। एषां स्मृतिरतो लोकः पापहा पूजनात्पुनः। लक्ष्मीवान्ध्यानतो जीवन्मुक्तो रश्मिकुले वसेत्।" इत्येवं मिलिताः षष्ट्युत्तरशतत्रयमिता रश्मयः षट्चक्रस्था अनेन श्लोकेनोक्ताः। वक्ष्यमाणाश्च षट्कमलकर्णिकान्तर्गताः प्रधानभूताः षट्शक्तयः षट् शिवाश्चेति द्वादश मिलिता द्विसप्तत्युत्तर-शतत्रयमिता भवन्ति। तथा तन्त्रान्तरे फलश्रुतिः—"एवं रश्मिक्रमं कुर्वन् साधको विजितेन्द्रियः। धनधान्यायुरारोग्यं पण्डितादिपदं व्रजेत्। एवं वा चक्रदेवीनां अन्तर्यागो निवेदित इति। तथा च सति फलश्रुतेर्नित्यत्व बोधकाभावाच्च काम्यमिदमिति बोध्यम्।

अथैतासां देवतानां नामानि लिख्यन्ते। तत्र पार्थिवषट्पञ्चाशद्रश्मीनां नामानि यथा—१. उड्डीश्वरः, २ उड्डीश्वरी, ३ जलेश्वरः, ४ जलेश्वरी, ५ पूर्णेश्वरः, ६ पूर्णेश्वरी, ७. कामेश्वरः ८. कामेश्वरी, ९ श्रीकण्ठः, १० गगना, ११ अनन्तः, १२ स्वर्गा, १३ शंकरः, २४ मतिः, २५ पिंगलः, १६ पातालदेवी, १७ सदाख्यः, १८. नादा, २१ अन्नदः, २० डाकिनी, २१. अवश्यानन्दनाथः, २२. शाकिनी, २३. मत्यानन्दः २४ लाकिनी, २५ योग्यः,

२६ काकिनी, २७ अनन्तः, २८ शाकिनी, २९ पादः, ३० हाकिनी, ३१ आधारेशः ३२ रक्ता, ३३ चक्रीशः, ३४ चण्डा, ३५ कुरंगीशः, ३६ कराला, ३७ मदघ्नीशः, ३८ महोच्छुष्मा, ३९ अनादिविमलः, ४० मातंगी, ४१ सर्वज्ञविमलः, ४२ पुलिन्दा, ४३ योगविमलः, ४४ शंबरी, ४५ सिद्धिविमलः, ४६ वाचापरा, ४७ समयः, ४८ कुलालिका, ४९ मित्रेशः, ५० कुब्जा, ५१ उड्डीशः ५२ लघ्वी, ५३ षष्ठीशः, ५४ कुलेश्वरी, ५५ चर्याधीशः, ५६ कुब्जा। इति पार्थिवरश्मिनामानि।

अथ आप्यद्विपञ्चाशद्रश्मिनामानि—१ सद्योजातः, २ माया, ३ वामदेवः ४ श्रीः, ५ अघोरः, ६ पद्मा, ७ तत्पुरुषः, ८ अंबिका, ९ अनन्तः, १० निवृत्तिः, ११ अनाथः १२ प्रतिष्ठा, १३ अनाश्रितः १४ अविद्या, १५ अचिन्त्यः, १६ शान्ता, १७ शशिशेखरः, १८ उमा, १९ तीव्रः २० गंगा, २१ मणिवाहः, २२ सरस्वती, २३ अंबुवाहः, २४ कमला, २५ तेजोऽधीशः, २६ पार्वती, २७ विद्यावागीश्वरः, २८ वज्रा, २९ चतुर्विद्येश्वरः, ३० सुमकला, ३१ उमागंगेश्वरः, ३२ मन्मथा, ३३ कृष्णेश्वरः, ३४ साश्रया, ३५ श्रीकण्ठः, ३६ लया, ३७ अनन्तः, ३८ सती, ३९ शङ्करः, ४० रत्नमेखला, ४१ पिंगलः, ४२ यशोवती, ४३ सदाख्यः, ४४ हंसनादः ४५ परदिव्यौघः, ४६ वामा, ४७ मादिव्यौघः, ४८ ज्येष्ठा, ४९ पाठः, ५० रौद्रा, ५१ सर्वेश्वरः, ५२ सर्वमयी।

अथ तैजसद्व्यधिकषष्टिरश्मीनां नामानि—१ परापरः, २ चण्डेश्वरी, ३ परमः, ४ चक्षुष्मती, ५ तत्परः, ६ गुह्यकाली, ७ अपरः, ८ संवर्ता, ९ चिदानन्दः, १० नीलकुब्जा, ११ अघोरः, १२ गंधा, १३ डामराघोरः, १४ सामरसा, १५ ललितः, १६ रूपा, १७ स्वच्छः, १८ स्पर्शा, १९ भूतेश्वरः, २० शब्दा, २१ आनन्दः, २२ डाकिनी, २३ आलस्यः, २४ अन्नडाकिनी, २५ प्रभानन्दः, २६ चक्रडाकिनी, २७ योगानन्दः, २८ पद्मडाकिनी, २९ अतीतः, ३० कुशडाकिनी, ३१ पादः, ३२ प्रपञ्चडाकिनी, ३३ योगेश्वरः, ३४ चण्डा, ३५ पीठेश्वरः, ३६ कोशला, ३७ कुल-कौलेश्वरः, ३८ पावनी, ३९ कुक्षेश्वरः, ४० समाया, ४१ श्रीकण्ठः, ४२ कामा, ४३ अनन्तः, ४४ रेवती, ४५ शंकरः, ४६ ज्वाला, ४७ पिंगलाख्यः, ४८ कराला, ४९ सादाख्यः, ५० कुब्जिका, ५१ कालरात्रिः, ५२ गुरुपरा, ५३ सिद्धगुरुः, ५४ शान्त्यतीता, ५५ रक्तगुरुः, ५६ शान्ता, ५७ शिवगुरुः, ५८ विद्या, ५९ मेलगुरुः, ६० प्रतिष्ठा, ६१ समयगुरुः ६२ निवृत्तिः॥

अथ वायव्याः चतुःपञ्चाशत्—१ खगेश्वरः, २ भद्रा, ३ कूर्मः, ४ आधारा, ५ मेषः, ६ कोशा, ७ मीनः ८ शालिका, ९ ज्ञानं, १० विमला, ११ महानन्दः, १२ शर्वरी, १३ तीव्रः, १४ नीला, १५ प्रियः, १६ कुमुदा, १७ कौलिकः, १८ मेनका, १९ डामरः, २० डाकिनी

२१ रामः, २२ शाकिनी, २३ लामरः, २४ लाकिनी, २५ कामरः, २६ काकिनी, २७ सामरः, २८ शाकिनी, २९ हामरः, ३० हाकिनी, ३१ आधारेशः, ३२ राका, ३३ चक्रीशः, ३४ बिन्दुः, ३५ कुररः, ३६ कला, ३७ मदघ्नीशः, ३८ कुब्जिका, ३९ प्रदीशः, ४० कामकला, ४१ शिवेशः, ४२ कुलदीपिका, ४३ शिखेशः, ४४ बर्बरी, ४५-धर्मः,-४६ बहुरूपा, ४७ शास्त्रेशः, ४८ महत्तरी, ४९ परमगुरुः, ५० मंगला, ५१ पराधिकारगुरुः, ५२ (स)नौकर्या, ५३ पूज्यगुरुः, ५४ समा ॥

अथ नाभसद्व्यसधिकसप्ततिरश्मिनामानि—१ हृदयः, २ कौलिनी, ३ घरः, ४ कान्ता, ५ भगः, ६ विशेषी, ७ नयः, ८ योगिनी, ९ महः, १० ब्रह्मसारा, ११ शिवः, १२ शबरी, १३ द्रवः, १४ कालिका, १५ सरसः, १६ जुष्टचाण्डाली, १७ मोहः, १८ अघोरेशी, १९ मनोभवः, २० हेला, २१ सेकः, २२ महारक्ता, २३ जनगुह्यः, २४ कुब्जका, २५ ज्वरः, २६ डाकिनी, २७ ज्वलनः, २८ शाकिनी, २९ महाक्रूरः, ३० लाकिनी, ३१ श्रियोज्ज्वलः, ३२ काकिनी, ३३ तेजः, ३४ शाकिनी, ३५ भूतिः, ३६ डाकिनी, ३७ वायुः, ३८ पापघ्नी, ३९ कुलः, ४० सिंहा, ४१ संहारः, ४२ कुलाधिका, ४३ विश्वंभरः, ४४ क्रमा, ४५ कौरिलः, ४६ कर्ममाना, ४७ गालवः, ४८ काली, ४९ व्योमः, ५० व्योमा, ५१ श्वसनः, ५२ नादा, ५३ खेचरः ५४ महादेवी, ५५ बहुजः, ५६ महत्तरी, ५७ ज्ञानः ५८ कुण्डलिनी, ५९ कलामतिः, ६० कुलेश्वरी, ६१ अजः, ६२ बन्धिका, ६३ मनः, ६४ दीपिका, ६५ ईशः, ६६ रेचिका, ६७ शंखः, ६८ मोचिका, ६९ परमः, ७० परा, ७१ परः, ७२ चित् ॥

अथ मानसचतुःषष्टिरश्मीनां नामानि—१ परः, २ अपरा, ३ भवः, ४ भवापरा, ५ चित्, ६ चित्परा, ७ महामयः, ८ महामयपरा, ९ इच्छा, १० इच्छापरा, ११ सृष्टिः, १२ सृष्टिपरा, १३ स्थितिः, १४ स्थितिपरा, १५ निरोधः, १६ निरोधपरा, १७ मुक्तिः, १८ मुक्तिपरा, १९ ज्ञानः, २० ज्ञानपरा, २१ सत्यः, २२ सत्यपरा, २३ असत्यः, २४ असत्यपरा, २५ सदसत्, २६ सदसत्परा, २७ क्रिया, २८ क्रियापरा, २९ आत्मा, ३० आत्मापरा, ३१ इन्द्रियाश्रयः, ३२ इन्द्रियाश्रयपरा, ३३ गोचरः, ३४ गोचरपरा, ३५ लोकमुख्यः, ३६ लोकमुख्यपरा, ३७ वेदवत्, ३८ वेदवत्परा, ३९ संवित्, ४० संवित्परा, ४१ कुण्डलिनी, ४२ कुण्डलिनीपरा, ४३ सौषुम्णः, ४४ सौषुम्णपरा, ४५ प्राणसूत्रः, ४६ प्राणसूत्रपरा, ४७ स्पन्दः, ४८ स्पन्दपरा, ४९ मातृकः, ५० मातृकपरा, ५१ स्वरोद्भवः, ५२ स्वरोद्भवपरा, ५३ वर्णजः, ५४ वर्णजापरा, ५५ शब्दजः, ५६ शब्दजपरा, ५७ वर्णज्ञानं, ५८ वर्णज्ञानपरा, ५९ वर्गजः, ६० वर्गजापरा, ६१ संयोगः ६२ संयोगपरा, ६३ मन्त्रविग्रहः, ६४ मन्त्रविग्रहपरा ॥




श्री शारदाम्बा

ஸ்ரீ சாரதாம்பாள்

इति रश्मिदेवतानां षष्ट्युत्तरशतत्रयनामानि। क्वचित्तन्त्रान्तरे नामान्तरमपि विद्यते। षट्चक्रमध्यस्थानां शिवशक्तीनां षट्द्वादशनामानि ग्रन्थकृदग्रे वक्ष्यति। पूजाप्रकारस्तु तन्त्रेष्वनुसन्धेयः। ग्रन्थगौरवभयान्नेह लिख्यते। केचित्तु पद्यमिदं एवं व्याचक्षते—क्षितावुदके चाष्टोत्तरशतरश्मयः, अग्नौ वायौ षोडशोत्तरशतरश्मयः सूर्यस्य, आकाशे मनसि च षट्त्रिंशदधिकशतरश्मयः चन्द्रस्य। क्षित्यादिपदैस्तदधिष्ठानचक्राण्युक्तानि। तदुक्तं भैरवतन्त्रे "अष्टोत्तरशतं वह्नेः षोडशोत्तरकं रवेः। षट्त्रिंशदुत्तरं तेजः सोमस्य परिकीर्तितम्" इति॥ १४॥

**[1]शरज्ज्योत्स्नाशुद्धां शशियुतजटाजूटमकुटां[2]**
**वरत्रासत्राणस्फटिक[3]घटिकापुस्तककराम्[4]।**
**सकृन्न [5]त्वा नत्वा कथमिव[6] सतां सन्निदधते**
**मधुक्षीरद्राक्षामधुरिमधुरीणाः[7] फणितयः॥ १५॥**

ஶரஜ்ஜ்யோத்ஸ்னாசுத்தாம் ஶஶியுத ஜடா ஜூட மகுடாம்
1 43 1 1 1 1
வரத்ராஸத்ராண ஸ்படிக கடிகா புஸ்தககராம்
1 1 2 11 411 1 111
ஸக்ருன்ன த்வா நத்வா கதமிவ ஸதாம் ஸந்நிதததே
1 1 1 12 1 341
மதுக்ஷீர த்ராக்ஷாமது ரிமது ரீணா: பணிதய:
4 3 4 4 2 1

शरच्चन्द्रिका सी निर्मल, चन्द्रसहित जटामकुट भूषित,
वरद अभयमुद्रांचित स्फटिकमाल एवं पुस्तकभूषित-
भव्य करों से संशोभित तेरे आगे नतशिर हो कर
एक बार भी करते जो संत-जन प्रणाम नम्र बन कर,
क्यों कर प्राप्त न होगा उनको मधु दुग्ध तथा द्राक्षासम
मधुर मधुर वाणीविन्यास अनर्गल जन-रंजन-सक्षम ?॥

## लक्ष्मीधरा

सारस्वतप्रयोगमाह—**शरदिति**। शरज्ज्योत्स्नाशुद्धां शरदि शरत्काले ज्योत्स्ना चन्द्रिका तद्वच्छुद्धामतिशुभ्राम्। शशियुतजटाजूटमकुटां शशिना चन्द्रेण युतो युक्तः जटाजूटो मकुटो यस्यास्ताम्, चन्द्रकलावतंसामित्यर्थः। वरत्रासत्राणस्फटिकघटिकापुस्तककरां वरः इष्टदानमुद्रा,

1. शरज्ज्योत्स्नाशुभ्रां 2. मुकुटां 3. घुटिका, गुटिका, गुणिका 4. पुस्तकधराम्। 5. सकृन्नत्वा न त्वां, सकृन्नत्वा नु त्वां 6. कथमपि 7. धुरीणा भणितयः।

त्रासत्राणं अभयदानमुद्रा, स्फटिकघटिका स्फटिकपानपात्रम्; स्फटिकाक्षमालेति केचित्; तत्पक्षे स्फटिकघुटिकेति पाठः। पुस्तकं विद्यामुद्रा, पुस्तकं वा; एतैर्युक्तकराम्। शाकपार्थिवादित्वात् मध्यमपदलोपः, न तु स्फटिकघटिकापुस्तकानि करेषु यस्याः इति सप्तमीबहुव्रीहिः, 'प्रहरणादिभ्य उपसंख्यानम्' इति तस्य प्रहरणादिभ्य एवेति नियतत्वात्। सकृत् एकवारम्। नकारो निषेधार्थः। त्वा त्वामित्यर्थः। नत्वा नमस्कारं कृत्वा। कथं कथंचित्। इवेति वाक्यालंकारे। सतां कवीश्वराणाम्। संनिदधते संनिधानं प्राप्नुवन्ति मधुक्षीरद्राक्षामधुरिमधुरीणाः फणितयः, मधु क्षौद्रं क्षीरं पयः द्राक्षा मृद्वीका एतेषां मधुरिमा माधुर्यं, तत्र धुरीणाः धुरं वहन्तीति धुरीणाः अग्रेसराः तद्वन्मधुरा इत्यर्थः। फणितयः वाग्वैखर्यः॥

अत्रेत्थं पदयोजना—हे भगवति, शरज्ज्योत्स्नाशुद्धां शशियुतजटाजूटमकुटां वरत्रासत्राणस्फटिकघटिकापुस्तककरां त्वा सकृन्नत्वा सतां मधुक्षीरद्राक्षामधुरिमधुरीणाः फणितयः कथमिव न संनिदधते॥

अयमर्थः—अत्र व्यतिरेकमुखेन सकृन्नमस्कारोऽपि कवित्वबीजभूतसंस्कारोत्पादकः। तदभावे प्रकारान्तरेण येन केनापि तद्बीजोत्पत्तिर्नास्तीति सूचितम्॥ १५॥

## सौभाग्यवर्धनी

एवं चरणमहिमानमभिधाय वक्ष्यमाणाया वाग्भवबीजकामराजशक्तिसंज्ञककूटत्रयात्मिकायाः प्रथमकूटस्य सात्त्विकध्यानमहिमानमाह—**शरज्ज्योत्स्नेति**। शरच्चन्द्रिकारुचिं चन्द्रकलाशोभिजटाजूटघटितमकुटाम्, वराभयस्फटिकाक्षमालाकरामेतादृशीं त्वां (अ)नत्वा मधुक्षीरद्राक्षामाधुर्यधुरंधराः सूक्तयः सतां त्वदेकभक्तिरसानामिव कथं संनिदधते संनिहिता भवन्ति; जिह्वाग्र इति शेषः। इवशब्दोऽत्र हेतुविक्षेपे। त्वद्भजनमन्तरेण कारणान्तरं नास्तीत्यर्थः॥ १५॥

## अरुणामोदिनी

अथ 'नरं वर्षीयांसम्' इत्यादिना प्रक्रान्तं देव्याः सर्वाभीष्टप्रदातृत्वं प्रकटयितुं कांश्चिद्ध्यानभेदान्निरूपयति सप्तश्लोक्या। तत्रादौ सारस्वतध्यानमाह—**शरदिति**। हे देवि, शरज्ज्योत्स्ना शारदचन्द्रिका सेव शुभ्रां धवलवर्णां, शशिना चन्द्रेण युतः जटाजूटः जटासंघात एव मुकुटं किरीटं यस्यास्ताम्; चन्द्रकलावतंसामित्यर्थः। वरोऽभीष्टमुद्रा, त्रासाद्भयात्त्राणमभयमुद्रा, स्फटिकघुटिका स्फटिकाक्षमालिका, घटिकेति पाठे पानपात्रमिति लक्ष्मीधरः। पुस्तकं पुस्तं मुद्रा वा, कृतद्वन्द्वैरेतैर्युक्ताः कराः पाणयो यस्यास्ताम्; धृतवरादिमुद्राबाहुचतुष्टयामित्यर्थः। त्वा त्वाम्। वाग्वादिनीरूपिणीं भवतीम्; 'त्वामौ द्वितीयायाः' इति युष्मदो द्वितीयैकवचनस्य त्वादेशः। सकृदेकवारमपि नत्वा प्रणम्य सतां वर्तमानानाम्; जनानामिति शेषः। मधुक्षीरद्राक्षाणां क्षौद्र-

दुग्धगोस्तनीनां मधुरिमा माधुर्यं तेन धुरंधराः ; तद्वन्नानाविधास्वादा इत्यर्थः । फणितयो वर्णसंततयो वाङ्मयविशेषाः कथमिव कथंचिन्न संनिदधते न सांनिध्यं कुर्वन्ति । सकृदभिवादनेनैव नानाविधस्वादा वाग्वैखर्यः प्रसरन्तीत्यर्थः । अथ वा, सकृदप्यनत्वा सतां नमस्कारमकुर्वतां फणितयः कथमिव संनिदधते ; कथं प्रादुर्भवन्ति ; नमस्कारेणैव नान्येनेति वा योजना । एतेन वाग्वादिनीरूपायाः भवत्याः सकृन्नमस्कारोऽपि कविताकारणभूत इति तात्पर्यम् । उक्तं चाम्बास्तवे—'यः स्फाटिकाक्षगुणपुस्तककुण्डिकाढ्यां व्याख्यासमुद्यतकरां शरदिन्दुशुभ्राम् । पद्मासनां च हृदये भवतीमुपास्ते मातः स विश्वकवितार्किचक्रवर्ती ॥' इति । लघुस्तवे चोक्तम्—'वामे पुस्तकधारिणीमभयदां साक्षस्रजं दक्षिणे भक्तेभ्यो वरदानपेशलकरां कर्पूरकुन्दोज्ज्वलाम् । उज्जृम्भाम्बुजपत्रकान्तिनयनस्निग्धप्रभालोकिनीं ये त्वामम्ब न शीलयन्ति मनसा तेषां कवित्वं कुतः ॥' इति ॥ १५ ॥

## आनन्दगिरीया

**शरज्ज्योत्स्नेति** । हे श्रीवाग्देवते त्वा सकृदपि न नत्वा स्थितानां सतामपि भणितयो वचांसि सूक्तयः कथमपि सन्निदधते कथं सन्निधानं प्राप्नुवन्ति । न कथमपीत्यर्थः । कथमपीति व्यस्तमव्ययम् । तव नमस्कारमन्तरेण वाग्विभवे कारणान्तरं नास्तीति । कथमिवेत्यपि पठन्ति । ननु दुरुक्तयो ग्राम्योक्तयो वा स्फुरन्त्येवेत्यत्राह कीदृश्यो भणितयः, मधुक्षीरद्राक्षामधुरिमधुरीणा इति । मध्वादीनां यो मधुरिमा माधुर्यं तस्य धुरंधराः, गभीरार्थप्रकाशकमधुरकोमलपदप्रबन्धरूपा इत्यर्थः । अथवा, हे मातः, त्वां कथमपि कष्टेनापि सकृदपि एकवारमपि, ये नमन्ति ते सन्तः, तेषां एकवारं नमतामपि विशिष्टरूपा भणितयः किं न सन्निदधते अपि तु सन्निदधत एव । नमस्कारमात्रेणापि सकलालङ्कारगुणपुरःसरा विमलमधुरकोमलवाग्विलासाः अनायासेन स्फुरन्तीत्यर्थः । किंलक्षणां त्वां शरज्ज्योत्स्नाशुभ्रां शारदचन्द्रिकावद्भास्वरस्वरूपां, पुनः कीदृशीं शशियुतजटाजूटमकुटां चन्द्रालंकृतजटाजूटां, जटैव मकुटं, पुनः कीदृशीं, वरत्रासत्राणस्फटिकगुटिकापुस्तकधरां, वरश्च त्रासत्राणं च स्फटिकगुटिका च पुस्तकं च तानि धारयतीति तथा, वरदाभयाक्षमालापुस्तकहस्तामित्यर्थः । शरज्ज्योत्स्नाशुभ्रामितिश्लोकस्य रहस्यार्थः । बुद्धिस्थनवचक्रेश्वरीमन्त्राणां त्रिरूपध्यानं सममित्यवसरसंगत्या फलत्रयसमुद्देशेन ध्यानत्रयं कूटत्रयस्यापि समं समानफलं दद्यादित्याह सप्तभिः । सर्वे मन्त्राः कामकलात्मकाः एव । अत्रत्या स्फुटा कामकलास्वरूपभावना । कथम्? मुखमिति पद्ये । तथा ब्रह्मयामले-"त्रिकोणा योनिरूपेयं तव कामकला शिवे । मुखेन्दुबिन्दुसंयुक्ता कुचबिन्दुद्वयात्मिका । हृदन्तरे नभोरूपं शून्ये सोमाग्निभास्करे । इत्थं बिन्दुत्रयं ध्यात्वा जगत्क्षोभकरो जनः । एतन्मयी त्वमीशानि शंभुश्चैतन्मयो ह्यहम् । एतन्मयाः सुराः सर्वे देव्यश्चैतन्मया उमे । स्त्रीपुन्नपुंसकं गौरि सुखवक्षोजलिङ्गवत् । बिन्दुत्रयेण

लिंगेन विश्वमेतच्चराचरम्। हृदन्तर्वर्तिनी काचित्कला कामकलात्मिका। विश्वेषां हृदयं सिद्धिविदितं तद्यथातथम्।" ॥ १५ ॥

## तात्पर्यदीपिनी

ननु भगवत्यास्तावदावरणदेवतानां च पूजनेऽनेकमन्त्रचिन्तनोपायादिसामर्थ्यं विना, पाण्डित्यं न निर्वहति। तच्च भगवत्या वाग्रूपिण्याः ध्यानं विना न संभवतीत्याह-**शरज्ज्योत्स्नेति**-हे जगदंब! फणितयो वाचः, सतां विदुषां कथमिव केनापि प्रकारेण सन्निदधते सन्निधानं प्राप्नुवन्ति। सन्निधानकारणमाह-किं कृत्वा? नु निश्चितं, त्वां सकृत् एकवारं, नत्वा प्रणम्य, तव नमस्कारानन्तरं वाग्वादिनीरूपं भजमानानां नवरसतरंगिण्यो भणितयो भवन्तीत्यर्थः। किंभूतां त्वां? शरज्ज्योत्स्नाशुभ्रां, शरदि शरत्काले ज्योत्स्ना चन्द्रिका, तद्वत् शुभ्रां धवलां, पुनः शशियुतजटाजूटमकुटां, शशिना चन्द्रेण युक्तो जटाजूटो जटाबन्धः स एव मकुटो यस्याः सा तां चन्द्रकलावतंसामित्यर्थः। पुनः वरत्रासत्राणस्फटिकगुटिकापुस्तकधरां, वरः इष्टदानमुद्रा, त्रासत्राणमभयमुद्रा, स्फटिकगुटिका स्फटिकाक्षमाला पुस्तकं विद्यामुद्रा एतानि धारयन्ती सा ताम्। किंविधाः फणितयः? मधुक्षीरद्राक्षामधुरिमधुरीणाः, मधु क्षौद्रं, क्षीरं पयः, द्राक्षा गोस्तनी एषां मधुरिमा माधुर्यं, तत्र धुरीणा अग्रेसराः, अतिमधुरा इत्यर्थः। अयमाशयः-सकृन्नमस्कारोऽपि कवित्वबीजभूतसंस्कारोत्पादकः। तदभावे येन केनापि प्रकारान्तरेण कविताबीजोत्पत्तिर्नास्तीति सूचितम् ॥ १५ ॥

## पदार्थचन्द्रिका

इदानीं श्रीभवान्याः सर्वविद्याप्रदं सरस्वतीस्वरूपं वर्णयन्, तद्ध्यानं महाफलकं कैमुत्यन्यायेनाह-**शरदिति**। हे तुहिनगिरिकन्ये त्वां नत्वा सतां तिष्ठतां पुरुषाणां भणितयो वाचो न सन्निदधते न सन्निहिता भवन्ति न स्फुरन्ति इत्यपि तु सन्निदधत एवेत्यर्थः। भणितीर्विशिनष्टि-मध्विति। मधुक्षीरद्राक्षाणां मधुरिमाणो माधुर्याणि तेषु धुरीणाः श्रेष्ठा इत्यर्थः। भवानीं विशिनष्टि-शरदि ज्योत्स्ना चन्द्रकिरणाः तद्वत् शुभ्राम्। शशिना युतं जटाजूटे केशपाशे मकुटं यस्यास्ताम्। वरश्च त्रासत्राणं च स्फटिकगुटिका च पुस्तकं च करेषु यस्यास्ताम्। त्रासात् त्राणं त्रासत्राणम्। स्फटिकस्य गुटिका विद्यन्ते यस्यां सा तादृशी माला। ननु निरन्तरं क्रियमाणनमस्क्रियैवं विधं फलमुत्पादयेदिति किमत्राश्चर्यं, तत्राह—सकृदेकवारमपि। ननु भक्तिमिच्छान्ति देवता इति वचनात् श्रद्धाभक्तिसहितं नमनमेवंविधं फलं जनयेदिति किमाश्चर्यं तत्राह—कथमपि, तादृग्भक्त्या रहितमपि नमनम्। मधुरशब्दाद्भावे इमनिच् प्रत्यये मधुरिमेति रूपम्। वहतीत्यर्थे धुरशब्दात्खप्रत्यये धुरीण इति रूपम्। यन्नमनमात्रेण एवंविधानेकगुणविशिष्टवाग्विलासोदयः, तस्या ध्यानं महाफलमिति किमु वक्तव्यमिति भावः ॥

॥ १५ ॥

## डिण्डिमभाष्यम् ।

ननु भगवत्यास्तावदावरणदेवताचक्रपूजनं अनेकमन्त्रचिन्तनोपायापादितसामर्थ्यं विना, पाण्डित्यं न निर्वहति तच्च महावाग्देवतारूपिण्या भगवत्या ध्यानं विना न सम्भवति तत्कथं न प्रकाश्यते इत्याशङ्क्याह—**शरदिति**। हे जगदम्ब! शरज्ज्योत्स्नाशुभ्रां शारदशशिकरनिकरधवलां शशियुत-जटाजूटमुकुटां शशिना युतं, शशियुतं जटाया जूटो बन्धो जटाजूटस्तन्मयं मुकुटम् । "मुकुटं चैव किरीटं शुभका तथेति" विश्वप्रकाशः । चन्द्रकलाभरणमिति यावत् । वरत्रासत्राणस्फटिकघुटिका-पुस्त-कधरां वरश्च त्रासत्राणञ्च स्फटिकघुटिका च अक्षमाला च पुस्तकं च विद्याकोषश्च एताश्चतस्रो मुद्रा धारयन्तीति तथोक्ता एवंभूतां त्वां न नत्वा न नमस्कृत्य सतां वर्तमानानां पुरुषाणां मधु-क्षीरद्राक्षामधुरिमधुरीणाः मधुवच्च माक्षिकवच्च दुग्धवच्च द्राक्षावच्च गोस्तनीवच्च मधुरिमधुरीणा माधुर्यधूर्वहाः, मधुरशब्दादिमनिच्, पृथ्वादिभ्य इमनिज्वेति धुरशब्दात् खप्रत्ययः खः सर्व-धुरादिति । धुरीणाः एवंभूता भणितयो वाचः कथं सन्निदधते केन प्रकारेण विभूतिं कुर्वन्ति । महावाग्वादिनीरूपां त्वां नत्वा पुनरमृतरसतरङ्गिण्यो भणितयो बोभूयन्ते इत्यर्थः ॥ १५ ॥

## गोपालसुन्दरी

अत्र त्रिभिः वाग्भवोपासनोपयुक्तध्यानादिकं उच्यते । तत्र साक्षिकध्यानमाद्येनाह— **शरज्ज्योत्स्नेति** । शरत्कालीनचन्द्रिकारुचिं, शशिना युतं शशियुतं जटाया जूटो बन्धस्तन्मयं मुकुटं यस्यास्तां, वरो वरमुद्रा, त्रासत्राणमभयमुद्रा, स्फटिकगुटिका स्फटिकमाला पुस्तकं च करे यस्यास्तां, त्वां सकृत् एकवारमपि न नत्वा, सतां सज्जनानां, भणितयो वाचः, कथं सन्निदधते सन्निहिता भवन्ति? न कथमपीत्यर्थः । कीदृश्यो भणितयः? मधुक्षीरद्राक्षामधुरिमधुरीणाः मधुवन्मा-क्षिकवत्, क्षीरवत् दुग्धवत्, द्राक्षावन्मृद्वीकावत्, मधुरिमधुरीणाः माधुर्यधूर्वहा इत्यर्थः ।

**विष्णुपक्षे** एवं भूतां सरस्वतीमपि नत्वा त्वां पुनः सकृदपि नत्वा सतां भणितयः कथं सन्निदधते इत्यर्थः ॥ १५ ॥

## आनन्दलहरीटीका

इदानीं त्रिकूटाया विद्याया प्रथमकूटस्य सात्विकं ध्यानमाह-**शरदिति** । सकृदेकवारमात्रमपि त्वां न त्वा प्रणम्य न स्थितानां सतां पण्डितानामपि कष्टकल्पनया वापि भणितयः सत्काव्यानि सन्निदधते सन्निहिता भवन्ति, मुखान्निःसरन्तीति यावत् । अपि तु नेति शिरश्चालनम् । कीदृश्यः, मधुदुग्धद्राक्षातोऽपि यो मधुरिमा माधुर्यं रसातिशयस्तद्धुरीणाः तद्भारवाहिन्यः एतादृशः भणितयः त्वत्प्रसादसाध्या एव न तु पाण्डित्यदिसाध्या इति भावः । त्वां कीदृशीं, शरत्कालीनचन्द्रकिरणवत्

शुक्लां, तथा शशिना चन्द्रेण युतं युक्तं जटाजूटमुकुटं जटाबन्धसम्बन्धि शिरोभूषणं यस्यास्ताम्। वरो वरमुद्रात्रासत्राणमभयमुद्रा स्फटिकस्य गुटिका माला पुस्तकं च करे यस्यास्ताम्। गुटिकेत्यत्र घटिकेति पाठे कमण्डलुरित्यर्थः। करामित्यत्र धरामित्यपि पाठः ॥ १५ ॥

**कवीन्द्राणां चेतःकमलवनबालातपरुचिं**
**भजन्ते ये सन्तः कतिचिदरुणामेव भवतीम्।**
**[1]विरिञ्चिप्रेयस्यास्तरुणतरशृङ्गारलहरी-**
**गभीराभिर्वाग्भिर्विदधति सतां रञ्जनममी[2] ॥ १६ ॥**

கவீந்த்ராணாம் சேத: கமலவனபாலாதபருசிம்
1 3 11 1 3 11 1
பஜந்தே யே ஸந்த: கதிசிதருணாமேவ பவதீம்;
4 1 1 1113 4 1
விரிஞ்சிப்ரேயஸ்யாஸ்தருணதரச்ருங்காரலஹரீ—
11 1 1 3
கபீராபிர்வாக்பிர் விதததி ஸதாம் ரஞ்ஜனமமீ.
34 4 34 341 1

कविजनमनकमलवनों को विकसित करने वाली सुषमा
बाल-दिवाकर की आभा सी, अरुणा की, तेरी महिमा,
भावित करते हैं जो कतिपय सज्जन अन्य सभी तज कर,
वे ब्राह्मीसम सरस तरुणतर शृंगारी गंभीर सुघर
वाग्विलास दर्शाकर अपना, भगवति, मन बहलाते हैं-
संत-जनों के सुधी जनों को रस-धुँनि में नहलाते हैं! ॥

## लक्ष्मीधरा

कवीन्द्राणां कवीश्वराणाम्। चेतःकमलवनबालातपरुचिं चेतांस्येव कमलानि पद्मानि तेषां वनं षण्डं, तस्य बालातपरुचिः प्राभातिकारुणकान्तिः तां भजन्ते सेवन्ते ये सन्तः सत्पुरुषाः कतिचित् विरलाः अरुणामेव अरुणाख्यां अरुणवर्णां च भवतीं त्वां विरिञ्चिप्रेयस्याः विरिञ्चिः ब्रह्मा तस्य प्रेयस्याः प्रियायाः सरस्वत्याः तरुणतरशृङ्गारलहरीगभीराभिः तरुणतरे अतियौवने, यद्वा, तरुणतरश्चासौ शृङ्गारश्च तस्य लहरी उद्रिक्तप्रवाहः। यद्वा, लहरीशब्देन समुद्रस्य चन्द्रोदये यादृश उत्सेकः स उच्यते। लहरीयुक्तगभीराभिः अतिगम्भीराभिरित्यर्थः। वाग्भिः वाग्विलासैः विदधति कुर्वन्ति सतां सभासदां रञ्जनं हृदयानुरञ्जनम्। अमी सन्तः परामृश्यन्ते ॥

---

1. विरिञ्चिप्रेयस्यास्तरलतर॰
2. सभारञ्जनममी

अत्रेत्थं पदयोजना -हे भगवति, कवीन्द्राणां चेतःकमलवनबालातपरुचिं अरुणामेव भवतीं कतिचित् ये सन्तः भजन्ते, अमी सन्तः विरिञ्चिप्रेयस्याः तरुणतरशृङ्गारलहरीगभीराभिः वाग्भिः सतां रञ्जनं विदधति ॥

अयमर्थः—हृदयकमले भगवतीमरुणां ध्यायन्तः पुंभावमापन्ना सरस्वतीव शृङ्गाररसप्रधानैः वाग्विलासैः सभारञ्जनं कुर्वन्ति । भगवत्याः मातृकात्मकत्वात् सरस्वतीरूपत्वेनैव सारस्वतप्रदत्वम् । अरुणवर्णध्यानमहिम्ना शृङ्गाररसप्राधान्येन वाग्विलासप्रवृत्तिरिति । यथोक्तं वामकेश्वरतन्त्रे—'अरुणाख्यां भगवतीमरुणाभां विचिन्तयेत् । पाशाङ्कुशधरां देवीं धनुर्बाणधरां शिवाम् ॥ वरदाभयहस्तां च पुस्तकाक्षस्रगन्विताम् । अष्टबाहुं त्रिनयनां खेलन्तीममृताम्बुधौ ॥ स करोत्येव शृङ्गाररसास्वादनलम्पटान् । सभासदः सदा सर्वान्साधकेन्द्रः सभास्थले ॥' इति ॥ अत्र परम्परितरूपकमलंकारः, बालातपरुचित्वारोपणस्य चेतसि कमलत्वारोपणस्य निमित्तत्वात्, 'रूपकहेतुरूपकं परम्परितम्' इति लक्षणात् ॥ १६ ॥

## सौभाग्यवर्धनी

तस्यैव राजसध्यानमाह—**कवीन्द्राणामिति** । कवीन्द्राणां चेतःकमलानां बालातपरुचिं; हेत्वलंकारः । कतिचित् ये सन्तः अरुणामेव; अन्ययोगव्यवच्छेदकोऽत्रैवकारः । भजन्ते; विरिञ्चिप्रेयस्यास्तरलतरा उत्तरोत्तरमहमहमिकया विजृम्भमाणाः शृङ्गाररसप्रधाना लहर्यः परंपराः तद्वद्गभीराभिर्विविधशृङ्गाररससमवेतविभावानुभावसात्त्विकव्यभिचारिभावपुष्टाभिर्वाग्भिः सतां सहृदयतया श्लाघनीयपरगुणानां रञ्जनं विदधति । एतादृश्यारूत्वोपासनेन साक्षात्सरस्वतीमुखादाविर्भूतगद्यपद्यादयः शृङ्गारप्रधानाः प्रस्फुरन्तीति भावः ॥ १६ ॥

## अरुणामोदिनी

देव्याः प्रधानरूपमारुण्यमपहाय रूपान्तरध्यानमकुर्वतामत्रैवाभिनिविष्टचित्तानामपि कविताप्राप्तिमेव फलं सविशेषमाह—**कवीन्द्राणामिति** । हे देवि, ये केचित् सन्तः सत्पुरुषाः कवीन्द्राणां कवयितृश्रेष्ठानां ब्रह्मादीनां चेतांस्येव कमलानि तेषां बालातपरुचिं तरुणारुणच्छविरूपाम्, तद्विकासहेतुमिति हेतुगर्भविशेषणम् । ध्यातॄणां वाञ्छापूरणं नाद्भुतमित्यभिप्रायः । भवतीं त्वाम्, अरुणामरुणवर्णामेव ; न तु शुभ्रादिवर्णान्तरयुक्तामित्येवकारार्थः । भजन्ते ध्यायन्ति । अमी ते ध्यातारः सन्तः । अदसस्तदर्थकत्वं यद्योगे प्रसिद्धम् । विरिञ्चिप्रेयस्याः सरस्वत्याः अरुणतरोऽतिमधुरो यः शृङ्गारः, 'शृङ्गार एव मधुरः परप्रह्लादको रसः' इति वचनादतिमधुरो रसविशेषः ; तस्य लहर्यः उद्रिक्तप्रवाहा इव गभीराभिः शृङ्गाररसभरभरिताभिरित्यर्थः । वाग्भिः वागुपन्यासैः सतां सहृदयानाम् ; रसतत्त्ववेदिनामित्यर्थः । रञ्जनमाह्लादनं विदधति

कुर्वते। ये केचिद्भक्ता मातृकारूपिणीं भवतीमरुणरूपामेव ध्यायन्ति, तेषां शृङ्गाररसप्रधानवाग्विलासैः सभारञ्जनरूपं फलं भवतीति भावः। अत्रोक्तं वामकेश्वरतन्त्रे—'अरुणाख्यां भगवतीमरुणाभां विचिन्तयेत्। पाशाङ्कुशधरां देवीं धनुर्बाणकरां शिवाम्॥ वरदाभयहस्तां च पुस्तकाक्षस्रगन्विताम्। अष्टबाहुं त्रिनयनां खेलन्तीममृताम्बुधौ॥ स करोत्याशु शृङ्गाररसास्वादनलम्पटान्। सभासदस्तथा सर्वान् साधकेन्द्रः सभास्थले॥' इति॥ १६॥

## आनन्दगिरीया

**कवीन्द्राणामिति।** हे परमेश्वरि, केचित्सन्तः पुरुषाः, भवतीं त्वामरुणामेव स्मरन्ति। आरुण्यगुणवतीमेव स्मरन्ति। अमी सतां सहृदयानां भावुकानां रञ्जनं विदधति। मनोऽनुरागमभिवर्धयन्ति। काभिः वाग्भिः वाणीभिः, काव्यबन्धरूपाभिः, कीदृशीभिः, विरिञ्चिप्रेयस्यास्तरलतरशृंगारलहरीगभीराभिः, विरिञ्चिप्रेयसी सरस्वती, तस्यास्तरलतर उल्लोलितो यः शृंगारः, तस्य लहर्यो वीचयः परंपरा धारा, तथा गभीराभिः व्यंग्यप्रधानाभिः अविगाह्याभिरिति। अयमर्थः-एतद्ध्यानवतामेतादृश्यो वाचः स्फुरन्ति, याः श्रोतॄणां वर्ण्यमानानां नायिकानां वा श्रवणात् हृदयाह्लादिन्यः। सत्यं सरस्वत्या अपि वर्णनीयनायकविषयकप्रेमाख्यरतिस्थायिभावमुत्पाद्य अनुभावोद्दीर्णविभावसात्विकव्यभिचारिभिः संवर्ध्य धारावाहिकतया उल्लासितां सरस्वतीं श्रोतॄन् प्रापयन्ति। स च सरस्वत्याः शृंगारो व्यंग्यतया भासत इति। व्यंग्यप्रधानत्वात् गंभीरत्वं काव्यस्य। व्यंग्यप्रधानं हि काव्यं श्रोतॄणां परमानन्ददायितया मनो रञ्जयति। तदुक्तं "सद्यः परनिर्वृतये" इति। यथा काचन सखी दूती वा नायिकाया मनसि नायकगुणोत्कर्षोपवर्णनेन प्रेमधारामुत्पाद्य नायिकामभिसारायित्वा, नायकं प्रापय्य नायकमनोऽनुरञ्जनं कुरुते। अथवा विरिञ्चिप्रेयस्याः ब्रह्माण्या उत्पन्नो यस्तरलतरोऽपि शृंगाररसः तस्य लहर्यः परम्पराः तास्तु उत्तलितरूपा अपि गभीरा गूढा भवन्ति। नायिकाया ब्रह्मकुलोत्पन्नायाः कुलांगनात्वात् शृंगारप्रकाशनं अनुचितं शीलहानेः। तद्वद्गूढव्यञ्जनाभिरिति। व्यंग्यस्य गूढत्वमगूढत्वमिति। तथा च मम्मटः—"तच्च गूढमगूढञ्चेति"। आरुण्यमपि जपाकुसुमादिसदृशमत्र भवति। किंभूतां भवतीं, बालातपरुचिं, बालार्ककिरणाकाराम्। तथैव ध्यानमुक्तं-"उद्यद्दिनद्युतिमिन्दुकिरीटां तुंगकुचां नयनत्रययुक्ताम्। स्मेरमुखीं वरदाङ्कुशपाशाभीतिकरीं प्रभजे भुवनेशीम्"। एतादृश आकारः परमेश्वर्या कथं धृत इत्यत आह-समस्यमानस्य पदस्य पूर्वभागः कवीन्द्राणां चेतः कमलवनेति। कवीन्द्राणां यानि चेतांसि तान्येव कमलवनानि, तेषामनुरागरूपारुणगुणरसप्रकाशो यथा स्यादिति। कमलानामरुणगुणपरिमलप्रकाशादिप्राप्तिस्तु बालार्ककिरणभासैव। तदुक्तं-"एतत्सरसिजकुट्मलस्वकृत्यं भित्वा तज्जलभरमागतं बहिर्यत्। आमोदप्रकटनमिन्दिरानिवासः तत्सर्वं दिनकरकृत्यमामनन्ति" इति। अत्र पञ्चमी समुद्धारः[1]। कवीन्द्राणां चेत इति श्लोकरहस्यार्थः-

---

1 कएईलह्रीं हसकलह्रीं हकहलह्रीं हकएँलह्रीं हकलसह्रीं

अत्र पञ्चमीसमुद्धारोऽपि श्रीमदाराध्यचरणाः। वागीश्वरीवर्णन वाग्भवकूटे पूर्वोत्तरा द्वाभ्यां मूलविद्या द्वयोः कूटद्वयं चेतः हृत्, ब्रह्म व्योम कमल एतदान्तं वनमाला शिवः आतपरुचि भूबीजं अरुणाकारा महामाया नादबिन्दुविभूषिता। विरिञ्चिः कः प्रेयसी शक्तिः व्योम हः, तरलतरः पवनः तरो लकारः श्रृंगारलहरी लज्जा एतद्गभीराभिर्वाग्भिः - एतत्पञ्चकूटजपनरूपाभिः, सुधारसमृयगूहिताभिरिति। एतत्सर्वं रजोगुणात्मकत्वाद्राजसमेव ॥ १६ ॥

## तात्पर्यदीपिनी

सर्वप्रसिद्धा एषा जागर्ति सर्वशुक्ला सरस्वतीति लोकस्थितिः। अन्ये महात्मानो भगवतीमरुणामेव चिन्तयन्ति। ततश्च शीघ्रं कविताप्रवाहो भवतीति तत्प्रख्याय अरुणाध्यानमाह-**कवीन्द्राणामिति**-हे मातः ते अमी सन्तो वसिष्ठवाल्मीकिप्रभृतयः, सतां सभासदां वाग्भिः वाग्विलासैः रञ्जनं हृदयानुरञ्जनं विदधति संपादयन्ति। सहृदयहृदयानन्दकारि यद्वचोवैदग्ध्यं सैव कवितेति। उक्तं च-"कविः पिता योषितां च पाठको रसिकः पतिः। कवितायुवतेर्नूनं सोदराश्च विवेकिनः। कुकवित्वे पुनः साक्षान्मृतिमाहुर्मनीषिणः" ॥ किं भूताभिर्वाग्भिः। विरिञ्चिप्रेयस्याः विरिञ्चेर्ब्रह्मणः प्रिया प्रेयसी सरस्वती तस्याः, तरुणतरश्रृंगारलहरीगभीराभिः, तरुणतरः अतियौवनः यः श्रृंगारः तस्य लहरी उद्रिक्तप्रवाहः तेन गभीराः अतिगंभीराः ताभिः। ते के? ये कतिचिद्विरलाः सन्तः, भगवतीमरुणामेव अरुणाख्यां अरुणवर्णां च भजन्ते सेवन्ते। किं विधां भवतीम्? कवीन्द्राणां कवीश्वराणां चेतःकमलवनबालातपरुचिं, चेतांस्येव कमलानि पद्मानि, तेषां वनं खण्डं तस्य बालातपरुचिः बालार्ककिरणाकारा तां तथोक्ताम् ॥ १६ ॥

## पदार्थचन्द्रिका

इदानीं भवानीभजनस्य मोक्षफलत्वेऽपि महाकविवाल्मीक्याद्याह्लादकं वाग्विलासमानुषंगिकफलमाह-कवीन्द्राणामिति। हे भवानि, ये सन्तोऽरुणामेवारुणवर्णामेव भवतीं भजन्ते, अमी भक्ताः सतां व्यासवाल्मीकिप्रभृतीनामपि रञ्जनमाह्लादं वाग्भिर्विदधति। वाचामाह्लादकत्वे हेतुमाह-विरिञ्चेः प्रेयस्याः अतिप्रियायाः सरस्वत्यास्तरुणतरा ये श्रृंगाराः उपमाद्यलंकाराः तेषां लहरी परंपरा तया गभीराभिः अगाधाभिः प्रचुराभिरित्यर्थः। श्रीभवानीं विशिनष्टि-कवीन्द्राणां चेतांसि कमलानीव चेतःकमलानि चेतःकमलानां वनं समूहस्तस्य बालातपवत् रुचिर्यस्यास्ताम्। कतिचिन्नतु सर्वे। अतः सर्वं परित्यज्य त्वमेव भजनीया भुक्तिमुक्तिहेतुत्वादिति भावः ॥ १६ ॥

## डिण्डिमभाष्यम्

सर्वत्र प्रसिद्धिरेषा जागर्ति 'सर्वशुक्ला सरस्वती' इति, लोकस्थितिरेषा। अन्ये तु केचिन्महात्मानः भगवतीमरुणामेव चिन्तयन्ति, ततश्च शीघ्रं कविताप्रभावो भवतीति सिद्धम्। तत्प्रख्या-

पनायानन्तरश्लोकमवतारयति—**कवीन्द्राणामित्यादि** । कवीन्द्राणां वर्णयितृश्रेष्ठानां, चेत:कमलवनबालातपरुचिं हृदयपद्माटवीबालार्ककिरणाकारां भगवतीमेव ये केचित् सन्तो भजन्ते तद्भजनजनितापूर्ववाग्वृत्तयस्ते खलु अमी साधका: विरिञ्चिप्रेयस्या: सरस्वतीदेव्या अभ्यन्तरवर्तिनी तरलतरा निरन्तरोच्चलितसौभाग्यशृङ्गारलहरी कामरसलक्ष्मीतरङ्गमालिकामावर्तते तद्वद्गभीराभि: गूढार्थप्रख्यापयित्रीभिर्वाग्भि: भणितिभि: सतां सहृदयानां रसिकानां रञ्जनं मनोह्लादनं, विदधति सम्पादयंति । सहृदयहृदयानन्दकारि यद्वचोवैदग्ध्यं सैव कविता नाम । उक्तं हि साहित्यमीमांसायाम्—"कवि: पिता च योषाया: पाठको रसिक: पति: । कवितायुवतेर्नूनं सोदराश्च विवेकिन: ॥" किञ्च तत्रैव " न कवित्वमधर्माय मृत्यवे दण्डनाय च । कुकवित्वं पुन: साक्षान्मृतिमाहुर्मनीषिण: ।" किं बहुना सहृदयसभारञ्जनं कवित्वं श्रीललितामहाभट्टारिकाचरणारविन्दे समर्पयामि । यत्र क्वापि दुर्लभामिति निश्चितार्थ: । अन्या देवता अन्यानि फलानि प्रयच्छन्तु नाम, सकलगुणप्रधानभूतपृथ्वीमण्डलैकछत्रराज्यसमानं सर्वविद्यारत्नं सुकवित्वं दातुं प्रगल्भा भगवती श्रीमहाभट्टारिकैवेति सकलतन्त्रोपतन्त्रसङ्गृहीतोऽर्थ: ॥ १६ ॥

## गोपालसुन्दरी

तत्रैव राजसं ध्यानमाह-कवीन्द्राणामिति—ये सन्त:, कतिचित् कियन्त:, अरुणामेव भवतीं भजन्ते, अमी सन्त:, वाग्भि: सतां सहृदयानां रञ्जनं विदधति । भवतीं कीदृशीम्? कवीन्द्राणां वर्णयितृश्रेष्ठानां चेतांस्येव कमलवनानि, तत्र बालातपरुचिमुद्यत्सूर्यकिरणाकारां तत्प्रकाशिकामित्यर्थ: ; वाग्भि: कीदृशीभि:? विरिञ्चिप्रेयस्या: सरस्वत्या: तरलतरा उल्लसिता या शृङ्गारलहरी कामरसप्रवाह:, तद्वद्गभीराभि: गूढार्थप्रतिपादिकाभि:, यथा सरस्वत्या: कामोद्रेको गूढ: तथा गूढार्थाभिरित्यर्थ: । यद्वा अमी सतां रञ्जनं सरस्वत्याश्च रञ्जनं विदधति, तरुणतराणां स्त्रीणां पुरुषाणां तरुणतरा समृद्धा वा या शृङ्गारलहरी शृङ्गाररसतरङ्गास्तै: गभीराभिरित्यर्थ: ।

**विष्णुपक्षे**—भवति! त्वयि त्वदङ्के विद्यमानां ई लक्ष्मीं ये भजन्ते इत्यर्थ: । कवीन्द्राणामित्यादि लक्ष्मीविशेषणं, शेषं समानम् ॥

## आनन्दलहरीटीका

तस्यैव राजसं ध्यानमाह-**कवीन्द्राणामिति**-ये कतिचित्सन्त: भवतीं त्वां अरुणां रक्तवर्णामेव भजन्ते, अमी वाग्भि: सतां कवीनां रञ्जनं प्रीणनं विदधति । कीदृग्भि:, विरिञ्चिप्रेयस्या: ब्रह्मण: प्रियाया: सरस्वत्या: तरलतरा अत्युच्छलिता शृंगारस्य लहरी तरंगस्तेन गभीरा गहनार्था या वाक्, तत्तुल्याभि: सरस्वत्या: शृंगाररसोत्तरवाक्सदृशीभिरित्यर्थ: । अथवा सरस्वत्या वाग्भिरित्यन्वय: । तेषां या वाक् सा सरस्वत्या एव तज्जिह्वाग्रगाया इति भाव: । सरस्वत्या रञ्जनं सतां च रञ्जनमिति

वाऽर्थः। सतामित्यत्र सभारञ्जनमित्यपि क्वचित्पाठः। भवती कीदृशी, प्रकृष्टकवीनां मनःकमलवनेषु अभिनवरविरश्मितुल्यकान्तिः, तेषां मनःप्रकाशिकामिति भावः।

**सवित्रीभिर्वाचां शशिमणिशिलाभङ्गरुचिभिः**
**वशिन्याद्याभिस्त्वां सह जननि संचिन्तयति यः।**
**स कर्ता काव्यानां भवति [1]महतां [2]भङ्गिरुचिभिः**
**वचोभिर्वाग्देवीवदनकमलामोदमधुरैः ॥ १७ ॥**

ஸவித்ரீபிர்வாசாம் ஶஶிமணி ஶிலாபங்கருசிபி:
1 4 1 4 3 1 4
வஶின்யாத்யாபிஸ்த்வாம் ஸஹ ஜனனி ஸஞ்சிந்தயதி ய: ;
3 4 1 1 1 1
ஸ கர்தா காவ்யானாம் பவதி மஹதாம் பங்கிருசிபி:
1 1 1 4 1 1 4 3 1 4
வசோபிர்வாக் தேவீவதனகமலாமோத மதுரை:
1 4 3 3 3 1 3 4

चन्द्रकांतमणिशकलों सी रुचिवाली, वाणी जनयित्री,
वशिनी आदि शक्तियों, जोगिनियों समेत, हिमगिरिपुत्री!
तेरे भव्य-रूप का ध्यान भाग्यशाली जो करता है।
बनता वह ऐसे अनुपम अद्भुत काव्यों का कर्ता है,
जिन में महिमान्वित कवियों की सी मधुशैली रहती हो
वाग्देवी मुखकमल परिमलमधुर गिरायें रहती हों! ॥

## ॥ लक्ष्मीधरा ॥

सवित्रीभिः जनयित्रीभिः वाचां गिरां शशिमणिशिलाभङ्गरुचिभिः चन्द्रकान्तमणिशकलतुल्यकान्तिभिः, दलितचन्द्रकान्तमणेः अतिधावल्यं लोकसिद्धम्। वशिन्याद्याभिः वशिनीप्रमुखाभिः। तद्गुणसंविज्ञानो बहुव्रीहिः—वशिनी आद्या यासां ताः शक्तयोऽष्टौ वशिन्याद्याः, योगिन्यो द्वादश, गन्धाकर्षिण्यादयश्चतलः, इति वशिन्याद्याः। अत्र एकस्य आद्यशब्दस्य लोपः, वशिन्याद्याद्या इत्यर्थः। वशिन्यष्टकं—वशिनी, कामेश्वरी, मोदिनी, विमला, अरुणा, जयिनी, सर्वेश्वरी, कौलिनी। एताभिः त्वां भगवतीं सह साकं जननि हे मातः, संचिन्तयति यः, सः साधकः कर्ता रचयिता काव्यानां प्रबन्धानां भवति समर्थः प्रभवति महतां महात्मनां कालिदासप्रभृतीनां भङ्गिरुचिभिः भङ्गीनां रेखाणां रुचिभिः स्वादुभिः वचोभिः वाग्विलासैः

---

1 कविताभंगि 2 भङ्गिसुभगैः

वाग्देवीवदनकमलामोदमधुरैः वाग्देव्याः भारत्या वदनकमले यः आमोदः परिमलः तेन मधुरैः अव्यक्तैः, पुंभावमापन्नायाः भारत्याः वाग्विलासा इमे इत्येवं भ्रमजनकैरित्यर्थः ॥

अत्रेत्थं पदयोजना—हे जननि, वाचां सवित्रीभिः शशिमणिशिलाभङ्गरुचिभिः वशिन्याद्याभिः सह त्वां यः संचिन्तयति स महतां भङ्गिरुचिभिः वाग्देवीवदनकमलामोदमधुरैः वचोभिः काव्यानां कर्ता भवति ॥

अत्रेदमनुसंधेयम्—'वशिन्याद्याभिस्त्वाम्' इत्यत्र त्वामित्यनेन भगवत्याः स्वरूपमुक्तम्। भगवत्याः स्वरूपं तु पञ्चाशद्वर्णात्मिका मातृकैव। एतत्तु 'शिवः शक्तिः कामः' इत्यादिश्लोकव्याख्यानावसरे प्रपञ्चयिष्यते। सेयं पञ्चाशद्वर्णात्मिका मातृका अष्टवर्गात्मिका भवति। ते चाष्टवर्गाः अकचटतपयशादयः। अकारादयः षोडश स्वराः प्रथमवर्गः। कादयः पञ्च द्वितीयः। चादयः पञ्च तृतीयः। टादयः पञ्च चतुर्थः। तादयः पञ्च पञ्चमः। पादयः पञ्च षष्ठः। यादयश्चत्वारः सप्तमः। शादयः पञ्च अष्टमः। एवं अष्टवर्गात्मिका भगवती मातृका त्रिपुरसुन्दरी अकचटतपयशवर्गेषु यथाक्रमं वशिन्यादिशक्तिभिर्योजिता बिन्दुत्रिकोणात्मकशिवचक्रचतुष्टयवसुकोणदशारद्वितयचतुर्दशकोणात्मकेषु अष्टसु चक्रेषु योजिता ध्याता सती काव्यकर्तृत्वसंपादिका। वशिन्याद्याभिरिति आदिशब्देन कामेश्वरीप्रभृतीनां अष्टानां संग्रहणं विद्यादिद्वादशयोगिनीसंग्रहणं गन्धाकर्षिण्यादिचतुष्टयसंग्रहणं कृतमित्युक्तं भवति। वशिन्यष्टकमुक्तम्। योगिनीद्वादशकं तु विद्यायोगिनी, रेचिकायोगिनी, मोचिकायोगिनी, अमृतायोगिनी, दीपिकायोगिनी, ज्ञानयोगिनी, आप्यायनीयोगिनी, व्यापिनीयोगिनी, मेधायोगिनी, व्योमरूपा योगिनी, सिद्धिरूपा योगिनी, लक्ष्मीयोगिनी। एवं द्वादशयोगिनीभिः सार्धं वशिन्याद्यष्टकं मिलित्वा विंशतिकलाः भवन्ति। ताः विंशतिकलाः शुद्धस्फटिकसंकाशाः दशारयुग्मकोणेषु संचिन्तनीयाः उक्तफलदाः। अयं च भूप्रस्तारभेदः। भूप्रस्तारः 'चतुःषष्ट्या तन्त्रैः' इत्यादिश्लोकव्याख्यानावसरे निपुणतरं निरूप्यते। गन्धाकर्षिणी, रसाकर्षिणी, रूपाकर्षिणी, स्पर्शाकर्षिणी च चतुर्द्वारेषु योजिताः उक्तफलदाः। तथा च श्रुतिः—गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ अस्या अर्थः—गन्धद्वारां गन्धरसरूपस्पर्शाः गन्धशब्देन संगृहीताः, तेन गन्धाकर्षिण्यादयः अधिदेवताः संगृहीता भवन्ति—गन्धाकर्षिणी, रसाकर्षिणी, रूपाकर्षिणी, स्पर्शाकर्षिणी चेति। ताभिर्युक्तानि चतुर्द्वाराणि यस्यां सा गन्धद्वारा, तां गन्धद्वाराम्। दुराधर्षां दुष्प्रधर्षां, मन्दभाग्यानामिति शेषः। नित्यपुष्टां नित्यानन्दस्वरूपिणीम्। करीषिणीं गन्धाद्याकर्षिणीमित्यर्थः। यद्वा, करिभिः गजैः ईषिणीं परिवृताम्। ईश्वरीं अधिदेवतां सर्वभूतानाम्। तां इह चक्रे उपह्वये श्रियं श्रीविद्याम्। गन्धद्वारामिति गन्धाकर्षिणीचतुष्कं वशिन्याद्यष्टकं योगिनीद्वादशकं

संगृहीतम् । तथा च शंभुवचनम्—'मातृकां वशिनीयुक्तां योगिनीभिः समन्विताम् । गन्धाद्याकर्षिणीयुक्तां संस्मरेत्त्रिपुराम्बिकाम् ॥' इति ॥

अत्रेदमनुसंधेयम्—वशिन्यादयः शक्तयः पञ्चाशद्वर्णात्मिका इत्युक्तम् । तत्र वशिनी शक्तिः स्वरात्मिका । स्वराः षोडश अकारादयः । तेषां स्वरूपं सनत्कुमारसंहितायां पञ्चशत्यामुक्तं संक्षेपेण कथ्यते—अकारात्मिका शक्तिः अष्टभुजा पाशाङ्कुशवराभयपुस्तकाक्षमालाकमण्डलुव्याख्यामुद्राकरा । एवं आकाराद्यात्मिकाः शक्तयः शुभ्रवर्णाः । इयांस्तु विशेषः—अकारात्मिकायाः शक्तेः मण्डलं अशीतिलक्षयोजनायतम् । आकारस्य तद्द्विगुणम् । इकारस्य नवतिलक्षयोजनायतम् । ईकारस्य तद्द्विगुणम् । उकारस्य कोटियोजनपरिमितपरिणाहं मण्डलम् । ऊकारस्य तद्द्विगुणम् । ऋकारस्य पञ्चाशल्लक्षयोजनपरिमितं मण्डलम् । तद्द्विगुणं ॠकारस्य । तद्द्विगुणं ऌकारॡकारयोरपि । एवं एकारस्य सार्धकोटिपरिणाहं मण्डलम् । ऐकार ओकार औकाराणां सममेव एकारेण । बिन्दुविसर्गयोस्तु अकारद्विगुणं मण्डलम् । व्यञ्जनशक्तीनां अकारमण्डलादर्धं मण्डलम् । ताः शक्तयः पाशाङ्कुशाक्षमालाकमण्डलुधराः । अन्तस्थास्तु पाशाङ्कुशाभयवरकराः । ऊष्माणस्तु पाशाङ्कुशाक्षमालावरकराः । ळकारक्षकारौ पाशाङ्कुशैक्षवशरासनपुष्पबाणयुक्तकरौ । एताः शक्तयः पञ्चाशद्वर्णात्मिकाः ॥

केचित्तु—स्वरात्मिकाः शक्तयः स्फटिकाभाः, कादयो मावसानाः विद्रुमाभाः, यादयो नव पीतवर्णाः, क्षकारं अरुणवर्णः इति । अपरे तु—अकारादयो धूम्रवर्णाः, ककारादयः ठान्ताः सिन्दूरवर्णाः, डादिफान्ताः गौरवर्णाः, बादिलान्ताः अरुणवर्णाः, वादिसान्ताः कनकवर्णाः, हक्षौ तटिदाभौ, ळकारस्तु लकार एवान्तर्भूतः इति वदन्ति । इदमेवास्मन्मतं भगवत्पादाचार्याणामपि संमतम् । एतत्सर्वं सुभगोदयव्याख्यानावसरे चन्द्रकलायां सम्यङ्निरूपितमस्माभिः ॥ १७ ॥

## सौभाग्यवर्धनी

वाग्भवस्यैव सात्विकध्यानान्तरमहिमानमाह—सवित्रीभिरिति । चन्द्रशिलाखण्डरुचिभिः; वशिनी, कामेश्वरी, मोदिनी, विमला, अरुणा, जयिनी, सर्वेश्वरी, कौलिनीत्यष्टवाग्देवताभिः सह हृदये यश्चिन्तयति, स कर्ता काव्यानां भवति । वाग्देवीवदनकमलामोदमधुरैर्वचोभिः सरस्वतीमुखाम्भोजसौरभ्यमनोहरैः वचसां चातुरीभिः, सुभगैः शोभमानं भगं ऐश्वर्यं; विविधालंकारादिनिरूपणलसद्भिरिति भावः ॥

## अरुणामोदिनी

एवमारुण्यध्यानेन मधुरवचोभिः सभारञ्जनमुक्त्वा तस्यामेव ध्यानविशेषेण महाकाव्यकर्तृत्वं फलमाह—सवित्रीभिरिति । हे जननि मातर्भगवति, वशिन्यादिसर्वशक्तीनां कारणभूते इति वा । य उपासकः महाकाव्यकर्तृत्वं कामयमान इत्यर्थः । वाचां गिरां सवित्रीभिः; जनयि-

त्रीभिः मातृकादेवतात्वादिति भावः। शशिमणिशिलाभङ्गरुचिभिः चन्द्रकान्तरत्नशकलशुभ्रशोभाभिः; वशिन्यादीनां स्फटिकवद्धावल्यमागमेषु प्रसिद्धम्। वशिनी आद्या यासां ताभिरिति तद्गुणसंविज्ञानो बहुव्रीहिः। वशिनी कामेश्वरी मोदिनी विमला अरुणा जयिनी सर्वेश्वरी कौलिनीसमाख्याभिः अकचटतपयशवर्गेष्वष्टसु स्थिताभिः सर्वेष्टदाभिः शक्तिभिः सह; इदं चोपलक्षणं योगिन्यादीनाम्; तथा च विद्या, रेचिका, मोचिका, अमृता, दीपिका, ज्ञाना, आप्यायिनी, व्यापिनी, मेधा, व्योमरूपा, सिद्धरूपा, लक्ष्मीरूपा चेति द्वादश योगिन्यः; गन्धरूपरसस्पर्शाकर्षिणीनां चतुष्टयम्, एताभिश्च सहेत्यर्थः; 'मातृकां वशिनीयुक्तां योगिनीभिः समन्विताम्। गन्धाद्याकर्षिणीयुक्तां संस्मरेत्त्रिपुराम्बिकाम्॥' इति वचनात्। त्वामकारादिक्षकारान्तमातृकावर्णरूपिणीं भवतीं संचिन्तयति। अष्टवर्गात्मिकामेनां वशिन्यादिभिः संयोज्य बिन्दुत्रिकोणवसुकोणदशारद्वितयचतुर्दशकोणात्मकेष्वष्टसु चक्रेषु संयोज्य सम्यग्ध्यायति; स एवं ध्याता भङ्गिभी रचनाविशेषैः; वर्णनाकौशलैरित्यर्थः। सुभगैः सहृदयहृदयाह्लादिभिः। किं च, वाग्देव्या भारत्याः वदनकमलामोदवन्मुखपङ्कजसौगन्ध्यवन्मधुरैरामोदेन वा मधुरैः साक्षाद्वाणीमुखकमलनिःसृतैरिव स्थितैरित्यर्थः। वचोभिर्मृदुवाग्भिः, महतां काव्यानां, 'राजा राजवधूपुरोहितकुमारामात्यसेनाधिपा देशग्रामपुरीसरोऽब्धिसरितो हर्म्याण्यरण्याश्रमाः। मन्त्रो दूतरणप्रयाणमृगयाशैलर्त्विनेन्दूदयः शृङ्गारो विरहस्वयंवरसुरापानाम्बुखेलारतम्॥' इत्यादिलक्षणलक्षितवर्णनात्मकसंदर्भविशेषाणां कर्ता निर्माता भवति जायते। त्वदनुग्रहपात्रीकृतोऽहमिवेति भावः। अत्र 'सति वक्तरि सत्यर्थे सति शब्दानुशासने। अस्ति तन्न विना येन परिस्रवति वाङ्नदी॥' इत्यभियुक्तोक्तेः, अनेकजन्मार्जितसुकृतराशिं विना कविताकारणभूता प्रतिभा नोदेति। उदितायां च तस्यां तदनुरूपवाक्प्रसारोऽप्यतिदुर्लभः। लब्धे च तस्मिन्काव्यकरणमतिदुर्लभम्; तत्राप्युक्तवर्णनात्मकमहाकाव्यरचनाऽत्यन्तदुर्लभा। तादृशसहृदयहृदयाह्लादिप्रबन्धरचना च पूर्वोक्तरूपेण भवद्ध्यानेनैव भवति नान्येनेति, न भवत्तुल्यमिष्टप्रदातृ दैवतं लभ्यत इति भावः। महाकाव्यकर्तृत्वमभिलषद्भिरेव ध्येयमित्युपदेशः॥ १७॥

## आनन्दगिरीया

**सवित्रीभिरिति।** हे जननि यः स्वकीये हृदयकमले त्वां वशिन्याद्याभिः सह सञ्चिन्तयति, वशिनी कामेश्वरी मोदिनी विमला अरुणा जयिनी सर्वेश्वरी कौलिनी इत्यष्टाभिः वाग्देवताभिः सह ध्यायति, स वचोभिः काव्यानां कर्ता भवति। किं लक्षणाभिः, वाचां सवित्रीभिः। वाचां वाक्पालिकानां प्रसन्नाभिः मातृकाभूताभिः, अकचटतपयश इति वर्गाष्टकाधिष्ठायिन्यो भवन्ति। शशिमणिशिलाभंगिरुचिभिः चन्द्रकान्तमणिप्रभापटलपाण्डुराभिः, किंलक्षणैर्वचोभिः कविताभंगिसुभगैः, कविताया भंगास्तरंगास्तैः सुभगैः, पुनः किंभूतैः, वाग्देवीवदनकमलामोदमधुरैः वाग्देवतावदनकमलो-

ल्लासिपरिमलमधुरमञ्जुलैः काव्यानां सालंकारसगुणशब्दार्थघटितानां वाक्यानामिति। सवित्रीभिर्वाचामित्यादिपद्यस्य रहस्यार्थमाह—संवित् ब्रह्म ह अधः अ विष्णुः ब्रह्म वै विश्वं दधाति। ब्रह्मातिभूस्वरूपं भावं जलं लज्जा, इत्येकां पञ्चमीमुद्धृत्य सिंहावलोकनन्यायेन सप्तमीं चक्रेश्वरीमाह—सवित्रीभिरिति लज्जा, शशिमणिः शशिनो मणिः कान्तिः लक्ष्मीः, शिलाभंगरुचिभिः, शिला जडमयं जगत्, तस्य भंगो विनाशः, तत्कान्त्या युता परेति यावत्। त्वां सप्तमीं वशिनीवाग्देवताष्टकैः परिवारगणैः समं य इत्यादिना। सर्वरोगहरचक्रे *ह्रीं क्लीं ब्लूं त्रिपुरासिद्धाचक्रेश्वरीति यावत्॥ १७॥

## तात्पर्यदीपिनी

यदेतत्प्रक्रान्तं सारस्वतध्यानसौभाग्यकथनं तत्रावरणदेवताविशेषपरीतत्वेन भावनया कल्पान्तरमाह—**सवित्रीभिरिति**—हे जननि! स पुमान्, महतां अष्टादशलक्षणलक्षितानां काव्यानां कर्ता भवति। महाकाव्यलक्षणम्—आशीर्नमस्क्रियावस्तुनिर्देशान्यतमक्रिया। महावंशस्तत्प्रभावो राजा तस्य महापुरी। मन्त्रिणश्चतुराश्च श्रीः स्फूर्तिः कीर्तिप्रतापयोः। प्रतिपक्षोऽस्य सदृशः तस्याभ्यधिक एव च। तस्योपरि जिगीषा च तदर्थं मन्त्रसंभृतिः। तत उत्थानशक्तिश्च प्रभुशक्तिसमन्विता। यात्रा कटकसन्नाहसैन्यस्त्रीणां च वर्णनम्। तद्द्वारालंबिश्रृंगारस्तत्र सेनानिवेशनम्। उद्यानसलिलक्रीडामधुपानरतोत्सवाः। चन्द्रसूर्योदयास्तौ च सन्ध्या षड्ऋतुवर्णनम्। महायुद्धं च विजयो लोकोपकृतिघोषणा। एतानि च ततोऽन्यानि स्थानानि सुबहूनि च। महाकाव्यस्य संपत्तौ लक्षणत्वे च तान्यपि'' इति। कैर्वचोभिः वाग्विलासैः। किं भूतैर्वचोभिः? भंगिसुभगैः एकस्मिन्नर्थे नानाविधशब्दरचनावैदग्ध्यविशेषो यस्तेन सुभगानि तैः। पुनः वाग्देवीवदनकमलामोदः सौगन्ध्यं तेन मधुराणि तैः। स कः? साधकः। यस्त्वां वशिन्याद्याभिः वाचां गिरां सवित्रीभिः जनयित्रीभिः। पुनः, शशिमणिशिलाभंगरुचिभिः शशिमणेश्चन्द्रकान्तस्य शिला तस्या भंगः शकलं तत्तुल्या रुचिः कान्तिः यासां ताभिः तथोक्ताभिः॥ १७॥

## पदार्थचन्द्रिका

इदानीं यद्ध्यानेन व्यासादिवत् महाकाव्यानां कर्तृत्वं भवति तद्ध्यानमाह-**सवित्रीभिरिति**। हे जननि वशिन्याद्याभिर्वाग्देवताभिः सह यस्त्वां सञ्चिन्तयति ध्यायति, स वचोभिः कवित्वैः काव्यानां कर्ता भवति। कथं भूतैर्वचोभिः। भंगिभिः रचनाविशेषैः, सुभगैः सुन्दरैः, वाग्देवीवदनकमलामोदा इव मधुराणि आह्लादकानि तैः। वचोभिरिति तृतीया उपलक्षणे। महतां दोषरहितत्वे सति बहुगुणविशिष्टानाम्। वशिनी आद्या यासां ताभिः। वाग्देवता एव विशिनष्टि।

---

* सांप्रदायिको मन्त्रः ह्रीं श्रीं सौः।

सवित्रीभिः वाचां वाणीनां जनयित्रीभिः उत्पादिकाभिः। कर्तृकर्मणोः कृति षष्ठी। शशिमणिशिलाश्चन्द्रकान्तमणिशिलाः, तासां भंगयः खण्डानि तासां रुचिर्यासां ताभिः।

## डिण्डिमभाष्यम्

तदेतत्प्रथमं प्रक्रान्तं सारस्वतध्यानसौभाग्यकथनं, तत्र आवरणदेवताविशेषत्वेन भावनया कल्पानन्तरं फलान्तरञ्च समुद्भावयन् इदमाह-**सवित्रीभिर्वाचामिति**-सवित्रीभिः मातृकाभूताभिः वशिन्याद्याभिः श्रीश्रीमहाभट्टारिकाचक्रसिंहासनतृतीयावरणाष्टारचक्रदेवताभिरित्यर्थः। ताः खलु वशिन्याद्या अकचटतपयवर्णसहिताः सबीजास्तत्रार्च्यन्ते। ताभिः। पुनः कीदृशीभिः शशिमणिशिलाभङ्गरुचिभिः चन्द्रकान्तमणिभङ्गसमानतनुकान्तिधावल्यधवलाभिः एताभिः सह त्वां यः सञ्चिन्तयति सम्यक्तया ध्यानपदवीमारोपयति स महाकाव्यानां कर्ता भवति। तन्महाकाव्यकरणं शब्दैः कीदृक्, सौभाग्यशालिभिरित्याह-भङ्गिसुभगैरिति। एकस्मिन्नर्थे नानाविधशब्दरचना वैदग्ध्यविशेषा भङ्ग्यः ताभिः सुभगैः, पुनः किम्भूतैः? वाग्देवीवदनकमलामोदसुभगैः सरस्वतीमुखारविन्दसौगन्ध्यबन्धुरप्रवाहसहचरैर्वचोभिर्महाकाव्यकर्तारो भवन्ति इति। महाकाव्यलक्षणं काव्यमीमांसायामुक्तम्— "आशीर्नमस्क्रियावस्तुनिर्देशान्यतमक्रिया। महावंशस्तत्प्रभावो राजा तस्य महापुरम्॥ मन्त्रिणश्चतुरङ्गः श्रीः स्फूर्तिः कीर्तिप्रतापयोः। प्रतिपक्षोऽस्य सदृशस्ततोऽप्यधिक एव वा॥ तस्योपरि जिगीषा च तदर्थं मन्त्रसम्भृतिः। तत उत्थानशक्तिश्च प्रभुशक्तिसमन्विता॥ यात्रा कटकसन्नाहः सैन्यस्त्रीणाञ्च वर्णनम्। तद्द्वारालम्बशृङ्गारस्तत्र सेनानिवेशनं॥ उद्यानसलिलक्रीडा मधुपानं रतोत्सवः। चन्द्रसूर्योदयास्तौ च सन्ध्याषड्ऋतुमण्डली॥ पुनः प्रयाणसङ्घट्टः शत्रूणां सैन्यडम्बरः। दुर्गभङ्गप्रलापश्च वह्निदाहः पलायनम्॥ महायुद्धञ्च विजयो लोकोपकृतिघोषणा। जगतां शान्तिविस्तारः पुनः सौख्योदयो नृणाम्॥ एतानि च ततोऽन्यानि स्थानानि सुबहूनि च। महाकाव्यस्य सम्पत्तौ लक्षणत्वेऽर्पितान्यपि॥" ईदृग्लक्षणलक्षितमेव महाकाव्यं भवति॥ १७॥

## गोपालसुन्दरी

**सवित्रीभिरिति।** हे जननि वाचां सवित्रीभिः मातृकाभिः, शशिमणिशिला चन्द्रकान्तमणिपाषाणः, तस्य भङ्गा भज्यमानचन्द्रकान्तमणिरित्यर्थः, कृदभिहितन्यायात्। तद्वद्रुचिः कान्तिर्यासां ताभिः, वशिनी कामेश्वरी मोदिनी विमला अरुणा जयिनी सर्वेश्वरी कौलिनीभिः सह यस्त्वां संचिन्तयति स महतां काव्यानां महाकाव्यानां कर्ता भवति, कैः? वचोभिः, कीदृशैः? भङ्गिसुभगैः नानाविधशब्दरचनावैदग्ध्यविशेषा भंग्यः ताभिः सुभगैः शोभमानैः वाग्देवीवदनकमलामोदमधुरैः सरस्वतीमुखारविन्दसौरभवन्मधुरैः हृद्यैरित्यर्थः॥

**विष्णुपक्षे**—वशो अस्यास्ति जगदिति वशिनी, रुक्मिणी तदाद्याभिः रुक्मिणीसत्यभामा-नाग्नजिती-सुविन्दा-मित्रविन्दा, सुलक्षणा-जाम्बवती-सुशीलाभिःसहजननीति क्रियाविशेषणं, देवकीसंहितं यथा स्यात्तथा इत्यर्थः ; तेन वसुदेवदेवकीनन्दयशोदाबलभद्रगोपगोप्य इति द्वितीयावरणं प्राप्तम् । यद्वा जननीवाचरति जननी विष्णुः आचारक्विबन्तात्कर्तरि क्विप्, तस्य संबोधनं हे जननि इति प्रथम-लिङ्गग्रहणञ्चेति, नदीसंज्ञायां, अम्बार्थनद्योर्ह्रस्वः, शेषं समानम् ॥ १७ ॥

## आनन्दलहरीटीका

तस्यैव तामसं ध्यानमाह—**सवित्रीभिरिति** । हे जननि, वशिन्याद्याभिः वशिनीकामेश्वरीप्रभृतिभिः सह त्वां यः सञ्चिन्तयति, स वचोभिर्महतां काव्यानां कर्ता भवति । वशिन्याद्याभिः कीदृशीभिः वाचां सवित्रीभिः जनयित्रीभिः मातृकारूपाभिः शशिमणिशिलाभंगस्य भग्नचन्द्रकान्तमणि-पाषाणस्य रुचय इव रुचयो यासां ताभिः, भंगपदस्य कृदभिहितो भाव इति न्यायाद्भग्नपरत्वम् । अतिवैशद्यलाभार्थं तदुपात्तम् । वचोभिः कीदृशैः, भंगी रचनाचातुर्यविशेषः, तेन सुभगैर्मनोहरैः । वाग्देव्याः सरस्वत्या वदनकमलस्य मुखपद्मस्यामोदेन सौरभेणेव मधुरैः स्पृहणीयैः । तदीया वाचो वाग्देवीमुखनिःसृता एवेति भावः ॥ १७ ॥

**तनुच्छायाभिस्ते[1] तरुणतरणिश्रीसरणिभिः[2]**
**दिवं सर्वामुर्वीमरुणिमनि मग्नां[3] स्मरति यः ।**
**भवन्त्यस्य त्रस्यद्वनहरिणशालीननयनाः**
**सहोर्वश्या वश्याः कति कति न गीर्वाणगणिकाः ॥ १८ ॥**

தனுச்சாயாபிஸ்தே தருணதரணி ஸ்ரீஸரணிபி:
1 12 4 1 1 1 4
திவம் ஸர்வாமுர்வீமருணிமனி மக்னாம் ஸ்மரதி ய: ;
3 3 1
பவந்த்யஸ்ய த்ரஸ்யத்வனஹரிண ஶாலீன நயனா:
4 1 1 3
ஸஹோர்வச்யா வச்யா: கதி கதி ந கீர்வாணகணிகா:
1 1 1 1 3 3 1

तरुण-सूर्य की सी आभावाले तव तन की शोभा में
गगन व भू को सारी मज्जित से, शंकरमनोभिरामे !
भावित जो करता है उसके क्यों करना हो जाती हैं—
वश में चक्तिहरणनयनी सुरगणिकायों जितनी भी हैं,
हाव भाव निपुणा उर्वशी सहित, जो शोभा दिव की हैं ! ॥

---

1. तेऽतरुण 2. श्रीधरणिभिः 3. सर्वामुर्वीमरुणिमनिमग्नां, सर्वामुर्वीमरुणमणिमग्नां

## लक्ष्मीधरा

तनुच्छायाभिः तनोः देहस्य छायाभिः कान्तिभिः ते भगवत्याः तरुणतरणिश्रीसरणिभिः तरुणतरणिः बालसूर्यः, तस्य श्रीः शोभा, तस्या इव सरणिः मार्गः सौभाग्यमिति यावत्, यासां ताभिः दिवं आकाशं सर्वां उर्वीं कृत्स्नां भूमिं, रोदःप्रदेशमित्यर्थः। अरुणिमनि आरुण्ये मग्नां, अत्यरुणामिति यावत्। यद्वा, अरुणिमनिमग्नां नितरां मग्नाम्। यथोक्तं शंभुना—'यावकाब्धौ निमग्नां यो दिवं भूमिं विचिन्तयेत्। तस्य सर्वा वशं यातास्त्रैलोक्यवनिता द्रुतम् ॥' इति। अतश्च अरुणिमशब्देन यावकाब्धिर्लक्ष्यते, यावकाब्धिमध्यस्थितामित्यर्थः। स्मरति चिन्तयति यः साधकः, भवन्ति अस्य साधकस्य त्रस्यद्वनहरिणशालीननयनाः त्रस्यन्तो वनहरिणाः; वनशब्दः स्वच्छन्दचारित्वलक्षणया अतित्रासं लक्षयति; तेषामिव शालीने ह्रीणे, अतिसुन्दरे इति यावत्, नयने यासां ताः तथोक्ताः सह साकं, ऊर्वशी नाम देवगणिका तया, वश्याः वशंगताः। कति कति आभीक्ष्ण्ये द्विरुक्तिः। न निषेधे। गीर्वाणगणिकाः देववाराङ्गनाः ॥

अत्रेत्थं पदयोजना—हे भगवति, तरुणतरणिश्रीसरणिभिः ते तनुच्छायाभिः सर्वां दिवं उर्वीं च अरुणिमनि मग्नां यः स्मरति अस्य त्रस्यद्वनहरिणशालीननयनाः गीर्वाणगणिकाः ऊर्वश्या सह कति कति न वश्या भवन्ति? सर्वा अप्सरसो वश्या भवन्तीत्यर्थः ॥ १८ ॥

## सौभाग्यवर्धनी

मध्यकूटध्यानमहिमानमाह—तनुच्छायाभिरिति। तनुकान्तिभिः तव बालार्करुचिभिः सर्वां च द्यां भुवं च मग्नां छन्नां यो ध्यायति, तस्य त्रस्यद्वनहरिणशालीननयनाः, ग्राम्यहरिणानां मनुष्यादिदर्शनेन त्रासो न भवति; अत उक्तं वनहरिणसादृश्यम्। एतादृश्य उर्वश्या सहिताः सुरवाराङ्गनाः कति कति वश्या न भवन्ति। तासां का गणनेति भावः। कति कतीति काकुरत्र वितर्कालंकारद्योतिनी। अनिमिषदृष्टीनां सुराङ्गनानां नयनचापल्यं वर्ण्यते, तत्रासां कामरूपत्वाभिप्रायेण ॥ १८ ॥

## अरुणामोदिनी

अथ कामपुरुषार्थासक्तस्य ध्यानविशेषमाह—**तनुच्छायाभिरिति**। हे जननि, य उपासकः स्त्रीवश्यकाम इत्यर्थः। तरुणतरणिश्रीसरणीभिः बालादित्यद्युत्यनुसारिणीभिः ते अरुणाया भवत्याः तनुच्छायाभिः देहकान्तिभिः हेतावभेदे वा तृतीया। दिवमन्तरिक्षं सर्वामुर्वीं भुवं चारुणिम्नि आरुण्ये नितरां मग्नाम्; ससम्यन्तपाठे आरुण्ये मग्नां स्मरति। द्यावापृथिव्यौ भवदीयारुणकान्तिसमुद्रमग्ने यो ध्यायति, अस्योपासकस्य, त्रस्यतां वनहरिणानां काननकुरङ्गाणामिति कातर्योक्तिः। तेषामिव शालीनानि चञ्चलानि; 'शालीनकौपीने अधृष्टाकार्ययोः' इति निपातः। नयनानि यासां ताः; कुरङ्गवदतिचञ्चलाक्ष्यः। अनिमिषाणामपि कार्यवशादक्षिस्पन्दो न विरुध्यत इति

'गुरुं नेत्रसहस्रेण चोदयामास वासवः' इत्यत्र मल्लिनाथः। गीर्वाणगणिकाः सुरवाराङ्गनाः। नानाविधहावभावादिभिस्तल्लोभकारणचातुर्यसूचनार्थं गीर्वाणेत्याद्युक्तिः। उरून् महतोऽपि वशयतीत्युर्वशी, अप्सरसां मुख्या काचिद्देवी। 'स्वर्वेश्या उर्वशीमुखाः' इत्यमरः। तया सह कति कति कियन्त्यः वश्याः स्वाधीना न भवन्ति; भवन्त्येवेत्यर्थः। तदुक्तम्—'यावकाब्धौ निमग्नां यो दिवं भूमिं विचिन्तयेत्। तस्य सर्वा वशं यातास्त्रैलोक्यवनिता द्रुतम्॥' इति। लघुस्तवे चोक्तम्—'ये सिन्दूरपरागपुञ्जपिहितां त्वत्तेजसा द्यामिमामुर्वीं चापि विलीनयावकरसप्रस्तारमग्नामिव। पश्यन्ति क्षणमप्यनन्यमनसस्तेषामनङ्गज्वरक्लान्तास्त्रस्तकुरङ्गशावकदृशो वश्या भवन्ति ध्रुवम्॥' इति॥ १८॥

## आनन्दगिरीया

पुनर्ध्यानान्तरं फलान्तरं चाह – **तनुच्छायाभिरिति**। हे भवानि, यो द्यावापृथिव्योः अरुणगुणैकाकारतासंपादिकारुण्यकान्तिकमनीयतनुं त्वां स्मरति ध्यायति तस्य मानुषे लोके चकोरनयना वश्या भवन्ति। किं, ऊर्वश्या सह गीर्वाणगणिका देवांगना अपि कति कति वश्या न भवन्ति किन्तु सर्वा अपीत्यर्थः। वशीकरणकर्मणि रक्तारुणाया एव ध्यानमागमे उक्तम्। स्त्रीराजलोकवश्यार्थे रक्तरूपां स्मरे द्यताम् इति। "यस्त्वां विद्रुमपल्लवद्रवमयीलेखामिवालोहितां आत्मानं परितः स्फुरत्-त्रिवलयां मायामभिध्यायति। तस्मै निन्दितचन्दनेन्दुकदलीकान्तारहारस्रजे निश्वासाश्रुमवाप्य दाहगहना मूर्च्छन्ति तास्ताः स्त्रियः" इति। कि लक्षणास्ताः, त्रस्यद्वनहरिणशालीननयनाः, संत्रासचपलकुरंगलोचनाः, किंलक्षणाभिस्ताभिः तनुच्छायाभिः, तरुणतरणिश्रीसरणिभिः बालादित्यसपत्नरागरुचिभिः। तनुच्छायाभिरिति श्लोकस्य रहस्यार्थः-अष्टमी सर्वसिद्धिचक्रस्य त्रिपुरासिद्धांबा, तनुः शरीरं संसारमिति यावत्। तत्र छायया बिंबेन वर्तमानो हंस इति। बहुवचनं अभिधानबाहुल्यात्। तरुणो महामोहांबुधिः तत्र तरणिर्नौका वाग्बीजं अन्यत्रानुस्वारात् युतं, मध्ये श्रीसरणिः तुर्यस्वरचिह्नं सः, उर्वीमरुणिमनिमग्नां एतत्त्रयं रेफलग्नं यावदिति। ह्स्रैं ह्स्क्ल्रीं ह्स्रौः प्रकृतार्थस्तु प्रकृतेः॥ १८॥

## तात्पर्यदीपिनी

अथ भगवत्याः सर्वभक्तवाञ्छितार्थसाधननिपुणं सरस्वतीध्यानं प्रकाशितमेव। तेन सर्वपाण्डित्यलाभाद्विद्याप्राप्तौ धर्मपुरुषार्थो लब्ध एव। चतुर्विधपुरुषार्थेषु आनन्दमयः कामपुरुषार्थः शृंगाररसालंबनभूततरुणीर्विना न सन्धत्ते। अतश्च तरुणीवशीकरणविद्यां प्रस्तौति—**तनुच्छायाभिरिति**—हे भगवति, अस्य त्रिभुवनसौन्दर्यराशिमूर्तेः परमेश्वरीभक्तस्य गीर्वाणगणिकाः गीर्वाणानां गणिकाः गीर्वाणानां देवानां गणिकाः योषितः, उर्वश्या सह कति कति वश्या न भवन्ति। अपि तु भवन्त्येव। किं विधाः? त्रस्यद्वनहरिणशालीननयनाः, त्रस्यन्तो बिभ्यन्तो ये वनहरिणाः तेषामिव

शालीनानि अतिसुन्दराणि नयनानि नेत्राणि यासां ताः। अस्य कस्येत्यपेक्षायां आह—यः साधकः दिवं स्वर्गं सर्वां सकलां उर्वीं भुवनं च ते तनुच्छायाभिः तन्वाः छायाः प्रभाः ताभिः सह अरुणिमनिमग्नां दिवं भूमिं च विचिन्तयेत्, तस्य सर्वं वशं याति, कुतस्त्रैलोक्यवनिता इति। अतश्चारुणिमशब्देन यावकाब्धिर्लक्ष्यते। किं भूताभिस्तनुच्छायाभिः? तरुणतरणिश्रीसरणिभिः तरुणो बालो यस्तरणिः तस्य श्रीः शोभा तस्या इव सरणिः मार्गः सौभाग्यं यासां ताः ताभिस्तथोक्ताभिः। पाटलवर्णध्यानं बहुधा वश्यकर्मणि नियुक्तम्। "देवी श्रीललिता ज्ञेया जनवश्ये च पाटला। पीता धनस्य संपत्तौ कृष्णा मारणकर्मणि। धूम्रा विद्वेषणे प्रोक्ता शृंगारे पाटलाकृतिः। सर्ववर्णा सर्वलाभे मुक्तौ ज्योतिर्मयीपरम्। ज्योतिर्मयं च तद्ध्यानं पञ्चब्रह्म सनामकम्। ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः। एते पञ्च महाप्रेताः पादरूपेण संस्थिताः" इति। भगवत्या मुखं ध्यात्वा भोगे मोक्षेऽपि चिन्तनीयम्॥ ॥ १८ ॥

## पदार्थचन्द्रिका

इदानीं सकलगीर्वाणगणिकावशीकरणं श्रीभवानीध्यानमाह—**तनुच्छाया**भिरिति। हे जननि, ते तव तनोः श्रीमूर्तेः छायाभिः कान्तिभिः सर्वां दिवं सर्वां चोर्वीं अरुणिमनिमग्नां यः स्मरति ध्यायति, अस्य ध्यातुः पुरुषस्य उर्वश्या सह गीर्वाणगणिका देवांगनाः कति कति न वश्या भवन्ति। अपि तु सर्वा एव वश्या भवन्तीत्यर्थः। कान्तिर्विशिनष्टि तरुणेति। सूर्यशोभायाः सोपानरूपाभिरित्यर्थः। अरुणाया भावोऽरुणिमा। अरुणिमनि निमग्ना अरुणिमनिमग्ना तां अरुणिमनिमग्नां, यद्वा अरुणिमनि मग्नामिति पदद्वयम्। तनुच्छायाभिरिति हेतौ तृतीया। एतदरुणिमनिमज्जनं द्यावापृथिव्योरिति। त्रस्यद्वनहरिणानामिव शालीने अधृष्टे नयने यासां ताः॥ १८॥

## डिण्डिमभाष्यम्

भगवत्याः प्रस्तुतायाः सर्वभक्तवाञ्छितार्थशतसाधननिपुणसारस्वतं ध्यानं सुप्रकाशितमेव, तेन समस्तविद्यापाण्डित्यलाभात् विद्याप्राप्तौ चतुर्विधपुरुषार्थेषु आनन्दमयः कामपुरुषार्थः सर्वलोकसम्मतः। तस्य सम्पत्तिः, शृङ्गाररसालम्बनभूता। सा तु तरुणीं विना न सम्पत्स्यते। ताश्च विपरीताश्चेन्न कामिनां सुखलेशः, अत एव तरुणीवशीकरणविद्या च कपालीश्वरीश्रीललितामहाभट्टारिकामेव चिन्तयतां तरुणीलोकवशीकरणसामर्थ्यवतीत्याह—**तनुच्छायेति**। हे परमेश्वरि! तव तरुणतरणिश्रीसरणिभिः बालादित्यलक्ष्मीसदृशकान्तिभिः, तनुच्छायाभिः देहप्रभाभिः, सर्वां दिवं आकाशं, उर्वीं भुवं च, अरुणिमनिमग्नां पाटलकान्तिसागरगर्भप्रविष्टां, यः स्मरति। अस्य त्रिभुवनसौन्दर्यराशिमूर्तेः त्रस्यद्वनहरिणशालीननयना भययुक्तदृष्टिसञ्चाराः सत्यः, गीर्वाणगणिकाः स्वर्वेश्याः, उर्वश्या नारायणोरुसम्भवया सुरनार्या सह, कति कति, न वश्या भवन्ति, अपि तु सर्वा एव वश्या भवन्ति, तस्य दासीभूय स्वेच्छया मदनसम्भोगनर्मसु नियोज्या भवन्ति। किंबहुना प्रकर्षेण तमेव भवती-

भक्तमेव साधारणं नायकीकृत्य कोटिकोटिशः देवाङ्गनाः एकं सहकारवृक्षं अनन्तकोटिभृङ्गमाला इव भजन्ते, तस्यैव वश्यास्तन्मयाश्च भजन्तीत्यर्थः। पाटलवर्णध्यानं बहुधा वश्यकर्मणि विनियुक्तम्। तथा चागमः—"देवी श्रीललिता ध्येया तत्तत्कर्मणि भेदतः। कर्मध्याने कृते देव्याः सर्वसौभाग्यवान् भवेत्॥ शान्तौ धवलवर्णाभा मोक्षधर्मे प्रकल्पते। स्त्रीवश्ये राजवश्ये जनवश्ये च पाटला॥ पीता धनस्य सम्पत्तौ कृष्णा मारणकर्मणि। धूम्रा विद्वेषणे प्रोक्ता शृङ्गारे पाटलाद्युतिः॥ सर्ववर्णा सर्वलाभे मुक्तौ ज्योतिर्मयी परम्। ज्योतिर्मयञ्च तद्ध्यानं पञ्चब्रह्मासनात्मकम्॥ ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः। एते पञ्च महाप्रेताः पादमूले व्यवस्थिताः"॥ एतदेव भगवत्या मुख्यं ध्यानं भोगेमोक्षेऽपि चिन्तनीयम्। प्रेतत्वं नाम महाधीरत्वम्। प्रेताः प्रकर्षेण इताः देवी शरीरसंसर्गातिशयं प्राप्ताः द्वारद्वारिकया। देव्याः कामेश्वरोत्सङ्गेन सङ्गः, कामेश्वरस्य सदाशिवेन सङ्गः, सदाशिवस्य मञ्चफलकतां प्राप्तस्य मञ्चखुरतां प्राप्तानां ब्रह्मविष्णुरुद्रेश्वराणां शिरोभिः सह संसर्गः। एतच्च मञ्चरूपं ध्येयाभिन्नमेव। इदं सप्ताननध्यानेन वायौ रूपमुच्यते। "भगवत्याः सप्तमं तु ध्यानं मञ्चासनं विदुः। यथैकस्यैव रूपस्य चतुरास्यषडाननाः। तथा सप्ताननाः प्रोक्ता रूपस्यैकस्य तेजसः॥" इत्यलमतिप्रसङ्गेन॥ १८॥

## गोपालसुन्दरी

मध्यकूटोपयुक्तं द्वाभ्यां ध्यानादिकमाह-**तनुच्छायाभिरित्यादि**।

अतरुणतरणिश्रीसरणिभिः बालादित्यकान्तिवर्त्मभूताभिः तत्सदृशीभिरित्यर्थः, तनुच्छायाभिः शरीरकान्तिभिः करणभूताभिः, सर्वां दिवमाकाशमुर्वीं पृथ्वीमरुणिमनिमग्नां लोहितकान्तिकवलितां यः स्मरति अस्य कति कति, गीर्वाणगणिका देववेश्या उर्वश्या सह वश्या न भवन्ति? अपि तु सर्वा वश्या भवन्त्येव, त्रसन्तो बिभ्यतो ये वनहरिणाः, गृहहरिणानां त्रासाभावात्, तद्वत् शालीनं शोभमानं नयनं यासां ता इत्यर्थः। अनिमिषदृष्टीनां सुराङ्गनानां कामरूपतया नयनचाञ्चल्यवर्णनमुपपन्नम्। **विष्णुपक्षेऽप्येवम्**॥ १८॥

## आनन्दलहरीटीका

कामराजाख्यमध्यमकूटस्य ध्यानमाह-**तन्विति**। यस्तव तनुच्छायाभिः शरीरकान्तिभिः सर्वां दिवं आकाशं, उर्वीं पृथ्वीमपि अरुणिमनिमग्नां लौहित्यमध्यगतां स्मरति, अस्य उर्वश्या सह कति कति गीर्वाणगणिका देववेश्या वश्या वशवर्तिन्यो न भवन्ति। अपि तु भवन्त्येवेति। कीदृशीभिः छायाभिः, तरुणा उद्भटा या तरणेः सूर्यस्य, अर्थाद्बालस्य, श्रीः कान्तिः, तत्सरणिभिः तत्सदृशीभिः इति। तरुणीत्यस्य तरणिविशेषत्वे लौहित्यातिशयप्रतीतेः श्रीविशेषणत्वमुचितम्। गणिकाः कीदृश्यः, त्रस्यन्तो भयवन्तो ये वनहरिणाः तेषामिव शालीनानि शोभमानानि नयनानि यासां ता

इत्यर्थः। गृहहरिणानां तादृशत्रासाभावात् वनहरिणवद् देवांगनानां नयननिमेषाद्यभावेऽपि कामरूपतया नयनचांचल्यवर्णनमुपपन्नम् ॥ १८ ॥

**मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य तदधो[1]**
**[2]हरार्धं ध्यायेद्यो हरमहिषि ते मन्मथकलाम् ।**
**स सद्यः संक्षोभं नयति वनिता इत्यतिलघु**
**त्रिलोकीमप्याशु भ्रमयति रवीन्दुस्तनयुगाम् ॥ १९ ॥**

முகம் பிந்தும் க்ருத்வா குசயுகமதஸ்தஸ்ய தத தோ
2 3 3 1 1 1 3 4 1 13 4
ஹரார்தம் த்யாயேத்யோ ஹரமஹிஷி தே மன்மதகலாம் ;
4 4 3 1 21
ஸ ஸத்ய: ஸம்க்ஷோபம் நயதி வனிதா இத்யதிலகு
3 4 1 1 1 1 4
த்ரிலோகீ மப்யாசு ப்ரமயதி ரவீந்துஸ்தனயுகாம்
1 1 1 4 1 3 1 3

मुख को बना बिंदु, उसके नीचे वक्षोजों को उनके-
नीचे हर की शक्ति त्रिकोण बना कर, वहां, जो मदनके
करता ध्यान बीज का तेरे, वह साधक तत्काल शिवे !
मन्थनकर देता है वंनिताओं के चित्त, शमित-अशिवे !
यह है अति लघु-कर्म डाल देता चक्कर में वह हठ कर ;
चन्द्र सूर्यकुचयुगवाली त्रिलोक रमणी को भी हठ कर ! ॥

## लक्ष्मीधरा

मुखं वक्त्रं बिन्दुं बिन्दुरूपं कृत्वा, बिन्दुस्थाने मुखं ध्यात्वेत्यर्थः। कुचयुगं स्तनद्वयं अधः अधस्तात् तस्य मुखस्य। तदधः तस्य कुचयुगस्य अधःप्रदेशे हरार्धं हरस्य अर्धं शक्तिः त्रिकोणं योनिरिति यावत्। ध्यायेत् चिन्तयेत्। यः साधकः। तत्र इत्यध्याहार्यम्। हरमहिषि, हरस्य सदाशिवस्य महिषि जाये, ते भवत्याः मन्मथकलां कामराजबीजम्। सः साधकः सद्यः तदानीमेव संक्षोभं सर्वजगत्संक्षोभं चित्तविकारं नयति प्रापयति वनिताः स्त्रियः। इतिशब्दः क्रियाविशेषणद्योतकः। अतिलघु अतितुच्छम्। त्रिलोकीमपि त्रिभुवनमपि आशु शीघ्रं भ्रमयति रवीन्दुस्तनयुगां रवीन्दू सूर्यचन्द्रौ तावेव स्तनौ तयोः युगं युग्मं यस्याः सा ताम् ॥

अत्रेत्थं पदयोजना—हे हरमहिषि, मुखं बिन्दुं कृत्वा, तस्याधः कुचयुगं कृत्वा, तदधः

---

1 दधतः 2 हकारार्धं

हरार्धं कृत्वा, तत्र ते मन्मथकलां यः ध्यायेत्, सः सद्यः वनिताः संक्षोभं नयतीति यत् तत् अतिलघु ; किं तु रवीन्दुस्तनयुगां त्रिलोकीमपि आशु भ्रमयति ॥

अत्र त्रिलोक्याः रवीन्दुस्तनयुगत्वविशेषणेन स्त्रीत्वारोपणं, अयं मादनप्रयोगो वनितास्वेव प्रयोक्तव्य इति ज्ञापयितुम् ॥

अत्रेदमनुसंधेयम्—साधकः त्रिकोणे बिन्दुस्थाने साध्यायाः कान्तायाः वक्त्रं ध्यात्वा, तदधस्तात् तस्याः कुचयुगं ध्यात्वा, तत्कुचद्वयस्याधस्तात् तस्याः योनिं विचिन्त्य तत्र वक्त्रकुचद्वययोनिषु प्रधानाङ्गेषु मारबीजं संचिन्त्य तया कान्तया आत्मनस्तादात्म्यं संपादयेत्। यथोक्तं चतुःशत्याम्—'बिन्दुं संकल्प्य वक्त्रं तु तदधस्तात्कुचद्वयम्। तदधश्च हरार्धं तु चिन्तयेत्तदधोमुखम् ॥ तत्र कामकलारूपामरुणां चिन्तयेदिह। ततस्तेनैव रूपेण निजरूपं विचिन्तयेत् ॥' इति। एवं मादनप्रयोगाः अनेके सनत्कुमारसंहितायां सप्तशत्यामुक्ताः। अत्र कतिचन निरूप्यन्ते—'बिन्दौ तद्वक्त्रमारोप्य तदधो बाहुयुग्मकम्। तदधः कुचयुग्मं तु तदधो योनिमेव च ॥ एतेषु पञ्चस्थानेषु पञ्चबाणान्विचिन्तयेत् ॥' पञ्चबाणबीजानि मुखे बाहुयुग्मे कुचमध्ये योनिमध्ये यथाक्रमं द्रां द्रीं क्लीं ब्लूं स इति चिन्तयेत् इत्यर्थः। अयं प्रयोगः कामराजप्रयोगसमय एव। 'त्रिकोणे बैन्दवस्थाने अधोवक्त्रं विचिन्तयेत्। बिन्दोरुपरिभागे तु वक्त्रं संचिन्त्य साधकः ॥ तदुपर्येव वक्षोजद्वितयं संस्मरेद्बुधः। तदुपर्येव योनिं च क्रमशो भुवनेश्वरीम् ॥ श्रीविद्यां कामराजं च विन्यस्याशु विमोहयेत् ॥' अयं प्रयोगः 'मुखं बिन्दुं कृत्वा' इति प्रयोगात् अतिशीघ्रकरः। अत्रापि पञ्चबाणप्रयोगः पूर्ववत्। एवमेतादृशमादनप्रयोगाः सनत्कुमारसंहितायां अवगन्तव्याः ग्रन्थविस्तरभयान्नोक्ताः ॥ १९ ॥

## सौभाग्यवर्धनी

एतस्यैव कामकलारूपध्यानमाह—मुखमिति। मुखं बिन्दुं कृत्वा ध्यात्वा, कुचयुगलमधस्तस्य मुखरूपेण ध्यातस्य बिन्दोरधः कृत्वा, तदधः कुचयुगस्याधः हकारार्धं ध्यायेत्। हरमहिषि, तव कामकलां यो ध्यायेत्, स सद्यः संक्षोभयति वशं नयति वनिताः, एतदतितुच्छम्। रवीन्दुस्तनयुगां त्रिलोकीमप्याशु भ्रमयति। 'मितां ह्रस्वः' इति ह्रस्वः। त्रिलोक्यपि कामकलारूपेति भावः। तदुक्तं रुद्रयामले—'नभोमहाबिन्दुमुखी चन्द्रसूर्यस्तनद्वया। सुमेरुहारवलया शोभमानमहीपदा ॥ पातालतलविन्यासा त्रिलोकीयं तवाम्बिके। कामराजकलारूपा जागर्ति सचराचरा ॥' इति। चतुःशत्यामपि—'यदक्षरशशिज्योत्स्नामण्डितं भुवनत्रयम्। वन्दे सर्वेश्वरीं देवीं महाश्रीसिद्धमातृकाम् ॥' इति। अयमर्थः—कामस्य कामराजस्य कला शोभा ; अथवा कामबीजस्य कला देवताबीजम् ; ककारलकाररहितं कामकलारूपं भवति गुप्तमहासरस्वतीबीजम्। तदुक्तं धर्माचार्यस्तुतौ—'यन्नित्ये तव कामराजमपरं मन्त्राक्षरं निष्कलं

तत्सारस्वतमित्यवैति विरलः कश्चिद्बुधश्चेद्भुवि । आख्यानं प्रतिपर्व सत्यतपसो यत्कीर्तयन्तो द्विजाः प्रारम्भे प्रणवास्पदप्रणयितामित्युच्चरन्तः स्फुटम् ॥' इति । तथा च श्रुतिः—'य ईꣳशृणो त्यलकꣳशृणोति । न हि प्रवेद सुकृतस्य पन्थामिति ॥' (तै० आ० प्र० १.) इति । सा पुनस्तुरीयस्वरूपा; तुरीयस्वरूपं च बिन्दुत्रयात्मकम् । तत्रैको बिन्दू रविः; परौ द्वौ दहनशीतांशू । रविरूपं बिन्दुं मुखं कृत्वा तस्याधो दहनशीतांशू बिन्दुद्वयं स्तनयुगं कृत्वा तदधो हकारार्धं योनिरूपं ध्यायेत् । हकारपूर्वभागे मृष्टे सत्यधोभागो योन्याकारो भवति; तं ध्यायेदिति प्रकटार्थः । तदुक्तं कादिमते—'नित्याकूटत्रयं देवि तुरीयस्वरशेखरम् । तत्तुरीयं स्वरूपं च बिन्दुत्रयमुदीरितम् ॥ तदात्मकं च देव्यास्ते साधकस्य च यद्भवेत् । तद्भावनां शृणु प्राज्ञे महोदयकरीं शुभाम् ॥ ऊर्ध्वबिन्द्वात्मकं वक्त्रमधोबिन्दुद्वयात्मकम् । कुचद्वयं तु तच्छेषागतिमेतां विभावयेत् ॥' इति अयमेकः प्रकारः । अथ वा, हकारः शिवः, तस्यार्धः; शिवेति पदं शकारेकारवकाराकाररूपवर्णचतुष्टयात्मकम् । तत्र अर्धे शकारवकारात्मके गते अर्धमिकाराकारात्मकमवशिष्टं भवति । तयोः संधौ सत्येकारो योनिरूपो भवति । तमेकारं योनिरूपं कुचस्याधो भावयेत् । अथ वा, हकारो रविः, तत्र रविपदे रेफवकाररूपेऽर्धे गते अकारेकारात्मकमर्धमवशिष्टं भवति । तयोः संधौ सत्येकारो योनिरूपो भवति । तत्कुचस्याधो भावयेदिति । अथ वा, हकारो हंसः, तत्रार्धे हकारसकाररूपे गते अं अः इत्यूर्ध्वबिन्दुविसर्जनीयरूपबिन्दुत्रयमवशिष्टं भवति । तत्रैवं योजना—हे हरमहिषि, हकारार्धं अं अः इति बिन्दुस्वरात्मकं हंसार्धं ध्यायेत् । केन प्रकारेण? मुखं बिन्दुं कृत्वा तस्याधो बिन्दुद्वयं कुचद्वयं कृत्वा, तदधस्तनमन्मथकलामेकाराकारां ध्यायेत् । अत एव एतत्प्रकारत्रयेण कामकलोद्धाराभिप्रायेणाग्रे विद्योद्धारे त्रिविधं हकारसंकेतं करिष्यति—शिवेति, शिवो रविः हंस इति । एते हकारार्थाः प्रकटाः । वस्तुतो हकारार्थो गुप्तो गुरुमुखादनुगम्यः । तत्प्रकाशने महदनिष्टमिति न प्रकाशितः । तथा च संकेतपद्धतौ—'एतत्कामकलाव्याप्तं गुह्याद्गुह्यतरं महत् । नाशिष्याय प्रवक्तव्यं नाभक्ताय कदाचन ॥ एतत्प्रकाशनं मातुरुद्घाटनमुरोजयोः । आकृष्याच्छादनमिव तस्मान्नैतत्प्रकाशयेत् ॥ लोभान्मोहाच्च गर्वाच्च वैदुष्याद्वा प्रकाशयेत् । सोऽचिरान्मृत्युमाप्नोति शस्त्राघातविषादिभिः ॥' इति ॥ १९ ॥

## अरुणामोदिनी

अथ मादनप्रयोगमाह—मुखमिति । हे हरमहिषि महादेवप्रिये देवि, हरो बिन्दुः तस्य महिषी तदाधारत्रिकोणरूपिणीति गूढार्थः । यः साधकः बिन्दुं मुखं कृत्वा बिन्दुस्थाने मुखं ध्यात्वेत्यर्थः । तस्य बिन्दोरधः कुचयुगं कृत्वा अधोवर्तिबिन्दुद्वये कुचयुगं ध्यात्वेत्यर्थः । तस्याधो हरस्यार्धं शक्तिं त्रिकोणमित्यर्थः । कृत्वा योनिं निध्यायेत्यर्थः । यद्वा मुखस्थाने बिन्दुं ध्यात्वा तदधः कुचद्वयं तदधो हरार्धमिति ते भवत्संबन्धिनी मानवीं वा मन्मथकलां

मदनबीजं ध्यायेत् । अथवा, क्लीमित्यस्य मदनबीजत्वात्तत्र च बिन्दोर्नागरलिप्यां शिरःस्थत्वात्तत्रस्थे बिन्दौ मुखं कृत्वा, तदधःस्थितबिन्दुद्वयाकारे कुचद्वयं, तदधोवर्तिनि लकारे हरार्धं त्रिकोणं ध्यात्वा तेन मन्मथकलां यो ध्यायेत्, क्लीमित्येवंरूपां चिन्तयति, स साधकः, सद्यस्तदानीमेव; एतत्प्रयोगस्यातिशीघ्रकारित्वात्। वनिताः स्त्रियः संक्षोभं चित्तविकारं नयतीत्येतदतिलघु अतिफल्गु; कियदेतदित्यर्थः। किं तु, रवीन्दू सूर्याचन्द्रमसावेव स्तनयुगं यस्यास्ताम्। त्रयाणां लोकानां समाहारस्त्रिलोकी; 'तद्धितार्थोत्तरपदसमाहारे च' समाहारे 'द्विगोः' इति ङीप्। तामपि 'नभोमहाबिन्दुमुखी चन्द्रसूर्यस्तनद्वया। सुमेरुहारवलया शोभमाना महीपदा॥ पातालतलविन्यासा त्रिलोकीयं तवाम्बिके। कामराजकलारूपा जागर्ति सचराचरा॥' इति रुद्रयामलोक्तेः, कामकलारूपिणीं जगत्त्रयीमपि, किमुत तदन्तर्वर्त्यन्यदित्यर्थः। आशु शीघ्रं भ्रमयति चालयति; त्रिलोकीवनिताः भ्रमयितुः, तदन्तःपातिवनितान्तरचालनं कियदिति भावः। अतः त्वन्मन्त्रप्रयोगादन्यदतिशीघ्रफलदं न लभ्यत इत्यभिप्रायः। अत्रोक्तं चतुःशत्यामपि—'बिन्दुं संचिन्त्य वक्त्रं तु तदधस्तात्कुचद्वयम्। तदधश्च हरार्धं तु चिन्तयेत्तदधोमुखम्॥ तत्र कामकलारूपामरुणां चिन्तयेदिह। ततस्तेनैव रूपेण निजरूपं विचिन्तयेत्॥' इति। प्रयोगान्तराणि लक्ष्मीधरे द्रष्टव्यानि॥ १९॥

## आनन्दगिरीया

ततः प्रथमानित्यामाह—**मुखं बिन्दुमिति**। हरमहिषि, स पुमान् इमा वनिताः स्त्रियः एव संक्षोभं निजस्वरूपदर्शनजनितपञ्चबाणपराभवोत्पन्नशोकविकलान्तःकरणाः करोतीत्येतत्फलमतिलघु अतितुच्छम्। किन्तु त्रिलोकीमप्याशु शीघ्रं दर्शनमात्रेण भ्रमयति व्यामोहयति। स कः, यस्तव मन्मथकलां एवं कृत्वा ध्यायेत्। एवमिति किं, बिन्दुं मुखं कृत्वा, बिन्दुं मुखत्वेन प्रकल्प्य ध्यात्वा तदधः कुचयुगं ध्यात्वा तस्याप्यधो हकारार्धं ध्यायेदिति। अयमर्थः, हे हरमहिषि, यस्तव मन्मथकलां मन्मथशब्देन कामराजबीजं क्लीमित्याकारं, तस्य कलां एकदेशं ईमिति। तत्र ईकारस्य लेखने बिन्दुत्रयात्मकमेव रूपं जायते। तत्र, एको बिन्दुरुपरि, बिन्दुद्वयमधः। तत्रोपरितनो बिन्दुः परमेश्वर्या मुखत्वेन ध्येयः। अधस्तनं बिन्दुद्वयं कुचयुगत्वेन ध्येयम्। तस्याधस्त्रिकोणाकारं मोहनमन्दिरं ध्येयमिति। तदेव हकारार्धम्। हकारस्योपरितने भागेऽर्धलुप्ते सति अधोऽर्धभागस्त्रिकोणो योन्याकारस्तिष्ठति। स्त्रीणां शरीरस्य स्थानमध्ये चायम्। यत्प्रथमं मुखं, तदधः कुचौ तदधो वरांगमिति। हे हरमहिषि, य एवं कामकलां ध्यायेत् स त्रिलोकीमपि व्यामोहयति। कुचद्वयं किंविशिष्टं, त्रिकोणध्यानेन सूर्यचन्द्ररूपं स्तनद्वयं त्रिलोकीरूपां कामिनीं व्यामोहयति। कामकलाशब्देन ककारलकाररहितं सरस्वतीबीजं ईकाररूपं आगम-

परिभाषितम्। तथा च लघुस्तवे-"यन्नित्ये तव कामराजमपरं मन्त्राक्षरं निष्कलं तत्सारस्वतमित्यवैति विरलः कश्चिद्बुधश्चेद्भुवि" इति। निष्कलं मन्त्राक्षरं, निष्कलं निष्क्रान्तककारलकारं यत्क्लीमिति मन्त्राक्षरं, अवशिष्टं ईमिति। श्रुतिरपि "यदीँ शृणोत्यलकँ शृणोति न हि प्रवेद सुकृतस्य पन्था" मिति। अलकं लकारककारवर्जितं ईमिति। अन्यत्रापि सा पुनस्तुरीयरूपम्। स्वरेषु अकारादिक्रमेणगण्यमानेषु चतुर्थ ईकारः, सैव तुरीया। अथवा तुरीया जाग्रत्स्वप्नसुषुप्तिरूपबिन्दुत्रयात्मिका। तत्रैको बिन्दुः सूर्यः, द्वौ दहनशशिनौ। तदधो हकारार्धमिति वा ध्यानम्। तदुक्तं—"कूटत्रयमिदं देवि तुरीयं स्वरशेखरम्। तत्तुरीयस्वरूपं तु बिन्दुत्रयमुदीरितम्। तदात्मकत्वं देव्यास्ते साधकस्य च यद्भवेत्। तद्भावनां शृणु प्राज्ञे महोदयकरीं शुभाम्। ऊर्ध्वं बिन्द्वात्मकं वक्त्रं अधो बिन्दुद्वयात्मकम्। कुचद्वयं तु तद्विद्यात् शेषांगानि विभावयेत्" इति। अथ हकारो हंसः। तदुक्तं मानसक्रमोच्चरतन्त्रे—हंसो रविः शिवो हः स्यादिति। हकारे सकारे च लुप्ते अधोगते सति अं अः इति विसर्गानुस्वाराख्यबिन्दुत्रयमवशिष्यते। तत्रानुस्वारो मुखत्वेन विसर्गः कुचत्वेन, तदधश्च मन्मथकला एकारः। एवं ध्यायेत्॥ मुखं बिन्दुं कृत्वेति श्लोकस्य रहस्यार्थः-मुखमिति, मुखं बिन्दुं वाणी कुचयुगं लक्षणयाऽत्र कलसं, तदधः एतस्य कलसस्य पदस्य अधः तदधः, तस्याधो वर्तमानलकारोत्तरे वर्तमानः सकारः इति। युगयुगं (कुचयुगं) एतदस्य युगलं तेन तदधो नीत्वा विलुप्यति। यावदुक्तयुक्तया एवमुद्धारक्रमेण आद्याक्षरद्वयं चरमाक्षरमेकं चापि विलुप्येति यावत्। हरार्धांगे वर्तमाना देवी लज्जेति यावत्। हरमहिषि हर नित्ये महिषी क्लिन्ना त्वन्मन्त्रानुसारात्। मन्मथकलां मदद्रवां संक्षोभं नयति। योनि तेन संसारो घनं वनिता नित्या परा इत्यादि। ऐं क्लीं ह्सौः स्क्लीं नित्यक्लिन्ने मदद्रवे सौः*। अं आं कामेश्वरीनित्या।

## तात्पर्यदीपिनी

**मुखमिति**। हे हरमहिषि स पुमान् सद्यो वनिताः संक्षोभं नयति इति अतिलघु। अपि तु त्रिलोकीमपि आशु भ्रमयति। त्रैलोक्यस्यापि भ्रमं नयतीत्यर्थः। कथं भूतां त्रिलोकीं, रवीन्दुस्तनयुगां रविश्चेन्दुश्च रवीन्दू, तौ स्तनयुग्ममिव स्तनयुगं यस्याः सा ताम्। स कः। यस्ते मन्मथकलां ध्यायेत्। मन्मथस्य बिन्दोः अधः कुचयुगं कृत्वा कुचयुगसदृशं कृत्वा, व्यापकं विधाय, पुनस्तस्याधः, तस्य बिन्दोरधो हरार्धं हकारार्धं कृत्वा एवं कामराजबीजं संपद्यते। उक्तञ्च "मुखं बिन्दुतया भाति तदधस्ताद्द्विबिन्दुकम्। कुचद्वयतया ज्ञेयं अधस्ताच्च त्रिकोणकमिति ॥ १९ ॥

## पदार्थचन्द्रिका

इदानीं श्रीभवान्याः अर्धनारीश्वररूपध्यानं दर्शयन् तत्फलमपि दर्शयति **मुखमिति**—हे हरमहिषि,

---

* "अं ऐं सकलह्रीं नित्यक्लिन्ने मदद्रवेसौः" इति साम्प्रदायिको मन्त्रः॥

यो भक्तस्ते तव मन्मथकलां ध्यायेत्, मन्मथः कामः, तस्य कलेव कला रतिः, तद्रूपां त्वां ध्यायेदित्यर्थः। स सद्यः तदानीमेव, वनिताः सर्वास्त्रियः संक्षोभं नयतीत्यति लघु अत्यल्पं फलमेतत्। त्रिलोकीमपि त्रयाणां लोकानां समाहारः त्रिलोकी, तामपि मोहयति वशीकरोति इत्यर्थः। मन्मथकलां विशिनष्टि-रवीन्दू स्तनयुगं यस्यास्ताम्। ध्याने विशेषणे आह-मुखमिति। मुखं कुचाग्रं बिन्दुं कृत्वा, चिन्तयित्वेत्यर्थः। तस्य बिन्दोरधः कुचयुगं च चिन्तयित्वा। बिन्दुं विशिनष्टि-हरार्धं दधतो बिभ्रतः हरस्यार्धो हरार्धः, तम्। अर्धशब्दस्य नपुंसकलिंगत्वे, अर्धं नपुंसकमिति समासे अर्धं हरस्येति स्यात्। तदर्धः पुल्लिंगोऽत्रार्धशब्दः। रवीन्द्वोः हरार्धत्ववर्णनेन सर्वमपि रत्यंगं हरार्धरूपं दर्शितं भवति। एतेन परस्परं रममाणमर्धनारीश्वरस्वरूपं ध्येयमुक्तं भवति। तदध इति पाठे तस्य कुचयुगस्य अर्वाक् प्रदेशः, तं च चिन्तयित्वेति योज्यम्। अस्मिन्पक्षे हरार्धमिति मुखादीनां त्रयाणां विशेषणम्। मुखादिध्यानपूर्वकं मन्मथकलाध्यानं यः करोति तस्याप्याशु शीघ्रं त्रैलोक्यं वश्यं भवतीति संक्षेपः। हकारार्धमिति पाठे एकाक्षरकामकलामन्त्रोद्धारो द्रष्टव्यः। विस्तरस्तु ज्ञानसुधायां द्रष्टव्यः॥ १९॥

## डिण्डिमभाष्यम्

इत्थमुक्तप्रकारेण कामपुरुषार्थोपयोगिस्त्रीवशीकरणं ध्यानमुक्त्वा तदर्थमेव महाविद्यान्तिमवर्णवामलोचनन्यासयोग्याक्षरस्वरूपं ध्यानं कामकलात्मकमाह—यो महाविद्यान्तिमवर्ण ईकारलक्षणो महामन्त्रः स खलु भगवत्या रूपान्तरवाचकमन्त्रो निवासभूमिश्च। उक्तमारुणकेतुके—"यस्तित्याज सखिविदं सखायं न तस्य वाच्यपि भागो अस्ति। यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम्।" इति। अलकमित्यत्र लकार ककारवर्जनेन निष्कृष्टरूपमन्मथवीजं सैव महाविद्या तस्याः शारदालिपिप्रकारेण लेखनेन स्त्रीरूपं सम्भवति। "मुखं बिन्दुतया भाति तदधस्ताद्द्विबिन्दुकं। कुचद्वयं तथा ज्ञेयमधस्ताच्च त्रिकोणकम्॥ एवमीकाररूपं स्यादेवं कामकला परा॥" हरस्य हकारस्यार्धं त्रिकोणाकारं बिन्दुद्वयस्याधस्ताद् योनिं मुखस्याधस्तात् कुचद्वयम् इति स्त्रीरूपक्रमः। एवं कामकलारूपं चिन्तयतः फलविशेषमाह स सद्य इति। यस्त्वेवं कामकलाचिन्तकः स सद्यः शीघ्रमेव वनितास्तरुणीः संक्षोभं कन्दर्परागजनितचित्तविप्लवं नयति प्रापयति इति अतिलघु अस्ति। फलगुप्रयोजनं महाप्रयोजनमाह—रविश्चेन्दुश्च रवीन्दू तौ स्तनयुगं यस्यास्तां त्रिलोकीमपि वनितारूपधारिणीमाशु भ्रमयति। त्रयाणां लोकानां समाहारस्त्रिलोकी। "सङ्ख्यापूर्वो द्विगु" रिति द्विगुसमासः, 'द्विगोश्च' इति ङीप्। भ्रमयति भ्रान्तमतीं करोति वशीकरोति इत्यर्थः॥ १९॥

## गोपालसुन्दरी

कामकलाध्यानमाह—**मुखं बिन्दुमेकं** ईकारोर्ध्वावयवरूपं मुखं कृत्वा मुखतया ध्यात्वा

तस्य मुखस्याधः कुचयुगं कुचयुगतया बिन्दुद्वयं कृत्वा ध्यात्वा तदधः कुचद्वयादधः हरार्ध-मधोमुखत्रिकोणं यो ध्यायेत्, हे हरमहिषि महेशपत्नि ! ते तव मन्मथकलां क्लींबीजस्य ईकार-रूपस्वरं ध्यायति स वनिताः सङ्क्षोभं नयतीति फलमतिलघु अतितुच्छम्। अत एवाधिकं फल-माह—रवीन्दू स्तनयुगौ यस्यास्तां त्रिलोकीमपि आशु शीघ्रं भ्रमयति क्षोभयतीत्यर्थः। एत-देवोक्तं चतुःशत्याम्—"बिन्दुं सङ्कल्प्य वक्त्रं तु तदधः स्यात्कुचद्वयम्। तदधः सपरार्धन्तु चिन्तयेत्तदधोमुखम्॥" इति। तथा "बिन्दौ तद्वक्त्रमारोप्य तदधो बाहुयुग्मकम्। तदधः कुचयुग्मं तु तदधो योनिमेव च॥" इति। त्रिलोकीमपीत्यनेन तस्या अपि कामकलारूपं ते युक्तं भवति। तदुक्तं रुद्रयामले—"नभो महाबिन्दुमुखी चन्द्रसूर्यस्तनद्वया। सुमेरुहार्ध-कलया शोभमाना महीपदा॥ पातालतलविन्यासा त्रिलोकीयं तवाम्बिके। कामराजकलारूपा जागर्ति सचराचरा"॥ इति। अत्र हरार्धपदेनाधोमुखत्रिकोणातिगा योनिरुच्यते, हरो हकारस्तस्य पूर्वभागे अधोमागे योन्याकारस्तिष्ठति। अथवा हरः शिवेति वर्णद्वयं तस्यार्धं शकारवकारयोर्लो-पादिकाराकारौ व्यत्ययेन संहितां प्राप्तौ एकाररूपयोनिर्भवति। यद्वा हरो रविशब्दः तस्य अर्द्धं रेफवकारयोर्लोपात् संहितायां 'ए' इति रूपम्। यद्वा हरो 'हंसः' पदं हकारसकारयोर्लोपात् बिन्दु-विसर्गाभ्यां बिन्दुत्रयमवशिष्यते। तत्रैवं योजना, हरार्धं अं अः इति स्वरूपं ध्यायेत्, केन प्रकारेण? बिन्दुं हकारोपरिस्थं मुखं कृत्वा तस्याधो विसर्गात्मकं बिन्दुद्वयम् कुचयुगं कृत्वा तदधः मन्मथकलां योनिं ध्यायेत् इत्यनुषङ्गः इति। एतत् कामकलारूपमतिगोप्यम्। तदुक्तं सङ्केतपद्धतौ—"एतत् कामकलाव्याप्तं गुह्याद् गुह्यतरं महत्। नाशिष्याय प्रवक्तव्यं नाभक्ताय कदाचन॥ एतत्प्रकाशनं मातुरुद्घाटनमुरोजयोः। आकृष्याच्छादनमिव तस्मान्नैतत्प्रकाशयेत्। लोभान्मोहाच्च गर्वाच्च वैदुष्याद्वा प्रकाशयेत्। सोऽचिरान्मृत्युमाप्नोति शस्त्रघातविषादिभिः॥" इति।

**विष्णुपक्षे**—बिन्दुमनुस्वारं मुखमग्रगं कृत्वा तदधस्तत्पश्चात् हरार्धं शिवस्यार्धाङ्गं मा-यामीकारं तस्य हरार्धस्याधः पश्चात्, कुः पृथिवी लकारः, चयुगं चपदेन वरतयोत्थयवर्गोत्थैः पिण्डात्परैः अन्तिमस्वरैः इति न्यायेन षट् तस्य युगं चतुष्टयं तेन चतुर्विंशतिः लकाराच्चतुर्विंशतिः ककारः ककारान्तरलकारयोगात्, अनेन प्रकारेण मन्मथबीजरूपां कलां मन्त्रैकदेशं यो ध्यायेत् तं सवनितां सङ्क्षोभं नयति इत्यतिलघु हरो महेशः महिषोऽस्यास्तीति महिषी यमः तयोर्भावो हरमहिषिता ते हरमहिषि इति द्वितीयान्तं नयति प्रापयति शिवभावं यमभावं प्रापयति, यथा—त्रिलोकी-मप्याशु भ्रमयतीत्यर्थः॥ १९॥

## आनन्दलहरीटीका

कामकलाध्यानमाह-**मुख**मिति। हे हरमहिषि महादेवपति, यो जनस्ते तव, मन्मथस्य कामरा जाख्यबीजस्य कलां स्वरदीर्घेकाररूपं एवं ध्यायेत्, स वनिताः स्त्रियः सद्यः तत्क्षणात् संक्षोभं नयति

इति लघुफलम्। प्रकृष्टं किमित्यपेक्षायामाह-चन्द्रसूर्यौ स्तनयुगौ यस्याः एतादृशीं त्रिलोकीमप्याशु शीघ्रं भ्रमयति संक्षोभयतीत्यर्थः। कथं ध्यायेदित्याकांक्षायामाह-मुखमिति। एकं बिन्दुं इकारस्य प्रथमलेखावयवरूपं मुखं कृत्वा मुखरूपतया ध्यात्वा, तस्य मुखस्याधः कुचयुगं, ईकारस्य मध्यमावयवरूपं बिन्दुद्वन्द्वं स्तनद्वयरूपतया ध्यात्वा, तदधः कुचद्वयाधः ईकारस्याधोऽवयवं हरार्धं अधोमुखत्रिकोणयोनिरूपं ध्यायेत् इत्यर्थः। हरो हकारः तस्याधोभागे, यत्किञ्चित् स्वेच्छया पूर्वार्धे मृष्टे सति अधोमुखयोन्याकारता भवति गौडनागरलिप्योरिति। हरार्धपदेनाधोमुखत्रिकोणयोनिरुच्यत इति संप्रदायः। हकारार्धं ध्यायेदिति क्वाचित्कपाठेऽप्ययमेवार्थः। केचित्तु हरो हकारः, तस्यार्धं शक्तिः, योनिरूपामित्यर्थः। तदुक्तं ज्ञानार्णवे। "बिन्दुत्रयसमायोगान्महात्रिपुरसुन्दरी। नादरूपेण सा देवी हकारार्धस्वरूपिणी॥ हकारः परमेशानि शिवरूपी यतः सदा। तस्यार्धांगमहाशक्तिः हकारार्धस्वरूपिणी" इत्याहुः। अन्येतु हरः शिव इति वर्णद्वयं तस्यार्धं वकारशकारौ विना इकाराकाररूपं तयोश्च वैपरीत्येन योजना, अर्धो हरे, एकारो निष्पद्यते। तस्य चैकारस्य योनिरिति परिभाषा, नागररीत्या लेखने अधोमुखयोनिसाम्यं चेति हरार्धपदेनाधोमुखयोनिरुच्यते। हरौ रविरिति वर्णद्वयं, अन्यत्पूर्ववत्, हरो रविः शिवो हः स्यादित्युक्तेरिति वदन्ति। तन्त्रेऽपि दशमे च कामकलाध्यानमुक्तं-यथा तन्त्रसारस्वते- "बिन्दुं संकल्प्य वक्त्रं तु तदधः स्यात्कुचद्वयम्। तदधः सपरार्धं तु चिन्तयेत्तदधोमुखम्"। इति। सपरार्धं तु सकारस्य परो हकारः, तस्यार्धमधोभागरूपं त्रिकोणमित्यर्थः। तथा तन्त्रान्तरे "बिन्दौ तद्वक्त्रमारोप्य तदधो बाहुयुग्मकम्। तदधः कुचयुग्मं स्यात्तदधो योनिमेव च" इति। तथा श्यामारहस्य-रहस्यधूतभावचूडामणौ "मुखं बिन्दुवदाकारं तदधःकुचयुग्मकम्। सर्वविद्यामृतापूर्णं सर्ववाग्विभवप्रदम्। तदधः सपरार्धं तु सुपरिस्कृतमण्डलम्। सर्वदेवादिभूतं तु सर्वदेवनमस्कृतम्। एतत्कामकलाध्यानं सुगोप्यं साधकोत्तमैः"। तथा तत्रैव श्रीक्रमे "एकां प्रकृतिरूपेण सर्वशक्तिं विचिन्तयेत्। कामयेत्कामिनीं सर्वां देवीमावर्णरूपिणीम्। चिन्तयेत्सुन्दरीं देवीं सर्वव्यापकरूपिणीम्। इकारभूतमन्त्रस्यावयवं च चतुष्टयम्। बिन्दुत्रयस्य देवेशि प्रथं देवेष्कक विदुः। बिन्दुद्वयं स्तनद्वन्द्वं हृदि स्थाने नियोजयेत्। हकारार्धं कलां सूक्ष्मां योनिमध्ये विचिन्तयेत्। उद्यदादित्यसंकाशं सिन्दूराभं स्तनद्वयम्। बिन्दुं संकल्प्य वक्त्रं तु स्फुरद्दीपशिखाप्रभम्। कामो बिन्दुरहं देवी तत्रस्था परमेश्वरी। शिवशक्तिमयं देव तदधस्तात्कुचद्वयम्। तदधः सपरार्धं तु चिद्रूपां परमां कलाम्। सञ्चिन्त्य साधकश्रेष्ठस्त्रैलोक्यं वशमानयेत्। एतत्ते कथितं देवि कामकला सुनिर्णयम्। गोप्तव्यं तु प्रयत्नेन यदीच्छेदात्मनो हितम्" इति। तस्यातिगोप्यत्वं संकेतपद्धतावप्युक्तम्। "एतत्कामकलाध्यानं गुह्याद् गुह्यतरं महत्। नाशिष्याय प्रवक्तव्यं नाभक्ताय कदाचन। एतत्प्रकाशनं मातुराच्छादनमुरोजयोः। आकृष्यच्छेदनमिव तस्मान्नैतत्प्रकाशयेत्। लोभान्मोहाच्च गर्वाद्वा वैदुष्याद्वा प्रकाशयेत्। सोऽचिरान्मृत्युमाप्नोति शस्त्रपातविषा-

दिभिः" इति। रवीन्दुस्तनयुगामित्यनेन त्रिलोक्या अधिका कामकलारूपतेत्युक्तम्। तदुक्तं रुद्रयामले—"नभो महाबिन्दुमुखी चन्द्रसूर्यस्तनद्वया। सुमेरुहार्धकलया शोभमाना महीपदा। पातालतलविन्यासा त्रिलोकीयं तवाम्बिके। कामराजकलारूपा जागर्ति सचराचरा" इति। अपरे तु हरो हंसः इति शब्दः तस्यार्धव्यंजनलोपात् बिन्दुविसर्गरूपं य एवं ध्यायेदिति। कथं ध्याये-दित्यत्राह—बिन्दुं हकारस्थं कृत्वा तदधो विसर्गरूपं कुचद्वयं कृत्वा तदधो मन्मथकलां योनिं ध्यायेदि-त्यस्यावृत्तिरित्याहुः ॥ १९ ॥

**किरन्तीमङ्गेभ्यः किरणनिकुरुम्बामृतरसं**
**हृदि त्वा-माधत्ते हिमकरशिलामूर्तिमिव यः।**
**स सर्पाणां दर्पं शमयति शकुन्ताधिप इव**
**ज्वरप्लुष्टान्[1] दृष्टया[2] सुखयति सुधाधारसिरया[3] ॥ २० ॥**

கிரந்தீ மங்கேப்ய: கிரணநிகுரும்பாம்ருதரஸம்
1 1 3 4 1 1 3 1
ஹ்ருதி த்வாமாதத்தே ஹிமகரஶிலாமூர்திமிவ ய:;
3 1 4 1 1 1 1
ஸ ஸர்பாணாம் தர்பம் ஶமயதி ஶகுந்தாதிப இவ
1 3 1 1 1 1 4 1
ஜ்வரப்லுஷ்டான் த்ருஷ்ட்யா ஸுகயதி ஸுதாதாரஸிரயா ||
1 1 3 1 2 1 4 4

अंगों के किरण-समूहों से अमृत बरसानेवाली,
तेरी मूर्ति शीतकरमणिनिर्मित सी, अति शोभावाली,
बैठा कर हृदय में, ध्यान करता है जो साधक जननी!
हरता है दर्प विषधरों का गरुड बने वह सुगुणखनी,
सुधा-दृष्टि से ज्वर-पीडित जनता को देता सुख, अपनी! ॥

## लक्ष्मीधरा

**किरन्तीमिति** ॥ किरन्तीम् वर्षन्तीं अङ्गेभ्यः अवयवेभ्यः किरणनिकुरुम्बामृतरसं किरणानां मरीचीनां निकुरुम्बः समूहः, तस्मादुत्पन्नः अमृतरसः, तम्। हृदि हृदये त्वां भवतीं आधत्ते स्मरतीति यावत्। हिमकरशिलामूर्तिं हिमकरशिलायाः चन्द्रकान्तमणेः मूर्तिं पुत्तलिकां सालभञ्जिकां चन्द्रकान्तमणिनिर्मितदेहां इव यः साधकः सः साधकः सर्पाणां दर्पं शमयति शकुन्ताधिपः शकुन्तानां पक्षिणां अधिपो गरुत्मान् इव। इवेति संभावनायाम्—गरुत्मदाकाराकारित्वमात्रं

1 ज्वरप्लुष्टं 2 दृष्ट्वा 3 सुधासारसिरया, सुधाधाररसया सुधासारशिरसा

न भवति, अपि तु तत्कार्यकारित्वं संभावितमिति, गरुत्मान् भूत्वा, प्रत्यक्षो गरुत्मानिवेत्यर्थः। ज्वरप्लुष्टान् ज्वरेण प्लुष्टान् संतप्तान् दृष्ट्या वीक्षणेन। अत्र दृष्टिप्रयोगः कथितः। सुखयति सुखिनः करोति। 'तत्करोति' इति णिचि 'णाविष्ठवत्प्रातिपदिकस्य' इति टिलोपः; एवं सुखयतीति रूपं सिद्धम्। सुधाधारसिरया सुधायाः आधारभूता सिरा अमृतस्यन्दिनी नाडी। यद्वा, सुधा धारात्मिका यस्यां सिरायामिति बहुव्रीहिः। 'स्त्रियाः पुंवत् भाषितपुंस्कात्' इत्यादिना पुंवद्भावः। सुधाधारा चासौ सिरा च तया। सुधासारसिरयेति वा पाठः, सुधासारात्मिका सिरा॥

अत्रेत्थं पदयोजना—हे देवि, यः साधकः अङ्गेभ्यः किरणनिकुरुम्बामृतरसं किरन्तीं हिमकरशिलामूर्तिमिव हृदि त्वां आधत्ते, सः शकुन्ताधिप इव दृष्ट्या सर्पाणां दर्पं शमयति, सुधाधारसिरया दृष्ट्या ज्वरप्लुष्टान् सुखयति॥

अनेन श्लोकेन गारुडप्रयोग उक्तः। तदुक्तं चतुःशत्याम्—'षण्मासध्यानयोगेन जायते गरुडोपमः। दृष्ट्या कर्षयते लोकं दृष्ट्यैव कुरुते वशम्॥ दृष्ट्या संक्षोभयेन्नारीं दृष्ट्यैव हरते विषम्। दृष्ट्या चातुर्थिकादींश्च ज्वरान्नाशयते क्षणात्॥ चन्द्रकान्तशिलामूर्तिं चिन्तयित्वा विनाशयेत्। तापज्वरानशेषांश्च शीघ्रं तार्क्ष्य इवापरः॥ गरुडध्यानयोगेन स्मरणान्नाशयेद्विषम्॥' इति। अतश्च प्रातीतिकमव्ययं—यथा शकुन्ताधिपः सर्पाणां दर्पं शमयति एवं साधकेन्द्रः ज्वरप्लुष्टान् सुखयतीति—तिरस्कृत्य, साधकेन्द्रो ज्वरप्लुष्टान् सर्पाणां दर्पमपि शकुन्ताधिप इवेति आश्रितमिति अनुसंधेयम्॥ २०॥

## सौभाग्यवर्धनी

तृतीयकूटध्यानमहिमानमाह—**किरन्तीमिति**। अङ्गेभ्यः किरणसमूहामृतरसं किरन्तीं निष्यन्दयन्तीं चन्द्रकान्तसदृशच्छविं हृदि आधत्ते करोति सः सर्पाणां दर्पं गरुड इव शमयति। तं सर्पाः विलोक्य दश दिशो यान्ति; भयादिति भावः। ज्वरसंतप्तान् सुधासारसिरया अमृतधारासंपातप्रणालिकया दृष्ट्या सुखयति। सर्पदष्टानपि तथाविधदृष्ट्या सुखयति। गरुडदर्शनादिव सर्पदष्टा निर्विषा भवन्तीति भावः॥ २०॥

## अरुणामोदिनी

एवं मादनप्रयोगमुक्त्वा विषहरं ज्वरहरं च गारुडप्रयोगमाह—**किरन्तीमिति**। हे देवि, य उपासकः, अङ्गेभ्यो निजावयवेभ्यः, किरणनिकुरुम्बो मयूखसङ्घः तदेवामृतरसं पीयूषरसं किरन्तीं विक्षिपन्तीं स्रावयन्तीं वा त्वां भगवतीममृतेश्वरीरूपधारिणीम्, हिमकरशिलामूर्तिं चन्द्रकान्तमणिनिर्मितप्रतिमामिव स्थितामिति वा। हृदि हृदये आधत्ते ध्यायतीत्यर्थः। स साधकः शकु-

न्ताधिपो गरुड इव सर्पाणां भुजङ्गानां दर्पं क्रौर्यं शमयति नाशयति; 'मन्त्री यथा गरुडभावनया गरुत्मान्' इति हरदत्तोक्तेः, गरुत्मदाकाराकारितः सन् सर्पदर्पनाशको भवतीत्यर्थः। अपि च, ज्वरप्लुष्टान् दीर्घरोगपीडिताञ्जनान् सुधाया अमृतस्य धारा सिरा नाडी यस्यास्तया दृष्ट्या वीक्षणेनैव सुखयति सुखिनः करोति; विषहरं ज्वरहरं च करोतीत्यर्थः। तदुक्तमम्बास्तवे—'ये चिन्तयन्त्यमृतवाहिभिरंशुजालैराप्लाव्यमानभुवनाममृतेश्वरीं त्वाम्। ते लङ्घयन्ति ननु मातरलङ्घनीयां ब्रह्मादिभिः सुरवरैरपि कालकक्ष्याम् ॥' उक्तं च चतुःशत्याम्—'षण्मासध्यानयोगेन जायते गरुडोपमः। दृष्ट्याऽऽकर्षयते लोकं दृष्ट्यैव कुरुते वशम् ॥ दृष्ट्या संक्षोभयेन्नारीं दृष्ट्यैव हरते विषम्। दृष्ट्यैव चातुर्थिकादीञ्ज्वरादीन्नाशयेत्क्षणात् ॥ चन्द्रकान्तशिलामूर्तिं चिन्तयित्वा विनाशयेत्। तापज्वरानशेषांश्च शीघ्रं तार्क्ष्य इवापरः ॥ गारुडध्यानयोगेन स्मरणान्नाशयेद्विषम् ॥' इति ॥ २० ॥

## आनन्दगिरीया

**किरन्तीमिति।** हे परमेश्वरि यस्त्वां एवंभूतरूपां हृदि आधत्ते स्वध्येयत्वेन मनोमन्दिरमानयति। एवमिति किं, अंगेभ्यः किरणनिकुरुंबामृतरसं किरन्तीं, अंगेभ्यः सर्वावयवेभ्यः किरणानां यत् निकुरुंबं समूहः, तल्लक्षणोऽमृतरसः, तं किरन्तीं द्रवन्तीं वर्षन्तीं इत्यर्थः। अथवा निकुरुंब इव योऽमृतरसः तमित्यर्थः। कामिव हिमगिरिशिलामूर्तिमिव, प्रालेयाचलशिलाशकलगलितपीयूषपुत्तलिकामिव, यथा सा निरन्तरं पीयूषं स्रवति, तथाऽरुणां त्वामित्यर्थः। ध्यानानन्तरं फलमाह-स सर्पाणां दर्पं दृष्ट्या शमयति। दर्पशब्देनात्र विषं, विषमूलत्वात् सर्पदर्पस्य, यन्मूलो गर्वः स एव सः। क इव, शकुन्ताधिप इव, गरुड इव। फलान्तरमाह-ज्वरप्लुष्टानपि दृष्ट्वैव सुखयति। किं लक्षणया दृष्ट्या, सुधासारशिरसा सुधाया अमृतस्यासारो धारापातः, तत्प्रधानशिरोरूपया ॥ किरन्तीमंगेभ्य इति श्लोकस्य रहस्यव्याख्या। दुर्वाससो विद्यामाह—किरंतीं अंगेभ्यः कूटत्रयेभ्यः किरणानां निकुरुंबं निचयः, अमृतरसं ब्रह्म, तद्बिन्दुनादात्मानं त्यजन्तीमिति यावत्। तेन नादबिन्दुविहीना चेयम्। युक्त्या कामराजविद्येयेवेत्यर्थः। सर्पाणां जगतां दर्पं महामोहं, किञ्च ज्वरस्तापत्रयं, सुधाधारशिरसा ज्ञानेन, इति सूक्ष्मकलाध्यानं कामकलायाः परमेश्वर्याः आगमे वर्तते ॥ २० ॥

## तात्पर्यदीपिनी

अथ मृतसञ्जीवनीं दर्शयति-**किरन्तीमिति**—हे मातः स सर्पाणां दुष्टानां गर्वं शमयति नाशयति। कया सुधाधारशिरया दृष्ट्या, सुधाया अमृतस्य धारा तस्याः शिरा पद्धतिः तया सुधासदृशयेत्यर्थः। स कः? यस्त्वां हृद्याधत्ते ध्यायेत्। किंविधां त्वाम्? अंगेभ्यः किरणनिकुरुंबामृतरसं किरन्तीम् अंगेभ्य इत्युपलक्षणम्। उपांगेभ्योऽपि किरणानां मयूखानां निकुरुंबः समूहः तदेव अमृतं रसः, तं किरन्तीं विक्षिपन्तीं, कामिव? हिमकरशिलामूर्तिमिव, हिमः करा यस्य सः, तस्य

शिला चन्द्रकान्तशिला तस्या मूर्तिमिव । सर्पदर्पशमने दृष्टान्तमाह—क इव शकुन्ताधिप इव, यथा पक्षिराट् सर्पाणां दर्पं शमयति तद्वदित्यर्थः । न केवलमेतावतैवालम् । अपितु ज्वरप्लुष्टानपि ज्वरेण दग्धानपि दृष्ट्या सुखयति विज्वरं करोति । एतदमृतेश्वरीध्यानं न केवलं विषहरं अपि तु ध्यातारं ब्रह्मायुषमुलंघ्य वर्तमानं करोति । तदुक्तं अंबास्तवे—ये चिन्तयन्त्यमृतवर्षिभिरंशुजालैराप्लाव्यमान-भुवनाममृतेश्वरीं त्वाम् । ते लंघयन्ति ननु मातरलंघनीयां ब्रह्मादिभिः सुरवरैरपि कालकक्षाम्'' इति ।

## पदार्थचन्द्रिका

इदानीं भवान्या मूर्तिभेदध्यानं दर्शयन् तत्फलं च सर्पज्वरोपशमनरूपमाह—**किरन्तीमि**ति-हे हरमहिषि यस्त्वां हृदि आधत्ते स्थापयति, स सर्पाणां दर्पं विषजनितं अहंकारं शमयति । ज्वरप्लुष्टं ज्वरैः ऐकाहिकद्व्याहिकादिभिः प्लुष्टं दग्धं च दृष्ट्या सुखयति । भवानीं विशिनष्टि-हिमप्रचुरो गिरिः हिमगिरिः । हिमगिरेः शिलाया मूर्तिः तामिव, तत्सदृशीमित्यर्थः । अंगेभ्यो हस्तपादादिभ्यः किरणनिकुरुम्बामृतरसं किरणसमूहं अमृतरसमिव किरन्तीं विक्षिपन्तीम् । सर्पदर्पोपशमने दृष्टान्तः, शकुन्ताधिप इव पक्षीन्द्रो गरुड इव । गरुडस्य सर्पो यथा वश्यस्तथैवंविधस्य ध्यातुरपीत्यर्थः । सुधाधारश्चन्द्रः, तद्वच्छिवया सुखदया इति दृष्टिविशेषणम् । सुधाधारशिरयेति पाठे सुधाया धारा यस्यां सा सुधाधारा । सुधाधारा चासौ शिरा चेति तया । अमृतस्राविनाडचेत्यर्थः । यद्वा सुधाया आधारः स चासौ शिवा चेति तयेत्यर्थः । दर्पः कस्तूर्यामप्यहंकृताविति मेदिनीकारः ॥२०॥

## डिण्डिमभाष्यम्

इत्थं कामकलाध्यानमुक्त्वा विषहरं ज्वरहरञ्च ध्यानान्तरमाह—तस्य च ध्यानस्याधिष्ठानदेवता अमृतेश्वरीमूर्तिर्ललिता । हे परमेश्वरि ! किरणनिकुरुम्बामृतरसं स्व-रश्मिमालालक्षणं पीयूषं किरन्ती स्रवन्ती हिमकरशिलामूर्तिमिव चन्द्रकान्तमणिघटितपुत्तलीमिव यः पुरुषो हृदि हृदयकमले आधत्ते चिन्तयति, स शकुन्ताधिप इव गरुड इव सर्पाणां दर्पं शमयति तक्षककर्कोटकादिमहासर्पविषज्वाला-मवलोकनमात्रेणैव स तिरस्करोति । किञ्च प्लुष्टं तापज्वरेण पीडयमानशरीरं पुरुषं सुधाधारशिरया पीयुषप्रभाशीतलया दृष्टया लोचनेन सुखयति आनन्दयति, एतदमृतेश्वरीध्यानं न केवलं विषज्वरम् : अपि तु ब्रह्मादीनामपि आयुः कक्षामुलङ्घ्य वर्तमानस्य परमायुषः कालस्य भोक्तारं बहुकालजीवितधातारं करोति । उक्तं अंबास्तवे-" ये चिन्तयन्त्यमृतवाहिभिरंशुजालैराप्लाव्यमानभुवनाममृतेश्वरीं त्वां । ते लङ्घयन्ति ननु मातरलङ्घनीयं ब्रह्मादिभिः सुरवरैरपि कालकक्षाम् ॥''- इति ॥ २० ॥

## गोपालसुन्दरी

तृतीयबीजसाधनोपयुक्तं ध्यानमाह-**किरन्तीमित्यादि** । यः साधकः त्वां हृदि आधत्ते स शकुन्ताधिप इव गरुड इव, सर्पाणां दर्पं दृष्ट्या शमयति, ज्वरप्लुष्टं ज्वरदग्धं सुखयति त्वां कीदृशीम् ?

अङ्गेभ्यः शरीरेभ्यः, किरणनिकुरम्बः तेजःसमूहः स एवामृतरसः सुधाद्रवः तं किरन्तीं। कामिव? हिमकरशिलामूर्तिमिव चन्द्रकान्तमणिमूर्तिमिव; एतेन श्वेतरूपं ध्यानमुक्तम्। दृष्ट्या कीदृश्या? सुधाधार-शिरया अमृतधारासञ्जातप्रणालिकया इत्यर्थः।

**विष्णुपक्षे**-किरन्तीमिति-शिलामूर्तिविशेषणम् ॥ २० ॥

## आनन्दलहरीटीका

तृतीयस्य शक्तिबीजस्य ध्यानं तत्फलं चाह—किरन्तीमिति। अंगेभ्यः शरीरावयवेभ्यः किरणानां तेजसां निकुरुंबं समूहः तद्रूपं अमृतरसं किरन्ती क्षिपन्ती, हिमकरशिला चन्द्रकान्तमणिः, तन्मूर्तिं तत्स्वरूपामिव त्वां यो जनः हृदि आधत्ते ध्यायति। हिमकरेत्यनेन शुभ्ररूपता उक्ता। स सर्पाणां दर्पं विषरूपं दृष्ट्या शमयति नाशयति, शकुन्तानां पक्षिणां अधिपो गरुड इव। ज्वरेण प्लुष्टं दग्धं दृष्ट्या सुखयति। अत्रापि शमयतीति पाठे उपशान्तदाहं करोतीत्यर्थः। कीदृश्या दृष्ट्या सुधाया अमृतस्य शिरा प्रणाली तद्रूपया। निकुरुंबः कदम्बक इति। धूम्रकलायाः स्थूलध्यानमुक्तम् ॥२०॥

**[1]तटिल्लेखातन्वीं तपनशशिवैश्वानरमयीं**
**निषण्णां [2]षण्णामप्युपरि कमलानां तव कलाम्।**
**महापद्माटव्यां [3]मृदितमलमायेन मनसा**
**महान्तः पश्यन्तो दधति परमाह्लादलहरीम् ॥ २१ ॥**

தடில்லேகாதன்வீம் தபனஶஶிவைஶ்வானரமயீம்
11 2 1 11
நிஷண்ணும் ஷண்ணுமப்யுபரி கமலாணும் தவ கலாம்;
1 1 1 1 1
மஹாபத்மாடவ்யாம் ம்ருதிதமலமாயேன மனஸா
1 3 1 3 1
மஹாந்த: பஶ்யந்தோ தததி பரமாஹ்லாதலஹரீம்.
1 1 1 3 4 1 1 3

बिजली की रेखा सी, तपन चन्द्र वैश्वानरमय छवि सी,
कमलों के ऊपर छः सहस्रार में बैठी महीयसी !
लखते हैं जो तेरी कला, क्षपितमलमयादिक-शुभमन
लभते हैं निरतिशयानन्दतरंग सदा वे संत-सुमन ! ॥

## लक्ष्मीधरा

**तटिल्लेखेति**—तटिल्लेखा विद्युल्लेखा तद्वत् तन्वी दीर्घसूक्ष्मा ज्योतिर्मयी क्षणप्रभा च ताम्। स्थिरसौदामिन्याः क्षणप्रभात्वं आज्ञाचक्रे क्षणमात्रदर्शनात्। एतच्च आज्ञाशब्दनिरूपणावसरे पूर्वमेव

---

1. तडिल्लेखातन्वीं 2. षण्णामुपरि 3. मृदुतमममायेन

प्रतिपादितम् । तपनशशिवैश्वानरमयीं सूर्यचन्द्रानलात्मिकाम् । एतच्च त्रिखण्डनिरूपणावसरे सम्यङ्निरूपितम् । निषण्णां आसीनां । षण्णां षट्संख्याकानाम् । अपिः समुच्चये, ग्रन्थित्रयं समुच्चिनोति । ग्रन्थित्रयस्यापि उपरि कमलानां पद्मानां । षट्चक्राणां आधारस्वाधिष्ठानमणिपूरकानाहतविशुद्ध्याज्ञात्मकानां कमलस्वरूपत्वं पूर्वमेव निरूपितम् । तव भवत्याः, कलां सादाख्यां बैन्दवीकलाम् । महापद्माटव्यां महान्ति बहूनि पद्मानि पद्मदलानि सहस्रसंख्याकानि, तान्येव अटवी, तस्यां सहस्रदलकमलकर्णिकायामित्यर्थः । यद्वा, महापद्मं सहस्रदलकमलं, तदेव अटवी, तस्याम् । मृदितमलमायेन मृदिताः क्षपिताः मलाः कामादयः मायाऽविद्याऽस्मिताहंकारादयः यस्य तत् तेन मनसा अन्तःकरणेन, महान्तः योगीश्वराः, पश्यन्तः सादाख्यकलासुधाधारानिष्यन्दं अनुभवन्तः, दधति अवरुन्धते । परमाह्लादलहरीं परमः निरतिशयः आह्लादः सुखविशेषः, तस्य लहरीं उद्रेकं उद्रिक्तपरमानन्दं सादाख्यकलामृतानुभवजनितं, सर्वदा संपादयन्तीत्यर्थः ॥

अत्रेत्थं पदयोजना—हे भगवति तटिल्लेखातन्वीं तपनशशिवैश्वानरमयीं निषण्णां षण्णां कमलानामप्युपरि महापद्माटव्यां निषण्णां तव कलां मृदितमलमायेन मनसा पश्यन्तो महान्तः परमाह्लादलहरीं दधति ॥ २१ ॥

## सौभाग्यवर्धनी

कामकलायाः स्थूलध्यानमभिधाय सूक्ष्मध्यानमाह—**तटिल्लेखेति** । विद्युल्लताकान्तितनुं सूर्येन्दुवह्निरूपबिन्दुत्रयमयीं षण्णामपि कमलानां मूलाधारादीनामपि उपरि स्थितां तव कामकलां महापद्मवने, निर्मृष्टमलमायेन ; मलानि त्रीणि मानसिकानि—संकल्पः, अध्यवसायः, क्रियानिष्पत्तिरिति । तद्विषयिणी माया तद्रहितेन मनसेत्यर्थः । महापद्मवनं नाम द्वादशान्तस्थितसहस्रदलम् । तथा चावाहनमन्त्रः—'महापद्मवनान्तस्थे कारणानन्दविग्रहे । सर्वभूतहिते मातरेह्येहि परमेश्वरि ॥' इति । तस्मिन्महान्तः तव कामकलानुसंधानसमाकलिततनूभूतसर्वव्यवहाराः पश्यन्तः अन्तर्मुखेन साक्षात्कुर्वन्तः, परमाह्लादलहरीं दधति । एतादृश्या कामकलान्तर्भावनया समास्वादितनिरतिशयानन्दभाजो जीवन्मुक्ता भवन्तीति भावः । अयमत्र भावनाप्रकारः—मूलादिब्रह्मरन्ध्रान्तेष्वब्जेषु मूलाधारमणिपूरस्वाधिष्ठानानाहतविशुद्धिलंबिकाग्रभ्रूमध्येन्दुचन्द्रार्धरोधिनीनादनादांतशक्तिव्यापिकासमनो-न्मनीसंज्ञेष्वष्टादशस्थानेषु विद्याक्षराणि पूर्वपूर्वाणि उत्तरोत्तरेष्वक्षरेषु भावनापूर्वकं विलाप्य व्यापिकायां योनिरूपे वह्नौ विलाप्य तं च समनस्थाने बिन्दुत्रयात्मकेश्वरे विलाप्य उन्मनीस्थाने सपरार्धकलां भावयन् सूर्यं दहने दहनं चन्द्रे चन्द्रमपरार्धकलायां विलाप्य विगलितवेद्यान्तरहृदयपरमानन्दनिर्भरो योगी शिवशक्तिभावनया तादात्म्यमधिगच्छति । तदुक्तं कादिमते—'इति ते गदिता कामकलायां बाह्यभावना । पूर्वमेवाधुना वक्ष्ये भावनामान्तरालिकाम् ॥ मूलादिब्रह्मरन्ध्रान्तं स्फुरद्विद्युल्लताकृतिम् ।

ध्यायेत्कुण्डलिनीं देवीं त्वद्विद्याक्षररूपिणीम्। षट्चक्रभेदिनीं देवीं तां च बिन्दुत्रयात्मिकाम्। तां चाप्यर्धकलारूपां चिन्तयेत्पद्मकानने ॥ एवं भावनया जुष्टः परमानन्दनिर्भरः। संसारसागरं धीमान्गोष्पदीकुरुते शिवे ॥' इति। सुभगोदयेऽपि सूचिताऽन्तर्भावना, न प्रकाशिता—'मूलादिब्रह्मरन्ध्रान्तं मूलविद्यां विभावयेत्। उद्यदादित्यसंकाशां - तटित्कोटिसमप्रभाम् ॥ तत्प्रभापटलव्याप्तं - शरीरमपि चिन्तयेत् ।' इति। एतादृशीं कामकलां यो गुरुमुखादुक्तां शृणोति स एव जीवति; स एवान्नमत्ति। अन्यः पशुरिव विषयेषु लम्पटो व्यवहरतीत्यर्थः। तथा च श्रुतिः—मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईंशृणोत्युक्तम्' इति ॥ २१ ॥

## अरुणामोदिनी

पराध्यानमाह—**तटिदिति**। हे भगवति, महान्तो योगीश्वराः, तपनशशिवैश्वानरमयीं सूर्यसोमानलात्मिकाम्; भगवतीव्यतिरेकेण तेषामभावादित्यभिप्रायः। तदुक्तंचर्चास्तवे—'योऽयं चकास्ति गगनार्णवरत्नमिन्दुर्योऽयं सुरासुरगुरुः पुरुषः पुराणः। यद्वाममर्धमिदमन्धकसूदनस्य देवि त्वमेतदिति नः प्रतिपादयन्ति ॥' 'मूर्ध्निस्फुरत्तुहिनदीधितिकान्तिमिश्रं मध्येललाटममरायुधरश्मिचित्रम्। हृच्चक्रचुम्बि हुतभुक्कणिकानुरूपं ज्योतिर्यदेतदिदमम्ब तव स्वरूपम् ॥' इति। षण्णां षट्सख्याकानामपि कमलानां मूलाधारादिषडब्जानाम्; अपिशब्दो ग्रन्थित्रयसमुच्चयार्थः। तस्य चोपर्यूर्ध्वं स्थितायां, महापद्मं सहस्रदलकमलमेवाटवी, सहस्रदलात्मकत्वात्; तस्यां निषण्णाम्; सग्रन्थीनि षट् चक्राणि भित्वा महापद्मवने संनिविष्टामित्यर्थः। तथा चावाहनमन्त्रः—'महापद्मवनान्तस्थे कारणानन्दविग्रहे। सर्वभूतहिते मातरेह्येहि परमेश्वरि ॥' इति। तटिल्लेखातन्वीं तां क्षणप्रभारूपिणीम्; आज्ञाचक्रे तथा दर्शनादिति भावः। तव भवत्याः कलां, मृदिते मर्दिते निष्कासिते; मलानि कामादयः, संकल्पोऽध्यवसाय इत्यादयो वा; माया तत्कारणभूता अविद्या च येन तेन निर्मलेनेत्यर्थः। मनसा अन्तःकरणेन पश्यन्तः समालोकयन्तः सन्तः परमाह्लादलहरीं ब्रह्मानन्दस्रोतः दधति अनुभवन्ति। निरस्तमायामलेनान्तःकरणेन तटिल्लेखेव षडम्बुजभेदनपूर्वकं सहस्रारपद्मारूढां पराकाशरूपिणीं चन्द्रकलां भवतीं निध्याय ब्रह्मानन्दस्रोतोनिमग्ना भवन्तीत्यर्थः। उक्तं चाम्बास्तवे—'मूलालवालकुहरादुदिता भवानि निर्भिद्य षट् सरसिजानि तटिल्लतेव। भूयोऽपि तत्प्रविशसि ध्रुवमण्डलेन्दुनिष्यन्दमानपरमामृतवृष्टिरूपा ॥' इति। योगिभिरेवं ध्यातव्यमित्युपदेशः ॥ २१ ॥

## आनन्दगिरीया

"इति ते कथिता कामकलाया बाह्यभावना। पूर्वमेवाधुना वक्ष्ये साधनामान्तरालिकीम्। मूलादिब्रह्मरन्ध्रान्तस्फुरद्विद्युल्लताकृतिम्। ध्यायेत्कुण्डलिनीं देवीं त्वद्विद्याक्षररूपिणीम्। षट्चक्रभेदिनीं

देवीं तां च बिन्दुत्रयात्मिकाम्। तां च सार्धकलारूपां चिन्तयेत्पद्मकानने। एवं भावनया कृष्टः परमानन्दनिर्भरः। संसारसागरं धीमान्गोष्पदीकुरुते शिवे।'' इति सूक्ष्मध्यानमाह—**तटिल्लेखेति।** हे मातः महापद्माटव्यां तव कलां पश्यन्तो महान्तः परमाह्लादलहरीं दधति। महापद्माटव्यां ब्रह्मरन्ध्रान्तर्वर्तिनिर्वाणचक्रे सहस्रदलकमले। दलबाहुल्याभिप्रायेण अटवीपदप्रयोगः। तव कामकलामीकाररूपां विसर्गानुस्वाररूपां वा पश्यन्तः साक्षात्कुर्वन्तो महान्तः साधका योगीश्वराः परमाह्लादलहरीं दधति। आत्माकारान्तःकरणवृत्तिप्रतिबिंबितानन्दरूपां दधति। पश्यन्त इत्युक्ते तत्र कारणापेक्षायां चक्षुरादेरसंभवादाह मनसेति। मनोवृत्तिरूपेण साक्षात्कारेण पश्यन्तः। मनसः शुद्धिमाह—मृदितमलमायेनेति। परद्रव्याद्यभिध्यान-परानिष्टानुसन्धान-वितथाभिनिवेशास्त्रयो मानसा मलाः। संकल्पाध्यवसायक्रियादयो वा। तल्लक्षणा तद्विषयकवासनारूपा वा या माया सा मृदिता नाशिता यत्र तेन सम्यक्शोधितेन। किंलक्षणां, तटिल्लेखातन्वीं तटिल्लेखावत्तन्वीं तपनशशिवैश्वानरमयीं बिन्दुत्रयात्मिकामित्यर्थः। पुनः कीदृशीं षण्णामपि कमलानामुपरि निषण्णां मूलाधारादिविशुद्धान्तानां उपरि सहस्रदले स्थिताम्। अयं प्रकारः—सम्यक् समे देशे सम्यगासने उपविश्य प्राणानायम्य मनसा षट्चक्रभेदपूर्वकं सहस्रदले परमेश्वरीमावाहयेत्। आवाहनमन्त्रः—''महापद्मवनान्तस्स्थे सच्चिदानन्दविग्रहे। सर्वभूतहिते मातरेह्येहि परमेश्वरि'' इति। आवाहनपूर्वकं तत्र मानसोपचारैः पूजयित्वा ध्यायन् ध्यानधारानुसन्धानसमाकलितपरमेश्वरीस्वरूपानुभवानन्दतिरस्कृतबाह्यप्रपञ्चरचनाकल्लोलकोलाहले मनसि परमानन्दलहरीं दधतीति। अथवा श्रीचक्रान्तरगतत्रिकोणे वर्तमानां तव कलां पश्यन्तो ध्यायन्तः परमाह्लादलहरीं दधति। किंलक्षणां षण्णामपि कामकलानामुपरि स्थितां षोडशाश्राष्टाश्रचतुर्दशारदशारद्वयाष्टाराणामुपरि धुरि वर्तमानां, पुनः कीदृशीं तपनशशिवैश्वानरमयीं सोमसूर्यानलात्मकचक्रप्रधानां महापद्माटव्यामनेन ध्यानं-महापद्मवनान्तस्थ इत्यादि। अन्यत्पूर्ववत्॥ तटिल्लेखातन्वीतिपद्यस्य रहस्यार्थः। अत्र वैष्णवीसप्तकूटोद्धारमाह-तटिल्लेखातन्वी प्रणवः, तपनशशिवैश्वानरमयीति प्रत्ययबाहुल्यात् षण्णां कूटानामुपरि। आद्ये प्रणवः षट्कूटा वैष्णवी॥ २१॥

## तात्पर्यदीपिनी

अत्र ज्योतिर्मयं स्वरूपं सहस्रारारूढं अभिवर्ण्यते-**तडिल्लेखेति**-महान्तः श्रेष्ठाः परमानन्दलहरीं दधति। परमश्चासावाह्लादश्च ततो लहरीं अन्यमानन्दं दधति धारयन्ति। किं भूताः, मनसा अन्तःकरणेन तव कलां स्वरूपं पश्यन्तः, साक्षादात्मनि विलोकयन्तः। कीदृशीं कलाम्, षण्णामपि कलानामुपरि, पूर्वोक्तानां मूलाधारस्वाधिष्ठानमणिपूरकमारुताकाशमनः इति षण्णामुपरि सहस्राराब्जे निषण्णां उपविष्टां; पुनः कीदृशीं तटिल्लेखावत् विद्युदिव तन्वीं सूक्ष्मां, पुनस्तपनशशिवैश्वानरमयीं, तपनश्च

शशी च वैश्वानरश्च तैः स्वरूपा तां तथोक्तां, कथंभूतेन मनसा महापद्माटव्यां मृदितमलमायेन। पद्मानामटवी, महती चासौ पद्माटवी च तस्यां महीं मूलाधारे इत्यत्र पूर्वश्लोकोक्तायाम्। मृदिता त्यक्ता मलरूपा माया येन तथोक्तेन। तदा संगराहित्येनोपमर्दितमायाकुहरकेणेत्यर्थः ॥ २१ ॥

## पदार्थचन्द्रिका

एवं तत्तद्ध्यानं तत्फलं चाभिधाय तदीयं परमयोगीश्वरवन्दितपादपद्मं स्तुवन् निरन्तरतदनुसन्धानमाह-**तटिल्लेखेति**। हे जननि तव कलां मूर्तिं महान्तः दुर्वासदत्तात्रेयप्रभृतयः पश्यन्तो निरन्तरमनुसन्दधानाः सन्तः परमाह्लादलहरीं निर्मलपरब्रह्मसुखपरंपरां दधति हृदि धारयतीत्यर्थः। दर्शने करणमाह-मनसेति। तस्य योग्यतामाह-मृदितमलमायेन, मृदिते अशिते मलमाये यस्य तेन, मलं पापं, माया तन्मूलभूता अविद्या, अथवा माया वञ्चना। कलां विशिनष्टि-महापद्माटव्यां यानि षट् कमलानि तेषामप्युपरि सहस्रारे पद्मे निषण्णां उपविष्टाम्। तडिल्लेखातन्वीं, विद्युल्लेखासूक्ष्मां, तपनशशिवैश्वानरमयीं, त्रिनेत्रत्वात्। महान्ति च तानि पद्मानि महापद्मानि, महापद्मान्यटवीव महापद्माटवी तस्यां। महत्त्वं चैषां स्वर्गारोहणद्वारा महापदप्राप्तिहेतुत्वात्। अथवा महती चासौ पद्माटवी च महापद्माटवीति समासः ॥ २१ ॥

## डिण्डिमभाष्यम्

अथ पूर्वोक्तानां बहूनां ध्यानानामुत्तमोत्तमं योगध्यानविशेषमाह-**तडिल्लेखामित्यादिना**। तडितो लेखा तडिल्लेखा, तद्वत्तन्वीं सूक्ष्माकाराम्। तपनशशिवैश्वानरमयीम्; तपनः अहङ्कारसूर्यः, शशी समस्तौषधिरसलक्षणाहारपरिपालकजनितः कन्दर्परसोल्लासवासनादायी सोमभट्टारकः; वैश्वानरस्तु आर्द्रीयमाणानामाहारवस्तूनां परिपाकदायी शिवः पावकस्वरूपस्तेजोविशेषः। एते त्रयो मिलित्वैव शरीरं धारयन्ति। एतेषां त्रयाणां तेजसामैक्यं तन्मयीम्। किञ्च कल्पेश्वरादिमहाशाक्तेन षट्त्रिंशत्तत्त्वाधिष्ठानदेवतामयानां महाविद्यायाः षट्त्रिंशदक्षराणां षट्कं षट्कं विभज्य यानि पूर्वोक्तानि मूलाधारादीनि षट्कमलानि प्रसिद्धानि तेषां षट्सङ्ख्यावतां कमलानामुपरि निषण्णां स्थितिमतीं तव ज्योतिःकलां द्विषट्कान्ते वर्तमानायां महापद्माटव्यामानीय, मृदितमलमायेन मृदिता मलाः कामक्रोधलोभादिमनोविकारास्तन्मूलभूता च अनाद्यविद्यारूपिणी माया शांबरी च तयोर्द्वन्द्वो मलमाये मृदिते निर्घाटिते दूरीकृते येन तन्मनो मृदितमलमायं तेन, कलां पश्यन्तो निभालयन्तो महान्तः परमाह्लादलहरीमनुपाधिपरब्रह्मरसास्वादप्रवाहं दधति ॥ २१ ॥

## गोपालसुन्दरी

मुखं बिन्दुमित्यादिना कामकलायाः स्थूलं ध्यानमुक्तमिदानीं सूक्ष्मं तद् ध्यानमाह-**तडिल्लेखेति**। तव कलां मूर्तिं महान्तः सनकादयः महापद्माटव्यां सहस्रारे मनसा ध्यायन्तः परमाह्लादलहरीं अति-

शयसुखप्रवाहं, दधति धारयन्ति । कीदृशेन मनसा ? मृदितेन नाशितेन मलमायेन, मलाः कामक्रोधादयः, माया अनादिसिद्धा अविद्या । कलां कीदृशीं ? तडिल्लेखावत् विद्युच्छटावत्, तन्वीं सूक्ष्मां, तपनशशिवैश्वानरमयीं सूर्येन्दुवह्निरूपबिन्दुत्रयवतीं, परां कमलानामाधारादिसंज्ञानामुपरि सहस्रारे निषण्णामुपविष्टामित्यर्थः । तदुक्तं कादिमते-"इति ते गदिता कामकलाया बाह्यभावना । पूर्वमेवाधुना वक्ष्ये भावनामान्तरालिकीम् ॥ मूलादिब्रह्मरन्ध्रान्तं स्फुरद्विद्युल्लताकृतिम् । ध्यायेत् कुण्डलिनीं देवीं त्वद्विद्याक्षररूपिणीम् ॥ षट्चक्रभेदिनीं देवीं ताञ्च बिन्दुत्रयात्मिकाम् । तामेवार्धकलारूपां चिन्तयेत्पद्मकानने ॥ एवं भावनया जुष्टः परमानन्दनिर्भरः । संसारसागरं धीमान् गोष्पदीकुरुते शिवे ॥"

**विष्णुपक्षेऽप्येवम् ॥ २१ ॥**

## आनन्दलहरीटीका

इदानीं सूक्ष्मध्यानमाह-तडिल्लेखेति । तडिल्लेखा विद्युद्राजी । तडिल्लेखेव तटिल्लेखा, सा चासौ तन्वी च तां, तेजोमयीं सूक्ष्मां चेत्यर्थः । सूर्यचन्द्राग्निमयीं तदात्मकबिन्दुत्रयवतीम् । सूर्योऽहंकारः, शशी शुक्रं, वैश्वानरो जाठराग्निः तद्रूपात्मिका चित् । षण्णामाधारचक्रादीनां कमलानां पद्मानां उपरि महापद्माटव्यां सहस्रदलकमले निषण्णां उपविष्टां तव कलां कामकलामूर्तिं मनसा पश्यन्तो ध्यायन्त इति यावत् । महान्तोऽपि योगिनः परमाह्लादलहरीं प्रकृष्टानन्दतरंगं दधति धारयन्ति प्राप्नुवन्तीत्यर्थः । कीदृशेन मनसा मृदिते दूरीकृते मलमाये येन तत्तथाभूतेन । मलं कामक्रोधादि, माया मिथ्याज्ञानवासना । परमाह्लादेत्यनेन कामेशीबीजसूचनम् । रीतिस्तु चिदानन्दलहरीमित्यत्र दर्शिता । एतत्पद्यार्थः कादिमते दर्शितः । "इति ते गदिता कामकलाया बाह्यभावना । पूर्वमेवाधुना वक्ष्ये भावनामान्तरालिकीम् । मूलादिब्रह्मरन्ध्रान्तं स्फुरद्विद्युद्घनाकृतिम् । ध्यायेत्कुण्डलिनीं देवीं त्वद्विद्याक्षररूपिणीम् । षट्चक्रभेदिनीं देवीं तां च बिन्दुत्रयात्मिकाम् । तामेवार्धकलारूपां चिन्तयेत् पद्मकानने । एवं भावनया युक्तः परमानन्दनिर्भरः । संसारसागरं धीमान् गोष्पदीकुरुते शिवे ॥" इति ॥ २१ ॥

**भवानि त्वं दासे मयि वितर दृष्टिं सकरुणा-**
**मिति स्तोतुं वाञ्छन् कथयति भवानि त्वमिति यः ।**
**तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं**
**मुकुन्दब्रह्मेन्द्रस्फुट[1]मकुटनीराजितपदाम् ॥ २२ ॥**

1. स्फुट मुकुट

பவானித்வம் தாஸே மயி விதரத்ருஷ்டிம் ஸகருணாம்
4 1 3 1 3 1 1
இதி ஸ்தோதும் வாஞ்சன் கதயதி பவானி த்வமிதிய: ;
1 1 1 2 12 1 4 1 1
ததைவ த்வம் தஸ்மை திசஸி நிஜஸாயுஜ்யபதவீம்
1 3 1 1 3 3
முகுந்த ப்ரஹ்மேந்த்ரஸ்புடமகுட நீராஜிதபதாம்.
1 3 3 3 21 11 11 3

"त्वं भवानि मुझ किंकर पर डालो सकरुण चितवन अपनी!"
चाह लिये करने की यों तेरी स्तुति मनमें, गुह-जननी!
'तू मैं बनूँ', इसी आशय से, 'त्वं भवानि' कहने से ही
हरि-विधीन्द्र-मुकट-रत्न-गण से नीराजित जो हो, ऐसी
निज-पदवी दे सायुज्यकी मुक्त करती है क्षण में ही! ॥

## लक्ष्मीधरा

भवानीति-हे भवानि भवस्य पत्नि, त्वं भवती, दासे मयि, दासभूते किंकरे मयि, वितर देहि, दृष्टिं कटाक्षं, सकरुणां करुणायुक्तां, इति एवंप्रकारेण, स्तोतुं स्तोत्रं कर्तुं, वाञ्छन् इच्छन्, कथयति वदति भवानि त्वमिति 'भवानि त्वं दासे मयि वितर दृष्टिं सकरुणाम्' इति वाक्यप्रतीकं 'भवानि त्वं' इत्येवं यः साधकः, तदैव 'भवानि त्वं' इति वाक्यैकदेशोच्चारणसमय एव त्वं भवती तस्मै वाक्यैकदेशोच्चारकाय दिशसि ददासि, निजसायुज्यपदवीं निजस्य आत्मनः सायुज्यपदवीं तादात्म्यम्। मुकुन्दब्रह्मेन्द्रस्फुटमकुटनीराजितपदां मुकुन्दो विष्णुः, ब्रह्मा द्रुहिणः, इन्द्रः आखण्डलः, तेषां स्फुटं यथा भवति तथा मकुटैः नीराजिते नीराजनविधिक्रियाञ्चिते पदे पादाम्बुजे यस्यास्ताम् ॥

अत्रेत्थं पदयोजना—हे भवानि, त्वं दासे मयि सकरुणां दृष्टिं वितरेति स्तोतुं वाञ्छन् भवानि त्वमिति यः कथयति, तस्मै तदैव त्वं मुकुन्दब्रह्मेन्द्रस्फुटमकुटनीराजितपदां निजसायुज्यपदवीं दिशसि ॥

अयमर्थः—'भवानि त्वं दासे मयि' इत्यादिवाक्यप्रतीके 'भवानि त्वं' इति पदद्वये 'भवानि' इति पदस्य लोडुत्तमपुरुषैकवचनान्तत्वमवगम्य तत्सामानाधिकरण्येन त्वंपदस्यान्वये महावाक्यप्रयोगोऽनेन साधकेन प्रयुक्त इति मत्वा महावाक्यफलं तादात्म्यं दिशति भगवती ; जपहोमाद्युपासनाविधिभ्यः तादात्म्योपासनायाः सद्यः फलदायित्वात्। 'अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः' इति न्यायेन अविवक्षया प्रयुक्तमपि महावाक्यं फलदायकमिति, नापि अविमृश्यकारित्वं देव्या इति रहस्यम् ॥ २२ ॥

## सौभाग्यवर्धनी

ध्यानमहिमानमभिधाय नाममहिमानमाह—**भवानि त्वमिति**। हे भवानि, त्वद्दासे मयि सदयां दृष्टिं वितर इति स्तोतुमिच्छन् यो वदति भवानि त्वमिति हेतोस्तस्मै निजसायुज्यपदवीं हरिविरिञ्चीन्द्रप्रभृतिदेवानां स्फुटमुकुटनीराजितपदां दिशसि। लोडुत्तमपुरुषशब्दसाम्यमात्रश्रवणादेव वितरसीत्यर्थः॥ २२॥

## अरुणामोदिनी

एवं सप्तश्लोक्या त्रिवर्गानुसारिणां फलदातृत्वमुक्त्वा, अपवर्गकामिनां तद्दातृत्वमाह—**भवानीति**। हे भगवति, यः साधकः, भवस्य पत्नी भवानी, तस्याः संबुद्धिः हे भवानि, भवस्य पत्नीभावमवाप्य तदनुग्राहिके देवि, 'इन्द्रवरुण....' इत्यादिना ङीषानुकौ। त्वमिष्टार्थवितरणे प्रवीणा निपुणा भवती, दासे किंकरे मयि आत्मनि सकरुणां कृपापर्याप्तां दृष्टिं वीक्षणं वितर देहि। भक्तदुःखापनोदनशीलकरुणाकटाक्षवीक्षणत्वात्तवेति भावः। अत्र भगवतीदृष्टिप्रसारणस्य भक्तानुजिघृक्षाप्रवणत्वेन प्रसारणमात्राकाङ्क्षणेन स्वस्वत्वनिवृत्तेरभावान्न चतुर्थी। एतेन चतुर्थ्यर्थे सप्तमीति व्याख्यानं निरस्तम्। इति एवंप्रकारेण स्तोतुं प्रसादाभिलाषेण स्तुतिं कर्तुं वाञ्छन्नभिलषन् सन्, यदेति शेषः। भवानि त्वमिति कथयति, स्तवनार्थं प्रवर्तितः, 'भवानि त्वं दासे' इत्यादिप्रथमवाक्ये प्रथमप्रतीकं त्वं भवती भवानि भवेयमिति लोडुत्तमपुरुषैकवचनतया तादात्म्यरूपार्थान्तरबोधकं 'भवानि त्वम्', इति पदद्वयमुत्तमपुरुषसामर्थ्यादसदर्थलाभात् 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिमहावाक्यसरूपं कथयति जल्पति, तस्मै उपासकाय, तदैव तदानीमेव, भवत्करुणाकटाक्षवीक्षणप्रसारणप्रार्थनारूपार्थान्तरविवक्षापूर्वकस्याप्यनिच्छयाऽपि तादात्म्याभिलाषरूपार्थद्योतकस्य वाक्यांशस्योक्तिवेलायामेवेत्यर्थः। त्वं भवती भक्ताभीष्टदायिनीत्यर्थः। मुकुन्दब्रह्मेन्द्राणां विष्णुविधिसुरेशानां स्फुटैः प्रकाशमानैः मकुटैः किरीटैः नीराजिते पदे यस्यास्ताम्; इन्द्रादिशिरोधृतकिरीटमणिदीपप्रकाशितामित्यर्थः। निजसायुज्यपदवीमात्मीयतादात्म्यमार्गं सालोक्यसारूप्यसामीप्यसायुज्यरूपेण चतुर्विधां मुक्तिं दिशसि ददासि। अतस्तव सकलमनोरथवितरणं कियदिति भावः। 'एतावताऽलमघनिर्हरणाय पुंसां संकीर्तनं भगवतो गुणकर्मनाम्नाम्। आक्रुश्य पुत्रमघवान्यदजामिलोऽपि नारायणेति म्रियमाण उपैति मुक्तिम्॥' इति भागवतोक्तेरेतादृशतात्पर्योक्तानामपि भगवन्नाम्नामीप्सितार्थदातृत्वमस्ति। भगवत्युपासनाऽपि यथाकथंचिदमनस्केनापि कृता फलदेति भावः॥ २२॥

## आनन्दगिरीया

**भवानीति**। हे भवानि त्वं त्वद्दासे मयि सकरुणां दृष्टिं वितर धेहि इत्यमुना प्रकारेण यस्त्वां स्तोतुं वाञ्छति। वाञ्छाविषयोपन्यासोऽयं वाञ्छाया इच्छारूपतया ज्ञानपूर्वकत्वात्, मातः

भवानि, अहं त्वद्दासः, मयि दासतमे कृपादृष्टिं कुरु, एतावन्तं भागं वाञ्छाकारत्वेनापि निष्कपटेन मनसा यदा ध्यायति जानाति, पश्चादेव वाञ्छन् यदा कीर्तनरूपां बाह्यभक्तिं भवानि त्वमित्येव तं भागं उच्चरति, तदैव त्वं सकलप्रयोजनमौलिभूतां निजसायुज्यपदवीं तस्मै दिशसि दत्से। अयं भावः। इच्छाकारणरूपज्ञानविषयत्वेनापि मनोमन्दिरमानीतां सतीं तामेव मानसीं भक्तिं मन्यसे, दत्से च सायुज्यम्। एतादृशी भक्तानुग्रहकारिणीत्यर्थः। अथवा भवानीति भूधातोर्लोड्उत्तमपुरुषैकवचनं, अहमिति शेषः। त्वमित्यस्य त्वदभिन्न इत्यर्थः। तथा च हे जननि, त्वं भवानि, त्वदभिन्नो भवानि भवेयमित्येतावच्छब्दमात्रमुच्चार्यमाणं श्रुत्वापि निजसायुज्यपदवीं ददासि। कीदृशीं मुकुन्दब्रह्मेन्द्रस्फुटमुकुटनीराजितपदां हरिहरविरिञ्चीन्द्रप्रमुखैरपि किरीटकोटिखचितमणिगणप्रदीप्ताभिर्नीराजितपदांभोजाम्। सालोक्यादिपरित्यागेन सायुज्यमुपवर्णयता, भक्तेर्महिमगरिमा सूचितः। तथा च यया जगदंबिकया करुणाकादंबिनीमुक्तमुक्तिसुधाधारासारया चिन्तकस्य चिन्तनमात्रेण नामोच्चारणमात्रे निजस्वरूपमपि दत्तं, तस्याः कृपापयोनिधेरविरतवाग्विलाससार्वभौमाधिपोत्कृष्टफलदाने कः प्रयास इति भावः॥ भवानि त्वं दास इति पद्यस्य रहस्यार्थः। त्रिपुरामन्त्रमाह—भवानि परा सः, त्वमित्यनुस्वारः, दासे सः, वितर विस्तारं नभः, तेन हंसः। दृष्टिं तुर्यस्वर ई। सकरुणामन्ते ह्रीं। स्तोतुं वाञ्छन् परा सः। कथयति वाणीं ऐं-भवानीति परा सः तद्ब्रह्म ओं एवेत्यर्थात् आद्ये। तथा स्वतन्त्रे तन्त्रे। "परासि त्वं महेशानि भवानी भवहारिणी। शिवशक्त्यात्मिका नादबिन्दुस्वरमयी शिवा। कालीबीजमयीशानि भवानी च गिरां प्रसूः।" इत्यादि त्रिपुरासिद्धिपरा मन्त्रः। ओं सौं सः हंसः ह्रीं सौं ऐं॥ २२॥

## तात्पर्यदीपिनी

हे **भवानि** त्वं तस्मै तदैव तत्कालमेव निजसायुज्यपदवीं दिशसि। निजस्य स्वस्य यत्सायुज्यं सहयोगः तस्य पदवीं तां दिशसि। मोक्षं प्रयच्छसीत्यर्थः। ननु निजसायुज्यपदवी अतिप्रयासलभ्या भविष्यतीति किं? नेत्याह। किंविधाम् मुकुन्दब्रह्मेन्द्रस्फुटमकुटनीराजितपदां मुकुन्दश्च ब्रह्मा चेन्द्रश्च तेषां स्फुटमुकुटैः नीराजितं पदं यस्याः सा तां तथोक्ताम्। अत्र कैमुतिकन्याय उन्नेयः। एतावता ब्रह्मादिभिः वारं वारमभ्यर्थ्याम्। किमु तद्भक्तैरित्यर्थः। तस्मै, कस्मै? यस्त्वां स्तोतुं वाञ्छन् इति कथयति इति वदति। इति किं? हे भवानि त्वं त्वद्दासे मयि सकरुणां दृष्टिं वितर कृपावलोकनं कुर्विति॥ २२॥

## पदार्थचन्द्रिका

इदानीं भवान्याः परमकारुणिकत्वेन परमोदारत्वात् तां स्तौति शंकरो **भवानीति**। हे भवानि, यः कश्चित् भक्तो यदैव इति त्वां स्तोतुं वाञ्छन् भवानि त्वमित्येव कथयति, तदैव त्वं

तस्मै भक्ताय दिशसि ददासि निजसायुज्यपदवीं, निजं सान्निध्यम्। इतिशब्दोक्तां स्तुतिमेवाह-हे भवानि, त्वं दासे मयि सकरुणां दृष्टिं वितर देहीति। निजसायुज्यपदवीं विशिनष्टि, मुकुन्द-ब्रह्मेन्द्रैः स्फुटमुकुटैः नीराजिते पदे यस्यास्ताम्। मयि वितरेति सप्तमी अधिकरणत्वविवक्षया। यदैव स्तोतुं प्रवृत्तमात्रायैव स्वसान्निध्यं प्रयच्छति भगवती, तदा किमु वक्तव्यं, शमदमविशिष्टाय परमशिष्टाय निरंतरं तामेव सेवमानाय स्वसान्निध्यं प्रयच्छतीति भावः ॥ २२ ॥

## डिण्डिमभाष्यम्

ननु चागमोक्तान् अत्यन्तमनोऽवधानगम्यान् अन्तर्यागध्यानप्रपञ्चान् कर्तुमतितरलमनसः क्षणे-क्षणे समुपजातप्रभूतसंसारसज्ज्वरा, भक्तिमात्रसाधना यत्किञ्चिद्भगवतीस्तोत्रमात्रेणैव पराम्बामभिमुखीकर्तुं येऽभिवाञ्छन्ति तेषामनुपाधिभक्तिमतामारम्भ एव स्तवनप्रसादकांक्षिणामुपायः कथं न प्रदर्श्यते इत्याशङ्कयाह **भवानीति**–हे भवानि हे भवराजमहिषि ! "इन्द्रवरुणभवशर्वरुद्रे"त्यादिना आनुक् ङीप् च, त्वद्दासे तव परिचारके सकरुणां कारुण्यपरिपूर्णां दृष्टिं दृशं मयि वितर मह्यं समर्पय। चतुर्थ्यर्थे सप्तमी विवक्षातः कारकाणि भवन्तीति न्यायात्। देवेभ्यो नमस्करोति देवान् नमस्कृत्य करोतीतिवत्। मयि दृष्टिं वितरेत्येवमात्मकं स्तोत्रं वक्तुमुपक्रममाणस्तव भक्तो भवानि त्वम् इत्येतत् पदद्वयात्मकमपि स्तोत्रांशं यः कथयति तस्मै पुरुषाय तदैव तत्कथनसमय एव मुकुन्दब्रह्मेन्द्रस्फुटमुकुटनीराजितपदां, नारायणनलिनासनत्रिदशपुरोगममुकुटमणिभिः मङ्गलकर्पूरदीपिकाऽऽलोकनीराजितचरणां कृतारार्तिक-पादपद्मां निजसायुज्यपदवीं स्वस्वरूपसाक्षात्कारपद्धतिं दिशसि समर्पयसि। सोधकस्योपेयभूतपरब्रह्मसा-क्षात्कारे चमत्कारे चत्वारः प्रकाराः - सालोक्य-सामीप्य-सारूप्य-सायुज्याख्याः सम्भवन्ति। तत्र सालोक्यं जगत्क्षेत्रसप्तकगिरिक्षेत्रनवकमलरूपषोडशक्षेत्रमध्यनिविष्टश्रीश्रीनगरेषु नानावृक्षमहोद्यानमारभ्य चिन्तामणिमन्दिरं यावत् यथातपःपरिपाकमन्तराभ्यन्तरकक्षाभिर्नानामणिविचित्राभिर्नानापरिवृक्षसरोवर-वास्तव्यदेवतायुक्ताभिः सम्पूर्णो भगवत्या निवेशदेशविशेषो लोकः, सलोकः समानो देव्या इव यस्य भक्त-स्यापि सदृशः स सलोकः, सलोकस्य भावः सालोक्यम्। उक्तञ्च " सार्ष्टितां समानलोकतामाप्नोति।" आर्ष्टिपदेन लोकोत्पन्नो भोग उच्यते "समान आर्ष्टिः सार्ष्टिः, समानो लोकः सलोकः" इति वेदभाष्ये भट्टभास्करः। सलोकत्वं तावत् प्राप्य प्रथमा सिद्धिः। तदनन्तरमपि भगवतीचरणारविन्दसादरनिरन्तरध्या-नधारापरिपालनवशात् भगवत्या महान्तःपुरचिन्तामणिगृहराजबाह्यवितर्दिकावासः द्वितीया सिद्धिः। ततोऽप्यखिललोकमातृकोपसङ्ख्यानेन सारूप्यसिद्धिः। भगवत्या यद्रूपं तदेवात्मनि धत्ते। निरन्तरान्तरा-न्तरानुसन्धानवशात् एषा तृतीया सिद्धिः। चतुर्थी तु सर्वप्रकारेण परित्यक्तभेदफलका साधकारा-ध्ययोरियं मे स्वामिनी सोऽहमस्या दास इत्यादिकं भेदमालिन्यमपास्य आत्मपरयोः सलिले सलिलमिव क्षीरे क्षीरमिव सम्पद्यमानः स्वात्मैक्यात् पुनः कालान्तरदेशान्तराविव विश्लेषकथानभिज्ञा परमानन्द-

परिपूर्णा निस्तरङ्गसमुद्रप्रख्या निर्वातनिष्कम्पदीपशिखाकारसदृशज्योतिर्मयस्फुरणा तादृशसहस्रलक्षादिवत्सरव्यपगमेऽपि सुप्तप्रबुद्धपुरुषतावन्मात्रकालप्रतिपत्तिवत् कालानुभवसमानानुभवबहुकाललङ्घना स्फूर्तिमयी चिन्मयी प्रकाशमयी च या चतुर्थी सिद्धिः सा सायुज्यपदवी नाम। तदुपरि सिद्ध्यभावात्सैव सर्वसिद्धीनामवसानभूमिः। युज्यते तेन साधक इति युक् योगेनात्मदर्शनम्। समाना युक् यस्य स सयुक्। 'युजिर् योगे' इति धातोः करणसाधकः क्विप्। सयुजो भावः सायुज्यम्। यद् युक्सम्बन्धेन भगवत्याः स्वस्वरूपपरिपूर्णता तद्युक्सम्बन्धेन साधकस्यापि परिपूर्णता इत्यर्थः। इयमेव मुक्तिशब्दवाच्या। एतदर्थमेव सर्वे नियमा व्रतानि जपास्तपांसि दानानि धर्मास्तीर्थयात्रा इष्टानि पूर्तानि यानि चैवंविधानि सकलकल्याणभाजनभूतानि सर्वाणि कर्माणि। "कर्मणामात्मलाभान्न परं विद्यते" इत्यापस्तम्बः। "अविद्याध्वंसो मोक्ष" इति शङ्करः। "नित्यनिरतिशयसुखाभिव्यक्ति" रिति मीमांसकाः। "गुणपुरुषान्यताख्याति"रिति साङ्ख्याः। आदिविदुषः सिद्धपुरुषस्य "नित्ययोगशक्तिनिभालनानितरानन्दानुभूति"रिति पातञ्जलाः। "आत्यन्तिकी दुःखनिवृत्तिः पुरुषस्य मोक्ष" इति तार्किकाः। "निर्विषयबुद्धिसन्तानधारावलोकन"-मिति बौद्धाः। "नित्योर्ध्वगमन"मिति जैनाः। "मरणमेव मोक्ष" इति चार्वाकाः। "नित्यनादानुसन्धानेन निरन्तरोङ्कारशब्दोच्चारणान्नादब्रह्मणि लय" इति ब्रह्मवादिनः। इत्थं बहुविधदर्शनसिद्धान्ताङ्गीकृतविविधमोक्षस्वरूपस्याप्येकीकरणसामर्थ्येन परब्रह्मस्वरूपा शक्तिः परमानन्दानुभवरूपदेवीतादात्म्यमेव सायुज्यपदवीत्यलमतिप्रसङ्गेन ॥ २२ ॥

## गोपालसुन्दरी

**भवानीति**-हे भवानि! मयि दासे त्वं सकरुणां दृष्टिं वितर प्रयच्छ; इति सम्पूर्णं स्तोतुं वाञ्छन् 'भवानि त्वं' इति एतावन्मात्रं यः कथयति शेषभागं यावन्नोच्चरति तदैव त्वं तस्मै निजसायुज्यपदवीं दिशसि प्रयच्छसि, कीदृशीं? मुकुन्दो विष्णुः, ब्रह्मा धाता, इन्द्रः पाकशासन एतेषां स्फुटं यन्मकुटं तेन नीराजितं पदं यस्यास्तामित्यर्थः।

**विष्णुपक्षे**—हे मुकुन्द मोक्षप्रद! मयि सकरुणां दृष्टिं वितर इति एकं वाक्यम्, तथा भगवान् इत्थं कन्दर्पत्वं मयि वितरत्विति विभक्तिविपरिणामे तात्पर्ये वाक्यम्, भवत्यस्मादिति भवो विष्णुः स एव अनः प्राणो विद्यते यस्यासौ भवानी विष्णुभक्तः तस्य भावो भवानित्वम् इत्येकमेव वाक्यम्। यद्वा मोहिनीरूपेण भवानीवाचरति इति भवानी विष्णुः। आचारक्विबन्तात् कर्तरि क्विप्। तस्य सम्बोधनं हे भवानि, विष्णोः प्रथमलिङ्गग्रहणञ्चेति नदीसंज्ञायाम् "अम्बार्थनद्योर्ह्रस्वः" इति ह्रस्वः, इति स्तोतुं वाञ्छन् भवानि त्वम् इत्येतावदेव यः कथयति तदैव तस्मै त्वं सायुज्यपदवीं दिशसि ब्रह्मेन्द्रेत्यादि सायुज्यपदवीविशेषणम् इति ॥ २२ ॥

## आनन्दलहरीटीका

झटिति फलदा त्वमेवेति दर्शयति-**भवानीति**-भवानि त्वद्दासे सेवके मयि सकरुणां कृपासहितां दृष्टिं वितर देहीति, एवं रीत्या स्तोतुं वाञ्छन् अभिलषन् यो जनः भवानि त्वं इत्येतावन्तं भागं कथयति, न शेषभागं, तदानीमेव तस्मै निजसायुज्यपदवीं स्वरूपतां दिशसि ददासीत्यर्थः। क्रमिकमुक्तौ ज्ञानिनामवस्थाचतुष्टयं सालोक्यवासः सामीप्यं निकटावस्थानं, सारूप्यमभेदोपासनया समानरूपप्राप्तिः। सायुज्यं लिंगशरीरापगमेन तन्मयता। इयमेव परममुक्तिरितिकथ्यते। कीदृशं? मुकुन्दादीनां स्फुटैः व्यक्तैः मुकुटैः शिरोभूषणैः नीराजितं कृतनिर्मञ्छनं पदं यस्याः सा तथा। स्तोतॄणामर्धोक्तावेव शीघ्रं स्वसाम्यं ददासीतिभावः। त्वं दासे इत्यत्र त्वद्दासे इति पाठोनुचितः। अग्रे भवानि त्वं इत्यस्यासंगतेः॥ २२॥

**त्वया हृत्वा वामं वपुरपरितृप्तेन[1] मनसा**
**शरीरार्धं शंभोरपरमपि शङ्के हृतमभूत्।**
**[2]यदेतत्त्वद्रूपं सकलमरुणाभं त्रिनयनं**
**कुचाभ्यामानम्रं कुटिलशशिचूडालमकुटम्[3] ॥ २३ ॥**

த்வயா ஹ்ருத்வா வாமம் வபுரபரித்ருப்தேன மனஸா
1 1 1 1 1 1 1
ஶரீரார்தம் ஶம்போரபரமபி ஶங்கே ஹ்ருத மபூத்;
4 4 1 1 1 1 41
யதேதத்-த்வத்ரூபம் ஸகலமருணாபம் த்ரிநயனம்
311 1 3 1 1 4 1
கு சாப்யாமானம்ரம் குடிலஶஶி சூடாலமகுடம்.
1 1 4 11 1 3 1 1

मां ! तेरा सकलारुण-रूप, त्रिनेत्र, शशिकला संशोभित-
रत्न-मुकुट, कुचभारानत तन, लख मेरा मन है शंकित !
पहले ही शिव का वामार्द्ध हरण कर, उस से तृप्त न बन् ,
दक्षिणार्द्ध पर भी अधिकार किए बैठी है प्रमुदितमन ! ॥

## लक्ष्मीधरा

**त्वयेति**-त्वया भवत्या हृत्वा अपहृत्य वामं वामार्धं वपुः शरीरं अपरितृप्तेन असंतुष्टेन मनसा अन्तःकरणेन शरीरार्धं शंभोरपरमपि दक्षिणमपि शङ्के मन्ये हृतं गृहीतं अभूत्। यत् यस्मात् एतत् हृदयकमलान्तःप्रतिभासि त्वद्रूपं तव शरीरं सकलं कृत्स्नं वामदक्षिणभागात्मकं अरुणाभं अरुणस्य प्रातःकालसूर्यस्याभेवाभा यस्य तत्। यद्वा, अरुणा रक्तवर्णा आभा प्रभा यस्य तत्

1. तुष्टेन　　2. तथा हि त्वद्रूपं　　3. मुकुटम्

अरुणाभम्। त्रिनयनं नयनत्रययुक्तं कुचाभ्यामानम्रं स्तनाभ्यामीषन्नम्रं कुटिलशशिचूडालमकुटं कुटिलशशिना वक्रचन्द्रकलया चूडालं चूडावन्तं मकुटं यस्य तत् ॥

अत्रेत्थं पदयोजना—हे भगवति, शंभोर्वामं वपुः त्वया हृत्वा अपरितृप्तेन मनसा अपरमपि शरीरार्धं हृतमभूदिति शङ्के ; यत् एतत् त्वद्रूपं सकलमरुणाभं त्रिनयनं कुचाभ्यामानम्रं कुटिलशशिचूडालमकुटम् ॥

अयमर्थः—भगवत्या शंभोः एकस्मिन्नर्धे अपहृते अपरार्धस्यापहार उत्प्रेक्ष्यते। यद्वा, उत्तरकौलसिद्धान्तप्रतिपादकोऽयं श्लोकः। उत्तरकौलसिद्धान्ते शक्तितत्त्वादन्यत् शिवतत्वं नास्ति। अतश्च शिवतत्त्वं शक्तितत्त्वे अन्तर्भूतमिति तदेवोपास्यमिति प्रस्तुतम्। एतच्च 'मनस्त्वं व्योम त्वं' (३५) इति श्लोकव्याख्यानावसरे 'तवाधारे मूले' (४१) इति श्लोकव्याख्यानावसरे च निपुणतरमुपपादयिष्यामः ॥ २३ ॥

## सौभाग्यवर्धनी

ननु लोके सर्वत्र शिवसायुज्यमेवाभिलषितम्; मत्सायुज्यपदव्या किमित्यत आह—**त्वयेति**। वामाङ्गरूपया त्वया अपरितुष्टेन मनसा दक्षिणाङ्गमपि शंभोरपहृतमिति शङ्के तर्कये। तथाहि, तत्र हेतुमाह - पूर्वमर्धमरुणं संप्रति सर्वमरुणम्। पूर्वं द्विनेत्रं केवलं मुकुटालंकारम्; अधुना त्रिनयनं कुचाभ्यामानम्रं शशिकलालंकृतशरीरम्; एभिर्हेतुभिः शंभोः शरीरं हृतमित्यपह्नुतिरलंकारो व्यङ्ग्यः। एतावता त्वमेव शिवस्वरूपिणी, शिवोऽपि त्वन्मय इति शक्तिशक्तिमतोरभेदः पूर्वोक्तः स्मारितः। त्वत्सायुज्यमेव शिवसायुज्यमिति ध्वनिः ॥ २३ ॥

## अरुणामोदिनी

सायुज्यादिफलदातृत्वमेवाह—**त्वयेति**। हे भगवति, त्वया भवत्या शंभोः शिवस्य पत्युर्वामं वपुः वामभागं हृत्वा अपहृत्य अपरितृप्तेन शरीरैकदेशहरणादपरितुष्टेन मनसा अन्तःकरणेन अपरभागहरणोत्सुकेनेत्यर्थः। अपरमपि हृतान्यच्छरीरार्धं दक्षिणं भागमपीत्यर्थः। हृतं स्वीकृतमभूदिति शङ्के तर्कयामि। कुत इत्यत्राह—यद्यस्मात्कारणादेतन्मनसि प्रतिफलत्सकलं समस्तमरुणाभं बालसूर्यसदृशं कुचाभ्यामानम्रं च ईषदवनतं च त्वद्रूपम्; भवदाकारशरीरमित्यर्थः। त्रीणि नयनानि यस्य तत् त्रिनयनम्। क्षुभ्नादित्वान्न णत्वम्। कुटिलशशिना अर्धेन्दुना, चूडा अस्यास्तीति चूडालं मकुटं किरीटं यस्य तत्, अपि जातमिति शेषः। 'प्राणिस्थादातो लजन्यतरस्याम्' इति लच्प्रत्ययः। भवदाकारे नयनत्रयचन्द्रकलाधारणादिशिवचिह्नदर्शनादपरं शरीरं हृतमित्येव प्रतिभातीत्यर्थः। 'न शिवेन विना शक्तिर्न शक्तिरहितः शिवः' इत्याद्यभेदबोधकवचनेभ्यस्तत्प्रकटनापूर्वकं लोकाननुग्रहीतुमेवार्धनारीश्वररूपं स्वीकृतमिति परमार्थः। उक्तं च सकलजननीस्तवे—'त्वयाऽसौ जानीते रचयति भवत्यैव सकलं

त्वमेवैतत्सर्वं त्वमसि तनवोऽप्यस्य विविधाः। गतः साम्यं शंभुर्वहति परमव्योमवपुषा तथाप्यर्धं भूत्वा विहरसि शिवस्येति किमिदम् ॥' इति। काव्यलिङ्गानुप्राणितेयमपरशरीरार्धहरणोत्प्रेक्षा ॥ २३ ॥

## आनन्दगिरीया

ननु फलान्तरपरित्यागेन सायुज्ये कोऽभिलाषः, इत्यालोच्य स्वस्वामिनः स्वेच्छारतस्य सायुज्यमेवं सर्वे वाञ्छन्ति यथा श्रीमहादेवस्तवेत्याह-त्वया हृत्वेति। हे मातस्त्वया शंभवे स्वस्वामिने स्वसायुज्यं प्रदातुमिच्छन्त्या तस्य वामं शरीरार्धमहारि। स्त्रीणां वामभागे शयनासनाद्यधिकारात्। तत्र स्थितया त्वया तदालिङ्गनजनितरसावेशवशेन तदेवाहारि। पश्चादर्धांगदाने पूर्णसायुज्यदानसन्तोषो नास्तीत्यपरितृप्तेन मनसा तदालिंगनप्रसंगानुभूतानन्दरसवशंवदान्तःकरणया त्वया स्वबलेन परमपि दक्षिणमप्यर्धं हृतमिव। नेदमुत्प्रेक्षामात्रं किन्तु वास्तवं, तत्र निर्णायकमाह-तथाहीति-हि यस्मात्कारणात्तव रूपं सकलं पूर्वमर्द्धनारीपुरुषरूपं स्थितमिदानीं पूर्णं सकलं सर्वमष्टावयवमित्यर्थः। पुनः किंविधं सकलमरुणाभं, सकलमित्यत्रापि योज्यं; पूर्वं शिवांशो विभूतिश्वेतः, इदानीं सर्वं त्वदरुणिमव्याप्तम्। पुनः कीदृशं, सकलमपि त्रिणयनं, पूर्वं तु नैव। पुनः कीदृशं कुचाभ्यामानम्रं कुटिलशशिचूडालमकुटं च। तथा च महादेवदेहस्य तव स्वरूपे लुप्तस्यैकोऽप्यंशो न प्रतीतिमारोहति। तव तु सर्वोऽप्यंशः प्रतीयते इति हेतोः अयमर्थः सिद्ध्यतीति। मत्स्यण्डिकाशकलमिव जलगतं जलमयमिवाभाति, तद्वत्। अथवा अन्योन्यशरीरयोः क्रमेणैकैकधर्माध्यासप्रतीत्या अन्योन्यधर्माध्यासात् भेदाभेदः, सत्यानृतमिथुनीकरणे ब्रह्मविद्ययोः। अरुणाभं अनेन महादेवस्वरूपे त्वद्धर्माध्यासः। कुटिलशशिचूडालमुकुटं, अनेन महदेवधर्मारोपः। इत्येवं अन्योन्यमेकैकधर्मारोपेणाभेदः। सकलमिति सर्वोपसंहारः। एतावता जगन्मातुस्तव सायुज्यं महादेवोऽपि कामितवान् प्राप्तवांश्च। अस्मदादिदासतमेषु कोऽभियोगः इति भावः। तत्रापह्नुतिरलंकारः। लक्षणं तस्य "प्रकृते यन्निषिध्यान्यत्साध्यते सात्वपह्नुतिः" इति। यथा "अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये कलंको नैवायं विलसति शशांकस्य वपुषि। अमुष्येयं मन्ये विगलदमृतस्यन्दि हृदये रतिश्रान्ता शेते रजनिरमणी गाढमुरसि"॥ तत्र सिद्धिपरामन्त्रमाहुः। रहस्यं-त्वया वामं वपुरपहृत्य मिलित्वा शंभोर्वपुः व्योमाक्षरः हकारः, अपरितृप्तेन मनसा वह्निना त्वया वामं तुर्यस्वरानुस्वारौ, तेन लज्जा अपरेत्यादि लज्जैव, मध्ये मध्ये त्वद्रूपं परा सकलं एतत्स्वरूपं त्रिनयनं ह अरुणाभं रेफः, कुचाभ्यामानम्रं माया, कुटिला शशिचूडा बिन्दुर्नादः। यथा शिवभास्करतन्त्रे "जप सूर्यं महातन्त्रं जप्तं सिद्धिपरामयम्। मया विश्वप्रकाशाय यया विश्वं प्रकाश्यते। लज्जा परा महामाया शशी ब्रह्मा भवः शिवः। वह्निना च युतः सूर्यलक्ष्मीबिन्दुस्वरान्वितः।" [1]ह्रीं सौं ह्रीं सकलह्रीं सिद्धिपरामन्त्रः ॥ २३ ॥

---

1. ह्रीं सौः ह्रीं सकलह्रीं।

## तात्पर्यदीपिनी

हे भवानि, अहं इति शंके। इतीति किं? त्वया शंभो रुद्रस्य वामं वपुर्हृत्वा, अपरमपि दक्षिणमपि शरीरार्धं हृतमभूत् किं निरतिशयभोगोत्सुकत्वेनेत्यर्थः। केन अपरितृप्तेन मनसा अपर्याप्तान्तः-करणेन, अर्धशरीरग्रहणेनापि मनस्तृप्तिर्नास्तीत्यर्थः। तृप्तये त्वया अपरमपि किं हृतमिति शंका-शूकोदयः। तत्र लिंगमाह-तथाहीति। यतः कारणात्सकलं त्वद्रूपं दृश्यते। ननु शिवस्वरूपं किं-विधं, त्वद्रूपमरुणाभं अरुणाऽऽभा यस्य तत्तथा, आताम्रमित्यर्थः। पुनः, त्रिनयनं त्रीणि नयनानि यस्य तत्तथा। पुनः कुचाभ्यामानम्रं स्तनभारक्षीणम्। कुटिलशशिचूडालमुकुटं कुटिलः कलारूपः शशी चन्द्रमाः, तेन चूडालः चूडावान् मुकुटो यत्र तत्तथा, रुद्ररूपे जटायां कुटिलः शशी भवति, न तु दृश्यते। तवैव मुकुटालंकारवद्रूपं दृश्यते। अतो हेतोस्त्वया विहाररसिकया सर्वोऽपि शिवः समाक्रान्तः, न तु शिवेन तवाक्रमणं सञ्जातमिति भावः॥ २३॥

## पदार्थचन्द्रिका

इदानीं सदाशिवस्य वशीकरणं श्रीभवानीस्वरूपमाश्चर्यवद्वर्णयन् तद्विषयं तर्कमाह—त्वयेति। हे जननि त्वया शंभोर्वामं वपुर्हृत्वा, शभोरिच्छयैव, अपरमपि शरीरार्धं शंभोः स्वेच्छयैव हृतमभूदिति शंके तर्कयामि। शरीरार्धमित्यत्र न षष्ठीसमासः। किन्तु शरीरे अर्धं शरीरार्धमिति सप्तमीसमासः। सप्तमीति योगविभागात्समासः। यद्वामं सुन्दरं शरीरार्धं हृत्वा, अपरमप्यर्धं वपुः हृतमभूत् इत्यहं शंके इत्यन्वयः। कथंभूतस्य शंभोः, अपरितृप्तेन सदा भवान्यामतिसकामेन मनसोपलक्षितस्य, अथवा श्रीसदाशिवशरीरस्यानन्दमयत्वात्, हर्तुमपरितृप्तेन अलंबुद्धिरहितेन मनसेति भवानीसंबन्धेन योज्यम्। हरणशंकाहेतुमाह—तथाहीति पूर्वोक्तनिदर्शनेऽव्ययम्। हे भवानि, सकलं कलाभ्यामर्धाभ्यां सह वर्तत इति सकलम्। अर्धनारीश्वरस्वरूपं विशेष्यम्। त्वद्रूपं तवैव रूपमिव भातीति विशेषः। तत्र हेतुः—अरुणाभं अरुणा आभा कान्तिर्यस्य तत्। कुचाभ्यामानम्रं आननं, चूडा विद्यते आधारत्वेन यस्य तत् चूडालं, तच्च तत् मुकुटं च, कुटिलशशिना युक्तं चूडालमुकुटम्। यत्रार्धनारीस्वरूपे तत्। अत्र यद्यपि त्रिनयनत्व-कुटिलशशिचूडालमुकुटत्वयोः भवानीस्वरूपत्वज्ञानसाधकता न संभवति, तथाप्यरुणसंबन्धेन तयोर्गमकत्वं संभवतीति युक्तमुक्तं शंके हृतमिति॥ २३॥

## डिण्डिमभाष्यम्

एवमुक्तप्रकारेण भगवत्याः सायुज्यं प्रतिपादितम्, तच्च भगवत्याः 'करुणैकसाध्यम्, यथा भगवत्याः साधकवर्गेषु भगवत्याः स्वस्वरूपं करुणया दीयते तथा स्वनाथेऽपि भगवति महेश्वरे स्वस्वरूपतादात्म्यप्रतिपादनमविशिष्टं इतीदमर्थं प्रकटीकुर्वन् भगवच्छरीरस्यापि भगवत्येका-

कारपरिणतिं व्यञ्जयति। विचार्यमाणे शिवशक्त्योरभेदात्। उक्तमागमे—"न शिवेन विना शक्तिर्न शक्त्या रहितः शिवः। तादात्म्यमनयोर्नित्यं वह्निदाहकयोरिव॥" उक्तञ्च महार्थमञ्जर्याम्—"आलेख्यविशेष इव गजवृषभयोर्द्वयोः। प्रतिभासो यथा तथा एकस्मिन्नपि परमार्थे शिवशक्तिकल्पनां कुर्म" इति। तस्याः स्वात्मतादात्म्यस्वरूपं कथ्यते, त्वयेति। हे परमेश्वरि! शम्भोर्महादेवस्य वामं वपुः अदक्षिणं शरीरं हृत्वा स्वात्मीकृत्य अपरितृप्तेन तृप्तिमनाप्नुवता मनसा अपरमपि शरीरार्धं हृतमभूत् इति शङ्के। न केवलमिदं शङ्कामात्रम्, अपि तु निश्चितोऽर्थः। अत्र कारणमाह—एतत्तव रूपं सकलं सर्वमपि अरुणाभं महादेवस्य शरीरमपि अरुणम्। शिवस्य धवलाकारत्वप्रसिद्धिः नित्यसिद्धविभूत्यालेपनादेव। यथा च श्रुतिः—"ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्।" इत्यत्र पिङ्गलवर्णत्वं शिवभागस्य। तथा—"हिरण्यरूपः स हिरण्यसंदृग्" इति प्रसिद्धेश्च, "असौ यस्ताम्रो अरुण उत बभ्रुः" इति श्रुतेश्च, बहुशो वेदशास्त्रेषु अरुणवर्णो भगवान् शङ्करः प्रसिद्धः। अत एव तच्छरीरमरुणवर्णं त्वया गृहीतम्। त्रिनयनमपि तव रूपं सोऽपि त्रिनयनः। कुचाभ्यामानम्रम् तव रूपम् त्वद्रूपस्य तद्रूपस्य चान्योन्यमेलनात्मकम्। कुटिलशशिचूडालम् अर्द्धचन्द्रबद्धकिरीटभागं, त्वद्रूपतद्रूप-मिलितं सर्वलोकातिसौभाग्यसम्पन्नपरमरमणीयनारीरूपं यतो वर्तते अतो हेतोः कुचाभ्यामानम्रम्। एतदुक्तं भवति—शिवमपि प्रत्यग्ज्योतिर्निष्णातसंसाराकारमहानाट्यप्रयोगं सन्दर्शनप्रदानाय सम्पन्न-सामाजिकभावं कृत्वा स्वकृतलिङ्गसहस्रक्षुद्रनटीसमालिङ्गनात् स्वयमपि नर्तकपदवीमालम्ब्य नृत्यद्भि-रनेककोटिसङ्ख्यैर्जीवात्मभिरेकस्यैव नटस्य नाम धर्मराजवत्सराजादि नाना नवभूमिका प्रवर्तते। यथा नाट्यलीला तथैव ब्राह्मप्राजापत्यदेवासुरपशुपक्षिसरीसृपवृक्षादिनानाशरीराणि धारयद्भिः संसारनाटं च प्रवर्तयद्भिः नटैरिव सार्द्धं महानर्तकी त्वमेव कस्यचिन्नर्तकत्वं योजयित्वा सामाजिकत्वमापादयन्ती, कञ्चित्सामाजिकं नर्तयन्ती, निवृत्तानामपि संसारवृत्तिदर्शनात् एवंप्रकारं संसारमहानाटयं प्रवर्तयन्ती निरुपाधिपरोपकारशीला सर्वेषां भोगमोक्षप्रदात्री त्वमेव साक्षात् सर्वथापि त्रैलोक्यस्य कारणं शिवः त्वमेव तन्मयी च त्वम् युवयोरुभयोरपि राजत्वं समबलं समोत्साहं सहपरमानन्दम्। तथोक्तं भट्टोत्पलपादैः—"परस्परतपःसम्पत्फलायितपरस्परौ। प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः॥"-इति॥ २३॥

## गोपालसुन्दरी

त्वयेति—त्वया शम्भोः वामं वपुः हृत्वा अपरमपि दक्षिणं शरीरार्द्धं अपरितृप्तेन इच्छापूर्तिरहितेन मनसा करणेन हृतमभूदिति शङ्के तर्कयामि। तथाहि—तदेव प्रतिपादयामि; त्वद्रूपं सकलम् अरुणाभं रक्तवर्णं पूर्वं त्वद्वर्णमेवार्द्धं रक्तमासीत्, त्रिनयनं त्रिलोचनं पूर्वं सार्द्धनयनमासीत्, कुचाभ्या-मानम्रं प्रह्वं पूर्वमेककुचेन नम्रमासीत्, कुटिलो वक्रः शशी चन्द्र आधेयत्वेन चूडाधारत्वेन विद्यते यस्य

तत् कुटिलशशिचूडालं च तन्मुकुटं चेति, तद्विद्यते यत्रेति कर्मधारयोत्तरबहुव्रीहिः, पूर्वं तव मुकुटमात्रमासीत् न शशियुतम् अथवा कुटिलशशिनोऽर्द्धमासीत् न तु सम्पूर्णः कुटिलशशीति भावः।

**विष्णुपक्षे**—मोहिनीरूपं कृत्वा शम्भोः वामं सुन्दरं वपुः कृत्वा अपरमपि शरीरार्द्धं गौरीरूपं हृतमभूत् इति-शङ्के। त्वद्रूपमित्यादिना मोहिनीध्यानमुक्तम् ॥ २३ ॥

## आनन्दलहरीटीका

त्वं शिवरूपासीति दर्शयति-**त्वयेति**। त्वया शंभोर्वामं वपुः शरीरार्धं हृत्वा, अपरितृप्तेन इच्छाविरतिरहितेन सतृष्णेनेनि यावत्। ईदृशेन मनसा करणेन अपरमपि शरीरार्धं हृतमभूत् इति अहं शंके तर्कयामि। तथाहि तं प्रकारं जानीहि। त्वद्रूपं तव शरीरं तदानीं सकलमेवारुणाभं रक्तवर्णं, अर्धनारीश्वरतादशायां तु अर्धमेव रक्तमासीदिति भावः। एवमग्रेऽपि त्रिनयनं न तु सार्धैकनयनं, कुचाभ्यामानम्रं नत्वेकेन कुचेन। कुटिलो वक्रो यः शशी चन्द्रकला सा विद्यते यस्यां सा तथाविधा चूडा। तादृशीं चूडां लाति गृह्णाति संयुनक्तीति तादृशचूडालं, मत्वर्थे लच् प्रत्ययो वा। कुटिलशशिचूडालं मुकुटं यस्मिन् रूपे तत्तथा। इदानीं शशिकला कुटिला भवति पूर्णत्वात्। तदा तु कलार्धस्य कौटिल्यं नासीदिति भावः। यद्वा-तदा कलार्धं, इदानीं कलेति शेषः। पूर्वं महादेवः अर्धनारीश्वर आसीत्। इदानीं त्वन्मय एव जात इति भावार्थः ॥ २३ ॥

**जगत्सूते धाता हरिरवति रुद्रः क्षपयते**
**तिरस्कुर्वन्नेतत्स्वमपि वपुरीशस्तिरयति[1]।**
**सदापूर्वः सर्वं तदिदमनुगृह्णाति च शिवः**
**तवाज्ञामालम्ब्य क्षणचलितयोर्भ्रूलतिकयोः ॥ २४ ॥**

ஜகத்ஸூதே தாதா ஹரிரவதி ருத்ர: க்ஷபயதே
3 1 1 4 1 1 3 1 1
திரஸ்குர்வன் னேதத்ஸ்வமபி வபுரீஶஸ்திரயதி ;
1 1 1 1 1 1 1 1
ஸதாபூர்வ: ஸர்வம் ததித மனுக்ருஹ்ணாதி ச ஶிவ:
3 1 1 3 3 3 1 1
தவாஜ்ஞாமாலம்ப்ய க்ஷணசலிதயோர் ப்ரூலதிக யோ :.
1 3 1 1 4 1 1

धाता जग निर्मित करता है, हरि पालन कर देता है,
रुद्र विलय करता, शिव उन तीनों का क्षय कर देता है
अपनी देह समेत, सदाशिव तव क्षणचलित-भ्रूलता का
पा आदेश सृजन करता मां, फिर से संसृति-लतिका का ! ॥

1. वपुरीशः स्थगयति।

## लक्ष्मीधरा

जगत् स्थावरजङ्गमात्मकं जगत् सूते सृजति धाता स्रष्टा । हरिः विष्णुः अवति रक्षति । रुद्रः क्षपयते संहरति । धातृहरिरुद्राः सृष्टिस्थितिलयाधिकारिणः । तिरस्कुर्वन् उपसंहरन् एतत्-धातृहरिरुद्रात्मकं त्रितयं स्वमपि स्वकीयमपि वपुः देहं ईशः महेश्वरतत्त्वं तिरयति अन्तर्हितं करोति । ईश्वरः धातृहरिरुद्रादीनात्मन्यारोप्य स्वयमपि सदाशिवतत्त्वे अन्तर्भूत इत्यर्थः । अनेन ब्रह्माण्डप्रलय उक्तः । तदनन्तरं ब्रह्माण्डोत्पिपित्सा सदाशिवस्य जायते । तदानीमाह—**सदापूर्व इति ।** सदाशब्दः पूर्वं यस्य शिवशब्दस्य सः सदापूर्वः शिवशब्दः । तेन सदाशिवशब्देन वाच्यवाचकयोरभेदोपचारात् सदाशिवरूपं तत्त्वमुपचर्यते । सर्वं तदिदं पूर्वोक्तं धातृहरिरुद्रेशानात्मकं तत्त्वचतुष्टयमनुगृह्णाति । चकारः शङ्काच्छेदे । शिवः सदाशिवः । कथमनुगृह्णातीत्याशङ्कायामाह—तवाज्ञामालम्ब्येति । तव भवत्याः क्षणचलितयोर्भ्रूलतिकयोः क्षणमात्रं चलितयोः । भ्रूलतिकाचलनेन विज्ञेयामाज्ञामालम्ब्येत्यर्थः । भवद्भ्रूविक्षेपमात्रेण धातृहरिरुद्रेशानात्मकं तत्त्वचतुष्टयमुत्पन्नम् , भ्रुकुटीकरणमात्रेण तद्विनष्टमिति अनेककोटिब्रह्माण्डानामुत्पादने संहरणे च त्वद्भ्रूविक्षेपमात्ररूपा शक्तिः साचिव्यं सदाशिवस्य करोतीति तात्पर्यम् ॥

अत्रेत्थं पदयोजना—हे भगवति, धाता जगत् सूते । हरिः जगत् अवति । रुद्रः जगत् क्षपयते । ईशः एतत् तिरस्कुर्वन् स्वमपि वपुः तिरयति । सदापूर्वः शिवः सर्वं तदिदं तव क्षणचलितयोः भ्रूलतिकयोः आज्ञामालम्ब्य अनुगृह्णाति ॥ २४ ॥

## सौभाग्यवर्धनी

ननु ब्रह्मादयो देवाः सायुज्यदाने समर्थाः किं न सन्ति ; तत्सकाशादेव सायुज्यं भविष्यति, मत्सायुज्ये कोऽयं निर्बन्ध इत्यत आह—**जगत्सूत इति ।** ब्रह्मा जगत्सृजति, विष्णुस्त्ववति, रुद्रः संहरति, ब्रह्मादिदैवतैः सह ईश्वरो जगत्तिरोधत्ते । अयमर्थः—रुद्रेण कार्यरूपं जगत्संहृतं कारणरूपेण तिष्ठति ; यथा घटनाशे कपालरूपेण कार्यम् , पटनाशे तन्तुरूपेण, कुण्डलनाशे सुवर्णरूपेण । तथा वर्तमानं स्वात्मना सह तिरयति आच्छादयति । सदापूर्वः शिवः सर्वमनुगृह्णाति ; स्वात्मनि बीजभावेन स्थापयति, पुनः सृष्टेरनुग्रहाय । तदुक्तं शांभवदीपिकायाम्—'सृष्टिस्थित्युपसंहारतिरोधानुग्रहात्मकम् । कृत्यं पञ्चविधं यस्मात्तं नुमः शाश्वतं शिवम् ॥' इति । एतत्पञ्चविधं ब्रह्मादयो ये कुर्वन्ति, ते च क्षणचलितयोर्भ्रूलतिकयोराज्ञामवलम्ब्य, ईषद्भ्रूविलासेन स्वस्वकृत्यं कुर्वन्ति । एतावता तव भ्रूविलासमहिमा एतादृशः, तव महिमानं को वा वक्तुं समर्थ इति भावः । पूर्वं 'तवापाङ्गालोके पतितम्' इत्यादिना अपाङ्गमहिमा वर्णितः । अनेन पद्येन भ्रूविलासमहिमा वर्णितः । अतस्त्वदाज्ञावर्तिनां सायुज्ये प्रयोजनं नास्ति । तवैव सायुज्यं परमपुरुषार्थ इत्यभिप्रायः ॥ २४ ॥

## ॥ अरुणामोदिनी ॥

उपक्रान्तं देवीप्राधान्यमेवाह—**जगदिति**। हे देवि, धाता ब्रह्मा; 'ब्रह्मविष्णुमहादेवा अस्याः पुत्रा वरानने। चतुर्थोऽहं महेशानि सुतस्तस्या महेश्वरः। तस्याः पतिर्ब्रह्मरूपी स्वयं साक्षात्सदाशिवः।' इति दक्षिणामूर्तिसंहितोक्तेर्भवत्या ज्येष्ठपुत्रो धात्राख्यः जगत्स्थावरजङ्गमात्मकं प्रपञ्चं सूते उत्पादयति। तथा हरिः पालनाधिकृतो द्वितीयः पुत्रो विष्ण्वाख्योऽवति; विरिञ्चिसृष्टजगदवनं करोति। तथा रुद्रः संहाराधिकृतः कालरुद्राख्यस्तृतीयः पुत्रः तदेव जगत्क्षपयते संहरते। एते च कालपुरुषाः। तथा ईशो ब्रह्मादिकारणभूतो महेश्वराख्यश्चतुर्थः पुत्रः। तदुक्तं भारते—'अहं ब्रह्मा कपिलोऽथाप्यनन्तः पुत्राः सर्वे ब्रह्मणश्चात्र वीराः। त्वत्तः सर्वे देवदेव प्रसूता एवं चेशः कारणात्मा त्वमीड्यः॥' इति। एतत्पूर्वोक्तं ब्रह्मविष्णुरुद्रादिसर्वप्रपञ्चं तिरस्कुर्वन्नावृण्वानः, स्वस्मिन्नुपसंहरन्नित्यर्थः। स्वं स्वकीयमपि वपुः ब्रह्मादिकारणं शरीरं तिरयति स्वकारणे सदाशिवेऽन्तर्हितं करोतीत्यर्थः। ततश्च सदाशब्दः पूर्वं यस्य सः सदापूर्वः शिवः सदाशिवाख्यो भवत्पतिः। अत्र सदाशब्दपूर्वत्वं शिवशब्दस्यैव; न तु संज्ञिनस्तदर्थस्येत्यवाच्यवचनदोषपरिहारपूर्वकं यथाकथंचित्तत्संपादनयुक्तिः, 'हिरण्यपूर्वं कशिपुं प्रचक्षते' 'देवपूर्वं गिरिं ते' इत्यादौ मल्लिनाथपादैः सर्वंकषासंजीवन्यादौ बहुधा प्रपञ्चिता द्रष्टव्या। क्षणचलितयोः क्षणमात्रमुत्क्षेपितयोस्तव सकलप्रपञ्चविधायिन्या भवत्या भ्रूलतिकयोराज्ञां निदेशमालम्ब्य तदिदं विधातृहरिरुद्रेशानादिरूपं सर्वं प्रपञ्चमनुगृह्णाति। स्वेच्छावशात्सृष्ट्याद्यनुग्रहवत्करोतीत्यर्थः। सर्वमत्रोपपादितव्यं देवीप्राधान्यमस्माभिः प्रागेव प्रत्यपादीत्युपरम्यते। अत्र 'आत्मा वै पुत्रनामासि' 'स एवायं पुरुषः प्रत्यक्षेणोपलभ्यते' इत्यादिश्रुतेर्विरिञ्च्याद्यनेकरूपाणां कल्पनामात्रम्। वस्तुतस्त्वमेकैवैवंविधकल्पनापरेत्यभिप्रायः। तदुक्तं सकलजननीस्तवे—'विरिञ्च्याख्यां मातः सृजसि हरिसंज्ञा त्वमवसि त्रिलोकीं रुद्राख्या हरसि विदधासीश्वरतया। भवन्ती सादाख्या प्रभवसि च पाशौघदलने त्वमेवैकाऽनेका भवसि कृतिभेदैर्गिरिसुते॥' इति। सहस्रनामादिष्वपीदं व्यक्तमेवेति तत्रैव द्रष्टव्यम्॥ २४॥

## आनन्दगिरीया

ननु दिशसि निजसायुज्यपदवीं इत्यादिना मत्सायुज्य एवाभिनिवेशः, तत्कस्मात् ब्रह्मादीनामपि सृष्ट्यादिमहाकार्यकर्तृतया महत्त्वात्, तत्सायुज्यमेव किमिति न प्रार्थ्यत इत्येतदाशंक्य, सत्यमित्याह—**जगत्सूत इति**। हे नारायणि, हे शक्ते, धाता ब्रह्मा जगत्सूते; हरिः श्रीकृष्णोऽवति। रुद्रो महादेवः क्षपयति संहरति। ईश्वरः संहृतं जगत् स्वशरीरेण सह कारणभूते सदाशिवे संस्कारात्मना कारणात्मना स्थापयति। सदाशिवः पुनः सृष्टये इदं सर्वमनुगृह्णाति समर्पयति। एते पञ्चापि पञ्चकार्याणि कुर्वन्तो न स्वतन्त्राः, किंतु तवापांगभंगाज्ञामालंब्येत्याह—किं कृत्वा क्षणचलितयोः तव

भ्रूलतिकयोः आज्ञामालंब्य, क्षणेन उत्सवेन लीलया चलिते ये भ्रूलते तयोः, अथवा क्षणमात्रं चलिते ये भ्रूलते तयोरिति। एतावता यद्यपि ब्रह्मादयो महान्तः, तथापि त्वत्सायुज्यकामिनामस्माकं तत्सायुज्येन प्रयोजनं नास्ति ; तेषां महत्त्वेऽपि, उत्पत्तिप्रलयाभिहतत्वात्। तेऽपि सायुज्यमेव कामयन्ते। तदा तद्धेतोरेव तद्धेतुत्वे मध्ये किं तेनेति न्यायेन तव सायुज्येऽभिनिवेशो युक्तः। त्वं तु नित्यसिद्धा अविनाशिनीति तव भक्तोऽपि तथैव। तदुक्तं कादितन्त्रे "[1]ईशत्वभावकलुषाः कति नाम सन्ति ब्रह्मादयः प्रतिदिनं प्रलयाभिभूताः। एकः स एव जननि स्थिरबुद्धिरास्ते यः पादयोस्तव सकृत्प्रणतिं करोति"। किञ्च सृष्ट्यादिमहत्कार्यं कुर्वन्तो ब्रह्मादयः श्रेष्ठाः सन्तु नाम। परं तु तव सेवकस्य तव सायुज्याभिलाषः, तत्सायुज्ये न पूर्यते। न हि पयःपिपासोः चातकपोतकस्य पक्वान्नादिना तृष्णानिवृत्तिर्भवति। इच्छाया विषयसिद्धिनिवर्त्यत्वादित्यर्थः। अत्रेयं प्रक्रिया—ब्रह्मविष्णुरुद्रेश्वरसदाशिवा इति पञ्च परमेश्वर्या उत्पन्नाः। चत्वारो मञ्चचरणाः एकः पर्यङ्क इति। तत्र ब्रह्मणा सृष्टं जगत्, विष्णुना पालितं, रुद्रेण संहृतं नाशितं, ईश्वरः स्वशरीरेण सह तत्कारणात्मना संस्काररूपेण सदाशिवे स्थापयति। स च सदाशिवः स्वशरीरे सर्वं जगत् ब्रह्मादिकांश्च स्थापयति। तदुक्तं "युगान्तकालप्रतिसंहृतात्मना जगन्ति यस्यां सविकासमासत"। तथा "विरमति महाकल्पे नाभीपथैकनिकेतनः त्रिभुवनपुरःशिल्पी यस्य प्रतिक्षणमात्मभूः। किमधिकरणा कीदृक् कस्य व्यवस्थितिरित्यसावुदरमविशद्द्रष्टुं तस्मै जगन्निधये नमः"। स च वेदान्तिभिः साक्षीकारणकोश इत्युच्यते। सकलप्रपञ्चकारणत्वात् कारणं, कोशवदाच्छादकत्वात् कोश इति। पुनः सृष्टिकालोद्बोधिताविद्यावृत्तिः विसृष्टिरूपोत्पद्यते। तदा तु सदाशिवः सृजतीति इदं सर्वं तव भ्रूभंगमहिम्नैव। तदुक्तं "सृष्टिस्थित्युपसंहारतिरोधानानुग्रहात्मकम्। कृत्यं पंचविधं यस्याः तां नुमः सात्वतीं शिवाम्" इति। त्वं तु नित्यसिद्धा योगीश्वरी, ब्रह्मादयस्तु कालव्यालवदनकुहरान्तःपातितया स्वात्मानमपि रक्षितुं न क्षमन्ते। दूरतस्तेभ्यः परपरित्राणम् इति युक्तमुक्तं "दिशसि निजसायुज्यपदवीं मुकुन्दब्रह्मेन्द्रस्फुटमुकुटनीराजितपदाम्" इति॥ जगत्सूतेत्यादिपद्यस्य रहस्यार्थः। कालत्रिपुरामन्त्रमाह—जगदिति। जगत्सूते लज्जा बीजं, धाता कः, हरिः ह, अवति ल, रुद्रः हौं, क्षपयति हूं, ईशः सःयः, तिरयति लः, सदापूर्वः सपूर्वः तदिदं शिवो हः, आज्ञा तुर्यस्वरं, भ्रूलतिका अर्धेन्दुः, अथ तै रेफयुतो हः। रुद्रयामले-"लज्जा धाता शिवः क्षोणी रुद्रः कूर्मः शशी मरुत्। शक्रश्च वरुणो लज्जा कालाख्या त्रिपुरा मनु"रिति। ह्रींकलहहौंहूं सयलवह्रीं। वर्णाः २४॥

---

1. अयं श्लोकः कल्याणवृष्टिस्तवे भगवत्पादकर्तृकेऽपि विद्यते।

## तात्पर्यदीपिनी

हे मातः, धाता जगत्सूते हिरण्यगर्भः सर्वजनान्निर्मिमीते। निर्मितस्य जगतः केनापि पालनं विधेयमिति तदाह-विष्णुर्जगदवति पालयति। ननु पालितस्यापि अन्तेन भाव्यं, तमाह, रुद्रः तत्क्षपयते मृत्यवे प्रेरयति। संहरतीत्यर्थः। ईशः पूर्णसर्वात्मा एतज्जगत् तिरस्कुर्वन् विद्यापटले अपिहितं कुर्वन्, तमपि धातारमपि हरिमपि रुद्रमपि वपुः शरीरं प्रतितिरयति। नन्वेवं महाप्रलये लीनस्य पुनरुद्भवो नास्तीति चेत् न, पुनरुद्भवस्य दर्शनात्। तदाह-सदापूर्वः शिवः सदाशिवः, तदिदं सर्वं जगदनुगृह्णाति, स्वयं सृष्टिस्थितिप्रलयेषु पूर्वं वर्तमानःसन् पुनरुद्भवाय अनुग्रहाय रूढं विदधाति। सर्वमित्यनेन धात्रादीनामपि उपादानात्। तेषां, तस्मिन्नेव व्यापारे नियोजयतीत्यर्थः। न च सदापूर्वस्यापि शिवस्येदं स्वतः सामर्थ्यमित्याह-तवेति। कृत्या तव क्षणचलितयोः भ्रूलतिकयोः, भ्रुवावेव लतिके तयोः। एतेन शिवस्यापि सदापूर्वत्वं त्वदनुग्रहाधीनमिति भावः। न चैवं महाप्रलये लीनस्येत्यत्रेदं रहस्यम्। वेदान्तेष्वपि एकाविद्यावादिमतं अनेकाविद्यावादिमतं च। तत्रै-काविद्यापक्षे हिरण्यगर्भस्य सर्वप्राणसूत्रात्मकस्य मूलाविद्याविक्षेपे सर्वमोक्ष इति। तत्र मूलाविद्यास्वरूप-जीवापूर्वस्य मूलाविद्यायामेव लीनत्वात्। न पुनरुद्भवोऽस्य सर्वस्येति। तदेतदसांप्रतम्। जीवापूर्वस्य सर्वस्य भोगादेव क्षयात्। यस्याः सर्वस्य क्षयः तस्यापि पुनरदृष्टान्तरोदयात्। संसारानादित्वस्य दर्शनात्। न कदाचिदनीदृशं जगदिति भट्टिः। तस्माद्यस्य दृष्टस्य क्षयः, तस्यैव मोक्षः। अनेका-विद्यावादिमतस्याभीष्टत्वात्। अन्यथा शुको मुक्तो वामदेवोऽपि मुक्त इत्यादेर्वाक्यस्य गत्यनुपपत्तेः। महाप्रलये उपप्लवस्य भोगांगविशेषस्य विद्यमानत्वात्। पुनरुद्भवस्योक्तत्वादेव भगवत्पादपूज्यस्याचार्य-स्यानेकाविद्यावादिमतस्याभीष्टत्वात्। यदाहुः-अनेकेष्वेकस्यैव वस्तुनो युक्तत्वादिति। एकस्यावरण-विक्षेपेण सर्वेषामावरणविक्षेपः। आवरणस्यैकत्वेऽपि क्रमस्योपलंभात्। तर्हि पर्यङ्कसुसमातृपुत्रयोरे-कवसनप्रावरणयोः मातुरुत्थाने बालकस्य प्रावरणविक्षेपो दृष्ट इति मनसि निधायाह गोविन्दभगवत्पाद-पूज्यशिष्यः, तदिदमिति।

## पदार्थचन्द्रिका

इदानीं पूर्वोक्तमेव हरिहरविरिञ्चीनां भवान्यधीनं सृष्ट्यादिकर्तृत्वं अनुवदन्, अविकृतचैतन्य-स्यापि ब्रह्माद्यनुग्राहकत्वं त्वदधीनमेवेत्याह-**जगत्सूत** इति। धाता ब्रह्मा जगत्सूते सृजति। हरिरवति रक्षति। रुद्रः क्षपयति दूरीकरोति नाशयतीत्यर्थः। एतज्जगत् तिरस्कुर्वन् संहारयन् सन् विश्वमन्तर्धत्ते। स्वमपि वपुरीशो रुद्रस्तिरयतेऽन्तर्धत्ते। तदिदं सर्वं ब्रह्मादि शिवः परमात्मा सदा सर्वदा कालत्रयेऽपि अनुगृह्णाति तत्तच्छक्तिदानेन कृपयेति। किं कृत्वा, तव भ्रूलतिकयोः, भ्रवौ लतिके इव भ्रूलतिके तयोराज्ञामवलंब्य आश्रित्य क्षणचलितयोः क्षणमात्रं विजृंभितयोः। शिवं विशिनष्टि-पूर्वः सादिः यद्वा

सदाशब्दः पूर्वो यत्र सदापूर्वः शिवशब्दस्तद्वाच्यः परमात्मेत्यर्थः। एतेन सजातीयविजातीयस्वगतभेद-शून्यस्य सर्वानुग्राहकस्य सदाशिवस्यापि त्वदधीना अनन्तशक्तिकतेति दर्शनं भवति। इन्द्रो मायाभिः पुरुरूप ईयत इति श्रुतेः॥ २४॥

## डिण्डिमभाष्यम्

ननु प्रतिक्षणवर्धमानसंसारनाटचसूत्रधारनायिकाया भगवत्या यदि सर्वदैव लीलानुबन्धः स्यात्तदा परमेश्वरेण सहानुरूपेण नायकेन निरन्तरयौवनभरितश्रीमदङ्गप्रवर्तितग्राम्यसम्भोग-सुखमशेषसुरासुरादिलक्षकोटिजातिदुर्लभमानन्दरसं कदा साऽनुभविष्यति। तदनुभवसम्प्रवृत्तायां तस्यामनपेक्षया संसारविच्छेदः स्याद् अतस्तदधिकारधुरन्धरा ब्रह्मविष्ण्वादयः पञ्च कुमाराः प्रसिद्धाः, श्रवणपदवीमधिरूढास्त्वदाज्ञावशंवदानां तेषां ब्रह्मादीनां कस्मै कीदृशं कर्मेति विविच्य कथं नोच्यते इत्याशङ्क्याह—**जगदित्यादि**। धाता ब्रह्मा भगवत्या दक्षिणनयनोत्पन्नः, हरिर्वामलोचनात्, रुद्रो ललाटलोचनादीश्वरो नाभिकमलात्, सदाशिवो हृदयसरसिजात्। एतान् पञ्च किञ्चिदूनस्वसदृशप्रभा-वसम्पन्नान् स्वशरीरादेव बहिर्विभाव्य पञ्चकृत्यकारकान् भगवत्येव तल्लीलासाक्षिणी योग्यतमकुमारपञ्चक-विन्यस्तसृष्टिस्थितिसंहारतिरोधानानुग्रहाख्यसकलसंसारभारा वर्तते इति श्लोकतात्पर्यम्। अक्षरार्थस्तु धाता ब्रह्मा जगत्सूते विश्वं सृजति। तेन सृष्टं जगत् ततोऽप्यधिकविज्ञानशक्तिसम्पन्नः श्रीहरिर्महा-विष्णुरवति रक्षति। तेन रक्षितं जगत् तमःसमाश्रित्य रुद्रः संहरति। तेन संहृतं जीवात्मकजालमनुभूतानेक-कालदीर्घसंसारचक्रसुखदुःखानुभवात्यन्तशान्तिपरवशं तिरोधानशक्त्या तावन्तं कालमेति जीवात्मनः सुप्ता भवन्ति। ईश्वरः खलु स्वशरीरत्वेन जगदिदंतया पश्यति। तदा जीवात्मानं तिरोभावे ईश्वरः स्ववपुः प्रच्छाद्य स्थापयति। यदि तदा अप्रच्छाद्यं स्यात् तदा सृष्टिरेव सर्वदा स्यात्। एवंप्रकारेण चिरं प्रच्छादितं जीवजालं विश्वशरीरमहत्तया पश्यन् सदाशिवोऽनुग्राहकः सर्वेषां भोगमोक्षप्रवर्तयिता तावत् सर्वानन्तकोटिजीवात्मनः सहकारिसंयुक्तान् पुनः सृष्टये ब्रह्मणो हस्ते समर्पयति इत्येतदेव वदति। सदापूर्वः सदाशब्दपूर्वः सदाशिव इत्यर्थः। अनुगृह्णाति-अनुग्रहो नाम पुनः पुनः सृज्यशक्तिप्रवृत्तानां सृष्टिभट्टारिकाया मुखपातः। सृष्टिस्थितिसंहाराख्या भावा महार्थतन्त्रे समन्त्रोल्लेखे देवतात्वेन भाषिताः। तदुपासनयैव तेषां तत्तत्कर्मसामर्थ्यम्। एवमेतेषां पञ्च-कुमाराणां महाधिकारधुरन्धराणां स्वकृत-स्वकृतप्रवृत्तयः सकृच्चलितसविभ्रमत्वद्भ्रूलताचलनमात्रमेवाज्ञाकारं प्राप्यैव सम्पद्यते॥ २४॥

## गोपालसुन्दरी

**जगदिति**—क्षणचकितयोश्चञ्चलयोस्तव भ्रूलतयोराज्ञामालम्ब्य प्राप्य धाता ब्रह्मा जगत् संसारं सूते सृजति, हरिर्विष्णुः अवति रक्षति, रुद्रः क्षपयते कारणरूपतां प्रापयति, यथा—

घटादेर्मृदादिरूपता, एतत् कारणात्मकं जगत्तिरस्कुर्वन् स्वमपि वपुः शरीरम् ईशः स्थगयति तिरोधत्ते, सदापूर्वः शिवः सदाशिवः सर्वं तदिदम् अनुगृह्णाति स्वात्मनि बीजभावेन स्थापयति, पुनः सृष्टेरनुग्रहाय। तदुक्तं-शाम्भवदीपिकायाम्-"सृष्टिस्थित्युपसंहारविधानानुग्रहात्मकं। कृत्यं पञ्चविधं यस्य तन्नमः शाश्वतं शिवं।" इति।

विष्णुपक्षेऽप्येवम्—पञ्चब्रह्मान्तर्गतविष्णुमूर्तेः स्तोतव्यभिन्नत्वात् न काप्यनुपपत्तिः ॥ २४ ॥

## आनन्दलहरीटीका

जगत्सृष्ट्यादिकं त्वत्त एवेति दर्शयति-जगत्सूत इति। क्षणं चलितयोः तत्तत्कर्मकरणाय तेषु तेषु कृतसंकेतयोः तव भ्रूलतिकयोः, आज्ञामवलंब्य प्राप्य धाता ब्रह्मा जगत्सूते सृजति। हरिः अवति पालयति। रुद्रः क्षपयति नाशयति तिरोभावयतीत्यर्थः। ईश ईश्वरः एतज्जगत्तिरस्कुर्वन् सूक्ष्मरूपेण स्थापयन् स्वं स्वीयमपि वपुः शरीरं तिरोहितं करोति। स्थगयतीति पाठेऽप्ययमेवार्थः। सर्वं जगदिदमनुगृह्णाति। पुनः सृष्ट्यर्थं सूक्ष्मबीजरूपतया स्वस्मिन्स्थापयति। एतत्सर्वं तवाधीनमिति भावः। सदाशिवोऽनुग्राहक इति दर्शितम्। शांभवदीपिकायां "सृष्टिस्थित्युपसंहारविधानानुग्रहात्मकम्। कृत्यं पञ्चविधं यस्य तं नुमः शाश्वतं शिवम्" इति ॥ २४ ॥

**त्रयाणां देवानां [1]त्रिगुणजनितानां [2]तव शिवे**
**भवेत्पूजा पूजा तव चरणयोर्या विरचिता।**
**तथा हि त्वत्पादोद्वहनमणिपीठस्य निकटे**
**स्थिता ह्येते शश्वन्मुकुलितकरोत्तंसमकुटाः[3] ॥ २५ ॥**

த்ரயாணாம் தேவாநாம் த்ரிகுணஜநிதாநாம் தவ ஶிவே
1 3 1 3 1 1
பவேத்பூஜா பூஜா தவ சரணயோர்யா விரசிதா ;
4 1 1 1 1 1 1
ததா ஹி த்வத்பாதோத்வஹநமணிபீடஸ்ய நிகடே
1 2 1 1 1 3 3 1 2 1 1
ஸ்திதா ஹ்யேதே ஶஶ்வன்முகுலிதகரோத்தம்ஸ மகுடா :
2 1 1 1 1 1 1 1 1 1

मां ! तव चरणों पर चढनेवाला गंधाक्षतसमुचय ही
त्रिगुणात्मक त्रिमूर्तियों की भी पूजा बनता निश्चय ही !
इसी लिए कि रत्न मणिनिर्मित पदपीठ के निकट तेरे
रहते वे जोडे कर सिर पर बराबर तव मुख हेरे ! ॥

1. त्रिगुणजनितानामपि शिवे 2. परशिवे, त्रिभुवने 3. मुकुटाः

## लक्ष्मीधरा

**त्रयाणामिति**—त्रयाणां देवानां धातृहरिरुद्राणामित्यर्थः। त्रिगुणजनितानां सत्त्वरजस्तमः प्रभवानाम्। तव भवत्याः। हे शिवे, शिवमहिषि। भवेत् भवत्येव। प्राप्तकाले लिङ्। पूजा सपर्या। सैव पूजा नान्येति द्वितीयपूजाशब्दस्यार्थः। तव चरणयोः या पूजा विरचिता निर्मिता। युक्तं चैतदित्याह —तथा हीत्यादिना। तथा हि युक्तमेतत्। त्वत्पादोद्वहनमणिपीठस्य तव पादयोः उद्वहनार्थं यन्मणिपीठं परिकल्पितं तस्य निकटे उपसिंहासनसमीपं स्थिताः वर्तन्ते स्म। हि यस्मात्, एते धातृहरिरुद्राः अधिकारपुरुषाः, शश्वत् अनवरतं, मुकुलितकरोत्तंसमकुटाः मुकुलिताः कृताञ्जलयः करा एव उत्तंसाः, तद्युक्ताः मकुटाः येषां ते ॥

अत्रेत्थं पदयोजना—हे शिवे, तव त्रिगुणजनितानां त्रयाणामपि देवानां तव चरणयोः या पूजा विरचिता भवेत् सैव पूजा। तथा हि त्वत्पादोद्वहनमणिपीठस्य निकटे हि यस्मात् मुकुलितकरोत्तंसमकुटाः शश्वदेते स्थिताः ॥

अयं भावः—भगवत्याः पादपीठसेवा पूजामात्रेण न लभ्यते, अपि तु भगवत्याः प्रसादवशादेवेति ॥ २५ ॥

## ॥ सौभाग्यवर्धनी ॥

इदानीं चरणार्चनमहिमानमाह—**त्रयाणामिति**। तव चरणयोर्या विरचिता पूजा त्रयाणां देवानां भवति। यतस्त्वत्पादोद्वहनमणिपीठस्य समीपे ह्येते शश्वन्मुकुलितकरोत्तंसमकुटाः सन्ति। अतस्तेषां पूजा न पृथक्कार्या। एतावता शिवपूजाविष्णुपूजयोः सकाशात्तव पूजा विशिष्टकरेति भावः। तदुक्तं देवीपुराणे—'विष्णुपूजासहस्राणि शिवपूजाशतानि च। अम्बिकाचरणार्चायाः कलां नार्हन्ति षोडशीम् ॥' इति ॥ २५ ॥

## ॥ अरुणामोदिनी ॥

भ्रान्तिप्रतीतदेवतान्तरपूजातो भगवतीचरणपूजाया आधिक्यमाह—**त्रयाणामिति**। शिवयति भक्तलोकमिति शिवा, तस्याः संबुद्धिः हे शिवे भक्तजनशिवंकरे देवि, त्रिभिर्गुणैः सत्त्वरजस्तमोभिर्भवदीयैर्जनितानामुत्पादितानां त्रयाणां विधातृहरिरुद्राख्यानामधिकारिपुरुषाणाम्; अपिशब्दादन्येषां सर्वेषां देवानां मध्य इत्यर्थः। तव चरणयोः पादयोर्या पूजा सपर्या विरचिता सैव पूजेत्यन्वर्थो भवति; न भवदन्यदेवताचरणपूजा भवितुमर्हतीत्यर्थः। अत एवाहुरागमविदः—'विष्णुपूजासहस्राणि शिवपूजाशतानि च। अम्बिकाचरणार्चायाः कलां नार्हन्ति षोडशीम् ॥' इति। "तव चरणयोर्या पूजा विरचिता सैव त्रिगुणजनितानां त्रयाणां देवानां पूजा" इति प्राचीनयोजना चाचार्यानभिमता, शेषरूपहर्यादिपूजाप्राधान्यापत्त्या सकलदेवतापूजापरमप्राप्तिस्थानदेवीचरणपूजौत्कट्यहानिप्रसञ्जनादु-

पेक्ष्यैव। उक्तमर्थं समाधत्ते—**तथा हीति**। सर्वासां देवतानां मध्ये भवच्चरणपूजैव पूजेति यदुक्तं तद्युक्तमेवेत्यर्थः। एते विधात्रादयः:, हि यस्मात्त्वत्पादोद्वहनमणिपीठस्य भवच्चरणारविन्दयोरुद्वहनार्थं सिंहासनाधःस्थापितपीठविशेषस्य, निकटे समीपे, मुकुलिताः करा अञ्जलय एव उत्तंसा येषु तानि मुकुटानि येषां ते; मुकुटधृताञ्जलयः, सन्तः शश्वत्सदा, स्थिताः। यतः परेषां पूज्यत्वेनाभिमता ब्रह्मादयोऽपि शिरोनिबद्धाञ्जलिपुटा देवीचरणोपास्तिपरायणाः स्थिताः, अतो भवच्चरणपूजा पूजा, यतः पूज्यपूजनं पूजा, न ह्यपूज्यपूजनं इति भावः॥ २५॥

## आनन्दगिरीया

ननु तथापि ब्रह्मादयः पञ्चभूतेश्वराः अवश्यं पूजनीयाः। अन्यथा तत्पूजनाभावजनितप्रत्यवायवतां त्वत्प्राप्तिरपि दुर्लभेत्याशंक्याह-**त्रयाणां देवानामिति**। हे शिवे तव चरणयोर्या पूजा विरचिता, सैव त्रयाणामपि देवानां ब्रह्मविष्णुरुद्राणां पूजा भवेदेव। तत्र हेतुमाह—किंभूतानां तेषां, त्रिगुणजनितानाम्। अयं भावः—त्वं खल्वनादिसिद्धा सत्वादिगुणत्रयवती पारमेश्वरी माया। तत्र स्वसृष्ट्याद्यनुकूलकालबलोद्रिच्यमानतत्तद्गुणावच्छिन्नायां त्वयि, प्रतिबिंबतया लब्धात्मानो ब्रह्मादयः त्वदभिन्नाः, तर्हि तव पूजनैव। आदर्शतलाद्युपाधिधर्मैः कंपादिभिः प्रतिबिंबितानां चन्द्रादीनां कंपादिदर्शनात्। किञ्चानादिसिद्धानन्दसंविद्रूपा शक्तिस्त्वं, ततस्तेषां अधिष्ठानरूपा। ते चाध्यस्यमानाः। तथा चाधिष्ठानविधिनिषेधौ अधिष्ठिते परिणमतः। तथा चोपनिषद्—'यस्मिन्ज्ञाते इदं सर्वं ज्ञातं भवति'। अधिष्ठानभिन्नस्याधिष्ठेयस्याभावादिति। तव पूजाविधानेन तेषामपि पूजाविधिर्जातैवेति। अथवा तेषां पूजा स्वतन्त्रा न भवति। सापि त्वत्पूजनैव परिणमते, तेषामधिष्ठेयत्वात्। भुजगस्य पूजया रज्जुरेव पूजितो भवति, भुजंगस्य मिथ्यात्वात्। तर्हि तेषां पूजा या सापि तवैव पूजा इति। त्रयाणां देवानां या ब्रह्माद्युपाधिपुरस्कारेण पूजा सापि उपाधिव्यवधानेन तवैव चरणयोः, इत्यावश्यकत्वात् साक्षात्तव चरणपूजैव श्रेयसीति। न च प्रत्यवायस्तेषामत्राधिकर्तृत्वादिति, तदेवाह, किंभूतानां त्रिगुणजनितानामध्यस्तानामित्यर्थः। अध्यासमेवाह त्वत्पादोद्वहनेत्यादि। वेदान्तमार्गानुसारेण सिद्धेऽप्यर्थे पुनरागममार्गानुसारेणाप्याह—तथाहि इति। हि यस्मात्, त्वत्पादोद्वहनाय यन्मणिपीठं तस्य निकटे आवरणदेवतात्वेन स्थिताः सन्ति, इति तव पूजांगावरणदेवतापूजनेन ते युज्यन्त एव। अथवा तव चरणपीठनिकटे बद्धाञ्जलयः सन्तः स्थिताः सन्तीति चरणयोः समर्प्यमाणाः पुष्पाञ्जलयः तव चरणोपरि भूत्वा पीठोपरि यदा पतन्ति तदा पीठनिकटे स्थितानामप्युपरि पतन्त्येव। सैव पूजा। एतावता चरणारविन्दगलितनिर्माल्याधिकारिण एव ते तवेति भावः। शश्वदित्यनेन तव पूजासमये अवश्यंभावित्वम्। मुकुलितौ करौ येषां ते, बद्धाञ्जलय इत्यर्थः। ते च ते उत्तंसमुकुटाश्च। उत्तंसं नमत् मुकुटं येषां ते। अथवा तव मञ्चचरण-

भूतास्ते। तव सिंहासनात्मकमञ्चकोपरिवर्तमानसदाशिवाख्यपर्यङ्कोपरि विकीर्यमाणेन कुसुमाञ्जलिना मञ्चकवर्तिचरणानामपि पूजा भवत्येव। त्रयाणां देवानामिति पद्यस्य रहस्यार्थः—सूर्याराधितविद्या-माह-त्रयाणां देवानां आद्यः कूटो वाग्भव इति देवानां कः अहतेन तेनैवाक्षरद्वयं सस्वरम्। गुण ल जनिता शिवः ह् अन्यत्रार्थाच्छिवः धाता शिवगुणः पृथ्वी लः शिवत्वं तलज्जेत्यर्थः। या शक्तिः रविः चिता धाता तथाहि ह त्वत्पादो लः अन्यत्रानुस्वारेण शक्तिः ह धाता त्वत्पादो लः उद्वहनमणि-पीठ लज्जा निकटे। तथा "कामराजस्य कूटाद्या शंभुधातृशिवक्षितिः। लज्जा शान्तिस्तथा शंभुः धाता शक्रेण चेश्वरी। सूर्याराधितमन्त्रोऽयं कथितो भुवि दुर्लभः।" ईश्वरी लज्जा। [1] क ५ ह ६ स ४ क्यूल्ह्रीं ह् व् य् ल्ह्रीं स्क्ल्ह्रीं ॥ २५ ॥

## तात्पर्यदीपिनी

हे शिवे, त्रयाणां देवानां ब्रह्मविष्णुमहेश्वराणां या तव चरणयोः पूजा सैव पूजा भवेत्। त्वच्चरणपूजया ब्रह्मादीनामपि पूजा कृता भवेदिति भावः। कीदृशानां, त्रिगुणजनितानां त्रिगुणैः सत्वादिभिर्जनितानाम्। ननु कथमित्युच्यते तत्राह-तथाहीति। साध्यायाः त्वत्पूजायाः साधनम्। प्रतिपाद्यस्य फलस्य प्रत्यक्षेणैवोपलंभात्। हि यस्मात्, एते त्रयो देवाः त्वत्पादोद्वहनमणिपीठस्य निकटे शश्वत् स्थिताः सन्ति। तव पादौ त्वत्पादौ, तयोरुद्वहकं यन्मणिपीठं तस्य निकटे तेषां पादोपलंभात् इत्यर्थः। त्वत्पादोद्वहनमणिपीठस्य निकटस्य चान्यथानुपपत्त्या तेषामेव पूजा पूजेत्यर्थः। किंविधास्ते, शश्वत्सर्वकालं मुकुलितकरोत्तंसमुकुटाः। मुकुलिताश्च ते कराश्च तैरुत्तंसिता मुकुटा यैस्ते। शश्वच्छब्दः काकाक्षगोलकन्यायेन उभयत्रापि संबध्यते ॥ २५ ॥

## पदार्थचन्द्रिका

एवं तावत्सर्वानुग्राहकत्वमुक्तं श्रीभवान्याः, अतःपरं सर्वोपादानत्वात्सैव पूज्या। तथा च सति इतरदेवपूजापि स्यादित्यभिप्रायेणाह—**त्रयाणामिति**। हे त्रिनयने, तव चरणयोर्भक्त्या विरचिता पूजा सा पूजा त्रयाणां देवानामपि भवेत् संभवेत्। तत्र हेतुगर्भं विशेषणमाह-त्रिगुणेति। त्रयाणां गुणानां समाहारः त्रिगुणं, त्रिगुणेन सत्वरजस्तमोभिः जनितानां, त्रिनयने इति संबोधनेन सूर्याग्निचन्द्र-मयत्वेन भवान्यामग्नीषोमात्मकजगन्मयत्वमुक्तम्। एतेन भवान्याः सकलदेवमयत्वेन तत्पूजनेन ब्रह्मादिदेवपूजनं भवति। तदेवाह-तथाहीति। पादावुद्वहतीति पादोद्वहनं, तव पादोद्वहनं, त्वत्पादोद्वहनं तच्च तन्मणिपीठं तस्य निकटे एते ब्रह्मादयः स्थिताः। शश्वन्निरन्तरं, हिशब्दः आगमप्रसिद्धमाह। ब्रह्मादीन्विशिनष्टि-मुकुलिताश्च ते कराश्च मुकुलितकराः ते उत्तंसा इव मुकुलितकरोत्तंसाः, ते मुकुटेषु

---

1. ह्सकलह्रीं सहकलह्रीं सकहलह्रीं।

येषां ते तथा। एतेनापि भवान्याः परमसेव्यत्वेन, ब्रह्मादीनां सेवकत्वेन च श्रीभवान्याः पूजया ब्रह्मादिसेवकानामपि पूजा भवति। राजपूजया भृत्यपूजा भवतीति सूचितम् ॥ २५ ॥

## डिण्डिमभाष्यम्

ननु लोके तावदन्योन्यभिन्नानां सामान्यदेवतानां कस्यापि वरिवस्यायां नान्यस्तृप्यति, तदन्यस्या वरिवस्यया न तृप्तिः एवं सामान्यासु नियमः, त्वयोक्तं ब्रह्मविष्ण्वादीनां प्रसवित्रीपराशक्तिरेकैवेति, तत्पूजया सर्वाश्च देवताः पूजिता भवन्ति इति गुरुपरम्परया आविततदर्थप्रकाशनं कथं न क्रियते इत्याशङ्क्याह— **त्रयाणामिति**। हे भगवति। तव त्रिगुणितजनितानां त्रिगुणेभ्यः सम्पन्नदेहानां त्वन्मयानां, त्वच्चरणनिकटे निविष्टानां त्रयाणां देवानां ब्रह्मविष्णुरुद्राणां सैव पूजा भवति, या तव चरणयोर्विरचिता भक्तैः। एकेन भुज्यते तदन्यैर्न तृप्यते इतिवत् भगवत्याः पूजया तेषां किं जातमित्याह—**तथाहीति**। एते शतमखमुखाः, शतं मखाः शतमखाः, तेषु मुखं पूज्यमानत्वं येषां ते शतमखमुखाः, सर्वैरपि शतविधेषु मखेषु ते सर्वदा पूज्यमानाः। अत्र शतमखशब्दो नेन्द्रवाची। इन्द्रादयः खलु दिक्पाला अणिमादिस्थानपर्यन्तं गच्छन्ति। ब्रह्मविष्णुरुद्रादयस्तु तत्पर्यन्तं गच्छन्ति। अत एव चक्रसिंहासनस्य सर्वबाह्यचतुरस्रकोणवर्तमाना अणिमादिदेवता एव ब्रह्मादीनपि इष्टार्थैः पूरयन्ति। तदेव विविच्य प्रदर्शयति—त्वत्पादोद्वहनमणिपीठस्य तव चरणसमुद्वहनयोग्यचन्द्रकान्तपादपीठस्य, निकटे समीपे, शश्वत् सर्वदा, मुकुलितकरोत्तंसमुकुटाः अञ्जलिबन्धशोभिशिरसः पर्यन्ते यस्मात्त्वच्चरणयोः विधीयमानया सपर्यया तेऽपि तृप्ता भवन्ति; न पुनः पृथक् तेषां पूजारम्भप्रयासः कर्तव्यः। एकोद्योगेन कार्यद्वयस्य सिद्धौ नीतिः फलिनीति नीतिविदः। त्वच्चरणपूजैव सर्वदेवतापूजनमित्यत्र न कश्चित् सन्देहपरिखेद इत्यलम् ॥ २५ ॥

## गोपालसुन्दरी

**त्रयाणामिति**—हे परमशिवे! तव चरणयोर्या पूजा विरचिता सा त्रिगुणजनितानां सत्वरजस्तमोजनितानां त्रयाणां देवानां ब्रह्मविष्णुरुद्राणां पूजा भवेत्। 'परशिवे' इत्यत्र त्रिभुवने इति क्वचित्पाठः। तथाहि तदेव प्रतिपाद्यते-हि यतः त्वत्पादावुद्वहन्तीति त्वत्पादोद्वहं यन्मणिपीठं तस्य निकटे शश्वन्निरन्तरमेते स्थिताः। कीदृशाः? मुकुलितकरा एव उत्तंसास्ते मुकुटे येषां ते तथेत्यर्थः। उक्तं च देवीपुराणे—"विष्णुपूजासहस्राणि शिवपूजाशतानि च। अम्बिकाचरणार्चायाः कलां नार्हन्ति षोडशीं।" इति।

**विष्णुपक्षे**—त्रयाणां ब्रह्मरुद्रेशानां परमशिवे परमकल्याणनिमित्तं शेषं समानम्। यद्वा तव चरणयोः या विरचिता सा त्रयाणामपि पूजा भवेत्। ननु तर्हि त्वच्चरणयोरपि पूजा न तेषामित्यत आह-**तथाहीति**। तथा राजपूजया भृत्यपूजावदुपपन्नमिदम् इति ॥ २५ ॥

## आनन्दलहरटीका

त्वत्पूजने सर्वदेवपूजाफलं भवतीति दर्शयति त्रयाणामिति। हे शिवे तव चरणयोर्या पूजा विरचिता कृता, सा त्रिगुणजनितानां सत्वरजस्तमोजन्यानां त्रयाणां देवानां ब्रह्मादीनामपि पूजा भवेत्। अपि शिवे इत्यत्र परशिवे इति क्वचित्पाठः। क्वचित् त्रिभुवने इति पाठः। तदेवोपपादयति-तथाहीति। त्वत्पादौ उदूह्येते अनेनेति, त्वत्पादयोरुद्वहनं यत्रेति वा, त्वत्पादोद्वहनं, यन्मणिमयं पीठं तस्य निकटे शश्वत् निरन्तरेण ते स्थिताः। कीदृशा मुकुलिता अञ्जलीकृताः कराः पाणयः उत्तंसाः शिरोभूषणानि येषु तानि तादृशानि येषां ते तथा॥ २५॥

**विरिञ्चिः पञ्चत्वं व्रजति हरिराप्नोति विरतिं**
**विनाशं कीनाशो भजति धनदो याति निधनम्।**
**[1]वितन्द्री माहेन्द्री विततिरपि [2]संमीलितदृशा**
**महासंहारेऽस्मिन् [3]विहरति सति त्वत्पतिरसौ॥ २६॥**

விரிஞ்சி: பஞ்சத்வம் வ்ரஜதி ஹரிராப்னோதி விரதிம்
1 1 11 1 1 1
வினாஶம் கீனாஶோ பஜதி தநதோ யாதி நிதனம்;
3 4 1 4 3 1 4
விதந்த்ரீ மாஹேந்த்ரீ விததிரபி ஸம்மீலிதத்ருஶா
1 3 3 1 1 1 13
மஹாஸம்ஹாரே அஸ்மின் விஹரதி ஸதி த்வத்பதிரஸௌ.
1 1 1 1 1

संहार (संसार) में अपार देवि! हस प्राणों से वंचित होते
हरि विरिंचि; यम भी कालदेव पंचत्व को प्राप्त होते!
होता है धनपति का निधन, सेन्द्रगण विह्वल होते हैं,
झंप जातीं आंखें उन की, प्रलय में सभी मिट जाते हैं।
पर प्राणपति सदाशिव तेरे विहरण करते रहते हैं!॥

## लक्ष्मीधरा

**विरिञ्चिरिति**—विरिञ्चिः ब्रह्मा, पञ्चत्वं पञ्चभूतानां व्यष्टिरूपतां, मरणमिति यावत्, व्रजति याति। हरिः विष्णुः, आप्नोति प्राप्नोति, विरतिं उपरतिं, मरणमिति यावत्। विनाशं मृतिं, कीनाशः यमः भजति। धनदः कुबेरः, निधनं मरणं, याति प्राप्नोति। वितन्द्री विशेषेण तन्द्री प्रमीला जाड्यं यस्याः सा, निद्राणेत्यर्थः, माहेन्द्री महेन्द्रस्येयं माहेन्द्री चतुर्दशानां मनूनां इन्द्राणां, विततिरपि

1. वितन्द्रा 2. संमीलति दृशां, संमीलति दिशां 3. बिलसति

सङ्घोऽपि, संमीलितदृशा संमीलिता दृशा दृष्टिर्यस्याः सा। 'हलन्तादपि टाबिष्यते' इति टाप्। यद्वा, संमीलितदृशा करणेन, वितन्द्री माहेन्द्री। महासंहारे कल्पान्ते अस्मिन् विहरति विशृङ्खलतया वर्तते, हे सति, पतिव्रते, त्वत्पतिः सदाशिवः हरः, असौ सहस्रदलकमले परिदृश्यमानः॥

अत्रेत्थं पदयोजना—विरिञ्चिः पञ्चत्वं व्रजति। हरिः विरतिं आप्नोति। कीनाशः विनाशं भजति। धनदः निधनं याति। माहेन्द्री विततिरपि संमीलितदृशा वितन्द्री। अस्मिन् महासंहारे सति, असौ त्वत्पतिः हरः विहरति॥

अयं भावः—सर्वेषामधिकारपुरुषाणां च संहारे ब्रह्माण्डभङ्गसमये तव पत्युर्यद्विहरणं तत्तव पातिव्रत्यमहिमायत्तमिति॥ २६॥

## सौभाग्यवर्धनी

चरणसपर्यामहिमानमभिधाय तत्प्रभावमहिमानमाह—**विरिञ्चिरिति**। विरिञ्चिर्मूर्तिं याति; विष्णुर्विरामं प्राप्नोति; यमो नाशमेति; कुबेरो निधनमपि गच्छति। माहेन्द्री दिशां विततिः तन्द्रारहिता जागरूकाऽपि मीलति दीर्घनिद्रां याति। त्वत्पतिः शिवः महाप्रलये विलसति। हे सति सदामङ्गलरूपे, तवामङ्गलं कालत्रयेऽपि यतो नास्ति, अत एव तस्य ब्रह्मादेरिव विरामो नास्ति। सर्वबलसंहारक[1]महामायायास्तवैता[2]मस्याः(दृश्याः) शक्तेः साक्षिण्या चिच्छक्तिरूपया नित्यनिरतिशयानन्दघनया अविनाभूतः स्वयंप्रकाशः समुज्जृम्भत इति यो महिमा शिवस्य स चिच्छक्तिरूपाया नित्यनिरतिशयायास्तवैव प्रभाव इति भावः॥ २६॥

## अरुणामोदिनी

भगवतीप्रसादमहिमानमेवाह—**विरिञ्चिरिति**। हे सति पतिव्रताशिरोमणे देवि। पत्युर्दीर्घायुष्मत्ता भवत्पातिव्रत्यमहिमायत्तेति ध्वनिः। विरिञ्चिः स्रष्टापि पञ्चत्वं मरणं व्रजति; स्वकारणे लीनो भवति। हरिः पालनकर्ता विष्णुरपि विरतिं नाशमाप्नोति; सोऽपि विलीनो भवतीत्यर्थः। कीनाशः सर्वविनाशकः अन्तकोऽपि विनाशं भजति। धनदो दानशौण्डो धर्मपरायणः कुबेरोऽपि निधनं नाशं याति; 'निधनं नाशकुलयोः' इति विश्वः। किमुतान्ये देवा इत्यर्थः। महेन्द्राणामियं माहेन्द्री विततिरिन्द्रसमूहोऽपि संमीलिता निमीलिता दृशा यया सा सती वितन्द्री विशेषेण निद्राणा भवतीत्यर्थः। तत्पूर्वाद्द्रातेः 'स्पृहिगृहि' इत्यादिना तन्द्रेति निपात्यते। तन्द्रायाः करणम्, तरेः त्रिद्रिः; 'तत्करोति' इति ण्यन्तादच इप्रत्ययः। 'कृदिकारादक्तिनो ङीष् वा वक्तव्यः' इति ङीष्। अस्मिन्नेवंविधे महासंहारे महाप्रलये असौ त्वत्पतिः, भवद्भर्ता शिवः सहस्रकमले मया परिदृश्यमान इत्यर्थः। विहरति क्रीडते। भवत्पातिव्रत्यमहिमा खल्वेतदिति भावः। अत्रोक्तं सूतसंहितायाम्—'असंख्या विलयं यान्ति ब्रह्माणः पण्डितोत्तमाः। असंख्या विष्णवो रुद्रा असंख्या वासवादयः॥

1. माह-इति पाठः। 2. तवैव तामस्याः शक्तिः इति पाठः।

एक एव शिवः साक्षात्सृष्टिस्थित्यन्तहेतवः ।' इति । श्रुतिश्च—'एक एव रुद्रो न द्वितीयाय तस्थे' इत्यादिः । सर्वमन्यत्प्रागेवोक्तमस्माभिरित्युपरम्यते ॥ २६ ॥

## आनन्दगिरीया

एवं ध्यानान्तरमुक्त्वा निरतिशयप्रभावमाह-**विरिञ्चिरिति** । हे परमेश्वरि, वैष्णवि, यस्मिन्महासंहारे महतां कार्यद्रव्याणां संहारे खण्डप्रलये विरिञ्चिर्ब्रह्मा पञ्चत्वं व्रजति, तच्छरीरारंभकाणि भूतानि नाशं प्रविशन्ति, म्रियते । हरिः श्रीकृष्णो विरतिं विराममवसानं प्राप्नोति । कीनाशो यमो विनाशं भजति । धनदः कुबेरोऽपि निधनं याति । माहेन्द्री दृशां विततिः नयनपरंपरा संमीलति, पुनरुन्मीलनाभावरूपं निमीलनं प्राप्नोति । कीदृशी, वितन्द्रा विगता तन्द्रा यस्याः सा सर्वदा प्रकाशमानापि । एते सर्वेऽप्येवं प्रलयाभिभूता भवन्ति । सदाशिवस्तु विलसति विलासं करोति । विलासो नाम स्थानासनगमनानां नेत्रभ्रूवक्त्रकर्मणां चोत्पद्यते यो विशेषः स तु विलासः स्यादिति । तत्कस्मात्, यस्मादसौ सदाशिवस्तव पतिर्यत् त्वं निरतिशयसौभाग्यसुधामकरन्दमन्दाकिनी यं भोग्यत्वेनावगाहसे, कथमेनमपि कालकुण्डली कबलयेदिति भावः । सतीति पाठपक्षे हि, सति पतिव्रताधर्मपरिपालनानुकूलशीलसमुल्लासितसकलमंगलपरंपरे, असौ खलु त्वत्पतिरिति कृत्वा अस्मिन्महासंहारेऽपि विलसति । अथवा विलसतीति सप्तम्यन्तं वा । तदा एवंविधे संहारेऽपि तव पतिरस्ति । असावेव पूर्वसृष्टिसमये स्थितः तादृगेव । तस्य मरणरूपोऽन्यथाभावो न जातः । चकार एवकारार्थः । तथा चास्मत्कर्तृकमहिम्नस्तोत्रे - "अविद्या विद्या च त्रिणयन समे त्वत्प्रियतमे तथापीयं विद्या तव भव रहस्यं कलयति । यतः संहाराख्ये सकलजगतः स्वापसमये परित्यक्तक्रीडं रहसि रसिकं त्वां रमयति ॥" अयं भावः-सकलसंहारकारणीभूता तामसी शक्तिः खलु त्वं, तस्याः साक्षी नित्यनिरतिशयानन्दमहिमा सदाशिवः । त्वमपि तादृशी स्वात्मतादात्म्येन तत्र वर्तसे, तर्हि कथं अयं विरिञ्चिरिव भविष्यति । निसर्गस्त्वयं ब्रह्मणि शतवर्षमितकालोपाधौ गते जातेऽप्यवान्तरप्रलये विद्या तिष्ठत्येव अधिष्ठानभावात् । तत्संक्रान्तमूर्तिः साक्ष्यपि कारणरूपतामापन्नं स्वाध्यस्तं जगन्मण्डलं साक्षादीक्षमाणस्तिष्ठति इति विलसति इत्युक्तिः । तदुक्तं मोहातीतो विशुद्धो मुनिरभिहितो मोहाक्रान्तमूर्तिः साक्षीति । व्युत्पत्तिरपि त्वध्यस्तं जगत् सूक्ष्ममसूक्ष्मं वा साक्षादीक्षते इति । ननु प्रलयकाले साक्षिवृत्तिरपि कथमुत्पत्स्यत इति चेन्न, विद्योपाध्योः सन्निहितत्वात् । दैनन्दिनेऽपि प्रलये मनोलयेऽपि सुखमहमस्वाप्सं न किञ्चिदवेदिषं इति परामर्शान्यथानुपपत्त्या मनोवृत्तेरपि स्वीकारात्, अत्र तु तथा अनुपपत्त्यभावात् ॥ विरिञ्च्यादिश्लोकस्य अतिरहस्यार्थः—मानवीं मनुविद्यामाह-विरिञ्चिरित्यत्र कामराजविद्याकूटेनेति बोद्धव्यम् । विरिञ्चिः ह व्रजति अर्थादादौ हरिः शिवः विश्रमं आदौ तदा द्वितीयः । धनदः सः यदादौ तदा तृतीयः । [1]ह ए ल ह्रीं ह क ए ई ल ह्रीं स क ए ई ल ह्रीं ॥ २६ ॥

1. क ह ए ई ल ह्रीं ह क ए ई ल ह्रीं स क ए ई ल ह्रीं इति मानवी विद्या ।

## तात्पर्यदीपिनी

**विरिञ्चिरिति**—हे सति, अस्मिन्महासंहारे, विरिञ्चिर्ब्रह्मा पञ्चत्वं व्रजति, मृत्युं याति। विरिञ्चिशब्दाभिमानितां जहाति। तथैवात्र हरिः विरतिं मृत्युं प्राप्नोति, स्वाभिमानत्यागी भवति। तथैव कीनाशो यमो विनाशं मृत्युं भजति। तथैव धनदो निधनं मृत्युं याति। उभावपि कीनाशधनदौ स्वाभिमानत्यागिनौ भवतः। किञ्च माहेन्द्री दृशां विततिरपि संमीलति। महेन्द्रस्येयं माहेन्द्री दृशां दृष्टीनां विततिरपि वितन्द्रा विगता तन्द्रा यस्याः सा निमेषरहिता। अस्मिन् संहारे शिवमन्तरा न कोऽप्युर्वरित इत्याह। असौ त्वत्पतिः विलसति। त्वया पतित्वेनांगीकृतः सदाशिवः अस्मिन्महासंहारे विलसति। अयं तवैव महिमा। न शिवस्येति भावः॥ २६॥

## पदार्थचन्द्रिका

अधुना भवान्याः परमपातिव्रत्यमहिमानमनुवर्णयन् श्रीसदाशिवस्य महाप्रलयेऽपि क्रीडामाह—**विरिञ्चिरि**ति। यस्मिन् महासंहारे महाप्रलये विरिञ्च्यादयोऽपि पञ्चत्वं गच्छन्ति, अस्मिन् महासंहारे, हे सति पतिव्रते, त्वत्पतिर्विलसति विशेषेण क्रीडति। ध्यानेन बुद्धौ सन्निधाप्याह-असाविति। लस श्लेषणक्रीडनयोरिति धातुः। विरिञ्च्यादिपञ्चत्वादिकमाह-विरिञ्चिः पञ्चत्वं व्रजति। हरिराप्नोति विरतिं संसारपालनव्यापारोपरमम्। कीनाशो यमः। माहेन्द्री महेन्द्रसंबन्धिनी दृशां दृष्टीनां विततिः, परंपरापि संमीलति मुद्रिता भवति। विगता तन्द्रा यस्याः सा वितन्द्रा विगतनिद्रेत्यर्थः। एतेन भवानीपातिव्रत्यनिबन्धनमेव श्रीमहादेवस्य महाप्रलयावस्थानमिति दर्शितम्। कीनाशः कर्षकः क्षुद्रः पांसघातिषु वाच्यवत्। यमेनेति मेदिनीकारः॥ २६॥

## डिण्डिमभाष्यम्

ननु स्वेच्छाविलासमात्रोत्पादितानां ब्रह्मविष्ण्वादिकारणपुरुषाणां कार्योपसंहारवेलायां तेषां यदा तिरोधानं भवति तदा परब्रह्मणा शिवेन सार्धं तस्याः क्रीडनमेव न नाशः इत्यागमपरम्परया श्रुतम्, तस्य सर्वोपसंहारे कीदृशी समवस्थेति कथं न प्रकाश्यते इत्याशङ्क्याह—**विरञ्चिरित्यादि**। हे परमेश्वरि! महासंहारकाले वर्णकलामनुवेदतत्त्वभुवनाख्यषडध्वोपसंहारवेलायाम् विरिञ्चिः ब्रह्मा पञ्चत्वं व्रजति तिरोधानं गच्छति। हरिः पुरुषोत्तमो विरतिं स्वकार्यविरमणमाप्नोति गच्छति। कीनाशः सर्वजन्तुप्राणोपसंहारी यमराजोऽपि नाशं विरतिं व्रजति। किं न नाशयति अपि तु सर्वं नाशयति इति कीनाशः। किंशब्दमकारनकारयोर्लोपः इकारस्य दीर्घः पृषोदरादित्वात् अवसानं गच्छति। माहेन्द्री महेन्द्रसम्बन्धिनी दृशां लोचनानां विततिः समूहः वितन्द्री सति विनष्टा तन्द्री यस्याः सा, "तन्द्री प्रमीला"-इत्यमरः। आसन्नमरणस्य पुरुषस्य प्राणोत्क्रमणसमये लोचनतारवलयस्य यद् घूर्णनं सा तन्द्रीत्युच्यते। तादृशी दृशां विततिः ऐन्द्री सम्मीलितं सम्यक्तया मीलनं

पुनरुत्थानलक्षणम्, एवं सर्वेषु उपसंहृतेषु अपि त्वत्पतिः त्वया सह विहरन्नास्ते ; न तस्य नाशो भवतीति यावत्। भगवत्यास्तु मूलप्रकृतिरूपत्वात् तस्य च पुरुषशब्दवाच्यत्वान्नोभयोर्विनाशसम्पत्तिः। साङ्ख्यशास्त्रमर्यादया चैवमुक्तम्। साङ्ख्यशास्त्रस्य त्रिपुरासिद्धान्तस्य च नात्यन्तभेदः। तत्रोपवर्ण्यते मूलप्रकृतिः परमेश्वरी त्रिगुणा व्यापिनी नित्या च ततो बुद्धितत्त्वं बहिर्भवति। बुद्धितत्त्वमेव महत्तत्त्वं नाम, तल्लक्षणं चतुर्द्धा—धर्मो ज्ञानं विराग ऐश्वर्यम् इति तत्त्वद्वारा, तमोद्वारा तु तद्विपर्यासः अधर्माज्ञानावैराग्यानैश्वर्याणि। ईदृग्बुद्धितत्त्वात् मूलप्रकृतिविकारभूतात् त्रिविधमहङ्कारतत्त्वं प्रादुर्भवति। अहङ्कारतत्त्वात्तु मनसा सह श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थानि दशेन्द्रियाणि सम्भवन्ति। शब्दस्पर्शरूपरसगन्धाश्च पञ्चैवं मिलित्वा षोडश विकारशब्दवाच्या भवन्ति। शब्दादिभ्यः पञ्चभ्यः पञ्च महाभूतानि सम्भवन्ति। तैर्मिलितैर्ब्रह्माण्डमुत्पद्यते। तच्चानेकसङ्ख्यमनेकरूपम्। प्रतिब्रह्माण्डमेकैको ब्रह्मा। तस्य जाग्रत्स्वप्नाभ्यां स्वकीयदिवसे स्वकीयरात्रौ च अण्डमध्यवर्तीनामशेषजन्तूनामवान्तरसृष्टिप्रलयौ, एवं सृष्टिव्युत्क्रमेण जन्तवः अण्डे लीयन्ते, अण्डमपि पञ्चभूतेषु, पञ्चभूतान्यपि शब्दादितन्मात्रपञ्चकेषु, तन्मात्रपञ्चकमप्यहङ्कारे, अहङ्कारो बुद्धितत्त्वे बुद्धितत्त्वमपि प्रकृतिरूपिण्यां परदेवताभट्टारिकायां लीयते, सा तु कुत्रापि न लीयते तत्रैव सर्वस्य लयात्। तथा चाहुः साङ्ख्यवृद्धाः—"भेदानां परिणामात् समन्वयाच्छक्तितः प्रवृत्तेश्च। कारणकार्यविभागाद् अविभागाद् वैश्वरूप्यस्य॥ कारणमस्त्यव्यक्तं प्रवर्तते गुणतः समुदयाच्च। परिणामतः सलिलवत् प्रतिगुणाश्रयविशेषात्॥" एवंप्रकारेण मूलप्रकृतिः परब्रह्मव्यतिरिक्ता परब्रह्मण आवारिका विक्षेपिका च। एवं परब्रह्मणोऽपि नित्यसिद्धत्वं साङ्ख्यवृद्धैरेवं प्रतिपादितम्—"सङ्घातपदार्थत्वात् त्रैगुण्यविपर्ययादधिष्ठानात्। पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च॥" एवं महापुरुषस्य महापौरुष्याच्च अस्तित्वात् प्रकाशरूपत्वात् आनन्दमयत्वात् मिथुनीभावः कमनीयावतारोऽनन्तकोटिसौख्यराशिभरितगर्भो नित्यसम्बन्धो जगदेकमङ्गलहेतुः सिद्धः इति सम्यगवधारणीयम्॥ २६॥

## गोपालसुन्दरी

**विरिञ्चिरिति।** हे सति पतिव्रते! अस्मिन् महासंसारे विरिञ्चिर्ब्रह्मा, पञ्चत्वं मृतिं व्रजति, हरिर्विष्णुर्विरतिं नाशं आप्नोति, कीनाशो यमः विनाशं मरणं व्रजति, धनदः कुबेरः निधनं प्राणवियोगं याति, माहेन्द्री महेन्द्रसम्बन्धिनी दृशां चक्षुषां विततिः परम्परा वितन्द्रा विगतनिद्राऽपि सम्मीलति, असौ त्वत्पतिः क्रीडति तथा च तवैवायं प्रभावः॥

**विष्णुपक्षे**—सतीति सप्तम्यन्तम्, तेनास्मिन् महासंसारे सति हरिः सूर्यः विष्णुरेव वा, विरतिमन्तर्धानं, त्वत्पतिः पालको यस्यासौ शिवो विहरति इति, तथा च प्रलये स्वशरीरमपि तिरोधत्से न भक्तस्य हरस्येति स्वापेक्षया तव भक्तस्यातीवानुकम्पयेति भावः॥ २६॥

## आनन्दलहरीटीका

महादेवस्य त्वत्पतित्वेनैवोत्कर्ष इति दर्शयति—**विरिञ्चीति**। हे सति साध्वि अस्मिन् महासंहारे प्रलयरूपे विरिञ्चिर्ब्रह्मा पञ्चत्वं मृत्युं व्रजति। हरिर्विरतिं विराममाप्नोति। किं न नाशयति अपि तु सर्वं नाशयतीति कीनाशः मकारनकारयोर्लोपः इकारस्य दीर्घश्च पृषोदरादीनि यथोपदिष्टमिति अनेन वाक्येन। कीनाशो यमो विनाशं भजति। धनदः कुबेरः निधनं मरणं याति प्राप्नोति। माहेन्द्री महेन्द्रसंबन्धिनी दृशां नेत्राणां विततिः संहतिः वितन्द्री निद्रारहितापि संमीलति दीर्घनिद्रां प्राप्नोति। असौ त्वत्पतिः शिवः विहरति क्रीडति त्वत्प्रभावादेवेति भावः॥ २६॥

**जपो जल्पश्शिल्पं सकलमपि मुद्राविरचना[1]**
**गतिः प्रादक्षिण्यक्रमणमशनाद्याहुतिविधिः[2]।**
**प्रणामस्संवेशस्सुखमखिलमात्मार्पणदृशा[3]**
**सपर्यापर्यायस्तव भवतु यन्मे विलसितम्॥ २७॥**

ஜபோ ஜல்பஶ்ஶில்பம் ஸகலமபி முத்ராவிரசனா
1 1 1 1 1 3
கதி: ப்ராதக்ஷிண்யக்ரமணமஶனாத்யாஹுதி விதி; ;
3 1 1 3 1 3 1 4
ப்ரணாமஸ்ஸம்வேஶஸ்ஸுக மகிலமாத்மார்பணத்ருஶா
1 2 2 1 1
ஸபர்யாபர்யாயஸ்தவ பவது யன்மே விலஸிதம் ||
1 1 3 4 1 1

आत्मार्पण भाव से किये जानेवाले मेरे व्यापार
हों पर्याय सभी तेरे पूजा-अर्चा के मां, व्यवहार!
जप जल्पना, शिल्प ही मुद्रा-रचना, गति परिक्रमा हो,
भोजन ही आहुतियां, नमन लोटना, सब सुख अर्चा हों॥

## लक्ष्मीधरा

**जप इति**। जपः मन्त्रजपः 'उपांशूच्चैर्वा क्रियते' इत्यादिभिश्चोदितः सः, जल्पः यादृच्छिकसल्लापः। शिल्पं सकलमपि हस्तविन्यासादिक्रियानिचयः, मुद्राविरचना मुद्राणां संक्षोभद्रावणाकर्षवश्योन्मादमहाङ्कुशखेचरीबीजयोनित्रिखण्डात्मकानां विरचना करणम्। गतिः यादृच्छिकगमनं, प्रादक्षिण्यक्रमणं प्रदक्षिणक्रिया। अशनादि ओदनादियत्किञ्चित्पदार्थचर्वणं, आहुतिविधिः आहुतीनां देवतोद्देशेन हविःप्रक्षेपणात्मकानां विधिः करणम्। प्रणामः नमस्कारः, संवेशः

---

1. मुद्राविरचनं 2. प्रादक्षिण्यं भ्रमणमदनाद्याहुतिविधिः 3. आत्मार्पणदशा, आत्मार्पणदृशां

यादृच्छिकदण्डवल्लुठनम्, जल्पशिल्पव्यतिरेकेण अङ्गभङ्गनयनोन्मीलननिमीलनादिकं च सुखं सुखकरं वस्तु अखिलं समस्तं शब्दस्पर्शरूपरसगन्धादिकं, आत्मार्पणदृशा आत्मार्पणबुद्ध्या, सपर्यापर्यायः सपर्या पूजा तस्याः पर्यायः रूपान्तरं, सपर्यैवेत्यर्थः, तव ते, भवतु भूयात्। यत् प्रसिद्धं, मे मम, विलसितं विलासः॥

अत्रेत्थं पदयोजना—हे भगवति! आत्मार्पणदृशा जपः जल्पः, सकलमपि शिल्पं मुद्राविरचना, गतिः प्रादक्षिण्यक्रमणं, अशनादि आहुतिविधिः, संवेशः प्रणामः, अखिलं सुखं मे यद्विलसितं च तव सपर्यापर्यायः भवतु॥

अयमर्थः—जल्पादीनां जपादिरूपता यथार्हं कल्पिता। एवं नयनोन्मीलननिमीलननिमेषोन्मेषाङ्गभङ्गजृम्भादीनां यथार्हं सपर्यापर्यायता ऊह्या। शब्दादेः सुखकरस्य वस्तुनः षोडशोपचारव्यतिरेकेण आत्मार्पणबुद्ध्या त्याग एव सपर्यापर्यायः, न तु स्वीकृतानाम्। यद्वा—शब्दादीनां यादृच्छिकसम्भवेन सुखप्रादुर्भावे तत्सुखं मच्छेषं न भवति किन्तु सदाशिवायेत्यर्पणं सपर्यापर्यायः॥

अत्रेदमनुसन्धेयम्—समयिनां मते समयस्य सादाख्यतत्त्वस्य सपर्या सहस्रदलकमल एव, न तु बाह्ये पीठादौ। ये ये समयिनो योगीश्वरा जीवन्मुक्ताः संसारयात्रा मनुवर्तमानाः सादाख्यतत्त्वमनुचिन्तयन्तः आत्मैकप्रवणाः वर्तन्ते तेषां 'जपो जल्पश्शिल्पम्' इत्यादिना सपर्याप्रकारो निरूपितः। ये तु समयिनो योगीश्वराः विजने गुहान्तरे वा बद्धपद्मासनाः निगृहीतेन्द्रियाः सादाख्यतत्त्वध्यानैकनिष्ठाः वर्तन्ते तेषां वक्ष्यमाणचतुर्विधषड्विधैक्यानुसन्धानमेव भगवत्याः सपर्येति अर्थादुक्तं भवति। अतश्च पक्षद्वयेऽपि बाह्यपूजायां तत्क्रियाकलापे च [1]तत्सम्पादनायां च क्लेशो नास्ति समयिनामिति रहस्यम्। यत्तु चन्द्रज्ञानविद्यायामुक्तम्—

सूर्यमण्डलमध्यस्थां देवीं त्रिपुरसुन्दरीम्।
पाशाङ्कुशधनुर्बाणान् धारयन्तीं प्रपूजयेत्॥

इति। बाह्यपूजाप्रकारकथनं, तत्तु समयैकदेशिमतमिति पुरस्तात्प्रपञ्चयते॥ २७॥

## सौभाग्यवर्धनी

प्रभावमहिमानमभिधाय सर्वनिवासभूतायाः सचक्रायाः परदेवतायाः स्वात्मत्वेन भावनाफलितमर्थं प्रार्थनारूपमभिसंधत्ते-जप इति। सर्वोऽपि जल्पो वाग्व्यवहारः मातृकास्वरूपः; मातृका च त्वन्मयी। अतः शब्दरूपं सकलं जपत्वेन पर्यवस्यतु। शिल्पं सकलं हस्तव्यापाररूपं मुद्रात्वेन तव संतोषकरं भवतु; मुद्राणां हस्तचेष्टारूपत्वात्। गतिः प्रादक्षिण्यक्रमणं भवतु; प्रादक्षिण्यक्रमणस्य चरणव्यापाररूपत्वात्।

---

1 तत्सम्पादनायामक्लेशो नास्ति

अदनादि भक्षणादि भक्ष्यचोष्यपेयलेह्यानीत्यादि आदिशब्दाद् ग्राह्यते। अदनादिकर्म आहुतिविधिर्भवतु। प्रणामः संवेशः, शयनं प्रणामो भवतु; प्रणामस्यापि दण्डवत्प्रणिपातरूपत्वात्। निद्रादिसुखमखिलमात्मार्पणदृशा स्वात्मनि परदेवतायाः अभेदेनारोपणबुद्ध्या यन्मे विलसितं तत्सर्वं सपर्यापर्यायो भवतु। सपर्यावत्तव संतोषकृद्भवतु। अयं श्लोकार्थः।

**भावनाप्रकारस्तु**—"श्रीगुरुः सर्वकारणरूपा शक्तिः। तेन नवरन्ध्ररूपो देहः। नवशक्तिरूपं श्रीचक्रम्। वाराही पितृरूपा कुरुकुल्ला बलिदेवता माता। पुरुषार्थाः सागराः। देहो नवरत्नद्वीपः। त्वगादिसप्तधातुरोमसंयुक्तः। संकल्पाः कल्पतरवः, तेजः कल्पकोद्यानम्। रसनया भाव्यमाना मधुराम्लतिक्तकटुकषायलवणरसाः षड्तवः। ज्ञानमर्घ्यम्; ज्ञेयं हविः; ज्ञाता होता; ज्ञातृज्ञानज्ञेयानामभेदभावनं श्रीचक्रपूजनम्। नियतिसहिताः शृङ्गारादयो नव रसा अणिमादिसिद्धयः। कामक्रोधलोभमोहमदमात्सर्यपुण्यपापमया ब्राह्मयाद्यष्टशक्तयः। आधारनवकं मुद्राशक्तयः। पृथिव्यप्तेजोवाय्वाकाशश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थानि मनोविकारः कामाकर्षिण्यादयः षोडश देवताः। वचनादानगमनविसर्गानन्दहानोपादानोपेक्षाबुद्धयः अनङ्गकुसुमादयः शक्तयोऽष्टौ। अलम्बुसाकुहूर्विश्वोदरी वारणा हस्तिजिह्वा यशोवती गान्धारी पूषा शङ्खिनी पयस्विनी इडा पिङ्गला सुषुम्ना चेति चतुर्दशनाड्यः सर्वसंक्षोभिण्यादिचतुर्दशशक्तयः। प्राणापानव्यानोदानसमाननागकूर्मकृकरदेवदत्तधनंजया इति दश वायवः सर्वसिद्धिप्रदादिबहिर्दशारगा देवताः। एतद्वायुदशकसंसर्गोपाधिभेदेन रेचकः पाचकः शोषको दाहकः प्लावक इति प्राणमुख्यत्वेन पञ्चधा जाठराग्निर्भवति। क्षारक उद्गारकः क्षोभको जृम्भको मोहक इति नागप्राधान्येन पञ्चविधाः, ते मनुष्याणां देहगाः भक्ष्यभोज्यचोष्यलेह्यात्मकं चतुर्विधमन्नं पाचयन्ति। तदुक्तं **भगवद्गीतासु**—

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्॥"

इति। एता दशवह्निकलाः सर्वज्ञाद्या अन्तर्दशारगा देवताः। शीतोष्णसुखदुःखेच्छाः सत्त्वरजस्तमोगुणा वशिन्याद्यष्टशक्तयोऽष्टकोणस्थाः। पञ्चतन्मात्राः पञ्च पुष्पबाणाः। मन इक्षुधनुः। रागः पाशः। द्वेषोऽङ्कुशः। अव्यक्तमहदहंकाराः कामेश्वरी वज्रेश्वरी भगमालिनीति अन्तस्त्रिकोणगा देवताः। शुद्धा निरुपाधिका संविदेव कामेश्वरः। सदानन्दघनः पूर्णः स्वात्मैव परदेवता ललिता। लौहित्यमेतस्य सर्वस्य विमर्शः। अनन्यचित्तत्वेन च सिद्धिः। भावनायामप्रमत्तता उपचारः। अहं त्वमस्ति नास्ति कर्तव्यमकर्तव्यमुदासितव्यमित्यादि विकल्पानामात्मनि विलापनं होमः। भावनाविषयाणामभेदभावनं तर्पणम्। पञ्चदशतिथिरूपेण कालस्य परिणामावलोकनं पञ्चदश नित्याः। एवं मुहूर्तत्रयं मुहूर्तद्वितयं मुहूर्तमात्रं वा भावनापरो जीवन्मुक्तो भवति। स

एव शिवयोगीति निगद्यते। तस्य देवता सर्वदा अभिमुखी तिष्ठति। चिन्तितकार्याण्ययत्नेन सिध्यन्ति। एतादृशस्योपासकस्य, 'जपो जल्पः' इत्यादिकं सर्वं तथैव भवति; न संदेहः। इति कादिमतोक्ता स्वात्मभावनानेन श्लोकेन प्रतिपादिता ॥ २७ ॥

## अरुणामोदिनी

जीवन्मुक्ततां प्राप्य वर्तमानानां भगवतीपूजाप्रकारमाह—अथवा-श्रीषोडशाक्षरीमन्त्रन्यासो द्विविधः - षोढान्यासः महाषोढान्यासश्चेति। तत्र महाषोढान्यासकर्ता नित्यशुद्धः; तस्य जल्पादिकं जपादित्वेन पर्यवस्यति। यथोक्तं **दक्षिणामूर्तिसंहितायाम्**—

"महाषोढान्यासकर्ता शुद्धो भवति सर्वदा।
जपो जल्पो भवेत्तन्द्रा समाधिरभिधीयते ॥
त्वचा यत्क्रियते कर्म तन्मुद्रारचनं भवेत्।
तत्तद्ध्यानं भवेदिच्छा जायते यत्र मत्प्रिये ॥
प्रादक्षिण्यं भवेत्तत्तद्यत्र यत्र हि गच्छति।
यत्र यत्रासने तिष्ठेत्तत्तदेव नमस्क्रिया ॥
यद्यदुच्चार्यते वाचा तत्स्तोत्रपठनं भवेत्।
यदा यदा भवेत्स्वप्नस्तदनुस्मरणं भवेत् ॥
तस्मादयं महाशुद्धो भवेत्सर्वत्र सर्वदा।"

इति। तादृशमहाषोढान्यासकर्तुः शुद्धतामाह-**जप इति**। हे भगवति! सकलशब्दस्य विभक्तिपरिणामेन सर्वत्रान्वयः। सकलः सर्वोऽपि जल्प्यत इति जल्पो वाग्व्यापारः। जप्यत इति जपः;

"स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमामनेत्।
स्वाध्याययोगसंपत्त्या परमात्मा प्रकाशते ॥"

"स्वाध्यायादिष्टदेवतासंप्रयोगः" इति स्मृतिसूत्राभ्यां निर्दिष्टदेवतासंनिधापको जपः, सर्वस्याप्यभिवदनस्य मातृकारूपत्वात् तस्याश्च त्वद्व्यतिरेकेणाभावात्। यद्यदभिवदनं क्रियते तत्तत्सर्वं मानसिकोपांशुवाचिकरूपत्रिविधजपत्वेन सिध्यतु। तथा मे मम सकलं समस्तमपि शिल्पं पाणीन्द्रियव्यापाराः; मुदं देवताया रान्तीति मुद्राः संस्थापनसंनिधापनसंनिरोधनावाहनाकर्षणादयः; तासां रचना निर्माणम्; मुद्राणां हस्तचेष्टारूपत्वात्। हस्ताभ्यां यद्यद्विरच्यते रङ्गवल्लीकरणस्थलशोधनादि तत्सर्वं मुद्राविधानत्वेन पर्यवस्यतु। तथा सकला समस्ता अपि गतिर्गमनं पादेन्द्रियव्यापारः; प्रदक्षिणान्येव प्रादक्षिण्यम्; स्वार्थे ष्यञ्। तदर्थं क्रमणं प्रदक्षिणविधानम्, प्रदक्षिणक्रियायाः पादेन्द्रि-

यव्यापारत्वात्। यद्यदुद्दिश्य यत्र यत्र गम्यते, तत्तदपि भवत्याः प्रदक्षिणविधानं सदैव पर्यवस्यतु। तथा अशनं भोजनमादिर्यस्य तत् अशनादि, भक्ष्यभोज्यलेह्यचोष्यादिकं सकलमाहुतीनां देवतोद्देशेन द्रव्यप्रक्षेपाणां विधिरनुष्ठानम्। यच्च प्राणाग्नावशनादि हूयते, तत्सर्वं त्वदुद्देशेन द्रव्यप्रक्षेपाणां विधिरनुष्ठानम्। यच्च प्राणाग्नावशनादि हूयते, तत्सर्वं त्वदुद्देशेन द्रव्यप्रक्षेप एव भवतु; जठराग्नेर्भवदनन्यत्वादित्यभिप्रायः। तदुक्तम्—

> "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
> प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्॥"

इति। तथा संवेशः स्वापोद्वर्तनादिश्च सकलः प्रणामः दण्डवत्पतनरूपोऽभिवादनविशेषः। यद्यत्किंचित्संवेशोद्वर्तनादिकं क्रियते, तत्सर्वं भवत्प्रणामरूपमेव पर्यवस्यतु। तथा अखिलं समस्तं सुखं सुखत्वेन मन्यमानं मे त्वद्रूपान्तरस्य मम यद्विलसितं यथेच्छाविहारः सोऽपि तव भवत्याः सपर्यापर्यायः अर्हणक्रमः; "पर्यायः क्रमनिर्माणप्रकारावसरेषु च" इति रत्नमाला। शुश्रूषारूपा आत्मार्पणदृशा सर्वमात्मार्पणं तद्दृशा तद्रूपा ब्रह्मार्पणरूपा; "हलन्ताद्वा" इति टाप्। दशेति पाठे सर्वमपि पूजाङ्गं भवत्वित्यर्थः। भवतु जायताम्। यो यो विलासो मया क्रियते सोऽपि सर्वोऽपि ब्रह्मार्पणरूपेण पर्यवस्यतु। उक्तं च **गीतासु**—

> "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
> यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥" इति
>
> "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
> मामेवैष्यसि कौन्तेय प्रतिजाने प्रियोऽसि मे॥"

इति च। जपो जल्प इत्याद्युपात्तेनैकादशेन्द्रियगणेन यद्यदभिवदनादिकं क्रियते, यच्च प्राणाग्नौ हूयते सर्वमेतत् त्वदर्पणमेव भवत्विति भावयामि। न हि भावनादन्यत्पूजाक्रमो मुख्योऽस्तीत्यभिसंधिः॥२७॥

## आनन्दगिरीया

**जपो जल्प** इति। हे परमेश्वरि, मे मम यद्विकसितं विधिविहितकायवाङ्मनोव्यापाररूपं तत्सर्वं तव सपर्यापर्यायो भवतु, सपर्या पूजा तस्याः पर्यायः क्रमः, पर्यायो नामान्तरम्। इयमप्येका पूजा भवत्वित्यर्थः। उच्यते क्रियते गम्यते भुज्यते सुप्यते चेति पञ्चविधा शारीरी क्रिया सर्वापि स्वात्माभेदारोपेण चिन्त्यमानायां परदेवतायां त्वयि पूजारूपा भवतु पूजोपकरणसधर्मेति। पूजायाः साधर्म्यमाह— यो जपोऽन्तर्बहिर्जल्पो वाग्व्यापारो जपत्वेनास्तु। अयं भावः—वाग्व्यापारस्तु शब्दैः स्वरैश्च भवति। ते तु मातृकारूपाः। मातृका तु तन्मन्त्रात्मिका। तत उच्चार्यमाणा वर्णास्तु मन्त्रजप एवेति। शिल्पं

हस्तसाध्यं कर्म, मुद्रापि तथाविधा। इत्थमन्तर्यामितया त्वया यत्कर्म कार्यं कृतं तत्सर्वं आवाहनावगुण्ठनादि मुद्रारूपं भवतु, त्वदिच्छाजन्यत्वात् , त्वत्सन्तोषकरत्वाच्च। तदुक्तं-"अन्तर्यामितया स्थिता भगवती लोकत्रयाधीश्वरी यद्यत्कर्म करोति तेन सततं प्रीणाति शक्तिः परा" इति। दक्षिणांगावच्छेदेन क्रियमाणं कर्म सा प्रदक्षिणक्रमणरूपा प्रदक्षिणा भवतु। अदनादि भक्ष्यादि भक्ष्यभोज्यलेह्यचोष्येति चतुर्विधमपि जाठरानले समर्प्यमाणं तव होमाकृतित्वेन भवतु। मणिपूरेऽग्निकुण्डेऽग्निरूपेण वर्तमानायां त्वयि समर्पणादिति। संवेशः शयनं, कायिकप्रणामरूपं दण्डवत्पतनसारूप्यात्। सकलं सुखमात्मार्पणं भवतु। सुखस्यात्माभिन्नत्वात् पूजनान्ते आत्मनिवेदनस्य आगमविहितत्वात्। पुराणेऽपि नवविधबाह्यभक्तेरन्ते आत्मनिवेदनं विहितम्। जपमुद्राप्रदक्षिणानमस्कारात्मनिवेदनमिति। सकलपदस्य पौनरुक्त्यमिति चेन्न। विशेष्यभेदात्। सुखमखिलमात्मार्पणदृशेत्यपि पाठः। तथा चार्थे पुनरुक्तिः। वस्तुतः सकलेति लोपामुद्राविद्यायाः तृतीयकूटसंबोधनम्। जपो जल्पेतिपद्यस्य रहस्यार्थः—जपो जल्प इत्यत्र नाचार्याभिप्रायोऽस्ति मन्त्रोद्धारे। अतो न श्रीमदाचार्यचरणैस्तथा व्याख्यातम्। किन्तु केषाञ्चिन्मतौ अजपाक्षरद्वयमुद्धृतं जपो जल्प इत्यादिपदैः। अन्यत् सुसंगतम् ॥ २७ ॥

## तात्पर्यदीपिनी

हे मातः, यन्मे विलसितं तत्सर्वं सपर्यापर्यायो भवतु। आवाहनादिरूपविरचनं भवतु। तदेवाह-जल्पो जपो भवतु। जपं विना वाग्विलासो मा भूदित्यर्थः। तथैव सकलमपि शिल्पं मुद्राविरचना भवतु। मुद्राविरचनामन्तरा कश्चिद्व्यापारो मास्त्वित्यर्थः। तथैव गतिः प्रादक्षिण्यक्रमणं अस्तु। प्रदक्षिणमन्तरा गतिर्मास्त्वित्यर्थः। तथा अशनादि आहुतिविधिरस्तु। आहुतिविधिं विना अशनं माभूदित्यर्थः। तथैव संवेशः प्रणामोऽस्तु। प्रणामं विना संवेशो मास्तु। तथैवात्मार्पणधिया अखिलं समग्रं सुखमस्तु। अयमत्राशयः—त्वयाभिन्नस्यात्मनो यत्समर्पणं तत्सर्वं सुखमित्यर्थः॥२७॥

## पदार्थचन्द्रिका

इदानीं सर्वस्यापि स्वचेष्टितस्य भवानीपरत्वेन तत्पूजाप्रकारतां प्रार्थयते—**जप** इति। हे जननि, यदिदं सकलं मे मम विलसितं विविधं चेष्टितं तदात्मार्पणदशा भूत्वा तव सपर्यापर्यायः पूजाक्रमो भवतु। आत्मनि परमात्मनि अर्प्यते समर्प्यते इत्यात्मार्पणं, दशैवात्मार्पणं, दशा अवस्था। यद्वा आत्मनि अर्पणं समर्पणं तेन दशा प्रदीपवर्तिः तद्वच्छोभमानमित्यर्थः। तथा च गीतायां भगवद्वाक्यं "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पण"मिति। विलसितस्य पूजारूपत्वमेवाह-जप इति। जल्पो भाषणम्। उच्चैरुपांशुर्मानसश्चेति त्रिविधमन्त्रोच्चारणरूपो जपः। शिल्पं कर्मकौशलं मुद्राविरचनं आगमप्रसिद्धगुह्यमुद्राविरचनं, गतिः

गमनक्रियादिमात्रं, प्रदक्षिणस्य भावः प्रादक्षिण्यं, प्रादक्षिण्येन क्रमणं, पादप्रक्षेपः प्रदक्षिणक्रियेत्यर्थः। अदनं भक्षणं आदिर्यस्य तददनादि आहुतिविधिः आहुतीनां प्रक्षेपरूपा क्रिया यागः। संवेशः शयनम्। अत्र जल्पादीनां जपादिरूपता विधेया। सा चात्मार्पणक्रियया भवति। सर्वं हि परमात्मोद्देशेन क्रियमाणं तदाराधनं भवति। परमात्मा च भवानीत्यवोचाम पूर्वमिति नेह प्रतन्यते। आत्मार्पणदृशेति पाठे सुगमोऽर्थः। दशावस्थादीपवर्त्योर्वस्त्रांशे भूम्नि योषिति इति मेदिनीकारः॥ २७॥

## डिण्डिमभाष्यम्

ननु यदि मूलप्रकृतिरूपिणी श्रीश्रीललितामहाभट्टारिका सर्वव्यापिनी विनिश्चिता तस्या गन्धपुष्पधूपदीपनैवेद्यादिपञ्चोपचाराद्यारम्भे षोडशोपचारचतुर्विंशतिचतुःषष्टिसङ्ख्यैः फल्गुभिः परिमितैः अनित्यद्रव्यकल्पितैरुपचारैः किं प्रयोजनम्। स्वेच्छया सर्वत्रैव सर्वदा सुलभैः पदार्थैः यदि महापूजनं भवति तदैव तस्याः परितोषो महत्या देवतायाः महापूजयैव परितोषलाभात्। द्विविधा पूजा—अल्पसारा महासारा च। अल्पसारा फल्गुप्रयोजना पुनः कर्मबन्धमालिन्यजननी धूपादि, महासारा तु मनोभावनिवेदितापरिमिताविच्छिन्नतत्वस्वरूपभावना पूजा। तामनुप्रविष्टानां महापुरुषाणां सा भगवती प्रत्यक्षमेव दृश्यमानमूर्तिर्जायते। सा खलु पूजा अवधूतसन्यासिनामेव सम्भवति, सा चेत्पूजा न प्रकाश्यते तदाऽखण्डज्ञानसिद्धानां तदनुरूपपूजासिद्धौ का गतिरित्याशङ्क्याह-**जप** इत्यादि। हे भगवति! ये परिमिलितयोगिनः पुनः पुनः संसारवासनाग्रस्तास्तेषां पूजनायामहं पूजयामि त्वाम्, या पूजा महासारा, "तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी" त्यादिना, 'तस्माद् ब्रह्मणो महिमानमित्युपनिषदि'त्यन्तेन तैत्तिरीयकोपनिषदि वर्तमानेन ग्रन्थकलापेन या प्रतिपादिता तयैव पूजया अहं पूजयामि त्वाम्। पूजायां खलु जपाङ्गः स्वेच्छया जपरूपः। हे भगवति! त्वच्चरणारविन्दनित्यपवित्रस्य मम शरीरे संसर्गिनो जल्पादिचेष्टाविशेषा जपादिरूपा उपजायन्ते, स खलु त्वत्प्रसादमहिम्ना त्वयि प्रसन्नायां सर्वमेव वस्तुजातमिष्टमनिष्टं वा परमकाङ्क्षितत्वेन पर्यवस्यति। तथा चोक्तं दुर्वासोनामभिर्मुनीश्वरैः—"गेहं नाकति गर्वितः प्रणमति स्त्रीसङ्गमो मोक्षति, द्वेषी मित्रति पातकं सुकृतति क्ष्मावल्लभो दासति। मृत्युर्वैद्यति दूषणं गुणयति त्वत्पादसंसेवनात्, तां वन्दे भवभीतिभञ्जनकरीं गौरीं महासुन्दरीम्॥" अत एव तव प्रसादान्मम स्वेच्छाजल्पोऽपि जपो भवतु। शिल्पमपि सकलमुद्राविरचनं भवतु। शिल्पं नाम जीविकोपायत्वेन चित्रकरणवसनसीवनपुस्तकसज्जीकरणादि तदेव तव मुद्रा भवतु। मुद्रा नाम पूजाङ्गत्वेन विधीयमाना संस्थापनसन्निधापनसन्निरोधनावगुण्ठनवन्दनधेनुमुद्रायोनिमुद्रासङ्क्षोभणद्रावणादिदशकनाराचमुद्रादि पूजाङ्गत्वेनागमेष्वभिहितम्। त्वत्प्रसादेन मम शिल्पमपि तव मुद्रा भवतु। मुद्राविरचने ह्यत्र विरचना नाम नानाविधाङ्गुलिसंश्लेषणेन

तत्तदर्थप्रख्यापनाभिनयः। गमनस्वेच्छासञ्चारः तव प्रादक्षिण्यक्रमणं भवतु। प्रादक्षिण्यव्यवहाररूप-चङ्क्रमणायोगात्। गुणसम्बन्धे प्रादक्षिण्यं क्रमणं तदपि पूजाङ्गम्। अशनाद्याहुतिविधिः, अशनादीति भिन्नपदम्। किं तदशनादि अन्नं, अन्नस्य ग्रासः तद्भोज्यमित्युच्यते। अपूपादिग्रासो भक्ष्यम्, मध्वादि लेह्यम्, दुग्धं पानम्, रसादिचोष्यम् एवं चतुर्विधमन्नस्वरूपम्। अशनमादिर्यस्य तदशनादि भोज्यादिचतुष्टयं यन्मयि वर्तते तव आहुतिर्भवतु। यत्तु 'सायं प्रातरत्ति तत्समिधम्' इति श्रुतेः। किञ्च मम संवेशः स्वेच्छा शयनं प्रणामो भवतु, तव साष्टाङ्गनमस्कारो भवतु। किं बहुना, यदेव मम सुखं यदखिलसुखसाधनव्यापारो वा तत्सर्वमात्मार्पणदशा नामधेयं पूजाङ्गं भवतु। आत्मार्पणदशया खलु पूजया समाप्तिः। अनन्तरानुबद्धतद्विद्यारम्भा आत्मार्पणदशा खलु परमेश्वर्याश्चरणारविन्दयोः सन्ततानन्दानुभवाय स्वात्मनो दासभूतस्य भक्तिप्रह्वस्य समर्पणम्, तमुपकरणत्वेन प्रक्षेपः। अत एव मम यद् यद् विलसितमस्ति तत् सर्वमपि तव सपर्यापर्यायो भवतु पूजारूपत्वेन परिणमतु ॥ २७ ॥

## गोपालसुन्दरी

**जपो जल्प** इति। यन्मे विलसितं तत्तव सपर्यापर्यायः पूजापरनामधेयो भवतु। विलसितमेवाह - जल्पः स्वच्छन्दभाषणं जपो भवतु। अशनादि भोजनादि तवाहुतिविधिः होमकर्म भवतु, संवेशः शयनं प्रणामो भवतु। अखिलं सुखं निद्रादिजन्यम् आत्मार्पणदशा भवत्वित्यर्थः ॥

**विष्णुपक्षे** अपि समानम् ॥ २७ ॥

## आनन्दलहरीटीका

इदानीं प्रार्थयते-**जप** इति। यत् मे मम विलसितं व्यापारः तत्सर्वं तव सपर्या पूजा तस्याः पर्यायः समानार्थकशब्दान्तरम्। तद्विषयो भवतु पूजानामको भवत्वित्यर्थः। तदेव दर्शयति-जल्पो यथेष्टभाषणं जपो मन्त्रादिजपरूपो भवतु। एवं सकलमपि शिल्पं कायिकव्यापारो मुद्राविरचना पूजांगमुद्राकरणं, गतिर्यथेष्टगमनं प्रादक्षिण्यक्रमणं प्रदक्षिणगमनं, चातुर्वर्ण्यादिवत् स्वार्थे तद्धितः। अन्नादिभोजनपानादिकं आहुतिविधिः होमविधानं, संवेशः शयनं प्रणामो दण्डवत्पतनं अखिलं समस्तं सुखं निद्रादि आत्मार्पणदशा आत्मसर्पणावस्था भवत्विति सर्वत्रान्वयः। क्वचित्पुस्तके ददाने दीनेभ्य इति पद्यमत्र दृश्यते। बहुषु पुस्तकेषु च चरणवर्णनान्ते नवतिपद्यानन्तरं दृश्यते इति तत्रैव व्याख्यास्यते ॥ २७ ॥

**सुधामप्यास्वाद्य [1]प्रतिभयजरामृत्युहरिणीं[2]**
**विपद्यन्ते विश्वे विधिशतमखाद्या दिविषदः।**

---

1. प्रतिभव    2. हरणीं

**करालं यत्क्ष्वेळं[3] कबळितवतः कालकलना**
**न शम्भोस्तन्मूलं[4] तव जननि ताटङ्कमहिमा ॥ २८ ॥**

ஸுதாமப்யாஸ்வாத்ய ப்ரதிபயஜராம்ருத்யுஹரிணீம்
4 1 3 1 14 1
விபத்யந்தே விஶ்வே விதிஶதமகாத்யா திவிஷதஃ,
13 1 4 1 2 3 3
கராளம் யத்க்ஷ்வேளம் கபளிதவத: காலகலனா
1 3 1 1 1 1
ந ஶம்போஸ்தன்மூலம் தவ ஜனனி தாடங்கமஹிமா.
4 1 1 11

भयद जरा मृत्यु विनाशक अमृत पीकर भी त्रिदिवेश्वर,
चतुरानन इन्द्रादि सभी विपदावश होते हैं दुर्भर ।
महिमा ही, पर, तेरे ताटंकों की, मैय्या! कारण है,
प्राणांतक विष खा कर भी शिव रहते अविचल अव्रण हैं! ॥

## लक्ष्मीधरा

सुधामिति 'विरिञ्चिः पञ्चत्वम्' इति श्लोकेन यदुक्तं तदेव सोपस्करमाह—सुधां अमृतम्, अपिः विरोधे, आस्वाद्य पीत्वा, प्रतिभयजरामृत्युहरिणीं प्रतिभयौ भयङ्करौ जरामृत्यू जरामरणे हरतीति प्रतिभयजरामृत्युहरिणी ताम् । विपद्यन्ते म्रियन्ते, विश्वे अखिलाः, विधिशतमखाद्याः विधिः ब्रह्मा, शतमखो देवेन्द्रः, तौ आद्यौ प्रभृतिभूतौ येषां ते, दिविषदः सुराः, करालं अत्युग्रं, यत् क्ष्वेळं विषं कालकूटं, कबळितवतः भक्षितवतः, कालकलना कालेन अवसानकालेन कलना अवच्छेदः, मरणमिति यावत्, न शम्भोः तन्मूलं तस्य कालकलनाभावस्य मूलं कारणं तव भवत्याः, जननि! हे मातः! ताटङ्कमहिमा ताटङ्कस्य कर्णाभरणस्य सामर्थ्यम् ॥

अत्रेत्थं पदयोजना—हे जननि! विश्वे विधिशतमखाद्याः दिविषदः प्रतिभयजरामृत्युहरिणीं सुधां आस्वाद्यापि विपद्यन्ते । करालं क्ष्वेळं कबळितवतः शम्भोः कालकलना नास्तीति यत् तन्मूलं तव ताटङ्कमहिमा ॥

अयं भावः—यदि शम्भोरपि विपत्तिस्स्यात् ताटङ्कच्युतिः तर्हि स्यात् । ताटङ्कच्यावकत्वं कालस्य नास्ति, कालोत्पत्तिस्थितिलयानां ताटङ्कैकनियतत्वादिति देव्याः पातिव्रत्यमहिमा सर्वातिशायी इति ॥ २८ ॥

## सौभाग्यवर्धनी

भक्तिविशेषमित्थमभिधाय परदेवतायाः कर्णभूषणमहिमख्यापनेनानश्वरं सौभाग्यं द्योतयति—

---

3. यत्क्ष्वेडं 4. शाम्भोः नूनं

**सुधामपीति ।** भयंकरजरामृत्युविनाशिनीं सुधामप्यास्वाद्य विपद्यन्ते विश्वे सर्वे विधिशतमखाद्याः देवताः । करालं गरलं भक्षितवतः शंभोः न कालकलना ; मृत्युर्व्याप्तिर्नास्तीति यावत् । तस्य मूलं, हे जननि ! तव ताटङ्कमहिमा । देवतासु ब्रह्मादिषु मृत्युहरणकारणमस्ति ; कार्यं नास्ति जरामृत्यु-राहित्यरूपम् । शिवे मृत्युभयं नास्ति, मृत्युकारणं विषभक्षणमस्तीति विशेषोक्तिविभावनालंकारौ व्यक्तौ । सुधामप्यास्वाद्य ते म्रियन्ते, गरलमप्यास्वाद्य न म्रियते शंभुरिति विरोधाभासः । साक्षात् तवैव ताटङ्कमहिम्ना विषं कबलितं अमृतं अभूत् , स्वयं च मृत्युंजयो जातः । किं ताटङ्कयुगलं गरुडोद्गारमणिविशेषघटितम् ; आहोस्विद् विषहरम् ; यत्र द्वयं नेति वितर्को व्यङ्ग्यः । अन्यासां देवस्त्रीणां सौभाग्यं नश्वरं, तव सौभाग्यमनश्वरं, प्रलयेऽपि न नश्यतीति, त्वया सह शिवस्याविनाभावः सार्वादिक इति पर्यवसितोऽर्थः ॥ २८ ॥

## अरुणामोदिनी

गङ्गास्रोतोन्यायेन विरिञ्चादीनाममृतास्वादनजन्यदीर्घायुष्मत्वं संभावयतां भ्रान्त्यपनोदनाय सोपस्करमाह—**सुधामिति ।** हे जननि ! मातर्देवि ! विधिशतमखाद्याः ब्रह्मेन्द्रप्रभृतयः, विश्वे ; समस्ताः ; दिविषदो देवाः, प्रतिभयौ भयंकरौ जरामृत्यू , विस्रसामरणे ; न ह्याभ्यामन्यद्भयंकरमस्तीत्यर्थः । सुधां समुद्रमथनोत्पन्नममृताख्यं द्रव्यविशेषमास्वाद्य निपीयापि विपद्यन्ते विषादं प्राप्नुवन्ति । ब्रह्मादि-कीटान्ताः सर्वे प्राणिनो विनाशिन एव ; अमृता दिवौकस इति त्वर्थवादमात्रम् । अस्मदपेक्षया किंचित्कालसंभावितजीवनादित्याचार्याः । करालमतिभयंकरं क्ष्वेलं विषाख्यं द्रव्यविशेषं, कबलितवतः ग्रासीकुर्वतः पिबतः ; येन नीलकण्ठ इत्यस्य प्रसिद्धिः । शंभोः शिवस्य, कालकलना मृत्यूपद्रवो नेति यतो नाभवदिति यदमृतपायिनो विनश्यन्ति, विषपायी न विनश्यतीति यत् तन्मूलं तस्य विषपायिनो विनाशे अमृतपायिनां तदभावे चावश्यंभाव्ये, विषपायिनोऽपि शिवस्य विनाशराहित्यस्य मूलं कारणं तव मृतसंजीवप्रदानसमर्थायाः भवत्यास्ताटङ्कस्य कर्णभूषणस्य महिमा सामर्थ्यं खलु । भवत्कर्णावतंसदा-र्ढ्यमेवैतदिति वाणीलक्ष्म्यादिपातिव्रत्याद्भवत्पातिव्रत्यं सर्वलोकातिशायीति भावः । ताटङ्कमाङ्गल्यसूत्रमिति केचित् । तच्च ; "ताटङ्कयुगलीभूततपनोडुपमण्डला" इति सहस्रनामवचनतात्पर्यशीलिनां धीसरणिं नाध्यारोहतीत्युपेक्ष्यम् । अत एव सुवासिन्या कदाचिदपि कर्णभूषणं न परित्याज्यमित्युपदेशः । उक्तं च रतिरहस्ये—"गतवति दयिते तु क्वापि माङ्गल्यमात्राण्युपचितगुरुविप्रा धारयेन्मण्डनानि ।" इति ॥ २८ ॥

## आनन्दगिरीया

**सुधामपीति ।** हे जननि, विधिशतमखाद्या दिविषदः, सुधामप्यास्वाद्य विपद्यन्ते । विधिर्ब्रह्मा, शतमख इन्द्रः, आदिशब्देन तदितरे विश्वे सर्वे दिवि सीदन्तीति दिविषदः ।

सुधाममृतं अमरणहेतुमपि आस्वाद्य पीत्वापि विपद्यन्ते प्रलयकालकवलतामापद्यन्ते। किंलक्षणां सुधां, प्रतिभयजरामृत्युहरिणीं महाभयंकरजरामृत्युविनाशिनीं। प्रतिभवेत्यपि पठन्ति, तदा प्रतिजन्मजरामरणविनाशिनीमिति। मरणाभावहेतौ सत्यपि म्रियते। अथवा हे विश्वे जागरूके, जाग्रदवस्थाभिमानिनि, त्वद्भर्तुः शंभोः श्रीमहादेवस्य वैपरीत्यमाह-करालमुग्रं नाममात्रेणपि मरणमूर्च्छाजनकं क्ष्वेडं विषं कवलितवतो भुक्तवतोऽपि यत्कालकलना नास्ति, कालस्य कलना व्याप्तिः जरामरणरूपा नास्ति शंभोः, तन्मूलं तस्य मूलकारणं स्वपौरुषादिकं नास्ति, किन्तु तवैव सौभाग्यप्रभाव इत्याह-तव ताटंकमहिमा। ताटंकं सुवर्णनिर्मितमणिमाणिक्यमुक्तावज्रवैडूर्यादियुक्तकर्णाभरणं तस्य महिमा एतादृशोऽस्ति। यत्कालत्रये कदापि कर्णवियोगं नार्हति। सदा सौभाग्यसूचकमेतत्। शचीसावित्रीप्रमुखानां तु ताटङ्कं कर्णाद्वियुज्यते, प्रलयकाले तासां वैधव्यात्। तेन आसां ताटङ्कस्य न कोऽपि महिमा। अत्र पूर्वार्धे विशेषोक्तिरलंकारः। अमृतपानरूपजीवनकारणोपन्यासे जीवरूपकार्याभावोपन्यासात्। "विशेषोक्तिरखण्डेषु कारणेषु फलावचः"। अत्रोत्तरार्धे विभावनालंकारः, व्यंग्यात् जीवनरूपकार्यकारणरूपा मृतस्य प्रतिषेधेऽपि जीवनरूपफलस्य प्रतिपादनात्। तदुक्तं "क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना"॥ इदानीं सुधामप्यास्वाद्येतिपद्यस्य रहस्यार्थः। शापविमोचिकामन्त्रोद्धारः—सुधामप्यास्वाद्य—सुधा प्रणवः, आस्वाद्य प्रथमं कृत्वा, प्रतिभयजरामृत्युहरिणीं लज्जा जुं सः इति, देवाः एतां कृत्वा विपद्यन्ते, पातकिनो भवन्ति साधका इति शेषः। शंभोस्तु तथा न नियमः। तव ताटंकमहिम्ना व्याप्तो निर्धूताखिलोत्तरकृत्यप्रवाहः अनेकविधसंसारप्रवाहकारकः, भवत्कृपाकटाक्षावलोकितानां साधकानां निर्वाणचरणांभोधिमग्नानां नेदं कृत्यमाह-ओं ह्रीं आं जूं सः। इति शापविमोचिका॥ २८॥

## तात्पर्यदीपिनी

हे जननि, परं विधिशतमखाद्या दिविषदः विपद्यन्ते। विधिश्च ब्रह्मा, शतमखश्चेन्द्रः तौ आदिर्येषां ते, दिवि सीदन्तीति दिविषदः, विपद्यन्ते महाप्रलये मृत्युं यान्ति। किं विधायापि, सुधाममृतं आस्वाद्यापि पीत्वापि। किंविधां सुरां, प्रतिभयजरामृत्युहरिणीं, जरा च मृत्युश्च जरामृत्यू प्रतिभयौ संमुखरूपौ यौ जरामृत्यू, तौ हरतीति या ताम्। इदं त्वतिविचित्रं उपलभ्यते। तदाह-हे जननि, शंभोः शिवस्य कालकलना न। कालेनग्रसनं न। तर्हि शंभुः सुधाविशेषभाग् भविष्यति ? नेत्याह। यत्करालं क्ष्वेडं कालकूटं कवलितवतः शंभोः कालकलना न। अत्र शंभोः कृतिर्न मूलम्। किन्तु हे जननि ! हे अंब तव ताटंकमहिमा मूलम्। तव ताटंकमहिम्ना असौ रक्षित इत्यर्थः॥ २८॥

## पदार्थचन्द्रिका

संप्रति पूर्वमुक्तमपि सदाशिवस्य कालाभयं पुनरपि प्रकारान्तरेण वदन् तत्र श्रीभवानीपातिव्रत्यमहिमानमेव कारणमाह - **सुधामिति** । हे जननि, शंभोः कालकलना न, सकलघस्मरेण कालेन कलनां ग्रसनं नैति यत्तन्नूनं तर्कयामि, तव ताटंकमहिमा, तव ताटंकमाहात्म्यनिबन्धनं कालाग्रसनमित्यर्थः । लांगलं मे जीवनमितिवदत्र सामानाधिकरण्यम् । तन्मूलमिति पाठे तस्य कालकलनस्य मूलं कारणमिति व्याख्येयम् । ननु कालस्यापि किञ्चिन्निमित्तपुरस्कारेण ग्रसनं, तदभावात् शंभोर्ग्रसनं न भविष्यतीत्यत आह-करालं जगद्भयानकं क्ष्वेडं विषं कवलितवतो भक्षितवतः । कालस्य घस्मरत्वमेवाह - सुधाममृतमास्वाद्य स्थिता अपि विधिशतमखाद्याः सर्वे दिविषदो देवा विपद्यन्ते म्रियन्ते कालेनेत्यर्थात् । सुधां विशिनष्टि - प्रतिभयं च जरा च मृत्युश्च तान्हरतीति तथा ताम् । प्रतिभयं शब्दादिभ्यो भयम् । नूनं ते निश्चिते तर्के स्मरणे वाक्यपूरणे इति मेदिनीकारः ॥ २८ ॥

## डिण्डिमभाष्यम्

एवमलौकिकपूजाविधानेन महापुरुषैः पूज्यमानाया मूलप्रकृतिभट्टारिकाया यस्तु स्वामी सन्ततसन्निहितः तस्य दीर्घायुष्यमपि तद्गुणसंसर्गमहिम्नैव सिद्धं भवति । अन्यथा निर्गुणस्य पुरुषस्य बहुकालव्यापि जीवनस्यापि गुणमध्ये प्रक्षेपात् तत्कृतत्वाद् गुणविलासस्य तत्कृतमेव भगवतश्चिरञ्जीवनम् इत्येतत्कथन्न प्रकाशयत इत्याशङ्क्याह—**सुधामिति** । हे परमेश्वरि ! प्रतिभयजरामृत्युहरिणीम् भयङ्करजरामृत्युशमनीम् । "भयङ्करं प्रतिभयम्" इत्यमरः । सुधां पीयूषमास्वाद्यापि विधिशतमखाद्या विधिर्ब्रह्मा शतमख इन्द्रः तावाद्यौ येषां ते विधिशतमखाद्याः दिविषदो देवाः विपद्यन्ते विपत्तिं प्राप्नुवन्ति । अण्डप्रलये तेषामपि निरोधात् । विश्वे सर्वे । देवानामपि मनुष्याणामिव स्वस्वकालावसाने मरणं सिद्धमेव । स्वामिनः शम्भोस्तु न तथा । किञ्च वैपरीत्येन करालं भयङ्करं तत्क्षणादेव जीवहरणं हालाहलाख्यं विषं क्ष्वेलं । "क्ष्वेलस्तु गरलम्" इत्यमरः । कवलितवतः भक्षितवतस्त्वत्स्वामिनः शम्भोः कालकलना नास्ति । कालो मृत्युः तस्य कलना व्याप्तिः । कलिवली कामधेनुः । कलना, "ण्यासश्रन्थो युजि"ति युच्, स्त्र्यधिकारे "अजाद्यतष्टाप्" । यदेतस्य तव स्वामिनो महादेवस्य विषं भक्षितवतो मृत्युविरहः, स तव ताटङ्कमहिमैव, ताटङ्को नाम कर्णाभरणविशेषः । देशे देशे स्त्रीणामवैधव्यसूचकः, विधवाभिर्न कदाचिदपि धारणीयः । विवाहकालादारभ्य भर्त्रा बद्धमामरणान्तं प्रसिद्धम् । एतच्च कर्णाटकदेशादौ ताटङ्करूपम् द्रविडदेशादौ माङ्गल्यसूत्रकम् । गौडदेशादौ शङ्खवलयसिन्दूरादिकं, पश्चिमदेशादौ वारकूटसौवर्णकङ्कणादि तेष्वेकं सधवाभरणं ताटङ्कमात्रोपात्तम् । हे जननि ! त्वया तादृक् ताटङ्काभरणं गृहीतम्, यत्प्रभावात् कदाचिदपि वैधव्योपश्लेषो नास्ति । सदैव सधवा त्वम् ॥२८

## गोपालसुन्दरी

**सुधामपीति ।** प्रतिभयं शस्त्रादिभयं जरा वार्धकं मृत्युं मरणं च हरत्येतादृशीं सुधामप्यास्वाद्य विधिशतमखाद्या ब्रह्ममहेन्द्राद्या विश्वे सर्वे दिविषदो देवा विपद्यन्ते म्रियन्ते, यत्पुनःकरालं भयानकं क्ष्वेडं समुद्रमथनोद्भूतं विषं कवलितवतो भक्षितवतः शम्भोः न कालेन मृत्युना कलनं ग्रसनं, कालस्य मृत्योः कलनं प्राप्तिर्वा, तन्मूलं तस्य कारणं, हे जननि ! तव ताटङ्कमहिमा कर्णालङ्कारप्रभावः । 'मूलम्' इत्यत्र 'नूनम्' इति क्वाचित्कः पाठः ॥

**विष्णुपक्षे**—जननं जन्म विद्यते यस्यासौ जननी, जन्मवान् तस्य भावो जनयिता, जन्मैव तस्य टङ्कः पाषाणदारकलौहशलकारूपमिति सम्बोधनम् , यच्छम्भोर्न कालकलना तत्तवैव महिमा-मूलमित्यर्थः ॥ २८ ॥

## आनन्दलहरीटीका

पूर्वं महासंहारे त्वत्पतिर्विहरतीत्युक्तम् । इदानीं तत्तव प्रभावादेवेति विशिष्य दर्शयति । **सुधेति ।** हे जननि ! सुधां अमृतं आस्वाद्य पीत्वा विश्वे सर्वे विधिशतमखाद्याः ब्रह्मेन्द्रादयो दिवि-षदो देवा विपद्यन्ते म्रियन्ते, प्रलय इति शेषः । सुधां कीदृशीं-प्रतिभयजरामृत्यूनां हरिणीं निवृत्तिकारिणीमित्यर्थः । प्रतिपक्षाद्भयं जरा वार्धकं, प्रतिभयौ भयंकरौ जरामृत्यू तद्धरिणीमिति वा । भयंकरं प्रतिभयमित्यमरः । हरणीमितीकारशून्यपाठे प्रतिभयादीनां हरणं यस्या हेतोरिति समासः । अन्यथा मत्वर्थे इनिः । करालं भयंकरं क्ष्वेडं विषं भक्षितवतः शंभोर्न यत्कालकलना मृत्युप्राप्तिः, तन्मूलं तस्य कारणं, तव ताटङ्कमहिमा कारणहेतुमतोरभेदः आयुर्घृतमितिवत् । क्ष्वेडं तु गरलं विषमित्यमरः ॥ २८ ॥

**किरीटं वैरिञ्चं[1] परिहर पुरः कैटभभिदः**
**कठोरे कोटीरे स्खलसि जहि जम्भारि[2]मकुटम् ।**
**प्रणम्रेष्वेतेषु प्रसभमुपयातस्य भवनं**
**भवस्याभ्युत्थाने तव परिजनोक्तिर्विजयते ॥ २९ ॥**

கிரீடம் வைரிஞ்சம் பரிஹர புர: கைடபபித:
1 1 1 1 1 1 1 4 4 3
கடோரே கோடீரே ஸ்கலஸி ஜஹி ஜம்பாரிமகுடம் ;
1 2 1 1 2 4 1 1
ப்ரணம்ரேஷ்வேதேஷு ப்ரஸபமுபயாதஸ்ய பவனம்
1 1 1 4 1 1 4
பவஸ்யாப்யுத்தானே தவ பரிஜனோக்திர் விஜயதே.
4 2 1 1 1 1 1

घर आये पति के स्वागत को जब तू आगे बढती है ;
परिजन तव मार्ग दिखाते है यह कहते, मां लसती हैं ?
लेटे ये दण्डवत आपके पथ में, सुर चरणार्थी हैं ।
यह ब्रह्मा मुकुट, विष्णु का कठिन किरीट फिसलना मत, .
मुकुट रहा इन्द्र का हटा लें इन्हें, कहीं टकराना मत ! ॥

## लक्ष्मीधरा

**किरीटमिति-किरीटं** मकुटं, वैरिञ्चं विरिञ्चिसम्बन्धि, परिहर दूरत एव कुरु, पुरः अग्रभागे । कैटभभिदः कैटभासुरं भिनत्तीति कैटभभित् तस्य विष्णोः, कठोरे कोटीरे मकुटाञ्चले, स्खलसि । अत्र काकुः अनुसन्धेया । जहि त्यज, जम्भारिमकुटं जम्भारेः इन्द्रस्य मकुटं किरीटम् । प्रणम्रेषु प्रकर्षेण दण्डवत् नतेषु, एतेषु विरिञ्चिकैटभजिज्जम्भारिषु, प्रसभं अतिशीघ्रं ससम्भ्रममित्यर्थः । उपयातस्य समागतस्य, भवनं मन्दिरं, भवस्य परमेश्वरस्य, अभ्युत्थाने अभिमुखोत्थितौ, तव परिजनोक्तिः सेवकानां वचनं, विजयते सर्वोत्कर्षेण वर्तते ॥

अत्रेत्थं पदयोजना—हे भगवति ! पुरः वैरिञ्चं किरीटं परिहर, कैटभभिदः कठोरे कोटीरे स्खलसि, जम्भारिमकुटं जहि, (इत्येवंरूपा) एतेषु प्रणम्रेषु सत्सु भवनमुपयातस्य भवस्य प्रसभं तवाभ्युत्थाने परिजनोक्तिर्विजयते ॥

अत्र उदात्तालङ्कारः 'समृद्धिमद्वस्तुवर्णनमुदात्तम्' इति लक्षणात् ॥ २९ ॥

## सौभाग्यवर्धनी

ताटङ्कमहिमानमुक्त्वा परदेवतायाः प्रभावमहिमानमाह **किरीटमिति** । पश्य मातः, अग्रे ब्रह्मा प्रणतोऽस्ति, भूयिष्ठमेतस्यमुकुटं परिहर त्यज । कठोरतरमुकुटाघातं तव चरणौ सुकुमारतरौ यतो न सहेते । कैटभभिदः कठोरे कोटीरे स्खलसि संभ्रमवशात्, न च भ्रान्ता सतीत्यर्थः । अतस्तदपि परिहरेति भावः । जहि जम्भारिमुकुटम् ; अत एव त्यज इति । प्रणतेषु देवेषु सत्सु प्रसभं हठात्, 'जगन्माता संप्रति देवगणैः सेव्यमाना वर्तते, नायमवसरस्तव,' इतिवदतो दौवारिकानधिक्षिप्य अभिमुखमागतस्य हरस्याभ्युत्थाने तव परिजनोक्तिर्विजयते सर्वोत्कर्षेण वर्तते ॥ २९ ॥

## अरुणामोदिनी

भगवत्या शिवे कृतमनुग्रहमेव प्रकटयति-**किरीटमिति** । हे देवि ! एतेषु; ब्रह्मादिषु, प्रणम्रेषु; साष्टाङ्गं दण्डवत्पतत्सु सत्सु, प्रसभं हठात्, भवनमुपयातस्य ; भवद्दर्शनार्थमकस्माद्भवनं प्रत्यागतस्य

1. वैरिञ्च्यं

भवस्य, भव: संसारोऽस्यास्तीति व्युत्पत्त्या भवत्यैव संसारित्वं प्रापितस्य शिवस्य; उक्तं च सकलजननीस्तवे—

" अनाद्यन्ताभेदप्रणयरसिकापि प्रणयिनी
[1]शिवस्थाभूर्यत्त्वं परिणयविधौ देवि गृहिणी।
सवित्री लोकानामपि यदुदभूः शैलतनया
तदेतत्संसारप्रणयनमहानाटकमुखम्॥ "

इति। तव भवस्य पत्नीभावं प्राप्ताया: पतिव्रताशिरोमणे: भवत्या अभ्युत्थाने अभ्युद्गमने, अभिमुखागमनवेलायामित्यर्थ:। पुरोऽग्रे विरिञ्चस्येदं वैरिञ्चं ब्रह्मसंबन्धि, किरीटं परिहर दूरत: कुरु। तथा कैटभमसुरं भिनत्तीति, तस्य विष्णो:, अस्पृश्यस्येति ध्वनि:। कठोरे परुषे शिलावन्मार्गस्थित्यनर्ह इति भाव:। कोटीरे किरीटे स्खलसि। अतिभक्तस्यास्य किरीटं निस्सार्यं वा न वेति विचारयसि। न विचारयितव्यम्; तदपि दूरीकुर्वितिभाव:। जम्भारेरिन्द्रस्य मुकुटमपि जहि त्यज; तदपि दूरीकुर्वित्यर्थ:। इत्येवंरूपेण परिजनस्योक्ति: सेवकजनपरस्परालापकोलाहलो विजयते सर्वोत्कर्षेण वर्तते। अतस्त्वदन्ये देवा: निरन्तरं भवत्प्रसादाकाङ्क्षया पादपङ्कजाग्रे प्रणन्तारो वर्तन्ते। न त्वन्येषां भवती प्रणन्त्री। शिवस्य तावत् त्वत्कृतजायाभावतोऽनुग्रहात्सर्वदेवतोत्तमत्वं भवदभ्यर्चनीयत्वं च संपन्नमिति देव्या: सर्वोत्तमत्वं सूचितम्। उदात्तालंकारेण महाराजवृत्तान्तप्रतीतेरलंकारेण वस्तुध्वनि:॥ २९॥

## आनन्दगिरीया

अथ परमेश्वर्या अन्यानन्तागमोक्तमैश्वर्यमाह - इदानीं सुधामप्यास्वाद्येत्यादिना ब्रह्मादीनामपि कालपराभव: प्रतिपादित:, तथा च कालाद्भीतेषु ब्रह्मादिषु नित्याममृतेश्वरीं त्वामाराधयितुमागत्य चरणपीठाग्रे दण्डवत्पतनेन लुठत्सु सत्सु, महादेवोऽपि स्वाधीनपतिकां त्वां द्रष्टुमागत इति, त्वं कुलीना भर्तृभक्तिपरायणेत्यस्मात् श्रीमहादेव आगते, तांबूलासनादिना श्रीमहादेवं पूजयितुं सहसोत्थाय गच्छन्त्यां त्वयि वेत्रधार्यादिवशिन्यादिपरिचारिकावर्गाणां विनयोक्तय: कथ्यन्ते - **किरीटमिति**। हे भुवनेश्वरि, भुवनानामीश्वरि भट्टारिके, पुरोऽग्रे, अमरमण्डलमौलिमाणिक्यशलाकया तव शिरीषकुसुमप्रायसुकुमारतरचरणक्षतिर्मा भूदिति सावधानतया गन्तव्यमिति तव परिजनोक्तिर्विजयते सर्वोत्कर्षेण वर्तते। परिजनोक्तिमाह - वैरिञ्चं किरीटं पुरो वर्तमानं परिहर। विरिञ्चेरिदं वैरिञ्चम्। कैटभभिद: श्रीकृष्णस्य कठोरे कोटीरे विविधवज्रघटिते मुकुटे स्खलिष्यसि। जंभारेरिन्द्रस्यापि मुकुटं जहि, लक्षणया तदपि त्यज। तत्परिहृत्य वामतो दक्षिणतो वा गन्तव्यम्। ननु पुरस्तेषां मुकुटा: कथं पतिता इत्यत आह - प्रणम्रेषु प्रकर्षेण दण्डाकारतया नम्रेषु सत्सु, एतादृशी परिजनोक्ति: कदा

---

1. शिवस्यासीर्यत्त्वम्

जातेत्यत आह - हरस्याभ्युत्थानेति । किंलक्षणस्य हरस्य, प्रसभं बलात्, भवनमभियातस्य । अयमर्थः—ब्रह्मादिसेवासमये समागते श्रीमहादेवे, देवैः सेव्यमाना भगवती भुवनेश्वरी, तल्लालन-पालनवरदानादिना व्यग्रा स्त्रीति, नायमवसरस्तवेति, प्रतिहारगणैरुच्यमानो भगवान्भर्गः प्राणेश्वरी दर्शनलालसवशंवदस्तानधिक्षिप्य बलादागत इति दृष्ट्वा प्राणेश्वरपरिचर्यार्थं गच्छन्त्यास्तस्या एव परिजनो-क्तिरिति ॥ किरीटं वैरिञ्चमित्यादि - श्लोकस्यातिरहस्यार्थोद्धारः - त्वदन्या त्वदधिका देवता न काचिदिति परमेश्वरता देवानां तव चरणानतिसमये किरीटपतनेन देव्याः पदैकशरणा यातु किरीटकोटिरिति तैरुक्तैव । परिजनाः तन्नतिं निवेदयन्तः स्वयं पूजयन्तो वाग्भिरमृतोक्तिभिः जयन्तीति भावः । जननि, तवैश्वर्यं केन वर्ण्यते । अनन्तकोटिकात्यायनीनां नायिकेत्याह ॥ २९ ॥

## तात्पर्यदीपिनी

हे जननि, तव शिवस्य अभ्युत्थाने परिजनोक्तिर्विजयते । परिजनानां दासीनामुक्तिर्विजयते सर्वोत्कर्षेण वर्तते । भक्तदरितापूर्वो नीलिनीति यावत् । कथंभूतस्य शिवस्य, भवनं गृहमभि सम्मुखं यातस्य, प्रत्यागतस्य, केषु सत्सु, एतेषु ब्रह्मविष्णुरुद्रेषु प्रसभं अन्योन्यसंघर्षेण प्रणम्रेषु सत्सु । इतीति किं परिजनोक्तिः-हे देवि, अतः वैरिञ्चं किरीटं परिहर । विरिञ्चेरयं वैरिञ्चः, तं, अतः कुतः, यतः सहसोत्थाने पुरः स्खलसि । किरीटपरिहारेण पादकमलदानं विधीयतामित्यर्थः । पुनः कैटभभिदः हरेः कठोरे कोटीरे मुकुटे स्खलसि । दैत्यमहाघातैरनम्रे कोटीरे मुकुटाञ्चले । अत एनमपि परिहर । पुनर्जंभारिमकुटं जहि । जंभस्यारिरिन्द्रः, तस्य मुकुटः, तं परिहर जहि । एते त्वच्चरणाराधनतत्पराः नोत्थास्यन्ति । अत्र लयं प्राप्ता भवन्तु । शिवस्यार्थे भवान्या अभ्युत्थानं भवति । अत एव पेशल-चरणस्खलनं मास्त्वित्यर्थः ॥ २९ ॥

## पदार्थचन्द्रिका

अथ भवानीविषयां परिजनोक्तिचातुरीमाह - हे जननि, भवस्य तवाभ्युत्थाने तव परि-जनोक्तिर्विजयते इत्यन्वयः । भवकर्मक - त्वत्कर्तृकेऽभ्युत्थाने इत्यर्थः । तवेति काकाक्षिगोलक-न्यायेनोभयत्र संबध्यते । एते विरिञ्च्यादिषु प्रणतेषु सत्सु परिजनोक्तिचातुरीमेवाह—किरीटं वैरिञ्चं विरिञ्चिसंबन्धि परिहर वारय । कठोरे कर्कशे कोटीरे किरीटे स्खलसि स्खलिष्यसि । वर्तमानसामीप्ये वर्तमानवद्वेति भविष्यदर्थे लट् । जहि त्यज त्यागलक्षणोऽत्र हन्तिः । अनेकार्थत्वाद्धातूनां त्यागार्थो वा हन्तिः । प्रसभं हठात् । भवनं अभियातस्य गतस्येति भवविशेषणम् । मण्डनं चाथ मुकुटं किरीटं पुन्नपुंसकमित्यमरः ॥ २९ ॥

## डिण्डिमभाष्यम्

यत एवम् अनादिनिधनौ अपर्यन्तजीवनकालौ अन्योन्यमविरहितौ युवां परमशिवाख्यातौ

ततस्तयोर्युवयोरर्वाक्कालजनिततया पुत्रप्राया विरिञ्च्यादयः सकललोकमातरं त्वां नन्तुमष्टाङ्गस्पृष्टभूतला दण्डवद्भूमौ पतिताः सन्तो वर्तन्ते यदा, तस्मिन्नवसरे भगवाँश्चन्द्रशेखरोऽपि त्वल्लीलाभवनमागतस्त-दभ्युत्थानाय त्वरितया भगवत्या भवनान्निर्गते जयाविजयादिपरिजनवर्गस्य आलोकशब्दप्रकारं वर्णयति—**किरीटमित्यादि।** वैरिञ्चं विरिञ्चिसम्बन्धि किरीटं मुकुटं परिहर तत्र तव चरणस्यापि मृदुलस्य संवलने सम्पर्के वेदना भवतीति अभिप्रायः। किञ्च कैटभभिदो महाविष्णोः कठोरे किरीटे पुरः स्खलसि अग्रे पदविन्यासवैषम्यमनुभवसि। अथ च जम्भारिमुकुटम्, इन्द्रस्य किरीटम् जहि त्यज इत्यर्थः। जहि इत्येतद्रूपं हन्तेरेव लोण्मध्यमपुरुषस्यैकवचनम् न जहातेः। अत्रार्थे जहातेरेवापेक्षितः, जहाते रूपन्तु जहाहि, जहीहि, जहिहि, इति त्रेधा सम्भवति तर्हि अत्र जहीति कथमिति चेत्-अत्र पाठान्तरमन्वेषणीयम् "विजहीहीन्द्रमुकुटम्" इति। अथवा यथान्यासमेवास्तु अनेकार्थत्वाद्धा-तूनाम् हन्तेरेव जहात्यर्थं कल्पयाम इत्येवंरूपा परिजनोक्तिः। एतेषु विरिञ्च्यादिषु प्रणतेषु प्रसभं तव भवनमभियातस्य भवस्याभ्युत्थाने प्रवर्तना विजयते सर्वोत्कर्षेण वर्तते। अत एव युवयोर्नमस्कार-कर्तारो विरिञ्च्यादयः सर्वे देवाः। नतु कदापि कुत्रापि युवां देवान्तरस्य प्रणतारौ युवयोरन्योन्यस्य प्रणयकलहादौ नमस्कार्यं नमस्कर्तृत्वं साधारणम्॥ २९॥

## गोपालसुन्दरी

**किरीटमिति।** वैरिञ्चं ब्रह्मसम्बन्धिनं किरीटं मुकुटं जहि त्यज, जहात्यर्थकहन्तेर्लोट् मध्यम-पुरुषैकवचनप्रयोगोऽयम्, धातूनामनेकार्थत्वात्। यद्वा हन् धातोर्गमनार्थकर्तृकस्य जहि गमय अन्यथा प्रेरयेत्यर्थः। एतेषु ब्रह्मादि प्रणामेषु सत्सु प्रसभं हठात् भवनं स्वगृहमागतस्य भवस्य शिवस्याभ्युत्थाने सति तव परिजनानां जयाविजयादीनां सखीनामुक्तिर्विजयते इत्यर्थः।

**विष्णुपक्षे**—तस्य तव अभ्युत्थाने शयनादुत्थानकाले अभिया भीतिव्यतिरेकेण परिजनानां जयविजयादीनां उक्तिर्विजयते। तव कीदृशस्य? जगदुत्पत्तिहेतोः, पुनः कीदृशस्य? कैटभभिदः कठिनश्चासौ इ कोटीरः कन्दर्पकिरीटस्तस्मिन् भवस्य कठोरे कोटीर इत्यन्वयः। यद्वा त्वद्गृहसमागतस्य महेशस्यैवाभ्युत्थाने इत्यर्थः॥ २९॥

## आनन्दलहरीटीका

त्वं सर्वदेववन्द्येति दर्शयति **किरीटमिति।** एतेषु ब्रह्मादिषु प्रणम्रेषु सत्सु प्रसभं हठात् विज्ञापनं विनैवेति यावत्। भवनं त्वदीयमन्दिरमभियातस्य प्रविष्टस्य भवस्य शिवस्याभ्युत्थाने सति, त्वत्कृते इति शेषः। त्वयि तस्य सम्मानार्थं अग्रतश्चलन्त्यां सत्यामित्यर्थः। तव परिजनानां पार्श्वस्थ-सखीनामियमुक्तिर्विजयते। उक्तिमेवाह—वैरिञ्चं ब्रह्मसंबन्धि किरीटं मुकुटं पुरोऽग्रे परिहर, यथा तत्र चरणाघातो न लगति। तथा कैटभभिदो विष्णोः कठोरे पाषाणमयरत्नादिघटितत्वादतिकठिने

कोटीरे मुकुटे स्खलसि पतसि। जंभारेरिन्द्रस्य मुकुटं जहि त्यज। धातूनामनेकार्थत्वादत्र त्यागार्थत्वात्। अथवा हन हिंसागत्योरितिस्मरणात् गमनार्थकोऽत्र हनधातुः। सर्वे गत्यर्था ज्ञानार्था इति न्यायात् जहि जानीहि पश्येत्यर्थः ॥ २९ ॥

**स्वदेहोद्भूताभिर्घृणिभिरणिमाद्याभिरभितो**
**[1]निषेव्ये नित्ये त्वामहमिति सदा भावयति यः।**
**किमाश्चर्यं तस्य त्रिनयनसमृद्धिं तृणयतो**
**महासंवर्ताग्निर्विरचयति नीराजनविधिम् ॥ ३० ॥**

ஸ்வதேஹோத் பூதா பிர்க்ருணிபிரணிமாத்யாபிரபித:
3 3 4 1 4 4 4 4 4 1
நிஷேவ்யே நித்யே த்வாமஹமிதி ஸதா பாவயதிய: ;
1 1 1 3 4
கிமாஶ்சர்யம் தஸ்ய த்ரிநயனஸம்ருத்திம் த்ருணயத:
1 1 1 3 4 1
மஹாஸம்வர்தாக்னிர் விரசயதி நீராஜனவிதிம்.
1 3 1 1 4

चरण-युगल से छूटी दिव्य छटा से संशोभित पावन
अणिमा आदि शक्तियों से परिवेष्टित तेरे मनभावन,
दिव्यरूप का सेवन सदा करूँगा ऐसा जो मानव
चिंतन करता रहता है, वह त्रिनयन शिव का यदि वैभव,
तृण सा गिनता है, औ करता यदि प्रलयानल नीराजन-
उत्का, तो नित्ये! क्या है विस्मय? बनता वह, मुक्त-सुजन! ॥

## लक्ष्मीधरा

स्वदेहेति। स्वस्याः देहः स्वदेहः तस्मादुद्भूताभिः। अत्र देहशब्दो देहावयवं चरणं लक्षयति। घृणिभिः मयूखैः मयूखानां चरणोद्भवत्वमुक्तं प्राक्। अणिमाद्याभिः अणिमागरिमेत्यादिभिः अष्टसिद्धिभिः, अभितः आवरणत्वेन अवस्थिताभिः[2] युक्तामिति शेषः। निषेव्ये! संसेव्ये! नित्ये! आद्यन्तरहिते! त्वामेतादृशीम्, अहमिति अहम्भावनया, सदा सर्वकालं, भावयति ध्यानं करोति, यः साधकः, किमाश्चर्यं नास्त्याश्चर्यं, तस्य साधकस्य, त्रिनयनसमृद्धिं त्रीणि नयनानि मार्गाः [3]प्रापकाः सूर्यचन्द्राग्निरूपाः यस्य दर्शनायेति स त्रिनयनः। यद्वा—इडापिङ्गलासुषुम्नामार्गाः त्रयः तद्दर्शने उपाया इति त्रिनयनः सदाशिवः। यद्वा—त्रीणि नयनानि चक्षूंषि यस्य सः त्रिनयनः।

---

1. निषेव्यां, निषेवे 2. नित्याभिः त्रिपुरसुन्दर्यादिभिः 3. प्रकाराः

क्षुभ्नादित्वात् णत्वाभावः। तस्य समृद्धिं ऐश्वर्यं तृणयतः तृणीकुर्वतः, महासंवर्ताग्निः प्रळय-कालाग्निः विरचयति करोति। नीराजनविधिं नीराजनानुष्ठानम्। [1]तस्य नीराजनक्रियाया-मवस्थितः प्रळयाग्निरपीत्यर्थः॥

अत्रेत्थं पदयोजना—हे नित्ये। निषेव्ये! स्वदेहोद्भूताभिः घृणिभिः अणिमाद्याभिः अभितोऽवस्थिताभिः[2] परिवृतां त्वां यः साधकः अहमिति सदा भावयति, त्रिनयनसमृद्धिं तृणयतः तस्य महासंवर्ताग्निः नीराजनविधिं विरचयतीत्यत्र किमाश्चर्यम्?

अयं भावः—अहमिति भावनया तादात्म्यसिद्धौ भगवत्याः तन्नीराजनविधिराश्चर्यकरो न भवतीति॥ ३०॥

## सौभाग्यवर्धनी

श्रीदेव्याः शरीरकान्तिमुत्प्रेक्षते-**स्वदेहेति**। स्वदेहोद्भूताभिः स्वदेहोद्भूता उत्पन्नाः याः कान्तयः ता एव घृणयः किरणाः तैः अणिमाद्याभिः अणिमाप्रभृतिभिः आवरणदेवताभिः निषेव्यां सेव्यमानां त्वां अहमिति अभेदेन यः भावयति तस्य त्रिनयनसमृद्धिं कर्तुं अप्रतिहतेच्छारूपां कर्तुमन्यथा समर्थतां तृणयतः तृणीकुर्वतः महासंवर्ताग्निः महाप्रलयाग्निः नीराजनविधिं विरचयति। किमाश्चर्यम्? एतादृश्या अभेदभावनया त्वत्सारूप्यं प्राप्तवतः पश्चात्परमानन्दनिर्भरसंविदुल्लासलक्षणं त्वत्सायुज्यं लब्धवतः महाप्रलयाग्निः नीराजनविधिं मंगलदीपावलिपरिभ्रमं विरचयति इति किमद्भुतं। प्रलयानलोऽपि त्वद्वशवर्ती विजृम्भत इति भावः। तदुक्तं कादिमते। "त्वद्देहोत्थिततेजोभिः किरणैरणिमादिभिः। आवृतां त्वामहमिति भावयन् त्वत्समो भवेत्" इति। तथा च भगवान् दत्तात्रेयः—"अरुणां करुणा-तरंगिताक्षीं धृतपाशांकुशपुष्पबाणचापाम्। अणिमादिभिरावृतां मयूखैः अहमित्येव विभावये भवानीम्॥" इति॥ ३०॥

## अरुणामोदिनी

तादात्म्यध्यायिनः फलमाह—**स्वदेहेति**। नित्या आद्यन्तराहित्येन ध्रुवा, तस्याः संबुद्धिः; हे नित्ये! षोडशनित्यारूपिणि! "त्यप् नेर्ध्रुवे" इतित्यप्। तथा स्वस्य देहाच्छरीरादुद्भूताभिः उत्पन्नाभिः, यद्वा-स्वस्य देहरूपे यन्त्रे प्रादुर्भूताभिरिति वा। प्रथमद्वितीयतृतीयचतुरश्रेषु संस्थिताभिः अणिमा आद्या प्राथमिका यासां ताभिः, अणिमाप्रभृतिभिः, घृणिभिः प्रकाशमानतया घृणिशब्दवाच्याभिः, प्रथमचतुरश्र-वर्तिनीभिः अणिमालघिमामहिमावशित्वेशित्वप्राकाम्यप्राप्तिसर्वकामप्रदायिनीभिः सिद्धिभिः; तथा द्वितीय-चतुरश्रवर्तिनीभिः ब्राह्मीमाहेश्वरीकौमारीवैष्णवीवाराहीमाहेन्द्रीचामुण्डामहालक्ष्मीभिः मातृभिः, तथा

---

1. तस्याम् 2. नित्याभिश्च

तृतीयचतुरश्रवर्तिनीभिः सर्वसंक्षोभिणी, सर्वविद्राविणी, सर्वाकर्षिणी, सर्ववशंकरी, सर्वोन्मादिनी, सर्वमहाङ्कुशा-सर्वखेचरी-सर्वबीज-सर्वयोनि-सर्वत्रिखण्डाख्याभिः मुद्राभिः; तथा षोडशदल-संस्थिताभिः कामबुद्ध्यहंकारशब्दस्पर्शरूपरसगन्धचित्तधैर्यस्मृतिनामबीजात्मामृतशरीराकर्षिणीभिश्च अन्याभिश्च नित्यापदसंगृहीताभिः; त्रिपुरसुन्दरी, कामेश्वरी, भगमालिनी, नित्यक्लिन्ना, भेरुण्डा, वह्निवासिनी, महावज्रेश्वरी, शिवदूती, त्वरिता, कुलसुन्दरी, नित्या, नीलपताका, विजया, सर्वमङ्गला, ज्वालामालिनी, चित्राख्याभिः षोडशनित्याभिश्च, नितरां सेव्या निषेव्या। तस्याः संबुद्धिः, हे निषेव्ये! सेवितुं अर्हे भगवति, यः साधकः त्वां भवतीं अहमात्मेति सदा भावयति नित्यं तादात्म्यभावनां करोति, त्रिनयनस्य भवद्भक्तस्य सदाशिवस्य समृद्धिं सकलदेवताराध्यत्वादिमहदैश्वर्यम्; यद्वा—सर्वज्ञत्वादिषडङ्गयुक्तत्वमणिमाद्यैश्वर्यवत्त्वं वा तृणयतः तृणीकुर्वतः, भवत्प्रसादावाप्ततादृशैश्वर्यवत्त्वेन तुच्छीकुर्वतः, तस्याणिमादिसेव्यां भवतीं निध्यातुरुपासकस्य, महासंवर्ताग्निः; कल्पान्तवह्निः, नीराजनस्यारात्रिकस्य विधिं विधानं रचयति विधत्ते। अत्रार्थे किमाश्चर्यम्? इदमत्यद्भुतं न इत्यर्थः। अतिभक्तवत्सलायाः भवत्याः तादात्म्यभावनासमवाप्तसमृद्ध्या शिवेन सह स्पर्धितारं तमुपासितारं सकललोकदहनशीलज्वालाः कल्पान्तानला अपि किमपि कर्तुं अशक्नुवन्तः शिवस्येव तस्यापि नीराजनां विधाय कृतार्थीभवन्तीत्येतन्नाश्चर्यकरमिति अभिप्रायः। भावकस्य तादात्म्यं ददासीति परमार्थः।

> "कर्तापि सर्वलोकानामक्षय्यैश्वर्यवानपि।
> शिवः शिवोऽहमस्मीति वादिनं यं च कंचन।
> आत्मना सह तादात्म्यभागिनं कुरुते भृशम्॥"

इति शिवगीतावचनादिति भावः॥ ३०॥

## आनन्दगिरीया

**स्वदेहोद्भूताभिरिति।** हे परमेश्वरि, यस्त्वामहमित्यहमाकारेणाभेदभावनया भावयति चिन्तयति, तस्य संवर्ताग्निः महाप्रलयाग्निः नीराजनविधिं विरचयति। किमाश्चर्यम्? नीराजनविधिं मंगलदीपावलीवलयत्रयविभ्रमं करोतीति किं चित्रम्? किंलक्षणस्य तस्य, त्रिनयनसमृद्धिं तृणयतः, त्रिनयनस्य समृद्धिं सामर्थ्यं तृणयतो लघूकुर्वतः। किंलक्षणां त्वां, अणिमाद्याभिः सिद्धिभिरभितो निषेव्यां सेव्यमानां, किंभूताभिः अणिमाद्याभिः, स्वदेहोद्भूताभिर्घृणिभिः, स्वदेहादुद्भूताभिः घृणिभिरावरणदेवताभिरित्यर्थः। एतावता अभेदोपासनया परमानन्दात्मनस्तव सायुज्यं प्राप्तवतः प्रलयाग्निरपि मंगलदीपतुल्यो भवति इति। तदुक्तं - "त्वद्देहस्थिततेजोभिः किरणैरणिमादिभिः। आवृतां त्वामहं वन्दे।" एवं यो भावयति स त्वन्मयो भवतीति। दत्तात्रेयोऽपि "अरुणां

करुणातरंगिताक्षीं धृतपाशांकुशपुष्पबाणचापाम् । अणिमादिभिरावृतां मयूखैरहमित्येव विभावये भवानीम्'' इति ॥ ३० ॥

## तात्पर्यदीपिनी

**स्वदेहेति**—हे नित्ये सदा वर्तमाने, हे निषेव्ये सेवितुं योग्ये, महासंवर्ताग्निः महासंवर्ते महाप्रलये योऽग्निः, स तस्य तस्य पुरुषस्य नीराजनविधिं नीराजनानुष्ठानं विरचयति इत्यत्र किमाश्चर्यं, न किञ्चिदपीत्यर्थः। किंभूतस्य तस्य; त्रिनयनस्य समृद्धिं ऐश्वर्यं तृणयतः तुच्छीकुर्वतः तस्य, कस्य, यः साधकः त्वामहमिति अहंभावनया सदा सर्वकालं भावयति, ध्यानं करोति। किंविधां त्वां, अणिमाद्याभिः, अणिमा आद्या यासां ताभिः अष्टसिद्धिभिः, घृणिभिः मयूखतुल्याभिः, स्वस्या भगवत्या देहः, तस्मादुद्भूताभिः उत्पन्नाभिः। अत्र देहशब्दो देहावयवं चरणं लक्षयति। मयूखानां चरणोद्भवत्वं प्रागुक्तम्। अयं भावः। अहमिति भावनया तादात्म्यसिद्धौ भगवत्या नीराजनविधिराश्चर्यकरो न भवतीति ॥ ३० ॥

## पदार्थचन्द्रिका

अथ भवानीध्यानं मोक्षफलकमिति दर्शयन् भवानीं स्तौति—**स्वदेहेति**। हे नित्ये घृणिभिः किरणरूपाभिरणिमाद्याभिः सह त्वां निषेवे इति यः सदा भावयति चिन्तयति, त्रिनयनसमृद्धिं तृणयतः तृणवन्मन्यमानस्य महासंवर्ताग्निः नीराजनविधिं विरचयतीति किमाश्चर्यमित्यन्वयः। एतेन निरन्तरं भवानीध्यानेन ब्रह्मस्वरूपसंपत्त्या जगत्पूज्यो भवतीति सूचितं भवति ॥ ३० ॥

## डिण्डिमभाष्यम्

**स्वदेहोद्भूताभिर्घृणिभिः**, स्वस्य देहः स्वदेहः श्रीललितामहाभट्टारिकाया जगन्मङ्गलभूतसर्वदेवोत्पत्तिस्थानं श्रीमच्छरीरं तदुद्भूताभिरणिमाद्याभिश्चक्रसिंहासनस्थितबाह्यचतुरस्रादिस्थानवर्तिनीभिः देवताभिः किञ्च घृणिभिः चलयागपूजनयोग्याभिरङ्गरूपोपादानयोग्याभिः मरीचिभिश्च, पूजा खलु चक्रसिंहासने भगवत्याः क्रियमाणा द्विप्रकारा भवति - लयाङ्गा भोगाङ्गा चेति। लयाङ्गा तु - स्थानविरहितानां चक्रसिंहासने परचिद्गणवर्तिनीनां भगवत्याः शरीरे भासमानानां देवतानां च पूजारूपा। भोगाङ्गा तु - चक्रसिंहासने भिन्नभिन्नेषु स्थानेषु वर्तमानानामणिमादिदेवतानां पूजारूपा। तस्माद् घृणयो रश्मयस्तु लयाङ्गरूपाः अणिमादयस्तु भोगाङ्गरूपाः घृणिभिश्च अणिमादिभिश्च द्विप्रकाराभिः देवताभिः सेव्ये निषेव्ये नित्ये सर्वकालमविनाशरूपे त्वां भगवतीमहमिति सदा यो भावयति तस्य परमयोगिनः किमाश्चर्यभूतं किमपि नास्ति लोके यद्भूतभूतं तत्सर्वं तस्य स्वभाव इत्यवधारणीयम्। तत्कुत इति चेत्तत्र हेतुमाह - त्रिनयनसमृद्धिं महादेवस्यैश्वर्यं; तच्च बहुप्रकारमष्टमूर्तिभिः जगद्व्याप्यावस्थानं, सकललोकसंहारेऽपि निरपायित्वं, पितृकाननस्थानतद्भस्मलेपनब्रह्मकपालधारणादिभिरपि सदा

पवित्रत्वं, दिगम्बरत्वेऽपि सदा पूज्यत्वं, कामिनीरूपवामाङ्गत्वेऽपि परमयोगित्वं, सकललोकसंहारक-कालकूटविषगिलनेऽपि मृत्युञ्जयत्वं, ज्ञानवैराग्यैश्वर्यतपःसत्यक्षमापतिवशित्वमात्मानन्दबोधसर्वभूता-धिष्ठातृत्वाख्यदशसङ्ख्याव्ययधर्मविशेषकत्वं, सर्वज्ञत्वनित्यतृप्तत्वानादिबोधत्वस्वतन्त्रत्वालुप्तशक्तित्वानन्त-शक्तित्वाख्यषड्विधस्वाभाविकैश्वर्ययुक्तत्वमणिमादिसिद्ध्यैश्वर्ययुक्तत्वमित्यनन्तप्रकाशं तेषु तेषु आगम-ग्रन्थेषु गुरुशिष्यपरम्परया प्रकाशिता समृद्धिर्या सर्वत्र प्रख्याता, तां महादेवस्य समृद्धिं तृणयतः तृणीकुर्वतः अल्पबुद्ध्या परिभवतः तव भक्तस्य महासंवर्ताग्निः कल्पान्तपावको नीराजनविधिमारार्तिक-विधिं विरचयति। एतदुक्तं भवति - अणिमादिभिः समृद्धिभिश्च सह त्वामात्मबुद्ध्या चिन्तयतस्तव भक्तस्य सर्वदेवोत्तमेन सह स्पर्द्धमानस्य युगान्तप्रलयोऽपि किमपि कर्तुं न प्रभवति, अदाह्यत्वात्तस्य शस्त्रादिभिरप्यच्छेद्यत्वं तस्य कल्पान्तवायुभिरप्यशोष्यत्वं प्रलयकाले सप्तसमुद्राणामेकार्णवीभावेना-प्यक्लेद्यत्वं तव भक्तस्य स्वभावसिद्धम्। तथोक्तं गीतायाम्- "अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च। नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥" इति। किञ्च स्वदेहोद्भूताभिः इत्ययं श्लोकः सौभाग्यहृदयाख्यस्य पञ्चदशमालामन्त्रमण्डलस्य ध्यानश्लोक इति वदन्ति परममाहेश्वराचार्याः। तासां पञ्चदशमालानां पञ्चदशाक्षरमहामन्त्रस्य एकैकवर्णोद्भूतानां स्वरूपं ललितापरिशिष्टाख्ये महातन्त्रे कथितं, तत्सर्वमपि साङ्गमत्र विभज्यते। तथा चोक्तं तत्रैव ग्रन्थे - 'मालामन्त्रं प्रवक्ष्यामि महाराज्ञी-महोदयं। ? शिखा देविपदं प्रोच्य कवचं देविशब्दतः ॥ नेत्रदेव्यस्त्रदेवीति कामेश्वरि भगेति च। मालिनीति पदं नित्यक्लिन्ने पदमुदीरयेत् ॥ भेरुण्डे वह्निवा शब्दात् सिनिशब्दो महापदं। वज्रेश्वरि शिवदूति त्वरिते कुलसुन्दरि ॥ नित्ये नीलपताके च विजये सर्वमङ्गले। ज्वालामालिनि चित्रे च महानित्ये पदं ततः ॥ परमेश्वरशब्दात्तु परमेश्वरि कीर्तयेत्। मित्रेशमयि षष्ठीशमय्युड्डीशमयीति च ॥ चर्यानाथमयी प्रोच्य लोपामुद्रामयीति च। अगस्त्यमयिशब्दान्ते कालतापनमय्यथ ॥ धर्माचार्य-मयीत्युक्त्वा मुक्तकेशीश्वरान्मयि। तथा दीपकलानाथमयिशब्दं च कीर्तयेत् ॥ विष्णुदेवमयि प्रोच्य प्रभाकरपदात् पुनः। देवशब्दान्मयि पदं पदं तेजोमयीति च ॥ मनोजदेवमयि च कल्याण देवशब्दतः। मयि रत्नदेवमयि वासुदेवमयीति च ॥ श्रीरामानन्दमयि चाणिमासिद्धिपदं वदेत्। लघिमासिद्धिः समृद्धिर्महिमासिद्धि र्वा पुनः ॥ ईशित्वादपि सिद्धिः स्याद् वशित्वं सिद्धिबोधनम्। प्राकाम्यसिद्धिर्भुक्तेश्च सिद्धिरिच्छापदात्पुनः ॥ सिद्धिः प्राप्तिपदात् सिद्धिः सर्वकामपदात् पुनः ॥ सिद्धिर्ब्राह्मी च माहेश्वर्युक्ता कौमारिशब्दतः। वैष्णवीति च वाराही माहेन्द्रीति च कीर्तयेत् ॥ चामुण्डे च महालक्ष्मि सर्वसङ्क्षोभिणीति च। सर्वविद्राविणि प्रोच्य सर्वाकर्षिणि शब्दतः ॥ सर्वाह्लशीकरणी चैव सर्वोन्मादिनि शब्दतः। सर्वान् महांकुशे सर्वखेचरीति च सर्वतः ॥ बीजे सर्वपदाद् योने सर्वशब्दादतः पुनः। त्रिखण्डे त्रैलोक्यशब्दाद् मोहनेति च चक्रतः ॥ स्वामिनीति प्रकटतः योगिनीति पदं वदेत्। कामाकर्षिणिशब्दान्ते बुद्ध्याकर्षिणि कीर्तयेत् ॥ अहङ्कारा-

कर्षिणीति शब्दाकर्षिणि शब्दतः ॥ स्पर्शाकर्षिणि शब्दान्ते रूपाकर्षिणि कीर्तयेत्। रसाकर्षिणि शब्दान्ते गन्धाकर्षिणि कीर्तयेत् ॥ चित्ताकर्षिणि शब्दान्ते धैर्याकर्षिणि कीर्तयेत्। स्मृत्याकर्षिणि शब्दान्ते नामाकर्षिणि कीर्तयेत् ॥ बीजाकर्षिणि शब्दान्ते आत्माकर्षिणि कीर्तयेत्। अमृता-कर्षिणीत्युक्त्वा शरीराकर्षिणीति च ॥ सर्वाशापरिपूरेति चक्रस्वामिनीति च। गुप्तयोगिन्यनङ्गा च कुसुमेऽनङ्गमेखले ॥ अनङ्गमदने शब्दादनङ्गमदनातुरे। अनङ्गरेखेऽनङ्गा च वेगिनीति ह्यनङ्गतः। अङ्कुशेऽनङ्गशब्दाच्च मालिनीति पदं वदेत्। सर्वसङ्क्षोभणाच्चक्रस्वामिनीति च गुप्ततः। तरयोगिनि शब्दाच्च सर्वसङ्क्षोभिणीति च। सर्वविद्राविणीत्युक्त्वा सर्वाकर्षिणि शब्दतः। सर्वाह्लादिनिशब्दाच्च सर्वसम्मोहिनीति च। सर्वस्तम्भिनिशब्दाच्च सर्वजृम्भिणि कीर्तयेत्। सर्वाद् वशंकरिपदं सर्वरञ्जिनि शब्दतः। सर्वोन्मादिनिशब्दाच्च ततः सर्वार्थसाधिका। सर्वसम्पत्तिशब्दान्ते पूरणीति पदं वदेत्। सर्वमन्त्रमयीत्युक्त्वा सर्वद्वन्द्वक्षयङ्करी। सर्वसौभाग्यदा चेति चक्रकस्वामिनीति च। सम्प्रदायाद् योगिनीति सर्वसिद्धिप्रदेति च। सर्वसम्पत्प्रदे पश्चात् ततः सर्वप्रियङ्करि। सर्वमङ्गलतः कारिण्युक्त्वा सर्वाच्च कामतः। प्रदे सर्वपदाद् दुःखविमोचिनीति पदं ततः। सर्वमृत्युप्रशमनी सर्वविघ्ननिवारिणी। सर्वाङ्गसुन्दरिपदं सर्वसौभाग्यदायिनी। सर्वार्थसाधकचक्रस्वामिनीति पदं वदेत्। कुलोत्तीर्णाद् योगिनीति सर्वज्ञे सर्वशब्दतः। शक्तिसर्वैश्वर्यपदात् प्रदायिनि च कीर्तयेत्। सर्वज्ञानमयीत्युक्त्वा सर्वव्याधि-विनाशिनि। सर्वाधारस्वरूपे च सर्वपापहरे तथा। सर्वानन्दमयीत्युक्त्वा सर्वरक्षास्वरूपिणि। सर्वेप्सित-प्रदे प्रोच्य सर्वरक्षाकरी पुनः। चक्रस्वामिनि शब्दान्ते निगर्भाद् योगिनीति च। वशिनीति पदं प्रोच्य कामेश्वरि च मोदिनि। विमले चारुणे पश्चात् जयिनीति पदं वदेत्। सर्वेश्वरिपदं प्रोच्य कौलिनीति च कीर्तयेत्। सर्वरोगहराच्चक्रस्वामिनीति रहस्यतः। योगिनीति समुच्चार्य ततो बाणिनि चापिनि। पाशिन्यङ्कुशिनि प्रोच्य महाकामेश्वरीति च। महावज्रेश्वरिपदं महोर्द्धभगमालिनि। महाश्री सुन्दरीत्युक्त्वा सर्वसिद्धिप्रदा पुनः। चक्रस्वामिन्यति पदाद् रहस्याद् योगिनीति च। त्रिपुरे त्रिपुरेशीति तथा त्रिपुरसुन्दरी। त्रिपुराद्वासिनिपदं त्रिपुराश्रीःपदं ततः। त्रिपुरान्मालिनिपदं त्रिपुरात् सिद्धि-बोधनम्। त्रिपुराम्बा ततः प्रोक्ता महात्रिपुरसुन्दरी। महामाहेश्वरि महा महाराज्ञि महा महा। महाशक्ते महागुप्ते ततश्चैव महा महा। ज्ञप्ते महामहानन्दे ततश्चैव महा महा। स्पन्दे महा महा-शब्दादृशये परिकीर्तयेत्। ततो महा महाकीर्ति श्री चक्रनगरात्ततः। पुनः सम्राज्ञिपदमुच्चार्य नमस्तेत्रितयं पुनः। अग्निजाया विलोमेन त्रितारीति च कीर्तितः। मालामन्त्रो महादेव्याः सर्वसिद्धिप्रदायकः। एकत्रिंशत् सहस्राणि त्रिलोकीमोहनक्षमः'' यथा—ऐं ह्रीं श्रीं ॐ नमस्त्रिपुरसुन्दरि हृदयदेवि, शिरोदेवि, शिखादेवि, कवचदेवि, नेत्रदेवि, अस्त्रदेवि, कामेश्वरि, भगमालिनि, नित्यक्लिन्ने, भेरुण्डे, वह्निवासिनि, महावज्रेश्वरि, शिवदूति, त्वरिते, कुलसुन्दरि, नित्ये, नीलपताके, विजये, सर्वमङ्गले, ज्वा-लामालिनि, चित्रे, महानित्ये, परमेश्वरपरमेश्वरि, मित्रेशमयि, षष्ठीशमयि, उड्डीशमयि, चर्यानाथमयि,

लोपामुद्रामयि, अगस्त्यमयि, कालतापनमयि, धर्माचार्यमयि, मुक्तकेशीश्वरमयि, दीपकलानाथमयि, विष्णुदेवमयि, प्रभाकरदेवमयि, तेजोदेवमयि, मनोजदेवमयि, कल्याणदेवमयि, रत्नदेवमयि, वासुदेवमयि, श्रीरामानन्दमयि, अणिमासिद्धे, लघिमासिद्धे, महिमासिद्धे, ईशित्वसिद्धे, वशित्वसिद्धे, प्राकाम्यसिद्धे, भुक्तिसिद्धे, इच्छासिद्धे, प्राप्तिसिद्धे, सर्वकामसिद्धे, ब्राह्मि, माहेश्वरि, कौमारि, वैष्णवि, वाराहि, माहेन्द्रि, चामुण्डे, महालक्ष्मि, सर्वसङ्क्षोभिणि, सर्वविद्राविणि, सर्वाकर्षिणि, सर्ववशीकरिणि, सर्वोन्मादिनि, सर्वमहांकुशे, सर्वखेचरि, सर्वबीजे, सर्वयोने, सर्वत्रिखण्डे, त्रैलोक्यमोहनचक्रस्वामिनि, प्रकटयोगिनि, कामाकर्षिणि, बुद्ध्याकर्षिणि, अहङ्काराकर्षिणि, शब्दाकर्षिणि, स्पर्शाकर्षिणि, रूपाकर्षिणि, रसाकर्षिणि, गन्धाकर्षिणि, चित्ताकर्षिणि, धैर्याकर्षिणि, स्मृत्याकर्षिणि, नामाकर्षिणि, बीजाकर्षिणि, आत्माकर्षिणि, अमृताकर्षिणि, शरीराकर्षिणि, सर्वाशापरिपूरकचक्रस्वामिनि, गुप्तयोगिनि, अनंगकुसुमे, अनंगमेखले, अनंगमदने, अनंगमदनातुरे, अनंगरेखे, अनंगवेगिनि, अनङ्गाङ्कुशे, अनङ्गमालिनि, सर्वसङ्क्षोभणचक्रस्वामिनि, गुप्ततरयोगिनि, सर्वसङ्क्षोभिणि, सर्वविद्राविणि, सर्वाकर्षिणि, सर्वाह्लादिनि, सर्वसम्मोहिनि, सर्वस्तम्भिनि, सर्वजृम्भिणि, सर्ववशङ्करिणि, सर्वरञ्जिनि, सर्वोन्मादिनि, सर्वार्थसाधिके, सर्वसम्पत्तिपूरणि, सर्वमन्त्रमयि, सर्वद्वन्द्वक्षयङ्करि, सर्वसौभाग्यदायकचक्रस्वामिनि, सम्प्रदाययोगिनि, सर्वसिद्धिप्रदे, सर्वसम्पत्प्रदे, सर्वप्रियङ्करि, सर्वमङ्गलकारिणि, सर्वकामप्रदे, सर्वदुःखविमोचिनि, सर्वमृत्युप्रशमिनि, सर्वविघ्ननिवारिणि, सर्वाङ्गसुन्दरि, सर्वसौभाग्यदायिनि, सर्वार्थसाधकचक्रस्वामिनि, कुलोत्तीर्णयोगिनि, सर्वज्ञे, सर्वशक्ते, सर्वैश्वर्यप्रदायिनि, सर्वज्ञानमयि, सर्वव्याधिविनाशिनि, सर्वाधारस्वरूपे, सर्वपापहरे, सर्वानन्दमयि, सर्वरक्षास्वरूपे, सर्वेप्सितफलप्रदे, सर्वरक्षाकरचक्रस्वामिनि, निगर्भयोगिनि, वशिनि, कामेश्वरि, मोदिनि, विमले, अरुणे, जयिनि, सर्वेश्वरि, कौलिनि, सर्वरोगहरचक्रस्वामिनि, रहस्ययोगिनि, बाणिनि, चापिनि, पाशिनि, अङ्कुशिनि, महाकामेश्वरि, महावज्रेश्वरि, महाभगमालिनि, महाश्रीसुन्दरि, सर्वसिद्धिप्रदचक्रस्वामिनि, अतिरहस्ययोगिनि, श्रीश्रीमहाभट्टारिके, सर्वानन्दमयचक्रस्वामिनि, परापररहस्ययोगिनि, त्रिपुरे, त्रिपुरेशि, त्रिपुरसुन्दरि, त्रिपुरवासिनि, त्रिपुराश्रीः, त्रिपुरमालिनि, त्रिपुरासिद्धे, त्रिपुराम्ब, महात्रिपुरसुन्दरि, महामाहेश्वरि, महामहाराज्ञि, महामहाशक्ते, महामहागुप्ते, महामहाज्ञप्ते, महामहानन्दे, महामहास्पन्दे, महामहाशये, महामहाश्रीचक्रनगरसम्राज्ञि नमस्ते नमस्ते नमस्ते स्वाहा श्रीं ह्रीं ऐं। "एषा विद्या महासिद्धिदायिनी स्मृतिमात्रतः। अग्निवातमहाक्षोभे राजराष्ट्रस्य विप्लवे। लुण्ठके तस्करभये सङ्ग्रामे सलिलप्लवे। समुद्रयानविक्षेपे भूतप्रेतादिजे भये। अपस्मारज्वरव्याधिमृत्युजन्मादिजे भये। मित्रभेदे ग्रहभये व्यसने चाभिचारिके। अन्येष्वपि च दोषेषु मालामन्त्रं स्मरेन्नरः। सर्वोपद्रवनिर्मुक्तः साक्षाच्छिवसमो भवेत्। आपत्काले नित्यपूजां विस्तरात्कर्तुमक्षमः। एकावर्तनमात्रेण सर्वपूजाफलं लभेत्। मालामन्त्रविधानन्तु प्रवक्ष्याम्यनुपूर्वशः। सर्वसङ्कल्पसंसिद्धिरेतज्ज्ञानाद् भवेन्नरः (त्वा नरो भवेत्)। नवावरणदेवीनां ललिताया महौजसः। एकावर्तनमात्रेण वेदवेदाङ्गगोचरः। सर्वागमरहस्यार्थस्मरणात् पापनाशिनी। ललिताया

महेशान्या मालाविद्या महीयसी। नरवश्यं नरेन्द्राणां वश्यं नारीवशङ्करम्। अणिमादिगुणैश्वर्यं रञ्जनं पापभञ्जनम्। तत्तदावरणस्थायिदेवतामन्त्रपञ्जरम्। मालामन्त्रमयं गुह्यं परं धाम प्रकीर्त्यते। शक्तिमाला पञ्चधा स्यात् शिवमाला च तादृशी। द्वन्द्वमाला च तादृक् स्यात् एवं पञ्चदश- क्रमात्। एकैकललितामन्त्रवर्णादभ्युद्धिताः इमाः। शुद्धा नमोन्ता स्वाहान्ता तर्पणान्ता जयान्तकाः। प्रवृत्तयः पञ्चधा स्युर्मालासु निखिलास्वपि। ऋषिच्छन्दो देवताश्च विनियोगैः पृथक्कृताः। सर्वागमेषु पठ्यन्ते गुह्याः सप्ताष्टमालिकाः। सप्ताष्टमालामाहात्म्यं वक्तुं वर्षशतैरपि। न शक्यते वरारोहे पञ्चभिर्वदनैरपि। शुद्धा सम्बुद्धिमात्रं स्यात् जपस्तेन विधीयते। मनसा पूजनं देयं पादुकां पूजयामि च। स्वाहेति होमचरणं तर्पयामीति तर्पणम्। जयः द्वन्द्व-समायोगः श्रुतिरुक्ता तु पञ्चमी। एवं पञ्चविधो योगो मालानां त्रितये भवेत्। अतः पञ्चदशाख्याता माला श्रीललितामनोः। शुद्धायाः शक्तिमालाया य उद्धारः कृतो मया। तत्र भेदः केवलन्तु वक्ष्यते वरवर्णिनि। नमः स्वाहा द्वये प्राप्ते सम्बुद्धेःसंप्रदानकम्। तर्पणे तु द्वितीया स्यात् जये सम्बुद्धिरेव सा। शक्त्यादिपञ्चत्रितये उपस्थादीन्द्रियेश्वराः। वरुणाद्या द्वादशार्का प्रातरर्काधियो-जनात्। ऋषयः पञ्चधा तेषां नाम धामानि कीर्तयेत्। उपस्थपायुपादश्च पाणिवाक्प्राणजिह्वकाः। दृक्चर्मश्रवणाहन्ताधीचिन्ताऋषिभूमयः। प्रधानपुम्भ्यां सार्धं तु तत्त्वतः शृणु पार्वति। तरुणश्चैव मित्रश्च धाता चार्यममास्करः। अंशुश्चैव भगेन्द्रश्च विवस्वान् पूषभानुमान्। सविता त्वष्टृविष्णुश्च प्रातरर्कादयस्त्रयः। ब्रह्मादित्रितयाकारा अथ च्छन्दांसि मे शृणु। गायत्र्युष्णिगनुष्टुप्च बृहती पङ्क्तिरेव च। त्रिष्टुप्च जगती चैव तथातिजगती मता। शक्वरी सातिपूर्वा स्यात् अष्टयत्यष्टी ततः स्मृते। धृतिश्चातिधृतिश्चैव कृतिः पञ्चदशेरिताः। एकैकमालिकायास्तु धृतिशक्तिमहेश्वरौ। केवले ललितामन्त्रे वर्णाद्याह्वयशोभिते। ललिता कामनादायि भिन्नभिन्नाह्वयाम्बिका। सर्वत्र ललिता तत्र देवतात्वेन भाषिता। रजः सत्त्वादिभेदेन भोगमोक्षादि भेदतः। कादिमन्त्रस्थवर्णानां विशिष्यसमुदाहृतम्। एकैकवर्णकामेशपीठरूपसमुदाहृतम्। कामेश्वरश्च कामेशी एकवीरस्तथैकला। ईश्वरश्चेश्वरी देवी ललिता लक्षसारकौ। हृदयश्चैव हृल्लेखा हलिनी हलिकामराट्। सरस्वती च सर्वज्ञः कमलाकाल-मर्दनौ। हरनाथः कामशिवो ललिता हरवल्लभा। लक्ष्मीश्चैव ललज्जिह्वा हिरण्या हृदयेश्वरः। सर्वेश्वरोऽथ सकलजननी ललिताम्बिका। करुणाकरकामेशः कामकोटिश्च तद्वधूः। लीलावती च ललिता कामो लावण्यनायकः। हरेश्वरी हिरण्याच बाहुस्तद्वर्तृशङ्करः। एवं मिथुनरूपेण देवताः परिकीर्तिताः। विनियोगं प्रवक्ष्यामि सावधाना शृणु प्रिये। खड्गश्च पादुकासिद्धिरञ्जनं बिलसिद्धिदम्। वाग्देहलोहसिद्धे ते अणिमाद्यष्टसिद्धयः। वश्याकर्षणसम्मोह स्तम्भनानि च सर्वतः। अथसर्वपुमर्थश्च नित्यानन्दश्च मुक्तता। एते पञ्चदश प्रोक्ता मालानां फलतां गताः। त्रितारतारहृदयं मालामन्त्रे तु शाम्भवि। नमस्ते आदिरुद्राणि सर्वमेतन्न भिद्यते। शुद्धशक्त्याख्यमाला तु प्रकृतिर्विकृतिः

परा। सप्ताष्टमालाजपनं प्रत्यहं कर्तुमक्षमः। प्रकृतिं शुद्धशक्त्याख्यं त्रिसन्ध्यं परिकीर्तयेत्। सर्वमालाजपात्पुण्यं समग्रं पुरुषोऽश्नुते। एकवारं प्रतिदिनं दशपञ्चस्रजं जपन्। महापातकनिर्मुक्तः सर्वपुण्यमवाप्नुयात्। सप्ताष्टमालामावर्त्य सप्ताष्टदिवसावधि। अत्यसाध्यामपि वधूमाकर्षयति मोहिताम्। मासमेकं समावर्त्य सप्ताष्टस्रजमुत्तमम्। असाध्यसाध्ययाप्याद्यैस्त्रिविधैर्मुच्यते गदैः। सप्ताष्टमालिकाजापी नित्यं पुण्यमयाकृतिः। ज्वलन्नग्निरिव त्रस्तैर्वीक्ष्यते भूतपूतनैः। पूजाहोमतर्पणतो मन्त्रशक्ति-प्रभावतः। पुष्पाज्यतोयाभावेऽपि जपमात्रेण सिध्यति। बालानां शुद्धिबोधार्थं मालासु निखिलास्वपि। ग्रन्थनस्य प्रकारश्च दिङ्मात्रेण प्रदर्श्यते। ऐं ह्रीं श्रीं ॐ नमस्त्रिपुरसुन्दरि हृदयदेवि शिरोदेवि इत्यादिमहाश्रीचक्रनगरसम्राज्ञि नमस्ते नमस्ते नमस्ते स्वाहा श्रीं ह्रीं ऐं इत्यन्तस्य शुद्धिशक्तिमालामन्त्रस्य उपस्थेन्द्रियाधिष्ठात्री वरुणादित्य ऋषिः, गायत्री छन्दः, सात्त्विककककारभट्टारकपीठस्थितकामेश्वराङ्कनिलया कामेश्वरी ललितामहाभट्टारिका देवता, खड्गसिद्धौ विनियोगः—"तादृशं खड्गं प्राप्नोति येन हस्तस्थितेन वै। अष्टादश-महाद्वीपसम्राड्ढस्तो भविष्यति।"॥ ऐं ह्रीं श्रीं ॐ नमस्त्रिपुरसुन्दर्यै नमो हृदयदेव्यै नमः शिरोदेव्यै नमः इत्यादिशक्तिनमोमालामन्त्रस्य पाय्विन्द्रियाधिष्ठात्री मित्रादित्यऋषिः उष्णिक्छन्दः, भोगदएकारभट्टारक-पीठस्थित एकवीरकामेश्वराङ्कनिलया एकलाललितामहाभट्टारिकादेवता, पादुकासिद्धौ विनियोगः—"तादृशं पादुकायुग्मं प्राप्नोति तव भक्तिमान्। यदाक्रमणमात्रेण क्षणात्त्रिभुवनक्रमः।"॥ ऐं ह्रीं श्रीं ॐ नमस्त्रि-पुरसुन्दर्यै स्वाहा, हृदयदेव्यै स्वाहा, शिरोदेव्यै स्वाहा इत्यादि शक्तिस्वाहामालामन्त्रस्य पादेंद्रिया-धिष्ठात्री धात्रादित्य ऋषिः, अनुष्टुप् छन्दः, मोक्षद ईकारभट्टारकपीठस्थईश्वरनामकामेश्वराङ्कनिलया ईश्वरीनामललितामहाभट्टारिका देवता, अञ्जनसिद्धौ विनियोगः—"सिद्धाञ्जनं समासाद्य तेनाञ्जित-विलोचनः। निधिं पश्यति सर्वत्र भक्तस्तेन समृद्धिमान्।"॥ ऐं ह्रीं श्रीं ॐ नमस्त्रिपुरसुन्दरीं तर्पयामि, हृदयदेवीं तर्पयामि, शिरोदेवीं तर्पयामि इत्यादि शक्तितर्पणमालामन्त्रस्य पाणीन्द्रियाधिष्ठात्री अर्यमादित्य ऋषिः, बृहती छन्दः, सात्त्विकलकारभट्टारकपीठस्थितलक्षसार-कामेश्वराङ्क-निलया ललितानामललिता महाभट्टारिका देवता, बिलसिद्धौ विनियोगः—"बिलद्वारं महत्प्राप्य पातालतलयोगिनः। दृष्ट्वा ततः प्राप्तसिद्धिस्तव भक्तः सुखी भवेत्"॥ ऐं ह्रीं श्रीं ॐ नमस्त्रिपुरसुन्दरि जय जय हृदयदेवि जय जय शिरोदेवि जयजयेत्यादिशक्तिजयमालामन्त्रस्य वागिन्द्रियाधिष्ठात्री अंशादित्य ऋषिः पङ्क्तिश्छन्दः, सात्त्विक ह्रींकारभट्टारकपीठस्थितहृदयकामेश्वराङ्कनिलया हृल्लेखा नाम ललिताभट्टारिका देवता, वाक्सिद्धौ विनियोगः। "वाक्सिद्धिर्द्विविधा प्रोक्ता शापानुग्रहकारिका। महाकवित्वरूपा च भक्तस्ते तद्द्वयास्पदः"॥ इति शक्तिमालापञ्चकम्॥

ऐं ह्रीं श्रीं ॐ नमस्त्रिपुरसुन्दर हृदयदेव शिरोदेव इत्यादि महाश्रीचक्रनगरसम्राज नमस्ते नमस्ते नमस्ते स्वाहा। इत्यस्य शुद्धशिवमालामन्त्रस्य घ्राणेन्द्रियाधिष्ठात्री भगादित्य ऋषिः त्रिष्टुप्, छन्दः,

भोगदहकारभट्टारकपीठस्थितो हलिनीललिताविभूषिताङ्गो हलिककामेश्वरमहाभट्टारको देवता, देहसिद्धौ विनियोगः। "तथा सिध्यति ते भक्तः शरीरं येन पार्वति। शुद्धकाञ्चनतस्तस्य कदाचित् क्वापि न क्षयः ॥" ऐं इत्यादि त्रिपुरसुन्दराय नमः, हृदयदेवाय नमः, शिरोदेवाय नम इत्यादि शिवनमोमालामन्त्रस्य रसनेन्द्रियाधिष्ठात्री इन्द्रादित्य-ऋषिः; जगती छन्दः, भोगदसकारभट्टारकपीठस्थितसरस्वतीनामललिताभूषिताङ्गः सर्वज्ञनामकामेश्वरभट्टारको देवता, लोहसिद्धौ विनियोगः। "त्वद्भक्तहस्तस्पर्शेन लोहमष्टविधं शिवे। काञ्चनीभावमाप्नोति येन स्याच्छिवतुल्यता" ॥ ऐं इत्यादि त्रिपुरसुन्दराय स्वाहा, हृदयदेवाय स्वाहा, शिरोदेवाय स्वाहा, इत्यादि मालामन्त्रस्य चक्षुरिन्द्रियाधिष्ठात्री विवस्वदादित्य ऋषिः, अतिजगतीछन्दः, तामसककारभट्टारकपीठस्थित कमलानामललिताभूषिताङ्गः कालान्तकनामकामेश्वरभट्टारको देवता अष्टमहासिद्धौ विनियोगः ॥ "येष्टाणुत्वमहत्त्वाद्या स्वेच्छामात्रोपकल्पिताः। तव भक्तशरीराणां तेऽणिमाद्या गुणाः स्मृताः"॥ ऐं इत्यादि त्रिपुरसुन्दरं तर्पयामि, हृदयदेवं तर्पयामि, शिरोदेवं तर्पयामि इत्यादिशिवतर्पणमालामन्त्रस्य त्वगिन्द्रियाधिष्ठात्री पूषादित्य ऋषिः, शक्करीछन्दः, मोक्षदहकारपीठस्थितहरवल्लभाख्यललिताभूषिताङ्गो हरनाथकामेश्वरभट्टारको देवता, सर्ववश्यसिद्धौ विनियोगः। "शरीरमर्थं प्राणांश्च निवेद्य निजभृत्यवत्। तव भक्तं निषेवन्ते वशीभूता नृपादयः ॥" ऐं इत्यादि त्रिपुरसुन्दर जय जय हृदयदेव जय जय शिरोदेव जय जयेत्यादिशिवजयमालामन्त्रस्य श्रोत्रेन्द्रियाधिष्ठात्री सवित्रादित्य ऋषिः, अतिशक्करीच्छन्दः, तामसलकारभट्टारकपीठस्थित लक्ष्मीनामललिताभूषिताङ्गो ललज्जिह्वकामेश्वरभट्टारको देवता, सर्वाकर्षणे विनियोगः। "लोहप्राकारसङ्गुप्ता निगडेन सुयन्त्रिताः। त्वद्भक्तैः कृष्यमाणास्तु योषितः सम्पतन्ति हि ॥" इति शिवमालापञ्चकम्।

ऐं ह्रीं श्रीं ॐ नमस्त्रिपुरसुन्दरि त्रिपुरसुन्दर हृदयदेवि हृदयदेव शिरोदेवि शिरोदेव इत्यादिशुद्धमिथुनमालामन्त्रस्य अहङ्काराधिष्ठात्री त्वष्ट्रादित्य ऋषिः, अष्टिछन्दः तामसह्रींकारभट्टारकपीठस्थिता हिरण्यदानामललिताभूषिताङ्गो हृदयनाथकामेश्वरभट्टारको देवता, सर्वसंमोहनसिद्धौ जपे विनियोगः। "अम्बिके तव भक्तानामवलोकनमात्रतः। किङ्कर्तव्यविमूढाः स्युर्नरनारीनृपादयः" ॥ ऐं इत्यादि त्रिपुरसुन्दर्यै नमः त्रिपुरसुन्दराय नमः, हृदयदेव्यै नमः, हृदयदेवाय नमः शिरोदेव्यै नमः शिरोदेवाय नमः, इत्यादिमिथुननमोमालामन्त्रस्य बुद्धि तत्त्वाधिष्ठात्री विष्ण्वादित्य ऋषिः अत्यष्टिछन्दः, मोक्षम्दसकारभट्टारकपीठस्थितसकलजननीनामललिताविभूषिताङ्गः सर्वेश्वरनामकामेश्वरभट्टारको देवता, सर्वस्तम्भने विनियोगः। "तव भक्तिप्रभावेण शरीरेन्द्रियचेतसा। शापस्य स्तम्भिताः स्तम्भः स्वकार्यविरहात्मकः"॥ ऐं इत्यादि ॐ नमस्त्रिपुरसुन्दर्यै स्वाहा त्रिपुरसुन्दराय स्वाहा, हृदयदेव्यै स्वाहा हृदयदेवाय स्वाहा, शिरोदेव्यै स्वाहा शिरोदेवाय स्वाहा इत्यादिमिथुनस्वाहामालामन्त्रस्य (चित्त) अम्भस्तत्त्वाधिष्ठात्री ब्रह्मरूपप्रातरादित्य ऋषिः, धृतिच्छन्दः, राजसककारभट्टारकपीठ-

स्थितकामकोटिनामललिताभूषिताङ्कः करुणाकरकामेश्वरभट्टारको देवता, सर्वपुरुषार्थसिद्धौ विनियोगः। "धर्मश्चार्थश्च कामश्च त्रिवर्गोऽयं शरीरिणः। अप्रयासेन संसिद्धौ तव भक्तस्य शोभने।"[1] ऐं इत्यादि त्रिपुरसुन्दरीं तर्पयामि त्रिपुरसुन्दरं तर्पयामि, हृदयदेवीं तर्पयामि हृदयदेवं तर्पयामि इत्यादिमिथुनतर्पण-मालामन्त्रस्य प्रकृतितत्त्वाधिष्ठात्री नारायणरूपमध्याह्नादित्य ऋषिः, अतिधृतिच्छन्दः, राजसलकारभट्टार-कपीठस्थितो लीलावतीललिताभूषिताङ्कलावण्यनाथकामेश्वरभट्टारको देवता, सर्वसुखभोगसिद्धौ विनियोगः। "अलौकिकं लौकिकञ्च द्विविधं सुखमण्डलम्। न दुर्लभं परशिवे त्वत्पादाम्भोजसङ्गिनां"॥ ऐं इत्यादि ॐ नमस्त्रिपुरसुन्दरि जय जय त्रिपुरसुन्दर जय जय हृदयदेवि जय जय हृदयदेव जय जय शिरोदेवि जय जय शिरोदेव जय जयेत्यादिमिथुनजयमालामन्त्रस्य पुरुषतत्त्वाधिष्ठातृ महेश्वर-रूपसायमादित्य ऋषिः कृतिच्छन्दः राजसह्रीङ्कारभट्टारकपीठस्थितहरेश्वरीनामललिताविभूषिताङ्को हिरण्यबाहुनामकामेश्वरभट्टारको देवता, (भोग) मोक्षसिद्धौ विनियोगः। "या देवता भोगकरी सा मोक्षाय न कल्पते। मोक्षदा न हि भोगाय ललिता तु द्वयप्रदा"॥ इति मिथुनमालापञ्चकम्॥

इति सप्ताष्टमालानां विधानं प्रतिपादितम्। ललिताभक्तियुक्तानां भोगमोक्षैककारणं। माला-मन्त्रैरमीभिस्तु मन्त्रिता भूमिपांसवः। क्षिप्ता भूताभिभूतानां मूर्ध्नि भूतविनाशकाः। ज्वरिणां च ज्वरा यान्ति वाता वातकिनामपि। असाध्यरोगग्रस्तानां रोगा यान्ति परिक्षयम्। एतन्मन्त्रिततोयेन भस्मना वा समुक्षणात्। पठित्वा हस्तस्पर्शाद्वा नात्र कार्या विचारणा। सप्ताष्टसङ्ख्यामालाभिर्मन्त्रयित्वा घटोदकं। सप्ताहसेवनं कुर्यात् वन्ध्या पुत्रवती भवेत्।" इति परिशिष्टोक्तप्रमेयव्यवस्थायाः पञ्चदश-मालामन्त्राणां साधारण्येन स्वदेहोद्भूताभिरित्ययमेक एव ध्यानश्लोक[2] इत्यलमतिप्रसङ्गेन॥ ३०॥

## गोपालसुन्दरी

**स्वदेहेति** - हे नित्ये! स्वदेहोद्भूताभिः त्वच्छरीरोत्थाभिः घृणिभिः किरणरूपाभिः अणिमाद्याभिरावरणदेवताभिरभितो निषेव्यां सेव्यमानां त्वामहमिति अभेदेन भावयति, निषेव्यामित्यत्र 'निषेव्ये' इति क्वचित्पाठः, तत्र हे अणिमाद्याभिः निषेव्ये सेविते इति सम्बोधनम्। त्रिनयनस्य शिवस्य, समृद्धिरैश्वर्यं, तृणयतः तृणवन्मन्यमानस्य तस्य महासंवर्ताग्निः प्रलयकालाग्निर्नीराजनविधिं विरचयति इति किमाश्चर्यं नाश्चर्यमित्यर्थः। तदुक्तं कादिमते - "स्वदेहोत्थिततेजोभिः किरणैरणि-मादिभिः। आवृतां त्वां महति भावयेत्त्वत्समो भवेदिति॥"

---

1. धर्मश्चार्थश्च कामश्च मोक्षश्चेति चतुष्टयम्।
   तव भक्तः स्वभक्तेभ्यः प्रयच्छत्यप्रयासतः॥ इति ध्यानान्तरम्॥

2. "सरस्वत्या लक्ष्म्या" इति श्लोकोऽपि ध्यानायोक्तम्॥

दत्तात्रेयोऽप्याह - "अरुणां करुणातरङ्गिताक्षीं धृतपाशाङ्कुशपुष्पबाणचापाम् । अणिमादिभिरावृतां मयूखैरहमित्येव विभावये भवानीम् ॥" इति ।

**विष्णुपक्षे** - हे निषेव्य ! सेवनयोग्य आमिति सम्बोधने स्वदेहः परमेश्वरस्य देहो वेदस्तस्मादुद्भूताभिः तेजोभिरणिमाद्याभिः अणिमादिसंज्ञकाभिः ऋगादिरूपाभिर्गोपीभिः सह त्वामहमित्यभेदेन यः सदा भावयति नित्यं नित्यरूपं यद् ब्रह्म तन्निमित्तं त्रिनयनस्य शिवस्य भिक्षुकत्वात्, तत्समृद्धिं भिक्षारूपां तृणयतस्तुच्छीकुर्वतस्तस्य महासंवर्ताग्निरपि नीराजनं विरचयति, तस्य भिक्षाप्राप्त्या जठरामलज्वालाजन्यदुःखोपशमनस्वल्पफलं प्रलयकालीनानलज्वालाजालोऽपि न दुःखमुपजनयतीति भावः । तदुक्तं क्रमदीपिकायाम् - "द्विजो भिक्षावृत्तिं य इह दिनशो नन्दतनयः स्वयंभूत्वा भिक्षामटति विहरन् गोपसुदृशाम् । अमाचेतोभिः स्वैर्ललितललितैर्नर्मविधिभिः दधिक्षीराज्याभ्यां प्रचुरतरभिक्षां स लभते ॥" इति ॥ ३० ॥

## आनन्दलहरीटीका

**स्वदेहोद्भूताभिरिति** । हे नित्ये स्वस्य तव देहोद्भूताभिः शरीरजाभिः, घृणिभिः तेजोभिः, अणिमाद्याभिरावरणदेवतारूपाभिः, अभितः सर्वतः, निषेव्यां त्वां, यो जनः, अभेदेनाहमिति भावयति, तस्य महासंवर्ताग्निः प्रलयकालाग्निः नीराजनविधिं प्रदीपनिर्मञ्छनविधानं विरचयतीति किमाश्चर्यम् , न किमपीति भावः । कीदृशस्य त्रिनयनसमृद्धिं शिवैश्वर्यं तृणयतः तृणवत्तुच्छीकुर्वत इत्यर्थः । निषेव्यामित्यत्र निषेव्ये इति पाठे संबोधनम् । तदुक्तं कादिमते—"त्वद्देहोत्थिततेजोभिः किरणैरणिमादिथिः आवृतां त्वामहमिति भावयंस्त्वत्समो भवेत् ।' इति । किरणैः रश्मिसंज्ञकावरणदेवताभिः । दत्तात्रेयेणाप्युक्तं - 'अरुणां करुणातरंगिताक्षीं धृतपाशांकुशपुष्पबाणचापाम् । अणिमादिभिरावृतां मयूखैरहमित्येव विभावये भवानीमि'ति ॥ ३० ॥

> **चतुष्षष्ट्या तन्त्रैः सकलमतिसन्धाय[1] भुवनं**
> **स्थितस्तत्तत्सिद्धिप्रसवपरतन्त्रैः[2] पशुपतिः ।**
> **पुनस्त्वन्निर्बन्धादखिलपुरुषार्थैकघटना-**
> **स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम् ॥ ३१ ॥**

சதுஷ்ஷஷ்ட்யா தந்த்ரை: ஸகலமதிஸந்தாய புவனம்
1 1 1 1 1 1 1 4 4
ஸ்தீதஸ்தத்தத்ஸித்திப்ரஸவ பரதந்த்ரை: பசுபதி: ;
2 1 1 1 1 3 4 1 1 1 1 1 1 1
புனஸ்த்வந்நிர் பந்தாதகிலபுருஷார்தைக கடனா-
1 1 3 4 3 2 1 2 1 4 1
ஸ்வதந்த்ரம்தே தந்த்ரம் க்ஷிதிதலமவாதீதரதிதம்.
1 1 1 1 1 1 1 1 1 3 3

1. सकलमभिसंधाय, 2. प्रसभपरतन्त्रैः, प्रसवपरतन्त्रः

भगवति ! तुच्छ फलप्रतिपादक चौंसठ तंत्रों से शिव ने
सब को वंचित् कर डाला मायाशंबरादि से भव ने ।
फिर तेरे करुणामय आग्रह से पुरुषार्थ संविधायक,
तेरे सर्वस्वतंत्र-तंत्र को भू पर लाया शुभदायक ! ॥

## लक्ष्मीधरा

**चतुष्षष्ट्येतिति**-चतुष्षष्ट्या चतुष्षष्टिसङ्ख्याकैः महामायाशम्बरादिभिः, तन्त्रैः सिद्धान्तैः। अत्र चतुष्षष्टिशब्दस्य सङ्ख्येयपरत्वात् एकवचनान्तत्वम् । सकलं समस्तं, अतिसन्धाय अपवाह्य वञ्चयित्वा, भुवनं प्रपञ्चं, स्थितः निवृत्तव्यापारः, तत्तत्सिद्धिप्रसवपरतन्त्रैः ताश्च ताश्च सिद्धयः तत्तत्सिद्धयः, चतुष्षष्टितन्त्रेषु एकस्मिन् एकस्मिन् तन्त्रे प्रयोजनभूताः एकैकसिद्धय इत्यर्थः, तासां प्रसवः उत्पत्तिः, तत्र परतन्त्रैः । यद्वा—तेषां तेषां सिद्धयः तत्तत्सिद्धयः, येषां येषां साधकानां स्वस्वाभिमतास्सिद्धयः तासां प्रसवपरतन्त्रैः उत्पादकैकनियतैः। पशुपतिः पशूनां प्राणिनां पतिः, पश्यन्तीति पशवः । यद्वा—इन्द्रियाण्येव पश्यन्तीति व्युत्पत्त्या पशवः, तान् पशून् पाति रक्षतीति पशुपतिः जीवः, शिव एव जीव इति पशुपतिः शिवः, पुनः भूयः, त्वन्निर्बन्धात् त्वया निर्बन्धः तस्मात् । चतुष्षष्टितन्त्रप्रतिपादितसर्वसिद्धान्तरूपसकलपुरुषार्थसाधनभूततन्त्रान्तरोपदेशस्वीकारव्यग्रया देव्या भवत्या कृतो निर्बन्ध इति यावत् । यद्वा—त्वदिति भिन्नं पदं पञ्चम्यन्तम् । अखिलपुरुषार्थैकघटनास्वतन्त्रं अखिलानां पुरुषार्थानां मुख्यत्वेन घटनायां स्वतन्त्रं स्वयमेव प्रधानं, ते भवत्याः, तन्त्रं, क्षितितलं भूतलं, अवातीतरत् । तरतेर्णौ चङि रूपम् । गत्यर्थत्वात् ' गतिबुद्धि ' इत्यादिसूत्रेण द्विकर्मकत्वम् । इदं वक्ष्यमाणम् ।

अत्रेत्थं पदयोजना—हे भगवति ! पशुपतिः सकलं भुवनं तत्तत्सिद्धिप्रसवपरतन्त्रैः चतुष्षष्ट्या तन्त्रैः अतिसन्धाय स्थितः । पुनस्त्वन्निर्बन्धात् अखिलपुरुषार्थैकघटनास्वतन्त्रं ते तन्त्रमिदं क्षितितलमवातीतरत् ।

चतुष्षष्टितन्त्राणि चतुश्शत्याम्—

चतुष्षष्टिश्च तन्त्राणि मातॄणामुत्तमानि च ।
महामायाशम्बरं च योगिनीजालशम्बरम् ॥
तत्त्वशम्बरकं चैव भैरवाष्टकमेव च ।
बहुरूपाष्टकं चैव यमळाष्टकमेव च ॥
चन्द्रज्ञानं मालिनी च महासम्मोहनं तथा ।
वामजुष्टं महादेवं वातुलं वातुलोत्तरम् ॥

हृद्भेदं तन्त्रभेदं च गुह्यतन्त्रं च कामिकम् ।
कलावादं कलासारं तथान्यत् कुण्डिकामतम् ॥
मतोत्तरं च वीणाख्यं त्रोतलं त्रोतलोत्तरम् ।
पञ्चामृतं रूपभेदं भूतोड्डामरमेव च ॥
कुलसारं कुलोड्डीशं कुलचूडामणिस्तथा ।
सर्वज्ञानोत्तरं चैव महाकाळीमतं तथा ॥
अरुणेशं [1]मोदिनीशं विकु[2]ण्ठेश्वरमेव च ।
पूर्वपश्चिमदक्षं च उत्तरं च निरुत्तरम् ॥
विमलं विमलोत्थं च देवीमतमतःपरम् ॥

इत्येवं चतुष्षष्टितन्त्राणि शम्भुना पार्वतीं प्रति कथितानि। एतानि तन्त्राणि जगतां अतिसन्धानकारणानि विनाशहेतुभूतानि, वैदिकमार्गदूरवर्तित्वात् । अत एवोक्तं भगवत्पादैः ' चतुष्षष्ट्या तन्त्रैः सकलमतिसन्धाय भुवनम् ' [3]सकलविद्वल्लोकप्रतारकाणि इमानि चतुष्षष्टितन्त्राणि इति । तथाहि—

महामायाशम्बरतन्त्रं मायाप्रपञ्चनिर्माणफलम् । मायाप्रपञ्चनिर्माणं नाम सर्वेषां चक्षुरादीनां अन्यथापदार्थग्रहणकारणं, यथा घटस्य पटाकारेण प्रतिभासनम् ।

योगिनीजालशम्बरम्—मायाप्रधानतन्त्रं शम्बरमित्युच्यते । तत्र तन्त्रे योगिनीनां जालदर्शनम् । तच्च श्मशानादिकुमार्गेण साध्यते ।

तत्त्वशम्बरम्—तत्त्वानां पृथिव्यादीनां शम्बरं महेन्द्रजालविद्या । महेन्द्रजालविद्यायां पृथिवीतत्त्वे उदकतत्त्वादीनि, उदकतत्त्वे पृथिव्यादीनि, तत्त्वानि, एवमन्योन्यं प्रतिभासन्ते ।

भैरवाष्टकं नाम—सिद्धभैरव—वटुकभैरव—कङ्काळभैरव—कालभैरव—कालाग्निभैरव—योगिनीभैरव—महाभैरव—शक्तिभैरवप्रधानानि अष्टतन्त्राणि निध्याद्यैहिकफलसाधनान्यपि कापालिकमतत्वात् वैदिकमार्गदूराणि ।

बहुरूपाष्टकम्—शक्तेस्समुद्भूतानि रूपाणि - ब्राह्मी, माहेश्वरी, कौमारी, वैष्णवी, वाराही, माहेन्द्री, चामुण्डा, शिवदूती चेत्यष्टौ रूपाणि । एतान्यवलम्ब्य प्रवृत्तानि तन्त्राणि अष्टौ, तेषां गणः अष्टकम् । एतदपि वेदमार्गदूरत्वात् हेयम् । अत्र श्रीविद्यायाः प्रसङ्गः बहुरूपाष्टकप्रस्तावे प्रसक्तानुप्रसक्त्या पातित इति न कश्चिद्दोषः ।

---

[1] मेदिनीशम्. [2] विकुण्ठीश्वर. [3] इति वदद्भिः इत्यधिकम्.

यमळाष्टकम्—यमळो नाम कामसिद्धान्तः[1]। तत्प्रतिपादकानि तन्त्राणि यमळान्यष्टौ। तेषां गणः यमळाष्टकम्। तदपि वैदिकमार्गदूरम्। यद्यपि चतुष्षष्टितन्त्राणां यमळत्वं लोकव्यवहारसिद्धं ; तत्तु अवैदिकत्वसाम्यात् उपचारादिति ध्येयम्।

चन्द्रज्ञानम्-चन्द्रज्ञानविद्यायां षोडशनित्याप्रतिपादनम्। नित्याप्रतिपादकत्वेऽपि कापालिक-मतान्तःपातित्वात् हेयमेव। उपादेयचन्द्रज्ञानविद्या चतुष्षष्टितन्त्रातीता।

मालिनीविद्या—समुद्रयानोपायहेतुः। सापि वैदिकमार्गदूरवर्तिनी।

महासम्मोहनम्—जाग्रतामपि निद्राहेतुः। सापि बालजिह्वाच्छेदनादिकुमार्गेण साध्येति निषिद्धा।

वामजुष्टमहादेवतन्त्रे-वामाचारप्रवर्तके इति हेये।

वातुलं, वातुलोत्तरं, कामिकं च तन्त्रत्रयं - कर्षणादिप्रतिष्ठान्तविधिप्रतिपादकम्। तस्मिन् तन्त्रत्रये कर्षणादिप्रतिष्ठान्ता विधयः एकदेशे प्रतिपादिताः। स चैकदेशो वैदिकमार्ग एव। अवशिष्टस्तु अवैदिकः।

हृद्भेदतन्त्रं - कापालिकमेव। यद्यपि हृद्भेदतन्त्रे षट्कमलभेदसहस्रारप्रवेशौ प्रतिपादितौ, तथापि तस्मिन् तन्त्रे वामाचार एव प्रवृत्त इति कापालिकमेव तत्तन्त्रम्।

तन्त्रभेद-गुह्यतन्त्रयोः-प्रकाशेन रहस्येन च परकृततन्त्राणां भेद इति तद्विद्यानुष्ठाने बहुहिंसा-प्रसक्तेः तत्तन्त्रद्वयं वैदिकमार्गदूरम्।

कलावादम्-कलानां चन्द्रकलानां वादः प्रतिपादनं यस्मिन् तन्त्रे तत् कलावादं, वात्स्यायनादि-कम्। यद्यपि कामस्य पुरुषार्थत्वेऽपि कलाग्रहणमोक्षणदशस्थानग्रहणचन्द्रकलारोपणादीनां कामपुरुषार्थे अनुपयोगात् परदारगमनादिनिषिद्धाचारोपदेशाच्च एकदेशे निषिद्धम्। यद्यपि निषिद्धांशः कापालिकतन्त्रं न भवति, तथापि तत्र प्रवर्तमानः पुरुषः अवश्यं कापालिकाचारो भवतीति कापालिकत्वेन गणना तन्त्रस्य।

कलासारम्-वर्णोत्कर्षविधिर्यत्र प्रवर्तते तत् कलासारं वामाचारप्रधानम्।

कुण्डिकामतम्—घुटिकासिद्धिहेतुः। सोऽपि वामाचारप्रधान एव।

मतोत्तरमते—रससिद्धिः।

वीणाख्ये-वीणा नाम योगिनी। सा सिद्ध्यतीति वीणाख्यम्। सा वीणा सम्भोगयक्षिणीति केचिदाहुः।

त्रोतले-घुटिकाञ्जनपादुकासिद्धिः। घुटिका पानपात्रम्।

---

1. यमला नाम कामसिद्धाम्बा। इति पाठः॥

त्रोतलोत्तरे-चतुष्षष्टिसहस्रसङ्ख्याकयक्षिणीनां दर्शनम् ।

पञ्चामृतम्-पञ्चानां पृथिव्यादीनां पिण्डाण्डे अमृतं यत्र मरणाभावः प्रतिपादितः तत् पञ्चामृतं तन्त्रम् । तदपि कापालिकमेव ।

रूपभेदादितन्त्रपञ्चकं मारणहेतुरिति अवैदिकम् ।

सर्वज्ञानादितन्त्रपञ्चकं कापालिकसिद्धान्तैकदेशिदिगम्बरमतमिति दूरत एव हेयम् ।

पूर्वादिदेवीमतपर्यन्तं दिगम्बरैकदेशक्षपणकमतमिति तत्ततोऽपि दूरत एव हेयम् ।

एवं चतुष्षष्टितन्त्राणि परिज्ञातॄणामपि वञ्चकानि । ऐहिकसिद्धिमात्रपरत्वात् वैदिकमार्गदूराणि । परिज्ञातारोऽपि ऐहिकफलापेक्षया तत्र कतिचन प्रवृत्ताः प्रतारिता एवेति रहस्यम् ।

ननु विप्रलिप्साद्याशयदोषरहितस्य भगवतः परमेश्वरस्य पशुपतेः कांश्चित्प्रति विप्रलम्भकत्वं कथमिति चेत्—

मैवम्—परमेश्वरे परमकारुणिके विप्रलिप्साद्याशयदोषाः न सन्त्येव । किन्तु परमेश्वरः पशुपतिः ब्रह्मक्षत्रवैश्यशूद्रजातीयान् मूर्धा[1]वसिक्ताद्यनुलोमप्रतिलोमजातीयानधिकृत्य तन्त्राणि निर्मितवान् । तत्र त्रैवर्णिकानां चन्द्रकलाविद्यासु वक्ष्यमाणास्वधिकारः । [2]शूद्रादीनां चतुष्षष्टितन्त्रेष्वधिकारः । एवमधिकारभेदमजानानाः अमीमांसकाः व्यामुह्यन्ति । तेषामेवायं दोषः, न पशुपतेः परमेश्वरस्येति ध्येयम् ।

चन्द्रकलाविद्याष्टकं श्रीविद्याप्रतिपादकं तन्त्रं—चन्द्रकला, ज्योत्स्नावती, कलानिधिः, कुलार्णवम्, कुलेश्वरी, भुवनेश्वरी, बार्हस्पत्यं, दूर्वासमतं चेति । अस्मिन् तन्त्राष्टके त्रैवर्णिकानां शूद्रादीनां च अधिकारोऽस्ति । तत्र ब्राह्मणादीनधिकृत्य सव्यमार्गेण प्रादक्षिण्येन सर्वोऽप्यनुष्ठानकलापः प्रतिपादितः । शूद्रादीनधिकृत्य अपसव्यमार्गेण वामाचारो निरूपितः ।

शुभागमतन्त्रपञ्चके वैदिकमार्गेणैव अनुष्ठानकलापो निरूपितः । अयं शुभागमपञ्चकनिरूपितो मार्गः वसिष्ठसनकशुकसनन्दनसनत्कुमारैः पञ्चभिः मुनिभिः प्रदर्शितः । अयमेव समयाचार इति व्यवह्रियते । तथैवास्माभिरपि शुभागमपञ्चकानुसारेण समयमतमवलम्ब्यैव भगवत्पादमतमनुसृत्य व्याख्या रचिता । चन्द्रकलाविद्याष्टकं तु कुलसमयानुसारित्वेन मिश्रकमित्युच्यते विद्वद्भिः । चतुष्षष्टितन्त्राणि कुलमार्ग एव— 'मिश्रकं कौलमार्गं च परित्याज्यं हि शाङ्करि ॥'

1. मूर्धाभिषिक्त. 2. शूद्राणां सङ्कीर्णानां च.

इति ईश्वरवचनात् मिश्रकमतं कौलमार्गं च परित्याज्यम्। कौलैः मृग्यते अवलम्ब्यत इति कौलमार्गः कौलमतम्। कर्मणि घञ्। अतश्च शुभागमपञ्चकमेव वैदिकैरादरणीयम्। केवलसमयमार्गप्रदर्शन-परत्वात्। समयमार्गस्वरूपं तु 'तवाधारे मूले सह समयया' (श्लो. ४१) इत्यादिश्लोकव्याख्यानावसरे निपुणतरमुपपादयिष्यामः।

तत्र शुभागमपञ्चके षोडशनित्यानां प्रतिपादनं मूलविद्यायामन्तर्भावमङ्गीकृत्य अङ्गतया। चक्रविद्यायां अङ्गतयैवान्तर्भावः कथितः। अत एव चतुष्षष्टिविद्यान्तर्भूतायां चन्द्रज्ञानविद्यायां षोडशनित्याः प्रधानत्वेन प्रतिपादिता इति, तत्प्रतिपादकं तन्त्रं कौलमार्गः, अयं तु समयमार्ग इति भेदः।

अत्रेदमनुसन्धेयम्—शुभागमपञ्चकं नाम वासिष्ठसंहिता, सनकसंहिता, शुकसंहिता, सनन्दन-संहिता, सनत्कुमारसंहिता, इति पञ्च संहिताः शुभागमपञ्चकम्। तत्र वसिष्ठसंहितायां देवीं प्रति ईश्वरवचने वसिष्ठेन शक्तिर्बोधिता। यथा—

श्रृणु देवि प्रवक्ष्यामि नित्याषोडशकं तव*।
न कस्यचिन्मयाऽऽख्यातं सर्वतन्त्रेषु गोपितम्॥
तत्रादौ प्रथमा नित्या महात्रिपुरसुन्दरी।
ततः कामेश्वरी नित्या नित्या च भगमालिनी।
नित्यक्लिन्ना तथा चैव भेरुण्डा वह्निवासिनी।
महा[1] विद्ये[वज्रे]श्वरी रौद्री त्वरिता कुलसुन्दरी॥
नित्या नीलपताका च विजया सर्वमङ्गला।
ज्वालामालिनिचिद्रूपाः एता नित्यास्तु षोडश॥
प्रतिपत्प्रभृति देव्याः पौर्णमास्यन्तमर्चयेत्।
एकादिवृद्ध्या हान्या च दर्शान्तं देवि विग्रहम्॥

एतच्च षोडशनित्यानां षोडशतिथ्यात्मकत्वं उत्तरश्लोके निरूप्यते।

इदानीं षोडशनित्यानां श्रीचक्रे अङ्गतया अन्तर्भावो निरूप्यते—षोडशनित्यास्तु अष्टवर्गात्मकतया अष्टदलपद्मे अष्टपत्रेषु स्थिताः यथाक्रमं अष्टकोणचक्रे प्रागादिकोणमारभ्य ऐकैकस्मिन् कोणे द्विकंद्विकमन्तर्भूतम्। एवमष्टद्विकानि अष्टकोणेषु अन्तर्भूतानि। एता एव नित्याः षोडशस्वरात्मकतया षोडशदलपद्मे स्थिताः द्विदशारेऽन्तर्भूताः। एतासां नित्यानां मध्ये प्रथमं नित्याद्वयं त्रिकोण-

---

* 'षोडशकं नवम्' 'षोडशिकार्णवं तव' इत्यपि पाठान्तरे.　[1]विश्वेश्वरी.

बिन्दुरूपेण स्थितम्। अवशिष्टास्तु चतुर्दश नित्याः मन्वश्रे अन्तर्भूताः। मेखलात्रयभूपुरत्रये बैन्दवत्रिकोणयोरन्तर्भूते। एवं नित्यानां चक्रे अन्तर्भावः। इममेवान्तर्भावं मेरुप्रस्तारमाहुः। अत एव चन्द्रकलाविद्यायाः चक्रविद्यायाः अङ्गत्वं नित्यानां सिद्धम्।

सनन्दनसंहितायां- ऋषीन् प्रति सनन्दनवचनम्—एतास्तु षोडशनित्याः चन्द्रकलायाः चक्रविद्याया अङ्गभूताः। एताश्च षोडशनित्याः स्वरात्मकाः पञ्चदशाक्षरीमन्त्रगत 'ए' कारादिभूत 'अ' कारविसर्गात्मक 'स' काराभ्यां सङ्गृहीताः जीवकलारूपाः बैन्दवस्थाने स्थापिताः तत्रैव अन्तर्भूताः। कादयो मावसानाः पाशाङ्कुशबीजयुक्तास्सन्तः अष्टारे दशकोणद्वये च अन्तर्भूताः। शिष्टास्तु यकारादयो नव वर्णाः द्विरावृत्त्या मन्वश्रे चतुर्दशकोणेषु चतुर्दश अन्तर्भूताः, शिष्टं वर्णचतुष्टयं शिवचक्रचतुष्टयेऽन्तर्भूतम्। इममेव कैलासप्रस्तारमाहुः। एवं नित्यानां चक्रविद्याया अङ्गत्वं प्रतिपादितम्।

सनत्कुमारसंहितायामपि चक्रविद्यायां षोडशनित्यानां अङ्गत्वं प्रतिपादितम्। यथा सनत्कुमारवचनम्-श्रीचक्रस्याङ्गभूताः नित्याः वशिन्यादिभिः द्विकं द्विकं मेलयित्वा बैन्दवं त्रिकोणं विहाय अष्टसु कोणेष्वन्तर्भाव्याः। मध्ये त्रिपुरसुन्दरी अन्तर्भाव्या। अष्टवर्गास्तु अष्ट वशिन्यादयः, षोडश नित्याः, द्वादश योगिन्यः, चतस्रो गन्धाकर्षिण्यादयः—एवं चतुश्चत्वारिंशत्। अत्र एकां शक्तिं विहाय त्रयश्चत्वारिंशत्कोणेषु त्रयश्चत्वारिंशद्देवता अन्तर्भाव्याः, एकां त्रिपुरसुन्दरीं बैन्दवस्थानादधस्तात्, गन्धाकर्षिण्यादयस्तु चतुर्द्वारेषु इति नित्यानां अङ्गत्वं प्रतिपादितम्। इममेव भूप्रस्तारमाहुः। अष्टानां वशिन्यादीनां द्वादशयोगिनीनां गन्धाकर्षिण्यादीनां नामधेयानि 'सवित्रीभिर्वाचाम्' (श्लो. १७) इत्यादिश्लोकव्याख्यानावसरे कथितानि ॥ ३१ ॥

## सौभाग्यवर्धनी

सौभाग्यमहिमानमभिधायाग्रे परदेवताया मन्त्रं कादिमतस्वतन्त्रानुसारेणोद्धर्तुं स्वतन्त्रमहिमानमाह - **चतुःषष्ट्येति**। चतुःषष्टितन्त्रैः सकलं त्रिभुवनमभिसंधाय समस्तलोकं वशीकृत्य; कीदृशैः? तत्तत्सिद्धिप्रसभपरतन्त्रैः; तासु तासु सिद्धिषु हठात्परतन्त्राणि; क्वचिद्धर्मः, क्वचिदर्थः, क्वचित्कामः, क्वचिन्मोक्ष इत्येकैकपुरुषार्थप्रदोपासनानिदर्शकैः तैः, तेषु सकलपुरुषार्थसिद्धिर्नास्तीत्यर्थः। पुनस्तव निर्बन्धादखिलपुरुषार्थैकघटनास्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरत् अवतारितवान्। "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्", इति चङि कृते, "चङि" इति द्वित्वे च कृते, "सन्वल्लघुनि चङ्परेऽनग्लोपे" इति सन्वद्भावे कृते, "सन्यतः" इतीत्वे कृते, "दीर्घो लघोः" इति दीर्घत्वे च कृते, "इतश्च" इति तिप इकारलोपे चातीतरदिति लुङि रूपम्। त्वया यानि तन्त्राणि चतुःषष्टिसंख्याकानि कृतानि, तानि सकलपुरुषार्थसाधनप्रकाशानि न भवन्ति; तन्त्रमेकं तथा अवतारय, यथा सकलपुरुषार्थसाधनं

भवतीति देव्या निर्बन्धे कृते स्वतन्त्रं कादिमताख्यमवतारयामास पशुपतिः। अन्यानि यानि तन्त्राणि अन्योन्यं सापेक्षाणि। इदं तन्त्रमन्यानपेक्षम्। एतावता अनादिसिद्धमेवैतत्तन्त्रं मन्तव्यमिति ॥ ३१ ॥

## अरुणामोदिनी

भगवत्याः भक्तवात्सल्यमेव प्रपञ्चयति - चतुःषष्ट्येति। हे देवि! ताश्च ताः सिद्धयश्च तत्तत्सिद्धयः; वश्याकर्षणमोहनोच्चाटनादयः। तेषां प्रसवे प्रतिपादने परतन्त्रैः वश्याकर्षणाद्यति-तुच्छफलप्रतिपादकैः चतुःषष्ट्या तन्त्रैः चतुःषष्टिसंख्याकैरागमैः। तानि च स्पष्टार्थमुच्यन्ते - "महामायाशम्बरं च योगिनीजालशम्बरम्। तत्त्वशम्बरकं चैव भैरवाष्टकमेव च ॥ बहुरूपाष्टकं चैव यमलाष्टकमेव च। चन्द्रज्ञानं मालिनी च महासंमोहनं तथा ॥ वामजुष्टं महादेवं वातुलं वातुलोत्तरम्। हृद्भेदं तन्त्रभेदं च गुह्यतन्त्रं च कामिकम् ॥ कलावादं कलासारं तथान्यत्कुण्डिकामतम्। मतोत्तरं च वीणाख्यं त्रोतलं त्रोतलोत्तरम् ॥ पञ्चामृतं रूपभेदं भूतोड्डामरमेव च। कुलसारं कुलोड्डीशं कुलचूडामणिस्तथा ॥ सर्वज्ञानोत्तरं चैव महाकाळीमतं तथा। अरुणेशं मोदिनीशं विकुण्ठेश्वरमेव च ॥ पूर्वपश्चिमदक्षं च उत्तरं च निरुत्तरम्। विमलं विमलोत्थं च देवीमतमतः परम् ॥" इति। तेषु प्रतिपाद्यभेदाः लक्ष्मीधरे द्रष्टव्याः। सकलं समस्तं भुवनं लोकमतिसन्धाय वञ्चयित्वा, तेषां वैदिकमार्गदूरवर्तित्वेन लोकप्रतारकत्वादिति भावः। स्थितो वर्तमानः; सिद्ध इवेत्यर्थः। न चैतावता भगवतः परमेश्वरस्य विप्रलम्भकत्वं शङ्कनीयम्। अनुलोमप्रतिलोमजात्युद्देशेन भगवता निर्मितेषु तेषु भ्रान्त्या अन्येषामपि प्रवृत्तेरिति। पशुपतिः अज्ञानुग्राहकः शिवः। एतेन साधुमार्गे विद्यमाने कुमार्गप्रदर्शकत्वं सूचितम्। पुनर्भूयोऽपि तव लोकानुग्रहदीक्षिताया भगवत्या निर्बन्धाद्वैदिकमार्गानुसारिशास्त्रसर्जनार्थान्निरोधात्; 'ईशानः सर्वविद्यानाम्' इति श्रुतेः तस्य सर्वविद्याकल्पनासामर्थ्यस्य परशक्तिरूपभवदनुग्रहं विना-लाभाद्वैदिकमार्गानुसारैस्त्रैवर्णिकोपयोगितन्त्रप्रकल्पनाविषयात् त्वत्कृतनिर्बन्धादखिलानां पुरुषार्थानामेवैकेषां घटनायां संयोजने स्वतन्त्रं निरवग्रहं समस्तपुरुषार्थसाधकमित्यर्थः। ते शिवाभिधानाया भवत्या इदं वक्ष्यमाणं तन्त्रं मन्त्ररहस्यम्; तत्र शिवशक्तिवर्णयोः उभयोः सद्भावादुभयात्मकत्वं मन्त्रस्य द्रष्टव्यम्। क्षितितलं; भूतलमवातीतरत् अवतारितवान्। अतो न भवत्याः अन्या लोकोपकारिणी करुणावती चोपासनायोग्या च देवता लभ्यत इति भावः। उक्तं च **सकलजननीस्तवे**—

"परानन्दाकारां निरवधिशिवैश्वर्यवपुषं
निराघातज्ञानप्रकृतिमपरिच्छिन्नकरुणाम्।
सवित्रीं भूतानां निरतिशयधामास्पदपदां
भवो वा मोक्षो वा भवतु भवतीमेव भजताम्" ॥ इति ॥ ३१ ॥

## आनन्दगिरीया

ननु ब्रह्मादिभिरुपास्यमाना लोपामुद्रा कामराजविद्या च प्रसिद्धेषु तन्त्रेषु न प्रतीयते चेत्तर्हि कुत्रत्येयं विद्येत्यादिशंकिते, प्रसिद्धतन्त्रेभ्यो विलक्षणं कादितन्त्रं त्वदीयं वर्तते, तत्रेयं विद्या वर्तते इति वक्तुं तदुत्पत्तिप्रकारमाह-**चतुःषष्ट्येति**। हे मातः भगवति,-पशुपतिः ते तन्त्रं अपूर्वं क्षितितलमवातीतरत् क्षितितलेऽवतारयामास, प्रवर्तयामासेति। कस्मात्, त्वन्निर्बन्धात्, आग्रहात्। एकदा एकान्ते वर्तमानो महादेवः परमेश्वर्या निर्बन्धेन विज्ञापितः, " त्वया बहूनि तन्त्राणि कृतानि, तानि धर्माद्येकैकमात्रपुरुषार्थप्रतिपादकानीति, तत्तदर्थप्रतिपादने स्वातन्त्र्येऽपि तदन्यप्रतिपादने तन्त्रान्तरसापेक्षतया तन्त्रान्तरपरतन्त्राणि वर्तन्ते, इत्येकं तन्त्रमेतादृशं रचय, यत्सर्वार्थप्रतिपादनेऽन्यानपेक्षमेव क्षमं, एवं प्रार्थितो भगवान् कादिमतमवतारयामासेति। तस्य तन्त्रान्तरेभ्य उत्कर्षमाह-अखिलपुरुषार्थैकघटनास्वतन्त्रं, अखिला ये पुरुषार्थाः धर्मादयः, तेषां या एकघटना एकवारेण सर्वेषां पुरुषार्थानां प्रतिपादनं दानं तत्र स्वतन्त्रमन्यानपेक्षम्। किंलक्षणः पशुपतिः, चतुःषष्ट्या तन्त्रैरशिवप्रणीतैः शाबरागमैः सकलं भुवनं लोकं अभिसन्धाय, अयं लोक एतैः सर्वैरपि तन्त्रैः अर्थान्न जानातीत्यभिप्रायंगोचरीकृत्य वशंवदीकृत्य स्थितः। एषामपकर्षमाह-किं लक्षणैः, तत्तत्सिद्धिप्रसवपरतन्त्रैः सा सा या सिद्धिः एकैकपुरुषार्थप्रदोपासना तस्याः प्रसवः प्रतिपादनं समर्पणं, तत्रान्यपरतन्त्रैः इतरसापेक्षैः, धर्मप्रतिपादकेन मोक्षप्रतिपादने न क्रियमाणे दर्शनान्तरस्य मोक्षप्रतिपादकस्यापेक्षणात्, तदधीनैरित्यर्थः। चतुःषष्टिरपि तन्त्राणि, एकैकपुरुषार्थप्रदोपासनापराणि, धर्मादीनामेकैकेषामेव प्रतिपादनादेषु तन्त्रेषु सकलपुरुषार्थप्रदोपासना न प्रतिप्राप्यत इति भावः॥ चतुःषष्ट्या तन्त्रैतिपद्यस्य रहस्यार्थः—चतुःषष्टिभूतलिपिका मातृका कलासहितं भुवनं मातृकामयं कृत्वा क्षितितलं धरातलं यावत्। त्वत्प्रसादात्सिद्धिं प्राप्तः। अथवा सिद्धिप्रसवपरतन्त्रः सिद्ध्या प्रणवशीलं परमुत्कृष्टं तन्त्रं सारभूतं त्वयि निर्बन्धो ध्यानाभ्यासः। चतुर्वर्गाणां सिद्धिसंपादकत्वं तथाऽवतारयामास। तत् स्वतन्त्रं नाम तन्त्रमिति। तथा च चतुःषष्टिमातृकामयं भुवनं निष्पाद्य चतुःषष्टियोगिनीमयं चतुष्षष्टितन्त्रं, तेषां तासां च त्वमेवाधिष्ठायिनी निखिलतन्त्रसारभूतमिति॥ ३१॥

## तात्पर्यदीपिनी

हे मातः, पशुपतिः चतुषष्ट्या तन्त्रैः सकलं भुवनमभिसन्धायापि तत्तत्सिद्धिप्रसवपरतन्त्रः स्थितः। पुनः त्वन्निर्बन्ध आग्रहः तस्मादखिलपुरुषार्थैकघटनास्वतन्त्रं इदं ते तन्त्रं, पराधीनमिदं चतुष्षष्ट्यात्मकं, तन्त्रोपयोगियोगिनीचक्रं त्वया पृथिव्यामवतारितं, शिवस्यानुग्रहार्थमिति शेषः॥ ३१॥

## पदार्थचन्द्रिका

इदानीं भवानीच्छानुविधायि पशुपतिकर्तृकदेवीमाहात्म्यप्रधानागमावतरणमाह—**चतुःषष्ट्येति**।

पशून् जीवान् तत्तत्कामितदानेन पातीति पशुपतिः, महादेवः, चतुःषष्ट्या चतुरधिकया षष्ट्या तन्त्रैरागमैः सकलं भुवनं अभिसन्धाय अभिप्रेत्य तत्तत्सिद्धिनिष्पत्तिपरवशः स्थितः, पुनः पश्चात् त्वन्निर्बन्धात् त्वत्प्रेरणाधिक्यात् अखिलपुरुषार्थैकघटनास्वतन्त्रं समस्तपुरुषार्थानां एका मुख्या या घटना तत्र स्वतन्त्रं, अन्यनिरपेक्षं ते तन्त्रं त्वदुपासनाप्रधानं आगममवातीतरत्। क्षितितलमवतारितवान्। ण्यन्तत्वात् द्विकर्मकता तृधातोः। अप्रसिद्धत्वादिदमाप्नोति ॥ ३१ ॥

## डिण्डिमभाष्यम्

एवं सकललोकपूज्यायाः परमेश्वर्याः यत्प्रातिस्विकमनादिसिद्धं सर्वशास्त्रोत्तमं त्रैपुरदर्शनं मयेश्वराभिधानं संवित्सिद्धान्तापरपर्यायकमात्मप्रत्यभिज्ञानरूपं यदस्ति तस्यैतच्छास्त्रेभ्य आधिक्यरूपोऽतिमहानुत्कर्षो न प्रकाश्यते चेत् तदुपासनायामितिकर्तव्यताकलापपरिज्ञानं कुत इति तच्छास्त्रप्रख्यापने हेतुमाह— "ईशानः सर्वविद्यानामीश्वरः", इति श्रुत्यर्थनिश्चयाद् विद्यानामादिवक्तृत्वान्महेश्वर एव सर्वविद्याकदम्बप्रणेता, स हि प्रथमं तत्रैव त्रैपुरसिद्धान्तं कृत्वा गोप्यं चतुःषष्ट्या तन्त्रैः सकलभुवनमभिसन्धाय वञ्चयित्वा किञ्च केवलभोगप्रधानैर्गमनागमनकारिभिः दुःखावसानैः दुःखकर्मबलैस्तैः शास्त्रैः करणभूतैस्तत्सिद्धिप्रसवपरतन्त्रैः तेषां तेषां शास्त्राणां वश्याकर्षणमोहनोच्चाटनादि फल्गु फलानि सम्पाद्य तत्प्रसवेन तत्फलसम्पादनेन स्वयमपि परतन्त्रः संसारव्यामिमान् पशुपतिः स्थितः। तत्र चतुःषष्टितन्त्राणि कानि इति जिज्ञासायामुच्यते-महामायाशंबर, योगिनीजालशंबर, तत्वशंबर, भैरवाष्टकं तन्त्रं, सर्वज्ञानोत्तरं, महापिचुमतं, महालक्ष्मीमतं, सिद्धयोगीश्वरीमतं, कुरूपिकामतं, सर्ववीरमतं, विमलामतं, पूर्वाम्नायं, दक्षिणाम्नायं, पश्चिमाम्नायं, उत्तराम्नायं, अनुत्तराम्नायं, ऊर्ध्वाम्नायं, वीरावलीमतं, अरुणेशमतं, विशुद्धेश्वरमतमेवमादीनि तन्त्राणि तन्त्राचार्यपरम्परया ज्ञातव्यानि। एवं बाह्यशास्त्रैः लोकं मोहयित्वा स्वस्यानन्दानुभवाय त्वदीयं शास्त्रं भोगमोक्षप्रदं ललिता संहितालिता ज्ञानललिता परिशिष्टानन्दतन्त्रमहाकुलचूडामणिमहावीरावलीतन्त्रप्रतिपाद्यमानप्रमेयजालमयं तव शास्त्रेष्वाभ्यन्तरं गोपयित्वा स्थितः। त्वं खलु सर्वानुग्राहिणी करुणात्मिका शक्तिः। तस्यैकस्य शंभोः स्वशास्त्रामृतपानमक्षममाणा, "एकः स्वादु न भुञ्जीत," इति न्यायादन्येषामपि शिवावेशवतां महात्मनां रक्षणाय त्वया तस्य निर्बन्धः कृतः, मम महातन्त्रं प्रकाशय, सर्वेऽपि भोगमोक्षाधिकारिणः स्युरिति। अखिलपुरुषार्थैकघटनास्वतन्त्रं सर्वेषामपि पुरुषार्थानामेकघटनायां मुख्यप्रयोजनसम्पादने स्वतन्त्रं परतन्त्रताविरहितं, ते तन्त्रं तव शास्त्रं क्षितितलं अवातीतरत् अवतरितवान्। अव पूर्वस्य, "तरतेर्हेतुमति च" इति णिच्, लुङि, चङि रूपम्। यतोऽत्यन्तगोपनीयं शास्त्रं त्वदाज्ञापरतन्त्रो भूत्वा सर्वत्र परशिवः प्रकाशितवान्, अत एव त्वदाज्ञालङ्घनसामर्थ्यं परशिवस्यापि नास्ति, किं पुनर्विरिञ्चिप्रभृतीनां त्वत्सृष्टानां देवतानामिति भावः ॥ ३१ ॥

## गोपालसुन्दरी

चतुःषष्टयेति—चतुःषष्टिसंख्याकैः तन्त्रैः शास्त्रैः, सकलभुवनमभिसन्धाय वञ्चयित्वा, पशुपतिः शिवः स्थितः, तत्सिद्धिप्रसवानां परतन्त्रैरुपदेशकैः त्वन्निर्बन्धात् पुनः ते तव, तन्त्रं शास्त्रं, क्षितितलमवातीतरत् अवतारयामास। कीदृशं? अखिलपुरुषार्थानां अर्थधर्मकाममोक्षाणामेकघटनायां मुख्यप्रयोजनसाधने स्वतन्त्रमन्यानपेक्षमित्यर्थः। विष्णुपक्षेऽप्येवम्॥

## आनन्दलहरीटीका

इदानीं श्रीविद्यामन्त्रोद्धारं करिष्यन् तत्प्रतिपादकं तन्त्रं स्तौति - चतुःषष्टयेति। पशुपतिर्महादेवः चतुःषष्टिसंख्याकैस्तन्त्रैः नानादेवतोपासनशास्त्रैः सकलं भुवनमतिसन्धाय वंचयित्वा प्रतार्यैव स्थितः। वस्तुतस्तु तस्य महेश्वरस्य विप्रलिप्सादिरूपपुरुषदोषाभावान्न प्रतारकत्वम्। किन्तु तेन त्रैवर्णिकानां शूद्रप्रतिलोमादीनां च ऐहिकामुष्मिकसाधारणहिताय तन्त्राणि कृतानि। तत्र तत्फललोभेन प्रवृत्ता अनधिकारिणः स्वयमेव तन्त्रैः प्रतारिता भवन्तीति बोध्यम्। कीदृशैस्तन्त्रैः। तत्तत्सिद्धीनां कवित्वपाण्डित्यैश्वर्यादिफलरूपाणां प्रसवे जनने परतन्त्रैः, प्रकृष्टजनने यद्वा तत्रापि परतन्त्रैः पराधीनैः तन्त्रान्तरसापेक्षैः इत्यर्थः। एकतन्त्रे सर्वनिर्वाहाभावात्। परतन्त्र इति पाठे शिवविशेषणं, आसक्त इत्यर्थः। त्वन्निर्बन्धात् सकलपुरुषार्थसाधकमेकं तन्त्रं वदेति पुनः पुनः प्रश्नरूपात् तव यत्नादित्यर्थः। त्व त्वत् पञ्चम्यन्तं, तेन त्वद्रूपाद्धेतोरित्यर्थः इति कश्चित्। अखिलानां सर्वेषामपि पुरुषार्थानां धर्मार्थकाममोक्षाणां एका मुख्या या घटना निर्मितिस्तत्र स्वतन्त्रं अन्यनिरपेक्षम्। ज्ञानार्णवादिरूपं कादिमते प्रसिद्धं स्वतन्त्राख्यं तन्त्रं वा क्षितितलमवातीतरत् अवतारयामास, क्षितितले अतिगोप्यं यत्तव तन्त्रं अवतीर्णं, तत्रापि त्वदनुग्रह एव हेतुरिति भावः। चतुःषष्टितन्त्राण्युक्तानि वामकेश्वरतन्त्रे "चतुःषष्टिश्च तन्त्राणि मातॄणामुत्तमानि च। महामायाशांबरं च योगिनीजालशांबरम्॥ तत्वशंबरकं चैव भैरवाष्टकमेव च। बहुरूपाष्टकं चैव यामलाष्टकमेव च॥ चन्द्रज्ञानं मालिनी च महासंमोहनं तथा॥ वामजुष्टं महादेवं वातुलं वातुलोत्तरम्। हृद्भेदं तन्त्रभेदञ्च गुह्यतन्त्रं च कामिकम्। कलावादं कलासारं तथान्यत्कुण्डिकामतम्॥ मतोत्तरं च वीणाख्यं त्रोतलं त्रोतलोत्तरम्। पञ्चामृतं रूपभेदं भूतोड्डामरमेव च॥ कुलसारं कुलोद्देशं कुलचूडामणिं तथा। सर्वज्ञानोत्तमं चैव महाकालीमतं तथा॥ अरुणेशं मोदिनीशं त्रिकुण्डीश्वरमेव च। पूर्व-पश्चिम-दक्षं च उत्तरं च निरुत्तरम्॥ विमलं विमलोत्थं च देवीमतमतःपर"मिति। तत्र (१) महामायाशंबरं तन्त्रं अन्यस्मिन्पदार्थे अन्यथा प्रतिभानरूपं मायाप्रपञ्चनोपायप्रतिपादकमैन्द्रजालिकरूपम्। (२) योगिनीजालशंबरं तन्त्रं योगिनीजालदर्शनोपायप्रतिपादकम् (३) तत्वशंबरं इन्द्रजालविद्याविशेषः; पृथिव्यादितत्वानामन्यत्रान्यत्रान्यबोधोपायप्रतिपादकम्। (४-११) भैरवाष्टकं यथा—सिद्धिभैरवतन्त्रं, मायिकभैरवतन्त्रं, कालाग्निभैरवतन्त्रं, कंकालभैरवतन्त्रं, शक्ति-

भैरवतन्त्रं, योगिनीभैरवतन्त्रं, महाभैरवतन्त्रं, भैरवनाथतन्त्रं इति एतान्यष्टौ तन्त्राणि कापालिकमत-प्रतिपादकानि। बहुरूपा शक्तिः तत्प्रतिपादकतन्त्राणामष्टानां गणो बहुरूपाष्टकम् यथा (१२-१९) ब्राह्मीतन्त्रं, माहेश्वरी तन्त्रं, कौमारीतन्त्रं, वैष्णवी तन्त्रं, वाराहीतन्त्रं, इन्द्राणीतन्त्रं, चामुण्डातन्त्रं, शिवदूतीतन्त्रं चेति। यमला नाम सिद्धाम्बा। तत् प्रतिपादकानि तन्त्राणि रुद्रयामलादीन्यष्टौ (२०-२७)। शाक्ततन्त्रतया चतुःषष्टितन्त्राणामपि यामलतया व्यवहारः। (२८) चन्द्रज्ञानतन्त्रं ऐश्वर्यादिषोडशनित्या-प्रतिपादकं, कापालिकमतदर्शकं च। (२९) मालिनीतन्त्रं समुद्रयानोपायप्रतिपादकम्। (३०) महासंमोहनं जाग्रतामपि निद्रितोपायप्रतिपादकम्। (३१) वामजुष्टं वामकेश्वरतन्त्रं चतुःशतीत्यपि कथ्यते। (३२) महादेवतन्त्रं वटुकादिसिद्धिकुलाचारप्रदर्शकम्। (३३-३५) वातुलं, वातुलोत्तरं, कामिकं चेति तन्त्रत्रयं क्षेत्रकर्षणादिविधिप्रतिपादकम्। (३६) हृद्भेदतन्त्रं कापालिकाचारप्रदर्शकम्। (३७-३८) तन्त्रभेद-गुह्यतन्त्रयोः प्रकाशं रहस्यं वा परकृतमन्त्रतन्त्रप्रयोगाणां परावृत्त्युपाया दर्शिताः। (३९) कलावादं कामशास्त्रं वात्स्यायनमतम्। (४०) कलासारं रूपादिवृद्ध्युपायप्रतिपादकम्। (४१) कुण्डिकामतं गुटिकापानपात्रम्। (४२) मतोत्तरतन्त्रं रससिद्धिप्रतिपादकम्। (४३) वीणा-तन्त्रं वीणानाम योगिनी, संभोगयक्षिणीत्यस्या नामान्तरं, तस्याः साधनोपायदर्शकम्। (४४) त्रोतलतन्त्रे गुटिकाञ्जनपादुकासिद्धिः। (४५) त्रोतलोत्तरतन्त्रे चतुःषष्टिसहस्रसंख्ययोगिनीनां दर्शनोपायः। (४६) पञ्चामृततन्त्रं पृथिव्यादिपञ्चभूतानां साधनेन मरणाभावप्रतिपादकं कापालिकतन्त्रम्। (४७-५१) रूपभेदादि पञ्चतन्त्राण्युच्चाटनादिप्रयोगप्रतिपादकानि। (५२-५६) सर्वज्ञानादितन्त्रपञ्चकं कापालिक-सिद्धान्तैकदेशिदिगंबरमताचारप्रवर्तकम्। (५७-६४) पूर्वतन्त्रादि देवीमतपर्यन्तं तन्त्राष्टकं दिगंबरैक-देशिक्षपणकमताचारप्रदर्शकम्॥ एतानि तन्त्राणि शिवेन तत्तत्सिद्ध्युपायबोधकानि प्रणीतानि। वैदिककर्मसु प्रतिलोमसंकरादीनामनधिकारात्, अत्र सर्वेषामेव तत्फलार्थिनां तत्तत्कर्मणि अधिकारोऽस्तीति परमकारुणिकस्याशयः। एतानि तत्तत्कर्माणि तत्तत्फलसाधनानि इत्यंशे प्रमाणान्येव। तत्र वैदिकविधि-निषेधविषयाणां तत्तत्फलसिद्धिरधर्माभावश्च। लोभात्प्रवृत्तानां विधिनिषेधविषयीभूतानां त्रैवर्णिकानां तत्फलसिद्धिः प्रत्यवायोऽभिजायते। तद्दोषसहिष्णोरितिन्यायात्। अत एव लोभेन प्रतारिता भवन्ति, न तु परमेश्वरस्य प्रतारकत्वमित्युक्तं प्राक्। एतानि चतुःषष्टितन्त्राणि कुलमार्गपरत्वात् कुलतन्त्राणी-त्युच्यन्ते। शुभागमनं नाम तन्त्रपञ्चकं वैदिकमार्गमात्रपरत्वात् समयाचार इत्युच्यते। यथा वसिष्ठसंहिता सनकसंहिता सनन्दनसंहिता सनत्कुमारसंहिता शुकसंहिता चेति। एतानि तन्त्राणि षोडशनित्याप्रतिपादकतया श्रीविद्याविषयाणि। चतुःषष्टितन्त्रबहिर्भूतानि श्रीविद्याप्रतिपादकानि कुल-वैदिकमार्गानुसारीणि तन्त्राणि मिश्रकाणीत्युच्यन्ते। यथा चन्द्रकलातन्त्रं, ज्ञानार्णवतन्त्रं, कुलेश्वरीतन्त्रं, बार्हस्पत्यतन्त्रं, भुवनेश्वरीतन्त्रं, दुर्वासोमततन्त्रं, दक्षिणामूर्तिसंहिता चेत्यादि मिश्रकतन्त्राणि। अत्र

कुलतन्त्रमिश्रकतन्त्रेषु उक्तानि वेदनिषिद्धानि त्रैवर्णिकैर्न कार्याणि। "मिश्रकं कौलमार्गं च परित्याज्यं हि शंकरि" इति वचनात् ॥ ३१ ॥

**शिवश्शक्तिः कामः क्षितिरथ रविश्शीतकिरणः**
**स्मरो हंसश्शक्रस्तदनु च परामारहरयः।**
**अमी हृल्लेखाभिस्तिसृभिरवसानेषु घटिताः**
**भजन्ते वर्णास्ते तव जननि नामावयवताम् ॥ ३२ ॥**

சிவஶ்ஶக்தி: காம: க்ஷிதிரத ரவிஶ்ஶீதகிரண:
1 1 1 1 2 1 1
ஸ்மரோ ஹம்ஸஶ்ஶக்ரஸ்ததனு ச பராமாரஹரய:;
1 1 3 1 1
அமீ ஹ்ருல்லேகாபிஸ்திஸ்ருபிரவஸானேஷு கடிதா:
1 4 1 4 4 1 1
பஜந்தே வர்ணாஸ்தே தவஜனனி நாமாவயவதாம்.
4 1 1 1 1

नित्ये! शिव, शक्ति, काम, क्षिति एवं रवि, शीतकिरण स्मर हंस
शक्र और परा, मार, हरी इन बारहवर्णों के अवतंस-
तीन स्थलों पर हृल्लेखाएँ योजित करने पर, माते!
तेरे महामंत्र के अवयव अतिपावन हैं बन जाते ॥

## लक्ष्मीधरा

अथ निखिलपुरुषार्थैकघटनास्वतन्त्रं भगवत्यास्तन्त्रं पशुपतिः क्षितितलमवातीतरदित्युक्तं पूर्वश्लोके। तदेव तन्त्रं प्रस्तौति **शिवश्शक्तिरिति**—शिवः ककारः। शक्तिः एकारः। कामः ईकारः। क्षितिः लकारः। अथशब्दः अवसानद्योतकः। रविः हकारः। शीतकिरणः सकारः। स्मरः ककारः। हंसः हकारः। शक्रः लकारः। 'तदनु च' इति अवसानं द्योतयति। परा सकारः। मारः ककारः। हरिः लकारः। अमी द्वादश वर्णाः। हृल्लेखाभिः ह्रीङ्कारैः, तिसृभिः त्रित्वविशिष्टैः, अवसानेषु विरामस्थानेषु चतुष्कपञ्चकत्रिकाणामुपरि, घटिताः योजिताः, भजन्ते प्राप्नुवन्ति। वर्णाः ते पूर्वोक्ताः ककारादयः, तव भवत्याः, जननि! हे मातः! नामावयवतां नाम्नः त्रिपुरसुन्दरीमन्त्रस्य अवयवतां प्रतीकत्वम्।

अत्रेत्थं पदयोजना—हे जननि! शिवः शक्तिः कामः क्षितिः अथ रविः शीतकिरणः स्मरः हंसः शक्रः तदनु च परामारहरयः इत्येते वर्णाः तिसृभिः हृल्लेखाभिः अवसानेषु घटिताः ते वर्णाः तव नामावयवतां भजन्ते।

अत्रेदमनुसन्धेयम्- शिवः शक्तिः कामः क्षितिरिति वर्णचतुष्टयं आग्नेयं खण्डम्। रविः शीतकिरणः स्मरः हंसः शक्र इति वर्णपञ्चकं सौरं खण्डम्। उभयोः खण्डयोः मध्ये रुद्रग्रन्थि-

स्थानीयं हृल्लेखाबीजम्। परामारहस्य इति वर्णत्रयेण सौम्यं खण्डं निरूपितम्। सौम्यसौरखण्डयोर्मध्ये विष्णुग्रन्थिस्थानीयं भुवनेश्वरीबीजम्। तुरीयमेकाक्षरं चन्द्रकलाखण्डम्। सौम्यचन्द्रकलाखण्डयोर्मध्ये ब्रह्मग्रन्थिस्थानीयं हृल्लेखाबीजम्। चन्द्रकलाखण्डं तु गुरूपदेशवशादवगन्तव्यमिति न प्रकाशितम्। अत एव— 'त्रिखण्डो मातृकामन्त्र: - सोमसूर्यानलात्मक: ॥' इति। अवरोहक्रमेणेति शेष:। 'सोमसूर्यानलात्मक:' इत्येतावन्मात्रे वक्तव्ये त्रिखण्ड इत्युक्ति: ज्ञानशक्तीच्छाशक्तिक्रियाशक्त्यात्मकं खण्डत्रयमिति जाग्रत्स्वप्नसुषुप्त्यवस्थात्रयात्मकं, विश्वतैजसप्राज्ञवृत्तित्रयात्मकम्, तमोरजस्सत्त्वगुणात्मकं, इत्येवंपरा। एतच्च पुरस्तात्प्रपञ्चयिष्याम:।

अत्र शिवश्शक्तिरित्यादिशब्दा: क्वचित् लक्षितलक्षणया क्वचित् लक्षणया ककारादिवर्णपरा:। तथाहि - त्रिपुरसुन्दरीमन्त्रस्य षोडशवर्णा:। ते च षोडशवर्णा: षोडशनित्यात्मतया स्थिता:। अत्र षोडश्या: कलाया: नित्यात्वव्यपदेश: चन्द्रकलात्वरूपसाम्यात्। सा च परा कला चिदेकरसा। तस्याश्छाया विशुद्धिचक्रे षोडशारे कलात्मतया भ्रमतीति* रहस्यम्। सा प्रधानं प्रकृतिश्च। अस्या अङ्गभूता: पञ्चदश नित्या इति पूर्वश्लोके प्रतिपादितम्।

यद्यपि ककारादय: श्रूयमाणा: पञ्चदश वर्णा: संप्रदायतो ज्ञातव्या:; एको वर्ण: षोडशकलात्मक: [1]प्रधानभूत इति, यद्यपि षोडशी कला गुरुमुखादेव अवगन्तव्या; तथापि तस्या अप्रतिपादने व्याख्यानं सापेक्षमेव। अतोऽनुपादेयं स्यादेवेति सा कला निरूप्यते।

न च 'सच्छिष्यायोपदेष्टव्या गुरुभक्ताय सा कला ॥' इति शिष्याणामेवोपदेष्टव्या नान्येषामिति वाच्यम्। ये तु मदीयं ग्रन्थं दृष्ट्वा तां कलां जानन्ति ते मच्छिष्या एवेत्यस्माकमनुग्रह:।

ननु पादवन्दन—पादोपसङ्ग्रहण—हस्तमस्तकसंयोगादे: अङ्गकलापस्य शिष्यत्वापादकस्याभावे कथं तेषु शिष्यत्वमिति चेत्; सत्यम्, अस्मदीयग्रन्थं दृष्ट्वा षोडश्या: कलाया: स्वरूपं गुर्वन्तरमुखादेव जानतां शिष्यत्वं मास्तु। ये तु न जानन्ति गुरुमुखादपि तेषामुपदेशो न सम्भाव्यत एव, तदानीं गुर्वेकपरतन्त्रे अस्मिन् मन्त्रे "के वाऽस्माकं गुरव: ?" इति जिज्ञासायामुदयमानायां तेषां जिज्ञासूनां वर्तमानानां वर्तिष्यमाणानां च वयमेव गुरव इति तेष्वनुग्रह: कृतोऽस्माभि:।

षोडशी कला नाम शकार - रेफ - ईकार - बिन्द्वन्तो मन्त्र:। एतस्यैव बीजस्य नाम श्रीविद्येति। श्रीबीजात्मिका विद्या श्रीविद्येति रहस्यम्। एवं षोडशनित्यानां प्रकृतिभूता: ककारादय:। ताश्च षोडश नित्या: शुक्लप्रतिपदमारभ्य पौर्णमास्यन्ततिथिरूपा:, कृष्णपक्षप्रतिपदमारभ्य अमावास्यान्ततिथिरूपा:। एता एव चन्द्रकलाभिधाना:। चन्द्रकला एव प्रतिपदादितिथय इति सुप्रसिद्धम्। यथोक्तं ज्योतिश्शास्त्रे—

---

* भ्राजतीति इति पाठ: [1]प्रकृतिभूत इति.

प्रतिपन्नाम विज्ञेया चन्द्रस्य प्रथमा कला ।
द्वितीयाद्या द्वितीयाद्याः पक्षयोश्शुक्लकृष्णयोः ॥ इति ॥

अयमर्थः—चन्द्रस्य प्रथमायाः कलायाः प्रतिपदिति नामधेयम् । सैव कलात्मिका सूर्यमण्डलान्निर्गता । कृष्णपक्षे तु सूर्यमण्डलं प्रविष्टा । एवं शुक्लपक्षे सूर्यमण्डलान्निर्गता द्वितीया कला द्वितीया तिथिः । कृष्णपक्षे तु सूर्यमण्डलं प्रविष्टा द्वितीया कला द्वितीया तिथिरिति । एवं सर्वत्र ऊहनीयम् । अतश्च पञ्चदशकलाव्यवधानं सूर्यचन्द्रयोर्यत्र सा पौर्णमासी । पञ्चदश्यां कलायां सूर्यचन्द्रयोरत्यन्तसंयोगः सा अमावास्येति ज्ञेयम् । अतः कौलमते चन्द्रकलात्मिकानां षोडशानां नित्यानां प्रतिदिनं एकस्या एवानुष्ठानम् । सर्वासां समयिमते । षोडश्याः कलायास्तु पञ्चदशस्वपि तिथिषु अनुष्ठानं सिद्धम्, पञ्चदशानां नित्यानां तत्रैव अन्तर्भावात् ।

अयं च सम्प्रदायक्रमः सम्यगुक्तोऽपि दुर्विज्ञेयं प्रमेयजातमिति विस्पष्टार्थं पुनरुच्यते । प्रतिपदि त्रिपुरसुन्दरीकला ध्येया । द्वितीयायां कामेश्वरीकला । तृतीयायां भगमालिनीकला । चतुर्थ्यां नित्यक्लिन्नाकला उपास्या । पञ्चम्यां भेरुण्डाख्या कला । षष्ठ्यां वह्निवासिनीकला । सप्तम्यां महा[1]विद्ये-[वज्रे]श्वरीकला । अष्टम्यां रौद्रीकला । नवम्यां त्वरिताकला । दशम्यां कुलसुन्दरीकला । एकादश्यां नीलपताकाख्या कला । द्वादश्यां विजयाख्या कला । त्रयोदश्यां सर्वमङ्गळाख्या कला । चतुर्दश्यां ज्वालाख्या कला । पञ्चदश्यां मालिन्याख्या कला । सर्वासु तिथिषु चिद्रूपाख्या कला षोडशी उपास्या । प्रतिपदि या त्रिपुरसुन्दरी कथिता सा चिद्रूपात्मिका न भवति, चिद्रूपात्मिकायाः मूलविद्यायाः भिन्नत्वेन अनुष्ठानात् । मन्त्रभेदश्च—'स मन्त्रः प्रतिपद्येव अनुष्ठेयो न द्वितीयायाम्' इति । त्रिपुरसुन्दरीनित्यायाः नामसाम्यमित्यवगन्तव्यम् ।

एतासां षोडशनित्यानां चन्द्रकलात्मिकानां विशुद्धिचक्रं षोडशारं स्थानम् । तत्र प्रागादिक्रमेण षोडश नित्याः तत्कोणेषु परिवर्तन्ते । तदधस्स्थितद्वादशारे संवित्कमले द्वादशसूर्यमण्डलानि प्रादक्षिण्य-क्रमेण परिवर्तन्ते । तेषां द्वादशानां सूर्याणां द्वादशमासेषु अधिकारः ।

एतच्च सनत्कुमारसंहितायां श्लोकैः सप्तशत्या निरूपितं [2]संक्षेपेणोच्यते—सूर्यचन्द्रयोः देवयान-पितृयानात्मकेडापिङ्गळानाडीमार्गेण अहोरात्रयोः सञ्चरणम् । चन्द्रस्तु वामनाडीमार्गेण सञ्चरन् द्विसप्ततिसहस्रनाडीमार्गं अमृतेन सिञ्चति । सूर्यस्तु दक्षिणनाडीमार्गेण सञ्चरन् तदुत्क्षिप्तान् अमृत-बिन्दून् उपाहरति । यदा चन्द्रसूर्ययोः उभयोः आधारचक्रे समावेशः तदा अमावास्यातिथिरुत्पद्यते । कृष्णपक्षतिथयः ततः उत्पद्यन्ते । अत एव कुण्डलिनीशक्तिः आधारकुण्डे सूर्यकिरणसम्पर्कात् विलीन-चन्द्रमण्डलमध्यगलत्पीयूषपूरिते स्वपिति । स्वापावस्थैव कृष्णपक्ष इत्युच्यते । योगी यदा समाहितचित्तः

1. विश्वेश्वरीकला.  2. तत्तु संक्षेपेणोच्यते.

चन्द्रं चन्द्रस्थाने सूर्यं सूर्यस्थाने वायुना निरोद्धुं क्षमते तदा चन्द्रसूर्यौ निरुद्धौ अमृतसेचनतदाहरणयोः अशक्तौ। तदानीं वायुना प्रेरितेन स्वाधिष्ठानवह्निना शुष्कीभूते अमृतकुण्डे निराहारा कुण्डलिनी सुप्तोत्थिता सती सर्पवत् फूत्कारं कुर्वती ग्रन्थित्रयं भित्वा सहस्रदलकमलमध्यवर्ति चन्द्रमण्डलं दशति। तस्माद्गलत्पीयूषधाराः आज्ञाचक्रोपरिस्थितचन्द्रमण्डलं आप्लावयन्ति। तस्माद्गलिताभिः अमृतधाराभिः सर्वं देहमाप्लावयन्ति। ततश्च आज्ञाचक्रोपरिस्थितस्य चन्द्रमसः कलाः पञ्चदश नित्याः। ताः पञ्चदश तदधस्स्थितविशुद्धिचक्रमाश्रित्य परिवर्तन्ते। सहस्रदलकमलान्तस्स्थितचन्द्रमण्डलं बैन्दवस्थानम्। तत्कला चिन्मयी आनन्दरूपा आत्मेति गीयते। सैव त्रिपुरसुन्दरी॥

एवं शुक्लपक्ष एव कुण्डलिनीप्रबोधः कर्तुं शक्यते योगीश्वराणां, न तु कृष्णपक्ष इति रहस्यम्। सर्वाः शुक्लपक्षतिथयः पौर्णमासीसंज्ञकाः। सर्वाः कृष्णपक्षतिथयस्तु अमावास्यायां अन्तर्भवन्ति। एकैवामावास्या कृष्णपक्ष इति गीयते। अत एव आधारं अन्धतामिस्रम्। स्वाधिष्ठानं तु सूर्यकिरण-सम्पर्कात् मिश्रलोकः। मणिपूरस्तु अग्निस्थानत्वेऽपि तत्र स्थिते जले सूर्यकिरणप्रतिबिम्बात् मिश्रक एव लोकः। अनाहतं ज्योतिर्लोकः। एवं अनाहतचक्रपर्यन्तं ज्योतिस्तमोमिश्रको लोकः। विशुद्धिचक्रं चान्द्रो लोकः। आज्ञाचक्रं तु चन्द्रस्थानत्वात् सुधालोकः। अनयोर्लोकयोः सूर्यकिरणसम्पर्कात् ज्योत्स्ना नास्ति। सहस्रकमलं तु ज्योत्स्नामय एव लोकः। तत्र स्थितश्चन्द्रो नित्यकलायुक्तः चन्द्रबिम्बं श्रीचक्रम्। कला सादाख्या। अतश्च त्रिकोणं आधारः, अष्टकोणं स्वाधिष्ठानम्, दशारं मणिपूरं, द्वितीयदशारं अनाहतं, चतुर्दशारं विशुद्धिचक्रम्, शिवचक्रचतुष्टयं आज्ञाचक्रं, बिन्दुस्थानं चतुरश्रं सहस्रकमलमिति सिद्धम्। आज्ञाचक्रगतचन्द्रे पञ्चदश कलाः, षोडश्याः कलायाः प्रतिफलनं च। श्रीचक्ररूपचन्द्रबिम्बे एकैव कला, सा परमा कला। मिलित्वा षोडशकलाः। यथा—

षोडशेन्दोः कला भानोः द्विर्द्वादश दशानले।
सा पञ्चाशत्कला ज्ञेया मातृकाचक्ररूपिणी॥ इति॥

एताः पञ्चाशत्कलाः पञ्चाशद्वर्णात्मिकाः पञ्चदशाक्षरीमन्त्रे अन्तर्भूताः। यथा—आदिमेन ककारेण अन्तिमो लकारः प्रत्याहृतः तन्मध्यवर्तिनां वर्णानां ग्राहकः। अयमेव लकारः एकारपूर्ववर्तिना अकारेण प्रत्याहृतः पञ्चाशद्वर्णग्राहकः।

ननु अनेनैव प्रत्याहारग्रहणेन पञ्चाशद्वर्णात्मकमातृकाग्रहणे किमर्थं ककारलकारयोः प्रत्याहारग्रहणप्रयासः? उच्यते—ककारादिलकारान्तानां कलाशब्दवाच्यत्वं गौणम्, व्यञ्जनानां स्वरान् प्रति अङ्गत्वात्; कलानां स्वराणां प्रधानत्वमिति गुणप्रधानभावप्रदर्शनार्थं प्रत्याहारद्वयाश्रयणं कृतं सनकादिभिरिति ध्येयम्।

चत्वारोऽनुस्वाराः बिन्दुलक्षकाः। तेन बिन्दुना तदुपरि प्रतीयमानो नादः सङ्गृहीतः। एवं नादबिन्दुकलात्मकं श्रीचक्रं त्रिखण्डमिति कथितम्। सादाख्या कला श्रीविद्यापरपर्याया नादबिन्दु-कलातीता। एताः षोडशनित्यासु अन्तर्भूताः। तथाहि—षोडश स्वराः, कादयः तान्ताः षोडश, थादयः सान्तश्च षोडश। षोडशत्रिकं षोडशनित्यासु- अन्तर्भूतम्। हकारः आकाशबीजं बैन्दवाकाशे निलीनम्। ळकारः अन्तस्थास्वन्तर्भूतोऽपि ककारेण प्रत्याहारार्थं पुनर्गृहीतः। क्षकारस्तु ककारषकारसमुदायरूपत्वात्। ककारादयस्सान्ताः द्विष्षोडश नित्यासु अन्तर्भूताः स्वरसहिताः।

अकारेण प्रत्याहृतः क्षकारः अक्षमालेति गीयते। अतः क्षकारेण* सर्वा मातृकाः सङ्गृहीता भवन्ति। अत एव† अन्तिमखण्डे सकलह्रीमिति ककारलकारयोर्योगे कलाशब्दनिष्पत्तिः, कषयोर्योगे क्षकारनिष्पत्तिरिति, एवं मन्त्रेण सर्वा मातृकाः सङ्गृहीता इति तात्पर्यम्। अतश्च षोडशनित्यानां मन्त्रगतषोडशवर्णात्मकत्वं, षोडशवर्णानां पञ्चाशद्वर्णात्मकत्वं, पञ्चाशद्वर्णानां सूर्यचन्द्राग्निकलात्मकत्वं, सूर्यचन्द्राग्निरूपेण त्रिखण्डत्वमिति ऐक्यचतुष्टय$मनुसन्धेयम्।

एवं चक्रमन्त्रयोरपि। यथा ह्रीङ्कारत्रयं श्रीबीजं च शिवचक्रचतुष्टयात्मकत्रिकोणे बिन्दुरूपेण अन्तर्भूतम्। सकलेति वर्णत्रयेण सङ्गृहीता मातृका, अक्षमालात्मिका मातृका, उभयमपि यथायोगं चक्रे अन्तर्भूतम्। तथाहि—अन्तस्थाश्चत्वारः, ऊष्माणश्चत्वारः-एवमष्टौ वर्णाः अष्टकोणात्मकाः। कादयो मावसानाः वर्गपञ्चमान् विहाय दशारयुग्मे अन्तर्भूताः। वर्गपञ्चमास्तु अनुस्वाररूपेण बिन्दा-वन्तर्भूताः। चतुर्दशारे चतुर्दश स्वरा अन्तर्भूताः। अनुस्वारविसर्गयोः बिन्दावन्तर्भावः। इति चक्रमन्त्रयोरैक्यं सुभगोदयमतानुसारेण कथितम्।

पूर्णोदयमतानुसारेण तु सोमसूर्यानलात्मकतया चक्रस्य त्रिखण्डत्वम्। एवं मन्त्रस्यापि त्रिखण्डत्वं सुप्रसिद्धम्। [1]चन्द्रस्य कलाः षोडश इन्दुखण्डे अन्तर्भूताः स[2] च इन्दुखण्डः इन्द्वात्मके यन्त्रखण्डेऽन्तर्भूतः। एवं भानोः चतुर्विंशतिकलाः भानुखण्डेऽन्तर्भूताः। स च खण्डः यन्त्रखण्डे-ऽन्तर्भूतः। एवमाग्नेया दशकला आग्नेयखण्डे अन्तर्भूताः। स च खण्डः यन्त्रे आग्नेयखण्डे अन्तर्भवतीति कलायन्त्रमन्त्राणां ऐक्यमनुसन्धेयम्।

सुभगोदये नित्यानां स्वरूपमुक्तम्—

दर्शाद्याः पूर्णिमान्ताश्च कलाः पञ्चदशैव तु।
षोडशी तु कला ज्ञेया सच्चिदानन्दरूपिणी॥ इति॥

---

* "अक्ष इति प्रत्याहारेण" इति पाठः। † अथवा इति पाठः। $ 'विद्याचतुष्टय' इति पाठः

[1] बैन्दव्यः. 2. सचायं खण्डद्वयात्मके.

अस्यार्थः—दर्शाद्याः पूर्णिमान्ताश्च तिथयः। दर्शा नाम अमावास्यानन्तरभाविनी प्रतिपत्कला। तस्या ईषद्दर्शनात् दर्शा। दर्शा आद्या यासां ताः। पूर्णिमा अन्तो यासां ताः।

'दर्शा, दृष्टा, दर्शता, विश्वरूपा, सुदर्शना, आप्यायमाना, आप्यायमाना, आप्याया, सूनृता, इरा, आपूर्यमाणा, आपूर्यमाणा, पूरयन्ती, पूर्णा, पौर्णमासी, एतानि नामधेयानि श्रुतिबोधितानि सङ्गृहीतानि 'दर्शाद्याः पूर्णिमान्ताः' इत्यनेन। एतासां स्वरूपं पुरस्तात् निवेदयिष्यते। दर्शादीनां पञ्चदशानां कलानां यथाक्रमं त्रिपुरसुन्दरीप्रभृतयः पञ्चदश नित्याः अधिदेवताः। षोडश्याः चिद्रूपात्मिकायाः कलायाः सादाख्यतत्त्वरूपत्वात् अधिदेवतान्तरं नास्ति। स्वयमेव सर्वस्य अधिदेवतेति ध्येयम्। एतासां नित्यानां अभिमानिनी देवता कामदेवः एक एव। अधिष्ठानदेवता कामेश्वरी एकैव। अतश्च मूलविद्यागतपञ्चदशवर्णानां दर्शादयः कलाः, नित्याः कलाश्च, विग्रहान्तरमिति अनुसन्धेयम्। अत एव दर्शादिकलानां त्रिखण्डत्वं स्पष्टम्। दर्शा, दृष्टा, दर्शता, विश्वरूपा, सुदर्शना, एष आग्नेयः खण्डः। आप्यायमाना, आप्यायमाना, आप्याया, सूनृता, इरा, एष सौरः खण्डः। आपूर्यमाणा, आपूर्यमाणा, पूरयन्ती, पूर्णा, पौर्णमासी, इति एष चान्द्रः खण्डः तृतीयो निरूपितः। एतासां कलानां नित्यात्वेन ऐक्यं सम्पाद्य प्रतिपदादौ उपासना, प्रकारः पूर्वमेव दिङ्मात्रं उदाहृतः। दर्शा कला शिवतत्त्वात्मिका। दृष्टा कला शक्तितत्त्वात्मिका। दर्शता कला मायातत्त्वात्मिका। विश्वरूपा कला शुद्धविद्यातत्त्वात्मिका। सुदर्शना कला जलतत्त्वात्मिका। एवं पञ्चतत्त्वात्मकं खण्डं आग्नेयमित्यग्निरत्र अधिदेवता, कामदेवस्तु सर्वत्र अधिदेवता, कामेश्वरी सर्वत्र अधिष्ठात्रीत्युक्तम्। आप्यायमाना कला तेजस्तत्त्वात्मिका। आप्यायमाना कला वायुतत्त्वात्मिका। आप्याया कला मनस्तत्त्वात्मिका। सूनृता कला पृथिवीतत्त्वात्मिका। इरा कला आकाशतत्त्वात्मिका। आपूर्यमाणा कला विद्यातत्त्वात्मिका। एष सौरः खण्डो द्वितीयः। तत्र सूर्यो देवता। कामदेवस्तु सर्वत्र अधिदेवता। कामेश्वरी सर्वत्र अधिष्ठात्रीत्युक्तम्। आपूर्यमाणायाः कलायाः चन्द्रखण्डान्तस्स्थिताया अपि सौरखण्डे अन्तर्भावः। इराकलाप्रभेदत्वात् इराऽऽपूर्यमाणयोः ऐक्यमिति अनुसन्धेयम्। आपूर्यमाणा कला महेश्वरतत्त्वात्मिका। पूरयन्ती कला परतत्त्वात्मिका। पूर्णा कला आत्मतत्त्वात्मिका। पौर्णमासी कला सदाशिवतत्त्वात्मिका। एष सौम्यः खण्डः। सोमः अत्र अधिदेवता। कामदेवः सर्वत्र अधिदेवता। कामेश्वरी सर्वत्र अधिष्ठात्रीत्युक्तम्। नित्या कला सादाख्यतत्त्वात्मिका। एतास्तु विशुद्धिचक्रे षोडशारे प्रागादिक्रमेण षोडशदिक्षु परिभ्रमन्ति।

तास्तु आज्ञाचक्रोपरिस्थितचन्द्रमण्डलस्य षोडश कलाः इति सुभगोदये यत् प्रपञ्चितं, तत्तु पञ्चदशकलानामेव षोडशारे परिभ्रमणं, षोडश्याः कलायाः सहस्रदलकमल एव अवस्थानं, तत्र अवस्थितायाः नित्यायाः कलायाः प्रभापटलं षोडशारे स्फुरति—इत्येवंपरमित्येव अनुसन्धेयम्।

अयमर्थः—'शिवः शक्तिः कामः क्षितिः' इति शिवशब्देन शिवतत्त्वात्मिका दर्शाख्या कला त्रिपुरसुन्दरीनामधेया कथ्यते। तया तत्प्रकृतिभूतः ककारो लक्ष्यते। एवं शक्तिशब्देन शक्तितत्त्वात्मिका या दृष्टा कला तया एकारो लक्ष्यते। काम इत्यनेन कामदेवत्या या दर्शता कला तया ईकारो लक्ष्यते। क्षितिरित्यनेन "लकारः क्षितितत्त्वं" इति शास्त्रान्तरप्रसिद्ध्या लकारो लक्ष्यते। रविरित्यनेन सूर्यखण्डात्मतया रविः हकारो लक्ष्यते। शीतकिरणः चन्द्रः। "सकारः चन्द्रबीजम्" इति शास्त्रान्तरप्रसिद्ध्या शीतकिरणशब्देन सकारो लक्ष्यते। स्मरशब्देन कामराजप्रकृतिभूतः ककारो लक्ष्यते। हंसः सूर्यः हकाराधिपतिरित्युक्तं प्राक्। शक्रः इन्द्रः। "लकारः इन्द्रबीजम्" इति शास्त्रान्तरप्रसिद्धेः शक्रशब्देन लकारो लक्ष्यते। परा चन्द्रकलेति चन्द्रबीजं सकारो लक्ष्यते। मारः कामराजबीजमिति तत्प्रकृतिभूतः ककारो लक्ष्यते। हरिः इन्द्रः लकारो लक्ष्यते। एवं मन्त्रगतवर्णानां ककारादीनां शिवादिपदानि लक्षकाणि, क्वचित् लक्षितलक्षकाणीति ध्येयम्।

एवं पञ्चदशनित्यानां समुदायात्मकस्य मन्त्रस्य पञ्चदशतिथिषु अनुष्ठानं विहितम्। पृथक् नित्यानुष्ठानं तु प्रतिदिनं पृथक् नियतम्। एतच्च अतिरहस्यं गुरुमुखादेव अवगन्तव्यमपि शिष्यानुजिघृक्षया कथितम्। अतश्च इममेव अर्थं श्रुतिरप्याह—"दर्शाद्याः पूर्णिमान्ताश्च कलाः पञ्चदशैव तु।" इति।

अत्र यत् बहु वक्तव्यं, तत्तु श्रुतिव्याख्यानावसरे निरूपयिष्यामः। तथा च तैत्तिरीयशाखायां काठके श्रूयते—'इयं वाव सरघा' इत्यनुवाके[1]। तत्र षोडशनित्यात्मकदिवसपरिज्ञाने फलं प्रतिपादितं, ज्ञानमात्रफलप्रतिपादकत्वात्। अनारभ्याधीतं अश्वमेधकाण्डानन्तरं 'संज्ञानं विज्ञानं'[2] इति, तिथिप्रतिपादकवाक्यानां प्रकरणभेद एव। तस्य अनुवाकस्य ब्राह्मणं 'इयं वाव सरघा' इति। एवं उभयं मन्त्रब्राह्मणात्मकं अनारभ्याधीतं ज्ञानैकफलं वाक्यजातम्।

***इयं वाव सरघा।**

अस्यार्थः–इयं चन्द्रकला सादाख्या सरघा सरघावत् मधुस्यन्दिनी अमृतस्यन्दिनीति श्रीचक्रात्मकचन्द्रस्य सरघात्वनिरूपणम्॥

***तस्या अग्निरेव सारघं मधु।**

तस्याः सरघायाः अग्निरेव अग्निस्थानमेव बैन्दवं त्रिकोणं सारघं सरघोद्भूतं मधु, तस्यैव सुधासिन्धुरूपत्वात्॥

सारघस्य मधुनः उपचयापचयप्रकारमाह—

1. तै. ब्रा. ३-१०-१०. 2. तै. ब्रा. ३-१०-१. * तै. ब्रा. ३-१०-१०.

*या एताः पूर्वपक्षापरपक्षयो रात्रयः ।

[1]एताः संज्ञानानुवाके कथिताः । पूर्वपक्षापरपक्षयोः शुक्लकृष्णपक्षयोः रात्रयः ॥

*ता मधुकृतः ।

ताः रात्रयः मधु कुर्वन्तीति मधुकृतः । रात्रिष्वेव मधुनः सङ्ग्रह इति लोकप्रसिद्धिः । रात्रावेव चन्द्रकलारूपायाः श्रीविद्यायाः अनुष्ठानं, न च दिवसे इति उपदेशः । पूर्वपक्षरात्रयः दर्शादि-पौर्णमास्यन्ताः पूर्वं निरूपिताः । कृष्णपक्षरात्रिनामधेयानि तु—

†सुता सुन्वती प्रसुता सूयमानाऽभिषूयमाणा । पीती प्रपा संपा तृप्तिस्तर्पयन्ती । कान्ता काम्या कामजाताऽऽयुष्मती कामदुघा ॥

एताः कृष्णपक्षरात्रयः । एतासां कृष्णपक्षरात्रीणां आधारचक्र एव अमावास्यात्मकतया अवस्थानात्, समयिनां तत्र व्यवहाराभावात्, शुक्लपक्षरात्रिष्वेव चन्द्रकलासञ्चारात्, तत्रैव कुण्डलिनी-प्रबोधात्, स्वरूपमात्रोद्देश एव कृतः । शुक्लपक्षरात्रीणामेव कलात्वम् । तत्स्वरूपं पूर्वमेव निरूपितम् ।

अत एव कुण्डलिनीप्रबोधो रात्रावेव, न दिवा, दिवसानां मधुनः स्रावकत्वादित्याह—

*यान्यहानि । ते मधुवृषाः ।

मधु वर्षन्तीति मधुवृषाः । अत एव दिवा योगिनः कुण्डलिनीं न बोधयन्तीति । शुक्लकृष्ण-पक्षयोः दिवसानां नामानि नोक्तानि अप्रस्तुतत्वात् । तथापि वेदे फलश्रवणात् उद्देशमात्रेण कथ्यन्ते । शुक्लपक्षदिवसनामानि—

†संज्ञानं विज्ञानं प्रज्ञानं जानदभिजानत् । सङ्कल्पमानं प्रकल्पमानमुपकल्पमान-मुपकॢप्तं कॢप्तम् । श्रेयो वसीय आयत् संभूतं भूतम् ॥

इति शुक्लपक्षदिवसनामानि । कृष्णपक्षदिवसनामानि तु—

†प्रस्तुतं विष्टुतꣳ सꣳस्तुतं कल्याणं विश्वरूपम् । शुक्रममृतं तेजस्वि तेजस्समिद्धम् । अरुणं भानुमन्मरीचिमदभितपत्तपस्वत् ॥

एतेषामुभयेषां शुक्लकृष्णपक्षाहोरात्राणां नामधेयानि [2]यो वेद तस्य फलमाह—

*स यो ह वा एता मधुकृतश्च मधुवृषाꣳश्च वेद । कुर्वन्ति हास्यैता अग्नौ मधु । नास्येष्टापूर्तं धयन्ति ॥

* तै. ब्रा. ३-१०-१०. † तै. ब्रा. ३-१०-१. [1]यस्याः सरघायाः इत्यधिकः. [2]तेषां वेदनस्य.

सः यः एताः मधुकृतो रात्रीः मधुवृषान् दिवसान् पूर्वोक्तान् यो वेद अस्य वेत्तुः एताः अग्नौ बैन्दवस्थाने मधु सुधासिन्धुं कुर्वन्ति। अस्य इष्टापूर्तं वाञ्छितार्थपूर्तिं न धयन्ति न रिक्तीकुर्वन्ति ॥

व्यतिरेके अनिष्टमाह—

***अथ यो न वेद। न हास्यैता अग्नौ मधु कुर्वन्ति। धयन्त्यस्येष्टापूर्तम् ॥**

व्याख्यातप्रायमेतत् ॥

अयमर्थः—चन्द्रकलाविद्यानुष्ठानं नाम मातृकामन्त्रयोरैक्यम्, मन्त्रचक्रयोरैक्यम्, चक्रनित्ययोरैक्यम्, नित्याप्रतिपदादिकलयोरैक्यमिति समयिमततत्त्वम्। एतदनुष्ठाने शुक्लपक्षकृष्णपक्षविवेकः, दिवसरात्रिविवेकश्च उपयुज्यते। दर्शादिपौर्णमास्यन्तास्वेव कलासु [1]चतुर्विधैक्यानुसन्धानम्, न अमावास्यायाम्। कृष्णपक्षशब्दः अमावास्यापरः इत्युक्तं प्रागेव। अतश्च अमावास्यायामिव शुक्लपक्षदिवसेष्वपि न अनुष्ठानमिति ध्येयम्। एवं परिशेषवृत्त्या अमावास्यायां उपासनानिषेधः, न तु सर्वस्मिन् कृष्णपक्षे। अतश्च सर्वासु रात्रिषु अमावास्याव्यतिरिक्तासु उपासना, न सर्वेषु दिवसेषु, इति गुरूपदेशवशात् ज्ञेयं रहस्यम् ॥

अत उत्तरम्—

**†यो ह वा अहोरात्राणां नामधेयानि वेद। नाहोरात्रेष्वार्तिमार्छति। संज्ञानं विज्ञानं दर्शा दृष्टेति। एतावनुवाकौ पूर्वपक्षस्याहोरात्राणां नामधेयानि। प्रस्तुतं विष्टुतꣳसुता सुन्वतीति। एतावनुवाकावपरपक्षस्याहोरात्राणां नामधेयानि। नाहोरात्रेष्वार्तिमार्छति। य एवं वेद ॥**

इति वाक्यजातं पूर्वव्याख्ययैव व्याकृतम्। इतः परं वक्ष्यमाणं मुहूर्तार्धमासघटिकादीनां कालानां नामधेयजातं तत्रैव अन्तर्भूतमिति तद्व्याख्यानेनैव व्याख्यातमिति अनुसन्धेयम्। अत एव संज्ञानानुवाकः 'इयं वाव सरघा' इत्यनुवाकश्च व्याकृतावेवेति अवगन्तव्यम्। यत्तु सावित्रप्रकाशके 'प्रजापतिर्देवानसृजत' इत्यनुवाके* 'स यदाह' इत्यारभ्य 'जनको ह वैदेहः' इत्यन्तेन तिथ्यात्मकत्वं सवितुः प्रतिपादितम्, ततु सादाख्यतत्त्वात्मिकायाः चन्द्रकलाविद्यायाः श्रीविद्याऽपरनामधेयायाः पञ्चदश[2]तिथ्यात्मिकायाः प्रसादसमासादितसामर्थ्यं सवितुः, नान्यथेति प्रतिपादयितुं गौण्या वृत्त्या आह श्रुतिः। अत एव 'एष एव तत्'* इति गौणवृत्त्याश्रयणं प्रकटीकृतम्। अत एतद्ग्रन्थकलापानन्तरवाक्यम्—

---

* तै. ब्रा. ३—१०—१०. † तै. ब्रा. ३—१०—९ [1]चतुष्टयैक्यानुसन्धानम् [2]विद्यात्मिकायाः ?

†जनको ह वैदेहः । अहोरात्रैस्समाजगाम ॥

इति आम्नातम् । जनकः उत्पादकः श्रीविद्यायाः ऋषिः । विदेह एव वैदेहः मन्मथः । अहोरात्रैः अहोरात्रात्मकैः पञ्चदशाक्षरीमन्त्रवर्णैः दर्शादिपूर्णिमान्तकलात्मकैः समाजगाम, तं मन्त्रं आहृतवानित्यर्थः । यस्तु मन्त्रं आहरति स ऋषिरित्युच्यते । अत एव अरुणोपनिषदि—

*पुत्रो निर्ऋत्या वैदेहः ।

निर्ऋत्याः लक्ष्म्याः । यद्वा—अनिर्ऋत्याः लक्ष्म्याः । पुत्रः वैदेहः मन्मथः ॥

*अचेता यश्च चेतनः ।

अनङ्गत्वादेव चेतोरहितः । चेतनश्च सर्वभूतान्तर्यामित्वात् ॥

*स तं मणिमविन्दत् ।

सः अनङ्गः तं प्रसिद्धं मणिं विद्यात्मकं रत्नं अविन्दत् लब्धवान् अपश्यत् । असौ अनङ्गः अन्धोऽपि अपश्यदिति 'अन्धो मणिमविन्दत्' * इति वाक्यशेषबलात् लभ्यते । अत एव परचित्कलायाः विद्यायाः त्रिपुरसुन्दर्याः मन्मथः ऋषिरभूत् ॥

*सोऽनङ्गुलिरावयत् ।

सः मन्मथः अनुङ्गुलिः अनङ्गत्वादेव अनङ्गुलिः आवयत् असीव्यत् ॥
सीवनानन्तरकृत्यमाह—

*सोऽग्रीवः प्रत्यमुञ्चत् ।

स मन्मथः अनङ्गत्वादेव अग्रीवः मणिसम्पादनफलं प्रत्यामोचनं अकरोत्, धृतवानित्यर्थः ॥

विद्यारत्ने मणित्वारोपणस्य फलं धारणमेव न भवतीत्याह—

*सोऽजिह्वो असश्चत ।

सः अनङ्गः अनङ्गत्वादेव अजिह्वः जिह्वारहितः असश्चत अचोषत्, आस्वादितवानित्यर्थः ॥

एतदुक्तं भवति—अनङ्गः पूर्वं विद्यारत्नं पञ्चाशद्वर्णात्मकं षोडशनित्यात्मकं षोडशकलात्मकं नानावेदेषु नानास्मृतिषु नानापुराणेषु नानाविधागमेषु विप्रकीर्णं दृष्टवान् । तदनन्तरं विप्रकीर्णं इमं मन्त्रं दृष्ट्वा सीवनं कृतवान् । पञ्चाशद्वर्णान् त्रिधा विभज्य खण्डत्रयं कृत्वा त्रिपुरसुन्दर्यादिषोडशनित्याः तत्र अन्तर्भाव्य प्रतिपदादितिथीन् षोडश तत्रैव अन्तर्भाव्य, पञ्चदशवर्णात्मकं त्रिखण्डं कृत्वा, तत्र सोमसूर्यानलात्मकतया ब्रह्मविष्णुमहेश्वरात्मकतया सत्त्वरजस्तमस्तत्त्वव्यस्थिततया जाग्रत्स्वप्नसुषुप्त्यवस्था-

---

† तै. ब्रा. ३—१०—९.　　तै. आ. १-११.

पन्नतया सृष्टिस्थितिलयहेतुभूततया निश्चित्य श्रीविद्यात्मके चतुर्थे खण्डे पञ्चदशकलानां अन्तर्भावं निश्चित्य भुवनेश्वरीप्रभृतीनां योगिनीविद्यानां नवानां त्रिकस्य त्रिकस्य एकैकह्रीङ्कारेण अन्तर्भावं अङ्गीकृत्य, सर्वभूतात्मकं सर्वमन्त्रात्मकं सर्वतत्त्वात्मकं सर्वावस्थात्मकं सर्वदेवात्मकं सर्ववेदार्थात्मकं सर्वशब्दात्मकं सर्वशक्त्यात्मकं त्रिगुणात्मकं त्रिखण्डं त्रिगुणातीतं [1]सादाख्यापरपर्यायं षड्विंशशिवशक्तिसंपुटात्मकं निश्चित्य वर्णपञ्चदशकेन मूलविद्यां असीव्यत्। तदनन्तरं स्यूतं मन्त्रराजं [2]ग्रीवायां धृतवान्, चिरकालं ध्यानयोगेन पूजितवान्। तदनन्तरं चन्द्रकलामृतास्वादं कृतवानिति सः मन्मथः ऋषिः अस्य मन्त्रस्येत्यर्थः॥

*नैतमृषिं विदित्वा नगरं प्रविशेत्।

एतं ऋषिं मन्मथं विदित्वा नगरं श्रीचक्रात्मकं न प्रविशेत्, ऋषिज्ञानपूर्वकं श्रीचक्रात्मकं नगरं न पूजयेत्, बाह्यपूजां न कुर्यादिति निषेधविधिः, बाह्यपूजायामेव ऋषिच्छन्दःप्रभृतिज्ञानपूर्वकत्वम्। आन्तरपूजायां तादात्म्यानुसन्धानात्मिकायां ऋष्यादिज्ञानं नास्त्येव। उपयोगस्तु दूरत एव। अतो वस्तुसिद्धऋष्यादिपर्युदासमुखेन श्रीचक्रस्य बाह्यपूजनं त्रैवर्णिकैः न कर्तव्यमिति नियम्यते। तदुक्तं सनत्कुमारसंहितायाम्—

बाह्यपूजा न कर्तव्या कर्तव्या बाह्यजातिभिः।
सा [3]क्षुद्रफलदा नृणां ऐहिकार्थैकसाधनात्॥
बाह्यपूजारताः कौलाः क्षपणाश्च कपालिकाः।
दिगम्बराश्चेतिहासा †वामकास्तन्त्रवादिनः॥
आन्तराराधनपरा वैदिका ब्रह्मवादिनः।
जीवन्मुक्ताश्चरन्त्येते त्रिषु लोकेषु सर्वदा॥ इति।

कौलाः आधारचक्रपूजारताः। क्षपणकाः योषित्त्रिकोणपूजारताः। कापालिकाः दिगम्बराश्च उभयत्र निरताः। इतिहासाः †भैरवयामळप्रामाण्यवादिनः। वामकाः तन्त्रवादिनः इत्येके वदन्ति, वामकेश्वरतन्त्रप्रामाण्यवादिनः। केवलचक्रपूजकाः ते वेदबाह्याः इत्यन्वयः। आन्तरपूजारताः ब्रह्मवादिनः शुभागमतत्त्ववेदिनः। शुभागमपञ्चकं पूर्वमेवोक्तम्। आन्तरपूजाप्रकारः पुरस्ताद्वक्ष्यते च॥

*यदि प्रविशेत्।

असंशये संशयोक्तिः 'यदि वेदाः प्रमाणं' इतिवत्। प्रविशेदेवेत्यर्थः॥

*मिथौ चरित्वा प्रविशेत्।

---

* तै. आ. १-११. 1. सादाख्यकलापर्यायम्. 2. गृहीत्वा.
[3]क्षुद्रधर्मदा. † 'वीतवासा' इत्यपि क्वचित् दृश्यते.

[1]मिथौ रहस्ये एकान्ते, चरित्वा अवगत्य । 'चर गतिभक्षणयोः' । प्रविशेत्, आन्तरपूजां कुर्यादित्यर्थः । यद्वा—मिथौ मिथुनीभूतौ शिवौ, उभयोः मेलनं अवगत्य प्रविशेत् अनुसन्दधीतेति । पूर्वव्याख्यानेऽपि ऐकात्म्यानुसन्धाने सहायान्तरं न कर्तव्यम् । एकान्ते एव विद्या फलतीत्युपदेशः । तत्कथमित्याशङ्क्य दृष्टान्तेन द्रढयति—

*तत्सम्भवस्य व्रतम् ।

सम्भवो मन्मथः, चित्तजातत्वात् । तस्य व्रतं माहात्म्यं, सहायान्तरं तिरस्कृत्य एकाकिनैव रहस्ये स्त्रीपुरुषसंयोजनरूपम् । अतः मन्मथोपदिष्टमन्त्रानुष्ठानवतां तथैव तदनुष्ठानमिति गोप्येयं विद्येति तात्पर्यम् । द्वितीयव्याख्याने मन्मथो मिथुनं अवगत्य तस्मिन् मिथुने प्रविशति । एवं शिवशक्तिसंपुटं अवगत्य साधकेन प्रवेष्टव्यमिति श्रुतेरर्थः । अतश्च 'पुत्रो निर्ऋत्या वैदेहः,'* 'जनको ह वैदेहः'† इति च श्रुतिद्वयस्य वैदेहयोः उभयोः एकप्रत्यभिज्ञाविषयत्वात्, 'स यदाह'† इत्यादिवाक्यकदम्बकं प्रतिपदादितिथिरूपचन्द्रकलात्मिकायाः श्रीविद्यायाः प्रतिपादनद्वारा सवितुः तत्प्रसादजन्यं माहात्म्यं नान्यथेत्येवंपरमिति सर्वं अनवद्यम् ॥ ३२ ॥

## सौभाग्यवर्धनी

स्वतन्त्रस्य चतुःषष्टितन्त्रान्तरापेक्षया विशिष्टत्वं प्रतिपाद्य तदनुसारिणीं लोपामुद्राविद्यां पञ्चदशाक्षरीं दौर्वाससीं च त्रयोदशाक्षरीं चैकहेलयोद्धरति—**शिव** इति । शिवो हः, शक्तिः सः, कामः कः, शितिर्लः ; अथेत्यानन्तर्याभिधानाच्छिवादिवर्णचतुष्टयेऽवसानं सूचितम् । रविः हः, शीतकिरणः सः, स्मरः कः, हंसो हः, शक्रो लः, तदनु तत्पश्चात्, तदनन्तरमिति यावत् । तत्राप्यानन्तर्याभिधानादवसानं सूचितम् । चकारात् हृल्लेखाभिः सहाविश्लेषः सूचितः । परा सः, मारः कः, हरिर्लः, अमी हृल्लेखाभिः भुवनेश्वरीबीजैः ; सर्वेषां प्राणिनां हृदि लेखेव जागर्ति प्राणशक्तिरूपा ; मन्त्राणां जीवरूपा जागर्ति ; तस्मात् हृल्लेखेत्युच्यते । तथा च **स्वच्छन्दसंग्रहे**—

" शिवाविनाभूतशक्तिः स्वतन्त्रा निरुपप्लवा ।
समस्तं व्याप्य भुवनमीष्टे तेनेश्वरी मता ॥
व्यापृतं तेन सकलमनया चिद्विलासया ।
यस्मादखिलजीवानां मन्त्राणामपि सर्वशः ॥
हृदि लेखेव जागर्ति प्राणशक्तिरियं परा ।
हृल्लेखा कथ्यते तस्मान्मायैवाचिन्त्यवैभवा ॥

---

* तै. आ. १-११.　　†तै. ब्रा. ३-१०-९.　　[1]मिथौ=मिथ इत्यर्थः.

अनया रहिताः सर्वे निर्जीवा मन्त्रराशयः ।
अतस्तु सर्वमन्त्राणामियमुद्बोधिनी मता ॥ ''

इति । **प्रपञ्चसारे** भुवनेश्वरीस्तोत्रेऽपि—'' प्रसीद प्रपञ्चस्वरूपे प्रधाने प्रकृत्यात्मिके प्राणिनां प्राणसंज्ञे;'' इति । तिसृभिरवसानेषु शिवादिवर्णचतुष्टय-रव्यादिवर्णपञ्चक-परादिवर्णत्रयविरामेषु घटिता मिलिता वर्णाः तव, जननि, अवयवतां भजन्ते नाम ; अतिशयेनेति यावत् । मन्त्ररूपिण्यास्तवैते वर्णा अवयवा इत्यर्थः । अथवा, मन्त्रस्वरूपस्य तव नाम्न एतेऽवयवाः नाम्नोऽवयवभूता वर्णा इत्यर्थः । एतावता मन्त्रो वाचकः ; अचिन्त्यवैभवा त्वं वाच्येति संपन्नोऽर्थः । तथा च कादिमते—

'' सर्वे मन्त्राः समुद्दिष्टाः परतत्त्वार्थवाचकाः ।
तस्मात्सर्वत्र मन्त्रैस्तु शक्तिस्त्वं प्रतिपाद्यसे ॥ '' इति ।

**ज्ञानार्णवे**—

वाच्यवाचकरूपेण सर्वे मन्त्रा व्यवस्थिताः ।
यद्देवताया यो मन्त्रस्तस्या मन्त्रः स वाचकः ॥ ''

इति । अवयवतां भजन्ते । ह्रींकारस्यावयविन एते वर्णा अवयवाः । ह्रींकारस्यैव प्रपञ्चः सर्वोऽपि मन्त्र इति भावः । तदुक्तं भगवता श्रीशंकराचार्येणैव **क्रमस्तुतौ**—

'' ह्रींकारमेव तव नाम गृणन्ति वेदा मातस्त्रिकोणनिलये त्रिपुरे त्रियोने ।'' इति । अथानन्तरम् ; अथ शंभुना त्रयोदशाक्षरी तुरीया विद्या अधुनोद्ध्रियते-शिवो हः, शक्तिः सः, कामः कः, क्षितिर्लः ; अथानन्तरमन्तरं विना । रविर्हः, शीतकिरणः सः, स्मरः कः, हंसो हः, शक्रो लः, तदनु तदनन्तरम् । चकारः सर्वेषां वर्णानां समुच्चयद्योतकः । परा सः, मारः कः, हरिर्लः, हृल्लेखा अमी वर्णाः त्रयोदशसंख्याकाः ; नामावयवतां भजन्ते । आभिस्तिसृभिर्हृल्लेखाभिरित्यर्थः । अवसानेषु पूर्वोक्तप्रकारेण घटितास्तव नामावयवतां भजन्ते । एष हृल्लेखाविद्याक्रमो गुरुपरंपरागतः सर्वात्मना गोपनीयः । तथा च कादिमते स्वतन्त्रतन्त्रे—

'' हृत्प्राणेनाहं सदाहा वह्निस्वैर्ललितेरिता ।
हसाद्ययाद्ययाद्यः स्यादादिमध्यस्तहंसया ॥
तृतीयाप्रकृतिः सैव तुर्या तैरन्त्यमायया ।।'' इति ॥ ३२ ॥

## अरुणामोदिनी

तन्त्रे क्षितितलमवातीतरदित्युक्तम् । तादृशतन्त्रमुपदिशति **शिव इति** । शिवः ककारः, काम ईकारः; क्षितिर्लकारः । अथेति द्वितीयखण्डप्रारम्भार्थः । रविर्हकारः, शीतकिरणः सकारः,

स्मरः ककारः, हंसो हकारः, शक्रो लकारः। तदन्विति तृतीयखण्डप्रारम्भद्योतकः। परा सकारः, मारः ककारः, हरिर्लकारः, इति **कादिविद्यापरार्थः। हादिविद्यापक्षे** - शिवो हकारः, शक्तिः सकारः। कहयोरेकारसकारयोश्च शिवशक्तिशब्दवाच्यत्वं प्रथमश्लोकोक्तं द्रष्टव्यम्। कामः ककारः, क्षितिर्लकारः। अथेति द्वितीयखण्डप्रारम्भार्थः। रविर्हकारः शीतकिरणः सकारः, स्मरः ककारः, हंसो हकारः, शक्रो लकारः। तदन्विति तृतीयखण्डप्रारम्भार्थः। परा सकारः, मारः ककारः, हरिर्लकारः। अत्र ककारईकारयोर्मदनबीजत्वं प्रसिद्धम्। "लकारः पृथिवीबीजम्" इति शास्त्रान्तरात्, "लम्पटः शक्रसंज्ञश्च लाडवीयो लकारकः", इति मातृकाकोशाच्च लकारस्य पृथिवीबीजत्वं शक्रबीजत्वं चास्त्येव। "मन्त्रो नादः शिवो रविः", इति हकारपर्यायत्वकथनाद्रविंहंसादिसूर्यनामभिः तद्ग्रहणमविरुद्धम्। "सकारश्चन्द्रबिम्बम्" इति शास्त्रान्तरप्रसिद्धेः परायाश्चन्द्रकलारूपत्वेन च शीतकिरणपराशब्दाभ्यां तदुक्तिरविरुद्धा। ते प्रसिद्धा अमी निर्दिष्टा वर्णाः अक्षराः अवसानेषु विद्याद्वयपक्षेऽपि (तर्हि) वर्णचतुष्कपञ्चकत्रिकानां प्रान्तभागेषु तिसृभिः त्रिसंख्याभिः हृल्लेखाभिः हृदि लेखेव जाग्रति प्राणशक्तिरूपेण मन्त्राणामितिहृल्लेखाः। तदुक्तम्—

> "शिवाविनाभूतशक्तिः स्वतन्त्रा निरुपप्लवा।
> समस्तं व्याप्य भुवनमीष्टे तेनेश्वरी मता॥
> व्याप्तं तेन सकलमनया चिद्विलासया।
> यस्मादखिलजीवानां मन्त्राणामपि सर्वशः॥
> हृदि लेखेव जागर्ति प्राणशक्तिरियं परा।
> हृल्लेखा कथ्यते तस्मान्मायैवाचिन्त्यवैभवा॥
> अनया रहिताः सर्वे निर्जीवा मन्त्रराशयः।
> अतस्तु सर्वमन्त्राणामियमुद्बोधनी मता॥" इति।

ताभिः, "त्रिखण्डं मातृकाचक्रं सोमसूर्यानलात्मकम्" इति वचनात् आग्नेयसौरसौम्यखण्डानां मध्यस्थत्वेन रुद्रविष्णुब्रह्मग्रन्थिस्थानीयैः शिवयोरुभयोर्वाचकैर्भुवनेश्वरीबीजैर्घटिता योजिताः सन्तः, हे जननि! "भगः शक्तिर्भगवान्काम ईश उभादातारविह सौभगानाम्" इति श्रुतेः, भक्तानां समस्तसौभाग्यजनके देवि! तव भवत्या नाम्नो भवदभिधायकस्य;

> "कामो योनिः कमला वज्रपाणिर्गुहा हसा मातरिश्वाभ्रमिन्द्रः।
> पुनर्गुहा सकला मायया च पूरूच्येषा विश्वमातादिविद्या॥"

इति ऋग्वेदान्तःपाति - **त्रिपुरोपनिषद्विदितस्य**;

" यस्य वा पश्चिमं जन्म यदि वा शंकरः स्वयम् ।
तेनैव लभ्यते विद्या श्रीमत्पञ्चदशाक्षरी ॥"

इत्यागमप्रसिद्धस्य मन्त्रराजस्य प्रधानरमाबीजेन सह षोडशाक्षरीरूपत्वेन षोडशसंख्यारूपदर्शाद्यादिषोडशतिथ्यात्मकत्रिपुरसुन्दरीमुखषोडशनित्यासेवितस्य प्राथमिकान्तिमयोः ककारलकारयोः प्रत्याहरणात्;

" षोडशेन्दोः कला भानोर्द्विर्द्वादश दशानले ।
सा पञ्चाशत्कला ज्ञेया मातृकाचक्ररूपिणी ॥"

इति वचनादिन्द्रादिपञ्चाशत्कलारूपाणाम्; स्वरप्रथमाकारस्य ककारषकारमेलनात्मकेनान्तिमेन क्षकारेण प्रत्याहारे सत्यक्षमालात्वेन संगृहीतमातृकारूपस्यास्य मन्त्रस्यावयवतां प्रतीकत्वम्; वर्णसमुदायरूपत्वाचस्येति भावः। भजन्ते प्राप्नुवन्ति; मन्त्ररूपतां प्राप्ता भवन्तीत्यर्थः। तव मन्त्ररूपाया भवत्या अवयवतां भजन्ते, नामेति वा योजना। एतन्मन्त्रजपादखिलेष्टार्थसिद्धिः आरण्यकोपनिषद्विदितेति सर्वं लक्ष्मीधरे द्रष्टव्यम्। उक्तं च **त्रिपुरोपनिषदि**—

"कामी कलां कामरूपां चिकित्वा नरो जायते कामरूपश्चकाम्यः ।
परिस्रुतं झषमाद्यं पलं च भक्तानि योनीः सुपरिष्कृतानि ।
निवेदयन्देवतायै महत्यै स्वात्मीकृत्य सुकृती सिद्धिमेति ॥"

इति। अर्थान्तरं च प्रतीयते। हे जननि! सर्वदेवतामातर्देवि! शिवः सदाशिवः, तेन तज्जन्या भवमृडहरा गृह्यन्ते। शक्तिः त्रिपुरसुन्दरी; तेन च षोडशनित्या अन्याश्चोच्यन्ते। कामशब्देन मन उच्यते। तेन तदुत्पन्नाः कामसंकल्पादयः सर्वे संगृह्यन्ते; "कामः संकल्पो विचिकित्सा", इत्यादिश्रुतेः। क्षितिर्भूमिः, तेन भूतपञ्चकादिकं संगृहीतं भवति। अथानन्तरं रविः; क्षित्यादिसर्वावभासकः सत्यः। एतेन सूर्याग्न्योरेकसंबन्धादग्निर्गृह्यते। शीतकिरणः चन्द्रः, स्मरः तत्सहचरो मदनः, हंसो ब्रह्मा, शक्र इन्द्रः। तदनु अनन्तरं परा अन्याश्च शक्तयः। म्रियन्ते अनेनेति मारो यमः, हरिर्विष्णुः, उभयोः प्राधान्यात् आद्यन्तयोर्ग्रहणम्। अवसानेषु कैलासवैकुण्ठादितत्तत्स्थानेषु घटिताः त्वयैवावस्थापिताः तत्र प्रसिद्धा अमी वर्णाः भवदीयरूपान्तराः तिसृभिः त्रिविधाभिः हृल्लेखाभिरन्तःकरणराजिभिः सात्त्विकराजसतामसवृत्तिभिः, तव भवत्या नाम्नः अवयवतां प्रतीकम्, स्वार्थे तल्। भजन्ते प्राप्नुवन्ति। अक्षरदेवतीभूय सेवन्त इत्यर्थः ॥ ३२ ॥

## आनन्दगिरीया

महाषोडशीमाह - **शिवःशक्तिरिति**। हे जननि, एते वर्णास्तव नामावयवतां भजन्ते। महावाक्यात्मकमन्त्ररूपस्य तव नाम्नोऽवयवतां अवान्तरवाक्यतां धारयन्ति। अवान्तरवाक्यैर्महावाक्य-

मारभ्यते पदैर्वा। तेनारंभकत्वेन साधर्म्येणावयवा इवेत्यर्थः। अथवा नामेति प्रसिद्धौ। एते वर्णा मन्त्रस्वरूपायास्तव अवयवतामङ्गतां भजन्त इति प्रसिद्धोऽर्थः। मन्त्रदेवतयोरैक्याभिप्रायेणैतत्। किं बहुना एते वर्णाः तव नामरूपमन्त्रं घटयन्ति निष्पादयन्तीत्यर्थः। क एते वर्णा इत्यत आह-शिवो हकारः, शक्तिः सकारः कामः कः, क्षितिर्लः, तेनाक्षरचतुष्टयात्मकं प्रथमकूटम्। अथानन्तरं रविर्हः, शीतकिरणः सः, स्मरः कः, हंसो हः, शक्रो लः, एतावता पञ्चवर्णात्मकं द्वितीयकूटम्। तदनु परामारहरयः, परा सकारः, मारः कः, हरिर्लः, इति त्रिवर्णात्मकतृतीयकूटम्। अमी कूटा अवसाने कूटत्रयान्ते, हृल्लेखा मायाबीजं तेन वलिता युताः। एतावता त्रयोदशाक्षरी दौर्वाससी विद्या। पश्चात्, पदच्छेदेनाभिस्तिसृभिः हृल्लेखाभिः सहितास्त एव वर्णाः एकैककूटान्ते एकमायाबीजसहिताः। पञ्चदशाक्षरी लोपामुद्रा विद्येयम्। हृदि लेखे जागर्ति तस्मात् हृल्लेखा। "तस्मादखिलजीवानां मन्त्राणामपि सर्वशः। हृदि लेखेव जागर्ति प्राणशक्तिरियं परा। हृल्लेखा कथ्यते तस्मान्माया चाचिन्त्यवैभवा। अनया रहिताः सर्वे निर्जीवा मन्त्रराशयः। अतस्तु सर्वमन्त्राणामियमुद्बोधिनी मता।" शिवः शक्तिरिति पद्यस्य रहस्यार्थः—शिव इति शिवोऽथवा प्रणवः, ब्रह्मत्वाच्छिवो वाक् वाङ्मयो मोक्षदायकत्वात् शक्तिः परा, कामः लक्ष्मीः, क्षितिः सर्वाश्रयत्वात् लक्ष्मी रविरिति स्मरान्तेन कूटत्रयं हंस ऐः लक्ष्मीः परा, सैव मारः कामः हरिः कामः, अमी मन्त्रा अवसानेषु स्थानेषु स्थापिताः उक्तोद्धारक्रमेण ये भजन्ते त्वां ते अवसानेऽन्ते अवर्णाः सत्तारूपा भवन्ति, किञ्च तव नामावयवतां यान्ति त्वन्मयाः स्फुरन्तीत्यर्थः। तथा च एतेषां मते व्यस्तजपेऽपि न दोषः। शिवसर्वस्वे—"पञ्चमी षोडशी वापि तथा सर्वांगसुन्दरी। व्यस्ता वैक्यस्वरूपा वाऽनुलोमेनान्यथापि वा। एकदोक्ता कुलेशानि ब्रह्महत्यां व्यपोहति। वर्णानां भिन्नतो वापि मिलित्वा कूटतो यथा। एकवारं स्मृता देवी पातकान्मोक्षमाददौ। शतं जप्त्वा शिवं देवि ददाति ध्रुवमैश्वरम्।" इत्यादि। 'षोडशी-स्मरणमात्रेण तथा साष्टांगयोगतः। काश्यां वापि तनुत्यागान्मुक्तिर्देवि नृणां स्मृता॥' ३२॥

## तात्पर्यदीपिनी

**शिव इति**—हे जननि! अमी ते वर्णाः तव नामावयवतां भजन्ते। नाम्नोऽवयवाः तेषां भावः तत्ता तां भजन्ते। कथंभूता वर्णा-अवसानेषु तिसृभिः हृल्लेखाभिः घटिताः संघटिताः। अमी के? शिवो हकारः, शक्तिरेकारः, काम ईकारः, क्षितिर्लकारः। अथानन्तरं, रविर्हकारः, शीतकिरणः सकारः, स्मरः ककारः, हंसो हकारः, शक्रो लकारः, तदनुकृत्य परामारहरयः, परा च मारश्च हरिश्च ते परामारहरयः, सकारककारलकाराः, एवं पञ्चदशाक्षरी महाविद्या। प्रस्तारस्तु महाग्रन्थतोऽवगन्तव्यः॥ ३२॥

## पदार्थचन्द्रिका

यदर्थं समस्तपुरुषार्थसाधनस्य देवीतन्त्रस्य क्षिताववतरणं, तस्य श्रीभवानीमन्त्रस्योद्धरणमाह - शिव

इति। हे जननि! अमीवर्णास्तव नामावयवतां मन्त्रावयवतां भजन्ते। नाम हि स्वाभिधेयमभिधत्ते। तद्वन्मन्त्रोऽपि। नामवर्णान् विशिनष्टि। तिसृभिः हृल्लेखाभिः भुवनेश्वरीबीजैः अवसानेषु अन्तेषु घटिताः संयुक्ताः। अदःशब्दोक्तान्वर्णानाह - शिव इत्यादिना। अत्र शिवादिशब्दा अर्थपरा अपि तत्तच्छब्दपरत्वेन संकेतिता आगमे इति तत्तच्छब्दानाहुः—शिवो हकारः, शक्तिः सकारः, कामः ककारः, क्षितिर्लकारः, अथशब्दोऽत्रानन्तर्यपरः, रविर्हकारः, शीतकिरणः सकारः, स्मरः पूर्वोक्त एव। हंसस्तु पूर्वोक्त एव। शक्रो लकारः। तदनु तस्य लकारस्य पश्चात्, परा सकारः, मारः ककारः, हरिः पूर्वोक्त एव। अत्रातिगोप्यत्वान्मन्त्रस्य, स्पष्टं न कथ्यत इति ॥ ३२ ॥

## डिण्डिमभाष्यम्

तदेतत्तव सर्वशास्त्रोत्तमं त्रिपुरादर्शनमस्ति तत्र सारभूतः सर्वविद्यासिंहासनारोहणचक्रवर्ति-षट्त्रिंशदक्षरात्मकपञ्चदशवर्णरूपः सर्वतत्त्वमयः सर्वपीठमयो महामन्त्रराज ऋग्वेदैकदेशसाङ्ख्यायन-शाखापरिशिष्टे वर्तमानषोडशत्रिपुरोपनिषन्मन्त्रमध्यपरिपठितमन्त्रोद्धारप्रकाशितः कथं न प्रकाश्यत इत्याशङ्क्याह—**शिव इत्यादि**। महामन्त्रश्च खण्डत्रयात्मकः प्रसिद्धः। एकैकस्य खण्डस्यावसाने एकैकं मायाबीजं, स च मन्त्रो द्विप्रकारो भवति हादिः कादिश्च। हादिः परमेश्वरवाचकः। कादिस्तु परमेश्वरीवाचकः, कामराजविद्या इत्याम्नायते। हादिस्तु लोपामुद्रा इति। शिवशक्तिकामक्षितयः एकखण्डः। तदेव वदति शिवः शक्तिः कामः क्षितिरिति। शिवो गगनाक्षरम्, शक्तिः भृगुः, कामस्तु मन्मथः, क्षितिरैन्द्रबीजम्। द्वितीयमाचष्टे - रविः, शीतकिरणः, स्मरः, हंसः, शक्र इति। रविः गगनबीजम्, शीतकिरणो भृगुः, स्मरः पञ्चबाणाक्षरम्, हंसः पूर्ववच्छिवबीजम्, शक्रः क्षितिबीजम्, अनयोः खण्डयोरुपरि प्रत्येकं मायाबीजम्। तृतीयं खण्डमाह—**परामारहरय इति**। परा प्राणबीजम्, मारः ककारः, हरिः क्षितिबीजम्। अस्यापि खण्डस्योपरि मायाबीजम्। एवमुक्तप्रकारेण अमी खण्डाः तिसृभिः हृल्लेखाभिर्भुवनेश्वरीबीजैः अवसानेषु अन्तिमस्थानेषु घटिता बद्धा मन्त्रवर्णास्ते नामावयवतां भजन्ति। त्वन्महामन्त्रराज एव नाम तस्यावयवतां शरीरसंस्थानत्वं भजन्ति। अस्यैव महामन्त्रस्य सर्वविद्यातिशायित्वं महामायाभट्टारिकायाः स्वशास्त्रे निबद्धम्। सर्वविद्याप्रथमेन वेदपुरुषेणापित्रिपुरो-पनिषदुक्ता। सा च त्रिपुरोपनिषत् कीदृशीति जिज्ञासायामुच्यते— "तिस्रः पुरः त्रिपथा विश्वचर्षणी यत्रा कथा अक्षरा सन्निविष्टा। अधिष्ठायैनां अजरा पुराणी महत्तरा महिमा देवतानां ॥ नवयो-नीर्नवचक्राणि दधिरे नवैव योगा नवयोगिन्यश्च। नवानां चक्रा अधिनाथास्योना नव मुद्रा नवभद्रा महीनां ॥ एका आसीत् प्रथमा सा नवासीदासोनविंशदासोनत्रिंशत्। चत्वारिंशदथ तिस्रः समिधा उशतीरिव मातरो मा विशन्तु ॥ ऊर्ध्वं ज्वलज्ज्योतिरग्रेतमो वै तिरश्चीनमजितं तद्रजोऽभूत्। आन्दनं मोदनं ज्योतिरिन्दोरेता उ मण्डला मण्डयन्ति ॥ यास्तिस्रो रेखाः सदनानि भूमेस्त्रिविष्टपा-

स्त्रिगुणा स्त्रिप्रकाशाः । एतत्पुरं पूरकं पूरकाणामत्र प्रथेते मदनो मदन्या ॥ मदन्तिका मालिनी मङ्गला च सुभगा सा सुन्दरी शुद्धिमत्ता । लज्जा मतिस्तुष्टिरिष्टा च पुष्टा लक्ष्मीरुमा ललिता लालपन्ती ॥ इमां विज्ञाय सुधयामदन्ती परिस्रुता तर्पयन्तः स्वपीठं । नाकस्य पृष्ठे महतो वसन्ति परं धाम त्रैपुरं चाविशन्ति ॥ कामो योनिः कमला वज्रपाणिर्गुहाहसा मातरिश्वाभ्रमिन्द्रः । पुनर्गुहा सकला मायया च पुरूच्येषा विश्वमाताऽऽदिविद्या ॥ षष्ठं सप्तममथ वह्निसारथिमस्यामूलत्रिकं आदेशयन्तः । कथ्यं कविं कल्पकं काममीशं तुष्टुवांसो अमृतत्वं भजन्ते ॥ पुरं महात्रिमुखविश्वमातुरेव रेखास्वरमध्ये तदङ्गे । बृहत्तिथिर्दशपञ्चाधिनित्यः सषोडशीकं पुरमध्यं बिभर्ति ॥ द्वामण्डला द्वास्तना बिम्बमेकं मुखं चाधस्त्रीणि गुहा सदनानि । कामी कलां कामरूपां चिकित्वा नरो जायते कामरूपश्चकाम्यः ॥ परिस्रुतं झषमाद्यं पलञ्च भक्तानि योनीः सुपरिष्कृतानि । निवेदयन् देवतायै महत्यै स्वात्मीकृत्य सुकृती सिद्धिमेति ॥ सृण्येवसितया विश्वचर्षणी पाशेनैव प्रतिविध्यति अभीकम् । इषुभिः पञ्चभिर्धनुषा च विध्यत्यादिशक्तिररुणा विश्वजन्या ॥ भगः शक्तिर्भगवान् काम ईश उभा दाताराविह सौभगानाम् । समप्रधानौ समसत्वौ समौजौ तयोः शक्तिरजरा विश्वयोनिः ॥ परिष्कृता हविषा पावितेन प्रसङ्कोचे गलिते वैमनस्तः । सर्वः सर्वस्य जगतो विधाता भर्ता हर्ता विश्वरूपत्वमेति ॥ इयमेवोपनिषत्त्रैपुरीया यामक्षरं परयोगिभिरीडचे । एषर्ग्यजुः परमेतच्च सामेबायमथर्वेयमऽन्याच विद्या ॥" इति त्रिपुरोपनिषत् ॥ ३२ ॥

## गोपालसुन्दरी

**लोपामुद्राविद्यामाह—शिव इति ।** हे जननि! अमी ते वर्णाः तव नामावयवतां त्वन्मन्त्रराज एव तव नाम तस्यावयवतां भजन्ते । वर्णानेवाह-शिवो हकारः शक्तिः सकारः कामः ककारः क्षितिर्लकार अथशब्दः पूर्वबीजव्यवच्छेदपूर्वकाय परबीजोपक्रमाय रविर्हकारः शीतकिरणः सकारः स्मरः ककारः हंसो हकारः शक्रो लकारः तदनु तदनन्तरमिति अपि पूर्वबीजव्यवच्छेदाय परा सकारः मारः ककारः हरिः लकारः । कीदृशा वर्णाः? अवसानेषु खण्डत्रयान्तेषु तिसृभिः हृल्लेखाभिः भुवनेश्वरीबीजैः "हृदि लेखेव जागर्ति प्राणशक्तिरियं परा । हृल्लेखा कथ्यते तस्मान्माया वाचिन्त्य-वैभवात् ॥ अनया रहिताः सर्वे निर्बीजा मन्त्रराशयः । अतस्तु सर्वमन्त्राणामियमुद्बोधिनी मता ।" इति स्वच्छन्दघटिताः सङ्ग्रहवचनात् सम्बद्धा इत्यर्थः ।

**विष्णुपक्षे**—जननी पार्वती तन्नामैकदेशग्रहणम् । अमी वर्णा भजन्ते तवैव तत्सम्बन्धिन एव त्वत्सम्बन्धादेवामीषां सिद्धिप्रदातृत्वमिति भावः । वैदेहिबन्धोरितिवत् ह्रस्वत्वं हरिसङ्कर्षणकमलापति-लक्ष्मीपतिनाम्नामाद्यवर्णैर्बीजत्रयनिर्माणादित्याशयः । यद्वा जननं कारणता सम्बन्धेनास्यास्तीति जननी विष्णुस्तेन तद्रूपेण जननिना गोपालाष्टादशाक्षरेण अमा सह अमी वर्णा स्तव अवयवतां भजन्त

इत्यर्थः। गोपालाष्टादशाक्षरपञ्चदशीभ्यां सुन्दरीगोपालमन्त्रोद्धारात् इति भावः। जननीति पूर्वोक्त्या विष्णुसम्बोधनं वा ॥ ३२ ॥

## आनन्दलहरीटीका

इदानीं तत्र तन्त्रे सारभूतां अगस्त्योपासितां प्रथमां लोपामुद्राख्यविद्यामाह—**शिवः शक्तिरिति**। हे जननि तेऽमी वर्णाः एते त्रयो वर्णसमुदायाः तव नाम्नः त्रिकूटात्मकविद्याया अवयवतां अवयवघटकतां एकैककूटरूपतां भजन्ते। एकैकसमुदायाः त्रिकूटाया एकैककूटरूपा भवन्तीत्यर्थः। के ते वर्णसमुदाया इत्याह-शिवो हकारः, शक्तिः सकारः, कामः ककारः, क्षितिर्लकारः, प्रथमसमुदायानन्तर्यसूचकोऽथशब्दः। द्वितीयसमुदायमाह-रविर्हकारः, शीतकिरणः सकारः, स्मरः ककारः, हंसो हकारः, शक्रो लकारः, तदनु द्वितीयकूटानन्तरं तृतीयकूटमाह-परा सकारः, मारः ककारः, हरिर्लकारः, अमी वर्णसमुदायः। कीदृशाः, तिसृभिः हृल्लेखाभिः भुवनेश्वरीबीजैः अवसानेषु अन्तेषु घटिता युक्ताः। एतेषां च त्रयाणां वर्णसमुदायानामन्तेषु एकैकं भुवनेश्वरीबीजं चेत् दीयते, तदा त्रिकूटात्मिका विद्या भवतीत्यर्थः। हृल्लेखापदार्थ उक्तः, स्वच्छन्दसंग्रहे "हृदि लेखेव जागर्ति प्राणशक्तिरियं परा। हृल्लेखा कथ्यते तस्मान्माया चाचिन्त्यवैभवा। अनया रहिताः सर्वे निर्जीवा मन्त्रराशयः। अतस्तु सर्वविद्यानां इयं उद्बोधिनी मता" इति। इयं च लोपामुद्राख्या त्रिकूटा श्रीविद्या। तदुक्तं ज्ञानार्णवे—"सकला भुवनेशानि कामेशीबीजमुद्धृतम्[1]। अनेन सकला विद्याः कथयामि वरानने। शत्रयन्तस्तुर्यवर्णोऽयं कलमध्ये सुलोचने। वाग्भवं पञ्चवर्णाढ्यं, कामराजमथोच्यते। मादनं शिवचन्द्राद्यं शिवान्तं मीनलोचने। कामराजमिदं भद्रे षड्वर्णं सर्वमोहनम्। शक्तिबीजं वरारोहे चन्द्राद्यं सर्वमोहनम्। एतामुपास्य देवेशि कामः सर्वांगसुन्दरः। कामराजोऽभवद्देवि[2] विद्येयं ब्रह्मरूपिणी। कामराजाख्यविद्यायाः [3]शक्तितुर्यं तु सुन्दरि। हित्वा मुखे शिवेन्द्वाढ्या लोपामुद्रा प्रकाशिता। इत्यस्यार्थः-कलाभ्यां सहिता सकला ककारलकारसहितेत्यर्थः। भुवनेश्वरी एकाक्षरभुवनेश्वरीबीजम्। तथा च ककारलकारसहितभुवनेश्वरी बीजमित्यर्थः। कामराजविद्यामाह-शत्रयन्तेति। कामेशीबीजस्यैव ककारलकारयोर्मध्ये शक्तिरेकारः तुर्यवर्णः दीर्घेकारः, इति पञ्चवर्णैः वाग्भवाख्यं प्रथमं कूटम्। तस्य कामेशीबीजस्य मादनं ककारः। अन्ते च शिवो हकार इति षड्वर्णैः कामराजाख्यं द्वितीयं कूटम्। कामेशीबीजस्यादौ चन्द्रः सकार इति बीजाख्यं तृतीयं कूटम्। एषा कामराजाख्या विद्या। अस्याः प्रथमकूटस्थं शक्तिमेकारं तुर्यमीकारं च हित्वा दूरीकृत्य मुखे आदौ शिवो हकारः, इन्दुः सकारः ताभ्यां युक्ता चेद् भवति,

---

[1] 'मुत्तमम्' इति पाठः। [2] 'नित्येयं' इति पाठः।
[3] 'शक्तिं तुर्यं च' इति पाठः।

तदा इयमेव विद्या लोपामुद्राख्या भवतीति भावः। एतस्याः पारिभाषिकं पञ्चदशाक्षरीत्वम्। तदुक्तं मानसोल्लासे-"दशापञ्चकभेदेन प्रपञ्चस्य विलासिनः। साक्षिणी चाक्षरी यस्मात्तस्मात्पञ्चदशाक्षरी" इति। जायते वर्धते अस्ति परिणमति नश्यतीति पञ्चदशाः। इयं विद्या दुर्लभेत्युक्तं तन्त्रे—"यस्य नो पश्चिमं जन्म स्वयं यो वा न शङ्करः। न तेन लभ्यते विद्या श्रीमत्पञ्चदशाक्षरी" इति॥ ३२॥

**स्मरं योनिं लक्ष्मीं त्रितयमिदमादौ[1] तव मनोः**
**निधायैके नित्ये[2] निरवधिमहाभोगरसिकाः।**
**भजन्ति[3] त्वां चिन्तामणिगुणनिबद्धाक्षवलयाः[4]**
**शिवाग्नौ [5]जुह्वन्तस्सुरभिघृतधाराहुतिशतैः॥ ३३॥**

ஸ்மரம் யோனிம் லக்ஷ்மீம் த்ரிதய மிதமாதௌ தவ மனோ:
1 1 3 3 1
நிதாயைகே நித்யே நிரவதி மஹாபோகரஸிகா:;
4 1 1 4 4
பஜந்தி த்வாம் சிந்தாமணிகுணநிபத்தாக்ஷவலயா:
4 1 1 1 1 3 3 3 4
ஶிவாக்னௌ ஜுஹ்வந்தஸ்ஸுரபிக்ருத தா ராஹுதி ஶதை:
3 1 4 4 1 4 1 1

माते! तेरे महामंत्र के प्रारम्भ में तीन अक्षर
स्मर: योनी, लक्ष्मी बीजों के क्रमशः जोड सकल अघहर!
चिंतामणि जपमालायें ले हाथों में अनुभवी रसिक
निरवधिमहाभोग के ज्ञाता भजते हैं समयोपासक,
षोडशसंस्कृताग्नि में तर्पित करते आहुतियां देकर,
कामधेनु की घृतधाराओं की शतशः तन्मय होकर! ॥

## लक्ष्मीधरा

**स्मरमिति**॥ स्मरं कामराजं, योनिं भुवनेश्वरीं, लक्ष्मीं श्रींबीजम्, इदं त्रितयं आदौ तव मनोः मन्त्रस्य, निधाय संयोज्य, एके विरलाः समयिनः, नित्ये! आद्यन्तरहिते! निरवधिमहाभोगरसिकाः अपरिच्छिन्ननित्यानुभवरसज्ञाः, परमयोगीश्वरा इति यावत्। भजन्ति सेवन्ते। त्वां भवतीं, सहस्रदळकमलात् अवरोप्य हृत्कमले संस्थाप्य तादृग्विधां, चिन्तामणिगुणनिबद्धाक्षवलयाः चिन्तामणीनां गुणः गुणनं आम्रेडनं, समूह इति यावत्, तेन निबद्धो रचितः अक्षवलयः अक्षमालिका येषां ते। यद्वा—चिन्तामणय एव गुणनिबद्धाक्षाः सूत्ररचिताक्षाः पद्मबीजानि, तेषां वलयः मालिका येषां ते तथोक्ताः, शिवाग्नौ शिवा

1. माद्ये, 2. चित्ते, चिन्ता, 3. जपन्ति 4. बद्धाक्षरलयाः 5. जुह्वाना

शक्तिः त्रिकोणमिति यावत्, तत्र संस्कृतः अग्निः शिवाग्निः। त्रिकोणे बैन्दवस्थाने स्वाधिष्ठानाग्निं अवयुत्य तत्र निक्षिप्य पाशाङ्कुशाभ्यां सन्निरुध्य भुवनेश्वर्या अवकुण्ठ्य अग्नेः जातकर्मादिषोडशसंस्काराः यत्र क्रियन्ते सः शिवाग्निरिति रहस्यमिति। अयमाशयः—त्रिकोणे बैन्दवस्थाने स्वाधिष्ठानाग्निं निक्षिप्येति। यद्यपि बैन्दवस्थानं चतुष्कोणं, तथापि पुरश्चरणात्मकक्रियायां संवित्कमले त्रिकोणं आरोप्य सहस्र-कमलात् बैन्दस्थानस्थां कामेश्वरीं अवरोप्य पुरश्चरणं कार्यमिति समयिमतरहस्यमिति आचार्याणां आशय इति। जुह्वन्तः सन्तर्पयन्तः, सुरभिघृतधाराहुतिशतैः सुरभिः कामगवी, तस्याः घृतं आज्यं, तस्य धाराः, ताभिः आहुतयः हविःप्रक्षेपाः, तासां शतानि सहस्रं तैः॥

अत्रेत्थं पदयोजना—हे नित्ये! तव मनोः आदौ स्मरं योनिं लक्ष्मीं इदं त्रितयं निधाय निरवधिमहाभोगरसिकाः एके चिन्तामणिगुणनिबद्धाक्षवलयाः शिवाग्नौ त्वां सुरभिघृतधाराहुतिशतैः जुह्वन्तः भजन्ति॥

अत्रेदं तत्त्वम्—समयिनां मन्त्रस्य पुरश्चरणं नास्ति। जपो नास्ति। बाह्यहोमोऽपि नास्ति। बाह्यपूजाविधयो न सन्त्येव। हृत्कमल एव सर्वं यावत् अनुष्ठेयम्। एतच्च 'जपो जल्पश्शिल्पम्' (२७ श्लोकः) इत्यादिश्लोकव्याख्यानावसरे किञ्चिदुक्तम्। अवशिष्टं कृत्स्नं 'तवाज्ञाचक्रस्थम्' (३६ श्लोकः) इत्यादि श्लोकषट्कव्याख्यानावसरे निपुणतरमुपपादयिष्यामः॥ ३३॥

## सौभाग्यवर्धनी

लोपामुद्राविद्यामुद्धृत्य कामराजविद्यामुद्धरति-**स्मरमिति**। स्मरः कः, योनिः एकारः, लक्ष्मीः ईकारः, इदं त्रितयं तव मनोराद्ये प्रथमकूटाक्षरत्रये निधाय आदेशीकृत्य, एके निरवधिमहाभोगरसिकाः। दुःखासंभिन्नसांसारिकपुत्रमित्रकलत्रधनश्रीरित्यादिसंपत्संततिमविरतं समनुभूय पश्चात् स्वर्गभोगानुर्वश्यादि-देवाङ्गनाभिः सह नानाविलासपुरःसरमनवरतमनुवर्तमानानिच्छन्तो जपन्ति। मन्त्ररूपिणीं त्वां चिन्तामणिगुणनिबद्धाक्षवलयाः क्षकारं मेरुं कृत्वा अनुलोमप्रतिलोमतया वलयाकारेण भ्राम्यमाणा अकारादि क्षकारपर्यन्ताक्षमालाः, शिवाग्नौ; शिवशक्तिरूपवागीश्वरवागीश्वरीसम्मेलनजातवह्नौ, सुरभिघृतधाराहुति-शतैः; गोघृतधाराहुतिशतैः मातृकाक्षरमालया मन्त्रमयीं त्वां ध्यायन्तो ये जपन्ति; तथा अनवरतं घृताहुतिशतं जुह्वति; तेषां सांसारिका भोगा ऐहिकामुष्मिका अनवरतमुज्जृम्भन्त इति भावः। हे नित्ये, तव मनोराद्ये रूपे त्रितयं वर्णत्रयं, स्मरं योनिं लक्ष्मीं क्रमेण निधाय विधायेत्यर्थः। अव्ययानामने-कार्थत्वादुपसर्गो विधानद्योतकः। हकारादिवर्णत्रयं स्मरादिवर्णत्रयं कृत्वेत्यर्थः। एवं वा योजना कार्या। अन्यत्सर्वं पूर्ववदेव योजनीयम्। इति प्रकटार्थः।

**परमार्थस्तु**—निरवधिमहाभोगरसिकाः; अखण्डानन्दसंविदुल्लासलक्षणात्मानुभवपरमपुरुषार्थ-रसिकाः, भजन्ति त्वां मनसा मन्त्ररूपां भावयन्ति। किं कृत्वा? चिन्तामणिगुणनिबद्धाक्षवलयाः;

भावार्थसंप्रदायार्थनिगर्भार्थकौलिकार्थरहस्यार्थपरमरहस्यार्थरूपा येऽर्थास्तेषां चिन्ता पर्यालोचनम्, मणिरिव मणिः प्रकाशमानम्, तस्य गुणः पर्यालोचनजन्यपरमरहस्यार्थरूपा या विषयासंसक्तिः महाप्रकाशशिवाविनाभावेन भावना, तया निबद्धाक्षवलयाः निगृहीतचक्षुरादिबाह्येन्द्रियव्यापाराः, शिवाग्नौ ; शिवोऽहमिति पूर्णाहंतामहाप्रकाशे, सुरभिघृतधाराहुतिशतैः ; सुरभिः विषयासङ्गवासना तद्रूपा घृतधारा स्नेहपरंपरा, तां जुह्वन्तः प्रलयं प्रापयन्तः भावार्थादिषड्वार्थपरामर्शेन प्रकाशमानेन शिवाविनाभूतचिच्छक्तेर्भावनया निरुद्धबाह्येन्द्रियव्यापाराः ; शिवोऽहमिति पूर्णाहंतातेजसि अनात्मभूताहंताविजृम्भितविषयासङ्गवासनास्नेहपरंपरां दहन्तः त्वां भजन्ति । विभूतिनिर्विकल्पसमाधियोगा धन्याः त्वद्भक्तियोगेन परमानन्दनिर्भरं स्वभावसंवेदनमनुभूय प्रभवन्तीति भावः । तदुक्तं **शिवभावितपरास्तोत्रे**—" अहमि प्रलयं कुर्वन्निदमः प्रतियोगिनः । पराक्रमपरो भुङ्क्ते स्वभावमशिवापहम् ॥" इति । अत्र जुह्वन्त इति "नाभ्यस्ताच्छतुः" इति नुमो निषेधाच्छान्दसं पदम् । भगवतः शङ्करावतारस्य श्रीशंकराचार्यस्य वचनं छान्दसमेव । केचन जुह्वाना इति पाठं कल्पयन्ति । तदपि छान्दसमेव। "जुह्वानः सुप्रतीकः" इत्यादौ छन्दस्येवात्मनेपदप्रयोगो दृश्यते, न तु लोके क्वचित् । अथ वा जुहूः स्रुग्विशेषः, तदन्तः सुरभिघृतधाराहुतिशतैः जुहूमध्यगतगोघृतधाराहुतिशतैः शिवाग्नौ महाभोगरसिकाः महाभोगः पूर्णाहुतिः तद्रसिकास्त्वां जपन्ति, जपहोमादिभिस्त्वामुपासते धन्या इति भावः । इति प्रकटार्थे योजनीयम् ।

परमार्थविषयेऽर्थान्तरं च - चिन्तामणिः चिन्तानां मणिः चिन्तानां प्रसारकं मन इत्यर्थः । तद्रूपो गुणः, तस्मिन्निबद्धाक्षवलयाः मनसा चिन्त्यमाना अकारादिक्षकारान्ताः अक्षमाला इत्यर्थः । शिवाग्नौ शिवोऽहमिति पूर्णाहंतामये संविदग्नौ जुह्वन्तः सुरभिघृतधाराहुतिशतैः, जुहूरुन्मनी तदन्तः सुरभिः सुवासना धर्माधर्मौ तद्रूपा घृतधाराः स्नेहधाराः तासामाहुतिशतैः महाभोगरसिकाः पूर्णाहुतिपरायणास्त्वां भजन्ति । मनसा भाव्यमानवर्णमालया मूलादिब्रह्मरन्ध्रान्तं कुण्डलिनीरूपं विचिन्त्य स्थिरासने उन्मनीमार्गेण सुवासनाधर्माधर्मानुबन्धस्नेहपरंपरां सोऽहमिति विचिन्त्यमानशिवाग्नौ पूर्णाहुतिं कुर्वाणा अन्तर्यागपरायणाः त्वां भजन्ति । एवंविधान्तर्यागेन परमां सिद्धिं लभन्त इति तात्पर्यार्थः । तथा चान्तर्यागमन्त्राः—

" प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचा ।
धर्माधर्मकलास्नेहपूर्णां वह्नौ जुहोम्यहम् ॥ " - इति ।

एवं विद्याद्वयोद्धारेण पूर्वोक्ता वैष्णवविद्या स्पष्टीकृता, नन्दिकेश्वरविद्या च । कामराजविद्योद्धारे श्रुतिः **अथर्ववेदसौभाग्यकाण्डे**—

" कामो योनिः कमला वज्रपाणिर्गुहा हसा विश्वमाताभ्रमिन्द्रः ।
पुनर्गुहा सकला माययैषा पुरूच्येषा विश्वमातादिविद्या ॥ " - इति ।

ऋग्वेदेऽपि - " इन्द्रो मायाभिः पुरुरूप ईयते " इति । अस्यार्थः—इन्द्रः इच्छामात्रोपनीतसकलसंपद्द्रष्टा स परमैश्वर्यानुभावकेन्द्ररूपोपाधिः परमशिवः लकारः, मायाभिः हृल्लेखाभिः बहुरूपमीयते जायते । तथा हि - हृल्लेखायाः पञ्चधा, षोढा, चतुर्धा इति साङ्गाः त्रिविधा भवन्ति । तत्र हकारः, रेफः, ईकारः, बिन्दुस्तत्समष्टिरिति पञ्चधाभागेन वाग्भवोत्पत्तिः; हकारः रेफः, बिन्दुत्रयं तत्समष्टिरिति षोढाभागेन कामराजोत्पत्तिः । हकारः रेफः ईकारः, बिन्दुरिति चतुर्धाभागेन शक्तिकूटोत्पत्तिः । हकारेण प्रकाशरूपेण ककारस्य कामराजस्योत्पत्तिः । रेफेण शक्तिरूपेण एकारस्य शक्तिरूपस्योत्पत्तिः । ईकारेण परमप्रकाशाविनाभूतचिच्छक्तिरूपेण ईकारस्य चिच्छक्तिरूपस्योत्पत्तिः । बिन्दुना नादरूपेण परमैश्वर्यसमुज्जृम्भितस्य लकारस्य इन्द्रस्योदयः । एतेषां समष्ट्या समस्तस्योत्पत्तिः । हकारेण हकारस्योत्पत्तिः । रेफेण शक्तिरूपेण शक्तिरूपस्य सकारस्योत्पत्तिः । सूर्यरूपेण बिन्दुना प्रकाशात्मकककारस्योत्पत्तिः । वह्निरूपबिन्दुना रुद्ररूपेण हकारस्योत्पत्तिः । " रुद्रो वा एष यदग्निः" इति श्रुतेः । चन्द्ररूपेण बिन्दुना शिवरूपेण लकारस्य शिवरूपस्योत्पत्तिः ; तथा च "अष्टमी मूर्तिश्चन्द्रमाः शंकरस्य ", इति पुराणवाक्याल्लकारस्य शिवरूपत्वम् ; श्रीकण्ठादिमध्ये पठितत्वात् । तथा च **शारदातिलके**—" श्वेतौ भृग्वीशलकुलिः शिवः संवर्तकस्तथा" इति । एतेषां समष्ट्या समस्तकामराजोत्पत्तिः । हकारेण कलारूपेण कलानिधिरूपस्य सकारस्योत्पत्तिः । तथा च **संकेतपद्धतौ**—

" अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ।
हकारोऽन्त्यकलारूपो वर्णाहंताप्रकाशकः ॥ "—इति ।

रेफेण वह्निना रजोगुणप्रधानस्य ब्रह्मणः ककारस्योत्पत्तिः । ईकारेण श्रीरूपेण सकलाधारस्वरूपस्य लकारस्योत्पत्तिः । एतेषां समष्ट्या सकलशक्तिकूटोत्पत्तिरिति । किं बहुना, शिवशक्त्योः हकाररेफयोः श्रिया सकलं विलसितं विश्वमिति तात्पर्यार्थः । तदुक्तं **कादिमते**—" विद्यातृतीयखण्डेन सकलार्थोऽभिधीयते । तेनेदं विश्वलसितं हृल्लेखात्मकमीश्वरि ॥ शिवशक्तिसमायोगादुदेतीदं विजृम्भते ॥" इति एतेन ह्रींकारस्यैव सर्वोऽपि मन्त्रप्रपञ्च इति स्पष्टीकृतोऽर्थः ।

एतस्याः विद्यायाः पञ्चदशाक्षरीत्वं पञ्चदशरूपेण न भवति, किं तु जायते, वर्धते, विजृम्भते, परिणमते, नश्यतीति, दशापञ्चकयुक्तस्य प्रपञ्चस्य साक्षिणी, अक्षरी अक्षरसंबन्धिनी; तेन पञ्चदशाक्षरी । पञ्चदशा यस्याः सकाशाद्भिद्यन्ते, तेन पञ्चदशा (चा)सौ अक्षरी चेति पञ्चदशाक्षरी । तदुक्तं **मानसोल्लासे**—

" दशापञ्चकभेदेन प्रपञ्चस्य विलासिनः ।
साक्षिणी चाक्षरी यस्मात्तस्मात्पञ्चदशाक्षरी ॥ "

इति। इति लोपामुद्राकामराजविद्ययोः संक्षेपेण महिमा निरूपितः। अन्यत्सर्वं भावार्थादिपञ्चार्थविवेचनं विद्यारण्यश्रीचरणविरचितश्रीविद्यार्थदीपिकायां योगिनीहृदये च द्रष्टव्यम् ॥ ३३ ॥

## अरुणामोदिनी

एवं मन्त्रमुपन्यस्य बाह्यपूजाजपादिनिषेधपूर्वकमैश्वर्यकामिनां जपप्रकारं सूचयति—**स्मरमिति**। हे नित्ये! एके केचित् समयिनः; निरवधिमहाभोगरसिकाः, अपरिमितैश्वर्यसुखानुभवलोलुपाः सन्तः, तव; भवत्या मनोर्मन्त्रस्यादौ प्रथमतः, स्मरं मदनबीजम्; योनिं भुवनेश्वरीबीजम्; लक्ष्मीं रमाबीजं; चेति त्रितयं वर्णत्रितयं, निधाय संयुज्य। अत्र केचित्—स्मरं ककारं, योनिमेकारं, लक्ष्मीमीकारं निधाय संयुज्येति व्याख्याय, अत्र भोगप्रदायाः कादिविद्याया उद्धारः; शिवः शक्तिः काम इत्यत्र मोक्षप्रदहादिविद्याया उद्धारश्चेत्याहुः। चिन्तामणिभिः चिन्तितार्थप्रदैः मणिविशेषैरेव **गुणैर्निबद्धो**ऽक्षवलयः अक्षमाला यैस्ते तथोक्ताः सन्तः; यद्वा—सकलेष्टदातृत्वाच्चिन्तामणिः मातृका तद्रूपो गुणः, तन्निबद्धाक्षरवलयः; क्षकारं मेरुं कृत्वा अनुलोमप्रतिलोमतया वलयाकारेण भ्राम्यमाणः सन् अक्षरमालेति प्रसिद्धो वलयो यैस्ते। परिजप्येति शेषः। सुरभिघृतधाराहुतिशतैः कामगवीघृतधाराहोमशतैः। शिवा शक्तिस्त्रिकोणमित्यर्थः; तत्र स्थितो अग्निः शिवाग्निः। यद्वा-शिवाग्निर्ज्ञानवह्निः, जातकर्मादिषोडशसंस्कारसंस्कृतः, संवित्कमलसमारोपितत्रिकोणान्तर्वर्तिसंविद्रूपो वा आवाहितवागीश्वरी-वागीश्वररूपकामेश्वरीनामको वह्निः। एतेन बाह्यपूजाहोमादिनिषेधः कृत इति लक्ष्मीधरादयः। तत्र जुह्वन्तः होमं कुर्वाणाश्च सन्तो भजन्ति सेवन्ते। महैश्वर्यकामिनस्त्वेवं जप्त्वा मानसिकमेव होमादि कुर्युरित्येवमुपदेशः। अहोभवन्मन्त्रजपकाल एव महैश्वर्यावाप्तिर्भवत्युपासकानामिति कामधेनु (सुरभि) चिन्तामणिपदप्रयोक्तॄणामभिप्रायः ॥ ३३ ॥

## आनन्दगिरीया

कामराजात्मिकां षोडशीमाह—**स्मरमिति**। हे नित्ये, तव मनोर्मन्त्रस्य आद्यकूटे स्मरं ककारं योनिमेकारं लक्ष्मीमीकारं, इदं वर्णत्रयं आद्ये मनोः कूटप्रथमेऽक्षरत्रयस्थाने निधाय, हकार-सकारककाराणां स्थाने क्रमेण ककारमेकारमीकारं आदेशीकृत्य, विनिमयं वा कृत्वा, तमेव मनुं कामराजविद्यारूपतया एके जपन्ति। किंलक्षणास्ते - निरवधिमहाभोगरसिकाः, ऐहिकान् भोगान् भुक्त्वा निरवधिर्यो महाभोगः स्वर्गवैकुण्ठप्रभृतिः, तत्र रसिकाः। एतेन मन्त्रस्यैहिकामुष्मिकभोगसाधनत्वमुक्तम्। पुनः किं लक्षणाः, चिन्तामणिगुणनिबद्धाक्षवलयाः, चिन्तामणेरिव गुणा येषां ते चिन्तामणिगुणाः, स्फटिकमाणिक्यमुक्ताफलप्रभृतयः, तैर्निबद्धं अक्षवलयं यैस्ते, तथा। किं कुर्वन्तः, शिवाग्नौ शिवे विशुद्धे उद्दीप्ते अग्नौ सुरभिघृतधाराहुतिशतैः जुह्वन्तः, सुरभिर्धेनुस्तस्या घृतं, तस्य धाराशतैः जुह्वन्तः, अथवा चिन्तामणि र्मातृका तद्रूपा गुणाः, तेन निबद्धं अकारादिक्षकारान्ता वर्णा

एव अक्षवलयं अक्षमाला येषामित्यर्थः । शिवाग्नौ शिवशक्तिसंयोगेन जातेऽग्नौ । निरवधिमहाभोगरसिकाः, अखण्डानुभवानन्दात्मकस्वरूपलाभलक्षणपरमपुरुषार्थरसिकाः, अथ वा रहस्यपरमरहस्यगंभीरभावप्रभावार्थपञ्चकविषयिणी या चिन्ता सा मणिरिव, प्रकाशकत्वात्, तस्य गुणः पर्यालोचनं, तेन निबद्धं निगृहीतं विषयविषयकबाह्यव्यापारपराङ्मुखं कृतं अक्षवलयं इन्द्रियसमूहो यैस्ते । ध्यानावरुद्धमनसा शिवशक्तिस्वरूपानन्दानुभवेन विगलितबाह्येन्द्रियव्यापाराः । शिवाग्नौ शिवोऽहमिति पूर्णाहंभावनाजनितमहाप्रकाशे । सुरभिः विषयासंगवासनाः, ता एव घृतधाराः स्नेहप्रधानत्वात्, ता एवाहुतयः, तासां शतानि, तैर्जुह्वन्तः । विषयवासनाप्रलयं प्रापयन्तीत्यर्थः । इयं विद्या पञ्चदशाक्षरीति प्रसिद्धास्ति । तत्र पञ्चदशभिरक्षरैः निर्मिता पञ्चदशाक्षरीति वदन्ति । वस्तुतः, अस्ति जायते वर्धते विपरिणमते नश्यतीति प्रतिदेहं समस्तं पञ्च पञ्च दशा अवस्थाः सन्ति, तासामाक्षरी अक्षरसंबन्धिसाक्षिणी पञ्चदशाक्षरीति । तदुक्तं—"दशापञ्चाक्षरीभेदेन प्रपञ्चस्य प्रवर्तिका । साक्षिणी चाक्षरी यस्मात्तस्मात्पञ्चदशाक्षरी"इति । न तु तदेवार्थः । स्मरं लक्ष्मीमिति पद्यस्य रहस्यार्थव्याख्या—मूलकामराजात्मिका - स्मरमिति एतत्त्रये दत्ते तस्मिन् कूटत्रयद्वितीयषोडशी भवति । आचार्याणां मते षोडशीद्वयम् । परं तत्र त्रिकूटा सकला देवि षोडशवर्णा भवन्ति । यद्यपि सा भेदद्वयवती तदचेतोद्वयमाद्यभूतमिति गुरुचरणाः ॥ ३३ ॥

## तात्पर्यदीपिनी

**स्मरमिति** - हे नित्ये, एके निरवधिमहाभोगरसिकाः, त्वां जपन्ति । निरवधिर्निर्मर्यादः यो महाभोगः, तत्र रसिकास्त्वां जपन्ति । किं विधाय, तव मनोरादौ पूर्वोक्तमन्त्रराजस्य प्रथमं स्मरं कामबीजं, योनिं भुवनेश्वरीबीजं, लक्ष्मीं श्रीबीजं, इदमेतत् त्रितयं निधाय । किं विधाः, एके चिन्तामणिगुणनिबद्धाक्षवलयाः चिन्तामणिरेव गुणः, तत्र निबद्धं अक्षवलयं यैस्ते । तथा पुनः कीदृशाः, शिवाग्नौ त्रिकोणे सुरभिघृतधाराहुतिशतैः जुह्वन्तः, सुरभेर्घृतधाराः, तासामाहुतयः, तासां शतानि तैः ॥ ३३ ॥

## पदार्थचन्द्रिका

संप्रति पूर्वमेव मन्त्रं स्मरादिबीजवैशिष्ट्येनकथयन्, अधिकारिभेदेन मानसौ जपहोमावाह—**स्मरमिति** । हे नित्ये ! विनाशरहिते । तव मनोः पूर्वोक्तस्यादौ प्रथमतः स्मरं स्मरबीजं क्लीमिति योनिं भुवनेश्वरीबीजं ह्रीमिति, लक्ष्मीं श्रीबीजं श्रीमिति त्रितयमिदं निधाय स्थापयित्वोच्चारयेदित्यर्थः । एके मुख्या अधिकारिणः त्वां जपन्ति । तदनुसन्धानपूर्वकं त्वन्मन्त्रं जपन्तीत्यर्थः । एकशब्दोक्तां मुख्यतामाह - निरवधिमहाभोगरसिकाः मोक्षसुखानुरक्ता इत्यर्थः । नित्ये इत्यत्र चित्ते इति पाठे चित्ते निधायेति योज्यम् । चिन्तामिति पाठे त्वयि मनोवृत्तिं निधायेत्यर्थः । पुनरपि एकशब्दोक्तान्

विशिष्य प्रत्याहारमाह - चिन्तामणिवत् भक्तकामितपूरकत्वात्, गुणाः परमोदारत्वात्, तैर्निबद्धानि भवानीचरणेषु स्थापितानि अक्षवलयानि यैस्ते, अक्षाणि च वलयानि चाक्षवलयानि। अक्षाणां वलयसादृश्यं अतिनिर्मलत्वेन। मानसं होमं वदन् पुनरपि तान्विशिनष्टि - शिवाग्नौ शिवोऽग्निरिव जगद्धोमादिकारणत्वात्, तत्र, सुरभिघृतधाराहुतिशतैः जुह्वन्तो होमं कुर्वन्त इत्यर्थः। आर्षोऽयं नुम्। समस्तदेवदर्शित्वात् श्रीमन्महादेवावतारत्वादृषित्वमाचार्यस्य। "चतुर्भिः सह शिष्यैस्तु शंकरोऽवतरिष्यती"ति कालिकापुराणे। यद्वा, जुह्वा अन्तर्मध्ये यानि सुरभिघृतानि तेषां धाराहुतिशतैः होमं कुर्वन्त इत्यर्थः। जुहूः स्रुक्। ध्रुवोपभृज्जुहूर्वा तु स्रुवो भेदाः स्रुचः स्त्रियां इति अमरः। ऋषिर्देववसिष्ठादाविति मेदिनीकरः॥ ३३ ॥

## डिण्डिमभाष्यम्

नन्विह खलु भगवतो लोपामुद्रा हादिरिति प्रसिद्धा महानुभावा मोक्षप्रधाना विद्येयमिति प्रसिद्धिः, अत एव परमशिवकामेश्वरमहाभट्टारकब्रह्मवाचिका, अत्र भोगशालिनस्तथा न प्रवर्तन्ते इति कृत्वा भोगप्रधानमशेषमोक्षानन्दप्रदञ्च महामन्त्रसारं महाकामेश्वराख्यं काद्यमनाद्यविद्यानिबर्हणं मन्त्रराजमुपन्यस्यति — **स्मरं** इत्यादिना। प्रागुक्तस्य महामन्त्रस्यादिमेषु त्रिषु वर्णपदेषु स्मरं कामबीजं, योनिं एकला-बीजरूपिणीम् पराशक्तिं, लक्ष्मींमातृकाचतुर्थीमिति वर्णत्रिकं संयोज्य, हे परमेश्वरि! तव मनोर्मन्त्रस्यादौ उक्तप्रकारेण विन्यस्य निरवधिमहाभोगरसिकाः निरवधिरवसानशून्यो महाभोगो यस्तत्र रसिकाः सजातोत्साहास्त्वां जपन्ति। पुनः किम्भूताः? चिन्तामणिगुणनिबद्धाक्षवलयाः—चिन्तामणिगुणेन चिन्तामणिमाल्यनिबद्धं सञ्जातं अक्षवलयं अक्षमाला येषां ते तथोक्ताः। पुनः किंभूताः? शिवाग्नौ परमशिवभट्टारके ज्ञानपावके, सुरभिघृतधाराहुतिशतैः कामधेनुक्षीरसम्पादितघृतधारारूपाभिराहुतिभिः शतसंख्याभिः असंख्याभिरित्यर्थः। जुह्वन्तो होमं कुर्वाणाः त्वां जपन्ति इति सम्बन्धः। तपस्याकालेऽपि तव भक्तानां महदैश्वर्यं तच्चिन्तामणिभिरेवाक्षमालाकल्पना कामधेनोराज्येन होमकर्म एवमैन्द्रमेव पदमनुभवति, तपसि तत्फलसञ्जातमैश्वर्यमाहात्म्यं त्वमेव जानासि नान्या देवता इत्यर्थः ॥ ३३ ॥

## गोपालसुन्दरी

कामराजविद्यामुद्धरति-**स्मरमिति**—स्मरं ककारं योनिमेकारं लक्ष्मीमीकारम् इदं त्रितयं तव मनौ मन्त्रे पूर्वोक्ते निधाय तत्रत्याद्याक्षरत्रयंलोपयित्वा संस्थाप्य एके कोष्ठसाधका हे नित्ये! त्वां जपन्ति कीदृशाः निरवधिः अवसानशून्यो यो महाभोगः ऐहिकामुष्मिकदुःखसम्भिन्नसुखसन्ततिः तद् रसिकास्तदिच्छावन्तः चिन्तामणिः मातृका तद्रूपो यो गुणस्तन्तुः तत्र निबद्धोऽक्षरूप इकार क्षकाररूपो वलयः अनुलोमप्रतिलोमतया वलयाकारो यैस्ते। यद्वा चिन्तामणेर्गुणो यस्यासौ चिन्तामणिगुणस्त्वच्चरणकमलं

तत्र निबद्धानि अक्षवलयानि इन्द्रियसमूहानि यैस्ते। शिवाग्नौ शिवशक्तिरूपवागीश्वरवागीश्वरीसम्मेलनजातवह्नौ सुरभिघृतधाराहुतिशतैर्होमं सम्पादयन्तः। आर्षत्वान्नुम्। जुहुः स्रुक् तस्यान्तर्मध्ये यत् सुरभिघृतधाराहुतिशतं तैः। शिवाग्नौ महाभोगरसिकाः पूर्णाहुतिरसिकाः इति वार्थः। अत्रैवाथर्वणवेदसौभाग्यकाण्डे—"कामो योनिः कमला वज्रपाणिः गुहाहसा मातरिश्वाभ्रमिन्द्रः। पुनर्गुहासकलामायर्यैष्टा-पुरूच्येषा विश्वमातादिविद्या।" इति। ऋग्वेदेऽपि—"इन्द्रो मायाभिः पुरुरूप ईयते।" इति। इन्द्रः परमैश्वर्ययुक्तो लकारः मायाभिर्हृल्लेखाभिः बहुरूप ईयते तथाहि—हृल्लेखायाः पञ्चधा षोढा चतुर्धा विभागास्त्रिधा भवन्ति। तत्र हकार रेफ ईकारः तत्समष्टिरिति पञ्चधा विभागेन वाग्भवोत्पत्तिः। हकारो रेफः बिन्दुत्रयं तत्समष्टिः षोढा विभागेन कामराजोत्पत्तिः। हकारो रेफ इकारो बिन्दुरिति चतुर्धा विभागेन शक्तिकूटोत्पत्तिः। एतस्या विद्यायाः पञ्चदशाक्षरीत्वं व्याख्यातं मानसोल्लासे—"दशापञ्चकभेदेन प्रपञ्चस्य विलासिनः। साक्षिणी चाक्षरी यस्मात्तस्मात्पञ्चदशाक्षरी। जायते वर्द्धते अस्ति परिणमति विनश्यती"ति पञ्चदशाः।

**विष्णुपक्षे**—स्मरं क्लीं, योनिं ह्रीं, लक्ष्मीं श्रीं तव मनौ सुन्दरीगोपालमन्त्रे वैपरीत्येनाष्टादशाक्षरे वा तेन राजराजेश्वरविंशत्यर्णः स्मरमित्यनुवादः। मनौ कीदृशे? नित्ये शिवाग्नौ शोभनाग्नौ, शेषं समानम्॥ ३२॥

## आनन्दलहरीटीका

कामराजाख्यविद्यामप्युद्धरति—**स्मरमिति**। स्मरं ककारं, योनिमेकारं, लक्ष्मीमीकारं एतत् त्रितयं तव मनोर्मन्त्रस्य पूर्वोक्तस्यादौ निधाय, पूर्वमन्त्रस्य आद्याक्षरत्रयं दूरीकृत्य, एतदक्षरत्रयं दत्वेत्यर्थः। एके मुख्याः, हे नित्ये त्वां भजन्ति सेवन्ते, कीदृशाः निरवधिः निःसीमोऽनन्तः यो महाभोगः परमानन्दसाक्षात्काररूपः; तत्र रसिकाः अभिलाषिणः। निरवधि निरन्तरं भजन्तीति वाऽन्वयः। चिन्तामणिः पञ्चाशद्वर्णरूपा मातृका, तद्रूपो यो गुणः सूत्रं तेन निबद्धो रचितः अक्षवलयः अकारादिक्षकारान्तरूपो वलयः, अनुलोमप्रतिलोमतया करे यैस्ते, तथा वर्णमालया जपन्त इत्यर्थः। चिन्तामणेर्गुणोऽभीष्टदानादिरूपो यत्र तं चिन्तामणिगुणं त्वच्चरणयुगं, तत्र निबद्धा अर्पिता अक्षवलया इन्द्रियसमूहा यैस्ते, अनया इति वाऽर्थः। येषां चिन्तामणिमाला सुरभेः कामधेनोरपि घृतं वर्तते, ते इन्द्रादयोऽपि त्वां भजन्तीति भावार्थं कश्चिदाह। शिवयोरग्निः शिवाग्निः। तत्र शिवशक्तिरूपवागीश्वरवागीश्वरीसंयोगजाते तन्त्रोक्तरीया स्थापिते अग्नावित्यर्थः। सुरभि सुगन्धि यद् घृतं तं सुरभिघृतं तस्य धारारूपैः आहुतिशतैः जुह्वन्तो होमं कुर्वन्तः। यद्यप्यत्र 'नाभ्यस्तच्छतु'रित्यनेन सूत्रेण नुम् प्रतिषेधाज्जुह्वत इति भवति, तथाप्यार्षतुल्यत्वात्, पृषोदरादिमध्ये द्रष्टव्यमिति भावः। वस्तुतस्तु जुहूः स्रुक्, हूयतेऽनया इति व्युत्पत्त्या होमपात्रमात्रं वा तस्य अन्तर्मध्ये यत्सुरभिघृतं तस्य

धाराहुतिशतैः त्वां भजन्तीत्यन्वयः। जपन्तीति क्वाचित्कपाठः। महाभोगेत्यत्र तृतीयार्थान्वयः। कामराजविद्येयम्। प्रमाणं तु पूर्वमेव लिखितम् ॥ ३३ ॥

**शरीरं त्वं शम्भोश्शशिमिहिरवक्षोरुहयुगं**
**तवात्मानं मन्ये भगवति [1]नवात्मानमनघम्।**
**अतश्शेषश्शेषीत्ययमुभयसाधारणतया**
**स्थितस्सम्बन्धो वां समरसपरानन्दपरयोः[2] ॥ ३४ ॥**

ஶரீரம் த்வம் ஶம்போ: ஶஶிமிஹிர வக்ஷோருஹயுகம்
1 4 3
தவாத்மானம் மன்யே பகவதி நவாத்மானமனகம்;
1 1 4 3 1 1 4
அதஶ்ஶேஷஶ்ஶேஷீத்யயமுபய ஸாதாரணதயா
1 4 4 1
ஸ்திதஸ்ஸம்பந்தோ வாம் ஸமரஸ பரானந்த பரயோ: ||
2 1 3 4 1 3 1

भगवति ! सूर्यचन्द्रकुचयुग से भूषित तेरा तन लगता
परानन्द - भैरव शिव का नव व्यूहात्मक शुभ तन लगता !
फिर शिव का तन ही तेरे रूप में दास यह लखता है।
शेष वे शेषी का समरस संबंध उभयतः लखता है ! ॥

## लक्ष्मीधरा

'तवाज्ञाचक्रस्थम्'[3] इत्यादिश्लोकषट्केन सामयिकं मतं निरूपयिष्यन् सप्रभेदं कौलमतं तदुपयोगितया निरूपयति। कौलमतं द्विविधं, पूर्वकौलं उत्तरकौलं चेति। एतद्द्वितयं क्रमेण श्लोकद्वितयेनाह—**शरीरमिति** ॥ शरीरं देहः, त्वं भवती महाभैरवी, शम्भोः आनन्दभैरवस्य, शशिमिहिर वक्षोरुहयुगं शशी चन्द्रः मिहिरः सूर्यः तावेव वक्षोरुहौ कुचौ तयोर्युगं युग्मं यस्य तत्। तव भवत्याः महाभैरव्याः, आत्मानं देहं, मन्ये जानामि। भगवति! भगः अस्या अस्तीति भगवती तस्यास्सम्बुद्धिः।

उत्पत्तिं च विनाशं च भूतानामागतिं गतिम्।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥

इति। स्मरणात् उत्पत्त्यादिवेदनं भगः तद्वती भगवती। यद्वा—इन्दुकलाविद्यायाः नवयोन्यात्मकत्वात् नवयोनिमती भगवती। प्राशस्त्ये मतुप्। नवयोनिभिः प्रशस्तेत्यर्थः।

---

1. भवात्मानमनघम्, 2. पद्योः 3. ३६ श्लोकः

नवात्मानं [1]आनन्दभैरवं नवव्यूहात्मकम् । आनन्दभैरवस्य नवव्यूहात्मकत्वं उपरिष्टात् वक्ष्यते । अनघं निर्दोषम्, अतः अस्माद्धेतोः, यतः कारणात् परानन्दपरयोः ऐक्यं तस्मादित्यर्थः । शेषः गुणभूतः अप्रधानम्, शेषी प्रधानम्, इत्ययं एवंप्रकारः, उभयसाधारणतया उभयोः भैरवीभैरवयोः साधारणतया साधारण्यात्, स्थितः अवस्थितः, सम्बन्धः शेषशेषिभावरूपः, वां युवयोः समरसपरानन्दपरयोः समरसे सामरस्ययुक्ते परानन्दः आनन्दभैरवः परा आनन्दभैरवीरूपा चिच्छक्तिः कला, समरसे च ते परानन्दपरे च तयोः ।

अत्रेत्थं पदयोजना—हे भगवति ! शम्भोस्त्वं शशिमिहिरवक्षोरुहयुगं शरीरं भवसीति शेषः । आनन्दभैरवस्य कालव्यूहान्तःपातित्वात् सूर्यचन्द्रयोः वक्षोरुहयुगत्वारोपणं युक्तम् । यद्वा—अयमन्वयः—हे भगवति ! शशिमिहिरवक्षोरुहयुगं शरीरं शम्भोस्त्वमेव ।

सूर्यचन्द्रौ स्तनौ देव्याः तावेव नयने स्मृतौ ।
उभौ ताटङ्कयुगलमित्येषा वैदिकी श्रुतिः ॥

इत्यनेन भगवत्याः शम्भुं प्रति शेषत्वमुक्तम् । हे भगवति ! तवात्मानमनघं नवात्मानं मन्ये । अतः " शेषः शेषी " इत्ययं सम्बन्धः समरसपरानन्दपरयोः वां उभयसाधारणतया स्थितः ।

अत्रेदमनुसन्धेयम्—महाभैरवस्य नवात्मेति संज्ञा, नवव्यूहात्मकत्वात् । नव व्यूहास्तु—

कालव्यूहः कुलव्यूहो नामव्यूहस्तथैव च ।
ज्ञानव्यूहस्तथा चित्तव्यूहस्स्यात्तदनन्तरम् ॥
नादव्यूहस्तथा बिन्दुव्यूहस्स्यात्तदनन्तरम् ।
कलाव्यूहस्तथा जीवव्यूहस्स्यादिति ते नव ॥

अस्यार्थः—कालव्यूहो नाम—निमेषादिकल्पान्तावच्छिन्नकालसमुदायः कालव्यूहः । सूर्यचन्द्रयोरपि कालावच्छेदकतया कालव्यूहे अन्तर्भाव उक्तः । कुलव्यूहो नाम—नीलादिरूपव्यूहः । नामव्यूहो नाम—संज्ञास्कन्धः । ज्ञानव्यूहो नाम—विज्ञानस्कन्धः । [2]भागव्यूह इति नामान्तरमस्ति । स च द्विविधः [3]सभागविभागभेदात् । [4]सभागो विकल्पः, [5]विभागो निर्विकल्पः ॥ चित्तव्यूहो नाम—अहङ्कारपञ्चकस्कन्धः । अहङ्कारपञ्चकं नाम—अहङ्कारचित्तबुद्धिमहन्मनांसि ।

नादव्यूहो नाम—रागेच्छाकृतिप्रयत्नस्कन्धः । अनेन मातृकायाः परा पश्यन्ती मध्यमा वैखरी इति चत्वारि रूपाणि । परा नाम सान्तरोहरूपा । अन्तरे अन्तःकरणे ऊहेन तर्केण सहितं रूपं यस्याः सा सान्तरोहरूपा । युक्तावस्थायामेव ज्ञातव्येत्यभिसन्धिः । यथोक्तं कामकलाविद्यायाम्—

---

[1]आनन्दभैरवो नवव्यूहात्मतयोदाहृतः । [2]भोगव्यूह इति. [3]सम्भोगविसम्भोगभेदात्.
[4]सम्भोगो विकल्पः. [5]विसम्भोगो निर्विकल्पः

या सान्तरोहरूपा परा [1]महेशी परा नाम ।

पश्यन्ती नाम एषैव स्पष्टा उच्यते । यथोक्तं तत्रैव—

स्पष्टा [2]पश्यन्त्याख्या त्रिमातृका चक्रतां याता ॥

त्रिमातृका त्रिखण्डयुक्ता मातृका पञ्चदशाक्षरी, तदात्मिका । सा च चक्रतां चक्रत्वं याता । त्रिखण्डात्मकचक्रैक्यं त्रिखण्डात्मकमातृकाया इति रहस्यम् । एतच्च पूर्वं बहुधा प्रपञ्चितम् । स्पष्टा युक्तावस्थायां अतिसूक्ष्मतया प्रतीता इत्यभिसन्धिः । मध्यमा नाम परापश्यन्त्योः उच्चानुच्चावस्थात्मिका । सा द्विविधा, वामादिव्यष्टिरूपा वामादिसमष्टिरूपा चेति । वामादिसमष्टिरूपा सूक्ष्मा; वामादिव्यष्टिरूपा स्थूला । वामादयः शक्तयः वामा, ज्येष्ठा, रौद्री, अम्बिका । एताश्चतस्रः शक्तयः श्रीचक्रान्तर्गताधोमुखचतुर्योन्यात्मिकाः । इच्छा, ज्ञानं, क्रिया, शान्ता, परा चेति पञ्च शक्तयः श्रीचक्रान्तर्गतोर्ध्वमुखशक्तियोन्यात्मिकाः । एताभिः शक्तिभिः नवव्यूहात्मिकाभिः भगवत्याः नवात्मत्वं उच्यते । यथोक्तं तत्रैव—

एका परा तदन्या वामादिव्यष्टिमातृसृष्ट्यात्मा ।
तेन नवात्मा जाता माता सा मध्यमाऽभिधानाभ्याम् ॥
द्विविधा हि मध्यमा सा सूक्ष्मा स्थूलाकृतिः [3]स्थिरा सूक्ष्मा ।
नवनादमयी स्थूला नववर्गात्मा तु भूतलिप्याख्या ॥
आद्या कारणमन्या कार्यं त्वनयोर्यतस्ततो हेतोः ।
सैवेयं न हि भेदस्तादात्म्यं [4]हेतुहेतुमदभीष्टम् ॥

अस्यार्थः - एका परेति सत्त्वरजस्तमोगुणसाम्यरूपा । तदन्या पश्यन्ती अन्यतरगुणवैषम्यरूपेत्यर्थः । मध्यमा वामादिव्यष्टिरूपा स्थूलात्मिका । वामादयश्शक्तयो बैन्दवस्थानस्य उभयत्र सम्पुटत्वेनावस्थिताः । अत एव एताः व्यूहशब्दवाच्यास्सत्यः नवात्मशब्देन व्यवह्रियन्ते । समष्टिरूपास्तु परायामन्तर्भूताः । तेन कारणेन माता मातृका नवात्मा जाता । सा मध्यमाभिधानाभ्यां द्विविधा, हि यस्मात् सा मध्यमा सूक्ष्मा स्थूलाकृतिश्चेति द्विविधा । सूक्ष्मास्वरूपमाह — स्थिरेति । स्थैर्यावस्थायां युक्तावस्थायामेव अवभास्या । नवनादमयीति—नव नादाः अकचटतपयशक्षाः । एते परस्परं भिन्नजातीयाः, स्वरकवर्गचवर्गटवर्गतवर्गपवर्गयवर्गशवर्गक्षवर्गाणां परस्परं भिन्नत्वेन प्रतीयमानत्वात् । तत्र प्रमाणमाह—भूतलिप्याख्येति । मिथ्याविज्ञेयमिथ्यारूपायाः लिपेः आख्यापकत्वं दर्पणप्रतिबिम्बस्य मुखज्ञापकत्वमिव न विरुध्यते । आद्या कारणमन्येति—आद्या सूक्ष्मरूपा मध्यमा कारणं स्थूलरूपायाः मध्यमायाः नववर्गात्मिकायाः । अनयोः कार्यकारणयोः यतस्ततो हेतोः सैवेयं सूक्ष्मैवेयं स्थूला । अतः

[1]महेशी विभाविता सैव. [2]पश्यन्त्यादित्रिमातृकात्माच इति क्वचित्पाठो दृश्यते.
[3]. तथा, स्थिता [4]. हेतुहेतुमतोरिष्टम्, जनकजन्ययोरिष्टम् ।

स्थूलसूक्ष्मयोः ऐक्ये अभेदे विमर्शदशायामपि न कोऽपि हेतुरस्तीति तात्पर्येणोक्तम् - यतस्ततो हेतोरिति । तदेव प्रतिपादयति - न हि भेद इति । हेतुहेतुमदिति - हेतुहेतुमत्तादात्म्यं अभीष्टमित्यन्वयः । सर्वत्र तादात्म्यं हेतुहेतुमद्व्यतिरेकेण नास्तीत्यर्थः । अतश्च मध्यमात्मिकायाः चिच्छक्तेः नवात्मता सिद्धा । रागेच्छाकृतिप्रयत्नानां कारणत्वेनागमेषु प्रसिद्धाः मायाशुद्धविद्यामहेश्वरसदाशिवाः रागादीनां तत्त्वभूताः सङ्गृहीताः । तैः परापश्यन्तीमध्यमावैखर्यः अधिष्ठानभूताः सङ्गृहीता इत्यवगन्तव्यम् ।

बिन्दुव्यूहो नाम - षट्चक्रसङ्घः । कलाव्यूहो नाम - पञ्चाशत्कलानां वर्णात्मिकानां सङ्घः । जीवव्यूहो नाम - भोक्तृस्कन्धः ।

एवं नवानां व्यूहानां भोक्तृभोग्यभोगरूपेण त्रैविध्यम् । आत्मव्यूहस्य भोक्तृत्वेऽपि भोग्य-भोगतादात्म्यात् [1]त्रैविध्यम् । एवं भोगव्यूहस्याप्यूह्यम् । अयमाशयः—आत्मव्यूहस्य भोक्तृत्वं, ज्ञानव्यूहस्य भोगत्वम्, कालव्यूहादीनां भोग्यत्वमेवेति आचार्याणां त्रैविध्यमभिप्रेतमिति । सर्वेषां व्यूहानां जीवव्यूहस्य सर्वत्र अन्वयादैक्यम् । कालव्यूहस्य अवच्छेदकत्वादैक्यम् । कुलनामव्यूहयोः निरूपकत्वादैक्यम् । ज्ञानव्यूहस्य बिन्दुव्यूहे तादात्म्यादैक्यम् । नादकलयोरैक्यात् नवव्यूहात्मकत्वं परमेश्वरस्य सिद्धमेव । अतो नवविधैक्यं भैरवीभैरवयोः ज्ञातव्यमिति कौलमतरहस्यम् । अत एव कौलाः [2]परमेश्वरं नवात्मेति व्यवहरन्ति । यथाहुः कौलाः—

> नवव्यूहात्मको देवः परानन्दपरात्मकः ।
> नवात्मा भैरवो देवो भुक्तिमुक्तिप्रदायकः ॥
> परानन्दपरा शक्तिः चिद्रूपाऽऽनन्दभैरवी ।
> तयोर्यदा सामरस्यं जगदुत्पद्यते तदा ॥

इति दिङ्मात्रमुक्तम् । अवशिष्टं 'तवाधारे मूले' * इत्यादौ निरूप्यते । अयं भावः—आनन्दभैरवमहाभैरव्योः परानन्दपरासंज्ञयोः तादात्म्ये सिद्धे नवात्मता द्वयोः समाना । अतः शेषशेषिभावः आपेक्षिकः । यदा सृष्टिस्थितिलयेषु आनन्दभैरवस्य परानन्दसंज्ञिकस्य परचित्स्वरूपायाश्च महाभैरव्याः प्रयत्न उत्पद्यते, तदा भैरवीप्राधान्यात् प्रधानं प्रकृतिशब्द-वाच्या महाभैरवीति, तस्याः प्रधानत्वं शेषित्वं; आनन्दभैरवस्य अप्रधानत्वं गुणभावः शेषत्वम् । यदा सर्वोपसंहारे प्रकृतेः तन्मात्रावस्थितौ भैरव्याः स्वात्मनि अन्तर्भावात् भैरवस्य शेषित्वं तदा भैरव्याः शेषत्वमिति ॥ ३४ ॥

## सौभाग्यवर्धनी

एवं विद्याद्वयमुद्धृत्य पूर्वोक्तानां "क्षितौ षट्पञ्चाशत्", इत्यादिना षडन्वयशाम्भवानामंश-

---

[1]अविरुद्धम् । एवं भोग्यव्यूहस्य भोगव्यूहस्याप्यूह्यम् . [2]परमेश्वरस्य नवात्मतेति. * ४१ श्लोकः

भूतनवात्मकमिथुनविद्यायाः तात्पर्यात्मकतत्प्रतिपाद्ययोः शिवशक्त्योरभेदं प्रस्तौति - **शरीरमिति।** हे भगवति त्वं शंभोः शरीरम्। कुतः? यतः शशिमिहिरवक्षोरुहयुगं शिवशक्तिरूपहकारसकारमयं सूर्यचन्द्ररूपं स्तनद्वयमित्यर्थः। अत एव तवात्मानमनघमापाततो दृश्यमानप्रपञ्चविलासविभ्रमरहितं नवात्मानं नवात्मकनवाक्षरकूटविद्याप्रतिपाद्यं शिवं मन्ये। तथा च प्राचीनाभियुक्तवचनम्—

"पातालपादमवनीजघनं रवीन्दुवक्षोजशालि हरिदाननमभ्रकेशम्।
वैराजमम्ब भजतां तव दिव्यरूपं कीटायते विधिहरीन्द्रसुरादिकोटिः॥"

इति। अतः शेषः शेषीति अयं (कथं) संबन्धः; गौणमुख्यभाव इत्यर्थः। उभयसाधारणतया समप्राधान्येन स्थितः, समरसपरानन्दपरयोः, ऐकात्म्यसमुल्लसितपरमानन्दनिर्भरयोः। राज्ञः पुरुष इत्यादिवत् षष्ठ्यर्थलक्षणशेषशेषिभावो नास्ति, समप्राधान्यादिति भावः। हन्त तर्हि, "एकं सन्धित्सतोऽपरं प्रच्यवते" इतिवत् संबन्धस्य समप्राधान्ये प्रतिपाद्यमाने उभयोरपि षष्ठ्यर्थशेषलक्षणमप्राधान्यं पर्यवस्यतीति न शङ्कनीयम्। तौ समप्रधानौ तयोः संबन्धः समप्रधान इत्येव प्रतिपाद्यम्। तत्सिद्धं संबन्धिनोः प्रतीयमानं शेषत्वं तात्त्विकं (च) न भवति। आश्रितसंबन्धशेषित्वं दत्वा पुष्णाति। यथाहुरभिनवगुप्तपादाः—

"शेषपोषणकृच्छेषी गुणभावो न तात्त्विकः।
भृत्यादिगौरवख्यात्यै भूपादिगुणभाववत्॥" इति।

तथा च शिवश्च शक्तिश्च शिवशक्ती इति उभयपदार्थप्रधानो द्वन्द्वः। तयोः संबन्ध उभयप्रधानगतः; तत्तु गौणमुख्यसंबन्धघटित इति सिद्धम्; यथा शब्दार्थयोः संबन्धः। अमुमेवार्थं हृदि निधायाह भगवान् सरस्वतीपुत्रः कालिदासः—"वागर्थाविव संपृक्तौ" इति पद्ये। तथा चाथर्वणीश्रुतिः - सौभाग्यकाण्डे—

"भगः शक्तिर्भगवान् काम ईश उभौ दाताराविह सौभगानाम्।
समप्रधानौ समसत्त्वौ समोजौ तयोः शक्तिरजरा विश्वयोनिः॥" इति॥ ३४॥

## अरुणामोदिनी

ननु हादिकादिरूपविद्यादिभेदोपपादनेन हादेः कामेश्वरप्रधानत्वात् कादेश्च कामेश्वरीप्रधानत्वान्मोक्षभोगरूपफलभेदोपपादनाच्च भगवतोर्भेद एव प्रतीयते। तत्कथमनयोरभेदो निर्दिष्टो विरुद्धवत्प्रतीयमान इत्यत्राह—**शरीरमिति।** समग्रैश्वर्यादय उत्पत्त्यादयो वा षड्गुणाः भगाः ते अस्याः सन्तीति भगवती। यद्वा—भगाश्च क्रियायोनयः, ते अस्याः सन्ति प्रतिपादकत्वेनेति भगवती, तस्याः संबुद्धिः हे भगवति! षड्गुणैश्वर्यसम्पन्ने! "भगः शक्तिर्भगवान् काम ईशः"

इति श्रुतेः, स्वयं भगशब्दार्थीभूय देवस्य भगवन्नामवाच्यताप्रदे देवि ! त्वं शक्तिरूपिणी भवती शंभोः शिवस्याष्टमूर्तित्वेन वर्तमानस्येति शेषः। शशिमिहिरौ सूर्याचन्द्रमसावेव वक्षोरुहयोर्युगं यस्य तत्; सूर्याचन्द्रमसोरूपकुचचिह्नितमित्यर्थः। उक्तं च—

"सूर्यचन्द्रौ स्तनौ देव्यास्तावेव नयने स्मृतौ।
उभौ ताटङ्कयुगलमित्येषा शाश्वती श्रुतिः॥"

इति। शरीरं देहः। अतो हेतोः तव भवत्या अनघं निर्मलमात्मानं देहं नवात्मानं नवसंख्यात्मकम्। शिवस्य पृथिव्यप्तेजोवाय्वाकाशसूर्यचन्द्रयजमानरूपेणाष्टमूर्तित्वापत्तेः। तत्र च सर्वत्र शक्तिरूपेण भवत्या वर्तमानत्वादष्टमूर्तित्वं, मूलरूपैक्येन नवात्मकत्वं चेतिभावः। उक्तं च सकलजननीस्तवे—

भुवि पयसि कृशानौ मारुते खे शशाङ्के सवितरि यजमानेऽप्यष्टधा शक्तिरेका।
वहसि कुचभराभ्यां †या विनम्रापि विश्वं, ‡सकलभुवनमातः पाहि मामित्यवोचम्॥
त्वयासौ जानीते रचयति भवत्यैव सकलं, त्वमेवैतत्सर्वं त्वमसि तनवोऽप्यस्य विविधाः।
गतः साम्यं शंभुर्वहति परमं व्योम वपुषा, तथाप्यर्धं भूत्वा विहरसि शिवस्येति किमिदम्॥ *

इति। यद्वा - तवात्मानं देहं नवात्मानं नवव्यूहात्मकं मन्ये जानामि। परमशिवदेहमिवेति भावः। आनन्दभैरवनामकस्य परमशिवस्य नवात्मनामकत्वात् तत्तादात्म्याद् भवत्या अपि नवात्मत्वं जायेतैवेत्यर्थः। नवव्यूहस्तु—"कालव्यूहः कुलव्यूहो नामव्यूहस्तथैव च। ज्ञानव्यूहस्तथा चित्तव्यूहः स्यात्तदनन्तरम्॥ नादव्यूहस्तथा बिन्दुव्यूहः स्यात्तदनन्तरम्। कलाव्यूहस्तथा जीवव्यूहः स्यादिति ते नव॥" इति। कालव्यूहो नाम - निमेषादिकल्पान्तावच्छिन्नः कालसमुदायः। सूर्यचन्द्रयोरपि तदवच्छेदकत्वात्तत्रान्तर्भावः। कुलव्यूहो नाम - नीलादिरूपस्कन्धः। नामव्यूहः—संज्ञास्कन्धः। ज्ञानव्यूहः—विज्ञानस्कन्धः। चित्तव्यूहः—अहंकारादिपञ्चकस्कन्धरूपोऽहंकारचित्तबुद्धिमहन्मनांसि। नादव्यूहः - (परादिप्रभृति) रागेच्छा(प्र)कृतिप्रयत्नस्कन्धः। अनेन मायाद्याः परापश्यन्त्यादयः संगृहीताः। बिन्दुव्यूहः—मूलाधारादिषट्चक्रस्कन्धः। कलाव्यूहः—पञ्चाशद्वर्णस्कन्धः। जीवव्यूहो नाम - भोक्तृस्कन्धः। सर्वमन्यत् लक्ष्मीधरे द्रष्टव्यम्। यदा नवात्मक (नवाक्षर) कूटविद्याप्रतिपाद्यं शिवं मन्ये। तथा च प्राचीनाभियुक्तवचनम्—

"पातालपादमवनीजघनं रवीन्दुवक्षोजशालि हरिदाननमभ्रकेशम्।
वैराजमम्ब भजतां तव दिव्यरूपं क्रीडा (कीटा) यते विधिहरीन्द्रसुरादिकोटिः॥"

---

* त्वया यो जानीते रचयति भवत्यैव सततं त्वयैवेच्छत्यम्ब त्वमसि निखिला यस्य तनवः। गता साम्यं शंभोर्वहति परमं व्योम भवती तथाप्येवं हित्वा विहरति शिवस्येति किमिदम्॥

† या वनभ्रापि ‡ सकलजननि सा त्वं पाहि मामत्यवश्यम्॥

इति। अतो हेतोः शेषः अप्रधानम्। शेषोऽस्यास्तीति शेषी प्रधानमित्ययं संबन्धः शेषशेषिभावसंबन्धः। तदुक्तम्—

"शेषपोषणकृच्छेषी गुणभावो न तात्त्विकः।
भृत्यादिगौरवख्यात्यै भूपादिगुणभाववत्॥"

इति। अथवा शिवाभिवृद्धेः शक्त्यायत्तत्वात् शक्त्यभिवृद्धेः शिवायत्तत्वात् पारार्थ्यं वा शेषशेषिभावः; "शेषः परार्थत्वात्", इति जैमिनिसूत्रात्। बीजाङ्कुरयोरिव, देवयोरविनाभावसंबन्धादविनाभावो वात्र चन्द्रचन्द्रिकयोर्वा वागर्थयोरिव वा शेषशेषिभावः प्रयोज्यप्रयोजकभावो वा संबन्धः। अयमभिप्रायः—प्राथमिकश्लोक एव सूचित इति अवगन्तव्यम्। समो रसो ययोस्तौ समरसौ समानसुखानुभवौ परश्चासावानन्दश्च परानन्दः। परानन्दे परा च परश्च तौ। समरसौ च तौ परानन्दपरौ च तयोः समप्रधानभावापन्नरसानुभवपरयोरित्यर्थः। अत्र च श्रुतिः—

"भगः शक्तिर्भगवान् काम ईश उभा दाताराविह सौभगानाम्।
समप्रधानौ समसत्त्वौ समोतयोः समशक्तिरजरा विश्वयोनिः॥"

इति। वां युवयोरुभयसाधारणतया उभयसमानतया स्थितोऽवस्थितः। उभयोश्च रसानन्दानुभवप्राधान्यात्तादात्म्येन नवात्मतापत्त्या शेषशेषिभावोऽपि पूर्वोक्तलक्षणः समान एवेति न देवयोर्भेदाभेदशङ्कावकाशः। उक्तं च सूतसंहितायाम्—

"जाड्यज्ञानमहामायालक्षणाविद्यया सह।
अभेदेन स्थितं विप्राः परात्परतरं परम्॥
स्वप्रधानतयोपास्यं तथैवास्वप्रधानतः।
समप्रधानरूपेणाप्यादरेण मनीषिभिः।
समप्रधानरूपेण तत्त्वं ध्यायन्ति सादरम्॥" इति॥ ३४॥

## आनन्दगिरीया

अथोर्ध्वाम्नायमाह—ननु च यत्ते पतिरसावित्यत्र राजपुरुषादाविव राज्ञः षष्ठ्यर्थोपसर्जनत्वेन विशेषणतया परमेश्वर्या गौणत्वे प्रसक्ते पूर्वोक्तनवात्मिकमिथुनविद्यातात्पर्यविषयतया शिवशक्त्योरभेदेन प्राधान्यं प्रतिपादयन्ति **शरीरमिति**। हे भगवति हे सर्वैश्वर्यस्वरूपिणि हे भट्टारिके त्वं शंभोः शरीरमसि। मन्त्रस्वरूपा त्वं शंभोः शरीरमपि त्वमेव। तव मन्त्रः साक्षाच्छ्रीशंभोः शरीरमेव। किंलक्षणं शरीरं, शशिमिहिरवक्षोरुहयुगं, शशी च मिहिरश्च, अल्पाच्त्वात् शशिनः पूर्वनिपातः, मिहिरशशिनौ शिवशक्तिरूपौ हकारसकारौ सूर्यचन्द्रौ तावेव वक्षोरुहौ मध्यवर्तित्वात्, तयोर्युगं यत्र तत्तथा।

शरीरे आत्मापेक्षायामाह—हे भगवति, अनघं निर्मलं नवात्मानं नवाक्षरकूटविद्याप्रतिपाद्यं तवात्मानं शिवं मन्ये। तथा च शरीरशरीरिणोरभिन्नत्वात् गुणप्रधानभावो नास्तीति नोक्तदोषः। तदेवाह—अतः शेषः शेषीति। शेषो गुणोऽप्रधानः, शेषी प्रधानं, तथा चायं शेषोऽयं शेषीति यः संबन्धः, स उभयसाधारणतया स्थितः। यदि शेषत्वं तदुभयोरेव, यदि शेषित्वं तदप्युभयोरेव परस्परैक्यात्। नहि स एव तमवेक्ष्य गुणो वा प्रधानं वा भवतीत्यर्थः। वां युवयोः शिवशक्त्योरित्यत्र, शिवश्च शक्तिश्चेति द्वन्द्वे द्वयोरपि प्रधानत्वं द्वन्द्वस्योभयपदप्रधानत्वादिति भावः। किंलक्षणयोः समरसपरानन्दपरयोः, समो रसः समरसमैकात्म्यं, तेन समुल्लसितो यः पर उत्कृष्ट आनन्दः, तत्परयोः इत्यर्थः। तथा च केनापि प्रकारेण गुणभावो नास्तीति भावः। भगवति भवात्मानमनघमिति पाठे न काप्यनुपपत्तिः। अथवा त्वं शंभोः शरीरं, अतो यतस्तव शरीरं शशिमिहिरवक्षोरुहयुगम्। शशिमिहिरौ सूर्याचन्द्रमसौ महादेवमूर्ती तावेव वक्षोरुहयुगं यत्र तत्तथा। तदुक्तं—"पातालपादमवनीजघनं रवीन्दुवक्षोजशालिहरिदाननमभ्रकेशमि"ति। ननु तथापि संबन्धसंबन्धित्वाद्गुणत्वमागतमेवेति चेन्न। शिवशक्ती समप्रधानौ। एतयोः संबन्धः समप्रधानः। एवं प्रतिपाद्यमाने दोषाभावात्। बहुव्रीहावन्यपदार्थप्राधान्ये प्रतीयमानेऽपि संबन्धिनोरेव प्राधान्यं पुष्यति। तदुक्तं भट्टाभिनवगुप्तेन, शेषिपोषणकृतेन गुणभावो न तात्त्विको भूयादिति गौरवख्यात्यै भूयात् गुणागुणभावः। अथोर्ध्वाम्नायमाह - शरीरमिति त्वं परा शंभोः शरीरं यत् तवात्मानं परात्मानं भवात्मानं शशिमिहिरवक्षोरुहयुगं बिन्दुद्वयं, शेषः शिवः, शेषी परा, उभयसाधारणं स्वभामिलनम्। समरसपरानन्दपरत्वात्। यद्वा उभयं उभयात्मकं सहजेन संबन्धेन स्थितः स्थिता च तयोः पार्श्वयोः नित्यानवरतसमरससुखप्रवाहक्रीडापरयोरिति। एतद्द्वयात्मिका सा। स्हौः ह्सौः॥ ३४॥

## तात्पर्यदीपिनी

**शरीरमिति**—हे भगवति, त्वं शंभोः शरीरमसि। शीर्यते तच्छरीरम्। कीदृशं, शशिमिहिरवक्षोरुहयुगं, शशी चन्द्रः, मिहिरः सूर्यः, तावेव वक्षोरुहयुगं यस्य तत् वियन्मयमित्यर्थः, एवं हि पौर्वापर्यभावं जगादेत्यर्थः। एवमौपाधिकं भेदमपनुद्य, पारमार्थिकमपि भेदमपाकरोति। हे भगवति तवात्मानं तव स्वरूपं भवात्मानं मन्ये। त्वं पारमार्थिकं भवस्वरूपमसीत्यर्थः। कीदृशमात्मानं, अनघं निरुपाधिकम्। अघशब्देन आवरणरूपा अविद्या, तद्रहितमिति यावत्। अतो हेतोः, वां युवयोः इति अयं संबन्धः स्थितः। इतीति किं, शेषः शेषीति, यथा प्रयाजानुयाजादौ शेषशेषिसंबन्धोऽस्ति। कथंभूतयोः वां, उभयसाधारणतया समरसपरानन्दपरयोः उभयोः साधारणता समानकालीनता, तया समरसश्चासौ परानन्दश्च, तत्र परयोः, एवं आहितचैतन्यस्यैव सर्वाकारतोक्ता भवति। त्वं शंभोः शरीरं, शंभुस्तव शरीरमिति शेषशेषिसंबन्धः॥ ३४॥

## पदार्थचन्द्रिका

एवं तावत् सकलदेवसेव्यत्वात् भवान्याः प्राधान्यमुपपादितम्। संप्रति, भवान्या एव प्राधान्यमुत शंकरस्यापि, उभयोः प्राधान्ये ऐकमत्याभावात् सृष्ट्यादिकर्तृता न स्यात्, अन्यतरोपसर्जनत्वे-च समस्तश्रुतिस्मृतीतिहासपुराणविरोधः, अत्रापि पूर्वापरविरोध इति इमामाशंकां परिहरन्नैक्यमाह भवानीशंकरयोः-**शरीरमिति**-हे भगवति त्वं शंभोः शरीरं मूर्तिः। शरीरं विशिनष्टि, शशी च मिहिरश्च शशिमिहिरौ वक्षोरुहयुगं यस्मिंस्तत्। भवात्मानं भवहेतुं च तवात्मानं तव मूर्तिं मन्ये निश्चिनोमि, यत एवमतः, शेषः उपयुक्तेतरः उपसर्जनमित्यर्थः। शेषी प्रधानमिति। अयं संबन्धो वां युवयोः, उभयसाधारणतया स्थितः उभयस्मिन् सामान्यरूपेण स्थितः। परमार्थतः एकस्य स्वेच्छया शरीरद्वये परिगृहीते प्रधानोपसर्जनभावौ न स्तः। तथापि व्यवहारदशायां क्वचित्प्राधान्यं, क्वचिच्चोपसर्जनत्वं प्रकल्प्य भगवती भवश्च स्तूयेते इत्यर्थः। परमार्थत एकत्वमाह-समेति। समरस एकस्वाद एकरूप इत्यर्थः। परश्चासावानन्दश्च परानन्दः, समरसश्चासौ परानन्दश्च समरसपरानन्दः, स परः केवलो ययोस्तयोः। शेषः संकर्षणे वधेऽनन्ते प्रसादे रसनिर्माल्यार्पणे युज्यते स्त्रियाम्। उपयुक्तेतरे नस्त्रीति मेदिनीकारः॥ ३४ ॥

## डिण्डिमभाष्यम्

एवमुक्तप्रकारेण त्वद्भर्तुः श्रीश्रीमहाभट्टारकस्य मुक्तिपथप्रवृत्तभक्तजनोपासनायां हादिविद्यामुक्त्वा तदनन्तरमपि भगवत्याः प्रतिपादिकां महाभोगप्रवृत्तसाधकजनोपासनायां कादिमहाविद्या च प्रतिपाद्यतया उभयोर्विद्ययोरेकाकारत्वमागतयोरेकविद्यात्मना परिणतयोरन्ते वह्निजायालक्ष्मीशेखरयोरेकैकोदञ्चितचतुश्चतुःखण्डमेलनेन च नवखण्डतां नवकूटतां नवात्मतां च समागतयोः पाशाङ्कुशशरचापादिपरिमितध्यानविवक्षया जगद्रूपं भगवत्याः शरीरमपिदधतोस्तयोर्महामन्त्रयोर्यदेतदन्योन्यमेलनात्मकं सामरस्यमस्ति, तदेव च विश्वाख्यमेकं रूपम् भुक्तिमुक्तिपरायणा उपासते, ते खलु महापुरुषा युवयोर्विश्वरूपं भावयित्वा विश्वात्मसिद्धिं विन्दन्ति। विश्वात्मसिद्धिर्नाम करचरणाद्यवयवकदम्बसंवलितदेवतिर्यङ्मनुष्यादिशरीराभिमानत्यागेन ब्रह्माण्डशरीरी भूत्वा यथा मनुष्यादिशरीरे कृत्रिमाहन्तया स्वेच्छया करयोरास्फालनादिसिद्धिः तथा विश्वशरीरिणां तेषां मेरुमन्दारुविन्ध्यादीनामन्योन्यताडनादिकं सम्भवति, ते खलु नान्योपासका महापुरुषा महाहन्तया विश्वमेव शरीरं कृतवन्तः। विश्वशरीरं त्वत्सदानुध्यानात् स्वयमपि विश्वशरीरा भवन्ति। तथोक्तं विश्वरूपपञ्चाशिकायाम्—"हे हे स्मिततया यद्वज्जडयोरास्फालनं मिथो बाह्वोः। इच्छामात्रेणेत्थं गिर्योरपि तद्वशाज्जगति॥" अतो हेतोस्तव विश्वरूपमेव मुख्यं रूपम्। नवकूटा नवात्मिका त्रयस्त्रिंशदक्षरा महाललिता विद्यैव मुख्या। इममेवार्थं तव भक्तः श्लोकमुखेन प्रतिपादयति-हे परमेश्वरि! शम्भोः परब्रह्मणः शरीरं त्वमेव शरीरिणोर्नित्यसम्बन्धो युवयोरेव न तु परि-

मितप्रमातृगुणानामिव नित्यप्रकृतेः पुरुषस्य तत्सम्बन्धस्य च नित्यत्वं सर्वदा महदादिवर्गस्यैव तयोरुभयोरा-विर्भावतिरोभावेनानित्यतेति साङ्ख्यवृद्धाः। अत एव शशिमिहिरवक्षोरुहयुगम्, शशिमिहिरौ चन्द्रसूर्यौ एव वक्षोरुहयुगं तस्य तत्तथोक्तं तव विश्वरूपं वाच्यतया वर्तमानं तवात्मानम् तव स्वस्वरूपेणावभासमानं नवखण्डात्मकं महामन्त्रराजं वन्दे। किम्भूतं तत्; अनघम्। "अंहो दुःखव्यसनेष्वघम्" इत्यमरः।

त्वन्मन्त्रराजस्यानन्यत्वाद् एव यद्वत् कारणं तद्वत्कार्यमिति न्यायाद् अनघाः अपाया, अनघा दुःखवर्जिता, अनघा अव्यसना अवश्यचित्तत्वरहिता, महान्तस्तव भक्ता भवन्ति इति अभिप्रायः।

यस्मात्त्वं भगवतः शरीरभूता नवात्मस्वरूपा च अत एव तेनैव हेतुना वां युवयोः समान्योन्य-सम्भोगजनितपरमानन्दतत्परयोः समानरसत्वं च असाधारणस्वस्वकर्मानुष्ठानं शरीररूपया त्वया विना भगवतः शरीरिणः पृथगवस्थानाभावात् तं च साक्षिणं केवलमध्यस्थं द्रष्टारमकर्तारं परमेश्वरं विना सृष्टिसामर्थ्याभावात्तव पृथगवस्थानं नास्ति।

अतस्त्वदीयोऽसाधारणकर्म तेन भुज्यते, तदीयो रस असाधारणकर्म त्वया भुज्यते, अयमेव समरसपरानन्दो नाम।

एवंभूतयोर्युवयोः कः शेषः उपकरणम्, कः शेषी उपकार्य इत्यपेक्षायां त्वमेव शेषः।

सविलासविजृम्भितपृथिव्याद्यष्टमूर्तिपरस्परमेलनजनितनानाचेष्टाविशेषमाह — नाटकप्रणयनपरया नर्तक्या त्वया नान्यकार्यया भगवान् महाराजैवोपास्यते।

य उपासकः स शेषः, यस्तूपास्यः स शेषीति सम्बन्धो लोके प्रसिद्धो नियतश्च।

युवयोस्तु शेषशेषीसम्बन्धो लोके प्रतीर्णतया उभयसाधारणतया स्थितः। साधारणशब्दः प्रामाण्यवाची लोके यः शेष - शेषीभावः। ननु युवयोर्भिन्न एव कदाचिद् ज्ञानवर्णनायां तस्य शेषित्वं तव शेषता क्रियावर्णनायां तव शेषित्वं तस्य शेषता तदुभयमपि त्वत्स्वातन्त्र्यमेवेति भावः। साधारण्य-मप्येतदेव युवयोर्विश्वशरीरयोः अन्योन्यनित्यसम्बन्धवत् युष्मन्महामन्त्रयोरपि न त्वात्मकत्वेन स्थितयोः कादिहाद्योर्नित्यसम्बन्ध एव, तद्रूपेण जपश्चाष्टमहासिद्धिप्रधानभूतवश्यात्मसिद्धिहेतुः। पार्थक्येन जपस्तु भोगमोक्षरसलुब्धानां भ्रान्तिकल्पित एवेति भावः। एतन्नवात्म्योपासनफलं वैश्वात्म्यं पञ्चाशिका-शास्त्रे बहुप्रतिपाद्यमस्ति, ग्रन्थविस्तारभियान्नेह प्रतन्यते इत्यलमतिप्रसङ्गेन ॥ ३४ ॥

## गोपालसुन्दरी

**शरीरमिति**—हे भगवति। त्वं शम्भोः शरीरं कीदृशम्? शशिमिहिरौ चन्द्रसूर्यौ वक्षोरुहौ स्तनौ, यत्र तत्तथा तदुक्तम् - "चन्द्रसूर्यौ स्तनौ देव्यास्तावेव नयने स्मृते। उभौ ताटङ्कयुगलमित्येषा वैदिकीश्रुतिः।" इति। नवात्मानं नवव्यूहात्मकभैरवस्वरूपं मन्ये। व्यूहाश्च-"कालव्यूहः

कुलव्यूहो नामव्यूहस्तथैवच। ज्ञानव्यूहस्तथाचित्तव्यूहस्तस्मादनन्तरम्॥ नादव्यूहस्तथा बिन्दुव्यूहस्तस्मादनन्तरम्। आत्मव्यूहस्तथा जीवव्यूहः स्यादिति ते नव॥ नवव्यूहात्मको देवः परानन्दः परात्मकः। नवात्मा भैरवो देवो भुक्तिमुक्तिप्रदायकः। परानन्दा पराशक्तिश्चिद्रूपानन्दभैरवी। तयोर्यदा सामरस्यं जगत्सम्पद्यते तदा॥"—इति। तत्र कालव्यूहो नीलादिरूपो भेदः। नामव्यूहः संज्ञासमुदायः, ज्ञानव्यूहो विज्ञानस्कन्धः, भोगव्यूहो निर्विकल्पकसविकल्पकसमुदायः, चित्तव्यूहोऽहङ्कारचित्तबुद्धिमहन्मनःसमुदायः, नादव्यूहः परापश्यन्तीमध्यमावैखरीरूपः, बिन्दुव्यूहः अनुस्वाररूपैकबिन्दुर्वाग्रूपबिन्दुद्वयात्मकः, आत्मव्यूहः आत्मान्तरात्मपरमात्मज्ञानात्मरूपः, जीवव्यूहः मनुष्यपशुपक्षिसरीसृपादिरूपः; अतो हेतोः शेषः शेषीति सम्बन्धः। गुणप्रधानाप्राधान्यभावः वां युवयोः साधारणतया तुल्यतया स्थितः। कीदृशयोः? सामरस्येनैकात्म्येन यः परानन्दः उत्कृष्टनिर्वृतिः तत्परयोस्तदधीनयोस्तन्निष्ठयोर्वा। नवात्मानमित्यत्र भवात्मानमित्यपि क्वाचित्कः पाठः, तत्र भवः शिवः।

**विष्णुपक्षे**—शम्भोः शरीरं त्वमिति मन्ये, नवात्मानं पूर्वोक्तं नवव्यूहरूपं तवात्मानं भगवति शिवे मन्ये वां युवयोर्विष्णुशिवयोरित्यर्थः॥ ३४॥

## आनन्दलहरीटीका

त्वमेव शिवस्वरूपेति सयुक्तिकं दर्शयति **शरीरमिति**। भगवति, त्वं शंभोः शरीरम्। कीदृशं, शशिमिहिरौ चन्द्रसूर्यौ वक्षोरुहयुगं स्तनद्वयं यत्र तादृशम्। तदुक्तं तन्त्रे—"चन्द्रसूर्यौ स्तनौ देव्याः तथैव नयने स्मृते। उभौ ताटङ्कयुगलमित्येषा वैदिकी श्रुतिः" इति। तथा अनघं निष्पापं आत्मानं शरीरं नवात्मानं नवव्यूहात्मकभैरवस्वरूपं मन्ये। अनघमित्यत्र अनघे इति पाठे संबोधनम्। नवव्यूहाश्च तन्त्रे दर्शिताः। "कालव्यूहः कुलव्यूहो नामव्यूहस्तथैव च। ज्ञानव्यूहस्तथा चित्तव्यूहस्तस्मादनन्तरम्। नादव्यूहस्तथा बिन्दुव्यूहः स्यात्तदनन्तरम्। आत्मव्यूहस्तथा जीवव्यूहः स्यादिति ते नव। नवव्यूहात्मको देवः परानन्दः परात्मकः। नवात्मा भैरवो देवो भुक्तिमुक्तिप्रदायकः। परानन्दा पराशक्तिः चिद्रूपाऽऽनन्दभैरवी। तयोर्यदा सामरस्यं जगत्संपद्यते तदा" इति। कालव्यूहः क्षणनिमेषादिकल्पान्तात्मककालसमूहः। कुलव्यूहो नीलपीतादिरूपभेदः ब्राह्मणादिभेदो वा। नामव्यूहः संज्ञासमूहः। ज्ञानव्यूहः संकल्पविकल्पादिरूपः। चित्तव्यूहः मनोबुद्ध्यहंकारचित्तरूपः, नादव्यूहः परापश्यन्तीमध्यमावैखरीरूपः। बिन्दुव्यूहो बिन्दुविसर्गरूपः, आत्मव्यूहः आत्मान्तरात्मपरमात्मरूपः, जीवव्यूहो मनुष्यपशुपक्ष्यादिरूपः। यतश्च शंभोः शरीरं तव शरीरं, नवव्यूहात्मकः भैरवस्वरूपी शंभुः, अतो हेतोः शेषः शेषीत्ययं संबन्धः अंगांगिभावरूपः उभयसाधारणतया, वां युवयोः स्थितः। यथा त्वं शरीरं शंभुः शरीरी, तथा नवव्यूहात्मको भैरवः शरीरं त्वं शरीरिणी, इति उभयोः समानतेति भावः। यद्वा शेषशेषिभाव उपकार्योपकारकभावः। जगन्निर्माणे प्रकृतिपुरुषयोरन्धपंगुन्यायेन

परस्परोपकारकत्वमिति सांख्यसिद्धान्तानुसारात्। वां कीदृशोः, समरसेन तुल्येच्छया परानन्दपरयोः प्रकृष्टसुखासक्तयोः। नवात्मानमित्यत्र भवात्मानमिति पाठेऽप्येवं क्रमेण भवस्वरूपमित्यर्थः। नवात्मानं, नवकूटमहाविद्यास्वरूपमिति कश्चित्॥ ३४ ॥

मनस्त्वं व्योम त्वं मरुदसि मरुत्सारथिरसि
त्वमापस्त्वं भूमिस्त्वयि परिणतायां न हि परम्।
त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा
चिदानन्दाकारं शिवयुवति[1]भावेन बिभृषे[2] ॥ ३५ ॥

மனஸ்த்வம் வ்யோமத்வம் மருதஸி மருத்ஸாரதி ரஸி
1 1 3 1 2
த்வமாபஸ்த்வம் பூமிஸ்த்வயி பரிணதாயாம் நஹிபரம்;
1 4 1 1 1 1
த்வமேவ ஸ்வாத்மானம் பரிணமயிதும் விஶ்வவபுஷா
1 1 1 1
சிதானந்தாகாரம் சிவயுவதி பாவேன பிப்ருஷே ||
1 3 3 1 1 4 3 4

मन है तू, आकाश तत्व है, पवन, अग्नि है, जल, थल है।
तुझ से अलग नहीं कुछ यहां, सभी तेरा ही छलबल है!
निजरूप को विश्ववपु में परिणत करनै तू, शिवजाये!
चिदानंद आकार चित्त में धारण करती है माये! ॥

## लक्ष्मीधरा

**मनः** मनस्तत्त्वं आज्ञाचक्रस्थितं त्वं एव। व्योम आकाशतत्त्वं विशुद्धिचक्रान्तःस्थितं त्वं एव। मरुत् वायुतत्त्वं अनाहतनामकसंविच्चक्रान्तर्गतम्। असि इति त्वमित्यर्थे अव्ययम्। मरुत्सारथिः वायुसखः अग्नितत्त्वं स्वाधिष्ठानगतम्। असि इति पूर्ववत् अव्ययम्। त्वं आपः अप्तत्त्वं मणिपूरान्तर्गतम्। त्वं भूमिः भूमितत्त्वं मूलाधारान्तर्गतम्। एवंरूपेण त्वयि परिणतायां परिणतिं तादात्म्यं गतायां, न हि परं इतः परं न किञ्चिदस्तीत्यर्थः। त्वमेव स्वात्मानं स्वस्वरूपं, परिणमयितुं परिणमवन्तं कर्तुं, विश्ववपुषा प्रपञ्चरूपेण, चिदानन्दाकारं चिच्छक्तेः आनन्दभैरवस्य च आकारं, शिवयुवति! शिवयुवति–हरपत्नि, युवतिशब्दात् 'सर्वतोऽक्तिन्नर्थादित्येके' इति ङीष्। तस्यास्सम्बुद्धिः। भावेन चिंतेन, बिभृषे। यद्वा–चिदानन्दाकारं च ब्रह्मस्वरूपं शिवतत्त्वं, शिवयुवतिभावेन शिवस्य युवतिर्जाया तस्याः भावः तत्त्वं, तेन।

---

1. हरयुवति, हरमहिषि, 2. विभृषे.

अत्रेत्थं पदयोजना—हे भगवति! मनस्त्वं व्योम त्वं मरुदसि मरुत्सारथिरसि त्वमापस्त्वं भूमिः। त्वयि परिणतायां परं न हि। त्वमेव स्वात्मानं विश्ववपुषा परिणमयितुं शिवयुवति! भावेन चिदानन्दाकारं बिभृषे।

अयमर्थः—'मनस्त्वं' इत्यादि 'त्वंभूमिः' इत्यन्तेन-पञ्चभूतात्मकः कार्यरूपः परिणामो विकार उक्तः। 'त्वयि परिणतायाम्' इत्यनेन निर्विकारात्मकः कारणरूपेणावस्थितिविशेषः प्रकृत्याः परिणामः उक्तः। 'न हि परम्' इत्यनेन अपरिणामिन्याः परिणामो नास्ति अनवस्थापत्तेः इति हि शब्दार्थः। तथोक्तं चतुश्शत्याम्—

शृणु देवि महाज्ञानं सर्वज्ञानोत्तमं प्रिये।
येन विज्ञानमात्रेण भवाब्धौ न निमज्जति॥
त्रिपुरा परमा शक्तिराद्या जाता महेश्वरि।
स्थूलसूक्ष्मविभागेन त्रैलोक्योत्पत्तिमातृका॥
कबलीकृतनिश्शेषतत्त्वग्रामस्वरूपिणी।
यस्यां परिणतायां तु न किञ्चित्परमिष्यते[1]॥

[2]अयमर्थः—कबलीकृतः आत्मन्यारोपितः कारणात्मतया अवस्थितः, यथा मृदि घट इव, निश्शेषं यथा भवति तथा तत्त्वानां पञ्चतत्त्वानां ग्रामः समूहः कबलीकृतनिश्शेषतत्त्वग्रामः, स एव स्वरूपं यस्यास्सा, कार्याणि कारणे उपसंहृत्य स्वयं कारणात्मना अवस्थितेत्यर्थः। सत्कार्यवादिनां मते कारणे कार्यस्यापि शक्तिरूपेण विद्यमानत्वात् इति। एतदुक्तं भवति—उत्तरकौलमते प्रधानमेव जगत्कर्तृ। प्रधानत्वादेव शेषभावो नास्ति, शिवस्याभावात्। तस्य परिणतिः पञ्चतत्त्वात्मिका। मनस्तत्त्वादिरूपेण प्रधानात्मिका शक्तिः परिणता। अतः मनःप्रभृतीनां शक्तिपरिणामः, तत्त्वानां स्वरूपपरिणामः। एवं प्रपञ्चं कार्यरूपं स्वस्यामारोप्य कारणरूपेण अवस्थिता। सा च आधारकुण्डलिनीत्यभिधीयते। इतःपरं यद्वक्तव्यमस्ति तदपि 'तवाधारे मूले' इत्यादिश्लोकव्याख्यानावसरे निपुणतरमुपपादयिष्यामः॥ ३५॥

## सौभाग्यवर्धनी

नवात्मकविद्यायाः स्वरूपं प्रतिपाद्य षडन्वयशाम्भवानां मनः प्रभृतिभूम्यन्तानामम्बिकायाश्चैक्यं प्रतिपादयति—**मनस्त्वमिति**। मनस्त्वं, व्योम त्वं, मरुदसि। मरुत्सारथिरसि, वह्निरसि। त्वमापः। त्वं भूमिः। त्वयि परिणतायां विराड्रूपेण वृद्धिं प्राप्तायां; न हि परं त्वदतिरिक्तं वस्तु न किंचित्; सर्वं त्वद्रूपमेवेत्यर्थः। हे हरमहिषि! त्वमेव स्वात्मानं वस्तुतः (वस्तुनः) चिदानन्दरूपं परिणमयितुं विराड्रूपेण

---

[1] परिशिष्यते। [2] कबलीकृतनिशेषतत्त्वग्रामस्वरूपिणीत्यस्यायमर्थः. *७१ श्लोकः।

प्रकल्पयितुं भावेन लीलाविशेषेण विश्ववपुषा विश्वाख्यजीववपुषा बिभृषे पुष्णासि। विश्वाख्यविराड्शरीराभिमानिजीवरूपभावेनेत्यर्थः। पञ्चीकृतपञ्चमहाभूतानि, तत्कार्यं सर्वं (प्रपञ्चो) विराडित्युच्यते। स्थूल-(शरीर) मेतदात्मनः। सर्वेन्द्रियैरर्थोपलब्धिर्जाग्रदवस्था। एतत्त्रयाभिमानी विश्वाख्यो जीवः। विश्वाख्यजीवरूपेण विराड्शरीरे विजृम्भस इत्यर्थः। विश्ववपुषा इत्युपक्षेपात्तैजसप्राज्ञावपि गृहीतौ। विश्वादिवपुषा विश्ववपुषा इति मध्यमपदलोपी समासो वा। अपञ्चीकृतपञ्चमहाभूतानि तत्कार्यं सप्तदशकं भौतिकं हिरण्यगर्भ इत्युच्यते। सूक्ष्मशरीरमेतदात्मनः। स्वप्नावस्था जाग्रदवस्थाविषयानुभवजन्यसंस्कारः। एतत्त्रयाभिमानी जीवस्तैजस उच्यते। तैजसभावेन सूक्ष्मशरीरं बिभृषे। बाह्यान्तरसकलविषयव्यापारे निवृत्ते कारणरूपेण केवलबुद्धिमात्रावस्थानं सुषुप्तिः। तत् कारणशरीरमात्मनः। तत्राभिमानी प्राज्ञः। प्राज्ञजीवभावेन कारणशरीरं बिभृषे इत्यर्थः संपन्नः। एतेन भगवत्याः प्रणवरूपिता (प्रणवता) प्रतिपादिता। तथा च नवरत्नमालिकायाम्—"मातृकां प्रणवरूपिणीं मनसि भावयामि परदेवताम्" इति। स्कान्देऽपि—"ओंकाररूपिण्यजरा शिवानन्तामृतद्रवा" इति। रुद्रयामलेऽपि—"उमेति परमा शक्तिः पूर्वभावमुपेयुषी। अध्युष्टवलयाकारा प्रणवत्वमुपागता॥" इति। अथवा चिदानन्दरूपं विश्ववपुषा विश्वादिजीववपुषा परिणमयितुं स्वात्मानं बिभृषे। अथ च हरमहिषिभावेन, शिवपत्नीभावेन बिभृषे। संज्ञायां ह्रस्वः, कालिदासादिवत्। हरयुवतिभावेनेति क्वचित्पाठः। अहो तव चरितं को वेत्तुं समर्थः। तथा च सकलजननीस्तवे—

"सुता दक्षस्यादौ किल सकलमातस्त्वमुदभूः
सदोषं तं हित्वा तदनु गिरिराजस्य तनया।
अनाद्यन्ता शंभोरपृथगपि शक्तिर्भगवती
विवाहाज्जायासीत्यहह तव को वेत्ति चरितम्॥" - इति॥ ३५॥

## अरुणामोदिनी

इदानीं देव्या अष्टमूर्तित्वप्रकाशनाय सर्वभावेन स्तुतिमनुसंधत्ते-**मन** इति। शिवस्य युवतिर्जाया तस्याः संबुद्धिः, हे शिवयुवति! भगवति! शिवयुवतिभावेनेत्येकपदं वा। मनः 'होष्यामि', इत्येतत्संकल्पकर्तृत्वाद्यजमानोऽपि त्वमेवासि। तथा व्योम अवकाशप्रदातृ आकाशमपि त्वमेवासि। मरुत् प्राणप्रदाता वायुरपि त्वमेवासि। मरुत्सारथिः पाकदाहादिलक्षणाग्निरपि त्वमेवासि। आपः सर्वलोकजीवनप्रदानादापश्च त्वमेवासि। भूमिः, सकललोकधारिणी भूश्च त्वमेवासि। एवमष्टसु मूर्तिषु षण्मूर्तय उक्ताः। "चन्द्रमा मनसो जातः" इति श्रुतेः कार्यकारणयोरभेदोपचारात्, "अह्नोऽग्निः। ताम्रोऽरुणः। ता अविसृष्टौ", इति श्रुतेः सूर्याग्न्योरनपायाच्च मनोमरुत्सारथिपदाभ्यामेव सूर्याचन्द्रमसरूपं मूर्तिद्वयं संगृहीतमेवेत्यष्टौ मूर्तयः संपन्नाः। त्वयि भवत्यां परिणतायामुक्ताष्टमूर्तिरूपेण

परिणामं प्राप्तायां परमेतद्व्यतिरिक्तं परमन्यं नहि खलु । भवद्व्यतिरेकेण एतद्व्यतिरेकेण च न किंचिदस्ति खल्वित्यर्थः । उक्तमेवार्थं दृढीकर्तुमाह-त्वमेवेति । त्वमेव भवत्येव चिच्चासावानन्दश्च चिदानन्दः, तस्य ब्रह्मणः शिवस्य आकारं स्वरूपं विश्ववपुषा मह्यादिमूर्त्यष्टकशरीरेण परिणमयितुं परिणामं कारयितुं भावेन शक्त्या स्वात्मानं स्वस्वरूपं बिभृषे । स्वस्वरूपं शक्तिरूपेण परिणतमूर्त्यष्टके अनुस्यूतं करोषीत्यर्थः । उक्तं च सकलजननीस्तवे—"महीपाथोवह्निश्वसनवियदात्मेन्दुरवि-भिर्वपुर्भिर्ग्रस्तांशैरपि तव कियानम्ब महिमा । अमून्यालोक्यन्ते भगवति न कुत्राप्यणुतरामवस्थां प्राप्तानि त्वयि तु परमव्योमवपुषि ॥" इति प्रातीतिकोऽर्थः ।

आगमरहस्यार्थस्तु-हे देवि ! मनः आज्ञाचक्रे सूक्ष्मरूपेणावस्थितं मनस्तत्त्वं त्वमसि । तथा व्योम विशुद्धिचक्रस्थमाकाशतत्त्वं त्वमेवासि । असीति त्वमर्थे अव्ययम् । मरुत् अनाहतचक्रस्थं वायुतत्त्वं त्वमसि । मरुत्सारथिः स्वाधिष्ठानचक्रगतमग्नितत्त्वं चासि । आपः मणिपूरस्थं जलतत्त्वं च त्वमसि । त्वं भूमिः; मूलाधारगतं भूतत्त्वं चासि । एवं रूपेण पञ्चभूतसूक्ष्मात्मककार्यकारणरूपेण त्वयि भवत्यां परिणतायां परिणाम्य वर्तमानायां सत्याम्; यद्वा-परिणामशब्दोऽयं विवर्तपरः । एवंविधरूपान्तरेण स्थितायामित्यर्थः । न हि परं त्वद्भिन्ना अन्यन्नास्ति खलु । पिण्डाण्ड-ब्रह्माण्डयोरेकरूपेण सर्वत्र तवैव वर्तमानत्वादिति भावः । तदुक्तम्-"त्रिपुरा परमा शक्तिराद्या जाता महेश्वरी । स्थूलसूक्ष्मविभागेन त्रैलोक्योत्पत्तिमातृका ॥ कबलीकृतनिःशेषतत्त्वग्रामस्वरूपिणी । अस्यां परिणतायां तु न किंचित्परमिष्यते ॥"-इति । त्वं भवत्येव । न हि भवत्याः परिणामयिता अन्योऽस्तीत्येवकारार्थः । स्वात्मानं स्वस्वरूपं विश्ववपुषा व्यापकेन पूर्णेन रूपेण । पृथिव्यादिस्थूल-प्रपञ्चः, तत्कार्यं विराट्, तदभिमानी विश्वः, तद्रूपेणेति वा । परिणमयितुं चिदानन्दयोः चिच्छक्तिब्रह्मणोः आकारं स्वरूपं भावेन इच्छया बिभृषे । इच्छयैव सिसृक्षादिकायां शक्तिः शिव इति रूपद्वयमङ्गीकृतम् । अन्यथा त्वमेवैकेत्यभिप्रायः ॥ ३५ ॥

## आनन्दगिरीया

इदानीं सर्वात्मकत्वेन स्तौति-**मनस्त्वमिति** । हे भगवति भुवनेश्वरि भट्टारिके, मनस्त्वं त्वदभिन्नं, व्योमापि त्वं त्वदभिन्नम् । त्वमेव वायुर्मरुदसि । मरुत्सारथिरग्निस्त्वमेवासि । त्वमापः, त्वमेव भूमिः, इदं सर्वं त्वं त्वदात्मकं त्वदभिन्नं त्वय्यध्यस्तत्वात् । त्वं त्वधिष्ठानं, अध्यस्यमानस्य वस्तुनो रज्जुभुजंगन्याये-नाधिष्ठानाभिन्नत्वात् । अत एव हि परिणतायां रूपान्तरं प्राप्तायां विराड्रूपेण परिणतायां परं यदुक्तं मन आदि तन्नास्ति । बाधायां[1] सामानाधिकरण्यात् त्वामन्तरा किमपि नास्ति इत्याह - त्वमेव स्वमात्मानं परिणमयितुं विश्ववपुषा चिदानन्दाकारं हरमहिषिभावेन बिभृषे इति । त्वमेवान्यानपेक्षा सती; विश्ववपुषा, विश्वं जगत् तदाकारेण स्वात्मानं परिणमयितुं आत्मानं हरमहिषिभावेन शिवपत्नी-

---

[1] तमां

त्वेन, अथवा हरश्च महिषी च तौ, तयोर्भावेन तत्तया शिवशक्तितादात्म्येन आत्मानं बिभृषे धत्से पुष्णासीति। स्वयं कालिदासादिवत् शिवशक्तिस्वरूपं प्राप्य जगज्जनयसीत्यर्थः। अत एव शक्तिमयं जगद्वर्णयन्त्यभियुक्ताः। किंलक्षणं स्वात्मानं चिदानन्दाकारं अखण्डानुभवानन्दात्मकमपि परिणामायोग्यमपि। परिणामयोग्यत्वे तु कार्यात्मना प्रसक्तेः नित्यत्वहानिः स्यात्। अथवा हे हरमहिषि, त्वं भावेन स्वलीलया तत्परतयेत्यर्थः। अथवा प्रथमत एव शिवशक्तिमयमित्याह-चिदानन्दाकारमिति। चित् शिवः, आनन्दः शक्तिः, आनन्दमूलत्वात्। तदाकारम्। अथवा त्वमेवेत्यस्यायमर्थः त्वमेव स्वात्मानं परिणमयितुं, विराट्-व्यष्टि-समष्टिरूपेणाविर्भावयितुं, विश्ववपुषा जाग्रदवस्थाभिमानिविराड्-देहावच्छिन्नचैतन्यं विश्वं, तद्वपुषा। तथा हि पञ्चीकृतपञ्चमहाभूतेभ्यो भूरादिसत्यान्तानामुपरितनानां अतलादितलातलान्तानामधस्तनानां लोकानां ब्रह्माण्डमण्डलस्य तदन्तर्गतानां चतुर्विधशरीराणां चोत्पत्तिर्भवतीति प्रत्येकसमुदायविवक्षया व्यष्टिसमष्टिभावमापन्नं तद्विराडित्युच्यते विविधं राजमानत्वात्। एतदात्मनः स्थूलं शरीरम्। सर्वेन्द्रियैरर्थोपलब्धिश्च जाग्रदवस्था, तदवच्छिन्नं चैतन्यं, तदभिमानी जीवो विश्व इत्युच्यते। बाह्याभ्यन्तरस्य प्रपञ्चस्यावभासनात्। तद्वपुषा संबिभृष इत्यर्थः। उपलक्षणमेतत्। सूक्ष्मप्रपञ्चाभिमानि हिरण्यगर्भवपुषासि। स हि विज्ञानमयमनोमयप्राणमयकोशत्रयात्मा स्थूलशरीरलयस्थानं तदभिमानी हिरण्यगर्भस्तद्वपुषा। स्थूलसूक्ष्मप्रपञ्चलयस्थानभूतसुषुप्त्यवस्थाभिमन्तृत्वं-प्राज्ञवपुषा इत्यपि ज्ञातव्यम्। तेन प्रणवरूपता। शिवयुवतिभावेनेत्यपि पाठः। मनस्त्वं व्योम त्वमिति पद्यस्य रहस्यार्थः—समरसपरा त्वं कदाचिद्बहुस्यामितीच्छया समरसात्मानं स्वं बहुधा विश्वमयं नयन्ती, विराड्रूपेण करोषि शिवयुवतिभावं कृत्रिमभावं नयसीति यावत्। सृष्टिक्रमेण बीजपञ्चककथनेन तन्मयनिजात्मानं दर्शयन्तीति यावत्। तथा पञ्चभूतमनुविस्तारं दर्शयति समरसार्थप्रतिपादकमिति भावः। "सर्वे मन्त्रास्त्वदात्मानो मदात्मानो महेश्वरि"। समरसार्थपदं नित्यं दर्शयन्ति हि। षडाम्नायेश्वरी मन्त्राणामधिदेवतासि त्वमेवेति ॥ ३५ ॥

## तात्पर्यदीपिनी

**मन** इति हे शिवयुति, शिवपदराज्ञि, अहंभावेनेति विमृशे विचारयामि। इतीति किं? त्वमेव स्वात्मानं विश्ववपुषा परिणमयितुं मनोऽसि। अयमाशयः - निवृत्तिशास्त्रेषु मतद्वयमस्ति - एको विवर्तवादः, अपरः परिणामवादः। तत्र, अतात्त्विकोऽन्यथाभावो विवर्तः। तात्त्विकोऽन्यथाभावः परिणामः। एवं मतद्वयेऽपि परमात्मा जगदुपादानकारणं भवति। तत्र प्रथमो यथा - शुक्तौ रजतभ्रान्तिः। द्वितीयो दुग्धं दधि। अरजतभूते शुक्तौ तदारोपाद्विवर्त इति। तात्त्विके दुग्धे दध्युपादानता परिणामः। एवमुपादानता उभयत्रापि न व्यभिचरतीत्येतदुक्तं भवति। तदुपादानकारणं त्वमसीति। कथमेवमिति तत्राह - हि यतः कारणात्, त्वयि परिणतायां अन्तःकरण-

परिणामं प्राप्तायां परं न, सर्वं त्वमेवासीति भावः। एवं तत्त्वमस्यादिमहावाक्यार्थः प्रतिपादितो भवति। तस्मात्त्वं मनोऽसि। भूततन्मात्रज्ञापकं मनस्तत्वमसीत्यर्थः। तथा व्योमासि। मरुत्पवनः, मरुत्सारथिरग्निः, आपः उदकं, भूमिर्धरा, एतत्सर्वं त्वमसीत्यर्थः। किं विधं स्वात्मानं चिदानन्दाकारं चिदानन्दो निरतिशयसुखं, तदाकारमित्यर्थः॥ ३५॥

## पदार्थचन्द्रिका

भगवतीं जगदात्मत्वेन वर्णयन् शिवेनैक्यमाह—**मनस्त्व**मिति। अत्र बाधायां सामानाधिकरण्यम्। मनआदिरूपा त्वं, त्वद्व्यतिरिक्तं मनआदि नास्तीत्यर्थः। तदेवाह - त्वयि परिणतायां सत्यां परं भिन्नं किञ्चिदपि नास्ति। हिशब्दः सुप्रसिद्धमाह - "वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि"ति। त्वमेवान्यनिरपेक्षा विश्ववपुषा परिणमयितुं अवस्थान्तरं प्रापयितुं स्वमात्मानं शिवयुवतिभावेन बिभृषे धारयसि। सृष्टेः पूर्वं शिवयुवतिभावेन, परमात्ममायास्वरूपेण, सृष्ट्यनन्तरं जगत् पालयितुं भवानीशंकररूपेण, स्वात्मानं धारयसीत्यर्थः। परमात्मपक्षे शिवोऽविकृतचैतन्यं, युवतिः सर्वदैकरूपत्वात् सर्वान्मोहयितुं समर्थत्वाच्च माया। स्वमात्मानं विशिनष्टि-चिदानन्दाकारं, चिच्चैवानन्दश्च चिदानन्दः, स आकारः स्वरूपं यस्य तम्। परिणामोऽत्र तत्वं स्यात् तत्वतोऽन्यथाभावः। स च विवर्त एव॥ ३५॥

## डिण्डिमभाष्यम्

इममेव पूर्वश्लोकोक्तमर्थं भङ्ग्यन्तरेण विश्वस्याष्टधा विकल्पं कृत्वा तदाकारपरिणमनसामर्थ्यं भगवत्याः स्तौति त्वमेवाष्टमूर्तिरूपेण परिणतासि। अत्र मूर्तिषट्कमेव प्रतिपादितम्। अन्यन्मूर्तिद्वयं कुत इत्याकाङ्क्षायाम् उच्यते—अन्ये मूर्ती चन्द्रसूर्यौ खलु तयोः शब्दान्तरेण प्रतिपादनमत्र वर्ण्यते, प्राधान्यात् भिन्नतया च नोक्तम् अग्निसोमस्वरूपत्वात् शिवशक्त्योः सूर्यचन्द्राकारयोः चिदानन्दाकारचन्द्रमण्डलात्मकः, चिच्च आनन्दश्च चिदानन्दौ शिवशक्तिरूपौ च सूर्याचन्द्रमसौ यस्य विश्वशरीरा वर्तेते स चिदानन्दाकारः इति व्यधिकरणबहुव्रीहिः। अत एवाष्टमूर्तयः सम्पन्नाः। एतदुक्तं भवति—हे परमेश्वरि! त्वमेव मनः होतृपदाधिष्ठात्री, त्वमेव व्योम अवकाशप्रदा, त्वमेव मरुत् प्राणप्रदा, त्वमेव मरुत्सारथिः अग्निः पाकदाहादिलक्षणः, त्वमेव आपः समस्तलोकजीवनभूताः, त्वमेव भूमिः सर्वजन्तुसाधारणकर्मकारिणी, त्वमेव चित् सूर्यः, त्वमेव आनन्दः इन्दुः, त्वमेव इत्यष्टमूर्तिरूपेण परिणतायाम् आकारान्तरप्राप्तायाम् एतद्व्यतिरिक्तं किमपि वस्तु नास्ति एतन्मयत्वादेव विश्वप्रपञ्चस्य। ननु परिणतायामित्येकः परिणाम उक्तः परिणमयितुम् इति द्वितीयपरिणामे कथं पौनरुक्त्यदोषो नास्ति इत्यत्र उच्यते—अत्र भगवत्याः खलु परिणामद्वयम्—स्वभावत एकरूपाया नित्याया व्यापिन्या भगवत्या अष्टमूर्त्यात्मना परिणाम एकः। द्वितीयस्तु कृताभिरेव मूर्तिभिर्महीमहीधराडम्बरहिरण्डकारण-

जलध्यात्मना परिणामः। आभ्यां परिणामाभ्यामेव जगच्चक्रमुन्मीलयतीति कथयति—त्वमेवेति। हे परमेश्वरि! त्वमेव स्वात्मानं बीजरूपं विश्ववपुषा पूर्वोक्तप्रपञ्चरूपेण परिणमयितुं, किम्भूतं चिदानन्दाकारं, शिवयुवतिभावेन श्रीश्रीललितामहाभट्टारिकारूपेण, बिभृषे धारयसि, त्वद्व्यतिरेकेण जगत्प्रपञ्चो नास्ति इत्यर्थः।

ननु जगति जडत्वात् सृष्टिसंहारादिविक्रिया च विनाशित्वं तार्किकादिभिरङ्गीक्रियते; अविनाशिनी जगद्रूपेण च विरुद्धमिति चेन्न। स्वभावतः कस्यापि पदार्थस्याभावाभावित्वरूपा सृष्टिः प्रध्वंसाभावरूपः संहारो वा कुतार्किकपटुभिरङ्गीकृताविमौ स्तः, सृष्टिसंहारौ न स्तः एव। उक्तं भगवद्गीतायाम्—"नासतो विद्यते भावो नाभावो विद्यते सतः। उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः।" तथा हि कूर्मस्य मुखकरचरणपुच्छादिकमङ्गकदम्बकं कूर्मशरीरे तदिच्छया तिरोभवति कालान्तरे आविर्भवति, एतावता सृष्टिसंहारौ वक्तुं न शक्येते तथैव भगवत्या शरीरात् पृथिव्याद्यष्टमूर्तयो बहिर्भवन्ति तदिच्छया तत्रैव प्रविशन्ति ततो जगतस्तद्रूपिण्याश्चाविर्भावतिरोभावनित्यो विनाशशङ्काकदम्बको नोट्टंकनीय इति स्थितमेतद् विश्वशरीरयोः सर्वदा सामरस्यम् इति ॥ ३५ ॥

## गोपालसुन्दरी

**मनस्त्वमिति**—हे शिवयुवति! त्वं मनः अन्तःकरणं असि, व्योम आकाशम्; मरुत् वायुस्त्वमसि, मरुत्सारथिरग्निस्त्वमसि, आपो जलानि, भूमिः पृथिवी, त्वयि परिणतायां सत्यां परं भिन्नं कार्यं नास्ति, त्वमेव भावेन लीलाविशेषेण चिदानन्दाकारं आत्मानं विश्ववपुषा जगद्रूपेण बिभृषे, किमर्थं, परिणमयितुं परिणामं प्रापयितुम्। तदुक्तं चतुःशत्याम्—

"त्रिपुरा परमाशक्तिराद्या जाता महेश्वरी।
स्थूलसूक्ष्मस्वभावेन त्रैलोक्योत्पत्तिमातृका॥
कबलीकृतनिःशेषतत्वग्रामस्वरूपिणी।
यस्यां परिणतायान्तु न किञ्चित्परमिष्यते॥"-इति।

**विष्णुपक्षे**-कार्यकारणयोरभेदान्मनोरूपं कार्यत्वमेव; एवमग्रेऽपि। ननुमेव मनः प्रभृतीनामन्यदेव कारणमस्त्विति अत आह-त्वयि इत्यादि। अविपरिणताय आमितिच्छेदः अपि सम्बोधने, परिणतं यन्मनो व्योमादि तस्मै तदर्थं परमन्यत्कारणं नहि आम् स्मरणे तव कथं तद्रूपत्वमित्यत आह-**शिवयुवतिभावेन** शिवयुवतिर्भार्या शिवकल्याणस्वरूप इति सम्बोधनम्। युवतिमायेति वा तस्याभावेन मायिकमेव वेदनं तात्त्विकमित्यर्थः। शिवमहिषीति पाठे संज्ञायांह्रस्वः, कालिदासवत् "वैदेहि बन्धो हृदयं विदद्रे" इतिवच्चेति बोध्यम्॥

## आनन्दलहरीटीका

इदानीं भगवत्या ब्रह्मस्वरूपायाः प्रपञ्चात्मकतामाह-**मन** इति। हे शिवयुवति त्वं ब्रह्मरूपैव इति भावेनाभिप्रायेण चिदानन्दाकारं ज्ञानसुखात्मकं स्वात्मानं स्वस्वरूपं बिभृषे धारयसि। कोऽसौ भाव इत्यपेक्षायामाह-विश्ववपुषा प्रपञ्चाकारेण परिणमयितुं, तद्रूपतां प्रापयितुं सृष्टिकाले जगद्रूपतां प्रापयितुं, प्रलयकाले स्वमात्मानं चिदानन्दाकारं धारयसीति भावः। भावेन लीलयेत्यर्थ इति केचित्। शिवयुवतिभावेन हरपत्नीत्वेन चिदानन्दाकारं स्वात्मानं बिभृषे इति कश्चित्। जगद्रूपतां दर्शयति-**मन** इत्यादिना। व्योम आकाशं, मरुद्वायुः सारथिः सहायो यस्यासौ तथा वह्निरित्यर्थः। त्वयि परिणतायां लीलयागृहीतपरिणामायां सत्यां परमन्यत् न ह्यस्तीति शेषः। त्वत्परिणामरूपमेव जगदित्यर्थः। तदुक्तं "त्रिपुरा परमा शक्तिराद्या जाता महेश्वरी। स्थूलसूक्ष्मस्वभावेन त्रैलोक्योत्पत्तिमातृका। कवलीकृतनिःशेषतत्वग्रामस्वरूपिणी। यस्यां परिणतायां तु न किंचित् परमिष्यते" इति ॥ ३५ ॥

**तवाज्ञाचक्रस्थं तपनशशिकोटिद्युतिधरं[1]**
**परं शम्भुं वन्दे परिमिलितपार्श्वं परचिता।**
**[2]यमाराध्यन् [3]भक्त्या रविशशिशुचीनामविषये**
**[4]निरालोकेऽलोके निवसति हि भालोकभुवने[5] ॥ ३६ ॥**

தவாக்ஞாசக்ரஸ்தம் தபனஶஶிகோடி த்யுதிதரம்,
1 11 2 11 1 1 3 14
பரம் ஶம்பும் வந்தே பரிமிலித பார்ஶ்வம் பரசிதா ।
1 4 3 1 1 1 1 11
யமாராத்யன் பக்த்யா ரவிஶஶிஶுசீனாமவிஷயே
4 4 11 1
நிராலோகேऽலோகே நிவஸதி ஹி பாலோகபுவனே॥
1 1 1 4 14

भगवति! तव आज्ञाचक्रस्थित परशिव को मैं नमता हूं,
रविशशिकोटिकांतिधर पराज्ञानयुत प्रभु को भजता हूं,
जिन के आराधक सद्भक्त वास करते हैं उस जग में,
रविशशिवैश्वानर की भी पहुंच न हो सकती जिस जग में,
विजन अगोचर भालोकाख्य भुवन में, परानंद सुख में! ॥

1. द्युतिहरं 2. यमाराद्धुं, यमाराध्य 3. प्रेम्णा 4. सदालोके, निजालोके, निरातङ्के लोको 5. सदालोकभवने, सालोकभवने, भालोकभवने

## लक्ष्मीधरा

**तवेति**। तव त्वदीये, आज्ञाचक्रस्थं आज्ञाचक्रे स्थितं, तपनशशिकोटिद्युतिधरं तपनः सूर्यः शशी चन्द्रः तयोः कोटयः, अगणितकोटिसङ्ख्याका इत्यर्थः, तासां द्युतिः कान्तिः तां धरतीति धरः, तं परं शम्भुम्।[1] पर इति संज्ञा शम्भोः। परिमिलितपार्श्वं परिमिलितौ पार्श्वौ दक्षिणोत्तरौ यस्य तम्। परा चासौ चिच्च परचित्। परशब्दः चित्संज्ञायां प्रसिद्धः। यं परचित्संवलितं परशिवं, आराध्यन् प्रसादयन्, भक्त्या भजनप्रीत्या, रविशशिशुचीनां सूर्यचन्द्राग्नीनां, अविषये अगोचरे, अत एव निरालोके आलोकरहिते, अलोके विजने एकान्ते, निवसति, त्वत्सायुज्यं प्राप्येति शेषः। हिः प्रसिद्धौ। भालोकभुवने ज्योत्स्नामये लोके सहस्रकमले।

अत्रेत्थं पदयोजना—हे भगवति! तवाज्ञाचक्रस्थं तपनशशिकोटिद्युतिधरं परं शम्भुं परचिता परिमिलितपार्श्वं वन्दे। यं भक्त्या आराध्यन् रविशशिशुचीनां अविषये निरालोके अलोके भालोकभुवने निवसति हि।

अत्रेदमनुसन्धेयम्—'तवाज्ञाचक्रस्थं' इति [2]चक्रशब्देन साधकस्य भ्रूमध्यान्तरगतश्रीचक्रान्तर्गत-शिवचक्रचतुष्टयं कथ्यते। न तु द्विदलं पद्मं, तवेतिपदानन्वयादिति। एवमुत्तरत्राप्यूह्यम्। अत्र स्वाधिष्ठानाग्रे अग्निमण्डलं, अनाहतचक्राग्रे सूर्यमण्डलं, आज्ञाचक्राग्रे चन्द्रमण्डलमिति पूर्वमेव प्रतिपादितम्। अतश्च अग्निसूर्यचन्द्राणां मयूखाः षष्ट्युत्तरत्रिशतसङ्ख्याकाः आधारचक्रप्रभृति आज्ञाचक्रपर्यन्तमेव विचरन्ति। एतदपि पूर्वमेव सम्यक् निरूपितम्। आज्ञाचक्रस्थितचन्द्रात् अन्य एव सहस्रकमलस्थितश्चन्द्रः श्रीचक्रात्मकः नित्यकल इत्यपि पूर्वमेव सम्यक् निरूपितम्॥ ३६॥

## सौभाग्यवर्धनी

इति मनः प्रभृतिभिः सहैक्यं भगवत्याः प्रतिपाद्य मानसादिषडन्वयशांभवानां [3]मुख्यौ भूतौ देवदेव्यौ पूजाचक्रसहितौ क्रमेण प्रस्तौति—**तवेति**। तव आज्ञाचक्रस्थम् भ्रूमध्यद्विदलपद्मकर्णि-कामध्यगतं सूर्यचन्द्रकोटिकान्तं, परं शंभुं परशंभुनाथं, परिमिलितपार्श्वं परचिता चित्पराम्बयाविनाभूत-वामाङ्गम्। यमाराध्यन् भक्त्या रविशशिशुचीनामविषये सूर्यचन्द्रवह्नीनामगोचरे भालोकभवने; भालोकाः तेजोलोकाः; अपरिमिततेजःसमूहानां भवने; सर्वतेजसां कालत्रयेऽपि निवासस्थाने। तथा च श्रुतिः—"न यत्र सूर्यो न विभाति चन्द्रमा नाग्निर्नाप्यानि न तेजांसि (त)द्भासा सर्वमिदं भासते सर्वासां भासमेक-मायतनं स मृत्योरपि मृत्युरमृतोऽक्षरोऽनन्तोऽजरो निरालम्बः परमात्मा" इति; निरालोके निर्गता आलोका यस्मात्। निरातङ्क इति पाठः क्वचित्। कालत्रयेऽप्यविनाशिनि लोके भक्तिभावित-परमानन्दमेदुरमहाशयः निवसतितरां वसति, निरतिशयानन्दसंविदानन्दमहाकाशे विजृम्भते,

1. वन्देत्यधिकः 2. तवेति पाठः 3. मुखभूतौ.

ब्रह्मसाक्षात्कारमनुभूय वीतशोको भवतीति भावः। इति निष्कामानामुपासना। सकामानां तु यमाराध्यन् भक्त्या पुरुषः सूर्यचन्द्रवह्नीनामगोचरे निरालोके आलोकान्तरं तत्प्रकाशकं नास्तीत्यर्थः। स्वयंप्रकाशे भालोकभवने भासां वा रश्मिविशेषः चतुःषष्टिरश्मिमध्ये परिगणितः तस्यालोकभवने निवसति। इच्छामात्रोपनीतनानाभोगरसिकः सकलतेजोलोकोपरि वर्तमानो महाशयो विजृम्भत इति भावः। मध्ये परशंभुनाथः चित्परांबा इति देवदेव्यौ पूज्यौ, ध्येयौ वा। परितः पूर्वोक्तचतुःषष्टिमानसरश्मयः पूज्याः ध्येया वा ॥ ३६ ॥

## अरुणामोदिनी

अथ पूर्वोक्तमूलाधारादिचक्रषट्कव्युत्क्रमेणाधिष्ठानदेवतारूपयोः शिवयोर्ध्यानं संभावयति - **तवेत्यादिना**-हे देवि! तव भवत्या आज्ञाचक्रे निदेशाचरणे तिष्ठतीति तम् त्वदाज्ञानुवर्तिनमित्यर्थः। यद्वा - आज्ञाचक्रे भ्रूमध्यवर्तिनि चक्रे स्थितं (भगवति) इति विग्रहेऽप्याधारादिचक्रावस्थानावश्यंभावात् तत्राऽपि स्वस्वरूपयोः शिवशक्त्योः भावना इत्यभिप्रायः। तपनशशिकोटीनां द्युतेर्धरं कोटिसूर्यचन्द्रसमानकान्तिमित्यर्थः। परचिता परया चिच्छक्त्या, परिमिलितं पार्श्वद्वयं यस्य तम्; तया संवलितमित्यर्थः। परं परमात्मानं, शंभुं देवं, वन्दे नमामि। लोकः उपासको जनः, यं परचित्संवलितं परशिवम्, आराध्य निध्यायन् सन्, रविशशिशुचीनां सूर्यचन्द्राग्नीनां, अविषये अगोचरे, 'न तत्र सूर्यो भाति' इति श्रुतेः। निर्गता लोकाः निरालोके। 'निरातङ्के' इति पाठे आतङ्करहिते। भालोकभुवने स्वयंप्रकाशे ज्योतिर्मये लोके, निवसति वर्तते। इति प्रातीतिकोऽर्थः।

आगमार्थस्तु - तव त्वत्संबन्धिनि। "राहोः शिरः" इतिवदभेदे वा षष्ठी। आज्ञाचक्रे भवद्रूपमनस्तत्त्वात्मके भ्रूमध्यसंस्थिते द्विदले चक्रे तिष्ठतीति तम्। यदुक्तम् लक्ष्मीधरेण - "'तवाज्ञाचक्रस्थम्' इति तवशब्देन साधकस्य भ्रूमध्यान्तरश्रीचक्रान्तर्गतशिवचक्रचतुष्कं कथ्यते। न तु द्विदलं पद्मं, तवेतिपदानन्वयात्" इति तदविचारिताभिधानम्। संबोध्यप्रधानस्य युष्मच्छब्दस्य अत्र भगवतीविषयत्वेन साधकपरत्वकथनानौचित्यात्। तत्कथने च प्रकरणविच्छेदापातात्। शिवचक्रचतुष्ककथने प्रकृतार्थहानाप्रकृतार्थस्वीकारापत्तेश्च। अस्मदुक्तरीत्या मुख्यार्थलाभे च(क्र)गत्यनुसरणप्रयोजनाभावाच्चेति। तपनशशिनोः सूर्याचन्द्रमसोः अनाहताज्ञाचक्रस्थयोरित्यर्थः। कोटिद्युतेः प्रकृष्टद्युतेः धरम्। "कोटिः प्रकर्षचापाग्रसंख्यापक्षान्तरे त्रिषु" इति रत्नमाला। परचिता परचिदम्बाख्यया देव्या, परिमिलिते पार्श्वे यस्य तम्, परं शंभुं परशंभुनाथाख्यं देवं वन्दे अभिवादये स्तौमीत्यर्थः।

लोक्यते देवस्वरूपमनेनेति लोकः साधकजनः। यत्तवाज्ञाचक्रस्थं परचिदम्बासंवलितं देवमाराध्यन् भक्त्या ध्यायन् रविशशिशुचीनां स्वाधिष्ठानानाहताज्ञाचक्राग्रवर्तिनामग्निसूर्यचन्द्राणामविषये

अगोचरे, षष्ट्युत्तरत्रिंशत्संख्याकसूर्यचन्द्राग्निकिरणानाम्, आधाराद्याज्ञाचक्रपर्यन्तमेव संचारात् इति भावः। निरालोके निर्गत आलोको यस्मात् निरालोकः, तस्मिन्नक्षीणालोकसत्वादिति भावः। भालोकभुवने नित्यज्योत्स्नामये लोके सहस्रकमले निवसति हि, तत्सायुज्यं प्राप्य वर्तते खलु। एवंविधं तं वन्दे इत्यन्वयः। श्रीचक्रात्मकसहस्रदलमध्यवर्ती चन्द्रो नित्यकलोऽक्षीणप्रभः आज्ञाचक्रोपरिस्थक्षयवृद्धिमत्कलाविशिष्टाच्चन्द्रादन्य इत्यागमः ॥ ३६ ॥

## आनन्दगिरीया

एवं मनःप्रभृतिभिरैक्यं प्रतिपाद्य षडाम्नायेश्वर्या मयूखभूतौ देवीदेव्यौ तत्तच्चक्रसहितौ तत्तच्चक्राधिष्ठितभूतोत्पत्तिक्रमेण स्तौति - **तवाज्ञाचक्रस्थमिति**। प्रथमं परमेश्वरपरमेश्वरीमन्त्रः। अत्रैवं क्रमः। भ्रूमध्ये आज्ञाचक्रम्। तत्र द्विदलकमलकर्णिकायां देवदेव्यौ शंभुनाथचित्परे पूजनीये। परितः चतुःषष्टिसंख्याका मानसा रश्मयः पूज्या ध्येया वा इति प्रतिचक्रं पूजा। तत्र प्रथममाज्ञाचक्रे- हे परमेश्वरि, तव रश्मिभूतं शंभुं वन्दे। उपासने स्थानमाह-किंलक्षणं, आज्ञाचक्रस्थं, भ्रूमण्डलमध्यवर्तिचक्रमाज्ञाचक्रं, तत्र वर्तमानं, अथवा आज्ञाचक्रे निदेशे वर्तमानं आज्ञाकरं। पुनः किंलक्षणं, परचिता देव्या परिमिलितपार्श्वं आश्लिष्टैकपार्श्वं। पुनः किंविधे, तपनशशिकोटिद्युतिधरं पुष्पवत्कोटिकान्तिकमनीयं, परमुत्कृष्टम्। उत्कर्षे हेतुमाह - हि यस्मात्कारणात्, यं भक्त्या आराध्यन् लोकः उपासको जनः, तव भालोकभुवने वसति कालत्रयेऽप्यपरिमितसकलतेजःप्रभापटलविलासस्थाने। किं लक्षणे, निरालोके निर्गताः कुण्ठिताः सूर्यचन्द्रादयो यत्र तथा भूते। तथा च श्रुतिः - "तत्र न विभ्राजति चन्द्रमा नाग्निः, नान्यानि तेजांसि, यद्भासा सर्वमिदं विभासते, सर्वासामेकायतनम्" इति। अत एव रविशशिशुचीनां सोमसूर्याग्नीनामगोचरे। क्वचिन्निरातंक इति पाठः, सकलसंसारभयविनिर्मुक्ते लोके निवसति। भक्तिभरभावितपरमानन्दमेदुरो निरतिशयानुभवानन्दसुन्दरब्रह्मभूयाय कल्पत इति निष्कामोपासना। कामनापक्षे तु, तवाज्ञाचक्रस्थं तवाज्ञामनुवर्तमानं यमाराध्यन् लोकः स्वकामोपनीतनानाविलासरसिकः भालोकभुवने परिगणितचतुष्षष्टिरश्मिमति, एवं रविशशिशुचीनामविषये। रविशब्देन हकारमुख्या लोपामुद्राविद्या, शशीति कामराजविद्या, शुचीति दौर्वाससीति, तिसृणामपि विद्यानां फलभूते स्वयं प्रकाशमानस्तिष्ठति। तवाज्ञाचक्रस्थं तपनशशिकोटीति पद्यस्य रहस्यार्थः—तवाज्ञारूपा शक्तिः तेन सचक्रस्थं औ तपनो, वह्निः रः, शशी सः, शंभुर्हः, परचिता परमेश्वरीबीजेन मिलितपार्श्वं तेन परमेश्वरपरमेश्वरीबीजद्वयं कोटिद्युतिधरं नादबिन्दुमयं, उत्तरार्धं मनुद्वयार्थः। स्हौं ऐं क्रैं परमेश्वरपरमेश्वरीबीजम्॥ ३६ ॥

## तात्पर्यदीपिनी

अथ व्युत्क्रमेण पूर्वोक्तमहापद्माटवीस्थदेवतां विशिनष्टि। तत्र शिवयोः सदास्थानं समसूचि। तवाज्ञेति। हे भगवति अहं तवाज्ञाचक्रस्थं परं शंभुं वन्दे। आज्ञाचक्रे शिवस्याधिष्ठानम्। परमिति

सर्वोत्कृष्टम्। किंविधं शंभुं, तपनशशिकोटिद्युतिहरं, तपनः सूर्यः, शशी चन्द्रः, तयोः कोटयः, तासां द्युतिं हरति सः, तथा त्वं स्वरूपप्रकाशस्येति यावत्। पुनः किंविधं, परचिता परिमिलितपार्श्वं, परा चासौ चिच्च, तया परमचिद्रूपया त्वया परिमिलितं पार्श्वं यस्य तम्। अत एव पार्श्वमिलनात्मकस्तवैव महिमायमित्यर्थः। तस्य स्वलोकं विशिनष्टि - हि यतः लोको ज्ञानी भक्त्या यमाराध्यन् भालोकभवने निवसति। भा प्रभा, तस्या आलोकः, तस्य भवनं स्वप्रकाशस्तंभः तस्मिन्, किं विधे भालोकभवने, निजालोके स्वप्रकाशवति, पुनः किंविधे रविशशिशुचीनामविषये रविश्च शशी च शुचिश्च तेषां सूर्यचन्द्राग्नीनां अविषये, अगोचरे, तैरप्रकाश्य इत्यर्थः। तथा च श्रुतिः "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति॥" एवमाज्ञाचक्रं चतुःषष्ट्यात्मकं निरूपितं भवति॥ ३६॥

## पदार्थचन्द्रिका

इदानीं सविस्तरं भवानीरूपं निर्वर्ण्येदानीं श्रीमहादेवं प्राधान्येन स्तुवन्, भवानीमपि स्तौति, तवेत्यादिभिः षड्भिः श्लोकैः तवाधारे मूल इति पर्यन्तैः। हे जननि शंभुं महादेवं वन्दे स्तौमि नमस्करोमि वा। 'वदि अभिवादनस्तुत्योः'। शंभुं विशिनष्टि तवाज्ञाचक्रस्थं त्वन्निर्मिते आज्ञाचक्रे स्थितं, तवेति षष्ठीसंबन्धे। स च संबन्धो जन्यजनकभावो वा, अधिष्ठात्रधिष्ठेयभावो वा। अथवा तव शंभुं तव स्वामिनं शंभुं वन्दे इति संबन्धः। स्तुतौ हेतुगर्भं विशेषणमाह-परं परमेश्वरं, अत एव तपनशशिकोटिद्युतिं धरतीति तथोक्तम्। पार्वतीसंश्लिष्टतया पुनरपि विशिनष्टि, परचिता पार्वत्या परिमिलितः पार्श्वो यस्य तं, परिशब्दः संयोगा विप्रयोगान्ता इतिन्यायेन प्राप्तं वियोगं व्यवच्छिनत्ति। परा प्रकृष्टा चित् स्वरूपज्ञानं यस्याः सा परचित्। अथवा परा चासौ चिच्च परचित् तया। अथवा परं चित् ज्ञानं यस्याः सा परचित्, तया ज्ञानदात्र्येत्यर्थः। मोक्षदातृत्वेन पुनरपि शंभुं विशिनष्टि-यमीति। यं शंभुं, प्रेम्णा भक्त्या, आराध्य संसेव्य, लोको जनो भक्तः सदालोकभवने निवसति। संश्चासावालोकश्च सदालोकः, सदालोको भवनमिव सर्वाश्रयत्वात्। सदालोकभवनं ब्रह्म तस्मिन्। यद्वा सत् समीचीना जिज्ञासा आलोके येषां ते सदालोकाः सूर्यादयः तेषां भवनं आश्रयस्तस्मिन्। सूर्याद्याश्रयत्वं ब्रह्मणः, "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इत्येवमादि श्रुतावेव प्रसिद्धम्। यद्वा सदेति भिन्नं पदं, लोकानां चतुर्दशभुवनानां भवनमुत्पत्तिर्यस्मात्तत् ब्रह्म तस्मिन्, लोकानां ब्रह्मण उत्पत्तिस्तु, 'एतस्मादात्मन' इत्यादिश्रुतावेव प्रसिद्धम्। सदालोकभवनं विशिनष्टि—रविशशिशुचीनामविषयेऽप्रकाश्ये, शुचिरग्निः, अत एव निरालोके भौतिकालोकशून्ये। निजालोके लोको निवसति हि। सालोकभवने इति पाठे, हिरवधारणार्थः। निजश्चासावालोकश्चेति निजालोकः, स्वरूपे चैतन्यं यत्तस्मिन्, आलोकेन सह वर्तन्त

इति सालोकाः सूर्यादयः तेषां भवनमिवाश्रयः इति व्याख्येयम्। अथवा सदालोकभवनशब्देन कैलासलोक एव कथ्यते। तस्य सूर्याद्यविषयत्वं युक्तमेवेति ॥ ३६ ॥

## डिण्डिमभाष्यम्

ननु प्रागुक्तानां मूलाधारादिभ्रूमध्यपर्यन्तानां मन्त्ररश्म्यावरणरश्मिद्वयात्मकानामन्तर्यागपूजा-महापीठपूजानां षट्कमलालङ्कृततत्तत्सुषुम्नास्थानानां षडाधाराणामधिष्ठानदेवतापूजां विना अधिष्ठेयपूजा न सम्भवति, तत्षडधिष्ठानदेवतामिथुनषट्कं कथं न प्रकाश्यत इत्याशङ्कायां पूर्वोक्तक्रमेणाज्ञाविशुद्धिहृदय-मणिपूरकस्वाधिष्ठानमूलाधारचक्राणामधिष्ठानं देवताषट्कदम्पतीषट्कं प्रकाशयति षड्भिः श्लोकैः; तत्र प्रथमं—**तवाज्ञाचक्रस्थम्**—इति। आज्ञाचक्रं नाम पूर्वोक्तं सर्वरोगहरचक्रस्वामिन्यादि-चतुःषष्टिदेवतायुक्तं मनश्चक्रकमलजुष्टं भ्रूमध्यस्थानम्। तत्रस्थं तपनशशिकोटिद्युतिधरं सूर्यचन्द्रकोटि-सङ्काशं परचिता भट्टारिकया परिमिलितपार्श्वं परं शम्भुं महाशम्भुनाथं, वन्दे नमस्करोमि। तत्र मन्त्रद्वयम्-"परचिदम्बापादं परशम्भुनाथपादमिति मन्त्रद्वयम्।" तमेव विशिनष्टि–यं परं शम्भुनाथं शक्त्या आराद्धुं ज्योतिर्मयाकारेण विप्रवेष्टुं लोके भक्तजनः लोकते, ज्योतिर्मयं पश्यतीति लोकः साधकोत्तमः, रविशशिशुचीनां सूर्यचन्द्रपावकानां अविषये प्रथमोत्पत्तिस्थाने भगवत्या ज्योतिर्मयं रूपं तेजस्त्रितयं पूर्वमुत्पन्नमिति प्रसिद्धिः। भालोकभुवने भामयो ज्योतिर्मयो लोको भालोकः, तदन्तर्व-र्तिनि ततो विशिष्टप्रायरूपे महाज्योतिःस्थाने, निरालोके आलोकवर्जिते आलोकयन्ते इत्यालोकाः, घटपटादिजडरूपवृत्तिज्ञानजनितविरहिते निरालोके, निवसति आस्थानं करोति। महाज्योतिः-स्थानवर्तिनामेव महायोगिनां एतन्महामिथुनचरणाराधनसामर्थ्यं नान्येषाम् इत्यर्थः ॥ ३६ ॥

## गोपालसुन्दरी

अथ मानसादिषडन्वयशाम्भवानां मुख्यभूतौ देवदेव्यौ प्रतिचक्रं षड्भिः श्लोकैः स्तौति **तवाज्ञेति**-तवाज्ञाचक्रस्थं त्वदधिष्ठितभ्रूमध्यस्थं तपनः सूर्यः शशी चन्द्रः तयोः कोटिसङ्ख्याककान्तिधरं परं शम्भुं परशम्भुनाथाख्यं परचिता परचिदम्बया परमिलितपार्श्वं परिष्वक्तवामभागं यं शम्भुं भक्त्या—भक्त्या आराध्यन् पूजयन् लोको भक्तजनः भालोकभवने रश्मिलोकगृहे हि निश्चितं निवसति, कीदृशे? निरालोके प्रकाशकालोकान्तरशून्ये स्वप्रकाश इत्यर्थः। तथा च श्रुतिः-"न तत्र सूर्यो भाति न चन्द्रतारकौ नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति।" इति। अत्र कर्णिकायां परशम्भुनाथश्रीपादुकां पूजयामि परचिदम्बाश्रीपादुकां पूजयामि, इति सम्पूज्य चतुःषष्टिदलेषु पूर्वोक्तचतुःषष्टिरश्मयः नाथश्रीपादुकामम्बाश्रीपादुकां पूजयामि इत्येतैर्मन्त्रैः पूजनीयाः, एवमन्यचक्रेष्वपि च क्रमः।

**विष्णुपक्षे**ऽप्येवम्। तत्र यदाज्ञाचक्रमनुशासनसमूहः न तत्रस्थं त्वदाज्ञापरिपालकमिति वार्थः॥३६॥

## आनन्दलहरीटीका

इदानीं क्षितौ षट्पञ्चाशदित्यादिनोक्ता ये मयूखाः, तेषां मध्ये प्रतिचक्रं कर्णिकायां प्रधानभूतं शिवशक्तियुग्मं पद्यषट्केन स्तौति - तवेति । त्वदधिष्ठितभ्रूमध्यचक्रस्थं तपनशशिनोः सूर्याचन्द्रमसोः कोटिः, तद्वत् द्युतिं कान्तिं धरतीति तथा तम् । परं प्रकृष्टं शंभुं वन्दे । कीदृशं, परचिदाख्यया शक्त्या परिमिलितपार्श्वं युक्तवामपार्श्वभागं यं शंभुं प्रेम्णा भक्त्या । तथैव क्वचित्पाठः । आराध्य पूजयित्वा, आराध्यन्निति पाठे पूजयन् इत्यर्थः । लोकः आलोकभुवने रश्मिसंज्ञकदेवताभुवनस्थमन्दिरे निवसति । सदालोके नितरामतिशयित आलोकः स्वीयप्रभा यस्मिन् तत्र, आलोकान्तररहिते इति वा । सूर्यचन्द्राग्नीनामविषये अप्रकाश्ये, सूर्योदये दीपस्येव प्रकृष्टतत्तेजसा तेजोऽन्तराणामभिभवादिति भावः । हि निश्चये । तथा च श्रुतिः - "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥" इति ॥ ३६ ॥

**विशुद्धौ ते शुद्धस्फटिकविशदं व्योमजनकं[1]**
**शिवं सेवे देवीमपि शिवसमानव्यवसिताम्[2] ।**
**ययोः कान्त्या यान्त्या[3] शशिकिरणसारूप्यसरणेः[4]**
**विधूतान्तर्ध्वान्ता विलसति चकोरीव जगती ॥ ३७ ॥**

விஶுத்3தௌ4 தே ஶுத்3த4 ஸ்படிகவிஶத3ம் வ்யோமஜனகம்
ஶிவம் ஸேவே தே3வீமபி ஶிவஸமான வ்யவஸிதாம் |
யயோ: காந்த்1யா யாந்த்1யா ஶஶி கிரணஸாரூப்1ய ஸரணே1:
விதூ4தா1ந்த1ர்த்4வாந்தா1 விலஸதி1 சகோ1ரீவ ஜக3தீ1 ||

तेरे शुद्ध-स्फटिक जैसे "विशुद्ध" में नभतत्वोत्पादक
शिव को शिवसमान देवी को भजता हूं, जगती-साधक ।
जिन के चन्द्रकिरण सम प्रभा स्रोत में अंतस्तम धो कर,
तुष्ट चकोरी सी विराजती है, शिव-ज्योत्स्ना अमृत पी कर ! ॥

## लक्ष्मीधरा

**विशुद्धाविति** - विशुद्धौ विशुद्धिचक्रे ते भवत्याः शुद्धस्फटिकविशदं [5]त्रासरहितस्फटिकोपल-सदृशं अतिनिर्मलं व्योमजनकं व्योम्नः आकाशतत्त्वस्य जनकं उत्पादकं, 'तस्माद्वा एतस्मादात्मन

---

1. व्योमसदृशं 2. व्यसनिनीं 3. यान्त्या 4. सरणिः, सरणिं, सरणी
5. त्रासः मण्यादिनिष्ठो दोषः इति मेदिनी।

आकाशस्सम्भूतः' इत्यादिश्रुतेः[1]। आज्ञाचक्रे आत्मतत्त्वात् उत्पन्नं आकाशतत्त्वमित्यर्थः। अत्र आत्मशब्दो मनःपर्यायवचनः। शिवं शिवतत्त्वं सेवे उपासे। देवीं भगवतीम्। अपिशब्दः समुच्चये। शिवसमानव्यवसितां शिवेन समानं व्यवसितं व्यवसायः प्रयत्नः यस्याः तां, स्वयमपि [2]शिवशब्दवाच्येत्यर्थः। ययोः शिवयोः, कान्त्यः-प्रभायाः, यान्त्याः सरन्त्याः, शशिकिरणसारूप्यसरणेः चन्द्रकिरणसादृश्यमार्गात्, विधूतान्तर्ध्वान्ता विधूतं अन्तर्ध्वान्तं अज्ञानं यस्यास्सा, विलसति प्रकाशते। चकोरीव चकोरविहगीव, जगती त्रिलोकी।

अत्रेत्थं पदयोजना—हे भगवति! ते विशुद्धौ शुद्धस्फटिकविशदं व्योमजनकं शिवं शिवसमानव्यवसितां देवीमपि सेवे; ययोः यान्त्याः शशिकिरणसारूप्यसरणेः कान्त्यास्सकाशात् जगती विधूतान्तर्ध्वान्ता चकोरीव विलसति।

अयमर्थः—यथा ज्योत्स्नापानेन चकोरी सन्तुष्टान्तरङ्गा, एवं शिवयोः ज्योत्स्नासदृशप्रभया विधूतान्तर्ध्वान्तः सन्तुष्टान्तरङ्गः साधकलोकः इति।

अत्रेदमनुसन्धेयम्—विशुद्धिचक्रपूजायां सूर्यचन्द्रनिरोधात् षोडशारगतानां श्रीत्रिपुरसुन्दरीप्रभृतीनां षोडशकलानां ज्योत्स्नाशोषणात् तच्चक्रस्थितयोः शिवयोरेव प्रभया ज्योत्स्नाकार्यमिति ॥ ३७ ॥

## सौभाग्यवर्धनी

क्रमप्राप्तनाभसरश्मिमुख्यदेव्यौ प्रस्तौति—**विशुद्धाविति**। विशुद्धौ ते कण्ठस्य षोडशदलपद्ममध्ये सुनिर्मलस्फटिकाच्छं व्योमजनकं गगनकारणं शिवं व्योमेश्वरं सेवे। देवीमपि; अपिः समुच्चये। व्योमेश्वरीं गिरिशसायुज्यपदवीं शिवसायुज्यसरणिं चिदानन्दमहाप्रकाशपरंपरां शिवाविनाभूतामिमामेव पदवीम्, शिवसायुज्यस्येमां विना दुरूहत्वादिति भावः। तदुक्तं स्कान्दे "त्वामाश्रिता महाभागे प्राप्नुवन्त्यचिरेण माम्। केवलं त्वामनादृत्य मां भजन्तो विचेतनाः। नार्हन्ति मम सायुज्यं ब्रह्मकल्पशतैरपि ॥" इति। ययोः कान्त्या आयान्त्या हेतुना, शशिकिरणसारूप्यसरणिः चन्द्रिकासमानसरणिः सुषुम्नामार्गेण प्रविश्य सकलशरीरान्तराल माप्लावयन्ती, विधूतान्तर्ध्वान्ता निर्धूतबाह्यविषयासङ्गतिमिरा जगती जङ्गमा चकोरीव विलसति। चकोरी यथा चन्द्रिकान्तरापतिता चिरसंतप्तान्तस्तापं विधूय विलसति तथेत्यर्थः। अथवा—मूलाधारस्य जगती भूः ययोः कान्त्या यान्त्या शशिकिरणसारूप्यसरणिः सती विधूतान्तर्ध्वान्ता विगतसुषुम्नारन्ध्रनिरोधकवातपित्तादिदोषा चकोरी विलसति। अथवा - ययोः कान्त्या आयान्त्या शशिकिरणसारूप्यसरणिः सा सर्वा जगती भूमिः विधूतान्तस्तिमिरा विगलितगिरिकन्दरादिगततिमिरा चकोरीव विलसति। सकला भूमिः ययोः कान्तिपटलाच्छादिता

---

1. तै. उ. २-१. 2. शिवत्व

क्षुद्रा चकोरीव शोभत इति भावः। एतादृशौ देवदेव्यौ चक्रे पूज्यौ, ध्येयौ वा व्योमेश्वरौ। नाभसरश्मयः पूर्वोक्तद्विसप्ततिसंख्याकाः परितः पूज्याः, ध्येया वा ॥ ३७ ॥

## अरुणामोदिनी

अथ आकाशतत्त्वात्मकविशुद्धिचक्राधिष्ठानदेवताद्वन्द्वं स्तौति - विशुद्धाविति। - हे देवि! भवत्या विशुद्धौ त्वदीयलीलाविग्रहकण्ठस्थानस्थिते भवदात्मकाकाशतत्त्वरूपे वा विशुद्ध्याख्ये चक्रे, स्थितं शुद्धस्फटिकवद्विशदं त्रासादिदोषरहितस्फटिकमणिवत्स्वच्छम्। व्योम्नः स्थूलरूपस्य विशुद्धिवर्तिनः सूक्ष्मरूपस्य च आकशतत्त्वस्य जनकमुत्पादकम्; "आत्मन आकाशः संभूतः", इत्यादि श्रुतेरिति भावः। शिवं शिवाख्यं देवं, शिवेन समानं व्यवसितं प्रयत्नो यस्यास्तां देवीं शिवा(म)म्बाख्यामीश्वरीं च वन्दे नमामि। तयोः प्रभावमाह-जगती साधकलोकः, शशिकिरणसारूप्यसरणिं चन्द्रमयूखसाम्यपरिपाटीं, यान्त्याः; गच्छन्त्याः, ययोः देवयोः कान्त्याः द्युतेः, विधूतान्तर्ध्वान्ता निरस्तान्तरतमःस्तोमा सती, चकोरी चन्द्रिकापायिपक्षिविशेषाङ्गनेव विलसति प्रकाशते। यथा ज्योत्स्नामृतपानेन चकोरी विधूतान्तरपिपासारूपतमःस्तोमो भवति, तद्वत् देवतासंबन्धिसुधापानेन साधकलोकः संतुष्टो भवतीति भावः। विशुद्धिचक्रे साधकसामर्थ्यवशेन सूर्यचन्द्रकिरणनिरोधे तत्रत्ययोः शिवयोः देहप्रभयैव ज्योत्स्ना जायते। तथा च साधकलोकस्तृप्यतीत्यागमः ॥ ३७ ॥

## आनन्दगिरीया

**विशुद्धौ ते** इति। हे शक्ते, विशुद्धान्ते विशुद्धचक्रमध्ये षोडशकमलकर्णिकायां व्योमजनकनामानं शिवं सेवे। किंलक्षणं शिवं, शुद्धस्फटिकविशदं स्वच्छचन्द्रकान्तमणिरिव परमनिर्मलं, देवमपि देवीश्च सेवे। किंलक्षणां देवीं, शिवसमानव्यसनिनीं शिवेन समानं तुल्यं व्यसनं यस्याः सा, शिवस्य व्यसनमत्र व्योमजननं, तद्वती व्योमजनिकामित्यर्थः। शिवसमाननामधारिणीं तथा च व्योमेश्वरं व्योमेश्वरीं च सेवे। अथवा शिवसमानव्यसनिनीं शिववत् सृष्टिस्थितिसंहारकारिणीमित्यर्थः। शिवेन सहैक्यात्। अत्र शिवं सेवे देवीमपि। गिरिशसायुज्यपदवीप्रापको मार्गः; एनामनाराध्य शिवसायुज्यपदवी न प्राप्यत इत्यर्थः। तथा च कमलकर्णिकायां व्योमेश्वर-व्योमेश्वर्यौ पूजनीयौ, परितः परिवारदेवतात्वेन द्वासप्ततिमयूखाः पूजनीयाः। अत्र शशिकिरणसारूप्यसरणिरिति प्रथमान्तः। सरणिमिति द्वितीयान्तोऽपि पाठः। तत्र प्रथमपक्षे एवं योजना-ययोर्देवदेव्योः, आयान्त्या कान्त्या, जगती मूलाधारचक्रे मही चकोरीव विलसति। किंलक्षणा जगती, कान्त्या विधूतान्तर्ध्वान्ता निरस्तान्तस्तिमिरनिकरा। केव, शशिकिरणसारूप्यसरणिरिव, शशिकिरणानां सारूप्यं विद्यते येषां ते तथा अन्यप्रकाशास्तेषां सरणिर्माला यथा विधूतान्तर्ध्वान्ता भवति तथेत्यर्थः। इवेति पदमत्रापि योजनीयम्। अयमर्थः-विशुद्धमार्गात् सुषुम्नामार्गे ययोः कान्तिरागत्य मूलाधारे

वर्तमानस्य महीमण्डलस्यान्तरन्धकारं नाशयित्वा प्रकाशयति महीमण्डलं च विनाशितान्तर्ध्वान्तं सत् प्रकाशते इति विलसतीत्युच्यते। यथा पूर्णचन्द्रचन्द्रिकाचुम्बनेन तिरस्कृतान्तस्तापा चकोरी विलसति तथैवेत्यर्थः। अथवा शशिकिरणसारूप्यसरणिः, शशिकिरणाः चन्द्रिकाः, तत्सारूप्यसरणिः प्रकाशपदं प्रकाशपरं परा कान्तिः। ययोः कान्त्या आयान्त्या सह सुषुम्नामार्गेण प्रविश्य सकलशरीरमाप्लावयन्ती चकोरीव विलसति। किंलक्षणा सा, ययोः कान्त्या विधूतान्तर्ध्वान्ता निरस्तसकलबाह्यान्तस्तिमिरा, पुनः किंभूता, जगती जगदंबा गमनशीला अंगप्रत्यंगान्याप्याययितुं प्रचरणशीला। अथवा किंलक्षणशीला जगती, शशिकिरणानां सारूप्यं यस्याः प्रसरणशीलत्वात् निर्मलत्वात् यस्याः सुषुम्नायाः सरणिः कान्त्यागमनमार्गो यस्यां सा, यत्कान्तिसहकारितायास्तस्याः परिपन्थितिमिरावगुण्ठितसामर्थ्यानायकत्वम्। अथवा ययोः कान्त्या जगती त्रिजगती अनाहतस्वाधिष्ठानमणिपूराणां समाहारः। चकोरीव विधूतान्तर्ध्वान्ता सती विलसति। यथा चन्द्रिकया निरस्तान्तःपरितापा चकोरी विलसति तथेत्यर्थः। अथवा जगती पृथ्वी ययोः कान्त्या आकृत्या विलसति शोभते उद्दीप्ता भवति। केव, उपमाबीजं सादृश्यमाह - विधूतान्तर्ध्वान्ता निरस्तगिरिंदरीविवरवर्तितिमिरा चकोरी पक्षी निरस्तमानसतापान्धकारा। किंलक्षणा जगती, शशिकिरणसारूप्यसरणिः शशिकिरणानां सारूप्यं समानत्वं समानाकारतया पतनं तस्य सरणिः स्थानम्। तेन चन्द्रकिरणानां सामान्यत्वादुद्दीपकत्वं नास्ति। तयोः कान्तिस्तु सातिशयतया उद्दीपिका। अथवा शशिकिरणसारूप्यसरणिमिति द्वितीयान्तः पाठः। तेन चन्द्रकिरणोपमापदं देवीं यान्त्या प्राप्तवत्या ययोर्विधूतान्तर्ध्वान्तेति व्याख्येयम्। विशुद्धौ ते इति पद्यस्य रहस्यार्थः - ते शक्तिः सः, शुद्धः हः, स्फटिकः फ्ः, विशदो वह्निः रः, व्योमजनकं वाणी ऐं, देवि कुब्जीसंबोधनम्। शिवसमानव्यसनिनीं शिव फ्रें - विच्चेश्वर विच्चेश्वरी मन्त्रोद्धारः। ह् स् फ्रें ऐं कुब्जिके, ह्स्रौं ऐं फ्रूं॥ ३७॥

## तात्पर्यदीपिनी

अथ विशुद्धिचक्रमाह - **विशुद्धाविति**। हे मातः, अहं ते विशुद्धौ शिवं देवीमपि सेवे। किंविधं शिवं, शुद्धस्फटिकविशदं शुद्धश्चासौ स्फटिकश्च तद्वत् विशदः तं, अतिनिर्मलरूपादिकमित्यर्थः। पुनः किंविधं, व्योमजनकं नभउत्पादनेन सुतरां निर्मलं, एतेन परमं नित्यत्वं प्रतिपादितम्। तथा च श्रुतिः, "तस्माद्वा एतस्मादात्मन आकाशः संभूतः। आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी" इत्यादि। कथंभूतां देवीं, शिवसमानव्यसनिनीं शिवेन समानं व्यसनं यस्याः सा तां तथोक्तां। तदेवाह, जगती पृथिवी ययोः शिवशक्त्योः कान्त्या दीप्त्या विधूतान्तर्ध्वान्ता सती विलसति। विधूतं निराकृतं अन्तर्ध्वान्तं अन्तःकरणस्याज्ञानं यस्याः सा तथा, एवंविधा स्तोत्रानन्दनिर्भरा विलसति, केव चकोरीव, यथा चकोरी शोकध्वान्तरहिता विलसति। किंविधया कान्त्या, शशिकिरणानां सारूप्यं

समानरूपता तस्याः सरणिः पद्धतिः तां यान्त्या गच्छन्त्या। एवं हि विशुद्धिचक्रं द्विसप्तति शक्तियुक्तं निरूपितं भवति ॥ ३७ ॥

## पदार्थचन्द्रिका

आज्ञाचक्रस्थं शिवं स्तुत्वा, विशुद्धिचक्रस्थं शिवं स्तौति-विशुद्धाविति। विशुद्धौ चक्रे स्थितं शिवं देवीं च सेवे भजे। शिवं विशिनष्टि-शुद्धस्फटिक इव विशदः तम्। शिवस्य तटस्थलक्षणमाह— व्योमजनकं आकाशजनकं, व्योमेत्युपलक्षणं इतरकार्यस्य। तथा च पारमर्षं सूत्रं—'जन्माद्यस्य यत' इति। देवीं विशिनष्टि-शिवेन समानं व्यवसितं निश्चयो यस्यास्तां एकरूपत्वादुभयोः। देवयोः जगद्भासकत्वमाह-ययोरिति, ययोः शिवस्य देव्याश्च कान्त्या स्वरूपप्रकाशेन जगती चतुर्दशभुवनं विलसति प्रकाशते। ननु कथं शरीराभ्यन्तरवर्तिन्या कान्त्या, बहिःस्थितजगतीभानम्? अत आह-शशिकिरणानां सारूप्यं सादृश्यं तस्य सरणिः तां यान्त्या प्राप्नुवन्त्या। यथा चन्द्रकिरणा गवाक्षद्वारा गृहाभ्यन्तरं गच्छन्ति तद्वदिन्द्रियद्वारा बहिर्गच्छन्त्येत्यर्थः। देवीकृत्यं वदन् जगतीं विशिनष्टि-विधूतमन्तर्ध्वान्तं यस्याः सा। अत्र दृष्टान्तश्चकोरीवेति। चकोरः पक्षिविशेषः। तस्य स्त्री चकोरी। सा हि शशिकिरणानेवाश्रित्य तिष्ठति। तद्व्यतिरेकेण च न जीवत्येव। जगती चिद्भानेनैव भासते तिष्ठति च, तद्व्यतिरेकेण नास्त्येवेत्यभिप्रायः। कान्त्येत्येकवचनं तादात्म्याध्यासाभिप्रायेण। अत्र कान्तिशब्देन अन्तःकरणवृत्तिफलकारूढं चैतन्यमुच्यते। तत्र वृत्त्या ध्वान्तनिवृत्तिः, चैतन्येन च विषयभानमिति वेदान्तप्रक्रिया। तथा चोक्तमाचार्यवर्यैः। "बुद्धितत्स्थचिदाभासौ द्वावपि व्याप्नुतो घटम्। तत्राज्ञानं धिया नश्येदाभासेन परिस्फुरे"दिति। "जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि चेति" मेदिनीकारः ॥ ३७ ॥

## डिण्डिमभाष्यम्

अथ द्वितीयश्लोकेन सर्वमन्त्रमयीप्रभृतिद्विसप्ततिदेवताधिष्ठिता तत्सङ्ख्याप्रकाशकं कमलं वाऽष्ट-मूर्तिरूपेण परिणतासि। अत्र तु मूर्तिषट्कमेव प्रतिपादितम् अन्यद् मूर्तिद्वयं कुत इत्याकाङ्क्षाया-मुच्यते--अन्ये मूर्ती चन्द्रसूर्यौ खलु तयोः शब्दान्तरेण प्रतिपादनमत्र वर्ण्यते प्राधान्याद्भिन्नतया च नोक्तम्, अग्नीषोमस्वरूपत्वात् शिवशक्त्योः सूर्यचन्द्राकारयोश्चिदानन्दाकारमित्याभ्यां शब्दाभ्यामुक्तिः। चित् खलु ज्ञानसूर्याकारा आनन्दयुक्तकण्ठस्थानविशुद्धिचक्राधिष्ठानदेवता परमशिवाम्बा परमशिवभट्टारकञ्च प्रकाशयति।

हे परमेश्वरि! ते विशुद्धौ विशुद्धिस्थाने कण्ठरूपे शुद्धस्फटिकविशदं त्रासरहितस्फटिकमणि-सदृशम्, व्योमजनकं व्योम्नः सर्वभूतावकाशप्रदस्याकाशमहाभूतस्य जनकमुत्पादकम्।

ननु नित्यस्याजन्यस्याकाशस्य कथं जन्यत्वमुच्यते? यस्य जनकं परमशिवभट्टारकं ब्रवीषि,

तार्किका खलु अजन्यमाकाशं "नासतो विद्यते भावः" इत्यागमबलाद् दूरापास्तैव प्रामाणिकी कुत इति चेत्—यद्यविद्यमानोत्पत्तिर्वैशेषिकवटुभिरुच्यते अविद्यमानत्वाविशेषात् सिकताभ्योऽपि तैलमुत्पद्येत तत्त्वं न दृश्यते। अत एव कारणगर्भे पूर्वसत एव कार्यस्योत्पत्तिर्यथा तिलेभ्यस्तैलस्य। तिलेषु तैलं सर्वदा वर्तमानम् एव चक्रयन्त्रसहस्रपीडनेन बहिर्भवति। अत एव सत्कार्यमुत्पद्यते। तत् साङ्ख्य-वृद्धानाम् आगमवृद्धानाञ्च नात्यन्तभेदः। अतः परमशिवाम्बापरमशिवभट्टारकौ सर्वसृष्टिमूलशुक्लशुक्र-प्रवाहमहार्णवरूपतया सर्वदा शुक्लाम्बरा अन्तः सदा स्थितमेव महीधरादिप्रपञ्चं बहिरुद्गमतः सा सृष्टिः। पुनस्तद् विश्वजालं स्थितिशक्त्या अवस्थाप्य संहारदशायां पुनरन्तर्निवेशयतः। एवं सृष्टिस्थितिसंहारा-भ्यामन्तःस्थितपदार्थस्यैव प्रकाशनतिरोभावे उक्ते, किन्तु तिरोभावः सूक्ष्मरूपता, बहिः प्रकाशेन स्थूलरूपतेति इयान् एव भेदः।

उक्तमनुत्तरत्रिंशिकाशास्त्रे—"यथा न्यग्रोधबीजस्थः शक्तिरूपो महाद्रुमः। तथा हृदयबीजस्थं जगदेतच्चराचरम्।" इति। तथा गोरक्षापरपर्यायेण महेश्वरानन्दमहायोगिना महार्थमञ्जर्यां प्रत्यपादि—"चित्सु मे सदसाए देसि अणोइस्त्यजन्ति दोवसरोत्कलिः। आवस्था यदि दो विस्साणि मे सेविता वियो होई।" अस्य संस्कृतम्—"विश्वोन्मेषदशायां दैशिकता यस्य यावान् प्रसरः। कालावस्थया स्थितो विश्वनिमेषेऽपि तान् प्रभवति।" इति। अत एवान्तःस्थितपदार्थस्यैव बहिर्व्यसनाद् विशेषेण विक्षेपणाद् व्यसनिनीम् इत्युक्तम्। तावेव दम्पती विशिनष्टि-आनन्दमयाकारत्वात् स्वसंसृष्टं जगत् अप्यानन्दमयं कुर्वाणयोः ययोः शशिकिरणसारूप्यसरणिं चन्द्रबिम्बरुचिसादृश्यपद्धतिं यान्त्या गच्छन्त्या कान्त्या सुधामयेन किरणकदम्बकेन विधूतान्तर्ध्वान्ता निरस्तनिश्शेषहृदयमहान्धकारा जगती सर्वा त्रिलोकी चकोरीव विलसति—विशेषेणानन्दलसितं प्राप्नोति, किं बहुना जगज्जीवनं जगदानन्दनमपि तावदाभ्यामेव दम्पतीभ्यामुन्मीलयत इत्यवधारणीयम्॥ ३७॥

## गोपालसुन्दरी

क्रमप्राप्तनाभसरश्मिदेवदेव्यौ स्तौति—**विशुद्धाविति**-तेनाधिष्ठानभूते विशुद्धौ कण्ठस्थ-षोडशदलचक्रे स्फटिकवद् विशदं श्वेतं व्योमजनकं गगनकारणं शिवं (व्योमेश्वरनाथनामानं) देवीमपि व्योमेश्वर्यम्बां वन्दे, कीदृशीं? शिवेन समानं व्यसनं व्यापारः व्योमजननानुकूलो यस्यास्ताम् ययोः व्योमेश्वरव्योमेश्वर्योः आयान्त्या बहिर्गच्छन्त्या भासा जगती जगद्वर्तिजीव-सन्ततिः चकोरीव विलसति शोभते, कीदृशी? शशिकिरणेन सारूप्या समाना सरणिः सुषुम्णापद्धतिः यस्यां सा तथा, अत एव विधूतान्तर्ध्वान्ता निरस्तबाह्यव्यासङ्गतिमिरा इत्यर्थः। कण्ठे कमलकर्णिकायां व्योमेश्वरनाथश्रीपादुकां पूजयामि व्योमेश्वर्यम्बाश्रीपादुकां पूजयामि इति सम्पूज्य परितो द्वासप्ततिरश्मयः आनन्दनाथश्रीपादुकां पूजयामि अम्बाश्रीपादुकां पूजयामि इति तन्नाम्नामन्ते संयोज्य न्यस्याः पूज्याश्चेति क्रमः। **विष्णुपक्षेऽप्येवम्**॥ ३७॥

## आनन्दलहरीटीका

**विशुद्धाविति** । ते तवाधिष्ठानभूते विशुद्धिसंज्ञके कण्ठस्थितचक्रे शुद्धो निर्मलो यः स्फटिकः पाषाणविशेषः, तद्वद्विशदं शुद्धं व्योम्न आकाशस्य जनकः, 'तस्मादात्मन आकाशः संभूतः' इति श्रुतेः । तं शिवं, व्योमेश्वरीनाम्नीं देवीं अपि सेव इत्यनुषंगः । कीदृशीं, शिवेन समानं व्यसनं व्योमजनकत्वलक्षणव्यापारः विद्यते यस्यास्तां । व्यसनिनीमित्यत्र व्यवसितामिति पाठे बहुव्रीहिः । ययोः शिवशक्त्योः कान्त्या जगती जगद्गता जीवसन्ततिः । चकोरीव चन्द्ररश्मिप्रियपक्षिणीव विलसति, आनन्दं प्राप्नोति शोभते वा । कीदृशीं जगतीं, विधूतं अन्तर्मनसि ध्वान्तं तमो मिथ्याज्ञानं यस्याः सा तथा । चकोरीपक्षे ध्वान्तपदं चन्द्रिकाभावजन्यदुःखपरम् । कीदृश्या कान्त्या, शशिकिरणैश्चन्द्ररश्मिभिः सह, सारूप्यसरणिं सादृश्यरूपं पन्थानं, यान्त्या गच्छन्त्या, तत्तुल्ययेत्यर्थः । यथा चकोरी चन्द्रकिरणैर्विलसति तथा जगती तयोः किरणैरिति भावः । सरणिमित्यत्र सरणिरिति-पाठे त्वयमर्थः—यान्त्या गच्छन्त्या, बहिरिति शेषः, शशिकिरणैः सारूप्यं यस्याः सा तथा, तादृशी शरणिः सुषुम्नापद्धतिः यस्या जगत्याः सा, शशिकिरणसारूप्यसरणिः । यया कान्त्या सुषुम्ना चन्द्रिकासदृशी जाता सा सुतरां चन्द्रिकातुल्येति नोपमानासंगतिः ॥ ३७ ॥

**समुन्मीलत्संवित्कमलमकरन्दैकरसिकं**
**भजे हंसद्वन्द्वं किमपि महतां मानसचरम् ।**
**यदालापादष्टादशगुणितविद्यापरिणतिः**
**यदादत्ते[1] दोषाद्गुणमखिलमद्भ्यः[2] पय इव ॥ ३८ ॥**

ஸமுன்மீலத் ஸம்வித் கமல மகரந்தை கரஸிகம்,
1 1 1 1 3 1
பஜே ஹம்ஸத்வந்த்வம் கிமபி மஹதாம் மானஸசரம் |
4 3 3 1 1 1 1
யதாலாபா தஷ்டாதஶகுணிதவித்யாபரிணதி:
3 1 3 1 3 3 1 3 1 1
யதா தத்தே தோஷாத் குணமகில மத்ப்ய: பயஇவ ||
3 3 1 1 3 3 3 2 3 4 1

विकसित संवित्-कमल स्थित मकरंद पान से मत्त बने
संत जनों के मानस सरवर संचारण में व्यस्त बने
निज कल-कूंजन को अष्टादश विद्याओं में परिणत कर
पानी से दूध ज्यों दोणगण से सुगुणों को स्वीकृत कर
शोभित है जो हंस-मिथुन अव्यक्त भूरि महिमावाला,
करता हूँ उसको मैं नमन, विनीतकृपण लघुमतिवाला ! ॥

---

[1]. सदादत्ते. सदाऽऽदत्ते [2]. अमलमद्भ्यः

## लक्ष्मीधरा

**समुन्मीलदिति**—समुन्मीलत्संवित्कमलमकरन्दैकरसिकं समुन्मीलत् विकसत् संवित् ज्ञानं, तदेव कमलं, तत्र मकरन्दः पुष्परसः, स चासौ एकश्च, न च एकशब्दस्य पूर्वनिपातः, 'विशेषणं विशेष्येण बहुलम्' इति परनिपातात् । यद्वा एकश्चासौ रसिकश्चेति एकरसिकः, मकरन्देन एकरसिकः इति पश्चात् समासः, तं तथोक्तम् । परमहंसस्वरूपयोः शिवयोः हंसत्वारोपणं संविदः कमलत्वारोपणे निमित्तम् । अतः संविदः कमलत्वे सिद्धे एकदेशरूपेण मकरन्देन चर्व्यमाणतैकप्रमाणो रस आरोप्यते । अत एव मकरन्दैकशब्दस्य तृतीयासमासः । भजे सेवे । हंसद्वन्द्वं किमपि अनिर्वाच्यं इदन्तया निर्देष्टुं अशक्यं षड्विंशं तत्त्वं शिवशक्तिसंपुटितं, महतां योगीश्वराणां, मानसचरम् । अत्र मानसशब्देन मनसि मानससरस्त्वं आरोप्यते, मानससरसि हंसानां नित्यवासात् । यदालापात् यस्य हंसद्वन्द्वस्य आलापात्, अष्टादशगुणितविद्यापरिणतिः अष्टादशविद्याः आलापरूपेण परिणता इत्यर्थः । यत् हंसद्वन्द्वं, आदत्ते गृह्णाति । दोषात्—ल्यब्लोपे पञ्चमी, दोषं अवयुत्य गुणं—गुणशब्दो दोषाभावस्याप्युपलक्षकः, गुणवत् दोषाभावस्यापि ग्राह्यत्वात् । अखिलं समस्तं, अद्भ्यः उदकेभ्यः, पय इव दुग्धमिव ।

अत्रेत्थं पदयोजना—हे भगवति ! [1]समुन्मीलत्संवित्कमलमकरन्दैकरसिकं महतां मानसचरं किमपि हंसद्वन्द्वं भजे; यदालापात् अष्टादशगुणितविद्यापरिणतिः, यत् दोषात् अखिलं गुणं अद्भ्यः पय इव आदत्ते ।

अत्रेदमनुसन्धेयम्—संवित्कमलं अनाहतचक्रनामकमिति पूर्वमेवोक्तम् । उपासकाः [2]परमहंसमिथुनं संवित्कमले उपासते इति समयैकदेशिमतम् । अत एव महतां मानसचरमित्युक्तम् । भगवत्पादमतं तु—शिखिज्वालारूपः परमेश्वरः शिखिन्या स्वशक्त्या संवलितः अनाहतचक्रे दीपाङ्कुरवत् प्रतिभातीति । यथोक्तं भगवत्पादैः सुभगोदयव्याख्याने—

"शिखिज्वालारूपः समय इह सैवात्र समया ।
तयोस्सम्भेदो मे दिशतु हृदयाब्जैकनिलयः ॥" इति ।

एतदेव अस्माकमपि अभिमतम् ॥ ३८ ॥

## सौभाग्यवर्धनी

क्रमप्राप्तवायव्यरश्मिमुख्यदेवदेव्यावाह - **समुन्मीलदिति** । समुन्मीलत् संवित् सैव कमलमकरन्दः, अर्थात् हृदयकमलगतानुभवविशेषपुष्परसास्वादनपरमित्यर्थः । भजे हंसद्वन्द्वं हंसेश्वरहंसेश्वरीरूपं किमपि स्वानुभवैकसंवेद्यत्वादिदमित्थमिति निर्वक्तुमशक्यम् । महतां मानसचरम्; अपाकृतसांसारिक-

---

[1]. तवेत्यधिकः [2]. परमहंसाः हंसमिथुनम्.

सुखस्पृहाणां महाशयानां मानसचरम्। यदालापात् अष्टादशगुणितविद्यापरिणतिः; चत्वारो वेदाः, उपवेदाश्चत्वारः, षडङ्गानि, पुराणन्यायमीमांसाधर्मशास्त्राणि, एवमष्टादशानां विद्यानां परिणतिः। इयं योगशास्त्रे प्रक्रिया-सर्वेषां प्राणिनां हृदयकमलवर्ति हंसद्वयं शिवशक्तिरूपमस्ति। तदुक्तं तत्रैव योगानुशासने - "अनुपममनुभूतिस्वात्मसंवेद्यमाद्यं विततसकलविद्यालापमन्योन्यमुख्यम्। सकलनिगम सारं सोऽहमोङ्कारगम्यं हृदयकमलमध्ये हंसयुग्मं नमामि।" इति। तस्य हंसयुग्मस्य जाग्रत्स्वप्नसुषुप्त-यस्तिस्रोऽवस्थाः। तत्र जाग्रदवस्थायां यदा सत्वगुणाधिक्यं तदा आलापो भवति, वेदशास्त्रादिरूपः। देहिनां यदा रजोगुणः प्रभवति, तदा प्राणिनामाहारादिव्यवहारः। यदा तमः प्रभवति, तदा क्रोधनिद्राभयहिंसादिव्यवहारः। यदादत्ते दोषात् सच्चिदानन्दरूपस्य ब्रह्मणः देशकालादिपरिच्छिन्न-तारूपाद् गुणमखिलं मायाशबलिततया सुमुल्लसितदेशकालादिपरिच्छेददोषपरिहारेण शुद्धसंविन्मात्र निरतिशयानन्दरूपं गुणमादत्ते; अद्भ्यः पय इव यथा जलरूपं दोषं परित्यज्य सारभूतं क्षीरभागं हंसो यथादत्ते तथेति। एतेन हंसः सोहमिति हंसयुग्मं महावाक्यार्थबोधकं हंसेश्वरहंसेश्वरीरूपं भजे इति तात्पर्यार्थः। हंसेश्वर-हंसेश्वर्यौ मध्ये पूज्यौ ध्येयौ वा; पूर्वोक्तचतुःपञ्चाशद्वायव्यरश्मयः परितः पूज्याः, ध्येया वा॥ ३८॥

## अरुणामोदिनी

अथ अनाहतचक्राधिदेवते परमहंसनाथपरमहंसाम्बाख्ये स्तौति—**समुन्मीलदिति**। महतां; यमनियमाद्यष्टाङ्गसंपन्नयोगयुक्ततया महात्मनां योगीश्वराणां, मानसमन्तःकरणमेव मानसं सरः। "मानसं सरसि स्वान्ते" इत्यमरः। तत्र चरतीति तम्। अत एव सम्यगुन्मीलत् निरस्ततमःस्तोमतया विकासं प्रसादं च प्राप्नुवत् यत् संवित्कमलं हृदयमध्यवर्त्य(र्मना)नाहतनामकं द्वादशदलं पद्ममित्यर्थः। तत्र यो मकरन्दः तस्मिन्नेवैकरसिकं सस्वादं तत्र नित्यवास्तव्यमित्यर्थः। किमप्यनिर्वचनीयम्; हंसी च हंसश्च तौ, "पुमांस्त्रिया" इत्येकशेषः। तयोर्द्वन्द्वं मिथुनं परमहंसाम्बाहंसनाथरूपमित्यर्थः। सेवे सदा भजामि इत्यर्थः। सर्वेषां प्राणिनां हृदयकमले हंसेश्वरीहंसेश्वररूपं हंसद्वयमस्ति;

" अनुपममनुभूतिस्वात्मसंवेद्यमाद्यं
विततसकलविद्यालापमन्योन्यमुख्यम्।
सकलनिगमसारं सोऽहमाकारगम्यं
हृदयकमलमध्ये हंसयुग्मं नमामि॥ "

इति **योगात्**। हंसद्वयस्य जाग्रदाद्यास्त्रयोऽवस्थाः। जाग्रदवस्थायां यदा सत्वगुणाधिक्यं तदालापो भवति, स वेदशास्त्रादिरूपो योगिनाम्। यदा रजोगुणाधिक्यम्, तदा आहारादिव्यवहारः। यदा तमः प्रभवति, तदा क्रोधनिद्राभयहिंसादिव्यवहारः। यद्वा—हंसद्वन्द्वं जीवात्मपरमात्मरूपं वा हंसद्वन्द्वं

सेवे; "द्वा सुपर्णा" इत्यादि-श्रुतेः। अत्र यद्यपि "स्त्रीपुंसौ मिथुनं द्वन्द्वम्", इत्यमरः, तथापि "द्वन्द्वं रहस्य—" इति सूत्रे योगविभागकारणात् "प्रीत्या द्वन्द्वं बभूवतुः", इत्यादि महाकविप्रयोगदर्शनात् स्त्रीपुंसव्यतिरिक्तस्थलेऽपि तत्प्रयोगः साधुरेवेत्यवगन्तव्यम्। तयोः प्रभावमाह-यदिति। यस्य हंसद्वयस्य आलापात् भाषणात् अष्टाधिका दश अष्टादशेति गुणितानां आवृत्तानां विद्यानां शिक्षाकल्पव्याकरणनिरुक्तज्यौतिषच्छन्दोऋग्यजुःसामाथर्वण-पूर्वोत्तरमीमांसान्यायपुराणधर्मशास्त्रायुर्वेदधनुर्वेदगान्धर्वनीतिशास्त्ररूपाणां परिणतिः परिणामो जायत इति शेषः। हंसमिथुनस्वेच्छालाप एव अष्टादशविद्यापरिणाम इत्यर्थः। तथा च आहुः—

"पुंभावलीलाः पुरुषास्तु पञ्च यादृच्छिकं संलपितं त्रयी ते।
अम्ब त्वदंशोऽणुरथांशुमाली तवैव मन्दस्मितबिन्दुरिन्दुः॥"

इति। किं च यच्च हंसद्वन्द्वमखिलं समस्तं गुणं दोषात् पृथक्कृत्येति भावः। अद्भ्यो जलात् पृथक्कृत्य पयो दुग्धमिव आदत्ते स्वीकरोति। क्षीरनीरविवेचनं हंसस्य स्वाभाविकमिति भावः॥ ३८॥

## आनन्दगिरीया

अनाहतमुद्दिश्याह आह—**समुन्मीलदिति**। हंसेश्वरं हंसेश्वरीमाह। अनाहतचक्रे द्वादशदलकमलकर्णिकायां हंसद्वन्द्वं हंसेश्वरहंसेश्वर्यौ भजे सेवे। परितः पत्रदलेषु चतुःपञ्चाशन्मयूखा वायव्याः परिवारदेवतात्वेन पूज्याः। हंसयो र्द्वन्द्वं हंसद्वद्वं हंसमिथुनं, किमपि विशिष्याशक्यनिर्वचनं गुणगणालंकृतम्। किंविधं, महतां मानसचरं, महतां सकलमपि सांसारिकविषयसमूहं हेयपक्षे निःक्षिपतां महाशयानां मानस इव मानसे चरति गच्छति, भुंक्ते च तत्। पुनः किंलक्षणं, समुन्मीलत्संवित्कमलमकरन्दैकरसिकं, संविदेव कमलं संवित्कमलं, सम्यक् प्रकारेणोन्मीलत्करणकलापरूपवायुसंसर्गवशात, विकसत् यत् संवित्कमलं, तस्य मकरन्दः तज्जनितो य आनन्दस्तत्र रसिकं तदास्वादलंपटम्। यदालापात् कलकूजनात् अष्टादशविद्यानां वेदोपवेदाङ्गपुराणन्यायमीमांसाधर्मशास्त्राणां परिणतिरुत्पत्तिः यत्कलकूजनं सर्वविद्याकारेण परिणत इति। अष्टादशविद्यारूपो यदालाप इत्यर्थः। यदादत्ते दोषगुणरूपात् धर्माधर्मात्मकात्संसारात् विविच्य गुणधर्ममादत्ते। अद्भ्यः पय इव नीरात्क्षीरमिव। अथवा चराचरात्मकसंसारसरसि सकलप्राणिगणहृदयकमले शिवशक्तिस्वरूपं चिदानन्दाकारं हंसमिथुनमस्ति। तदुक्तं योगिनीचक्रे- "अनुनयमनुभूतिस्वात्मसंवेद्यमाद्यं विततसकलविद्यालोकमन्योन्यमुख्यम्। सकलनिगमसारं सोऽहमाकारगम्यं हृदयकमलमध्ये हंसयुग्मं नमामि" इति। तस्याप्यस्मदादीनामिवावस्थात्रयं जाग्रत्स्वप्नसुषुप्त्याख्यं, तत्र यदा सत्वगुणोद्रेको भवति, तदा जाग्रदवस्थोच्यते। तदा तदालापात् वेदशास्त्रसंहितादयो वाग्व्यापारवचनव्यवहारा देहिनां प्रादुर्भवन्ति। यदा रजोगुणोद्रेको भवति, तदा तयोः स्वप्नावस्था। तदा देहिनामन्नाद्याहारजलपानादयः सर्वेऽपि शारीरव्यवहाराः प्रादुर्भवन्ति

राजसाः । यदा तमोगुणोद्रेको भवति, तदा तयोः सुषुप्तिः, तदा क्रोधनिद्राभयाहङ्कारहिंसादयस्तामसा व्यवहाराः प्राणिनां आविर्भवन्ति । यदा तु, अवस्थात्रयानन्तरं तुरीया गुणातीतावस्था देशतः कालतः परिच्छेदलवलीकबलीकृतात्, मायापिशाचीसंवलनरूपात् दोषसाचिव्यात् अज्ञत्वाहंकर्तृत्वभोक्तृत्व-जीवत्वदुःखित्वादिदोषकरम्बितत्वात् सत्यानृतमिथुनीकरणकूटात्मकात् इषुकारन्यायेन दृग्दृश्यान्वयव्यति-रेकसाक्षिणी पुनः सिसृक्षाशक्तिस्त्वं शरदमलकलानिधानचन्द्रिकानिचयचारुतरया दृष्ट्या रजोगुणसमुल्ला-सनेन परमामृतमयमन्दाकिनीप्रवाहप्रोक्षणेन जगन्मण्डलं व्यपगतमूर्च्छनं कृत्वा पुनरुत्थापयसीति । अन्यस्तु कूटं वलयहपरतया च श्लोकव्याख्यानं कुर्वन् उपेक्षणीयः । अन्वयव्यतिरेकदुःखप्रेमास्पदान्व-यव्यतिरेकागमावपि तदवध्यत्वव्यतिरेकपर्यालोचनया च दोषगुणौ विविच्य दोषान् परित्यज्य नित्यनिरति-शयापरिच्छन्नानन्दादिगुणमादत्ते । तदा अहं ब्रह्मास्मि, सर्वं खल्विदं ब्रह्म, आत्मैवेदं सर्वं, सोऽहं हंस इत्येवमादयो व्यवहारा इत्यभिप्राय इत्याह । समुन्मीलत्संवित्कमलेतिपद्यस्य रहस्यार्थः । संवित् हंसस्वरूपं, कमल इ, मकरन्द रेफः, ए स्वरूपं यदालापात् फे अर्थात् अष्टादशगुणितविद्या-परिणतिरिति हंसग्रहणम् । हंसेश्वर हंसेश्वरी मन्त्रमाह—हंसद्वन्द्व कुब्जिकायै विच्चे इति पदद्वयम् । क्रमस्तु गुरुमुखादवगन्तव्यः ॥ ३८ ॥

## तात्पर्यदीपिनी

अथानाहतचक्रम् । **समुन्मीलदिति** । हे मातः, अहं किमपि अनिर्वचनीयं हंसद्वन्द्वं भजे । पार्वतीपरमेश्वरात्मकं हंसद्वन्द्वमिव । न हि मरालमिथुनं सरो विना संचरति । अत उक्तं, किंविधं हंसद्वन्द्वं, महतां योगिनां मानसचरं मानसमेव मानसं तत्र चरति तत्तथा । ननु हंसद्वन्द्वं पद्मरागपरं भवतीत्याह - समुन्मीलत्संवित्कमलमकरन्दैकरसिकं, समुन्मीलन्ती चासौ संविच्च सैव कमलमकरन्दः, तत्र रसिकम् । राजहंसमिथुनं तु गीर्वाणवाणीमेव वदति, अत्र किञ्चिदाधिक्यमाह - यदालापात् यस्य मिथुनस्य आलापात् उच्चरितशब्दात् अष्टादशगुणितविद्यापरिणतिः, अष्टादशसंख्यया गुणिता या विद्याः तासां परिणतिः परिणामो भवति । ताश्च विद्याः पुराणन्यायमीमांसेत्यादि चतुर्दश, आयुर्वेदो धनुर्वेदो गान्धर्वं चार्थशास्त्रकं चेति । यद्दोषादधिकं निर्मलं गुणमादत्ते, केभ्यः किमिव, अद्भ्यः पय इव, यथा हंसाः नीरक्षीरविवेचका भण्यन्ते तद्वत् । एवमनाहतचक्रं चतुरधिकपञ्चाशच्छक्तियुक्तं निरूपितं भवति ॥ ३८ ॥

## पदार्थचन्द्रिका

अथानाहतस्थौ भवानीशङ्करौ स्तौति—**समुन्मीलदिति** । तत् किमपि अनिर्वचनीयं निरुपममित्यर्थः, हंसद्वन्द्वं हंसमिथुनं भजे सेवे । हंसश्च हंसी च हंसाविति पूर्वमेकशेषं कृत्वा पश्चात्समासो द्रष्टव्यः । 'पुमान् स्त्रिया' इति हंसशब्दशेषः । प्रसिद्धहंसवैलक्षण्येन निरुपमत्वं

वक्तुं हंसद्वन्द्वं विशिनष्टि-महतां मानसचरम्। प्रसिद्धं हि हंसद्वन्द्वं प्रसिद्धमानससरसि चरति। इदं तु महतां सनकादीनां मानसे चरति इति तथा। मानसचरं इत्येतावत्येव वक्तव्ये महतामिति तु तत्प्रतीतिगोचरत्वाभिप्रायेण। पुनरपि वैलक्षण्येन निरुपमं हंसमेव वक्तुं विशिनष्टि। एकस्मिन् रसिकमेकरसिकं, संवित् कमलमिव संवित्कमलं, समुन्मीलच्च तत् संवित्कमलं च, तस्य मकरन्द इव ब्रह्मसुखं तेनैकरसिकम्। पुनरपि निरुपमत्वमेव वक्तुं विशिनष्टि-यदालापात् यदाभाषणात् अष्टादशसंख्यया गुणिताश्च ता विद्याश्च तासां परिणतिः। यदालाप एव अष्टादशविद्यारूपेण परिणमत इत्यर्थः। 'यस्य निश्वसितमि'ति श्रुतेः। अष्टादशशब्दो भावप्रधानो द्रष्टव्यः। 'गुण आमन्त्रण' इति धातुः क्तप्रत्ययान्तः गणितपर्यायः। सदा सर्वदा गुणे दोषे च स्थिते, दोषात् गुणमेवादत्ते गृह्णाति। अखिलं समग्रं, अमलमिति पाठे गुणविशेषणम्। दोषादिति पञ्चमी अपादाने। अथवा ल्यब्लोपे पञ्चमी वक्तव्येति। दोषं त्यक्त्वा गुणमादत्त इत्यर्थः। एतेन भक्तस्य गुणमेव गृह्णाति, दोषं नैवेति सूचितम्। एतत्तु प्रसिद्धमेव श्रीमहादेवे। यद्वा सदिति भिन्नं पदं, सद्रूपमबाधितम्। अतोऽपि प्रसिद्धात् हंसद्वन्द्वात् वैलक्षण्यम्। गुणदोषयोर्मध्ये गुणमात्रग्रहणे दृष्टान्तः—अद्भ्यो जलेभ्यः पयो दुग्धमिव। प्रसिद्धं हंसद्वन्द्वमित्यध्याहार्यम्। 'पुराणन्यायमीमांसाधर्मशास्त्रांगमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशेति, श्लोकोक्ताश्चतुर्दश, आयुर्वेदो धनुर्वेदो गान्धर्वं चार्थशास्त्रकमिति चतुष्टयं चेत्यष्टादश ॥ ३८ ॥

## डिण्डिमभाष्यम्

अथ प्रकृते श्लोकषट्के तृतीयेन च खगेश्वरभद्रादिचतुःपञ्चाशद्देवताधिष्ठतत्सङ्ख्या कलालङ्कृतवायुमयकमलकमनीयहृदयाधिष्ठानदेवते परमहंसेश्वरी परमहंसानन्दनाथदम्पती प्रस्तौति, हंसशब्दलक्षणेन भाविताश्चिन्मयपक्षिलीलामाचक्षाणो हंसकृत्यं कथयति-हे परमेश्वरि ! समुन्मीलत्संवित्कमलमकरन्दैकरसिकम्। संविद्रूपं कमलं संवित्कमलं तच्च सर्वदा स्फुरता सौभाग्येन उन्मीलत् प्रकाशमानम् तत्र यो मकरन्द आस्वादनीयः पूर्णाहम्भावरसः तत्रैकरसिकम् हंसस्य कमलमकरन्दपानं स्वभावः। महतां किमपि मानसचरं ब्रह्मविष्णुरुद्रादीनामेव हृदये समाधिकाले स्फुरद्रूपं महतां तु तदधः कक्षावर्तमानानां परिमितयोगिना किमप्येव मानसचरमल्पमेव चित्ते दर्शनसान्निध्यम्, अनेकसमाधिसमारभ्य यत्नपूर्वकमेव कदाचित् क्वचित्तेषामाविर्भावात्। हंसस्य मानससरोवरभरणं स्वभावः। एवमपूर्वहंसमिथुनं भजे चित्ते सदानुसन्दधे अनुसन्धानवेलायामत्र मन्त्रद्वयं—'हंसः सोहं स्वाहा', परमहंसनामपदं 'सोहं हंसः स्वाहा'। परमहंस्या वा पदम्, एतन्माहात्म्यद्वयम् अशेषविद्याकारणं इत्यागमप्रसिद्धिः। अत एव हृदयस्थाने सर्वासां विद्यानां धारणम्। एतेदेव उत्तरार्द्धपरार्धेन विशिनष्टि। यदालापात् ययोः परमहंसयोरालापात् स्वेच्छासम्भाषणात् अष्टादशगुणिते विद्यापरिणतिः।

अष्टादशप्रकारविधया गुणितानां विद्यानां चतुर्वेदषडङ्गमीमांसान्यायपुराणधर्मशास्त्र - आयुर्वेदगान्धर्वनीति-शास्त्रात्मिकानां विद्यानां रूपेण परिणतिः। परमहंसमिथुनस्वेच्छालाप एव सर्वविद्या इति भगवता शङ्कराचार्येण प्रत्यपादि। तथाहि - "पुम्भावलीला पुरुषायते यादृच्छिकं संल्पितं त्रयीयते। अम्ब त्वदंशोरणुरंशुमाली तवैव मन्दस्मितमिन्दुबिन्दुः।" इति हंसमिथुनस्य नानाकेलिकलापसौभाग्यं - स्वभावः, पुनश्च हंससाधर्म्यमाह - यत्परमहंसमिथुनं कर्तृदोषात् भूषणात् सकाशादखिलं गुणमेव अद्भ्यो जलसकाशात् तन्मिश्रितं पयो दुग्धमिव आदत्ते गृह्णाति। एतदुक्तं भवति। दोषकोटिसद्भावेऽपि सर्वदोषं तिरस्कृत्य गुणग्रामेणैव पुम्भक्तान् पूरयति परमभट्टारिका। तथोक्तं दुर्वाससा महामुनिभिः - "दुःखान्यपि सुखायन्ते विषमप्यमृतायते। ..............संसारो ललिताम्बामुपासितुः।" हंसस्य परस्परमिश्रितनीरक्षीरविवेचनं स्वभावः॥ ३८॥

## गोपालसुन्दरी

क्रमप्राप्तवायव्यरश्मिदेवदेव्यावाह—**समुन्मीलदिति**—समुन्मीलदतिप्रकाशमानायाः संविद् ब्रह्मज्ञानं तदेव यः कमलमकरन्दस्तद्रसिकं महतां योगिनां मानसमेव मानसं तत्र चरतीति तम् अत एव किमप्यनिर्वचनीयहंसद्वन्द्वं हंसेश्वरहंसेश्वरीरूपं भजते। 'हंसः सोऽहं स्वाहा हंसेश्वर-परमहंसनाथश्रीपादुकां पूजयामि, सोऽहं हंसः स्वाहा परमहंसहंसेश्वर्यम्बाश्रीपादुकां पूजयामि', इति तयोर्भजनमन्त्रः। 'हंस' इत्यक्षरद्वयमेव वा तन्मन्त्रः, यदालापाद् ययोरुच्चारणादष्टादश-गुणितानामष्टादशसङ्ख्याकानां विद्यानां वेदचतुष्टयोपवेदचतुष्टयषडङ्गपुराणन्यायमीमांसाधर्मशास्त्ररूपाणां परिणतिः, प्रकाशधर्मसाधर्म्यमाह - यद्धंसद्वन्द्वं दोषाद् दोषमध्याद् गुणममलमादत्ते अविद्यासम्पर्करूपं दोषं विनाश्य गुणमखण्डाद्वैतानन्दरूपतां व्यनक्ति इत्यर्थः। अद्भयो जलात् पयो दुग्धमिवेत्यर्थः। पूजाक्रमश्चोक्तरीत्यैव। **विष्णुपक्षे**ऽपि समानम्॥ ३८॥

## आनन्दलहरीटीका

**समुन्मीलदिति** - किमपि अनिर्वचनीयं, हंसद्वन्द्वं परहंसेश्वरीरूपं, हृदयस्थानाहतचक्रस्थं भजे। हंससाधारणानि विशेषणान्याह - समुन्मीलन्ती स्वप्रकाशा या संवित् तत्त्वज्ञानं, सैव कमलस्य मनोरूपस्य मकरन्दो रसः, तत्रैकरसिकं असाधारणरसोत्सुकं; हंसपक्षे समुन्मीलन्ती जायमाना संवित् सम्यक्त्वेन ज्ञानं अतीव मनोहरोऽयं इति बुद्धिः यत्र, तादृशो यः कमलमकरन्दः, तत्रैकरसिक-मित्यर्थः। महतां योगिनां मानसं मनः, तत्र चरतिज्ञानगोचरो भवति इति तथा तत्। पक्षान्तरे महतां ब्रह्मणां, गौरवे बहुवचनं, मानससरः तत्र चरति गच्छति भक्षयति वेति तथा। यस्य द्वन्द्वस्य, आलापान्नामोच्चारणात्, अष्टादशगुणितानां अष्टादशसंख्याकानां विद्यानां परिणतिः फलं ब्रह्मज्ञानरूपम्। दोषात्, दोषं विनाश्य ल्यब् लोपे पञ्चमी। गुणं ब्रह्मज्ञानं, अमलं निर्मलं, अखिलमिति पाठे समस्तं,

सांगमित्यर्थः । आदत्ते गृह्णाति, तद्गोचरीभवतीत्यर्थः । अद्भ्यो जलेभ्यो जलानि संत्यज्य इति यावत् । पञ्चमी पूर्ववत् । पयो दुग्धमिवेत्यर्थः । यद्वा दोषात्पापसमूहात् गुणं भजनं गृह्णाति, तदनुरूपमेव फलं ददातीत्यर्थः । हंसपक्षे, यत् हंसद्वन्द्वं आलापात् आलपं . -शब्दमतति गच्छति जानातीति .तथा L अत सातत्यगमने, क्विप्, सर्वे गत्यर्था ज्ञानार्था इति स्मरणात् । यत् हंसद्वन्द्वं अद्भ्यः पय आदत्ते । अष्टादशविद्यानां परिणतिः सम्यग् ज्ञानं दोषात् निषिद्धकर्मणः सकाशाद्गुणं धार्मिकत्वादिकमिवेति योजनीयम् । अष्टादशविद्याश्चोक्ता धर्मशास्त्रे "पुराणन्यायमीमांसाधर्मशास्त्रांगमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अर्थशास्त्रेण सहिता विद्याह्यष्टादशैव ते ।" इति ॥ ३८ ॥

**तव स्वाधिष्ठाने हुतवहमधिष्ठाय निरतं[1]**
**तमीडे संवर्तं जननि[2] महतीं तां च समयाम् ।**
**यदालोके लोकान् दहति महति क्रोधकलिते[3]**
**दयार्द्रा या दृष्टि[4]श्शिशिरमुपचारं रचयति[5] ॥ ३९ ॥**

தவ ஸ்வாதிஷ்டானே ஹுதவஹ மதிஷ்டாய நிரதம்
1 4 2 1 4 2 1
தமீடே ஸம்வர்தம் ஜனனி மஹதீம் தாம் ச ஸமயாம் |
3 1 1 1 1
யதா லோகே லோகான் தஹதி மஹதி க்ரோத கலிதே
3 1 1 3 1 1 1 4 1 1
தயார்த்ரா யா த்ருஷ்டி: ஶிஶிரமுபசாரம் ரசயதி ||
3 3 3 1 1 1 1 1

मां ! तेरे स्वाधिष्ठानस्थित प्रलयानल की शरण लिए
उस महती "समया" का चिंतन करता हूं मैं, वरण किए
तव करुणा का, जिस की रूष्ट-दृष्टि सृष्टि को भस्म करती,
सदयालोक उसी का फिर से जीवन देता, शंभुसती ! ॥

## लक्ष्मीधरा

तवेति ॥ तव भवत्याः, स्वाधिष्ठानचक्रे, हुतवहं अग्नितत्त्वं, अधिष्ठाय आश्रित्य, निरतं अनवरतं, तं प्रसिद्धं, ईडे स्तुवे, संवर्तं संवर्तनामकं अग्निं, जननि ! हे मातः ! महतीं महच्छब्दवाच्यां, तां

---

1. नियतम् 2. जननीं 3. कलिले 4. यद्दृष्टिः, 5. रचयसि

संवर्ताग्निरूपामित्यर्थः, समयाम्। यदालोके दर्शने, लोकान्, भूरादीन् दहति सति, महति क्रोधकलिते, दयार्द्रा कृपाविष्टा, या दृष्टिः आलोकः, शिशिरं शीतलं, उपचारं रचयति।

अत्रेत्थं पदयोजना—हे जननि! तव स्वाधिष्ठाने हुतवहं संवर्तमधिष्ठाय निरतं तं ईडे, समयां तां महतीं च ईडे। महति क्रोधकलिते यदालोके लोकान् दहति सति या दयार्द्रा दृष्टिः शिशिरमुपचारं रचयति सा त्वदीया दृष्टिरिति शेषः।

अत्रेदमनुसन्धेयम्—स्वाधिष्ठानं अग्नितत्त्वोत्पत्तिस्थानम्। तत्र उत्पन्नं अग्निं संवर्ताग्नितया आरोप्य तत्रैव महासंवर्ताग्निज्वालाकारशक्तिरूपतया अवस्थिता शक्तिः संभाव्या। ततः तयोः आलोकेन जगन्ति दग्धानि। तानि जगन्ति पुनः प्रसन्नायाः भगवत्या एव कृपारसपूरिता दृष्टिः मणिपूरचक्रप्रतिपादिता शिशिरोपचारं रचयतीति स्तुतिमात्रं, न वस्तुत इति ॥ ३९ ॥

## सौभाग्यवर्धनी

क्रमप्राप्तौ तैजसरश्मिमुख्यावाह—तवेति। तव स्वाधिष्ठाने; नाभिस्थदशदलपद्ममध्ये; हुतवहमधिष्ठाय निरतम्; वह्निरूपमाश्रित्य निरतं निरन्तरं प्रीतिमन्तम्, तम् ईडे स्तुवे, संवर्तम् संवर्तेश्वरम्। हे जननि! महतीं महाप्रकाशज्वालाविलासेन विश्वसंहारसमुत्सुकसंवर्तेश्वराविनाभूतां समयां; समयाभिधानां च ईडे। यदालोके लोकान् दहति महति क्रोधकलिते; रोषसमुद्धते सति दृष्टिः नेत्रंकरी शरीराकारविस्फुलिङ्गोद्गारि वह्निकरालं लोकान् दहति; महति कल्पावसानसमुज्जृम्भिते शक्तिपरतन्त्रे यस्य संवर्तेश्वरस्य आलोक इति संबन्धः। संजिहीर्षाशक्तिवशंवदसंवर्तेश्वरस्य महति क्रोधोन्मेषे तृतीयनयनोन्मेषेण संवर्तानलः सर्वान् लोकान् दहति। या पुनः दयार्द्रा दृष्टिः शिशिरमुपचारं रचयति; सिसृक्षाशक्त्या त्वया संचलितरजोगुणोद्बाधेन विश्वं शीतलं करोति। यथापूर्वं कल्पयतीति भावः। संवर्तेश्वरः समयाम्बा इति देवदेव्यौ मध्ये पूज्यौ, ध्येयौ वा द्विषष्टितैजसरश्मयः पूर्वोक्ताः परितः पूज्याः ध्येया वा ॥ ३९ ॥

## अरुणामोदिनी

अथ स्वाधिष्ठानचक्राधिदेवते संवर्तेश्वरसमयाम्बाख्ये स्तौति - **तवेति**। हे जननि! मातर्देवि। तव; भवत्याः, संबन्धिनि स्वाधिष्ठाने चक्रे, हुतवहमग्नितत्त्वमधिष्ठाय निरतमासक्तं स्थितमित्यर्थः। तं प्रसिद्धं संवर्तं सकलप्रपञ्च-दाहकत्वात् संवर्तमानं देवं, संवर्तेश्वरमित्यर्थः। तां प्रसिद्धां समयां संवर्ताग्निदग्धस्य जगतः पुनरुत्पादयित्रीत्वात् समयाभिधानां महतीं देवीं च, समयाम्बामित्यर्थः। समया व्याख्यायते। ईडे स्तुवे। तयोः प्रभावमाह—यदिति। क्रोधकलिते, क्रोधेन कलिते संयुक्ते-प्रपञ्चभस्मीकरणोद्युक्त इत्यर्थः। यस्य संवर्तेश्वरस्यालोके तेजसि लोकान् भूरादीन् महःपर्यन्तान् लोकान् दहति भस्मीकुर्वति सति, परदुःखप्रहाणेच्छा दया, तया आर्द्रा द्रवीभूता

करुणामयीत्यर्थः। यस्याः देव्याः समयाम्बायाः दृष्टिरवलोकनं शिशिरं शीतलमुपचारं दाहितस्य जगतः पुनरुज्जीवनरूपं रचयति करोति; दग्धं जगत् दयारससंवलितावलोकनेन पुनरुद्बोधयति इत्यर्थः। स्वाधिष्ठानाग्निसंवर्तेश्वरललाटाग्निनिर्दग्धानि जगन्ति, तत्र वर्तमाना समयाम्बाख्या देवी दयारससंपृक्त-कटाक्षनिरीक्षणेन पुनरुज्जीवयतीत्यागमः॥ ३९॥

## आनन्दगिरीया

**तव स्वाधिष्ठान** इति। दशदलकमलकर्णिकायां संवर्तेश्वरं संवर्तेश्वरीसमयां च पूजयेत्। परितो दलेषु द्वाषष्टिपरिवारदेवतामयूखत्वेन पूज्याः। स्वाधिष्ठाने स्वाधिष्ठानाख्यचक्रे तत्रस्थकमल-कर्णिकायां संवर्तमीडे। संवर्तं प्रलयकर्तारं, किंलक्षणं, हुतवहमधिष्ठाय निरतं, स्वाधिष्ठाने वह्निरूपमाश्रित्य नितरां रतं प्रीतिं कुर्वाणम्। अपरां संवर्तीयां महतीं महाप्रकाशज्वालाजाल-जटिलतया जगत्संहारसमुत्सुकां संहारेश्वराविनाभूतां समयाभिधानां च देवीमीडे। तं कं, क्रोधकलिले यदालोके यस्य समयांबाशक्तिपरतन्त्रस्यालोके, सञ्जिहीर्षासमुद्भासितक्रोधकालकूटमलिने महाप्रलयकालसमुज्जृंभिते ललाटपट्टपातनप्रकटितमहाप्रलयकालानलोद्दीपिते तृतीयलोचनप्रेक्षणे लोकान्द-हति सति, हे जननि हे मातः भगवति, भुवनेश्वरि, दयार्द्रायाः करुणाकादंबिनीमुक्तसुधारसा च्छाया तव दृष्टिः शारदशशिमण्डलोद्भेदस्रवत्पीयूषपल्लवस्वरूपा शिशिरमुपचारं रचयति॥ ३९॥

## तात्पर्यदीपिनी

स्वाधिष्ठानं निरूपयति **तवेति**। हे जननि, स्वाधिष्ठाने चक्रे, स्वया अधिष्ठीयते तत्स्वाधिष्ठानं, तस्मिन् अहं संवर्तं, तां महतीं समयां च ईडे स्तौमि। अत्र समयासंवर्तयोरधिष्ठाने, तां कां तं च कं, तदेवाह-यदालोके लोकान्दहति सति, या तव दया कृपापूर्णा दृष्टिः शिशिरमुपचारं रचयति। ययोरालोकः, तस्मिन्, शिशिरं शीतलं यतो दृक् दयार्द्रा इति। किंकृत्य, निरतं अनवरतं हुतवहमधिष्ठाय, कथंभूते, यदालोके महति श्रेष्ठे, पुनः किंविधे, क्रोधकलिले क्रोधेन कलिलः कलुषः तस्मिन्। एवं द्वाषष्टिशक्तियुक्तं स्वाधिष्ठानं निरूपितं भवति॥ ३९॥

## पदार्थचन्द्रिका

अथोर्ध्वक्रमेण चतुर्थचक्रस्थमग्निरूपं महादेवं कालशक्तिरूपां भवानीं च स्तौति· **तव स्वाधिष्ठान** इति। हे जननि! तं श्रीरुद्रं तां प्रसिद्धां समयां कालशक्तिं चाहमीडे स्तौमि। ईड स्तुतौ। तं कमित्यपेक्षायामाह-यदालोके, यस्य श्रीरुद्रस्य आलोके, आलोकयत्यनेनेत्यालोकः, तस्मिन् अग्निनेत्रे दहति सति, दयार्द्रायास्तव दृष्टिः शिशिरमुपचारं शीतलोपचारं रचयति। अग्निं विशिनष्टि-महति त्रैलोक्यव्यापिनि, क्रोधकलिले क्रोधयुक्ते। तच्छब्दोक्तं रुद्रं विशिनष्टि-संवर्तं, संवर्तं करोति संवर्तयति इति संवर्तः तम्। पुनर्विशिनष्टि-तव स्वाधिष्ठाने चक्रे हुतवहमधिष्ठाय अग्निरूपमाश्रित्य कृत्वेत्यर्थः।

नियतं नियमेन स्थितम्। समयां विशिनष्टि-महतीं, महत्त्वं चास्याः सकलशक्त्युपमर्दकत्वात्। जननीमिति पाठे तां प्रसिद्धजननीं जगन्मातरं, त्वां ईड इति योज्यम्। तत्र सं समीचीनोऽयः शुभावहो विधिः यस्यास्तामिति व्याख्येयम्। 'अयः शुभावहो विधि'रित्यमरः। शुभावहविधिश्च दया-दृष्टिरित्यनेनैव दर्शितः। यद्वा अस्मिन् श्लोके भवानीशंकरदृष्टी स्तूयेते। अस्मिन्पक्षे-हे जननि! तं हुतवहं अग्निरूपां महादेवदृष्टिं च तां महतीं तव दृष्टिमीडे इति संबन्धः। तं कं तां च कामित्यपेक्षायामाह-यदालोके यस्या दयादृष्टेः आलोके अवलोकने लोकान् दहति सति तव या दयार्द्रा दृष्टिः शिशिरमुपचारं रचयति। अन्यत्समानम्। दृष्टिः स्त्रियां बुद्धौ लोचने दर्शनेऽपि चेति मेदिनीकारः॥ ३९॥

## डिण्डिमभाष्यम्

अथ षट्सु चतुर्थेन श्लोकेन कौमार्यादिविशिष्टदेवताविहारस्थानं तत्सङ्ख्यपत्रोपेतवह्निकमल-युक्तनाभिस्थचक्राधिष्ठानदेवते समयाम्बासंवर्तौ दम्पती प्रस्तौति-तवेत्यादिना। हे परमेश्वरि। निरन्तर-ध्यानवशात् भक्तशरीरमधिष्ठन्यास्तव स्वाधिष्ठाने स्थाने वर्तमानं हुतवहं अग्निचक्रम् अधिष्ठाय सततं विराजमानं संवर्तं सम्यक्तया वर्तते इति स्वाधिष्ठाने स्वज्वालया संहृतं विश्वं पचति संवर्तः। सम्पूर्वाद् वृतु वर्तन इति धातोः करणाधिकरणयोश्चेति क्तः संवर्त इत्थंभूतं संवर्तम्। तां च जननीं त्रैलोक्यसवित्रीं संवर्तः संहरति विश्वं समयां वा सृजतीति सृष्टिक्रियासद्भावात् त्रिभुवनप्रसवकर्त्रीं तां चाचिन्त्यपराक्रमां समयां देवीं च ईडे। ईड स्तुताविति धातोरुत्तमपुरुषैकवचने लिटि रूपं, ईडे, ईड्वहे ईड्महे इति। तं च तां चेति उभयोरेव लोकातिशायिस्वभावत्वं वर्णयति। तच्छब्दस्तु प्रकृतपरामर्शी स्वार्थमेवाचष्टे अप्रकृतपरामर्शी तु लोकातिशायि माहात्म्यं सूचयति। उक्तमभियुक्तैः—उत्पत्तिः जगदग्निः स भगवान् देवः पिनाकी विरुद्धकर्मकरणाज्जगत्पालनसामर्थ्यं तया सृष्टं जगत्संहरति तत्संहृतं जगत्सा सृजति इत्यविरोधेऽपि तयोर्जगदुपकार एव, एवं प्रकारेण तयोरसाधारणकर्म उत्तरार्धेन व्याचष्टे—यदालोके यस्य संवर्तभैरवस्यालोके तीक्ष्णतरललाटलोचनप्रेक्षणे लोकान् अतलवितलसुतलरसातलतलातलमहातल-पातालाख्यान् सप्तलोकान्, भूर्भुवःस्वर्महर्जनस्तपःसत्याख्यान् सप्तोर्ध्वलोकान् मिलित्वा चतुर्दश-सङ्ख्यातान् दहति सति। पुनः किं भूतेऽमहति दाह्यातिरिक्तदहनमहाशक्तिक्रोधकलिके सञ्जिहीर्षा-लक्षणेन कोपेन समाविष्टे दयार्द्रा करुणा संपूर्णा या दृष्टिः यस्याः सृष्टिसमयाम्बायाः सुधावर्षिणी लोचन-शीतया शिशिरमुपचारं रचयति शैत्यमुद्रासम्पादनेन पुनरुज्जीवं करोति। अत्यन्ततप्तो हि मुमूर्षुः शिशिरोपाचारमहिम्ना सञ्जातप्राणो भवतीति भावः॥ ३९॥

## गोपालसुन्दरी

क्रमप्राप्ततैजसमुख्यदेवदेव्यौ प्राह-तव स्वाधिष्ठाने इति—हे जननि! तव त्वदधिष्ठिते

स्वाधिष्ठाने नाभिचक्रे दशदले शाम्भवक्रमे स्वाधिष्ठानमणिपूरयोः स्थलवैपरीत्यं हुतवहमग्निमधिष्ठाय निरतं स्थितं संवर्तं संवर्तेश्वरनामानं तं प्रसिद्धं तां प्रसिद्धां महतीमतिशयितां समयां महासमया- संज्ञिकाम् ईडे स्तौमि, यदालोके यस्य संवर्तेश्वरस्य महति आलोके तीक्ष्णतरललाटलोचनानले क्रोधकलिले सञ्जिहीर्षालक्षणकोपेन समाविष्टे लोकान् चतुर्दश भुवनानि दहति सति दयार्द्रा करुणा- कोमला सिसृक्षाऽऽविष्टेति यावत् ते तव समायां वा रूपा या दृष्टिः शिशिरमुपचारं शैत्यसम्पादनेन पुनरुज्जीवनं करोतीत्यर्थः । उपासनारीतिश्चोक्तैव ।

**विष्णुपक्षे**—जननमस्या अस्तीति जन्मशाली जीवः, तेषु महतीमतिशयिता जननि महती- मिति, समया विशेषेणं जननीवाचरतीति जननी विष्णुस्तस्य संबोधनं वा, यदालोके ययोः प्रेक्षणे लोकान् दहति सति, ते तव विष्णोर्दयार्द्रा दृष्टिः शिशिरमुपचारं रचयति इत्यर्थः ॥ ३९ ॥

## आनन्दलहरीटीका

**तवेति ।** हे जननि तव संबन्धिनि स्वाधिष्ठाने नाभिचक्रे, शैवकल्ये त्रिचक्रयोनिमध्यपतितं हुतवहमग्निं अधिष्ठायाश्रित्य, तच्चक्रस्य तैजसत्वात्, निरतं स्थितं तं प्रसिद्धं संवर्तेश्वरनामानं तां मायां महासमयानाम्नीं देवीं च ईडे स्तौमि । यस्येश्वरस्य आलोके लोचनाग्नौ लोकान् भुवनानि दहति सति दयया सिसृक्षाकालीन कृपया आर्द्रा स्निग्धा ते तव दृष्टिः शिशिरं शीतलमुपचारं प्रतिक्रियां रचयति । पुनरुज्जीवनं करोतीत्यर्थः । आलोके कीदृशे, महति निरतिशये क्रोधेन संजिहीर्षाकालीनेन कलिले व्याप्ते सहकृते इति यावत् ।

**तटित्त्वन्तं शक्त्या तिमिरपरिपन्थिस्फुरणया**
**स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषम् ।**
**[1]तव श्यामं मेघं कमपि[2] मणिपूरैकशरणं**
**निषेवे वर्षन्तं [3]हरमिहिरतप्तं त्रिभुवनम् ॥ ४० ॥**

தடித்வந்தம் ஶக்த்யா திமிரபரிபந்தி ஸ்புரணயா
1 1 1 1 1 1 1 1 2 2
ஸ்புரன் நாநாரத்நாபரண பரிணத்தேந்த்ர தனுஷம்,
2 1 4 1 3 4 3 4
தவ ஶ்யாமம் மேகம் கமபி மணிபூரைக ஶரணம்
1 4 1 1 1 1
நிஷேவே வர்ஷந்தம் ஹரமிஹிரதப்தம் த்ரிபுவனம்.
1 1 1 1 4

---

1. तमःश्यामं 2. जननि 3. स्मरमिहिर

भगवति! मणिपूरचक्र को तव, एकमात्र निलय बना कर
तिमिर शत्रुनाशक स्थिरसौदामिनीतेजसंयुत भास्वर,
नानारत्नाभरणकांति से इन्द्रधनुष सी छवि पाकर,
हरमिहिरानल से तापित तीनों भुवनों का सिंचन कर -- - -
सुधा-प्रवर्षण करनेवाले किसी श्याम घन का अद्भुत
संसेवन करता हूँ, सदाशिवाख्य अनिर्वचनीय महत्! ॥

## लक्ष्मीधरा

**तडित्वन्तमिति।** **तटित्वन्तं** तटित् सौदामिनी सा अस्यास्तीति तटित्वान् तं, शक्त्या तटिद्रूपया, तिमिरपरिपन्थिस्फुरणया तिमिरस्य मणिपूरगतस्य—मणिपूरचक्रं तामिस्रलोक इति प्रागुक्तः—तस्य परिपन्थि विरोधि स्फुरणं यस्यास्सा। अनेन स्थिरसौदामिनीत्वं भगवत्याः सूचितम्। इदमपि मेघस्य प्रावृषेण्यत्वसूचकं विशेषणम्। स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषं स्फुरन्ति च तानि रत्नानि नानाविधानि तैः निर्मितानि आभरणानि भूषणानि तैः परिणद्धं निर्मितं इन्द्रधनुः यस्य तम्। 'वा संज्ञायाम्' इति नानङ्। नानाविधरत्नकान्तिसंवलिता स्थिरसौदामिनी इन्द्रचापभ्रान्तिं जनयतीति प्रावृषेण्यत्वे हेत्वन्तरम्। यथोक्तं सिद्धघुटिकायाम्—'मणिपूरैकवसतिः प्रावृषेण्यस्सदाशिवः। अम्बुदात्मतया भाति स्थिरसौदामिनी शिवा ॥' इति ॥ तव भवत्याः, श्यामं श्यामवर्णं, मेघं मेघात्मना अवस्थितं पशुपतिं, कमपि इयत्तया निर्देष्टुमशक्यं, मणिपूरैकशरणं मणिपूरमेव एकं शरणं गृहं यस्य तम्। मणिशब्देन मणिधनुरुच्यते, मणिधनुस्स्वरूपत्वात् भगवत्याः; तया पूर्यते शरणं मणिपूरमिति रहस्यम्। निषेवे नितरां सेवे। वर्षन्तं वृष्टिं कुर्वन्तं हरमिहिरतप्तं हर एव मिहिरः सूर्यः महासंवर्ताग्निरिति यावत्, तेन तप्तं दग्धं त्रिभुवनम्।

अत्रेत्थं पदयोजना—हे भगवति! तव मणिपूरैकशरणं तिमिरपरिपन्थिस्फुरणया शक्त्या तटित्वन्तं स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषं श्यामं हरमिहिरतप्तं त्रिभुवनं वर्षन्तं कमपि मेघं निषेवे।

अत्रेदमनुसन्धेयम्—मणिपूरस्थाने जलतत्त्वं[1] उत्पन्नमिति प्राक् प्रतिपादितम्। तत्प्रकारः—सूर्यकिरणा एव अग्निसम्भिन्नाः मेघत्वमापन्नाः जलरूपेणेति मणिपूरस्य आधारस्वाधिष्ठानयोर्मध्ये निवेशः। अनाहतोपरिस्थितसूर्यकिरणाः स्वाधिष्ठानाग्निना संवलिताः सन्तः मणिपूरं प्रविश्य जलत्वमापन्नाः तेन जलेन स्वाधिष्ठानाग्निना दग्धं जगत् आप्लावयन्तीति आगमरहस्यम्। अत्र 'स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषम्' इत्यनेन मौर्वीरहितं धनुरित्याहुः आगमविदः। तच्च श्रूयते अरुणोपनिषदि-

[1] मुख्यमुत्पन्नमिति.

तदिन्द्रधनुरित्यज्यम् । अभ्रवर्णेषु चक्षते ।
एतदेव शंयोर्बार्हस्पत्यस्य । एतद्रुद्रस्य धनुः ।*

इति । अस्यार्थः—रुद्रस्य मेघात्मकस्य धनुः अज्यं ज्यया मौर्व्या रहितमिति । अवशिष्टानि श्रुतिस्थपदानि सुभगोदयव्याख्याने व्याख्यातानि । एतत्सर्वं अरुणोपनिषदि 'योऽपां पुष्पम्' †इत्यनुवाके 'योऽपाम्' इत्यारभ्य 'इमे वै लोका अप्सु प्रतिष्ठिताः' इत्यन्तेन प्रतिपादितम् । उदकात् चन्द्रोत्पत्तिः सूर्योत्पत्तिः अग्न्युत्पत्तिश्च दिवसानां चन्द्रकलात्मकानां तदंशानां नक्षत्राणां च उत्पत्तिः प्रतिपादिता । तदनन्तरं सम्मतित्वेन ऋगप्युक्ता—

तदेषाऽभ्युक्ता । अपाꣳ रसमुदयꣳ सन् । सूर्ये शुक्रꣳसमाभृतम् ।
अपाꣳ रसस्य यो रसः । तं वो गृह्णाम्युत्तमम्‡ । इति ।

ऋचोऽयमर्थः—अपां रसं चन्द्रं उदयंसन्, योगीश्वराः प्राप्नुवन्नित्यर्थः । सूर्ये सूर्यमण्डले शुक्रं अमृतं, समाभृतं सम्यक् आसमन्तात्पूरितम् । चन्द्रमण्डलगलत्पीयूषधाराभिरेव सूर्यस्य निर्वाह इत्यर्थः । अपां रसस्य पुष्परूपस्य चन्द्रमसः, यो रसः बैन्दवस्थानस्थितः[1] नित्यकलात्मकः, तं नित्यकलात्मकं रसं वः युष्मत्सकाशात् । उदकानां प्रस्तुतत्वात् वः इति उदकानामाभिमुख्यं, मणिपूरे उदकमुत्पन्नमिति । ता आपः स्वाधिष्ठानाग्नेः उत्पादिकाः, आज्ञाचक्रस्थितस्य चन्द्रस्य उत्पादिकाः, अनाहतचक्रोपरिस्थितसूर्यस्यापि उत्पादिकाः । अत उक्तं 'तं वो गृह्णाम्युत्तमम्' इति । तं उत्तमं चन्द्रं सहस्रकमलस्थितं वः सकाशं जानामीत्यर्थः ॥

अस्मिन्नेव अनुवाके—

योऽप्सु नावं प्रतिष्ठितां वेद । प्रत्येव तिष्ठति ।†

इति श्रुतम् । अप्सु उदकतत्त्वात्मके मणिपूरे प्रतिष्ठितां नावं श्रीचक्रात्मिकाम्[2] ॥

तथा च श्रुत्यन्तरम्—

सुत्रामाणं पृथिवीं द्यामनेहसꣳ सुशर्माणमदितिꣳ सुप्रणीतिम् ।
दैवीं नावꣳस्वरित्रामनागसमस्रवन्तीमारुहेमा स्वस्तये‡ ॥

अस्या ऋचोऽयमर्थः—षुञ् अभिषवे । सुनोतीति सुत्रामा अग्निः अग्नितत्त्वं स्वाधिष्ठानगतमित्यर्थः, पृथिवीं मूलाधारस्थितां, द्यां गगनं विशुद्धि[3]स्थितां, अनेहसं कालं मनस्तत्त्वं आज्ञाचक्रस्थितं, सुशर्माणं वायुतत्त्वं, अदितिं अदित्यात्मकं जलतत्त्वं, सुप्रणीतिं सुमार्गे मोक्षे प्रणीतिं प्रकर्षेण नयन्तीम् ।

---

* तै. आ. १–५. † तै. आ. १=२२. ‡ तै. सं. १-५-११.[1] * तै. आ. १–२२.

[1] इत्युक्तकलात्मतया तं वो गृह्णाम्युत्तममित्यधिकम्. [2] वेद. [3] स्थानस्थितां

दैवीं देव्या इमां चक्रविद्यामित्यर्थः, नावं नौकां संसारसागरतरणोपायभूतां, स्वरित्रां सुदृढानि अरित्राणि लाङ्गलानि यस्यास्सा तां, दुष्कर्मजञ्झापवनैः अचलामिति यावत्। अनागसं अस्रवन्तीं[1] स्वयं दृढां आरुहेम तत्प्रवणा भवेम तदेकनिरताः तदुपासनपराः स्यामेत्यर्थः। स्वस्तये मोक्षाय, निरतिशय-सुखावाप्तय इति। अवशिष्टं श्रुतिजातं सुभगोदयव्याख्यानावसरे सम्यक् निरूपितमस्माभिः ॥ ४० ॥

## सौभाग्यवर्धनी

द्विषष्टितैजसरश्मयः पूर्वमुक्ताः परितः क्रमप्राप्ताप्यरश्मिमुख्यदेवदेव्यावाह—तटित्वन्तं शक्त्या तिमिरपरिवृत्तिस्फुरणया ; तिमिरस्य परितो वृत्तिं, तिमिरं सर्वतः संवेष्ट्य वृत्तिरित्यर्थः। तद्वत् स्फुरणं यस्याः सा ; एतादृश्या शक्त्या तटित्वन्तं स्फुरन्नानारत्नाभरणैः परिणद्धेन्द्रधनुषम्, शिवशक्त्योः हीरकपुष्परागपद्मरागादिविविधाभरणैः व्यक्तीकृतेन्द्रचापमित्यर्थः। तव मणिपूरैकशरणम्, षड्दलमणि-पूरचक्रमध्यनिलयं, श्यामं हरमिहिरतप्तं त्रिभुवनम् सूर्यरूपरुद्रकृतसंतापविधुरं जगत्त्रयं, वर्षन्तं मेघं मेघेश्वरं सौदामिन्यम्बया शक्त्या सहितं निषेवे। मेघेश्वरः सौदामिन्यम्बा च मध्ये पूज्यौ, ध्येयौ वा ; पूर्वोक्ताः द्विपञ्चाशत्संख्याकाः आप्यमरीचयः परितः पूज्याः ध्येया वा ॥ ४० ॥

## अरुणामोदिनी

अथ मणिपूरचक्रस्थिते मेघेश्वरसौदामिन्यम्बाख्ये देवते स्तौति-तटित्वन्तमिति-। तिमिरस्य मणिपूरचक्रस्थितस्य तमसः परिपन्थि निरासकं स्फुरणं स्थिरप्रकाशो यस्यास्तया। मणिपूरस्य मिश्रलोकत्वादिति भावः। यदाहुः-"आधारस्थानमन्धतामिस्रम् ; स्वाधिष्ठानं सूर्यकिरणसंपर्कान्मि-श्रकम् ; मणिपूरस्याग्निस्थानत्वेऽपि तत्र स्थितजले सूर्यकिरणप्रतिबिम्बान्मिश्रलोकः। अनाहतं ज्योतिर्लोकः ; एवमनाहतपर्यन्तं ज्योतिस्तमोन्मिश्रो लोकः। विशुद्धिचक्रं चान्द्रो लोकः ; आज्ञाचक्रं तु चन्द्रस्थानत्वात् सुधालोकः। सहस्रकमलं नित्यज्योत्स्नामयो लोकः" इत्यादि। शक्त्या, सौदामिन्याख्यया देव्या। तटितो विद्युतोऽस्य सन्तीति तटित्वान्, "तंत्यघ" इति घत्वम्। तटिद्रूपया देव्या संयुत-मित्यर्थः। नानारत्नघटितानि च तानि आभरणानि च नानारत्नाभरणानि ; स्फुरन्ति च तानि नानारत्ना-भरणानि च स्फुरन्नानारत्नाभरणानि ; ध्यानवेलायां कुण्डलिनीं मणिपूरमानीय तत्र तत्समर्पितविविध-भूषणानीत्यर्थः। तैः परिणद्धं निर्मितमिन्द्रधनुर्यस्मिंस्तम् ; मणिपूरनिवासिन्यै देव्यै साधकसमर्पित-विविधरत्नखचितभूषणकान्तिभिः इन्द्रधनुर्नहनभ्रान्तिं जनयतीत्यर्थः। एतेनेशस्य प्रावृषेण्यता सूचिता। तदुक्तम्- "मणिपूरैकवसतिः प्रावृषेण्यः सदाशिवः। अम्बुदात्मतया भाति स्थिरसौदामिनी शिवा ॥ कबलीकृतनिःशेषतत्त्वग्रामस्वरूपिणी।" इति। अस्य धनुषः प्रतिपादनम् ; "एतद्रुद्रस्य धनुः" इत्यारण्यके प्रसिद्धं लक्ष्मीधरे द्रष्टव्यम्। मणिपूरैक (पूरमेव एकं)शरणं निवासगृहं यस्य तम्।

---

[1] अस्रवन्तीं अरम्भाम्.

हरमिहिराभ्यां स्वाधिष्ठानानाहतचक्रोपरिस्थिताभ्याममग्निसूर्याभ्यां तप्तं प्रदाहितं त्रिभुवनं लोकत्रयं वर्षन्तं जलैराप्लावयन्तं तमस्तिमिरमिव श्यामं नीलं कमपि मेघम्; तद्रूपापन्नमेघेश्वरं इत्यर्थः। निषेवे नितरां सेवे भजामि। मेघशब्दवाच्यममृतेश्वराख्यं दंपतीयुग्ममनवरतं भजामीत्यर्थः। अनाहतचक्रोपरिस्थिताः सूर्यकिरणाः अधःप्रसृता स्वाधिष्ठानाग्निना संवलिताः मणिपूरं प्रविश्य जलतत्त्वमापन्नाः स्वाधिष्ठानाग्निनिर्दग्धं जगदाप्लावयन्तीत्यागमः। श्रुतिश्च "याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति पर्जन्येनौषधिवनस्पतयः प्रजायन्ते" इत्यादि। स्मृतिश्च—

"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥" इति॥ ४०॥

## आनन्दगिरीया

**तडिद्वन्तमिति**। मणिपूरकचक्रे षड्दलकमलकर्णिकायां मेघेश्वरं शिवं सेवे। स्थानमाह—मणिपूरैकशरणं मणिपूरकचक्रस्थितषड्दलकमलकर्णिकाया मध्ये। मेघत्वं समर्थयति–तमःश्यामं, तेन सजलत्वम्। पुनः किंभूतं, मणीनां रत्नानां पूर आकरः समुद्रः, स एकः शरणं यस्य, जीवनपूरकत्वादित्यर्थः। पुनः किंलक्षणं, शक्त्या त्वदंशभूतया सौदामिन्यम्बया तडिद्वन्तं विद्युद्विराजितम्। शक्तेर्विद्युत्साधर्म्यमाह—तिमिरपरिवृत्तिस्फुरणया तिमिरस्य मेघेश्वरस्य परितः सर्वतः, वृत्तं मण्डलाकारेण परिखाकारेण वेष्टनं तद्वत्स्फुरणं यस्याः सा, यदा हि आकाशे विद्युत् स्फुरणं करोति, तदा वलयाकारेण मेघमण्डलं संवेष्ट्य स्फुरति। अत्राभूतोपमा व्यङ्ग्यम्। यथा तिमिरमण्डलं सर्वतो वेष्टयित्वा विद्युत् वलयाकारेण तिष्ठति तथा, तेनायं सशक्तिको मेघेश्वर उपमीयते। अथवा तिमीन् राति रक्षति इति तिमिरं जलं, तस्य परिवृत्तिर्भ्रमणं, तद्वत्स्फुरणं यस्याः तया। मण्डल्याकारेण स्फुरतीत्यर्थः। अत्र तिमिरपरिपन्थिस्फुरणयेति पाठो यदा तदा सुगममेव। परं तु तिमिरोपमेयस्य मेघेश्वरस्य स्वरूपाभावप्रसंगश्चिन्त्यः। पुनः किंलक्षणं, स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषं, स्फुरन्ति यत्र नानारत्नानि, तान्याभरणानि मुकुटकुण्डलमुद्रिकाकाञ्चीकलापकेयूरहारकंकणादीनि तत्प्रभाभिः परिणद्धं प्रारब्धमिन्द्रधनुः यस्मिंस्तं, पुनः किंलक्षणं हरमिहिरतप्तं त्रिभुवनं वर्षन्तं, हरलक्षणो यः सूर्यः तेन तप्तं आकृष्टरसं यत्त्रिभुवनं तदमृतदृष्ट्या सिञ्चन्तम्। यथा श्रीसूर्यः पुनर्दातुं लोकाद्रसं आदत्ते पुनः केनापि रूपेण दत्ते, तथा श्रीमहादेवोऽपि कयापि कलया संहरति, कयापि कलयाभिषिच्योत्पादयति। अत एव कमप्यनिर्वचनीयस्वरूपम्। जलाधिष्ठानचक्रे जलवर्षणमुचितमेवेति॥ ४०॥

## तात्पर्यदीपिनी

अथ मणिपूरं निरूपयति-**तटित्त्वन्त**मिति। हे जननि, तव मणिपूरैकशरणं श्यामं कमपि मेघं निषेवे। मणिपूरकमेकं मुख्यं शरणं गृहं यस्य तं, किंविधं, शक्त्या मायया तटित्त्वन्तं, तटित् विद्यते

यस्मिन्, तं तथा, कीदृश्या शक्त्या, तिमिरपरिपन्थिस्फुरणया, तिमिरस्याज्ञानलक्षणस्य परिपन्थि प्रतिबन्धकं स्फुरणं स्फूर्तिर्यस्याः सा तया। पुनः किंविधं मेघं, हरमिहिरतप्तं त्रिभुवनं वर्षन्तं, हर एव मिहिरो रविः, तेन तप्तं त्रिभुवनं सिञ्चन्तं, पुनः किंविधं स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषं, स्फुरन्ति च तानि, नानाविधानि रत्नाभरणानि, तैः परिणद्धं इन्द्रधनुः यस्मिंस्तं तथा, मणिपूरे रत्नसत्त्वात् इन्द्रधनुषः स्फुरणम्। एवंविधं द्विपञ्चाशच्छक्तियुक्तं मणिपूरकचक्रं निरूपितं भवति ॥४०॥

## पदार्थचन्द्रिका

अथ पञ्चममणिपूरकचक्रस्थं भवानीसहितं श्रीसदाशिवं जगदात्मानं मेघरूपकेण स्तौति— तटित्वन्तमिति। मणिं पूरं एकं श्रेष्ठं शरणं गृहमाश्रयो यस्य तं, कमपि, जगदात्मानं श्रीमहादेवं निषेवे अतिशयेन भजे इत्यन्वयः। अपिः समुच्चये, सच भिन्नक्रमः। कशब्दवाच्यं श्रीमहादेवं विशिनष्टि मेघरूपकेण। मेघं मेघसदृशं, अत्र यथा क्षत्रियोऽयं ब्राह्मण इत्यत्र, विनापि इव शब्दं इव गम्यते ब्राह्मण इवेति तथा मेघशब्देऽपि। ततश्च शिवयुक्तमन्यसदृशं, तथाह्यर्थगतिरिति न्यायेन इवशब्दान्तो मेघसदृशं तथोमामाहेति मेघसादृश्यं श्रीमहादेवे लक्ष्यते। मेघसादृश्यार्थं महादेवं विशिनष्टि- तम इति। तम इव श्यामः तमःश्यामः तम्। अत्र मूर्तिभेदेन महादेवे श्यामता द्रष्टव्या। तमिति पाठे प्रसिद्धम्। अश्यामं गौरवर्णमिति व्याख्येयम्। मेघसादृश्यार्थं पुनरपि विशिनष्टि महादेवं—शक्त्या सकलसृष्ट्यादिसामर्थ्यरूपया पार्वत्या तटित्वन्तं, तिमिरस्य परिपन्थि विरोधि स्फुरणं यस्यास्तथा। एतेन स्थिरविद्युत्त्वेन अलौकिकमेघता वर्णिता। पुनर्विशिनष्टि-नाना अनेकप्रकाराणि रत्नानि येषु तानि च, तान्याभरणानि नानारत्नाभरणानि, परिणद्धेन्द्रधनूंषि च नानारत्नाभरणपरिणद्धेन्द्र-धनूंषि, स्फुरन्ति नानारत्नाभरणपरिणद्धेन्द्रधनूंषि यस्मिंस्तम्। परिणद्धशब्दो विस्तीर्णपर्यायः। एतेनेन्द्रधनुर्बाहुल्येनापि अद्भुतमेघता दर्शिता। तापहारित्वेनापि मेघसादृश्यं ब्रुवन्विशिनष्टि—हरेति। हरति चोरयत्यानन्दादिस्वरूपं सर्वस्येति हरोऽबोधः, स मिहिर इव सर्वोपतापकत्वात्। तेन तप्तं त्रिभुवनं वर्षन्तं ज्ञानामृतवृष्ट्या सिञ्चन्तमित्यर्थः। कामक्रोधादिद्वारा अज्ञानस्यैव सर्वोपतापकत्वं सकल-श्रुतिस्मृतीतिहासपुराणप्रसिद्धमेव। 'को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे' इति मेदिनीकरः। "तटित्वन्तं शक्त्या तिमिरपरिपन्थिस्फुरणया तमःश्यामं मेघं जननि परिणद्धेन्द्रधनुषम्। स्फुरन्ना-नारत्नाभरणमणिपूरैकशरणं निषेवे वर्षन्तं हरमिहिरतप्तं त्रिभुवनमि"ति क्वचित्पाठो यदा तदा अयं श्लोको भवानीपरत्वेन व्याख्येयः। तथा हि—हे जननि तव देहं निषेवे इति देहपदमध्याहृत्यान्वयः। देहं विशिनष्टि-मेघं—पूर्ववद्व्याख्येयम्। शक्त्या स्वरूपचित्या तटित्वन्तं परिणद्धेन्द्रधनुषं, इन्द्रधनुः-सदृश्यौ भ्रुवौ यस्मिन् विज्यत्वात्। विगता ज्या यस्मात् उभयोः सादृश्यं स्फुरन्ति नानारत्नघटिता-न्याभरणानि यस्मिन्। स चासौ मणिपूरैकशरणश्च तम्। समानमन्यत् ॥ ४० ॥

## डिण्डिमभाष्यम्

अथ षट्सु पञ्चमेन श्लोकेन लोपामुद्रामय्यादि द्विपञ्चाशद्देवतालङ्कृततत्समसङ्ख्याच्छदाच्छादिजलरूपकमलप्रसाधितृमणिपुराभिधलिङ्गस्थानाधिष्ठानदेवते अमृतेश्वर्यम्बामृतानन्दनाथाभिधानदेवते प्रस्तौति-**तडिदित्यादिना**। तिमिरपरिपन्थिस्फुरणया अज्ञानान्धकारनिरसनसमुल्लासया शक्त्या निजतेजःसम्पत्या तडित्वन्तं सौदामिनीयुक्तं स्फुरतां नानाविधानां रत्नाभरणानां प्रभया परिणद्धं सम्पादितमिन्द्रधनुर्मणिधनुर्यस्य तं स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषं तमः श्यामं तरुणतिमिरनिकरवदतिशयकमनीयमेवैकवर्णं कमपि वक्तुमशक्यप्रभावयुक्तंमणिपूरैकशरणं पूर्वोक्तलिङ्गस्थानैकनिवासं हरमिहिरतप्तं त्रिभुवनं-हरिमिहिरेण मार्ताण्डापरपर्यायेण प्रागुक्तेन संवर्तशिवेन तप्तं तापितम्, "अन्तर्भावितण्यर्थात्तपिधातोर्निष्ठा", त्रिभुवनम् जगच्चक्रम्, वर्षन्तम् अमृतेन सिञ्चन्तं, अत एव मेघं मेघशब्दवाच्यं अमृतेश्वरयुग्मं निषेवे नितरां चिन्तयामि। अत्र मेघशब्दस्य 'मिह् सेचने' इति धातोः पुंसि संज्ञायां घः प्रायेणेति घप्रत्ययस्य हस्य घत्वे निष्पन्नत्वात् सेचनप्रधानपरमामृतरूपामृतेश्वरद्वन्द्वता ध्वन्यते। अत्र श्लोके नामतोऽनुक्तावपि अमृतदम्पती सूचितौ ॥ ४० ॥

## गोपालसुन्दरी

क्रमप्राप्ताप्यरश्मिमुख्यदेवदेव्यौ प्राह—**तडित्वन्तमिति**- कमप्यनिर्वचनीयं मणिपूरैकशरणं षड्दलं नाभ्यधोवर्ति कमलमेवैकम् शरणं गृहं यस्य नभोवत् श्यामं कृष्णवर्णं मेघं मेघेश्वरम् अमृतेश्वरापरपर्यायं निषेवे, कीदृशम्? शक्त्या सौदामिन्या अम्बयाऽमृतेश्वर्यपरनामधेयया तडित्वन्तं सौदामिनीमनोज्ञम्। कीदृश्या? तिमिराणामन्धकाराणामज्ञानां परिपन्थि नाशकं स्फुरणं कान्तिर्यस्यास्तया। पुनः कीदृशम्? नानारत्नाभरणरूपं परिणद्धं धृतमिन्द्रधनुर्येन तं। पुनः कीदृशम्? हररूपेण प्रागुक्तसंवर्तेश्वरेण मिहिरेण सूर्येण तप्तं तापितम् "अन्तर्भावितण्यर्थस्य तपिधातोर्निष्ठायां रूपं।" त्रिभुवनं त्रैलोक्यं वर्षन्तं सिञ्चन्तम्। **विष्णुपक्षेऽपि** समानम् ॥ ४० ॥

## आनन्दलहरीटीका

**तटित्त्वन्त**मिति—मणिपूरं षड्दलकमलमेकं मुख्यं शरणगृहं यस्य तं, तमोऽन्धकारः, तद्वत् श्यामं, कमपि अनिर्वचनीयं, मेघं मेघेश्वरनामानं निषेवे नमामि। मेघसाम्याय विशेषणान्याह-शक्त्या सौदामिनीसंज्ञया देव्या तटित्त्वन्तं विद्युद्युक्तं, धान्येन धनवानितिवदभेदे तृतीया। शक्तिरूपविद्युत्वानित्यर्थः। अमृतेश्वरोऽमृतेश्वरीति चैतयोर्नामान्तरं तन्त्रान्तरोक्तम्। कीदृशा, तिमिराणामज्ञानानां परिपन्थि नाशकं स्फुरणं प्रकाशो यस्याः, तया शक्त्या, विद्युत्पक्षे तिमिरमन्धकारः। पुनः कीदृशं मेघं, परिणद्धं धृतं इन्द्रधनुर्येन तथा स्फुरन्ति च तानि नानारत्नाभरणानि चेति कर्मधारयः, पश्चात् तृतीयातत्पुरुषः, पूर्ववच्चाभेदे तृतीया। हररूपेण

मिहिरेण सूर्येण हरमिहिराभ्यां वा तप्तं प्रलयकाले दग्धं त्रिभुवनं वर्षन्तं सिञ्चन्तम्। हरोऽत्र पूर्वोक्तः संवर्तेश्वरः ॥ ४० ॥

**तवाधारे मूले सह समयया लास्यपरया**
**[1]नवात्मानं [2]मन्ये नवरसमहाताण्डवनटम्।**
**उभाभ्यामेताभ्यामु[3]दयविधिमुद्दिश्य दयया**
**सनाथाभ्यां जज्ञे जनकजननीमज्जगदिदम् ॥ ४१ ॥**

தவாதாரே மூலே ஸஹஸமயயா லாஸ்யபரயா
1 4 1
நவாத்மானம் மன்யே நவரஸமஹாதாண்டவ நடம்
1 1 1 3 1
உபாப்யா மேதாப்யாம் உதய விதிமுத்திஶ்ய தயயா
4 4 1 4 3 3 3 3 3
ஸநாதாப்யாம் ஜஜ்ஞே ஜனகஜனனீமஜ் ஜகதிதம் ||41||
2 1 3 3 3

तेरे मूलाधार चक्र में लास्यरतो समया से मिल
रहता है जो मगन महाताण्डव नटन में नवरसाविल,
लगता है आनंदभैरवेश्वर वह मुझ को, श्रीमाते !
साधित करने जग-मंगल एक बने उन दम्पतियों से
सारा जग बन गया सनाथ विश्ववत्सल वर पितरों से ! ॥ ४१ ॥

## लक्ष्मीधरा

**तवेति। तव** भवत्याः आधारे आधारचक्रे, **मूले** मूलाधारचक्र इत्यर्थः। **सह** साकं, **समयया** समयसंज्ञया, **लास्यपरया** लास्ये नृत्ये परं तात्पर्यं यस्याः तया। स्त्रीकर्तृकं नृत्यं लास्यमित्युच्यते। **नवात्मानं** आनन्दभैरवं, **मन्ये** जानामि। **नवरसमहाताण्डवनटं** नवभिः शृङ्गारादिभिः रसैः महत् अद्भुतं ताण्डवं—पुंकर्तृकं नृत्यं ताण्डवमित्युच्यते। तत्र नटं अभिनेतारम्। **उभाभ्यां एताभ्यां** [4]आनन्दभैरवीमहाभैरवाभ्यां, **उदयविधिं** [5]उत्पत्तिं **उद्दिश्य**। कुत इत्याह—**दययेति**। दग्धलोकस्य पुनरुत्पादननिमित्तं **दयया सनाथाभ्यां** मिलिताभ्यां, **जज्ञे** उत्पन्नम्। **जनकजननीमत्** मातापितृमत्, **जगत्** प्रपञ्चं, **इदं** पूर्वोक्तम्। लास्यनाट्य-संविधानप्रतिपादनात् प्रकृतिपुरुषयोः दर्शने जगदुत्पत्तिः, लास्यनृत्तावसानमेव जगत्संहृतिरिति कौलसिद्धान्तः।

---

1. नटमभिनायकं, भवात्मानं, शिवात्मानं, 2. वन्दे 3. उभयविधिं, उभयमिदं
4. आनन्दभैरवमहाभैरवीभ्यां. पा. 5. जगदुत्पत्तिमुद्दिश्य.

अत्रेत्थं पदयोजना—हे भगवति! तव मूले आधारे लास्यपरया समयया सह नवरस-महाताण्डवनटं नवात्मानं मन्ये। उदयविधिमुद्दिश्य एताभ्यां उभाभ्यां दयया सनाथाभ्यां इदं जगत् जनकजननीमत् जज्ञे।

अयं भाव:—आधारस्वाधिष्ठानयो: तामिस्रलोकत्वात्, तत्र कौलानां अधिकारात् समयिनां आराधनाभावेऽपि स्वमतानुसारेण सहस्रकमले निषेव्यैव भगवती आधारस्वाधिष्ठानयो: सेव्येति महाभैरवी समयापदेन* उच्यत इति॥

अत्रेदमनुसन्धेयम्—आधारचक्रं त्रिकोणम्, आधारे बिन्दु: तिष्ठतीति च तावत् प्रसिद्धम्। अत्र कौलमते त्रिकोणमेव बिन्दुस्थानम्। स एव बिन्दु: तत्र आराध्य:। अत एव कौला: त्रिकोणे बिन्दुं नित्यं समर्चयन्ति। तत् त्रिकोणं द्विविधं, श्रीचक्रान्तर्गतनवयोनिमध्यवर्तिनी योनि:, सुन्दर्या: तरुण्या: प्रत्यक्षयोनिश्च। श्रीचक्रस्थितनवयोनिमध्यगतयोनिं भूर्जहेमपट्टवस्त्रपीठादौ लिखितां पूर्वकौला: पूजयन्ति। तरुण्या: प्रत्यक्षयोनिं उत्तरकौला: पूजयन्ति। उभयं योनिद्वयं बाह्यमेव न आन्तरम्। अत: तेषां आधारचक्रमेव पूज्यम्। तत्र स्थिता कुण्डलिनी शक्ति: कौलिनी इत्युच्यते। सैव उपास्या त्रिकोणपूजकानां इति रहस्यम्। एषा कुण्डलिनी शक्ति: बिन्दुरूपिणी निद्राणैव संपूज्या, तस्या: सदा निद्राणस्वाभाव्यात्। सा पूजा तामिस्रा। कुण्डलिनीप्रबोधो यदा स्यात्, तत्क्षणमेव मुक्ति: कौलानाम्। अत एव क्षणमुक्ता: कौला इति व्यवहार:। † तत्र सुरामांसमधुमत्स्यादिद्रव्यै: समाराधनं वामाचारप्रवृत्त्या। प्रत्यक्षत्रिकोणे बिन्दुस्थानं मन्मथच्छत्रं कृत्वा संपूजयन्ति, अधोमुखं त्रिकोणं अधोमुखमेव छत्रं पूजयन्ति। दिगम्बरक्षपणकादयस्तु स्त्रियं उत्तानां कृत्वा ऊर्ध्वं त्रिकोणं पूजयन्तीति रहस्यम्। अत्र बहु वक्तव्यमस्ति; तत्तु अवैदिकमार्गत्वात् स्मरणार्हमपि न भवति। तथापि दिङ्मात्रं निषेध्यत्वेन समयमतमार्गप्रदर्शनोपयोगितया उक्तमिति अलं विस्तरेण।

अथ समयिमतं निरूप्यते—त्रिकोणादि[1]षट्चक्रं आधारादिषट्चक्रात्मना परिणतमिति प्रागेव प्रतिपादितम्। तत्र श्रीचक्रे त्रिकोणं बैन्दवस्थानमिति तावत् सुप्रसिद्धम्। तत्र [2]त्रिकोणत्रयेण अष्टकोणनिर्माणे त्रिकोणादेव बिन्दुस्थानं भवति। तच्च चतुष्कोणमेव। तत्तु सहस्रकमलान्तर्गतं चन्द्रमण्डलमिति पूर्वमेव बहुधा प्रपञ्चितम्। एतत् चतुष्कोणमध्यं बैन्दवस्थानं 'सुधासिन्धु:'; 'सरघा' इति बहुधा प्रपञ्चितं पूर्वमेव। एतत् चतुष्कोणमध्यं बिन्दुस्थानमिति बाह्यपूजा [3]तरुणीत्रिकोणपूजा च दूरत एव निरस्तेति ध्येयम्। अत एव समयिनां सहस्रकमले समयाया: समयस्य च शम्भो: पूजा। समया नाम—शम्भुना साम्यं पञ्चविधं यातीति समया। [4]समयत्वं

---

* 'पदेशेन' इति च पाठ:, † "तस्मात् कौलानां त्रिकोणे आनन्दभैरवीमहाभैरवौ संपूज्यौ। साधकानां ताभ्यां तादात्म्येनावस्थानम्। अत एव कौला: बिन्दुपूजावसरे भैरवाकारं दिगम्बरत्वमाश्रित्य समर्चयन्ति स्त्रीपुरुषा:" इति अधिक: पाठ: केषुचित्कोशेषु. [1] चक्राऽऽत्मकम्. [2] कोणाष्टकोणनिर्माणे. [3] तरुणीपूजा. [4] दूतीसमयस्य.

शम्भोरपि—पञ्चविधं साम्यं देव्या सह यातीति । अतः उभयोः समप्राधान्येनैव साम्यं विज्ञेयम् । पञ्चविधसाम्यं तु—अधिष्ठानसाम्यं, अवस्थानसाम्यं, अनुष्ठानसाम्यं, रूपसाम्यं, नामसाम्यं चेति पञ्चविधं* समप्रधानयोरेव शिवयोः । यथा–'तवाधारे' इति अधिष्ठानसाम्यमुक्तम्, उभयोः आधारचक्रस्य अधिष्ठानरूपत्वात् । अनुष्ठानसाम्यं 'जनकजननीमज्जगदिदम्' इत्यनेन प्रतिपादितम्, उत्पादनक्रियायां उभयोः व्याप्रियमाणत्वात् । अवस्थानसाम्यं लास्यताण्डवशब्दाभ्यां प्रतिपादितम् । लास्यताण्डवयोः नृत्यरूपेण एकत्वं उक्तं प्राक् । रूपसाम्यं तु आरुण्यं उभयोः तन्त्रान्तरसिद्धम्—'जपाकुसुमसङ्काशौ मदघूर्णितलोचनौ । जगतः पितरौ वन्दे भैरवीभैरवात्मकौ ॥' इति । यद्वा—'नवात्मानम्' इति रूपसाम्यं नामसाम्यं च प्रतिपादितमिति ध्येयम् । एवमेव इतरत्रापि ऊह्यम् । यथा—'तटित्त्वन्तम्' इत्यादौ तटित्त्वान् तटित्त्वती इति नामरूपसाम्ये । यद्यपि स्थिरसौदामिनी-रूपायाः तटिद्रूपत्वात् तद्वत्त्वं नास्ति, तथापि सौदामिन्याः स्थिरत्वमेव सर्वदा तटिद्युक्तत्वमिति तटित्त्वतीति उक्तिः युक्ता इति अनुसन्धेयम् । मणिपूरस्थानम् अधिष्ठानमिति 'मणिपूरैकशरणं' इत्यनेन अधिष्ठानसाम्यमुक्तम् । 'स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषम्' इत्यनेन 'वर्षन्तं' इत्यनेन च प्रावृषेण्यत्वावस्थानसाम्यं प्रतिपादितम्' । 'तव स्वाधिष्ठाने' इत्यादिश्लोके 'स्वाधिष्ठाने' इत्यनेन अधिष्ठानसाम्यं उक्तम् । 'महतीं' इत्यनेन महासंवर्तात्मकरूपनामसाम्ये प्रतिपादिते । स्वाधिष्ठानगताग्निसंश्रयणं अवस्थानसाम्यम् । 'लोकान् दहती'ति अनुष्ठानसाम्यं प्रतिपादितम् । अनाहतचक्रे अनाहतं अधिष्ठानमिति अधिष्ठानसाम्यमुक्तम् । हुतभुक्कणिकारूपतया रूपसाम्यं नामसाम्यं च । निवातदीपत्वोक्त्या अवस्थानसाम्यम् । वायुतत्त्वोत्पादकत्वं अनुष्ठानसाम्यमिति रहस्यम् । विशुद्धिचक्रं अधिष्ठानमिति अधिष्ठानसाम्यं उक्तम् । 'शुद्धस्फटिकविशदं' इत्यनेन रूपसाम्यं उक्तम् । 'व्योमजनकं' इत्यनेन अनुष्ठानसाम्यं उक्तम् । 'शिवं सेवे' इत्यनेन नामसाम्यम् । 'शशिकिरणसारूप्यसरणेः' इत्यनेन अवस्थानसाम्यमिति । 'तवाज्ञाचक्रस्थं' इत्यनेन अधिष्ठानसाम्यमुक्तम् । 'तपनशशिकोटिद्युतिधरं' इत्यनेन रूपसाम्यमुक्तम् । 'परं शम्भुं' इत्यनेन नामसाम्यमुक्तम् । 'यमाराध्यन् भक्त्या' इत्यनेन अवस्थानसाम्यमुक्तम् । मुक्तिप्रदत्वमनुष्ठानसाम्यमिति साम्यपञ्चकं विज्ञेयम् । एतत् अतिरहस्यं शिष्यानुजिघृक्षया प्रकाशितम् ।

अतः समयपूजकाः समयिनः । तेषां षट्चक्रपूजा न नियता, अपि तु सहस्रकमल एव पूजा । सहस्रकमलपूजा नाम सहस्रकमलस्य बैन्दवस्थानत्वेन तन्मध्यगतचन्द्रमण्डलस्य चतुरश्रात्मना, तन्मध्य-बिन्दोः पञ्चविंशतितत्त्वातीतषड्विंशात्मकशिवशक्तिमेलनरूपसादाख्यात्मना च अनुसन्धानम् । अत एव समयिमते बाह्याराधनं दूरत एव निरस्तम् । षोडशोपचाररूपपूजाङ्गकलापश्च ततोऽपि दूरत एव ॥

---

*'समययोः प्रधानयोः' इति च पाठः

तथाहि—आधारादिषट्चक्राणां त्रिकोणादिषट्चक्रत्वेन तादात्म्यम्, बिन्दुस्थानस्य चतुरश्र[1]सहस्रकमलत्वेन तादात्म्यं बिन्दुशिवयोस्तादात्म्यम्। एवं [2]देवीशिवयोस्तादात्म्यमिति तादात्म्यत्रयम्। चक्रमन्त्रयोः ऐक्यं पूर्वमेवोक्तमिति, तेन सह चतुर्धा ऐक्यं समयिनां समयाराधनमिति महत् रहस्यम्॥

अत्र किंचित् उच्यते—समयिनां चतुर्विधैक्यानुसन्धानमेव भगवत्याः समाराधनमित्येतत् सर्वसम्मतम्। केचित्तु षोढा ऐक्यमाहुः। यथा—नादबिन्दुकलातीतं भागवतं तत्त्वमिति सर्वागमरहस्यम्। नादः - परापश्यन्तीमध्यमावैखरीरूपेण चतुर्विधः इति प्रागेवोक्तम्। परा त्रिकोणात्मिका, पश्यन्ती अष्टकोणचक्ररूपिणी, मध्यमा * द्विदशाररूपिणी, वैखरी चतुर्दशाररूपिणी। शिवचक्राणां अत्रैव अन्तर्भावः प्रतिपादित इति चतुश्चक्रात्मकं श्रीचक्रं नादशब्दवाच्यम्। बिन्दुर्नाम-षट्चक्राणि मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्ध्याज्ञात्मकानि बिन्दुशब्दवाच्यानि पूर्वमेव उक्तानि। कलाः पञ्चाशत्, षष्ट्युत्तरत्रिशतसङ्ख्याका वा। एवं नादबिन्दुकलातीता भगवतीति। सहस्रकमलं बिन्द्वतीतं बैन्दवस्थानात्मकं सुधासिन्ध्वपरपर्यायं सरघाशब्दवाच्यम्। नादातीततत्त्वं तु त्रिपुरसुन्दर्यादिशब्दाभिधेयम् 'दर्शा दृष्टा दर्शता' इत्याद्यपरपर्याय-'क ए ई ल ह्रीम्' इत्यादिमन्त्रवर्णनामक—पञ्चाशद्वर्णात्मक-षष्ट्युत्तरत्रिशतसङ्ख्यापरिगणितमहाकालात्मक—पञ्चदशकलातीता सादाख्या श्रीविद्यापरपर्याया चित्कलाशब्दवाच्या ब्रह्मविद्यापरपर्याया भगवतीति नादबिन्दुकलातीतं भागवतं तत्त्वमिति तत्त्वविद्रहस्यम्। अत्र नादबिन्दुकलानां परस्परैक्यानुसन्धानं षोढा भवतीति षोढा ऐक्यमाहुः॥ एवं भगवतीं षड्विधैक्येन सम्भाव्य पूजयित्वा सादाख्यायां विलीनो भवति। तदनन्तरं षड्विधैक्यानुसन्धानमहिम्ना गुरुकटाक्षसञ्जातमहावेधमहिम्ना च भगवती झडिति मूलाधारस्वाधिष्ठानात्मकचक्रद्वयं भित्वा मणिपूरे प्रत्यक्षं प्रतिभाति। महावेधप्रकारः—पूर्वं अभ्यासदशायां गुर्वेकपरतन्त्रः† महाविद्यां गुरुमुखादेव स्वीकृत्य ऋषिच्छन्दोदेवतापूर्वकं मूलमन्त्रस्य शुष्कजपं गुरूपदिष्टमार्गेण कुर्वन् आश्वयुजशुक्लपक्षे महानवमीशब्दाभिधेयाष्टम्यां निशीथसमये गुरोः पादोपसङ्ग्रहणं कर्तव्यम्। तन्महिम्ना गुरोः तदानीं कर्तव्यहस्तमस्तकसंयोग - पुनर्मन्त्रोपदेश—षट्चक्रपूजाप्रकारोपदेश - षड्विधैक्यानुसन्धानोपदेशवशात् महावेधः शैवः सादाख्यायाः प्रकाशरूपो जायते इति गुरुरहस्यम्॥ एवं महावेधे जाते भगवती मणिपूरे प्रत्यक्षा भवति। सा समाराध्या। अर्घ्यपाद्यादिभूषणप्रतिपादनपर्यन्तं पूजाकलापं मणिपूरे निर्वर्त्य अनाहतमन्दिरं भगवतीं नीत्वा, धूपादिनैवेद्यहस्तप्रक्षालनान्तं कर्मकलापं तत्रैव समाप्य, विशुद्धौ भगवतीं सिंहासनासीनां सखीभिः सल्लापान् सम्भाषमाणां शुद्धस्फटिकसदृशैः मणिभिः पूजयेत्। शुद्धस्फटिकसदृशमणयो न मौक्तिकादयः, किंतु तदीयषोडशदलगतषोडशचन्द्रकला इति रहस्यम्।

---

1. चतुरश्रस्य 2. देह' इत्यपि पाठः.

* मिश्रार इत्यपि पाठः. † तन्त्रमहा

एवं संपूज्य आज्ञाचक्रं नीत्वा देवीं कामेश्वरीं नीराजनविधिभिः अनेकैः संप्रीणयेत्। अत एव उक्तं कर्णावतंसस्तुतौ मदीयायाम्—"आज्ञात्मकद्विदळपद्मगते तदानीं विद्युन्निभे रविशशिप्रयतोत्कटाभे। गण्डस्थलप्रतिगलत्करदीपजाल–कर्णावतंसकलिके कमलायताक्षि॥" इति। एवमाज्ञाचक्रे नीराजनविधिं कृत्वा संप्रीणयेत्। तदनन्तरं झडिति विद्युल्लतेव सहस्रकमलं अनुप्रविष्टा सुधाब्धौ पञ्चकल्पतरुच्छायायां मणिद्वीपे सरघामध्ये सदाशिवेन सार्धं विहरमाणा वर्तते। तदा तिरस्करिणीं प्रसार्य समीपे मन्दिरे स्वयं निवसेत्। यावत् भगवती विनिर्गता पुनः मूलाधारकुण्डं प्रविशति तावत्पर्यन्तं स्थातव्यमिति समयमततत्त्वरहस्यम्।

अत्र शङ्करभगवत्पादानां चतुर्विधैक्यानुसन्धानानन्तरं मणिपूरे प्रत्यक्षायाः भगवत्याः स्वरूपं 'क्वणत्काञ्चीदामा' इत्यादिध्यानप्रतिपादितं चतुर्भुजं धनुर्बाणपाशाङ्कुशयुक्तहस्तम्। तन्मतानुसारिणामपि तथैव प्रतिभाति भगवती॥

अस्माकं तु षड्विधैक्यानुसन्धानानन्तरं मूलाधारद्विकं भित्वा मणिपूरे प्रसन्ना भगवती दशभुजा धनुर्बाणपाशाङ्कुशवरदाभयपुस्तकाक्षमालावीणाहस्ता। मन्मतैकदेशिनां पाशाङ्कुशपुण्ड्रेक्षुचापपुष्पबाणजपमालिकाशुकाभयवरदकरा करद्वयवक्षस्स्थलस्थापितवीणा। उभयमस्माकं सम्मतमेव। कर्णावतंसस्तुतौ मदीयायाम्—"भवानि श्रीहस्तैर्वहसि फणिपाशं सृणिमधो धनुः पौण्ड्रं पौष्पं शरमथ जपस्रक्शुकवरम्। अथ द्वाभ्यां मुद्रामभयवरदानैकरसिके क्वणद्वीणां द्वाभ्यामुरसि च कराभ्यां च बिभृषे॥" समयिनां प्रत्यक्षं परिदृश्यमाना आस्ते भगवती। समयिनां सहस्रकमलपर्यन्तं आन्तरपूजा कर्तव्या। सहस्रकमले तु तिरस्करिणीप्रसारणपर्यन्तं दर्शनमेव समाराधनम्। यदुक्तं सुभगोदये—"सूर्यमण्डलमध्यस्थां देवीं त्रिपुरसुन्दरीम्। पाशाङ्कुशधनुर्बाणहस्तां ध्यायेत्सुसाधकः॥ त्रैलोक्यं मोहयेदाशु [1]वरनारीगणैर्युतम्॥" इति॥ चर्चास्तोत्रेऽपि कालिदासकृते—"ये चिन्तयन्त्यरुणमण्डलमध्यवर्तिरूपं तवाम्ब नवयावकपङ्करम्यम्। तेषां सदैव कुसुमायुधबाणभिन्नवक्षस्स्थला मृगदृशो वशगा भवन्ति॥" इति॥

अत्र समयिनां बाह्यपूजानिषेधात् सूर्यमण्डलान्तर्गतत्वेन पूजनं निषिद्धमित्याहुः। तन्न, ब्रह्माण्डस्थितपिण्डाण्डस्थितचन्द्रसूर्ययोः ऐक्यात् सूर्यस्य चन्द्रकलामृतनिष्यन्दवशात् उज्जीवनात्। यतः 'अपाँ रसमुदयँसन्' *इत्यादिश्रुत्या प्रतिपादितमिति प्राक् प्रतिपादितम्। अतः चन्द्रकलाविद्यायाः सूर्यसम्पर्कात् तेजस्तिरोधानं स्यादिति केचन सङ्गिरन्ते; तदपि अपास्तं वेदितव्यम्। अत एव पिण्डाण्डब्रह्माण्डचन्द्रयोरैक्यात् चन्द्रमण्डलान्तर्गतत्वेन चन्द्रकलाविद्यायाः पूजनं युज्यते।

यत्तु पूर्वोक्तं चन्द्रबिम्बगतत्वेन देव्याः पूजननिषेधवचनम्, तत्तु आन्तरचन्द्रस्य आज्ञाचक्रोपरि-

‡ 'शोणम्' इत्यपि पाठः,

* तै. आ १-२२

[1] नरनारीगणैः, शतम्

स्थितस्य सहस्रकमलान्तर्गतचन्द्रकलामृतनिष्यन्दैः उज्जीवनमिति तत्र तस्याः पूजानिर्बन्धो नास्तीति, अत एव पिण्डाण्डब्रह्माण्डचन्द्रयोरैक्यात् ब्रह्माण्डस्थितचन्द्रमण्डलेऽपि पूजानिर्बन्धो नास्तीत्येवंपरम् ।

एवं हृदयकमल एव समाराधिता भगवती ऐहिकानि फलानि सर्वाणि ददाति । यदा वशिन्यादियुक्ता ध्याता सारस्वतं ददाति । यावकरसाप्लुता ध्याता वशीकरणं ददाति । 'मुखं विन्दुं कृत्वा' [1]इत्यादिना ध्याता तादृशं फलं ददाति । हृदयकमले एव होमादिकं तर्पणादिकं च कार्यं ऐहिकफलसाधनमिति 'स्मरं योनिं लक्ष्मीम्' *इत्यादिश्लोकव्याख्यानावसरे निपुणतरमुपपादितम् । अतः समयिनां ऐहिकामुष्मिकफलसाधनोपायः आन्तरपूजेति समयमततत्त्वम् ।

अत्र भगवत्पादैः आधारकमलादिक्रमं विहाय आज्ञाचक्रादिक्रमेण अवरोहक्रमेण पूजाप्रकारः कथितः । अयमाशयः—'आत्मन आकाशस्सम्भूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी ।'× इति श्रौतक्रममवलम्ब्य अवरोहक्रम उक्तः । अत एव स्वाधिष्ठानानन्तरभाविनःमणिपूरस्य तदधःप्रदेशे निरूपणं युज्यते । आधारस्वाधिष्ठानानन्तरं मणिपूरकावस्थानमिति सर्वयोगशास्त्रसिद्धम् । तदपि संवर्ताग्निदग्धस्य जगतः उज्जीवनानन्तरं उत्पत्तिं वक्तुमित्यवगन्तव्यम् । एतच्च शुकसंहितायां 'शृणु देवि प्रवक्ष्यामि' इत्यारभ्य एकनवतिश्लोकैः, श्रीचक्रस्य षट्चक्राणि प्रस्तुत्य 'इदानीं संप्रवक्ष्यामि' इत्यारभ्य सार्धशत्या श्लोकैश्च सप्रपञ्चं प्रतिपादितम् । तत् तत एवावधार्यम् ।

न च 'ऊर्ध्वमूलमवाक्छाखं वृक्षं यो वेद संप्रति' इति ‡ श्रुतेः देहरूपवृक्षस्य शिर एव मूलं, करचरणाद्यवयवास्शाखाः, अतश्च षट्कमलानां कदलीकुसुमोपमानानां अधोमुखानां अवरोहक्रमेण कमलान्युक्तानीति तत्र पूजा सुकरेति तदानुगुण्येन भगवत्पादैरुक्तमिति वाच्यम्: तादात्म्यध्यानव्यतिरेकेण पूजायाः असंभवात् । सम्भवे वा श्रीचक्रगतत्रिकोणादिषट्चक्राणां अधोमुखत्वाभावात्, "मूलाधारस्थितामेव देवीं सुप्तां प्रबोधयेत्" इति । तत्रैव प्रबोधनियमात्, मूलाधारादिक्रमेणैव पूजा समयिनां कौलादीनां च [1]कार्येति परमगुरुमुखादेव अवगतं रहस्यम् । वामकेश्वरतन्त्रे आत्मपूजायां विशेष उक्तः—

पाशाङ्कुशौ तदीयौ तु रागद्वेषात्मकौ स्मृतौ ।
शब्दस्पर्शादयो बाणाः मनस्तस्याभवद्धनुः ॥ १ ॥
करणेन्द्रियचक्रस्थां देवीं संवित्स्वरूपिणीम् ।

---

[1] १९ श्लोकः  * ३३ श्लोकः  × तै. उ. २-१.

[1] कायिकेति.  ‡ तै. आ. १-११.

विश्वाहङ्कारपुष्पेण पूजयेत्सर्वसिद्धिभाक् ॥ इति ।

*इयं उपासना । विधिः क्रियात्मको नादरणीयः ॥ ४१ ॥

इति श्रीमहोपाध्यायलक्ष्मीधरदेशिकेन कृतायां सौन्दर्यलहरीव्याख्यायां लक्ष्मीधराख्यायामानन्दवर्णनपरानन्दलहर्याख्यः प्रथमस्तरङ्गः ॥

## सौभाग्यवर्धनी

तव मूलाधारे चतुर्दलपद्ममध्ये, लास्यपरया, लास्यरसिकया, शृङ्गाराधारं नृत्यं लास्यम् । समयया सह समयाख्यया शक्त्या सह । नवात्मानं नवरसमहाताण्डवनटम् , शृङ्गारादिनवरससमवहितनिरतिशयमहोत्साहताण्डवनटं वन्दे । उभाभ्यामेताभ्याम्; लास्येश्वर्यादिनटनटयात्मकशिवाभ्यां, उदयविधिमुद्दिश्य, महासंहारानन्तरं जगत उत्पत्तिमनुसंधाय, दयया नष्टस्य विश्वस्य कल्याणकारणभूतया सनाथाभ्यां स्वस्वामिकाभ्यां, इदं जगत् जनकजननीमत् जज्ञे उत्पेदे । सिसृक्षोन्मीलितानुग्रहेण यथापूर्वं जगदत्यन्तं विलोक्य संतोषेण जगद्रक्षायै लास्यताण्डवसमुत्सुकाभ्यां देवदेवीभ्यां जगदिदं मातापितृमज्जातमित्यर्थः । यथा मातापितरौ पुत्रे जाते संतोषातिशयेन नृत्यतः, तथेति भावः । तथा च महिम्नस्तुतौ, "जगद्रक्षायै त्वं नटसि ननु वामैव विभुता" इति । महानटेश्वरः, लास्येश्वरी च मध्ये पूज्यौ ध्येयौ वा । अत्र पद्ये नवात्मकविद्याया उद्धारः सूचितः, न तु स्फुटीकृतो भगवता श्रीशंकराचार्येण, स गुरुमुखादवगन्तव्यः । इति चक्रषट्कं यथाज्ञानं गुरुमुखादवगतं किंचिन्निरूपितम् । इतोऽधिकं महाशयेभ्योऽधिगन्तव्यमिति शिवम् ॥ ४१ ॥

इति श्रीगोविन्दाश्रमपूज्यपादशिष्य श्रीकैवल्याश्रमविरचितायामानन्दलहरीव्याख्यायां सौभाग्यवर्धन्यां प्रथमस्तरङ्गः ॥

## अरुणामोदिनी

अथ परिशेषान्मूलाधारचक्राधिष्ठानदेवते समयाम्बामहानटेश्वराख्ये स्तुवन् तयोरेव अनुकूलयोः जगदुत्पत्तिहेतुत्वं प्राथमिकश्लोकोपात्तं द्रढयति - **तवेति** । हे भगवति देवि ! तत्र त्वत्संबन्धिनि मूले आधारे मूलाधाराख्ये चक्रे, स्थितमिति शेषः । लास्ये—"शृङ्गाररसभूयिष्ठैर्भूरिभावतरङ्गितैः । अङ्गैरनङ्गसर्वस्वैः शोभातिशयशालिभिः । अन्वितो नृत्तभेदो यस्तल्लास्यमिति कथ्यते ।।" इत्युक्तलक्षणे स्त्रीकर्तृके नृत्तविशेषे, परया आसक्त्या, समम् अधिष्ठानानुष्ठानावस्थारूपनामभिः शिवसादृश्यं याति प्राप्नोति इति समया देवी । एवंदेव्या समं सादृश्यं पूर्वोक्तरूपेण यातीति समय इति देवस्यापि नामानुसंधेयम् । तया सह । नव च ते रसाः नवरसः । यद्वा नवो नूतनः कोमलतया अतिमधुर इत्यर्थः । रस्यते आस्वाद्यत इति रसः । स चासौ रसश्च नवरसः शृङ्गारः ।

* अयमुपासनाविधिः इति स्यात्.

तदात्मकस्य नवरसात्मकस्य वा महतस्ताण्डवस्य पुंकर्तृकस्य नृत्तविशेषस्य नटमभिनेतारं रसभरितं नाट्यं कुर्वाणमित्यर्थः। एवंविधं महानटेश्वराख्यं देवं नवात्मानं पूर्वोक्तनवव्यूहात्मकं आनन्दभैरवनामानं नवरसात्मकं नूतनशृङ्गाररसस्वरूपं वा मन्ये तर्कयामीत्यर्थः। देवयोः शृङ्गारक्रीडनासक्तिफलं आह— उभाभ्यामिति। इदं परिदृश्यमानं जगत् स्थावरजङ्गमात्मकं भुवनं कर्तृ, उदयविधिम्; जगदुत्पत्तिविधानमुद्दिश्याभिलक्ष्य, दयया सनाथाभ्याम् दयासहिताभ्यां विनष्टजगदुत्पादनसावधानाभ्यामित्यर्थः। अत एव उभयकर्तृकलास्यताण्डवविधानमुक्तमित्यवगन्तव्यम्। प्रधानजगत्कारणवादिमते प्रकृतिपुरुषयोः परस्परदर्शनख्यातिरेव जगदुत्पत्तिः, लास्यनृत्तावसानमेव जगत्संहृतिरिति सिद्धान्तात्। एताभ्यामुभाभ्यां समयाम्बामहानटेश्वराभ्यां, जनकजननीमत् मातापितृमत् जज्ञे जातम्। लास्यताण्डवपरावेतावेव जगदुत्पाद्य मातापितृभावं तस्य प्राप्तवन्तावित्यर्थः। उक्तं च सूतसंहितायाम्—

> "यथा मातापितृभ्यां तु वर्धन्ते मानवा भुवि।
> तथैताभ्यामिदं कृत्स्नं वर्धते नात्र संशयः॥"

इति। समययोः शिवयोरनयोश्च 'तवाधारे' इत्यनेन उभयोः आधारचक्रस्यैवाधिष्ठानत्वात् अधिष्ठानसाम्यमुच्यते। "जनकजननीमत्' इत्यनेन अनुष्ठानसाम्यमुच्यते जगदुत्पादनक्रियायां उभयोर्व्याप्रियमाणत्वात्। 'लास्यपरया,' 'महाताण्डवनटम्' इत्यनेन अवस्थासाम्यमुच्यते।

> "जपाकुसुमसंकाशौ मदघूर्णितलोचनौ।
> जगतः पितरौ वन्दे भैरवीभैरवात्मकौ॥"

इत्यागमात् रूपसाम्यं प्रसिद्धमेव। 'नवात्मानम्' इत्यनेन रूपसाम्यम्। 'समया' इत्यनेन नामसाम्यमुच्यत इति उभयोः समयाभिधेयत्वं स्पष्टमेव। किं च उपक्रमे शिवशक्तिसंमेलनेन जगदुत्पत्तिवादिभिः दृढीकरणायोपसंहारे तत्परामृष्टमिति सर्वं रमणीयम्॥ ४१॥

इति श्रीकामेश्वरसूरिणा विरचितासु कृतिषु आचार्यभगवत्पादकृतदेवीस्तुतिव्याख्यायामरुणामोदिनीसमाख्यायां आनन्दवर्णनपरानन्दलहरीसमाख्यः प्रथमः कल्लोलः॥

## आनन्दगिरीया

**तवाधारे** इति। अत्र मूलाधारचक्रे चतुर्दलकमलकर्णिकायां महानरेश्वरः समयाख्या नरी च पूज्यौ। परितश्चतुर्दलेषु षट्पञ्चाशन्मयूखाः परिवारदेवतात्वेन पूजनीयाः। आधारे मूलाधारे चतुर्दलकर्णिकायां नवात्मानं नवाक्षरमन्त्रनवात्मकूटप्रतिपाद्यं समयया शक्त्या सह वर्तमानं वन्दे। **किंलक्षणं, नवरसमहाताण्डवनटं,** नव च ते रसाश्च नवरसाः ते विद्यन्ते यस्मिन्, तन्नवरसं तच्च महाताण्डवं चेति तत्र नटन्तं नटाकारानुकारिणं नृत्यन्तमिति वा। ताण्डवं तु उद्धतप्रयोगप्रधानत्वात्

प्रायेण पुरुषकर्तृकं भवति। तदुक्तं—"तदुक्तमुद्धतप्रायप्रयोगं ताण्डवं मतम्।" तत्तु सर्वेषां रसानामभिव्यक्तिकारणं भवतीति नवरसम्। किंलक्षणया समयया, लास्यपरया। लास्यं नृत्यविशेषं कुर्वन्त्या। लास्यं नाम सुकुमारांगं, यत् चतुर्विधाभिनयोपेतं नृत्यं, तत्प्रायेण स्त्रीकर्तृकमेव भवति। तदुक्तं "लास्यं तु सुकुमारांगं मकरध्वजवर्धनम्"। तत्परया तत्कुर्वाणया। उभाभ्यां नटनटी-रूपाभ्यां स्वात्मानं मातापितृमन्तं मेने। यथा पितृभ्यां जननपालनपोषणादिना पोष्यमाणाः पुत्रादयः सुखेन क्रीडन्ति तद्वदिति। किंलक्षणाभ्यां जगदुदयविधिमुद्दिश्य जगदुदयानन्दं प्राप्य पितृभ्यां यथा पुत्रो जायते, आनन्देन पितरौ नृत्यतः, तथा चिरविनष्टं जगदुत्पन्नमित्यानन्दः, तेन नृत्यद्भ्यां, जगदुदयविधिमुद्दिश्य तव दयया सनाथाभ्यां सहकृताभ्यां सस्वामिकाभ्यां वा। महासंहारे जगति विनष्टे सति एतौ दुःखितौ भवत इति जगदुदयेन सुखिनौ भवेतामित्यनया तयोरुपरि दया जाता। परदुःखं दृष्ट्वा दुःखितस्य कारुणिकस्य तन्निदानच्छेदे तृष्णा भवतीति त्वद्दयापात्राभ्याम्। अथवा इदं जगच्चिरविनष्टं, पुनःकथमुत्पाद्यमिति शोकाकुलहृदयाभ्याम्। अस्मिन्पक्षे तव पदे न लगति। तदा परमेश्वर्या एव पञ्चभूतात्मकं षडाम्नायावच्छिन्नं शरीरं प्रकल्पितमेभ्यः मूलाधाराभिप्रायेण तवेति योजनीयम्। अत्र नवधा रस्यते, तेन नव तालाः, तैर्युक्तस्य महाताण्डवस्य नटं इत्यादिकं तु प्रमाणरहितत्वादुपेक्षणीयम्। अत्र नवाक्षरीविद्या श्रीशंकरस्वामिना गोपितास्ति, गुरुमुखादवगन्तव्या। तव स्वाधिष्ठान इत्यादि श्लोकत्रयेण मिथुनत्रयस्मरणेन, मिथुनत्रयमन्त्रस्य स्मरणं कर्तव्यं साधकैः इति शंकराचार्याणां हृदयं, मन्त्राक्षरबाहुल्यात्। एतत्त्रयस्मरणेन, मन्त्रजिज्ञासा भविष्यतीति भावः। एतावता ग्रन्थेन मन्त्रभागो विचारितः। इत आरभ्य परमेश्वर्याः शृंगारं वर्णयति॥ इति आनन्दवारकृत्स्नश्रीशङ्कराचार्यस्याज्ञया श्रीआनन्दगिरिविरचितसौन्दर्यलहर्यां मन्त्रोद्धारः॥ ४१॥

## तात्पर्यदीपिनी

अथाधारचक्रं निरूपयति - **तवेति**। हेमातः अहमाधारे मूले आधारचक्रस्य मूले भवात्मानं भवस्य आत्मानं सदाशिवं समयया सह वन्दे नमस्करोमि। कथंभूतया समयया। लास्यपरया लास्ये परा तया, नृत्यपरया। किंविधं भवात्मानं, नवरसमहाताण्डवनटं, नवो रसो यस्मिन्, एतादृशे ताण्डवे नटं, तथा सुकुमारीभिः स्त्रीभिर्नृत्यन्तं, अतः कारणादेताभ्यां उभाभ्यां शिवशक्तिभ्यां इदं जगत् जनकजननीमत् जज्ञे। किंविधाभ्यां उभयविधिमुद्दिश्य भगवत्या दयया सनाथाभ्यां, तयोस्तत्रैव कृपातरंगो बलवानभूदित्यर्थः। एवंरूपं पञ्चाशच्छक्तियुक्तं आधारचक्रं निरूपितं भवति॥ ४१॥

## पदार्थचन्द्रिका

अथ षष्ठचक्रस्थं पार्वतीसहितं श्रीमहादेवं स्तौति। **तवाधार** इति। हे जननि, भवात्मानं भवदेहं समयया कालशक्त्या सह वन्दे। लास्यमत्र जगन्निर्माणमेव। यद्वा लास्यपरया समयया

शुभावहविधियुक्तया त्वया इति संबन्धनीयम्। नवरसा यत्र तन्महाताण्डवं, तत्र नट इव तम्। महाताण्डवं ब्रह्माण्डनिर्माणमेव, ब्रह्माण्डनिर्माणस्य शृंगारादिनवरसयुक्तत्वं युक्तमेव। नटौ नाटयं च कथयति - उभाभ्यां भवानीशंकराभ्याम्। बुद्धौ सन्निधाप्याह - ताभ्यामिदं जगज्जज्ञे जातम्। जनकजननीमत् मातापितृमत्। परमकारुणिकत्वेन देवौ विशिनष्टि - ऊभयमिदं स्थावरजंगमरूपं चेतनाचेतनरूपं वा कार्यकारणरूपं वा स्थूलसूक्ष्मरूपं वा। जगदुद्दिश्य कृता या दया तयोपलक्षिताभ्याम्। उभयविधिं इति पाठे उभयस्य विधिर्विधानम्। तं विशिनष्टि - सनाथाभ्यां, नाथृ नाधृ याच्ञोपतापैश्वर्याशीष्षु। नाथनं नाम ऐश्वर्यम्। नाथेन सह वर्तेते इति सनाथौ, ताभ्याम्। यद्वा समानौ नाथौ ताभ्याम्। समानैश्वर्याभ्यामित्यर्थः। ननूभाभ्यामिति नवक्तव्यं, एताभ्यामिति पदेनैव द्वित्वलाभादिति चेत्, न द्वित्वप्रकरणात्। यथा द्वाभ्यामागन्तव्यं द्वाभ्यामेव दातव्यमिति प्रसंगे द्वाभ्यां ब्राह्मणाभ्यां ददातीत्यत्र न द्विशब्दप्रयोगवैयर्थ्यं, तद्वदत्रापि। 'ताण्डवं नटनं नाटयं लास्यं नृत्तं च नर्तनमि'त्यमरः॥ ४१॥

## डिण्डिमभाष्यम्

अत्र षट्सु षष्टेन श्लोकेन त्रिपुरसुन्दर्यादि षट्पञ्चाशद्देवताधिष्ठिततत्समयसङ्ख्यपत्रविचित्रभूमिमयकमलानित्याधिवासभूतलाधिष्ठानदेवते लास्यताण्डवभेदभिन्नगान्धर्ववेदोत्पत्तिभूतेसमयाम्बा महानटेश्वराख्ये दम्पती परामृशति। हे परमेश्वरि। तव मूलाख्ये अघोरप्रथमचक्रे लास्यनृत्यविशेषैर्युक्तया समयया साम्बयाम्बयासह नवरसमहाताण्उवनटं नवधा रस्यते शब्द्यते 'रसशब्दे' इति धातोः। नव रसा नवतालाः तैर्युक्तस्य महाताण्डवस्य नटम्, के ते नव ताला ये पूर्वंपाख्या तेन दीर्घह्रस्वप्लुतादिगुरुलघुयुक्तं तालं कृत्वा स्वमेवोच्चरन् स्वयमेव नटति महेश्वरः तेन। पाटोनाम सङ्गीतशास्त्रे तं तनातनोति श्लोकस्य वा मन्त्रस्य वा तकारनकाराभ्यामेव च वर्णाभ्यां कदाचित् रेफेन युक्ततत्तत्स्वरसंस्थानं कथनमेव। तत्र तालाः परब्रह्मस्वरूपा नवखण्डात्मका उच्यन्ते। तनोति नत्रि तन तन तत्रि तन तत्रि तन तत नत नत्रि तन तत्रि तन तत्रि तनमिति नवखण्डालाः। तालः तलप्रतिष्ठायामिति धातोर्धत्रिस्मृतः इति निर्वचनात् सर्वलोकानां सर्वविद्यानां सर्वसङ्गीतानां प्रतिष्ठाभूताः एते तेष्वेव तालेषु प्रतिष्ठितयोर्भगवतोर्महानटीमहानटयोर्जगच्छान्तये नटनम्। नवात्मानमिति यद्यपि शिवस्य विशेषणं तथापि उभयोरेव महामन्त्रस्वरूपयोस्तथा विशेषणं द्रष्टव्यम्। नवात्मिकया समयया सहेति शेषः। नवरसशब्देन काव्यनाटकप्रसिद्धा शृङ्गारादयो रसा उच्यन्ते इति केचिद्व्याचक्षते, अतिप्रकटतया फल्गुतया नादृतमस्माभिः। तावेव महानटौ द्वितीयार्धेन विशिनष्टि एताभ्यामुभाभ्यां महानटी महानटाभ्यां उभयविधमुद्दिश्य सृष्टिपालनाख्यं कर्मद्वयमुद्दिश्य दयया करुणया सनाथाभ्याम् सद्भ्यां प्रागुक्ताभ्यां देवताभ्यां करुणभूताभ्यां जगदिदं

त्रिभुवनमेतत् जनकजननीमत् मातापितृयुक्तं जज्ञे जातं पालने दयावत्त्वमुचितं । जनन्याः कथं दयावत्त्वं शरीराभावेन भोगापवर्गाभावात् अशरीराणामात्मनाम् अनानन्दरूपत्वात् शरीरसम्पादनद्वारा आनन्द-प्रदानन्दमयया विना न भवतीति सृष्टावपि दयासम्बन्धः ॥ ४१ ॥

इति श्रीपदवाक्यप्रमाणज्ञातिरात्रयाजिमहाभट्टारकारविन्दलोचनाचार्यपुत्रश्रीरामकविडिण्डिममुकुट-रायमहापात्रराशौ आनन्दलहरीभाष्यालोचने प्रथममुन्मीलनं सम्पूर्णम् ॥

## गोपालसुन्दरी

क्रमप्राप्तौ पार्थिवरश्मिमुख्यौ देवदेव्यौ आह - **तवाधार** इति । तव त्वदधिष्ठिते मूले आधारे चतुर्दलमूलाधारचक्रे लास्यं शृङ्गाररसोचितनृत्यन्तं तत्परया समयया समयाख्यशक्त्या सह नवात्मानं नवकूटमहाविद्यात्मकं यद्वा पूर्वोक्तनवव्यूहरूपं नवखण्डनालात्मकं वा वस्तुतो नवरसरूपम् । 'रसो वै सः' इति श्रुतेः । नवरसा अभिनेया यत्र तादृशं यन्महाताण्डवनृत्यविशेषं तस्य 'नटनाभिनायकं वन्दे'। मन्ये इत्यपि पाठः । एताभ्यामुभाभ्यां नटेश्वरीनटेश्वराभ्यामिदं जगत् जनकजननीमत् मातापितृयुक्तं जज्ञे जातम् । कीदृशाभ्यां ? उदयविधिमुद्दिश्य दयया सनाथाभ्यां महासंहारानन्तरं जगदुत्पत्तिमनुसन्धाय दयया सनाथाभ्यां युक्ताभ्यामित्यर्थः, सिसृक्षोन्मीलितानुग्रहेण यथापूर्वं जगदुत्पन्नं विलोक्य सन्तोषेण लास्यताण्डवसमुत्सुकाभ्यां देवदेवीभ्यां जगदिदं मातापितृमज्जातं । मातापितरावपि पुत्रे जाते सन्तोषा-तिशयेन नृत्यत इति भावः । उभयविधमिति पाठे उभयप्रकारं स्थावरजङ्गमात्मकं चेतना चेतनात्मकं स्थूलसूक्ष्मात्मकं वा जगदुद्दिश्य या दया तया युक्ताभ्यामित्यर्थः । **विष्णुपक्षेपि** समानम् ॥ ४१ ॥

इति श्रीमहाभागवतश्रीनरसिंहस्वामिकृतं शक्तिविष्णुपरकं श्रीसौन्दर्यलहरीभाष्ये पूर्वो भागः ॥

## आनन्दलहरीटीका

**तवेति** । तवाधिष्ठानभूते मूले आधारे मूलाधारचक्रे समयया समयानाम्न्या शक्त्या सह, कीदृशा लास्यपरया नृत्यासक्तया, नव रसाः शृंगारादयो यत्र, तादृशे महाताण्डवे नृत्यविशेषे नटं नर्तकं वन्दे । नव रसा नव तालाः, रसपदस्यात्र तालपरत्वमिति कश्चित् । मन्ये इति पाठे आराध्यताबुद्धिविषयीकरोमीत्यर्थः । कीदृशं नवात्मानं नवव्यूहात्मकभैरवस्वरूपं, नव व्यूहाश्च पूर्वं दर्शिताः । नवरसरूपं वा । 'रसो वै सः' इति श्रुतेः । नवकूटमहाविद्यात्मकमिति कश्चित् । एताभ्या-मुभाभ्यां समयानवनटाभ्यां इदं जगत् जनकजननीमत् मातापितृयुक्तं जज्ञे जातम् । कीदृशाभ्यां, उदयविधिः उत्पत्तिविधानं, अर्थाज्जगत एव, उद्दिश्य स्थिताभ्यामिति शेषः । तेन क्त्वाप्रत्ययस्य स्थिति-क्रियया सह समानकर्तृकत्वमक्षतम् । मत्प्रसूतिमनाराध्येत्यादिवत् । दयया निरुपधिपरदुःखप्रहाणेच्छया

सनाथाभ्यां युक्ताभ्यां अन्यावपि मातापितरौ अपत्योत्पत्ताविव सदयौ हर्षान्नृत्यत इति भावः। उदयेत्यत्रोभयेति पाठे उभयं सृष्टिस्थितिरूपं बोध्यम् ॥ ४१ ॥

इति श्रीगौडीयराढान्वयसच्छ्रोत्रियवंशजगौरीकान्तसार्वभौमभट्टाचार्यविरचिता आनन्दलहरीनामटीकायां पूर्वो भागः ॥

## सौन्दर्यलहर्यामानन्दलहर्याख्यप्रथमभागस्थश्लोकानामनुक्रमणिका ॥

(प्रथमतः श्लोकसंख्या, अनन्तरं पृष्ठसंख्या)



॥ श्रीसौन्दर्यलहर्यां आनन्दलहर्याख्यः प्रथमो भागः समाप्तः ॥

भारती विजयम प्रेस, तिरुवल्लिकेणी, मद्रास-६०००० ५.

॥ श्रीः ॥

# ॥ सौन्दर्यलहरी ॥

## ( द्वितीयो भागः )

गतैर्माणिक्यत्वं गगनमणिभिः सान्द्रघटितं
किरीटं ते हैमं हिमगिरिसुते कीर्तयति [1]यः ।
[2]स नीडेयच्छाया[3]च्छुरणशबलं चन्द्रशकलं
धनुः शौनासीरं [4]किमिति न निबध्नाति धिषणाम् ॥ ४२ ॥

கதைர் மாணிக்யத்வம் ககநமணிபி: ஸாந்த்ரகடிதம்
3 1 1 1 33 4 3 4 1 1
கிரீடம் தே ஹைமம் ஹிமகிரிஸுதே கீர்தயதி யஃ ।
1 1 1 3 1 1 1 1
ஸ நீடேயச்சாயாச்சுரண சபலம் சந்த்ரசகலம்
3 1 2 1 2 3 1 3 1
தநுச் சௌநாஸீரம் கிமிதி ந நிபத்நாதி திஷணாம் ॥
4 1 1 3 4 1 4

कनक मुकुट नव रत्नों सम द्वादश आदित्यों से सुघटित
बनता वर्ण्य विषय जिस कवि का तेरा हिमगिरिसुते महत् ।
चन्द्रशकल को शबलित मणि रत्नों की छवि से वह लखकर
इन्द्रचाप है क्या यह! ऐसा भ्रम में न पडेगा क्यों कर ॥

लक्ष्मीधरा

गतैः प्राप्तैः, माणिक्यत्वं रत्नभावं, गगनमणिभिः द्वादशादित्यैः । तेषां अत्यन्त-सन्निकृष्टसेवार्थं भूषणगतमणित्वं युज्यते । सान्द्रघटितं सान्द्रं नीरन्ध्रं यथा भवति तथा घटितं

---

१ कः  २ समीडे, तमीडे, समीपे  ३ छुरणपटलं, स्फुरणशबलं, छुरितशबलं, छुरणशबला ।  ४ किमिदमिति बध्नाति ।

खचितं, किरीटं मकुटं, ते हैमं हेम्नो विकारं, हिमगिरिसुते! हे पार्वति! कीर्तयति वर्णयति, यः, स कवीन्द्रः, नीडेयच्छायाच्छुरणशबलं नीडं गोलं तत्र खचितं नीडेयं रत्नजातं तस्य छाया तया छुरणेन व्यापनेन शबलं शबलवर्णं, चन्द्रशकलं चन्द्रखण्डं, धनुः कोदण्डं, शौनासीरं शुनासीरः इन्द्रः तस्य संबन्धि शौनासीरं, किमिति न निबध्नाति धिषणां बुद्धिम् ॥ अत्रेत्थं पदयोजना—हे हिमगिरिसुते! माणिक्यत्वं गतैः गगनमणिभिः सान्द्रघटितं हैमं ते किरीटं यः कीर्तयति सः नीडेयच्छायाच्छुरणशबलं चन्द्रशकलं शौनासीरं धनुरिति धिषणां किं न निबध्नाति। अयं भावः—किरीटवर्णनां कर्तुमुद्युञ्जानः कवीश्वरः तत्र स्थितां चन्द्ररेखां नानारत्नमणिकान्तिच्छुरितां दृष्ट्वा इन्द्रचापत्वेन कथं नाशङ्कते? अवश्यं तस्य तच्छङ्का जायत एवेति। अत्र उत्प्रेक्षालङ्कारः, चन्द्रशकलस्य इन्द्रचापत्वेनोत्प्रेक्षणात्। यद्वा—अपह्नवालङ्कारः, इदं चन्द्रशकलं न भवति; अपि तु इन्द्रचाप इत्यपह्नवस्य प्रतिभानात्। यद्वा—सन्देहालङ्कारः, अयमिन्द्रचापः उत चन्द्रशकलमिति संशयात्। यद्वा — अतिशयोक्तिरलङ्कारः, इन्दुशकलस्य इन्द्रचापत्वेन अध्यवसानात्; स्वधिषणां इन्द्रचापे किमिति न निबध्नाति इति सामान्योक्तेः। एतेषां मध्ये एकस्य प्राधान्यं इतरस्योपसर्जनत्वमिति विनिगमकप्रमाणाभावात् सन्देहसङ्करः। (उत्प्रेक्षातिशयोक्ती स्पष्टे। अपह्नवस्तु तल्लिङ्गाभावादपि किमिति धिषणां न निबध्नाति इत्यपह्नवोल्लेखस्य शक्यत्वात्। सन्देहस्तु चन्द्रशकले दृष्टे इन्द्रचापस्य स्मृत्यारूढत्वात् उल्लेखयितुं शक्य एवेति सन्देहसङ्कर एव ज्यायान्) ॥ ४२ ॥

## सौभाग्यवर्धनी

एवं शक्तितन्त्रशाम्भवतन्त्रयोः स्वरूपं निरूप्य, "तेषामप्युपरि तव पादाम्बुजयुगं" इति पूर्वमुक्तं भगवत्याश्चरणाम्बुजस्योत्कर्षं प्रतिपादयितुं मुकुटादिचरणान्तमवयवस्तुतिं कर्तुमारभते—गतैरिति। हे हिमगिरिसुते, ते तव, हैमं किरीटं माणिक्यत्वं गतैः गगनमणिभिः बालार्कैः सान्द्रघटितं निबिडस्यूतं संकीर्तयति यः, स नीडे गोले यच्छायाच्छुरणेन यत्कान्तिव्याप्त्या शबलं विचित्रं चन्द्रशकलं शौनासीरं धनुः किमिदमिति धिषणां बुद्धिं बध्नाति, चित्ते धत्ते। उत्प्रेक्षते—माणिक्यादिनानारत्नखचितकिरीटकान्त्या संवलितं तत्रैव लग्नं चन्द्रशकलमालोक्य इन्द्रचापमतिं बध्नातीत्यर्थः। एतावता महादेव एव एतादृशीं मतिं चित्ते धत्ते। अन्यस्य तव मुखावलोकने का शक्तिरिति भावः। अथवा हैमं किरीटं उक्तलक्षणं यः कीर्तयति, स तव साक्षात्कारं प्राप्य तवानुचरः सन् मुकुटमालोक्य शौनासीरं धनुः किमिदमिति बुद्धिं बध्नातीति। एतावता "हैमकिरीटाय सहस्रादित्यतेजसे नमः" इति किरीटमन्त्र उदाहृतः। किरीटमन्त्रविशेषो गुरुमुखादवगन्तव्यः। एतत्कीर्तनेन च साक्षात्कारो

भवति। तेनैतादृशी धिषणा भवतीति भावः। अथवा ध्यानयोगेन तव साक्षात्कारं प्राप्य किरीटमालोक्यैतादृशीं बुद्धिमनुसन्धत्ते। किरीटमन्त्रमाहात्म्यमेतावता प्रकाशितम्॥ ४२॥

अरुणामोदिनी

एवमानन्दलहरीसमाख्योंऽशः समीरितः। असुबोधः कोविदानां अतिस्पष्टतरोक्तिभिः॥ कटाक्षादिष्टदान्नित्यं अरुणागणनाथयोः। सुबोधमपि सौन्दर्यलहर्यभिधमादरात्। अंशं स्पष्टोक्तिभिः सम्यग्व्याकुर्वे विदुषां मुदे॥ अथैवं भागवतमानन्दं सप्रपञ्चं प्रपञ्च्य, पूर्वोक्तध्यानविधानाशक्तानाम् अल्पधियामनुग्रहाय सुखेन भगवतीस्वरूपप्रापणनिपुणे प्रत्यङ्गवर्णनरूपे ध्याने निबद्धव्ये, "प्रपदांघ्रीगुल्मपार्ष्णीजङ्घाजानूरुवंक्षणम्। कटित्रिकनितम्बस्फिग्बस्त्युपस्थककूदरम्॥ जघनं जठरं नाभिर्वलिवक्षोजकञ्चुकम्। क्रोडोरोजत्रुपृष्ठांसकक्षादोःपार्श्वमध्यमम्॥ प्रगण्डः कूर्परो हस्तः प्रकोष्ठो मणिबन्धनम्। अंगुल्यंगुष्ठकरभनखपर्वचपेटकम्॥ कण्ठः शिरोधराश्मश्रुमुखोष्ठचुबुकं हनु। सृक्की तालुरदाजिह्वानासाभ्रूगण्डलोचनम्॥ अपाङ्गस्तारकाकर्णफालमस्तकमूर्धजाः। यथासंभवमेतेषु वर्ण्याः स्त्रीपुंसयोर्बुधैः॥" इति काव्यकल्पलतोक्तेः प्रपदादिमूर्धजान्तवर्णनात्, "वेणीधम्मिल्लसीमन्तफालश्रवणनासिकम्। कपोलधरनेत्रभ्रूकटाक्षरदभाषणम्॥ गण्डबाहुकरोरोजनाभिमध्यवलित्रयम्। रोमाणि श्रोणिजङ्घोरूगतिक्रमनखक्रमाः॥" इति तदीयवचनं पर्यालोचयतां किरीटादिगत्यन्तवर्णनस्यापि कविसमयसिद्धत्वात्, सहस्रकमलनिवासिनीं भगवतीं सुखशय्याप्रापणपर्यन्तं किरीटप्रभृतिपादान्तं वर्णयति—गतैरिति। हे हिमगिरिसुते। पुत्रीभावापत्त्या तुषारमयस्यापि हिमगिरेः कृतलोकप्रतिष्ठे देवि! यः कविः, त्वदुपासनालब्धप्रतिभातिशय इत्यर्थः। माणिक्यत्वं नानाविधरत्नभावं गतैरिति सन्निकृष्टसेवार्थं मणिभावं प्राप्तैः ... मरूपित्वादिति भावः। गगनमणिभिः द्वादशादित्यैः। 'द्युमणिस्तरणिः' इत्यमरः। सान्द्रं निबिडं यथा तथा घटितं खचितं हैमं हेमविकारं, ते भवत्याः किरीटं मुकुटं, कीर्तयति वर्णयतीत्यर्थः। संकीर्तयिता, नीडं रत्नस्थापनार्थः कुलायः, गोलकमिति यावत्। "नीडमस्त्री दानकुलाययोः" इति रत्नमाला। तत्र खचितानि रत्नानि नीडेयानि, तेषां छायानां नानाविधद्युतीनां छुरणेन रूषणेन शबलं कर्बुरकान्ति चन्द्रशकलं, शिरःस्थितमिन्दुखण्डं प्रति। सुष्ठु शोभनं नासीरं सेनामुखं, नासीरा अग्रेसरा वा यस्य स सुनासीरः। तालव्यादिपाठे श्विति पूजार्थमव्ययम्। "वृद्धश्रवाः सुनासीरः" इतीन्द्रपर्यायेष्वमरः। तस्येदं सौनासीरमैन्द्रं धनुः शक्रधनुरिति धिषणां बुद्धिं, तद्भ्रान्तिमित्यर्थः। किमिति किमर्थं न निबध्नाति। करोत्येवेत्यर्थः। किरीटकोटिनद्धनानाविधरत्नकान्तिरूषिते धनुराकारे चन्द्रशकले शबलवर्णेन्द्रचापबुद्धिं वर्णयितुं प्रवृत्तः कविः। एतेन "हैं हेमकिरीटाय सहस्रादित्यतेजसे नमः" इति

किरीटमन्त्र उद्धृत इति केचित्। अत्र देवीशिरःस्थिते चन्द्रशकले इन्द्रधनुर्भ्रान्तिनिरूपणात् भ्रान्तिमदलङ्कारः। स च नीडेयच्छायाच्छुरणशबलमिति विशेषणतापन्नपदार्थहेतुकाव्यलिङ्गसहकृतचन्द्रशकलेन्द्रधनुष्ट्वाध्यवसायरूपोत्प्रेक्षानुप्राणित इति त्रयाणां संकरः। लक्ष्मीधरे अलङ्कारलेखनकौशलं सुधीभिरेवावधार्यमित्युपेक्ष्यते। ४२॥

## आनन्दगिरीया

एतावता ग्रन्थेन मन्त्रभागो विचारितः। इत आरभ्य परमेश्वर्याः शृङ्गारं वर्णयति। तत्रापि मानुषीणां चरणादिवर्णनं देवतानां मुकुटादीति, प्रथमं मुकुटं वर्णयति — गतैरिति। हे परमेश्वरि, यस्त्वां हिमगिरिसुते इति संबोध्य इति संकीर्तयति। इति किं? यत्तव किरीटं माणिक्यत्वं गतैः गगनमणिभिः बालार्कैः सान्द्रतया घटितमिति कथयति। स समीपे वर्तमानं चन्द्रशकलं सकलमवलोक्य इदं किं शौनासीरं शार्ङ्गं धनुरिति बुद्धिं बध्नाति, अनुसन्धत्ते। शुनासीरस्येदं शौनासीरम्। वस्तुतस्तव किरीटं हैमं हेम्ना सुवर्णेन घटितं; परन्तु परमोत्कृष्टमाणिक्यमालायाः प्रभापटलपाटलीकृतमवलोक्य तथा भ्रम इत्यर्थः। चन्द्रकलायां इन्द्रधनुष्ट्वभ्रमे सादृश्यमाह — किं लक्षणं चन्द्रशकलं, यच्छायाच्छुरणशबलं मरकतमणिमाणिक्यमुक्ताप्रवालनीलमणिपुष्परागवैडूर्यवज्रादिघटितस्य या छाया तस्याः छुरणं प्रतिफलनं तेन शबलं कर्बुरीकृतं; इन्द्रधनुष्यपि नानाश्यामशोणादिरङ्गवत्तया प्रतीयमानत्वात्। एतावता दूरस्थस्य नायं भ्रमः, किन्तु तवासन्नस्य। तादृशस्तु महादेव एव। तथा च, तव शरीरसौन्दर्यमेतादृशं मोहनं, यत्र वर्तमानमलङ्करणमपि परमप्रमातारं पुरमथनमपि मोहयति भ्रमयति। अथवा मुग्धायाः पार्वत्याः भयोत्पादनेन श्रीमहादेवो मानमपनुदति। हे पार्वति! इदं तव किरीटं किं गगनमणिभिः घटितमिति मुकुटे शिरसि नानासूर्यसंबन्धोक्त्या भयेन मानत्यागः। एवं चन्द्रे इन्द्रधनुष्ट्वोक्त्या आकस्मिकभयहेतुकल्पनं रसान्तरम्। तदुक्तं रसपद्माकरे — 'साम्ना दानेन भेदेन रत्युपेक्षा रसान्तरे। अमीभिरुपचारैस्तामीर्ष्या मानं विवर्जयेत्'॥ इति। अथवा माणिक्यादिघटितं हैमं किरीटमत्रोत्प्रेक्ष्यते। माणिक्यत्वं गतैः रक्तत्वं प्राप्तैः बालादित्यैः सान्द्रतया घटितमिवेति। एतावता माणिक्यबाहुल्यं वर्णितम्। अथवा माणिक्ययुक्तं तव किरीटं तदा विशिष्य वक्तुं शक्येत, यदा माणिक्यत्वं प्राप्तैर्बालादित्यैः सान्द्रतया घटितं स्यादिति अभूतोपमा वा। अथवा एकाक्षरवागीश्वरीमन्त्रपरतया पद्यम्। तथा हिमगिरिसुते, ह इति निश्चये। ऐं वाग्भवबीजं, अन्ते एकान्ते यः संकीर्तयति जपति, स धिषणां सकलशास्त्रानुसन्धानात्मिकां बुद्धिं ज्ञानं निश्चयेन अनुसन्धत्ते प्राप्नोतीत्यर्थः। किं लक्षणं मन्त्रं, किरीटं सकलमन्त्रमकुटभूतं; तस्य रजोगुणप्राधान्यं वर्णयति—माणिक्यत्वं गतैः गगनमणिभिः

घटितं कोटिसूर्यप्रकाशतुल्यं; पुनः किलक्षणं, यच्छोभिनी … चान्द्री चन्द्रकला इन्द्रधनुरिव विराजते। तदुक्तं लघुना—ऐन्द्रस्येव शरासनस्य … ललाटं गमामि इति। अथवा त्वद्ध्यानयुक्तस्य ध्यानपरिपाकेन तव साक्षात्कारे जाते शिरसि अनुपममुकुटचन्द्रकलां चावलोक्य प्रादुर्भूतरसस्येयमुक्तिः,—यदिदं किरीटं बालादित्यैर्घटितं? न इदमिन्द्रधनुः। गतैर्माणिक्यत्वेति पद्यस्य रहस्यार्थः—गतैरिति। गगन-ह, माणिक्यत्वं र, मणिभिः ईकारः, सान्द्रं अनुस्वारघटितं, हिमगिरिसुते नित्यक्लिन्ने, यच्छायाच्छुरणशबलं मदद्रवे, चन्द्रशकलं स्वाहा। अत्र परंपरागतानां संकेतमन्त्रपदग्रहणम्। ननु व्युत्पत्त्या स्वतन्त्रसिद्धः शङ्कराचार्यः स्वयं संकेतनं कृत्वा पदानामनभिप्राच्यानां मन्त्रपदानां च, शिष्यानुग्रहायाचीक्लृपत्। तत्र नात्र क्वापि शङ्का। परंपरासमागतो ह्ययं संकेतः। न तु बुद्धिगम्यः। गुरूक्तं यथालिखितमेव। प्रकृते किरीटवर्णनमेव। ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा॥ ४२॥

तात्पर्यदीपिनी

अथ प्रत्ययवर्णमाह—गतैरिति। हे हिमगिरिसुते सः इति धिषणामनुबध्नाति। इतीति किं, इदं शौनासीरं धनुः, किमुत चन्द्रशकलं वा, शुनासीरस्येन्द्रस्येदं शौनासीरं, चन्द्रस्य शकलं चन्द्रखण्डं चेति धिषणां बुद्धिं संशयितां करोति। स कः, यस्ते हैमं किरीटं कीर्तयति। हेम्नोऽयं हैमस्तम्। कथं भूतं किरीटं, गगनमणिभिः सान्द्रघटितस्तं तथोक्तम्। किं विधैर्गगनमणिभिः माणिक्यत्वं गतैः माणिक्यानां समूहो माणिक्यं तस्य भावस्तत्त्वं, रत्नसमूहस्वरूपं प्राप्तैः, कथं भूतं चन्द्रशकलं, नीडेयच्छायाच्छुरणशबलं, नीडेयानां अनोकहानां छाया तया छुरणं तेन शबलं कर्बुरं, अत्र स्वरूपे पतत्प्रत्ययमनुद्भावः, यतो जातिर्व्यक्तिमपहाय प्रवर्तत इति स्वरूपार्थमेवाप्रत्ययः इत्यर्थः॥ ४२॥

पदार्थचन्द्रिका

वेदान्तवेद्यं यद्रूपं देव्यास्तर्काद्यगोचरम्। तच्छ्रुत्वाथामलां मूर्तिं भवान्याः स्तौति शङ्करः॥ एवं तावद्भवान्याः स्वरूपं स्तुत्वा, अधुना आपादतलमस्तकं देहं स्तोष्यन्, आदौ किरीटं स्तौति—गतैरिति। हे हिमगिरिसुते! ते तव किरीटं कीर्तयितुं वर्णयितुं निरुपमत्वात्, तथापि तमीडे इत्यन्वयः। किरीटं विशिनष्टि, गगनमणिभिः सान्द्रं यथा स्यात्तथा घटितं सान्द्रघटितं निबिडरचितमित्यर्थः। गगने मणय इव गगनमणयः सूर्यादयः, तैर्माणिक्यत्वं मणिरूपतां गतैः प्राप्तैः, हैमं सौवर्णं, तं कमित्यपेक्षायामाह। यस्य किरीटस्य छायायाः कान्तेः स्फुरणेन शबला कर्बुरा चन्द्रकलिका चन्द्रस्य षोडशो भागः, दृष्टृणामिति धिषणां बुद्धिं बध्नाति

जनयति। इतिशब्दोक्तां धिषणामाह—इदं शौनासीरं ऐन्द्रं धनुः किमिति। हस्वा कला कलिका। छायाछुरितशबलं चन्द्रशकलमिति पाठे यस्य छायया छुरितं संपृक्तं च तत् शबलं च तच्चन्द्रशकलं चन्द्रखण्डम्। मणिः स्त्रीपुंसयोः रत्नजातौ मुक्तादिकेऽपि चेति मेदिनीकरः। मण्डनं चाथ मुकुटं किरीटं पुंनपुंसकमित्यमरः॥-४२॥

## डिण्डिमभाष्यम्

आगमार्थप्रधानत्वात् असुबोधोशरीरितः। गुरोः कटाक्षविक्षेपादंशोऽन्यः संप्रकाशते॥ एवमुक्तप्रकारेण सर्वविद्यानिरूपितस्वरूपायाः श्रीश्रीमहाभट्टारिकायाः मोक्षपथपक्षपातिप्रेक्षावज्जनैकसुगमं अखण्डज्योतिर्ध्यानं कर्तुमक्षमाणां भोगार्थिनामल्पधियां सकलध्यानमेव सुकरमिति पाटलवर्णं पाशाङ्कुशधनुर्बाणधरं पञ्चब्रह्ममञ्चगतं कामेश्वराङ्कपर्यङ्कोपविष्टं सर्वाभरणभूषितं च वक्तव्यम्। तच्च भगवत्याः प्रत्यङ्गवर्णनं विना सुखेन प्राप्तुमशक्यमिति कृत्वा केशादिपादान्तमवयववर्णनमारभते गतैरित्यादिना। माणिक्यत्वं रत्नभावं, गतैः प्राप्तैः, गगनमणिभिः द्वादशादित्यैः मित्रवरुणधात्रर्यमभगेन्द्रविवस्वद्विधातृत्वष्टृविष्णुनामभिः सान्द्रघटितं विश्वकर्मणा सुश्लिष्टतया संपादितं हैमं हेमप्रधानं ते किरीटं, मुकुटं हे हिमगिरिसुते शैलराजनन्दिनि, कः कीर्तयितुं वर्णयितुं शक्तः, न कोऽपीत्यर्थः। तदेव विशिनष्टि-यच्छायाच्छुरणशबलं यस्य मुकुटस्य छायाच्छुरणेन कान्तिविलेपेन शबलं नानावर्णं सत् चन्द्रशकलं शशाङ्कभित्तं कर्तृ सौनासीरं सुनासीरसंबन्धि। "वृद्धश्रवाः सुनासीर" इत्यमरः। धनुः कार्मुकं किमेतदिति धिषणां बुद्धिं बध्नाति संपादयति, तन्मुकुटो वर्णयितुः इति संबन्धः॥ ४२॥

## गोपालसुन्दरी

इदानीं मुकुटादिचरणान्तमङ्गं स्तौति – हे हिमगिरिसुते, ते तव, हैमं सुवर्णघटितं किरीटं कः कीर्तयतु, तथापि समीडे स्तौमि। कीदृशं, माणिक्यत्वं रत्नविशेषभावं गतैः प्राप्तैः गगनमणिभिः द्वादशादित्यैः, मित्रवरुणादिनामकैः सान्द्रघटितं सुश्लिष्टतया योजितं, यस्य मुकुटस्य छायाच्छुरणेन कान्तिविलेपनेन शबलं नानावर्णं चन्द्रशकलं कर्तृ, सौनासीरं सुनासीर इन्द्रः तत्संबन्धि धनुः कार्मुकं किमेतदिति धिषणां बध्नाति जनयतीत्यर्थः। विष्णुपक्षे – ते तव हैमं किरीटं, हिमगिरि हिमसदृशशीतले गिरि वचने उपनिषद्रूपे सुते अभिव्यक्ते त्वयि कः कीर्तयतु। पूर्ववद्विष्णुसंबोधनं वा। चन्द्रशकलमिति किरीटोपरि घटितार्धचन्द्राकृति सुवर्णखण्डपरं, नरसिंहमूर्तावर्धचन्द्रसत्वात्तत्परं वा॥ ४२॥

आनन्दलहरीटीका

अधुना त्रिपञ्चाशतपद्यैर्ध्यानाय किरीटादिचरणपर्यन्तं वर्णयति । गतैरिति । हे हिमगिरिसुते ते तव हैमं स्वर्णमयं किरीटं मुकुटं कः कविः कीर्तयति सम्यक्तया वर्णयति, न कोऽपीत्यर्थः । तथापि समीडे स्तौमि स्वबोधादिति शेषः । समीपे इति पाठे निकट इत्यर्थः, चन्द्रेत्यनेनान्वयः । कीदृशं किरीटं, माणिक्यत्वं रत्नविशेषतां गतैः प्राप्तैर्गगनमणिभिः द्वादशादित्यैः, सान्द्रं निबिडं यथा स्यात्तथा घटितं निर्मितं, यस्य किरीटस्य छायायाः कान्तेः स्फुरणेन प्रतिबिंबेन शबलं चित्ररूपं चन्द्रस्य शकलं खण्डः, इदं किं सौनासीरं इन्द्रसंबन्धि धनुरिति धिषणां बुद्धिं अर्थात्पश्यतां देवानां, बध्नाति जनयति । चन्द्रखण्डस्य वक्रत्वात्, प्रतिबिम्बवशात्, रक्तपीतादिनानावर्णत्वादीदृशी बुद्धिरिति भावः । शबला चन्द्रकलिकेति क्वचित्पाठः ॥ ४२ ॥

धुनोतु ध्वान्तं नस्तुलितदलितेन्दीवरवनं
[1]घनस्निग्ध[2]श्लक्ष्णं चिकुरनिकुरम्बं तव शिवे ।
यदीयं सौरभ्यं सहजमुपलब्धुं सुमनसो
वसन्त्यस्मिन्मन्ये बलमथनवाटीविटपिनाम् ॥ ४३ ॥

துநோது த்வாந்தம் நஸ்துலித தளிதேந்தீவரவநம்
4 1 4 1 1 1 3 1 3
கநஸ்நிக்த ச்லக்ஷ்ணம் சிகுர நிகுரும்பம் தவ சிவே ।
4 3 4 1 1 1 3 1
யதீயம் ஸௌரப்யம் ஸஹஜமுபலப்தும் ஸுமநஸோ
3 4 1 3 4
வஸந்த்யஸ்மிந் மந்யே பலமதநவாடீவிடபிநாம் ॥
1 3 2 1 1 1

दूर करे अन्तस्तम हम दीनों का मैया पृथु कचभार
तेरा विकसित नीलोत्पलवन सम सान्द्रस्निग्धमृदु सुकुमार ।
पाने जिसकी सहज सुगन्धि वहीं रहते हैं सतत शिवे
बलरिपु वाटीकुसुम यह लगता है मुझे शमित अशिवे ॥

---

१ घनं स्निग्धं श्लक्ष्णं २ श्यामं, सूक्ष्मं

## लक्ष्मीधरा

धुनोतु अपनुदतु, ध्वान्तं अन्तस्तिमिरं, नः अस्माकं, तुलितदलितेन्दीवरवनं तुलितं सदृशीकृतं दलितं भिन्नं, विकसितमित्यर्थः, इन्दीवराणां नीलोत्पलानां वनं यस्य तत्। घनस्निग्धश्लक्ष्णं घनं सान्द्रं अविरलं स्निग्धं स्नेहयुक्तमिव स्थितं श्लक्ष्णं- मृदु-। एवमेतेषां विशेषणानां समासः। चिकुरनिकुरुम्बं चिकुराणां केशानां निकुरुम्बं समूहः केशपाशः धम्मिल्ल इत्यर्थः। तव भवत्याः, शिवे! भगवति! यदीयं यस्य धम्मिल्लस्य सम्बन्धि, सौरभ्यं परिमलं, सहजं स्वभावसिद्धं उपलब्धुं समाक्रष्टुं, सुमनसः पुष्पाणि, वसन्ति आसते। अस्मिन् धम्मिल्ले, मन्ये ध्रुवं, वलमथनवाटीविटपिनां वलमथनः बलारिः बवयोरभेदोपचारः अनुप्रासार्थमङ्गीकृतः — तस्य वाटी उद्यानं तत्र विटपिनः कल्पवृक्षाः तेषाम्। अत्रेत्थं पदयोजना — हे शिवे! तुलितदलितेन्दीवरवनं घनस्निग्धश्लक्ष्णं तव चिकुरनिकुरुम्बं नः ध्वान्तं धुनोतु। यदीयं सहजं सौरभ्यं उपलब्धुं अस्मिन् बलमथनवाटीविटपिनां सुमनसः वसन्तीति मन्ये। अत्र उत्प्रेक्षालङ्कारः, केशपाशवासनार्थमेव धृतानां कल्पवृक्षकुसुमानां अन्यथात्वेनोत्प्रेक्षणात्। तल्लक्षणम् — सम्भावनमथोत्प्रेक्षा प्रकृतस्य परेण यत्॥ इति। तुलितदलितेन्दीवरवनमित्यत्र उपमालङ्कारः। अनयोस्संसृष्टिः, तिलतण्डुलवत् संसृज्यमानत्वात्। क्षीरनीरवत् संबन्धः सङ्करः॥ ४३॥

## सौभाग्यवर्धनी

अलकान् स्तौति धुनोत्विति। हे शिवे तव चिकुरनिकुरुम्बं अलकसमूहं, तुलितदलितेन्दीवरवनं उपमितविकासितेन्दीवरवनम्। अनेनोपमितं, तव चिकुरसदृशं तत्, न तु तत्सदृशमेतत्। यतो घनं स्निग्धं श्लक्ष्णं च। उपमेयचिकुरोत्कर्षहेत्वन्तरमाह — यदीयमिति। यदीयं सौरभ्यं सहजमुपलब्धुं प्राप्तुं, बलमथनवाटीविटपिनां नन्दनवनतरूणां कल्पवृक्षाणां सुमनसः कुसुमानि, तस्मिन् तव चिकुरनिकुरुम्बे वसन्तीति तेषां संसर्गेण तवालकानां नोत्कर्षः। किं तु तवालकसंपर्केण तेषामुत्कर्षः। सुरासुरसीमन्तिनीविहितपूजाच्छलेन तवालकाश्रयणे अयमेव हेतुरिति हेत्वलङ्कारः। एतादृशं नो ध्वान्तं धुनोतु दूरीकरोतु। स्वयं ध्वान्तायमानमपि ध्वान्तं नाशयतीति महदाश्चर्यम्॥ ४३॥

## अरुणामोदिनी

अथ धम्मिल्लं वर्णयति धुनोत्विति। शिवयति भक्तलोकमिति शिवा। तस्याः संबुद्धिः हे शिवे! घनं सान्द्रं, "घनं निरन्तरं सान्द्र"मित्यमरः। तच्च तत् स्निग्धं स्नेह-

युक्तमिव स्थितं च घनस्निग्धम्। यद्वा घनो नीलमेघ इव स्निग्धं, श्लक्ष्णं मृदुलं च। अत एव तुलितं समीकृतं दलितेन्दीवरवनं विकसितनीलोत्पलकाननं येन तत्। व्यतिरेकालङ्कारः। तव भक्ताज्ञाननिरासिकायाः भवत्याः, चिकुरनिकुरुम्बं केशपाशः, धम्मिल्लमित्यर्थः। नः भक्तानामस्माकं ध्वान्तमज्ञानं धुनोतु कम्पयतु। आशंसायां लोट्। तत् किमित्यत्राह—सहजं उत्पत्तिसिद्धं, यस्येदं यदीयं, भवत्केशपाशसंबन्धि, सौरभ्यं सौगन्ध्यं, उपलब्धुं प्राप्तुं अस्योपासनयेति भावः। बलमथनवाटीविटपिनां, वबयोरभेदात् बलं मथ्नातीति बलमथनः इन्द्रः, तस्य वाटी नन्दनाख्यं पुष्पवनं, तत्रस्थानां विटपिनां कल्पतरूणां सुमनसः पुष्पाणि, विदुषो देवाश्चेति ध्वनिः। "सुमनाः पुष्पमालत्योः स्त्रियां नाधीनदेवयोः" इति कोशः। एतेन तेषामुचितानुचिताभिज्ञत्वं सूचितम्। अस्मिंश्चिकुरनिकुरुम्बे वसन्ति, निवसन्तीति मन्ये तर्कयामि। अन्यथा कथमेतेषामत्र नित्यनिवासः स्यादिति भावः। अत्र केशपाशसौरभ्याव-धृतानां सुरतरुप्रसूनानां केशपाशसाम्यसौगन्ध्योपलब्ध्यर्थकथनादुत्प्रेक्षालङ्कारः। सा च वाचिक-शब्दप्रयोगाद्वाच्या। तथा चेन्द्रोद्यानविहर्तृदेवीकेशपाशसौरभ्यपरिज्ञातृविद्वद्वृत्तान्तप्रतीतेः समा-सोक्तिर्व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः॥ ४३॥

## आनन्दगिरीया

सकलसुरासुरनिकरमुनिजनैः पारिजातमन्दारकल्पद्रुमकुसुमकदम्बैः पूज्यमानं केश-कलापं वर्णयति—धुनोत्विति। हे शिवे परमकल्याणकारिणि, तव चिकुरनिकुरुम्बं नोऽस्माकं हृदयान्तर्गतमन्धकारं अज्ञानाख्यं, धुनोतु नाशयतु विनाशभूतकर्मयुक्तं करोतु। किंलक्षणं, तुलितदलितेन्दीवरवनं, इन्दीवरं श्यामकमलं नीलोत्पलं, तेषां वनं समूहः, दलितं विकसितं च तदिन्दीवरवनञ्चेति। तुलितमुपमितं दलितेन्दीवरवनं येन तत्तथा। इन्दीवरवनादपि सातिशयम्। अतिशयमाह—घनास्निग्धश्लक्ष्णं घनमतिस्निग्धं परिमलबहुलतैलादिना मसृणं श्लक्ष्णं परमकमनीयतमं, इन्दीवरं तु सूक्ष्मं अथवा श्यामतया अन्धकारोपमेयमप्यन्धकार-नाशकम्। यदीयं सौभाग्यमुपलब्धुं प्राप्तुं बलमथनवाटीविटपिनां सुमनसः पुष्पाणि अत्र सुराङ्गनोपपाद्यमानपूजनच्छलेन वसन्ति आश्रयन्ते। एतत्सौरभ्यमस्माभिः कथं प्राप्तव्य-मित्याशया अन्तेवासितां प्राप्नुवन्तीति। कीदृशं तत्सौरभ्यं, सहजं, कारणगुणप्रक्रमायान्तं, न तु कलिकागमे दिनकरादिकिरणैरुत्पाद्यमानं, कमलं तु तथा 'आमोदप्रकटनमिन्दिरानिवासः तत्सर्वं दिनकरकृत्यमामनन्ति' इत्युक्तत्वात्। धुनोतु ध्वान्तेत्यादिपाठश्लोकस्य रहस्यार्थः। धुनोतु ध्वान्तं अत्रार्थात् ओं, तुलितदलितेन्दीवरवनं अंकुशं, घन भ्रौं स्निग्ध स्रौं श्लक्ष्णं च्छ्रौं

चिकुरनिकुरुम्बं क्ष्रौं शिवे स्वाहा। अत्र प्रणवरहितमपि मन्त्रं केचिदिच्छन्ति। तदा अंकुशद्वयं, प्रणवोद्धारे अंकुशः। ओं क्रौं भ्रौं स्रौं छ्रौं क्ष्रौं स्वाहा॥ ४३॥

## तात्पर्यदीपिनी

धुनोतु इति — हे शिवे, तव चिकुरनिकुरुंबं केशपाशं नोऽस्माकं ध्वान्तमज्ञानलक्षणं, धुनोतु आकंपयतु। कीदृशं चिकुरनिकुरुम्बं, तुलितदलितेन्दीवरवनं, आदौ तुलितं, पश्चाद्दलितं इन्दीवराणां वनं येन तत्, आदौ तुलारूढं तुलितं, पश्चाद्विमृश्य दलितं, तन्निष्कृष्यास्य सौन्दर्यं हृतमिति भावः। पुनः कीदृशं, घनं निबिडं, पुनः कीदृशं, स्निग्धं चिक्कणं, पुनः श्लक्ष्णं, सुन्दरं, अत्रानुरूपशंकोदयमित्याह — तस्मादहमिति शङ्के। इति किं, बलमथनवाटीविटपिनां सुमनसः अस्मिन् चिकुरनिकुरुंबे वसन्ति। बलस्य दैत्यस्य मथनः, तस्य वाटी नन्दनवनं तस्या विटपिनो वृक्षाः तेषां सुमनसः पुष्पाणि। किं कर्तुं, यदीयं सहजं स्वाभाविकं सौरभ्यं उपलब्धुं प्राप्तुं, अतो हेतोः दलितेन्दीवरवनम्। न हि इन्दीवरवनेषु एषां वार्ता भवतीति तद्रूपदलनमित्यर्थः॥ ४३॥

## पदार्थचन्द्रिका

केशपाशं स्तौति — धुनोत्विति। हे शिवे तत्तव चिकुरनिकुरुम्बं नोऽस्माकं ध्वान्तमन्धतमसं अज्ञानमित्यर्थः। धुनोतु कम्पयतु नाशयत्वित्यर्थः। प्रार्थने लोट्। तुलितं सदृशीकृतं दलितं विकसितं इन्दीवरवनं येन तत्। घनं च तत्स्निग्धं श्यामं चेति तथा। यद्वा घनवत्स्निग्धं च तत् श्यामं चेति तथा। तत्रोत्प्रेक्षते यदिति। यदीयं यत्संबन्धि, त्यदादीनि चेति वृद्धसंज्ञायां वृद्धाच्छ इति छस्तस्येयादेशे यदीयमिति रूपसिद्धिः। सुरभिणो भावः सौरभ्यं, सहजं स्वाभाविकमुपलब्धुं प्राप्तुं बलमथनवाटीविटपिनां इन्द्रोपवनशाखिनां सुमनसः पुष्पाणि वसन्त्यस्मिन् चिकुरनिकुरुम्बे, मन्ये अहमेवं तर्कयामीत्यर्थः। एतेन एवंभूतभवानीकेशपाशध्यानं मोहं निवर्तयतीति सूचितम्॥ ४३॥

## डिण्डिमभाष्यम्

धुनोत्विति। तुलितदलितेन्दीवरवनं, तुलितमुपमितं दलितेन्दीवरवनं, विकसितनीलोत्पलकाननं येन तत्तथोक्तं, घनस्निग्धश्लक्ष्णं, घनं निबिडितं, स्निग्धं चिक्कणं, श्लक्ष्णं सुखस्पर्शं, तव भवत्याः, यत् चिकुरनिकुरुम्बं कचबृन्दं, हे शिवे, नोऽस्माकं ध्वान्तमज्ञानतिमिरं धुनोतु दूरीकरोतु। धूञ् कम्पने इति धातुः स्वादिकः, स्वादिभ्यः श्नुः इति विकरणप्रत्ययः। तदेव विशिनष्टि, यदीयं सौरभ्यं, यदीयं यत्संबन्धि सौरभ्यं

स्वभावसिद्धं परिमलं सहजं अप्रयत्नसंपादितं, उपलब्धुं प्राप्तुं, बलमथनवाटीविटपिनां, बलमथन इन्द्रः, तस्य वाटी नन्दनवनं, तत्रत्यानां विटपिनां, सन्तानकल्पवृक्षपारिजातादीनां सुमनसः पुष्पाणि। 'स्त्रियः सुमनसः पुष्पं' इत्यमरः। अस्मिन्केशपाशे वसन्तीति मन्ये इति वाक्यार्थः। त्रिभुवनलोभनीयसौरभ्ययुक्तानामपि कल्पवृक्षादिसुमनसां परिमलोल्लासादतिशयिताः, भगवत्याः केशपाशसहजसंपदः इत्यर्थः॥ ४३॥

गोपालसुन्दरी

धुनोत्विति। तव चिकुरनिकुरुंबं अलकसमूहः, नोऽस्माकं ध्वान्तमज्ञानं धुनोतु नाशयतु। कीदृशं, तुलितमुपमितं दलितं विकसितं यदिन्दीवरं नीलकमलं तस्य वनं येन तत्, घनं निबिडं च तत्स्निग्धं चिक्कणं चेति तत्, सूक्ष्ममस्थूलम्। यदीयं चिकुरनिकुरुम्बीयं सहजं स्वाभाविकं सौरभ्यमुपलब्धुं शिक्षितुं, बलमथन इन्द्रः, तस्य वाटी नन्दनवनं तत्र ये विटपिनः कल्पवृक्षाः, तेषां सुमनसः पुष्पाणि, तस्मिन् चिकुरनिकुरुंबे वसन्तीत्यहं मन्ये। विष्णुपक्षे — शिवे कल्याणनिमित्तमिति धुनोतुक्रियान्वितं, वसतिक्रियान्वितं वा। शिवाया इः कामो यस्मादिति व्युत्पत्त्या विष्णुसंबोधनं वा॥ ४३॥

आनन्दलहरीटीका

धुनोत्विति — हे शिवे तव चिकुरनिकुरुम्बं, केशसमूहः नोऽस्माकं ध्वान्तं तमोऽविद्यामिति यावत्, धुनोतु नाशयतु। कीदृशं, तुलितमुपमितं दलितानां विकसितानां इन्दीवराणां नीलोत्पलानां वनं येन तत्तथा, वनमुपमेयं न तूपमानमिति भावः। घनं निबिडं च तत् स्निग्धं चिक्कणं चेति। तथा घनमिति पाठे भिन्नं पदम्। सूक्ष्मं स्थौल्यरहितं, श्लक्ष्णमिति पाठे मृदुमित्यर्थः। यदीयं यस्य चिकुरस्य संबन्धि सौरभ्यं सुरभितां सहजं स्वाभाविकं उपलब्धुं शिक्षितुं, बलमथनस्येन्द्रस्य वाटी उद्यानं, तत्संबन्धिनो ये विटपिनो वृक्षाः पारिजातादयस्तेषां सुमनसः पुष्पाणि, श्लेषात् शोभनमनस्काश्च, अस्मिन् चिकुरनिकुरुम्बे वसन्ति वासं कुर्वन्ति। गुरुकुलस्थब्रह्मचारिण इत्यहं मन्ये। चिकुरः कुन्तलो वाल इति, तथा निकुरुम्बं कदम्बक इति, तथा स्त्रियः सुमनसः पुष्पमिति, तथा विटपी पादपस्तरुरित्यमरः॥ ४३॥

[1]तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरी-
परीवाहस्रोतःसरणिरिव सीमन्तसरणिः।

[1] तनोत्विति पूर्वार्धं उत्तरार्धतया वहन्तीत्युत्तरार्धः पूर्वार्धतया च इतरपाठेषु दृश्यते।

**वहन्ती सिन्दूरं प्रबलकबरीभारतिमिर-**
**[1]द्विषां बृन्दै[2]र्बन्दीकृतमिव नवीनार्ककिरणम् ॥ ४४ ॥**

தநோது க்ஷேமம் நஸ்தவ வதந ஸௌந்தர்ய லஹரீ-
1 1 1 3 1

பரீவாஹ ஸ்ரோதஸ்ஸரணிரிவ ஸீமந்த ஸரணி: ।
1 1 1

வஹந்தீ ஸிந்தூரம் ப்ரபல கபரீபார திமிர-
1 3 1 3 1 3 4 1

த்விஷாம் ப்ருந்தைர் பந்தீக்ருதமிவ நவீநார்க கிரணம் ॥
3 3 3 3 3 1 1 1 1

करे हमारा मंगल तेरी मुखसौन्दर्य तरंगनिःसृत-
परीवाह स्रोत की धार सी सिन्दूरांकित मांग! बृहत् ।
कबरीभारांधकार अरिगण से बन्दीकृत जन विह्वल
भूली भटकी बालभानुकिरण सी सोहती वह फिलमिल ॥

लक्ष्मीधरा

तनोतु विस्तारयतु दिशत्वित्यर्थः। क्षेमं योगक्षेमात्मकं शुभं नः अस्माकं, तव वदनसौन्दर्यलहरीपरीवाहस्रोतस्सरणिरिव—इदमेकं पदम्, 'इवेन सह नित्यसमासो विभक्त्य-लोपः पूर्वपदप्रकृतिस्वरत्वं च, इति नियमात्। वदनं मुखं तस्य सौन्दर्यस्य सुन्दरभावस्य लहरी उत्सेकः तस्य परीवाहः प्रवाहः 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति परिशब्देकारस्य दीर्घः। तत्र स्रोतस्सरणिरिव स्रोतसः प्रवाहस्य सरणिरिव मार्ग इव स्थिता, सीमन्तसरणिः सीमन्ते धम्मिल्लमध्यप्रदेशे सरणिः सरण्याकाराकारिता रेखा, वहन्ती धारयन्ती, सिन्दूरं सिन्दूरपरागं, प्रबलकबरीभारतिमिरद्विषां प्रबलाः केशपाशात्मना लब्धजन्मतया प्रबलाः ते च ते कबरीभाराः, त एव केशपाशनिचया एव तिमिराणि तान्येव द्विषः शत्रवः तेषां, बृन्दैः समूहैः, बन्दीकृतं बन्दीग्रहणावरुद्धम्। इव इति सम्भावनायाम्। कविप्रौढोक्तिस्थले इवशब्दस्य सम्भावनैवार्थः, अन्यत्र सादृश्यमिति विवेकः। नवीनार्ककिरणं नवीनः प्रातः-कालीनः अर्कः सूर्यः तस्य किरणः तम्॥ अत्रेत्थं पदयोजना — हे भगवति! तव वदन-सौन्दर्यलहरीपरीवाहस्रोतस्सरणिरिव स्थिता तव सीमन्तसरणिः प्रबलकबरीभारतिमिरद्विषां बृन्दैः बन्दीकृतं नवीनार्ककिरणमिव सिन्दूरं वहन्ती नः क्षेमं तनोतु। अत्र उत्प्रेक्षालङ्कारः;

1 त्विषां 2 मन्दीकृतमिव

सीमन्तसरणेः स्रोतस्सरणित्वेनोत्प्रेक्षणात् । न चायमुपमालङ्कारः; स्वतस्सिद्धमनुपजीव्य कविप्रौढोक्तिमेवोपजीव्योत्थानात्; न च सम्भावनापरस्येवशब्दस्य समासविधानाभावात् उपमैवेति वाच्यम्। 'इवेन सह' इति सामान्येनोभयार्थस्य इवशब्दस्य ग्रहणात् उभयत्रापि समासोऽस्तीति ध्येयम्। उत्तरार्धेऽप्युत्प्रेक्षालङ्कारः; सिन्दूरस्य सूर्यकिरणात्मना सम्भावनात् + कबरीभारस्य तिमिरत्वारोपणात् रूपकालङ्कारोऽपि वर्तते । एवमनयोरङ्गाङ्गिभावेन सङ्करः; सम्भावनां प्रति रूपकस्य निमित्तत्वात् ॥ ४४ ॥

### सौभाग्यवर्धनी

सीमन्तं स्तौति -- वहन्तीति । तव सीमन्तसरणिः सिन्दूरं वहन्ती, कीदृशं सिन्दूरं प्रबलकबरीभारः तस्य तिमिरोपमा त्विट्, तासां बृन्दैः बन्दीकृतमिव नवीनार्ककिरणं तादृशम्। कीदृशी तव सीमन्तसरणिः। तव वदनसौन्दर्यलहरी सौन्दर्यातिरेकपरंपरा तस्याः परीवाहः उच्छ्वासः, उत्तरोत्तरानुवर्तनं यत्र स्रोतःसरणौ, सा स्रोतःसरणिः सौन्दर्यरूपमहानद्याः अनवरतानुवर्तमानधाराकारपरंपरोन्मेषवती प्रवाहसरणिरित्यर्थः। नः क्षेमं तनोतु । लब्धपरिपालनं क्षेमः। पूर्वजन्मपुण्यैस्तव चरणांबुजभक्तिर्लब्धा तां प्रतिपालयतात्। अत्रोपमाद्वयेन भगवत्याः सीमन्तसौन्दर्यातिरेकः प्रतिपादितः । तेन जगदम्बिकाविषयभक्तिलक्षणभावः परिपुष्यते ॥ ४४ ॥

### अरुणामोदिनी

सीमन्तं वर्णयति। तनोत्विति। हे देवि! वदनस्य मुखस्य या सौन्दर्यलहरी लावण्यकल्लोलः 'महत्स्वल्लोलकल्लोल ... ... लहरिकेत्यपि' इत्यमरः। तस्य परीवाहः निर्गममार्गः जलोच्छ्वासः परिवहन्त्येभिरिति वा परितो वाहयतीति वा परीवाहः, 'वह प्रापणे' इति धातोः 'हनश्च' इति घञ्। 'उपसर्गस्य घञमनुष्ये' इति दीर्घः। 'परीवाहो जलोच्छ्वासे महीभृद्योग्यवस्तुनि' इति विश्वः। तस्य स्रोतसो वेगस्य सरणिः पद्धतिरिव स्थिता । वेगनिर्गच्छदत्युत्कटकल्लोलमार्ग इव स्थितेत्यर्थः। 'स्रोतोऽम्बुवेग इन्द्रिये' 'सरणिः पद्धतिः पद्या' इति चामरः। यत्तूक्तं, परीवाहः प्रवाहः स्रोतोद्वारं, लहरी उन्मेष इति तत्कोशविरोधादुपेक्ष्यम्। सौन्दर्यलहरी सौन्दर्यातिरेकपरंपरा, तस्याः परीवाहः उत्तरोत्तरानुवर्तनं, यत्र स्रोतःसरणौ सौन्दर्यमहानद्यामिति केचित् । किं च सिन्दूरं रक्तद्रव्यविशेषं, प्रबलकबरीभारतिमिरद्विषां प्रकृष्टकेशकलापरूपतमोवैरिणां बृन्दैः बन्दीकृतं कारागृहवेशितं, नवीनार्ककिरणं बालसूर्यमयूखमिव, प्रौढार्ककिरणस्य सिन्दूरोपमानर्हत्वात् नवीनपदप्रयोगः। वहन्ती धारयन्ती । तव भगवत्याः सीमन्तसरणिः केशपद्धतिः। शकन्ध्वादित्वात्पररूपम्। नोऽस्माकं, क्षेमं कुशलं, तनोतु विस्तारयतु,

करोत्वित्यर्थः । अत्र सीमन्तसरणिसिन्दूरानुयोगिनोः स्रोतःसरणिबन्दीकृतनवीनार्ककिरण-स्योत्प्रेक्षाऽलङ्कारयोः अनुप्रासेन सह संसृष्टिः ॥ ४४ ॥

### आनन्दगिरीया

वहन्तीति । हे शिवे परमेश्वरि, तव सीमन्तसरणिः नोऽस्माकं क्षेमं तनोतु । सीमन्तस्य सरणिः वीथी, नोऽस्माकं सेवकानां केतूदयबुद्ध्या अनिष्टजननी तथा मा भूदिति क्षेमपदव्यङ्ग्यम् । अथवा प्राचीनपुण्यपरिपाकेन लब्धां भक्तिं परिपालयतु । नेदं सिन्दूरं, किन्तु प्रबलकबरीत्वेन प्रत्यहं बहवः सूर्यमण्डलकिरणाः प्रबला एव तिमिरमण्डलं नाशयन्ति । अत्र तु प्राचीनवैरमनुसृत्य बह्वीभिः तिमिरद्विड्भिः एको बालकसूर्यकिरणो बन्दीकृत्य स्थापितः । यो यस्य वैरी स छलादिना वैरिणः पुत्रादिकं बन्दीकरोति । एतल्लोकरीतिरुत्प्रेक्ष्यते । निरतिशयसौन्दर्यसलिललहरीभिराकण्ठमापूरितस्य तव वदनपद्माकरस्य परीवाहस्रोतःसरणिरिव । यथा तडागादौ सलिलसमूहैर्निभृते परिपूर्णे पाटनेनोत्पथतया जलगमनेन रिक्तं भवति । तज्जलरक्षार्थं लोकाः सूक्ष्मकुल्यां परीवाहं कुर्वन्ति । तेन शनैः शनैः स्वल्पजले निर्गम्यमाने सति जलाधिक्याभावेनाल्पतया पाटनं न भवतीति सेतुभागस्य जलपूर्णः तडागो गम्भीरतया शोभते । तदुक्तं "उपार्जितानामर्थानां त्याग एव हि रक्षणम् । तडागोदरसंस्थानां परीवाह इवांभसः ।" एवं तव वदनपद्माकरं सदा सौन्दर्यामृतपूर्णं स्थापयितुं विधिना निर्मिता परीवाहस्रोतःसरणिः स्रोतोमार्गः इत्यनेनारुणं सिन्दूरं न भवति, किन्तु सुभगसौन्दर्य-सलिलधारापरीवाहात्मना निर्गतेति । अत्रोपमाद्वयोल्लक्षणेन न कस्यापि भवति मुखमण्डलस्य काप्युपमानोपमेयता । तेन यथा क्षुधातृष्णावैत्यसिकादिना परिभूयमानेषु बालेषु, अनन्यो-पायतया जनकजननीमुखमवलोकमानेषु वात्सल्योपलालनादिभावमाविर्भावयन्ति जनकजननी-प्रभृतयः, तथा बालतुल्येष्वस्मास्वपि जगन्मातुः श्रीभुवनेश्वर्याः वदनमण्डलमालोकमानेषु वात्सल्यलालनादिभावोल्लासो भवत्विति । वहन्ती सिन्दूरेत्यादिपद्यस्य रहस्यार्थः – वहन्ती सिन्दूरं लज्जा, प्रबलकबरीभारतिमिरद्विषां वृन्दैर्बन्दीकृतमिव वह्निवासिनीस्वरूपम् । नवीनार्क नमः । ओं ह्रीं वह्निवासिन्यै नमः ॥ ४४ ॥

### तात्पर्यदीपिनी

हे जननि, तव सीमन्तसरणिः सीमन्तपद्धतिः नोऽस्माकं उपासकानां क्षेमं तनोतु विस्तारयतु । किंविधा सीमन्तसरणिः, सिन्दूरं वहन्ती दधाना । अत्रोत्प्रेक्षामाह–किमिव, नवीनार्ककिरणमिव, नवीनश्चासावर्कश्च तस्य किरणः, तं बालार्ककिरणमिव वहन्ती, किंविधं

बालार्ककिरणं, प्रबलकबरीभारतिमिरत्विषां बृन्दैर्बन्दीकृतं, प्रबलतरो दृढतरः, यः कबरीभारः वेणीसमूहः, तदेव तिमिरमन्धकारं, तस्य त्विषः, तासां बृन्दैः बन्दीकृतं बन्दिगृहे गृहीतम्। अयमाशयः – तेजस्तिमिरयोः स्वाभाविको वैरसंबन्धः, तत्र तेजसा तिमिरं लुप्यते, न तु तिमिरेण तेजः। तत्रश्च तिमिरं प्रबलाश्रयमपि अरिजयाय नालं भवति। प्रबलकबरीभाराश्रयं कृत्वा, उद्गच्छन्तं रविकिरणमेकं गृहीत्वा, बहुकिरणग्रहणे पराजयभीत्यैवैकं बन्दीचकार। अत्राप्ययमाशयः – उत्प्रेक्षायामुत्प्रेक्षान्तरम्। घनकबरीभारतिमिरमित्येका, अन्यत्र तिमिरेण बन्दीकरणमिति। पुनरुत्प्रेक्षामाह–कीव, तव वदनसौन्दर्यलहरीपरीवाहस्रोतःसरणिरिव, वदनस्य सौन्दर्यं, तस्य लहरी कलापः, तस्याः परीवाहः प्रसरः, तस्य स्रोतः प्रवाहः तस्य सरणिः पद्धतिरिव। अतस्तव वदनसौन्दर्यप्रवाह ऊर्ध्वं निःसृत इव॥ ४४॥

पदार्थचन्द्रिका

अथ सीमन्तवर्णनमाह – वहन्तीति। हे जननि, तव सीमन्तसरणिः, सीमन्तः सरणिरिव सीमन्तसरणिः, नोऽस्माकं क्षेमं कल्याणं तनोतु विस्तारयतु। सीमन्तसरणिं विशिनष्टि– वदनसौन्दर्याणां लहरी परंपरा तस्याः परीवाहः परिवहनं तस्य स्रोतःसरणिरिव निर्झरपद्धतिरिव। उपसर्गस्य घञ्यमनुष्ये बहुलमिति सूत्रेण परिशब्दस्य दीर्घता। पुनर्विशिनष्टि – सिन्दूरं वहन्ती धारयन्ती, कबरी भार इव कबरीभारः, कबरीभारस्तिमिरमिव कबरीभारतिमिरं तस्य प्रबलानां त्विषां बृन्दैः समूहैः बन्दीकृतं नवीनार्ककिरणमिव, प्रातःकालीनसूर्यकिरणमिव। कबरी केशपाशः। अबन्दी बन्दीकृतः बन्दीकृतस्तम्॥ ४४॥

डिण्डिमभाष्यम्

सिन्दूरं नागरजःपुञ्जं वहन्ती धारयन्ती, प्रबलकबरीभारतिमिरत्विषां प्रबलस्य निबिडस्य कबरीभारस्य केशपाशस्य तिमिरभूतस्य, त्विषां नीलिमसम्पदाम्, बृन्दैः समूहैः, बन्दीकृतं वैरिपसम्पर्काद्विजित्य गृहीतम्, नवीनार्ककिरणं बालादित्यकरप्रकरमिव वर्तमानं सिन्दूरं धारयन्ती, सीमन्तसरणिः द्विधाकृतकेशपाशमध्यरेखापद्धतिः, नः अस्माकम्, क्षेमं कल्याणम्, तनोतु करोतु। 'तनु विस्तारे' इति धातुः करणार्थ एव प्रसिद्धः। कीदृशी सा, तव भवत्याः, वदनसौन्दर्यलहरीपरीवाहस्रोतःसरणिरिव, वदनस्य मुखस्य, सौन्दर्यलहर्या लावण्यपूरस्य परीवाहस्रोतः परीवाहार्थं यत्स्रोतस्तस्य सरणिः मार्ग इव। परीवाहो नाम तडागादेरन्तः सलिलपूरभरणे कूलभङ्गभीत्या पार्श्वद्वये समधिकजलस्य बहिर्निस्सारणम्। अत्रापि भगवत्या मुखसौन्दर्यस्यात्यन्तपरिपूरितत्वं परीवाहशब्देन ध्वन्यते॥ ४४॥

### गोपालसुन्दरी

वहन्तीति – तव सीमन्तसरणिः द्विधाकृतकेशपाशमध्यरेखापद्धतिर्नोऽस्माकं क्षेमं कल्याणं तनोतु विस्तारयतु। कीदृशी? सिन्दूरं वहन्ती। कमिव? प्रबलो बलिष्ठो यः कबरीभारः केशपाशः स एव तिमिरमन्धकारं तस्य त्विषां कान्तीनां, 'द्विषाम्' इति पाठे तिमिररूपशत्रूणां बृन्दैः समूहैर्बन्दीकृतं विजित्य गृहीतं नवीनार्ककिरणमिव बालादित्यमयूखमिव। पुनः कीदृशी? सीमन्तसरणिः तव वदनस्य या सौन्दर्यलहरी लावण्यतरङ्गस्तस्य परीवाहार्थं यत्स्रोतस्तस्य सरणिः प्रणालिकेव; परीवाहो नाम उद्धृतजलबहिःसारणम्। तेन सौन्दर्यस्या-त्यन्तपरिपूरितत्वं गम्यते। विष्णुपक्षे – मन्दां रक्षणकाले नवीनार्ककिरणं वहन्ती तव सीमन्त-सरणिः सीमन्तसदृशं वर्त्म मम क्षेमं तनोतु, कमिव? सिन्दूरमिव अत एव सीमन्तपदोपादानम्। "ऊर्ध्वाभ्यां मणिवंशनादनपरं मुद्रालसत्पुस्तकं पाशश्चाङ्कुशमैक्षवं धनुरिषुं पौष्पं दधानं करैः। गोपीगोपपरीवृतं सुरतरोर्मूले स्थितं हारिणं सावेशं मणिभूषणोज्ज्वलप्रभुं कृष्णं भजे सुन्दरम्"। इति सुन्दरीगोपालध्यानाभिप्रायेण वेदं सङ्गमनीयम्॥ ४४॥

### आनन्दलहरीटीका

वहन्तीति। तव सीमन्तस्य द्विफालबद्धकेशविन्यासविशेषस्य सरणिः, फालोर्ध्व-रेखारूपा नोऽस्माकं क्षेमं कल्याणं तनोतु विस्तारयतु। कीदृशी, सिन्दूरं लोहितचूर्णविशेषं वहन्ती धारयन्ती। अत्रोत्प्रेक्षते, प्रबलं प्रकृष्टबलयुक्तं यत्कबरीभाररूपं तिमिरं तमः, तस्य त्विषां कान्तीनां बृन्दैः समूहैः। द्विषामिति पाठे तिमिररूपाणां शत्रूणामित्यर्थः। बन्दीकृतं बलाद्बध्वा स्थापितं, नवीनस्य बालस्य अर्कस्य सूर्यस्य किरणं तेजः। इव शब्द उत्प्रेक्षायाम्। तदुक्तं – उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृश इति। तथा तव वदनस्य या सौन्दर्यलहरी लावण्यतरङ्गः, तस्याः परीवाहस्य बहिः प्रवहणस्य स्रोतःसरणिरिव स्रोतोमार्ग इव प्रणालि-केवेति यावत्। परीवाहो नाम, पूर्णस्य कूपादेरुपरि प्रवाहगमनम्। तेन वदनरूपस्य अरुणकान्तिकृत्रिमजलाशयस्य परिपूर्णस्य सीमन्तप्रणालिकया सिन्दूरव्याजेन कान्तिप्रवाह एव वहतीत्युत्प्रेक्षा। तदुक्तं – अन्यथैव स्थिता वृत्तिश्चेतनस्येतरस्य वा। अन्यथोत्प्रेक्ष्यते यत्र तामुत्प्रेक्षां विदुर्बुधा इति॥ ४४॥

**अरालैः स्वाभाव्यादलि[1]कलभसश्रीभिरलकैः**
**परीतं ते[2] वक्त्रं [3]परिहसति पङ्केरुहरुचिम्।**

---

1 कुलहस 2 यद्वक्त्रं तव हसति 3 परिभवति

दरस्मेरे यस्मिन् दशनरुचिकिञ्जल्करुचिरे
सुगन्धौ माद्यन्ति स्मर[1]दहनचक्षुर्मधुलिहः ॥ ४५ ॥

-- அராளைஸ் ஸ்வாபாவ்யாத் அளிகலப ஸஶ்ரீபிரலகை:
4 1 1 4 4 1
பரீதம் தே வக்த்ரம் பரிஹஸதி பங்கேருஹருசிம் ।
1 1 1 11 1 1 1 1 1
தரஸ்மேரே யஸ்மிந் தசநருசி கிஞ்ஜல்க ருசிரே
3 3 1 1 1 1
ஸுகந்தௌ மாத்யந்தி ஸ்மரதஹந சக்ஷுர் மதுலிஹ: ॥
3 4 3 1 3 1 4

सहज कुटिल अलिपोतों सी सुन्दर अलकों से परिशोभित
तेरा वदन पंकजों की भी हँसी उडाते है श्रीयुत।
दरविकसित दन्तकान्ति केशरयुत सुरभित जिसकी आभा
मदनान्तक नेत्र मधुप को मदमत्त बनाती है शोभा ॥

लक्ष्मीधरा

अरालैः कुटिलैः, स्वाभाव्यात् स्वभावतः, अलिकलभसश्रीभिः अलिकलभैः भ्रमरपोतैः सश्रीभिः समानाभैः। समासान्तविधेरनित्यत्वात् कप्रत्ययाभावः। अलकैः चूर्णकुन्तलैः, परीतं परितः इतं परीतं व्याप्तं ते तव, वक्त्रं परिहसति, तत्तुल्यं न भवतीत्यर्थः। पङ्केरुहरुचिं पङ्केरुहस्य कमलस्य रुचिं सौभाग्यं, दरस्मेरे दरमीषत् स्मेरो विकासः यस्य तादृशे, यस्मिन् दशनरुचिकिञ्जल्करुचिरे दशनानां दन्तानां रुचय एव किञ्जल्काः केसराः तैः रुचिरे सुभगे, सुगन्धौ सुपद्मगन्धौ, माद्यन्ति नन्दन्ति। स्मरदहनचक्षुर्मधुलिहः स्मरदहनस्य स्मरारेः ईश्वरस्य चक्षूंष्येव मधुलिहः भ्रमराः। जितमन्मथस्यापि वदनसौन्दर्यदर्शनं मादनहेतुरिति किमु वक्तव्यं त्वद्वदनसौन्दर्यस्वरूपमिति भावः। अत्रेत्थं पदयोजना—हे भगवति! स्वाभाव्यादरालैः अलिकलभसश्रीभिः अलकैः परीतं ते वक्त्रं पङ्केरुहरुचिं परिहसति। दरस्मेरे दशनरुचिकिञ्जल्क-रुचिरे सुगन्धौ यस्मिन् स्मरदहनचक्षुर्मधुलिहो माद्यन्ति। अत्र उपमालङ्कारः, पङ्केरुहरुचिं परिहसतीत्यनेन वक्त्रस्य कमलसादृश्यप्रतीतेः। अलिकलभसश्रीभिरित्यत्र उपमालङ्कारः। अनयो-रङ्गाङ्गिभावेन सङ्करः। दशनरुचिकिञ्जल्करुचिरे इत्यत्र रूपकालङ्कारः, दशनरुचीनां किञ्जल्कत्वे-

---

1 मथन

नारोपणात्। स्मरदहनचक्षुर्मधुलिहः इत्यत्र रूपकालङ्कारः; चक्षुषां मधुलिट्त्वेनारोपणात् अनयोरङ्गाङ्गिभावेन सङ्करः, सङ्करद्वयस्य संसृष्टिः॥ ४५॥

## सौभाग्यवर्धनी

सामान्यतो वदनं स्तौति—अरालैरिति। अरालैः कुटिलैः, स्वाभाव्यात् सहज-कुटिलैरित्यर्थः। अलिकुलहसश्रीभिः, अलिकुलं हसन्तीत्यलिकुलहसाः, एतादृश्यः श्रियो येषां ते, तादृशैरलकैः परीतं व्याप्तं ते वक्त्रं परिहसति पङ्केरुहरुचिम्। दरस्मेरे ईषद्धासोन्मेषे, दशनरुचिकिञ्जल्करुचिरे, दन्तपंक्तिकान्तिकेसरमनोहरे यस्मिन् वदनकमले सुगन्धौ माद्यन्ति स्मरमथनचक्षुर्मधुलिहः मदनारिनेत्रमधुकराः। यत्स्वभावकुटिलैरलकैर्वेष्टितं दन्तपंक्तिरूपकेसरं मनोहरं सुगन्धि स्मरारिनेत्रमधुकरोन्मादकं तव वक्त्रं, म्लायमानकेसरां बहुहास्ययोग्यां पङ्कोद्भवां मदनचापमौर्वीभूतमधुकरतोषकरीं पङ्केरुहरुचिं हसन्तीति किमाश्चर्यम्। किं बहुना? तव वदनपरीवारा अलकाः पङ्केरुहरतमलिकुलं हसन्ति। वक्त्रं पङ्केरुहं हसति। उभयैस्तुच्छीकृता पद्मरुचिः। अहो तव वदनमहिमा परोत्कर्षासहकुटिलसंसर्गज इति ध्वनिः। लोकेऽपि यः कुटिलचेष्टितः स ईषद्दन्तविकासेन मन्दस्मितेन स्वस्मात् हीनं हसति। 'परीतं यद्वक्त्रं तव हसति पङ्केरुहरुचिं' इति क्वचित्पाठः। तदनुसारेणायमर्थो योजनीयः सर्वोऽपि॥ ४५॥

## अरुणामोदिनी

वदनं वर्णयति—अरालैरिति। स्वभाव एव स्वाभाव्यं, स्वार्थे ष्यञ्। तस्मात् स्वाभाव्यादेव, अरालैः कुटिलैः, अलिकलभैः भ्रमरपोतैः, समाना श्रीः शोभा येषां तैः बालभृङ्गसमानैरित्यर्थः। समासविधेरनित्यत्वात् कप्रत्ययाभावः। यद्यप्यत्र कलभशब्दोऽयं 'कलभः करिशावकः' इति वचनात् करिशावकवचनः, तथापि विशेषवाचिना सामान्य-लक्षणेत्यदोषः। यद्वा, अलतीत्यलिः, कलतीति कलः, स चासौ भश्च अलिकलभः। 'भौ भ्रमरे देवः' इति कोशः। तेन सश्रीभिरलकैः, चूर्णकुन्तलैः परीतं व्याप्तम्। ते भवत्याः, वक्त्रं मुखं, वक्तीति वक्त्रमिति व्युत्पत्त्या पङ्केरुहादुत्कटमित्यर्थः। पंके रोहतीति पङ्केरुहम्। उत्पत्तितोऽप्यतिलघुरिति भावः। इगुपध इत्यादिना कप्रत्ययः। तत्पुरुषे कृति इति सप्तम्या अलुक्। तस्य रुचिं शोभां हसति। स्मयेन तत्सदृशं भवतीत्यर्थः। कुतस्त-दित्यत आह—दरेति। दरस्मेरे ईषत्स्मयवति, दशनरुचयो दन्तकान्तयः, किंजल्काः केसरा इव तैः रुचिरे सुन्दरे, शोभनो गन्धो यस्य स सुगन्धिः, तस्मिन्, 'गन्धस्येदुत्पूतिसुसुरभिभ्यः,' इतीकारः। यस्मिन्नुक्तकमलधर्मविशिष्टे वदने स्मरमथनस्य स्मरारेः, त्यक्तविषयाभि-

लाषस्यापीति भावः। चक्षूंष्येव मधुलिहो मधुकराः, माद्यन्ति हृष्यन्ति। जितमदनस्याप्यनुरागोत्पादकत्वात् त्वदीयं वक्त्रं पद्मशोभां हसतीत्यर्थः। अत्र स्पर्धत्यादीनां सादृश्यवाचकत्वाद्धसतीत्यत्रोपमा। सा चालिकुलमेत्याद्युपमानुप्राणिता दशनाद्यवयवेषु किञ्जल्कादिकथनात्सावयवेति द्वयोः सङ्करः। तेन च जितमदनस्यापि रुद्रस्य, ईक्षणाभिलाषोत्पादनकथनेन देवीमुखस्यालौकिकं सर्वलोकातिशायि सौन्दर्यं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः॥ ४५॥

आनन्दगिरीया

अरालैरिति। हे मातः, ते वक्त्रं तव वक्त्रं पङ्केरुहरुचिं परिहसति। अमृतस्य सर्वस्वमादाय सौन्दर्यसागरं मथित्वा विधिमदनारम्भौ भूयसा यत्नेन तव वदनमण्डलं निरमायि। पङ्केरुहं तु पङ्कात्कर्दमात् पृथ्वीजलमलरूपात् स्वयं जातं निर्गतं, तदन्यकामिनीनां वदनसाधारण्यमात्मन्यभिमन्य स्वयं त्वद्वदनेन परिहसितम्। अन्यच्च रात्रिदिनविभागेन संकोचशालि तत्, तव वदनं तु कालत्रयेऽपि प्रकाशमानम्। किं च पङ्केरुहं चन्द्रकान्तिसंसर्गेण निमीलति। इदं तु ललाटस्थमलयजबिन्द्वात्मना चन्द्रेण निरन्तरं सेव्यमानमतिमनोहरोल्लासि। तदुक्तं— 'शिलीमुखकलामुखस्फुरदपाङ्गपातान् अमून् सुधारसरसाधिकान् मधुमुचो वचोविभ्रमान्। गिरीन्द्रतनये मिलन्मलयजस्य बिन्दुर्भवन्भवन्मुखमुपाश्रितो रजनिजानिरभ्यस्यति'॥ किञ्च पङ्केरुहं कदाचिद्गलन्मकरन्दमेदुरं भवति, तदा मधुकरैः सेव्यते; नान्यदा। इदं तु न तथेत्याह— किंलक्षणं तत्, अलकैरलकरूपैः भ्रमरैः सदा परीतं व्याप्तं, किंलक्षणैरलकैः स्वाभाव्यादरालैर्वक्रैः। अयं भावः—स्वभावेन वक्राः कुटिलाश्चञ्चला भ्रमरा अलकात्मना निरन्तरं तत्र वसन्ति, सदा परमरमणीयता तत्रास्ति। अलकानां कौटिल्येन सौभाग्यमपि वर्णितम्। पुनः किंलक्षणैः, अलिकुलं स्पर्धयितुं कुलहसा, एतादृशी श्रीः शोभा येषां ते। तथा चालकैर्भ्रमरकुलं परिहसितं, वक्त्रेण पङ्केरुहमित्युभाभ्यामुभे तुच्छीकृते इत्यर्थः। अतिशयान्तरमाह—यस्मिन्दृष्टमात्रेण स्मरमथनचक्षुर्मधुलिहो माद्यन्ति। न हि पङ्केरुहदर्शनमात्रेण मधुकरा माद्यन्ति, किन्तु मकरन्दमास्वाद्य। इदं तु दर्शनमात्रेण। दग्धमदनस्य महादेवस्य परमयोगीश्वरस्यापि चक्षूंषि उन्माद्यन्ति। यस्मिन्दरस्मेरे ईषद्विकसिते, पुनः कीदृशे दशनरुचिकिञ्जल्करुचिरे देदीप्यमानदन्तकेसरकमनीये, पुनः किंभूते सुगन्धौ। चक्षुरित्युपलक्षणं, घ्राणरसनचक्षुर्मधुलिहः इति। दरस्मेरेत्यनेन चक्षुः, दशनरुचिकिञ्जल्केत्यनेन रसना, सुगन्धौ घ्राणेन्द्रियं माद्यति। तथा च मदनमथननयनमधुकरानुन्मादयत् तव वक्त्रं मदनचापमौर्वीभूतमधुकरावलीमानन्दयन्ती कमलरुचिमुपहसतीति किं चित्रम्? अत्र यस्मिन्निति यच्छब्दः तत्संबन्धितच्छब्दप्रापणार्थः। परीतं तद्वक्त्रं तव हसति पङ्केरुहरुचिमिति पठन्ति। अरालैरिति पद्यस्य रहस्यार्थः— स्वाभाव्यात् लज्जा, अरालैः

क्लिन्ना, अलिकुलहसश्रीभिरलकैः नित्यमदद्रवे ह्रीं ऐं, पङ्केरुहरुचिः क्रों, स्मरमथनचक्षुः लज्जा, अन्यत्प्रोक्तक्रमेण ज्ञात्वा बोद्धव्यम्। वज्रेश्वरी – ह्रीं क्लिन्ने क्रों नित्यमदद्रवे ह्रीं स्वाहा। ४५॥

तात्पर्यदीपिनी

अरालैरिति – हे मातः, ते तव वक्त्रं, पङ्केरुहस्य रुचिः कान्तिः, तां परिहसति उपहसति। कथंभूतं वक्त्रं, अलकैः परीतं व्याप्तं, किंविधैः स्वाभाव्यात् स्वभावेनारालैः वक्रैः पुनः किंविधैः अलिकलभसश्रीभिः, अलीनां भ्रमराणां कलभाः पोतका बालकास्तैः समाना श्रीः शोभा येषां तैस्तथोक्तैः, किंविधं पङ्केरुहं, अरालैर्भ्रमरैः स्वाभाव्यात् जातिस्वभावेन परीतं व्याप्तं, पुनः किंविधं, मुखे दरस्मेरे, दर ईषत् स्मेरो हास्यं यस्मिंस्तत्तथा। ततोऽपि मुखे आधिक्यमाह–यस्मिन्मुखे स्मरदहनचक्षुर्मधुलिहो माद्यन्ति, स्मरस्य दहनो नाशको हरः तस्य चक्षूंष्येव मधुलिहो भ्रमराः, कथंभूते तस्मिन, दशनरुचिकिञ्जल्करुचिरे, दशनानां दन्तानां या रुचिर्दीप्तिः सैव किञ्जल्कः, तेन रुचिरं सुन्दरं तस्मिन्, पुनः किंविधे, सुगन्धौ शोभनगन्धके। अत्रेदमद्भुतं – यः स्मरदहनः मदनमारकः तस्यापि दृष्टयोऽत्र मुखे माद्यन्तीति महदाश्चर्यमित्यर्थः। ४५॥

पदार्थचन्द्रिका

अथ भवान्या वदनं वर्णयति – अरालैरिति। यत्तदोर्नित्यसंबन्धात्, अत्र तत्पदमध्याहृत्य योज्यम्। हे जननि तव वक्त्रं पङ्केरुहरुचिं परिहसति। सजातीयं सजातीयेन परिहस्यते। तच्चात्रोभयोः साजात्यं, तस्मादत्र पङ्केरुहसादृश्यं लक्ष्यते। वक्त्रं विशिनष्टि, स्वाभाव्यात् स्वभावात्, अरालैः कुटिलैः अलकैश्चूर्णकुन्तलैः परीतं व्याप्तं, अलीनां भ्रमराणां कलभकाः शावकाः तद्वत् श्रीर्येषां तैः। वक्त्रं पुनर्विशिनष्टि, यस्मिन्वक्त्रे दरस्मेरे अस्मिन् ईषद्धसने दरं ईषत् स्मयत इति दरस्मेरं तस्मिन्, स्मरं मथ्नातीति स्मरमथनो महादेवः, तस्य चक्षूंषि मधुलिह इवेति स्मरमथनचक्षुर्मधुलिहः, माद्यन्ति हृष्यन्ति। निमित्ते सप्तमीयम्। यस्मिन्निमित्ते, स्मरमथनचक्षुषां हर्षो भवतीत्यर्थः। यद्वा विषये सप्तमीयम्। यस्मिन्वक्त्रे भासमाने स्मरमथनचक्षुर्मधुलिहो हृष्यन्तीत्यर्थः। शोभनो गन्धो यस्य तत्सुगन्धि, तस्मिन्। यदानुक्तपुंस्कं पुंवद्वेति पक्षे पुंवद्भावान्नुम्। दरोऽव्ययं मनागर्थ इति मेदिनीकरः। ४५॥

डिण्डिमभाष्यम्

स्वाभाव्यात् स्वभावादित्यर्थः 'चतुर्वर्णादिभ्य उपसङ्ख्यानम्' इति स्वार्थे ष्यञ्प्रत्ययः। अरालैः वक्रैः, अलिकलभसश्रीभिः भ्रमरबालवत्सशोभाभिः, अलकैः चूर्णकुन्तलैः,

परीतं परिवेष्टितम्, ते तव, वक्त्रं पङ्केरुहरुचि कमलश्रियं, परिहसति विडम्बयति। यतः कमलमेव जातं मुखं ततस्तद्धर्ममाह। दरस्मेरे ईषद्विकसिते दशनरुचिकिञ्जल्करुचिरे दन्तकान्ति-केसरभासुरे, सुगन्धौ शोभनपरिमलयुक्ते, यस्मिन् वदने, स्मरमथनचक्षुर्मधुलिहः महादेव-चक्षुर्भृङ्गाः, माद्यन्ति मत्ता भवन्ति। स्मरमथनशब्देन योगिनोऽपि महादेवस्योन्मादकारित्वात् भगवत्या वदनसौन्दर्यातिशयो व्यज्यते ॥ ४५ ॥

## गोपालसुन्दरी

अरालैरिति – अलकैः कुन्तलैः परीतं वेष्टितं ते तव वक्त्रं मुखं कर्तृ पङ्केरुहरुचि कमलकान्ति परिभवति तिरस्करोति। कीदृशैरलकैः? स्वाभाव्यात् स्वभावात् अरालैः कुटिलैः। 'चातुर्वर्ण्यादिभ्यः उपसङ्ख्यानम्' इति स्वार्थे ष्यञ्। कुटिलैर्वेष्टितस्य परपरिभावकत्वमुचितमेवेति ध्वनिः। पुनः कीदृशैः? अलिकुलं भ्रमरसमूहं हसन्तीति अलिकुलहसा श्रीः शोभा येषां तैः। 'अलिकलभसश्रीभिरिति' पाठे अलिबालकसमानकान्तिभिरित्यर्थः, यस्मिन् वक्त्रे स्मरमथनस्य शम्भोश्चक्षूंष्येव मधुलिहो भ्रमरा माद्यन्ति। कीदृशे? दरस्मेरे ईषद्विकसिते दशनरुचयो दन्तकान्तयः एव किञ्जल्कानि केसराणि, तैः रुचिरे मनोज्ञे सुगन्धौ सौरभशालिनि। विष्णुपक्षे – हे स्मरमथन! स्मरेण गोपीर्मथ्नातीत्यर्थः। यद्वा भक्तानां स्मरं मथ्नातीत्यर्थः। यस्मिन् चक्षुर्मधुलिहो माद्यन्ति इत्यन्वयः ॥ ४५ ॥

## आनन्दलहरीटीका

अरालैरिति। स्वाभाव्यात्स्वभावात्, चातुर्वर्ण्यादिवत् स्वार्थे तद्धितः। अरालैः कुटिलैः अलिकुलं भ्रमरसमूहः तं हसतीति अलिकुलहसा श्रीः कीर्तिर्येषां तैः, अलिकलभ-सश्रीभिरिति पाठे भ्रमरबालकसमानकान्तिभिरित्यर्थः। एतादृशैरलकैश्चूर्णकुन्तलैः परीतं वेष्टितं, ते तव वक्त्रं मुखं कर्तृ, पङ्केरुहरुचि पद्मकान्ति परिभवति। कुटिलैः परिवृतेन पराभवः क्रियत एवेति ध्वनिः। यस्मिन्वदने दरस्मेरे ईषद्विकसिते सति स्मरमथनस्य शिवस्य चक्षूंष्येव मधुलिहो भ्रमरा माद्यन्ति मत्ता भवन्ति अतिहृष्टा भवन्तीत्यर्थः। स्मरमथनेन निर्जितकामस्य योगिनोऽपि कामवशतासंपादनात्, अतिसौन्दर्यमिति ध्वनिः। कीदृशे – दशनरुचयो दन्तकान्तय एव किञ्जल्काः केसराणि तैः रुचिरे मनोहरे सुगन्धौ सौरभयुक्ते। अत्र सुगन्धिपदस्य भाषित-पुंस्कत्वाद्विभाषया पुंवद्भावः। एतेन वदनस्य पद्मरागत्वं व्यंग्यम् ॥ ४५ ॥

**ललाटं लावण्यद्युतिविमलमाभाति तव यत्**
**द्वितीयं तन्मन्ये मकुट[1]घटितं चन्द्रशकलम् ।**
**विपर्यासन्यासा[2]दुभयमपि संभूय [3]च मिथः**
**सुधालेप[4]स्यूतिः परिणमति राकाहिमकरः ॥ ४६ ॥**

லலாடம் லாவண்ய த்யுதி விமலமாபாதி தவ யத்
1 3 1 4 1 1 1
த்விதீயம் தந்மந்யே மகுட கடிதம் சந்த்ர சகலம் ।
2 1 1 1 1 4 1 1 1 3 1
விபர்யாஸ ந்யாஸாதுபயமபி ஸம்பூய ச மிதः
1 3 4 1 4 1 2
ஸுதாலேப ஸ்யூதிः பரிணமதி ராகா ஹிமகரः ॥
4 1 1 1 1 1 1

चन्द्रकान्ति तरलित निर्मल तव फालदेश मुझको लगता
चन्द्रशकल सा माँ! दूसरा मकुटमण्डित जग भग करता ।
दोनों को उलट पलट कर अमृत रस से जोडे जाये
तो राका हिमकरबिंब की पूर्णता को वे पा जायें ॥

**लक्ष्मीधरा**

ललाटं निटिलं, लावण्यद्युतिविमलं लावण्यं तारल्यमेव द्युतिर्ज्योत्स्ना तया विमलं स्निग्धं, आभाति आ समन्ताद्भाति। तव यत् द्वितीयं तत् मन्ये शङ्के। मकुटघटितं किरीटकलितं चन्द्रशकलं चन्द्रार्धखण्डम्, विपर्यासन्यासात्—ललाटं अवाकोणं वर्तते; चन्द्रशकलं ललाटस्योपरि ऊर्ध्वभृङ्गं वर्तते; उभयोर्विपर्यासन्यासः भृङ्गचतुष्कसम्मेलनं, तस्मात् उभयमपि ललाटचन्द्रशकले, सम्भूय मिलित्वा, चकारोऽतिशयवाची। मिथः अन्योन्यं सुधालेपस्यूतिः सुधायाः अमृतस्य लेपः विलेपनं तस्य स्यूतिः सीवनं यस्य सः अमृतरससान्द्र इत्यर्थः। परिणमति तादूप्यं भजति, तदाकाराकारित इत्यर्थः। राकाहिमकरः राकायां पूर्णिमायां हिमकरश्चन्द्रः। अत्रेत्थं पदयोजना— हे भगवति! तव यत् ललाटं लावण्यद्युतिविमलं आभाति तत् मकुटघटितं द्वितीयं चन्द्रशकलं मन्ये। यत् (यस्मात्कारणात्) उभयमपि विपर्यासन्यासात् मिथः सम्भूय च सुधालेपस्यूतिः राकाहिमकरः परिणमति॥ पूर्णिमायां सम्पूर्णता

1 शशिखण्डस्य शकलं, 2 उभयकृतसन्धानमयितः, 3 मिलितः, 4 स्फूर्तिः

चन्द्रस्य कथं भवेत्, किरीटे अर्धदेहाविष्टतया चन्द्रः परिदृश्यत इति पूर्णिमाचन्द्रं निमित्तीकृत्य ललाटमुत्प्रेक्ष्यते ॥ अत्र उत्प्रेक्षालङ्कारः, ललाटस्य अर्धचन्द्रत्वेनोत्प्रेक्षणात् । यद्वा—द्वितीयार्धे अतिशयोक्तिरलङ्कारः, राकाहिमकरस्य ललाटकिरीटघटितचन्द्ररेखाद्वितयनिर्माणासम्बन्धेऽपि सम्बन्धकथनात् । अत्र कविकल्पितवस्तुवृत्तसौन्दर्ययोरभेदाध्यवसायः । उत्प्रेक्षातिशयोक्त्योः अङ्गाङ्गिभावेन सङ्करः । 'अध्यवसायव्यापारप्राधान्ये उत्प्रेक्षा' 'अध्यवसितप्राधान्ये त्वतिशयोक्तिः' । सूत्रद्वयस्यायमर्थः— अध्यवसायविषयभूते अध्यवसानक्रियारूपस्य व्यापारस्य प्राधान्यं यत्र तत्रोत्प्रेक्षोत्थानम् । यदा अध्यवसायविषयभूते अध्यवसितस्यैव प्राधान्यं प्रतीयते, तदा अतिशयोक्तेरुत्थानम् । अध्यवसायो नाम—निश्चयज्ञानम् । तच्च कविप्रौढोक्तिसिद्धम्, न वास्तवम् । उत्प्रेक्षास्तु अध्यवसानक्रियाप्राधान्यस्य द्योतकाः । 'मन्ये शङ्के ध्रुवम्' इत्येवमादयः स्वरूपोत्प्रेक्षाद्योतकाः । हेतूत्प्रेक्षायां हेतुरेव, फलोत्प्रेक्षायां फलमेव द्योतकम् । अत एव स्वरूपोत्प्रेक्षायां इवाद्यभावे हेतुफलयोरसम्भवात् अतिशयोक्त्युत्प्रेक्षयोः भेदाभावात् सैवोत्प्रेक्षा अतिशयोक्तौ अन्तर्भूतेति दिङ्मात्रमुक्तम् ॥

### सौभाग्यवर्धनी

भालं स्तौति—ललाटमिति । तव ललाटं लावण्येन कान्त्या च विमलं तथा आभाति । तव द्वितीयं मुकुटशशिखण्डस्य शकलमिति मन्ये । किरीटकोटिस्थस्य अर्धचन्द्रस्य परमर्धमित्यर्थः । तत्र हेतुमाह—विपर्यासेति । विपर्यासन्यासात् व्यत्यासतो न्यासाद्धेतोः । विपर्यासे हेतुमाह उभयेति । यत उभयकृतसन्धानमयितः प्रापितः, व्यत्यासं विना समीकृत्य सन्धाने कृते, सुधालेपस्फूर्तिः सुधासान्द्रविभ्रमः, राकाहिमकरः पूर्णचन्द्रः परिणमति । चन्द्रबिम्बमध्ये कस्तूर्या रेखां विधाय द्विधा निर्भिद्य, अर्धेन मुकुटशशिखण्डं अर्धेन च ललाटं विहितवान् कश्चिदनादिपुरुषः । अत एव भ्रूच्छलेन ललाटार्धचन्द्ररेखा दृश्यत इति भावः । उत्प्रेक्षोपमादिष्वलङ्काराणां सङ्करोऽत्र यथासंभवं ज्ञेयः ॥ ४६ ॥

### अरुणामोदिनी

फालं वर्णयति—ललाटमिति । हे देवि ! लवणः कान्तिविशेषः, लवण एव लावण्यं, स्वार्थे ष्यञ् । 'मुक्ताफलेषु छायायाः तरलत्वमिवान्तरा । प्रतिभाति यदंगेषु तल्लावण्यमिहोच्यते' इत्युक्तलक्षणम् । तदेव द्युतिः कान्तिः, तया विमलं निर्मलं, तव ललाटं फालदेशः, आभाति चन्द्रखण्डवत्प्रकाशत इति यत्, तस्मात्कारणात्, एतत्सादृश्यात्, मकुटघटितं किरीटखचितं चन्द्रशकलं द्वितीयमभवत्, ललाटात्मकमेकं शकलं, मकुटस्थितं तु

चन्द्रशकलं द्वितीयं शकलं तदित्यर्थः। उत्प्रेक्षाफलमाह–विपर्यासन्यासात्, अवाक्कोणोर्ध्वकोणयोः ललाटचन्द्रशकलयोः, पूर्वावस्थातो वैपरीत्येन भृङ्गचतुष्टयैक्यसंपादनपूर्वकं न्यासात् निक्षेपात्, भृङ्गचतुष्टययोजनादित्यर्थः। उभयमपि ललाटं चन्द्रशकलं चेति द्वे अपि, मिथः, अन्योन्यं, संभूय मिलित्वा, कस्तूरीपङ्केन सन्धानितं सदित्यर्थः। सुधैवालेपः लेपनद्रव्यं प्रकाशीकरणार्थकं सुधारूपं द्रव्यं, तस्य स्यूतिः, सेचनं यस्य सः, अमृतरसलिप्तः सन्नित्यर्थः। 'सेचने सन्ततौ स्यूतिः' इति रत्नमाला। राकाहिमकरः पूर्णिमाचन्द्रः सन् परिणमति। पूर्णचन्द्ररूपरूपान्तरं प्राप्नोतीत्यर्थः। न हि भवल्ललाटकिरीटावस्थितचन्द्रशकलादन्यो राकाचन्द्रोऽस्तीत्यभिप्रायः। असंबन्धे संबन्धरूपातिशयोक्त्युत्प्रेक्षयोः संकरः॥ ४६॥

आनन्दगिरीया

सप्तमीं नित्यामाह–ललाटमिति। हे मातस्तव ललाटं लावण्यद्युतिविमलं सौन्दर्यकान्तिविमलं आ समन्ताद्भाति शोभते। तत्प्रायेण मुकुटशशिखण्डस्य मुकुटस्थचन्द्रार्धस्य द्वितीयमवशिष्टं यदर्धं तदिदमिति मन्ये। तत्र हेतुमाह–विपर्यासन्यासादुभयमपि तत्सुधालेपस्फूर्तिः परिणमति राकाहिमकरः। ऊर्ध्वमुखस्य मुकुटचन्द्रार्धस्य, अधोमुखस्य च ललाटरूपचन्द्रार्धस्य विपर्यासन्यासात् वैपरीत्येन सन्निवेशात्, उभयं कृतसन्धानं मुखविन्यासं विना समीकृत्य परस्परसंमुखतया सन्धानं चेद्भवति, तदा सुधालेपस्फूर्तिः राकाहिमकरः परिणमति, शरत्कालीनपूर्णिमासंबन्धि चन्द्रमण्डलं संपूर्णं भवति। तदा ज्ञायते तस्यैवार्धद्वयमपि। तथा च संपूर्णचन्द्रमण्डलं खण्डयित्वा तव ललाटं निर्मितमिति भावः। किंलक्षणा सुधालेपस्फूर्तिः सुधालेपस्य स्फूर्तिः। एतावता खण्डद्वयसन्धाने निर्यासस्थानीयं चिक्कणद्रव्यमुपन्यस्तम्। अपिना विरोधाभासः। कृतसन्धानं चाखण्डत्वेन परिणमति। ललाटं लावण्येत्यादिश्लोकस्य रहस्यार्थः–ललाटमिति। ललाटं लज्जा। द्युति दूत्यै। विमलं शिव। मन्ये नमः। ह्रीं शिवदूत्यै नमः॥ ४६॥

तात्पर्यदीपिनी

ललाटमिति। हे मातः तव ललाटमाभाति यत् तदहं मुकुटशशिखण्डस्य द्वितीयं शकलं मन्ये। मुकुटे शशिखण्डं चन्द्रशकलं, तस्य द्वितीयशकलं तेन च ललाटं शङ्के। कथंभूतं ललाटं, लावण्यद्युतिविमलं लावण्यस्य द्युतिः कान्तिः तया विमलं निर्मलम्। अतोत्प्रेक्षते, उभयमपि शकलं विपर्यासन्यासान्मिथः संभूय राकाहिमकरः परिणमति किम्? प्रतिफलति किम्? विपरीताचरणेन कोणाभ्यां कोणसंयोगादित्यर्थः, किंविधः, राकाहिमकरः सुधालेपस्फूर्तिः, सुधाया लेपः तद्वत् उज्ज्वला स्फूर्तिर्यस्य स तथा॥ ४६॥

### पदार्थचन्द्रिका

अथ ललाटं स्तौति ललाटमिति । हे जननि, तव यद्विमलं निर्मलं ललाटमाभाति तन्मुकुटे शशिखण्डं मुकुटशशिखण्डं तस्य, द्वितीयं शकलं शकलस्वरूपं मन्ये तर्कयामि । ललाटं विशिनष्टि, लवणा त्विट् विद्यते यस्य तल्लवणं, अर्श आदिभ्योऽच् । लवणस्य भावो लावण्यं ललाटे शोभा सा द्युतिर्दीप्तिः यस्मिंस्तत् । शशिखण्डद्वयमुत्प्रेक्ष्यते, विपर्यासन्यासो वैपरीत्यघटना तस्माद्धेतोरुभयमपि संभूय परस्परं संप्राप्य राकाहिमकरः पौर्णमासीचन्द्रः परिणमति मृद्घटवत् । उभयत्र सामानाधिकरण्यम् । खण्डद्वयमेलनेन चन्द्ररूपपरिणामे योगदर्शनं स्यात्, तन्निवारणार्थं हिमकरं विशिनष्टि, मिलितः एकरूपतां प्राप्त इत्यर्थः । तत्र हेतुमाह—सुधालेपेन स्यूतिः सेचनं यस्मिन् सः । उभयमपि संभूय च मिथ इति पाठे स्पष्ट एवार्थः । सुधालेपस्फूर्तिरिति पाठे सुधालेपेन स्फूर्तिरेकत्वज्ञानं यस्मिन् राकाहिमकरे इति व्याख्येयम् । भूः प्राप्तयर्थोऽत्र । लवणं नदीत्विषोः स्त्रियामिति मेदिनीकरः ॥ ४६ ॥

### डिण्डिमभाष्यम्

लावण्यद्युतिविमलं सौन्दर्यकान्तिनिर्मलं, तव भवत्या यल्ललाटं भालदेशः आभाति, समन्ताद्दीप्तिं प्राप्नोति, तत्ते ललाटं तव मुकुटशशिखण्डस्य किरीटेन्दुभित्तस्य द्वितीयं शकलं अर्धं मन्ये । तत्र हेतुमाह—विपर्यासन्यासात् ऊर्ध्वमुखस्य चन्द्रशकलस्य अधोमुखस्य तव ललाटस्य च विपर्यासन्यासात् वैपरीत्येन निवेशात् उभयमपि तद्द्वयमपि सम्भूय सङ्घट्टनमिलितं यदा भवति, तदा सुधालेपस्फूर्तिः खण्डयोरेकीभावो यत्र स तथोक्तः, राकाहिमकरः पूर्णिमाचन्द्रः परिणमति संपद्यते । मन्येपदमुत्प्रेक्षाद्योतकमध्याहारार्थम् ॥ ४६ ॥

### गोपालसुन्दरी

ललाटमिति—तव ललाटं लावण्येन सौन्दर्येण द्युत्या कान्त्या च विमलं यदाभाति तत् मुकुटशशिखण्डस्य द्वितीयं शकलं खण्डं मन्ये । तत्र हेतुमाह—विपर्यासन्यासात् उभयमपि सम्पद्य मिलितं यदा भवति तदा सुधालेपेनामृतलेपेन स्यूतिः खण्डयोरेकीभावो यत्र स राकाहिमकरः पूर्णिमाचन्द्रः परिणमति सम्पद्यत इत्यर्थः । विष्णुपक्षेऽप्येवम् । मुकुटशशिखण्डोऽत्रालङ्करणरूपः ॥ ४६ ॥

### आनन्दलहरीटीका

ललाटमिति । लावण्येन स्निग्धतया द्युतिः शोभा यस्य तादृशं विमलं निर्मलं तव ललाटं यदाभाति शोभते, तन्मुकुटसंबन्धि शशिखण्डस्यार्धचन्द्रस्य द्वितीयं शकलं मन्ये तर्कयामि । तदेवोपपादयति—उभयं ललाटं मुकुटशशिखण्डं च विपर्यासेन मिथो विमुखयोः

सांमुख्यरूपेण न्यासादर्पणात् संभूय सन्धाय मिलितं सत् राकाहिमकरः पूर्णिमाचन्द्रः परिणमति उत्पद्यते। अपिः संभावनायाम्। कीदृशः सुधाया अमृतस्य चूर्णस्य वा लेपेन स्यूतिः सीवनं एकीभावो यस्य तथा खण्डद्वयमभिमुखं योजयित्वा सुधालेपश्चेत्क्रियते तदा पूर्णचन्द्रो भवतीति संभाव्यत इति भावः॥ ४६॥

भ्रुवौ भुग्ने किंचिद्भुवनभयभङ्गव्यसनिनि
त्वदीये नेत्राभ्यां मधुकररुचिभ्यां [1]धृतगुणम्।
धनुर्मन्ये[2] सव्येतरकरगृहीतं रतिपतेः[3]
प्रकोष्ठे मुष्टौ च स्थगयति निगूढान्तरमुमे[4]॥ ४७॥

ப்ருவெள புக்நே கிஞ்சித் புவந பய பங்க வ்யஸநிநி
4 43 1 13 4 4 4 3
த்வதீயே நேத்ராப்யாம் மதுகர ருசிப்யாம் த்ருத குணம்।
1 3 1 4 41 14 4 1 3
தநுர் மந்யே ஸவ்யேதர கரக்ருஹீதம் ரதிபதே:
4 1 1 3 1 1 1 1
ப்ரகோஷ்டே முஷ்டௌ ச ஸ்தகயதி நிகூடாந்தரமுமே॥
1 1 2 1 1 2 3 1 3 4 1

त्रिभुवनभयभंग व्यसनिनि! उमे! तेरी किंचित् कुंचित
भौंहों का भौंरों सम चितवनवाले नेत्रों को ज्यायुत।
रतिपतिका वामकर गृहीत मूठ पहुंचे से आच्छादित
मध्यभागवाला चाप सा मानता हूँ सुजनाराधित॥

लक्ष्मीधरा

भ्रुवौ भ्रूवल्ली, भुग्ने अवाक्छ्रङ्गतया वलयिते, किंचित् नात्यन्तं भुवनभयभङ्गव्यसनिनि! भुवनानां जगतां भयस्य उपद्रवस्य भङ्गे नाशकरणे व्यसनं तदेकप्रवणता अस्या अस्तीति भुवनभयभङ्गव्यसनिनी तस्यास्सम्बुद्धिः। त्वदीये भवत्सम्बन्धिन्यौ, नेत्राभ्यां अक्षिभ्यां, मधुकररुचिभ्यां मधुकराणां भ्रमराणामिव रुचिः शोभा ययोस्ताभ्यां मधुकराकारकारिताभ्यामित्यर्थः। धृतगुणं धृतः सम्पादितः गुणः ज्यावल्ली यस्य तत्, धनुः चापं, मन्ये शङ्के। सव्येतरकरगृहीतं सव्यो दक्षिणः तदितरो वामः स चासौ करश्च तेन गृहीतम्।

1 धृतगुणे 2 मन्येऽसव्ये 3 रतिपतिः 4 मिमे

सव्येतरशब्देन एकेनैव हस्तेन सर्वदा धृतम्, न तु बाणप्रयोगार्थमिति सूच्यते। रतिपतेः मन्मथस्य, प्रकोष्ठे मणिबन्धे, मुष्टौ अंगुलीनां ग्रन्थौ, अयं मुष्टिशब्दः अनुशासनवशात् स्त्रीलिङ्गोऽपि प्रयोगबाहुल्यात् पुल्लिङ्गतामापन्नः, गण्डूषशब्दवत्। यथा 'उदरं परिमाति मुष्टिना' इति नैषधे प्रयोगः। स्थगयति स्थगनं छादनं कुर्वति सति, निगूढान्तरं निगूढे अन्तरे मौर्वीदण्डयोर्यस्य तत्, उमे! हे पार्वति। अत्रेत्थं पदयोजना—हे उमे! भुवनभयभङ्गव्यसनिनि! त्वदीये किञ्चिद्भुग्ने भ्रुवौ मधुकररुचिभ्यां नेत्राभ्यां धृतगुणं रतिपतेः सव्येतरकरगृहीतं प्रकोष्ठे मुष्टौ च स्थगयति सति निगूढान्तरं धनुर्मन्ये। अत्र भ्रुवौ धनुरिति रूपकम्, भ्रुवोः धनूरूपेण निरूपणात्। अत एव द्विवचनैकवचनयोः सामानाधिकरण्यं भ्रुवौ धनुरिति। अयं भावः—विशेषणं चतुर्विधम्, व्यावर्तकविशेषणं, उपरञ्जकविशेषणं, उपलक्षणविशेषणं, उपाधानविशेषणं चेति। तत्र व्यावर्तकविशेषणं नीलोत्पलमित्यादौ, तत्र नैल्यस्य श्वेतादिव्यावर्तकत्वात्। उपरञ्जकविशेषणं द्विविधम्—उपरञ्जनस्य आरोपविषयगोचरत्वेन, आरोप्यमाणगोचरत्वेन चेति। तत्र आरोपविषयगोचरत्वं 'मुखं चन्द्रः' इत्यादौ। तत्र चन्द्रत्वेन मुखस्य उपरञ्जनम्। अत एव लिङ्गभेदेऽपि विशेषणविशेष्यभावः सिद्धः। 'स हृदुच्चकुचौ भवन्' इति नैषधे। तत्र सः इति कलश एकः, द्वौ कुचौ, उभयोर्विशेषणविशेष्यभावः। आरोप्यमाणविशेषणं तु—'तिरस्करिण्यो जलदा भवन्ति'। अत्र आरोप्यमाणतिरस्करिणीत्वं आरोपविषयात्मतया स्थितम्। एतच्च पूर्वमेव निरूपितम्। उपलक्षणविशेषणम्—काकवद्देवदत्तगृहम्। पृथक् स्थिते(तिः)हि धर्मिणि उपलक्षणमिति उपलक्षणविदः। काकत्वादिजात्याविष्टस्यैव उपलक्षणत्वात् विशेषणतो भेदः। उपाधानविशेषणम्—'रक्तं स्फटिकम्' इति। धर्मात्मना उपाधायकत्वात् उपलक्षणतो भेदः। व्यावर्तकत्वात् नीलोत्पलादेर्व्यावृत्तिः। अत्रेदं तत्त्वम्—उपरञ्जकविशेषणस्थले—'मुखं चन्द्रः' 'कलशः स्तनौ' 'भ्रुवौ धनुः' इत्यादिस्थले—चन्द्रकलशाद्युपरञ्जकविशेषणानि आश्रितलिङ्गसङ्ख्यान्येव मुखादिकं स्तनादिकं च विशिंषन्तीति, न स्तनादेः मुखादेर्वा लिङ्गं सङ्ख्यां वा भजन्ते। नियतलिङ्गतया विशेष्यनिघ्नत्वाभावात् इतरेभ्यो विशेषणेभ्यो व्यावृत्तिः। मन्येशब्दप्रयोगात् सम्भावनोत्थानात् उत्प्रेक्षालङ्कारोऽपि। अनयोः अनुसृष्टिः, अपृथक्स्थितयोः अलङ्कारयोः अङ्गाङ्गिभावात्। अपृथक्स्थितयोः अलङ्कारयोरङ्गाङ्गिभावोऽनुसर्जनम्, पृथक्स्थितयोस्तु सङ्करः इत्यालङ्कारिकरहस्यम्। अतिशयोक्तिरपि, भ्रूमध्यनासिकामध्ययोः मुष्टिप्रकोष्ठस्थगितत्वेनाध्यवसानात्। अत्र नासिकायाः सव्येतरकरत्वेनारोपणप्रतीतेः रूपकालङ्कारो ध्वन्यते। यद्वा—सव्येतरकरत्वेन नासिकायाः अध्यवसानप्रतीतेः अतिशयोक्तिः। अनयोः सन्देहसङ्करः॥ ४७॥

### सौभाग्यवर्धनी

भ्रुवौ स्तौति भ्रुवाविति। हे भुवनभयभङ्गव्यसनिनि जगद्भयभञ्जनशीले, तव भ्रुवौ किञ्चिद्भुग्ने ईषत्कुटिले, मधुकररुचिभ्यां नेत्राभ्यां धृतगुणे भृङ्गायमाणनेत्रमौर्वीके, 'धनुः पौष्पं मौर्वी मधुकरमयी' (श्लो. ६) इति प्रागुक्तं धनुर्मन्ये। पुष्पचापं जाने इत्युत्प्रेक्षालङ्कारः। सव्येतरकरगृहीतं वामकरगृहीतं धनुः रतिपतेः प्रकोष्ठे मुष्टौ च स्थगयति आच्छादयति। मुष्टौ धनुर्मध्यं, प्रकोष्ठे ज्यामध्यं स्थगयति। निगूढान्तरं यथा भवति तथा प्रकोष्ठमुष्टिव्यवधानात् धनुर्मध्यं च न दृश्यत इत्यर्थः। भ्रूगतद्वैविध्यदर्शनेऽयं हेतुः। वस्तुतः एकमेव धनुः, न द्वे। निह्नवे पोषके हेत्वलङ्कारः॥ ४७॥

### अरुणामोदिनी

भ्रुवौ वर्णयति भ्रुवाविति। भुवनानां लोकानां भयस्य भङ्गे भञ्जने व्यसनं त्वरा, विशेषेणासनं निराकरणं वा, अस्या अस्तीति भुवनभयभङ्गव्यसनिनी, तस्याः संबुद्धिः हे भुवनभय-भङ्गव्यसनिनि, भीतभक्तजनत्राणदीक्षिते देवि! उक्तं चैतत्, 'इत्थं यदा यदा बाधा दानवोत्था भविष्यति। तदा तदावतीर्याहं करिष्याम्यरिसंक्षयम्।' इति। महेशस्य प्रतिज्ञा-मात्रं, जगद्भयनिवारणं तु भवदधीनमित्याशयः। अत एव ओः महेशस्य, मा लक्ष्मीः उमा। महेशस्य लक्ष्मीरूपत्वात् सर्वसौख्यविजयादिहेतुस्त्वमेवेति ध्वनिः। तस्याः संबुद्धिः, हे उमे, किञ्चिदीषत् भुग्ने ईषन्नम्रे, ईषन्नम्रत्वं च लोकभयकृत्सु कोपाविर्भावसूचनार्थम्। अत एव भुवनेत्यादिसंबोधनसार्थक्यमिति ध्येयम्। त्वदीये भवत्संबन्धिन्यौ, भ्रुवौ भ्रूलते, 'मध्ये दृग्भ्यां भ्रुवौ स्त्रियाम्' इत्यमरः। मधुकरयोः रुचिरिव रुचिर्ययोस्ताभ्यां इति निदर्शना। मधुकरनिभाभ्यां नेत्राभ्यां धृतो गुणो मौर्वी यस्मिन्, तत् नेत्रमधुकरवशबद्धमित्यर्थः। सव्येन वामेन, इतरेण दक्षिणेन चेत्यर्थः। 'वामदक्षिणयोः सव्यं' इत्यमरः यद्वा सव्याद्दक्षिणेन तदितरेण करेण हस्तेन गृहीतं स्वीकृतं, जगद्विजेतुं अधिज्यताकरणाय वामेन हस्तेन मध्यदेशे गृहीतं अधिज्यं कृत्वा वा बद्धमित्यर्थः। 'प्रकोष्ठे कूर्परादधः' इत्यमरः। अत एव मुष्टौ अंगुलीसंहतौ च स्थगयति, प्रकोष्ठे ज्यामध्यभागं, मुष्टौ धनुर्मध्यं चाच्छादयति सति. निगूढान्तरमाच्छादितान्तरालम्। अत्र 'हस्ते मुष्ट्या तु बद्धया' 'निष्कनिष्ठेन मुष्टिना' इति प्रयुञ्जतोऽमरस्य मुष्टिशब्दस्योभयलिङ्गताभिमतेः, 'उदरं परिमाति मुष्टिना' इति नैषध-प्रयोगाच्च नास्य पुलिङ्गतायां विवादः। रतिपतेः मदनस्य धनुः चापं मन्ये। मन्मथधनुषो मधुकरमौर्वीकत्वेषन्नम्रत्वप्रसिद्धेः, ईषदरालभवदीयदृङ्मध्यभागे मधुकरनिकाशनेत्रनालीकवाम-हस्तस्थगनतिरोहितमध्यभागं मन्मथधनुरेवेति तर्कयामीत्यर्थः। भ्रुवौ मदनचाप एव, नेत्रे च

रज्जुरूपमधुकरे, तन्मध्ययोः तिरोधानेन विश्लेषप्रतिभानं च, जगद्विजयोद्यताधिज्यताव-न्मदनसव्यहस्तीयप्रकोष्ठमुष्टिभ्यामाच्छादनमेव नान्यदित्यभिप्रायः। अत्र द्वित्वैकत्ववतोर्भ्रूधनुषोः सदृशीकरणं, अस्य स्तनादित्वेन द्विवचनत्वात्, 'स तद्युग्मकुचोऽभवत्' इत्यादिप्रयोगदर्शनात् साध्वेवेति मन्तव्यम्। अत्र देवीभ्रुवोर्मन्मथचापत्वाध्यवसायाद्व्यञ्जकप्रयोगात् वाच्योत्प्रेक्षा। तथा च देव्या जगद्विपदुद्धरणसाचिव्ययोगेनैतयोः मधुकरसादृश्योक्तिपूर्वत्वोक्तिविशेषणगतकाव्य-लिङ्गमध्यभागस्थगनोत्प्रेक्षाभ्यां संकीर्णा भुवनपदस्थेन परिकरेण संसृज्यते। तथा च देव्या निरन्तरं जगद्विपदुद्धरणप्रवलत्वं वस्तु ध्वन्यत इत्येवकारेण वस्तुध्वनिः॥ ४७॥

### आनन्दगिरीया

भ्रुवाविति। हे भुवनभयभङ्गव्यसनिनि, त्वदीये भ्रुवौ कन्दर्पस्य धनुर्मन्ये। भुवनस्य यद्भयं, तस्य भङ्गः, तत्र व्यसनं यस्याः सा तथा, तस्याः संबोधनम्। इदं किञ्चिद्भुग्ने इति विशेषणं सार्थयितुम्। भ्रूभङ्गस्तु किञ्चित्कार्यमुद्दिश्य क्रियते। तथा च भुवनभयभङ्गाय भ्रुवौ भुग्नाविति। नेत्राभ्यां धृतगुणे, नेत्राभ्यां संपादितो गुणः प्रत्यञ्चा ययोस्ते। किंलक्षणे भ्रुवौ किञ्चिद्वक्रे। एतावता भ्रुवौ धनुः, नेत्रे मौर्वी। कामकोदण्डमौर्वी तु मधुकरमयीति वर्तत इत्यत आह—मधुकररुचिभ्यां भ्रमरसदृशाभ्याम्। तर्हि धनुषः प्रत्यञ्चायाश्च मध्यभागः कथं न दृश्यत इत्यत आह—सव्येतरकरगृहीतं सत् रतिपतिप्रकोष्ठे मुष्टौ च स्थगयति। सव्यो दक्षिणस्तदितरो वामः करः। धनुर्हि वामकरेणैव ध्रियते। तेन धृतं, मुष्टौ धनुर्मध्यभागं स्थगयति, प्रकोष्ठे ज्यायाः मध्यभागं स्थगयति। अत एव तयोर्मध्यभागो बहिर्न दृश्यते। धनुषि वामहस्तेन गृह्यमाणे मध्यभागो मुष्ट्या स्थगितो भवति। प्रत्यञ्चायास्तु प्रकोष्ठेन स्थगितो भवत्येव। अत एव निगूढान्तरं निगूढमन्तरं मध्यभागो यस्य तत्। अत्रापह्नुति-रलङ्कारः प्रकृतयोर्भ्रुवोर्निषेधेनान्यस्य कामधनुषः समर्थनात्। अन्यो हेतुरलङ्कारः इत्याह—तन्न, हेतुरलङ्कारस्तु तथा भूषको न भवतीति शास्त्रे नादृतः। तथा च संमतं, 'हेतुमता सह हेतोरभिधानं अभेदतो हेतुरिति। आयुर्घृतमित्यादिरूपः स कदाचिद्भूषणतां नार्हति, अवैचित्र्यादतो न लक्षितः। ननु तर्हि 'अविरलकमलविकाशः सकलालिमदश्च कोकिलानन्दः। रम्योऽयमेति संप्रति लोकोत्कण्ठाकरः कालः' इत्यादौ कलितार्थ इति चेन्न, अत्र कोमलानु-प्रासमहिम्ना काव्यलिङ्गमेवालङ्कारो न तु हेतुरिति काव्यलिङ्गस्यैव प्रतिपादनात्। तल्लक्षणान्तत् काव्यलिङ्गं यत्र हेतोर्वाक्यार्थता पदार्थता वा। प्रथमोदाहरणं 'वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा पुरारे न प्रायः क्वचिदपि भवन्तं प्रणतवान्। नमन्मुक्तः संप्रत्यतनुरहमग्रे-ऽप्यनतिमान् महेश क्षन्तव्यं तदिदमपराधद्वयमपी'त्यादीनि। भ्रुवौ भुग्ने किञ्चिदिति पद्यस्य

रहस्यार्थः । भ्रुवौ लज्जा, भुग्ने हूं च, किञ्चिद्भुवन खें, भय छं, भङ्ग क्षं, व्यसनिनि स्त्रीं, त्वदीयं क्षें, नेत्राभ्यां लज्जा, धनुः शल्लं, हीं हूं च खें छें स्त्रीं क्षें हीं फट् । [1] त्वरिता ॥ ४७॥

## तात्पर्यदीपिनी

हे उमे उः महादेवस्तस्य मा लक्ष्मीः, तत्संबुद्धिः, हे भुवनभयभङ्गव्यसनिनि, भुवनस्य त्रिभुवनस्य यद्भयं तस्य भङ्गो नाशः, तत्र व्यसनं यस्याः तत्संबुद्धिः, अहं त्वदीये भ्रुवौ रतिपतेः कामदेवस्य धनुरिति मन्ये। कथंभूतं धनुः, प्रकोष्ठे मणिबन्धे मुष्टौ च निगूढान्तरं, निगूढं गुप्तं अन्तरं मध्यं यस्य तत्, पुनः सव्येतरकरगृहीतं सव्यो वाम इतरो दक्षिणः, तौ च तौ करौ च ताभ्यां गृहीतं, कीदृशे भ्रुवौ, किञ्चिद्भुग्ने ईषत् कुटिले। पुनः, नेत्राभ्यां धृतो गुणो ययोस्ते तथोक्ते। किंविधाभ्यां नेत्राभ्यां, मधुकरस्य रुचिरिव रुचिर्ययोस्ताभ्यां, भ्रमरसदृशाभ्यामित्यर्थः ॥ ४७ ॥

## पदार्थचन्द्रिका

अत्र क्रमप्राप्ते भ्रुवौ वर्णयति—भ्रुवाविति । हे भुवनभयभङ्गव्यसनिनि भुवने सर्वनिमित्तं भयं तस्य भङ्ग व्यसनमभ्यासः, तद्विद्यते यस्याः तत्संबोधनं तथा। अत्र बहुव्रीहिपूर्वक इनुप्रत्ययो नित्ययोगाभिप्रायेण । किञ्चिद्भुग्ने कुटिले त्वदीये भ्रुवौ इदं जगत्प्रसिद्धमिति रतिपतेर्धनुर्मन्ये तर्कयामि । मधुकररुचिभ्यां भ्रमरकान्तिभ्यां नेत्राभ्यां धृतगुणे धृतज्ये। भ्रुवोर्धनूरूपतां साधयितुं धनुर्विशिनष्टि, रतिपतेः कन्दर्पस्य सव्यात् दक्षिणादितरो यः करस्तेन गृहीतं, यद्वा अकारप्रश्लेषेण असव्येतरो वामः। प्रकोष्ठे मणिबन्धे मुष्टौ च स्थगयति सति, निगूढान्तरं संवृतमध्यं, मन्ये इति तिङन्तप्रतिरूपको निपातस्तर्कयामीत्यर्थः । 'अन्तरमवकाशोऽवधिपरिधानं भेदतादर्थ्ये । छिद्रात्मकं विना बहिरवसरमध्यात्मसदृशेषु' इति मेदिनीकरः ॥ ४७ ॥

## डिण्डिमभाष्यम्

भ्रुवाविति । किञ्चिद्भुग्ने ईषदरालाकारे त्वदीये त्वत्संबधिन्यौ, मधुकररुचिभ्यां भ्रमरमालासदृशाभ्यां नेत्राभ्यां धृतगुणे संपादितमौर्वीके ते भ्रुवौ कर्मभूते ते धनुः कन्दर्पकार्मुकं मन्ये। यदि धनुः तथोत्प्रेक्ष्यते, मध्ये भ्रुवोर्लोचनयोश्चान्तरा विच्छेदः कुत इति चेत् तत्रोच्यते। कन्दर्पस्य धनुराकर्षणवेलायां मुष्टिना धनुःपृष्ठमाच्छाद्यते, प्रकोष्ठेन तु गुणः। अत

---

[1] मन्त्रमहोदधौ—तारः परा वर्म खे च छे क्षः स्त्री वामकर्णयुक् । गगनं शशिसंयुक्तं मेरुभृगयुतोऽद्रिजा । फडन्तो द्वादशार्णोऽयं त्वरिताया मनुर्मतः । ओं ह्रीं हुं खे च छे क्षः स्त्रीं हूं क्षें ह्रीं फट् । त्वरिता ।

एव मध्येऽन्तरं दृश्यते । तदेव प्रतिपादयति । सव्येतरकरगृहीतं, सव्यं दक्षिणं तदितरं सव्येतरं वामकरः तेन गृहीतं एवं प्रकोष्ठे मुष्टौ च स्थगयति सति निगूढान्तरमाच्छादितमध्यं धनुः तन्मन्ये इति प्रकृते योजनीयम् । भुवनभयभङ्गव्यसनिनीत्यनेन शब्देन भुवनस्य जगतः भयभूतानां मधुकैटभमहिषादीनां भङ्गे निराकरणे व्यसनितया तात्पर्येण दुर्गादिवेषपरिग्रहं कृत्वा लोकोपकारिणी भगवतीति ध्वन्यते । उमे इत्यनेन शब्देन महादेवस्य महालक्ष्मीरूपिणी भार्या इति च प्रमाबुद्धिसंवित्त्वात्तन्मयरूपिणी चेति उभयं प्रकाशते ।। ४७ ।।

गोपालसुन्दरी

भ्रुवाविति – हे भुवनभयभङ्गव्यसनिनि जगद्भयभञ्जनशीले ! इमे त्वदीयभ्रुवौ धनुः सव्येतरकरगृहीतं वामहस्तधृतं निगूढान्तरं आच्छादितमध्यं रतिपतिः कामः प्रकोष्ठे मुष्टौ च स्थगयत्याच्छादयति इति मन्ये । कीदृशे ? किञ्चिद्भुग्ने ईषद्वक्रे मधुकररुचिभ्यां भ्रमरतुल्याभ्यां नेत्राभ्यां धृतो गुणो मौर्वी यत्र ते । विष्णुपक्षे – भुवनभयभङ्गस्य विशेषेण असनिनि क्षेपके भुवनभयावहे इति प्रकोष्ठविशेषणं वा । पूर्ववद्विष्णोरेव संबोधनं वा । शेषं समानम् ।। ४७ ।।

आनन्दलहरीटीका

भ्रुवाविति । हे भुवनभयभङ्गव्यसनिनि, भुवनानां भयस्य भङ्गो भञ्जनं दूरीकरणमेव व्यसनं व्यापारो यस्यास्तादृशी इमे त्वदीये भ्रुवौ धनुः, तव भ्रूयुगरूपधनुरित्यर्थः । प्रकोष्ठे मणिबन्धपूर्वभागे मुष्टौ च रतिपतिः कामः स्थगयति आच्छादयति इत्यहं मन्ये उत्प्रेक्षयामि । अत एव निगूढान्तरं अनुपलभ्यमानमध्यं, पुनः कीदृशं धनुः, मधुकरयो रुचिरिव रुचिर्ययो-स्ताभ्यां नेत्राभ्यां धृतो गुणो येन तत्तथा । प्रकृत्यादिभ्य इतिवत्तृतीया । सव्येतरेण दक्षिण-भिन्नेन करेण गृहीतं धृतं, भ्रुवौ कीदृशे किञ्चिद्भुग्ने वक्रे । अयं भावः – भ्रूयुगं नैतत्, किन्तु कामेन वामहस्तधृतं धनुरिदम् । एतन्न नेत्रयुगं, किन्तु मधुकरमयी मौर्वी । मुष्टिधृतत्वात् धनुर्मध्यं नोपलभ्यते तथा प्रकोष्ठाच्छादितत्वान्मौर्वीमध्यमपीति । इमे इत्यत्र उमे इति पाठे संबोधनम् ।। ४७ ।।

**अहः सूते सव्यं तव नयनमर्कात्मकतया**
**त्रियामां वामं ते सृजति [1]रजनीनायकतया ।**
**तृतीया [2]ते दृष्टिर्दरदलितहेमाम्बुजरुचिः**
**समाधत्ते सन्ध्यां दिवसनिशयोरन्तरचरीम् ।। ४८ ।।**

---

1 रजनीनायकमयम् 2 दृष्टिस्ते

அஹஸ் ஸூதே ஸவ்யம் தவ நயநமர்காத்மகதயா
1 1 1 1 1 1

த்ரியாமாம் வாமம் தே ஸ்ருஜதி ரஜநீநாயகதயா ।
1 1 1 1 1

த்ருதீயா தே த்ருஷ்டிர் தர தளித ஹேமாம்புஜருசி:
1 1 1 3 1 3 3 1 3 1

ஸமாதத்தே-ஸந்த்யாம் திவஸநிசயோரந்தரசரீம் ॥
4 1 4 3 1 1

सूर्यात्मक तेरा दक्षिण दृक् दिन का सर्जन करता है

सोमात्मक वामनेत्र सृजन त्रियामा निशि का करता है ।

दरविकसित स्वर्णकमलरुचियुत तार्तीयीक दृष्टि पावन

निशिदिन मध्यचरी सन्ध्या को निर्मित करती अतिशोभन ॥

लक्ष्मीधरा

अहः दिवसं सूते जनयति। सव्यं दक्षिणं, तव नयनं नेत्रं, अर्कात्मकतया सूर्यात्मकतया, त्रियामां रात्रिं, वामं सव्येतरं, ते तव, सृजति सूते, [1] रजनीनायकतया चन्द्रात्मकतया। तृतीया निटिलस्थिता, ते तव, दृष्टिः दरदलितहेमाम्बुजरुचिः दरदलितमीषद्विकसितं हेमाम्बुजं [2] रक्ताम्बुजं तस्येव रुचिर्यस्यास्सा, समाधत्ते सम्यगाधत्ते करोति, दिवसनिशयोः अहोरात्रयोः, अन्तरचरीं मध्यवर्तिनीं, सन्ध्यां सायंप्रातरात्मकसन्ध्याकालद्वितयस्य अग्निहोत्रसाध्यत्वादिति भावः। अत्रेत्थं पदयोजना – हे भगवति! तव सव्यं नयनं अर्कात्मकतया अहस्सूते। ते वामं नयनं रजनीनायक[3] तया त्रियामां सृजति। ते तृतीया दृष्टिः दरदलितहेमाम्बुजरुचिः दिवसनिशयोः अन्तरचरीं सन्ध्यां समाधत्ते। अत्र सूर्यचन्द्राग्न्यात्मकनयनत्रयेण भगवत्याः [4] अवयवविशेषेण दिवसनिशासन्ध्यात्मककालत्रयोपलक्षितपक्षमासर्तुयुगकल्पादिकालोत्पत्तिकथनात् भगवत्याः कालावच्छेद्यत्वं दूरत एवापास्तमिति ध्वन्यते। इदमुत्तमं काव्यम्। मध्यमकाव्यताप्रतीतिरपि, 'अर्कात्मकतया' 'रजनीनायकमयम्' इति वाच्यमानत्वात्। दरदलितहेमाम्बुजरुचिरित्यनेन अग्निनेत्रत्वं ध्वन्यते। अयमनुप्राणनात्मकः मध्यमोत्तमकाव्यप्रयोजकध्वन्योः संसृष्टिः। संसृज्यमानं व्यङ्ग्यद्वयं प्रधानध्वनिना अङ्गाङ्गिभावेन सङ्कीर्यत इति दिक् ॥ ४८ ॥

सौभाग्यवर्धनी

अहः सूते सव्यमित्यादिभिरेकादशश्लोकैर्नेत्रे स्तौति – अहरिति। हे देवि! तव सव्यं दक्षिणं नयनं अहः सूते दिनं सृजति अर्कात्मकतया। तव नयनमेव सूर्यरूपेण दिवसम-

---

1 रजनीनायकमयं चन्द्रात्मकम्, 2 सुवर्णकमलम्, 3 मयं सत् त्रियामां रात्रिम्, 4 अवयवरूपेण।

सृजदित्यर्थः। त्रियामां रात्रिं वामं ते रजनीनायकमयं चन्द्रमयं चन्द्रात्मकतयेत्यर्थः। ते तृतीया दृष्टिः भालगता दृष्टिः दरदलितहेमाम्बुजरुचिः ईषद्विकचस्वर्णकमलकान्तिः दिवसनिशयोरन्तरचरीं संध्यां समाधत्ते वह्निरूपतया इति भगवत्याः नेत्रत्रयस्य सूर्येन्दुवह्निरूपता स्वभावोक्तिः। तेन शिवेन सह अभेदो ध्वन्यते ॥ ४८ ॥

### अरुणामोदिनी

अथ विस्तरेण नेत्राणि विवर्णयिषुर्विराड्रूपाया देव्याः सूर्यचन्द्राग्नीनां नेत्रत्वात् 'त्रिलोचनां' इत्यादिध्यानप्रयोगाच्चादौ नेत्रत्रयधारणप्रयोजनकथनद्वारा अहरादीनां भगवतीदृष्टिकल्पितत्वमाह – अहरिति। हे देवि सव्यं दक्षिणं, तव भवत्याः, नयनं नेत्रं, अर्कात्मकतया सूर्यरूपत्वेन, अहः दिवसं, सूते उत्पादयति। सूर्यरूपेण दिवसं विधाय सर्वलोकसौख्यविधानपूर्वकं उपासनादिकर्मसु लोकान्प्रवर्तयतीत्यर्थः। तथा रजनीनायकमयं चन्द्ररूपं, वामं सव्येतरं नयनं, त्रियामां रात्रिं, सृजति निर्माति। तन्निर्माय तदुचितकर्मप्रेरणया लोकान्सुखयतीत्यर्थः। तथा दरदलितहेमाम्बुजरुचिः ईषद्विकसितसौवर्णकमलकान्तिः अग्निरूप इत्यर्थः। तृतीया त्रिसंख्यापूरका 'त्रेः संप्रसारणं च' इति तीयप्रत्ययः। ते भवत्या दृष्टिः दिवसनिशयोः अहोरात्रयोः अन्तरे अन्तराले सायंप्रातरात्मना चरतीति तां सन्ध्यां पितृप्रसूं, 'संध्या पितृप्रसूनयोः' इत्यमरः। समाधत्ते विदधाति। तद्विधाय अग्निहोत्रादिकर्मसु प्रवर्तयतीत्यर्थः। अत्र भगवत्या आगमप्रसिद्धसूर्यचन्द्राग्निरूपनेत्रत्रितयधारणरूपया स्वभावोक्त्या दिवसनिशाद्युपलक्षितमासवर्षादिकालसृष्टिकारणताकथनात् कालानवच्छेद्यत्वशिवाभिन्नत्वयोर्वस्तुनोः प्रतीतेरलङ्कारेण वस्तुध्वनिः ॥ ४८ ॥

### आनन्दगिरीया

अहः सूत इति। हे मातः, तव सव्यं दक्षिणं नयनं अहः दिवसं सूते जनयति। तत्र हेतुः अर्कात्मकतया। तथा च तव दक्षिणं नयनं सूर्यात्मकं, अत उत्पन्नमहः। वामं नयनं त्रियामां रात्रिं सृजति जनयति। अमुं रजनीनायकमपि सृजतीति। तेन चन्द्रात्मकं वामं नयनम्। क्वचिद्रजनीनायकतयेति पाठः। तृतीया च ललाटस्था तव दृष्टिर्नयनं तयोरन्तरस्थां सन्ध्यां सृजति। तृतीयलोचनस्यापि लोचनयोर्मध्यस्थितत्वात् कारणानुरूपं कार्यम्। किंविधा, ईषद्विकसितकनककमलकान्तिः। एतावता अग्न्यात्मिकेति। सोमसूर्याग्निनयना, अतस्त्वमेव सोमसूर्याग्निरूपासि। यद्वा सोमसूर्याग्निरूपलोचनत्रयं दधाना त्वं श्रीमहादेवादभिन्नेति। अहः सूत इति पद्यस्य रहस्यार्थः – अह इति। अहः हः, सूते सः, सव्यं कः नयनं अर्क वह्निः आत्मकतया लः, त्रियामां हसक वामं ई सृजति ल, ते रेफः, रजनी श, नायक ह, दलित ल,

अम्बु क, दल रेफ, ते मातृका, या तृतीया तृतीया दृष्टिः डामरी डामरत्रयं कूटत्रयं, अन्तरचरी सानुस्वारकूटत्रयम्। ह्स्क्ल्र्डैं ह्स्क्ल्र्डीं ह्स्क्ल्र्डौः। नित्यानित्या।४८॥

### तात्पर्यदीपिनी

अहरिति—हे मातः, तव दक्षिणं नयनं अर्कात्मकतया भास्करस्वरूपेण अहो दिवसं सूते। तव वामं नयनं त्रियामां, त्रयो यामा यस्यास्तां, तथोक्तां रात्रिं सृजति प्रसौति। तथा ते तव तृतीया दृष्टिः सन्ध्यां समाधत्ते करोति। कथंभूतं वामं नयनं, रजनीनायकमयं रजन्या नायकश्चन्द्रः तत्स्वरूपं, किंविधा तृतीया दृष्टिः, दरदलितहेमांबुजरुचिः, दरमीषद्दलितं विकसितं यद्धेमांबुजं तद्वद्रुचिर्यस्याः सा तां तथोक्ताम्॥ ४८॥

### पदार्थचन्द्रिका

अधुना अहोरात्रप्रवर्तकत्वेन जगदुपकारकतया नेत्रत्रयं वर्णयति—अहरिति। हे भवानि, तव सव्यं दक्षिणं नयनं अहः सूते जनयति। यद्वा अकारप्रश्लेषेणासव्यं दक्षिणं तत्र हेतुः अर्कात्मकतया सूर्यरूपतया। वामं चन्द्ररूपं नयनं त्रियामां रात्रिं सृजति। तत्र हेतुः रजनीनायकतया, चन्द्ररूपत्वेनेत्यर्थः। तृतीया ते दृष्टिः सन्ध्यां समाधत्ते सृजतीत्यर्थः। दरमीषत् दलितं च तद्धेमांबुजं च तस्य रुचिर्यस्येति तृतीयाग्निदृष्टिविशेषणम्। अन्तरे मध्ये चरतीत्यन्तरचरी ताम्। चरेष्ट इति टप्रत्ययः, ततष्टिड्ढाणञिति ङीप्। सव्यं दक्षिणवामयोरिति कोशात्॥ ४८॥

### डिण्डिमभाष्यम्

हे परमेश्वरि। दक्षं दक्षिणं तव नयनं अर्कात्मकतया भास्करस्वरूपत्वेन, अहः दिवं सूते जनयति। वामं ते नयनं रजनीनायकमयं चन्द्रमयं, त्रियामां रात्रिं सृजत्युत्पादयति। उचितं तयोरुत्पादनं, सन्ध्या तु केन निर्मितेत्याशंक्याह—दरदलितहेमांबुजरुचिः ईषद्विकासित-कमलशोभा तृतीया ललाटप्रदेशवर्तिनी ते तव दृष्टिः दिवसनिशयोः अहोरात्रयोरन्तरचरीं मध्यसंचारिणीं, 'चरेष्टः' इति टः। 'टिड्ढाणञ्' इत्यादिना ङीप्। सन्ध्यां सन्ध्याकाल-विशेषं समाधत्ते संपादयति। सन्ध्यायाः पाटलवर्णायाः स्वभावपाटलात् तव ललाटलोचना-दुत्पत्तेः कारणानुविधायि कार्यमुचितमिति भावः॥ ४८॥

### गोपालसुन्दरी

अहः सूते इति—तव दक्षं नयनमर्कात्मकतया सूर्यात्मकत्वाद्धेतोः अहः दिनं सूते सृजति। वामं नयनं रजनीनायकतया चन्द्रत्वाद्धेतोः त्रियामां रात्रिं सृजति। ते तव तृतीया

दृष्टिः भालगता दरदलितहेमाम्बुजरुचिः ईषद्विकचकनककमलकान्तिः दिवसनिशयोः दिनरात्र्योरन्तरचरीं मध्यवर्तिनीं सन्ध्यां समाधत्ते जनयतीत्यर्थः। विष्णुपक्षेऽप्येवम्, तत्र तृतीयनेत्रवर्णनं नृसिंहमूर्त्यभिप्रायेण ॥ ४८ ॥

आनन्दलहरीटीका

अहरिति। तव सव्यं नयनं दक्षिणं नेत्रं, अर्कात्मकतया सूर्यरूपतया अहो दिनं सूते सृजति। ते तव वामं नयनं त्रियामां रात्रिं सृजति, यतो रजनीनायकमयं चन्द्ररूपम्। दरदलितमीषद्विकसितं यद्धेमांबुजं स्वर्णपद्मं तस्य रुचिरिव रुचिः शोभा यस्यास्तथाविधा ते तव तृतीया दृष्टिः भालनेत्रं दिवसनिशयोर्मध्यगां सन्ध्यां समाधत्ते जनयति। सव्यं दक्षिणवामयोरित्यमरः ॥ ४८ ॥

**विशाला कल्याणी स्फुटरुचिरयोध्या कुवलयैः**
**कृपाधाराधारा[1] किमपि मधुराभोग[2]वतिका।**
**अवन्ती दृष्टिस्ते बहुनगरविस्तार[3]विजया**
**ध्रुवं तत्तन्नामव्यवहरणयोग्या विजयते ॥ ४९ ॥**

விசாலா கல்யாணீ ஸ்புடருசிரயோத்யா குவலயை:
க்ருபாதாராதாரா கிமபி மதுரா போகவதிகா ।
அவந்தீ த்ருஷ்டிஸ்தே பஹுநகர விஸ்தார விஜயா
த்ருவம் தத்தந்நாம வ்யவஹரணயோக்யா விஜயதே ॥

सुविशाला स्फुटकान्तिरुचिरा कल्याणी औ कुवलयगण के
लिए अयोध्या, करुणाधारा धारा, मधुरा जनगण के
सुख का कारण भोगवती जन संरक्षणहेतु अवन्ती,
नाना नगरों की जय सूचक विजया दृष्टि सुगुणवंती
तेरी है अव्यक्त अनन्य अनेक वर नगर नामात्मक
करती तदनुरूप व्यवहार सोहती है कल्याणात्मक ॥

1 कृपापारावारा 2 भोगलतिका 3 विजयात्।

लक्ष्मीधरा

विशाला विपुला, कल्याणी मङ्गलात्मिका, स्फुटरुचिः प्रस्फुटकान्तिः, अयोध्या योद्धुमशक्या, कुवलयैः इन्दीवरैः, कृपाधाराऽऽधारा कृपाधाराणां करुणाप्रवाहाणां आधारभूता। आधारशब्दस्य कर्मणि घञन्तत्वात् विशेष्यनिघ्नत्वेन रूपकत्वम्। किमपि मधुरा अव्यक्तमधुरा, आभोगवतिका आभोगः अन्तःपरिणाहः दैर्घ्यमिति यावत्। अवन्ती रक्षका, दृष्टिः ते नयनं, बहुनगरविस्तारविजया बहूनां नगराणां विस्तारेण सामस्त्येन विजया स्फुरन्ती, ध्रुवं निश्चयः। तत्तन्नामव्यवहरणयोग्या तानि तानि च नामानि तत्तन्नामानि विशाला-कल्याणी-अयोध्या-धारा-मधुरा-भोगवती-अवन्ती-विजया-इत्यष्ट नगरनामानि, तैः यद्व्यवहरणं व्यवहारः तत्र योग्या, विजयते सर्वोत्कर्षेण वर्तते॥ अत्रेत्थं पदयोजना — हे भगवति! ते दृष्टिः विशाला कल्याणी स्फुटरुचिः कुवलयैः अयोध्या कृपाधाराऽऽधारा किमपि मधुरा आभोगवतिका अवन्ती बहुनगरविस्तारविजया तत्तन्नामव्यवहरणयोग्या ध्रुवं विजयते॥ अत्रेदमनुसन्धेयम् — विशाला-प्रभृतयो विजयान्ताः अष्ट नगर्यः अष्ट दृष्टयश्च; विशाला नाम दृष्टिः अन्तर्विकासरूपा। कल्याणीदृष्टिर्विस्मिता। अयोध्यादृष्टिः स्मेरकनीनिका। धारादृष्टिः अलसा। मधुरादृष्टिः (विलसित) वलिता। भोगवतीदृष्टिः स्निग्धा। अवन्तीदृष्टिः मुग्धा। विजयादृष्टिः प्रान्त-कनीनिका आकेकराख्या दृष्टिः। एता अष्ट दृष्टयः सर्वयोषित्समानाः। भगवत्यां तु विशेषः— एताः दृष्टयः यथाक्रमं संक्षोभाकर्षणद्रावणोन्मादवश्योच्चाटनविद्वेषणमारणक्रियासु संभिन्नाः॥ एतदुक्तं भवति — भगवती यत्र प्रदेशे स्थित्वा अन्तर्विकासयुक्तया विशालाख्यया दृष्ट्या जनसंक्षोभमकरोत् स देशो विशालानगरी। यत्र प्रदेशे स्थित्वा सा आकेकरया दृष्ट्या विजयाख्यया शत्रुमारणमकरोत् स देशो विजयानगरी। एवं मध्यवर्तिनीनां षण्णां पुरां नामधेयान्यूह्यानि। यथोक्तं भगवत्पादैः, विशालाद्याः भगवत्याः दृष्टिविशेषाः संक्षोभादि कर्मसाधनभूताः अन्तर्विकासादिरूपाश्चेति सर्वमनवद्यमिति। एतदेव स्पष्टीकृतं तद्व्याख्याकारैः तत् तत एव अवधार्यम्॥ ४९॥

सौभाग्यवर्धनी

विशालेति। विशाला विशालगुणयुक्ता, कल्याणी सर्वदा कल्याणानुमोदिनी, स्फुटरुचिः सदा विकचस्वरा, अयोध्या कुवलयैः, इन्दीवरैः योद्धुमशक्या। तव दृष्ट्या सह योद्धुमागतानि पराजितानि लज्जया रात्रावेव उन्मीलितमुखानि जायन्ते, न दिवेति भावः। अयमेवार्थः स्तुतिकामधेनौ दर्शितोऽस्माभिः प्रकारान्तरेण — 'नेत्रादवाप्य सुषमां मुखमम्बुजं ते दातुं शिवे पुनरशक्ति तदेकसारम्। आलम्ब्य पाथसि सद्मनृणालदण्डं नूनं तपः परमहंसयुतं तनोति' इति। कृपाधाराधारा, अनवरतदयापरम्परापरिपूर्णा, किमपि मधुरा अवाङ्मनसगोचरा

मनोहरगुणा, भोगवतिका शिवविषयकपरमप्रेमार्द्रालोककौतुका; अवन्ती भक्तजनानिति बहुनगरविस्तारविजया विशाला नगरी कल्याणी कल्याणनामधत्तन अयोध्या, धारा, मधुरा, भोगवती, अवन्ती इति नगराणां विस्तारं विजयत इति बहुनगरविस्तारविजया सती तत्तन्नामव्यवहरणयोग्या- विजयते, सर्वोत्कर्षेण वर्तते। -विशालां जित्वा विशालानामव्यवहारयोग्या इति। कल्याणादिनगराणि जित्वा तेषां यानि यानि नामानि तैस्तैर्नामभिर्व्यवह्रियमाणा विजयते। ये ये गुणाः पूर्वोक्तास्ते ते विशालादिनगरेषु न सन्तीति भावः। किं च विशालादीनि नगराणि कुवलयैः जम्बूद्वीपादिसप्तभूचक्रैः योध्यानि आक्रान्तानि निगृहीतानि। तव दृष्टिस्तु कुवलयैरयोध्या अनाक्रान्ता। जगत्प्रकाशकसूर्येन्दुवह्निरूपे सतीति ध्वनिः। कुवलयैरिति शब्दच्छलेन इन्दीवराणि भूवलयाश्च गृह्यन्ते॥ ४९॥

अरुणामोदिनी

नयनयोर्वीक्षाविशेषं सचमत्कारं वर्णयति—विशालेति। हे देवि! विशाला विस्तृता नित्यविकसितेत्यर्थः। कल्याणी असूयादिराहित्येन नित्यप्रसन्ना, भजतां क्षेमकारिणी च। स्फुटरुचिः अतिविस्पष्टकान्तिः, अत एव कुवलयैः नेत्रोपमानत्वेन गर्वितैः इन्दीवरैः कुत्सितानि वलयमिवेति व्युत्पत्त्या निर्गुणैरिति भावः। अयोध्या योद्धुमशक्या अत्युत्कटगुणयुक्तत्वादिति भावः। कृपायाः करुणारसस्याधारा आधारभूता धारा दृष्टिसन्ततिर्यस्याः सा। किमपि अनिर्वचनीयं, मधुरा हृद्या। भोगः सुखानुभवः सोऽस्या अस्तीति भोगवती सैव भोगवतिका। कामेश्वरविषयहेलाविलासवतीत्यर्थः। यत्तूक्तं, आभोगवतीति पदच्छेदं कृत्वा आभोगवती दैर्घ्यवतीति, तच्चिन्त्यम्। दैर्घ्यकथनलोभेनाकारप्रश्लेषे वक्ष्यमाणभोगवतीति पुरनामानिष्पत्तेः। नात्राभोगवतीति व्यवहृत्य भोगवतीति वक्तुं युक्तमिति। अवन्ती भक्तजनरक्षणं कुर्वाणा, ते भवत्याः दृष्टिः, बहूनां नगराणां विशालादीनां पुराणां, नगाः सन्त्यस्मिन्निति व्युत्पत्त्या नगमात्रसद्भावः, न तु वैपुल्यादिगुणयोग इति ध्वनिः। विस्तारं उपलक्षणतया वैपुल्यादिकं विजयत इति विशालादिसप्तपुरवैपुल्यादधिकवैपुल्यसत्त्वादिति भावः। पञ्चम्यन्तपाठे विस्तारभङ्गकरणादित्यर्थः। तानि तानि च तत्तानि नामानि च तत्तन्नामानि। तेषां तेषां विशालादिपुराणां नामानीति वा तैर्व्यवहरणस्य योग्या, विशाला, कल्याणी, अयोध्या, धारा, मधुरा, भोगवती, अवन्ती इति पुरनामभिर्व्यवहारार्हा सती विजयते सर्वोत्कर्षेण वर्तते। 'विपराभ्यां जेः' इत्यात्मनेपदम्। वैपुल्यादिगुणयुक्ता भवद्दृष्टिरन्वर्थाभिधानानि सप्त नगराणि जित्वा तत्तन्नामभिर्व्यवह्रियते। यथाऽतिप्रबलः प्रभुः शत्रून् जित्वा तत्पदमापन्नः तन्नाम्ना व्यवह्रियते तद्वदिति भावः। भवद्भिर्लोकविशेषप्रसार एव विशालादिनगर्य इति ध्वनिः। ध्रुवमित्युत्प्रेक्षायाम्। परिकरोत्प्रेक्षयोः संकरः॥ ४९॥

आनन्दगिरीया

विशालेति। हे मातस्तव दृष्टिः तस्मात्कारणात् तत्तन्नगरनामव्यवहरणयोग्या विजयते। तानि तानि यानि नगरनामानि, तेषां यद् व्यवहरणं व्यवहारः तन्नामोच्चारणरूपं तद्योग्या तत्तन्नामोच्चार्या विजयते सर्वोत्कर्षेण वर्तते। तथा च तत्तन्नाम इत्यर्थः। तत्तद्व्यवहारयोग्यत्वं कस्मादित्यत आह बहुनगरविस्तारविजयात् बहूनां विशालादीनां नगराणां यो विस्तारः, तद्विजयात्। यो यो यद्विजयी स तत्तन्नामव्यवहरणीयो भवति। यथा मुरारिः स्मराररित्यादि। शब्दच्छलेनैतत्। किंलक्षणा दृष्टिः, विशाला कर्णोपान्तपर्यवसायिनी विशालानगरी च। पुनः किंविधा कल्याणी कल्याणरूपिणी गन्धर्वनगरी च। स्फुटा रुचिः कीर्तिर्यस्याः सा प्रकटकान्तिः कान्तिनगरी वा। पुनः किंविधा, कुवलयैरयोध्या, कुवलयैः कमलैर्नीलैः चन्द्रवंशैः कैरवैर्वा योद्धुमशक्या स्पर्धामाधाय योद्धुमुपागतानि न शक्नुवन्तीति पराजयं प्राप्नुवन्ति; अयोध्या श्रीरामनगरी। पुनरपारा कृपाधारा कृपायाः परंपरा धारा भोजराजनगरी। किमपि मधुरा अनिर्वचनीया अमृतमयी मधुरा मधुराख्या मधुनगरी। मथुरा मधुरा कृष्णनगरी मधुनिर्मितेत्यभिधानात्। भोगवत्येव भोगवतिका भोगप्रधाना भोगवती नाम नगरी च। अवन्ती परिपालयन्ती भुवनानि विक्रमार्कनगरी चेति। अथवा तासां विशालत्वादयो येऽसाधारणाः सारभूता धर्माः, ते तु अपृष्टाख्यागृहीताः इति नाममात्रशेषास्ताः सन्ति। अथवा तव दृष्टिर्विशाला विस्तरणैकस्वभावा परितः प्रसर्पणशीला लाघवातिशयेन अचिन्त्यवेगातिशया, यतः प्रालेयाचलचूडावलम्बिनी सती त्रिभुवनजनमनोमन्दिरान्तरान्धकारशमनी, इयं विशाला विशिष्टा शाला गृहाणि यस्याः; विशालया च बुद्ध्या स्वात्मानं प्रकाशयितुं शक्या। तथेयं कल्याणी कल्याणमयी आनन्दमयी सा तु लक्षणया। कुवलयाधीश्वरैः विपक्षराजभिः स्फुटरुचिरतया योध्या। तथेयं कृपाधारा स तु धारैव। इयमनिर्वचनीया मधुरा। सा तु मधुरा मधुनामानं दैत्यं राति रक्षतीति मधुरा। तथेयं भोगस्यानन्दस्य वतिका वर्तिका सा तु सर्पशरीरवतीत्यादि। विशाला कल्याणीति पद्यस्य रहस्यार्थः—विशाला कामात्मिका कल्याणी ऐं स्फुटरुचिः परा। क्लीं ऐं सौः। कुलसुन्दरी। (लं ऐं क्लीं सौः लं) ॥ ४९ ॥

तात्पर्यदीपिनी

अत्र दृग्वर्णनं नयनेभ्यो विविच्य पृथगुच्यते—विशालेति। हे मातः ते दृष्टिः, विजयते जयवत्यस्ति। कीदृशी दृष्टिः, बहुनगरविस्तारविजयात् ध्रुवं तत्तन्नामव्यवहरणयोग्या। बहूनि यानि नगराणि तेषां विस्तारः तस्य विजयस्तस्मात्, ध्रुवं निश्चितं, तेषां तेषां नगराणां यन्नामभिः व्यवहरणं व्यवहारः, तद्योग्या, तद्युक्तनानानगराणि जित्य इत्यर्थः। कथमिति

तत्राह—पुनः किंविधा, विशाला विस्तीर्णा, पुनः कल्याणी कल्याणरूपा, नगर्यपि काचित् विशाला वर्तते। सैव स्तुता भवेत्। नेत्याह—पुनः कुवलयैः कर्तृभिः अयोध्या योद्धुमयोग्या कुवलयान्यप्रतिभटानि अस्या इत्यर्थः। पुनः स्फुटरुचिः स्फुटा प्रकटा रुचिः कान्तिर्यस्याः सा, अयोध्या। लोकेऽपि तेजस्वी योध्यो न भवति। तर्हि अयोध्यापि काचिन्नगरी अस्ति, तत्राह—पुनः कृपाधाराधारा कृपाया धारा प्रवाहः तस्या आधारा, एनां विहाय कृपा अन्यत्र न वसतीत्यर्थः। धारापि काचिन्नगरी अस्तीत्यर्थः। पुनः किं मधुरा माधुर्यरूपा, मधुरापि काचिन्नगरी अस्ति। पुनः, भोगवतिका। भोगवती काचिन्नगरी अस्ति। पुनः किमप्य-निर्वचनीयं यथा स्यात्तथा अवन्ती भक्तं रक्षमाणा। अवन्त्यपि काचिन्नगरी वर्तते इत्यादि। तासां च यन्नामभिः वर्णयितुं योग्या तव दृष्टिर्विजयते॥ ४९॥

पदार्थचन्द्रिका

एवं नयनत्रितयं निर्वर्ण्येदानीं तद्व्यापाररूपां दृष्टिं तत्तन्नगरीरूपकेण वर्णयति विशालेति। हे जननि ते तव दृष्टिः कृपावलोकनं, बहुनगरविस्तारविजया, बहुनगरविस्तार-सदृशीत्यर्थः। ध्रुवं शङ्के। विपूर्वको जिरत्र सादृश्यलक्षकः। बहुनगरसादृश्ये हेतुं वदन् दृष्टिं विशिनष्टि—तत्तन्नगरीनामभिर्व्यवहरणं व्यवहारस्तद्योग्या। तत्र प्रथमतो नामतोऽर्थतश्च श्रीराम-चन्द्रनगरीसादृश्यं ब्रुवन् दृष्टिं विशिनष्टि—कुः पृथिवी वलयमिव शोभाहेतुभूता येषां ते कुवलया राजानः, तैरयोध्या योद्धुमशक्या, विशाला विस्तीर्णा, कल्याणी कल्याणगुणविशिष्टा स्फुट-रुचिः या श्रीरामनगरी सा तव दृष्टिः तत्सदृशीत्यर्थः। सादृश्यं च समानधर्माक्रान्ततया। दृष्टिपक्षे विशालत्वादयो धर्माः सन्त्येव। कुवलयैरिन्दीवरैरयोध्या, अनभिभाव्या सा तादृशी-त्यर्थः। यद्वा विशाला इत्येवमादयो नगरीभेदाः। मधुरासादृश्यमाह—किमपि निरुपमं, मधुरा, मधुरत्वमाह्लादकत्वम्। मधु रात्यादत्ते इति मधुरा। पारं परतीरं, अवरं अर्वाक्तीरं विद्यते यत्र स पारावारः कृपापारावारो विष्णुः स विद्यते यत्र सा मधुरा। एवंभूता या मधुरा सा ते दृष्टिस्तत्सदृशीत्यर्थः। दृष्टिपक्षे मधुराशब्देनाह्लादकत्वम्। कृपापारावारा कृपासमूहरूपा। कृपाधारा धारेति पाठे धारानगरी ते दृष्टिस्तत्सदृशी। कृपाया धारा परंपरा यत्र सा। समानशब्दवाच्यत्वमेव सादृश्यमत्र। भोगलतिका, भोगः सर्वसुखं तस्य लतिकेवाश्रयरूपा, भोगवती नगरीति तत्सादृश्यं दृष्टावपि अवन्ती रक्षन्ती भक्तमात्रमिति अवन्ती नगरी। भवानीदृष्टेरपि तत्साम्यं, यथादृष्टं नेत्रसामान्यमेव॥ ४९॥

डिण्डिमभाष्यम्

हे परमेश्वरि! विशाला अत्यन्तविशङ्कटा आकर्णपूरविस्तारगुणयोगात् विशाला नाम नगरी च, कल्याणस्फुटरुचिः कल्याणा शोभना, स्फुटा व्यक्ता शोभा यस्याः सा तथोक्ता। कल्याणमित्येकं नगरं गन्धर्वराजस्य प्रसिद्धम्। कुवलयैर्नीलोत्पलैः अयोध्या योद्धुम् अभिभवितुम् अशक्या अयोध्येति रामचन्द्रस्य नगरी प्रसिद्धैव। कृपाधाराधारा – कृपाधारया दयाप्रवाहस्य आधारः आसमन्ताद्धरणं यस्याः सा तथोक्ता। धारा नाम काचन नगरी। किमपि किञ्च अत्यन्तमाधुर्यालोकनवती मधुरा नाम कृष्णनगरी 'मधुरा मथुरा कृष्णनगरी मधुनिर्मिते'ति विश्वप्रकाशः। भोगवतिका भोगः परमेश्वरमुखावलोकनजनितपरमानन्दः सोऽस्या अस्तीति भोगवतिका। स्वार्थे कः प्रत्ययः। भोगवत्येव भोगवतिका। भोगवतीति पाताले नागराजस्य नगरी प्रसिद्धा। अवन्ती लोकान् रक्षन्ती। 'अव रक्षण' इति धातोः 'कर्तरि शप्' इति शप्, 'उगितश्च' इति ङीप्। अवन्ती नाम उज्जयिनीत्यपरपर्यायो नगरविशेषः। एवंभूता या ते दृष्टिः बहुनगरविस्तारविजयात् बहूनां नगरीणां विस्तारस्य विशालतागुणस्य विजयात् अभिभवात् सा तत्तन्नामभिः व्यवहरणयोग्या तासां तासां विशालादिनगरीणां नामभिः व्यवहरणयोग्या ध्रुवं प्रायेण विजयते सर्वोत्कर्षेण विजयते। यो हि यं जयति स तस्य सर्वस्वं हृत्वा अवशेषकीर्तिप्रख्यापकमुद्राशब्दाङ्कितं नामापि गृह्णाति तद्वदिति भावः॥ ४९॥

गोपालसुन्दरी

विशालेति — ते तव दृष्टिर्विजयते इत्यन्वयः। कीदृशी? बहूनां नगराणां विस्तारस्य विशालतागुणस्य विजयादभिभवात्तासां तासां नगरीणां नामभिर्व्यवहरणं व्यवहारस्तद्योग्या। 'बहुनगरविस्तारविजयेति' पाठे बहूनां नगराणां विस्तारस्य विशालतागुणस्य विजयो यस्यां सेति दृष्टिविशेषणम्। तत्तन्नामव्यवहरणयोग्यत्वमेव दर्शयति – विशाला विस्तीर्णा विशालानाम नगरी च, कल्याणगुणविशिष्टा गन्धर्वनगरी च, स्फुटरुचिः व्यक्तकान्तिः कुवलयैरिन्दीवरैः पृथ्वीमण्डलैश्च अयोध्या योद्धुमशक्या रामनगरी च, कृपाधारायाः कारुण्यप्रवाहस्याधारभूता धारानाम्न नगरी च, किमपि मधुरा अनिर्वचनीयमनोहरगुणा मधुरानाम श्रीकृष्णनगरी च। 'मथुरा मधुरा कृष्णनगरी मधुनिर्मिते'ति विश्वकोशात्। भोगवतिका भोगः प्रेम तद्वती, कः स्वार्थे, भोगवती पातालनगरी च, अवन्ती भक्तजनं रक्षन्ती अवन्ती नगरी चेति। विष्णुपक्षेऽप्येवम्॥ ४९॥

आनन्दलहरीटीका

विशालेति। ते तव दृष्टिः बहूनां नगराणां विस्तारस्य विजयात्। स्वविस्तारेण तिरस्करणात् तासां नगरीणां नामभिर्व्यवहरणे प्रतिपादने योग्या उचिता विजयते उत्कर्षेण

वर्तते । विजयादित्यत्र विजयेति पाठे दृष्टिविशेषणं बहुव्रीहिः । तत्तदिति बहुशब्दोपात्तानां प्रत्येकपरामर्शद्वारा सा । ध्रुवमित्युत्प्रेक्षायाम् । तदुक्तं 'मन्ये शङ्के ध्रुवं प्राय' इत्यादि । तादृशव्यवहारयोग्यतां दर्शयति । दृष्टिर्विशाला विस्तीर्णा विशाला नाम नगरी च, कल्याणी मङ्गलरूपा, इयं गन्धर्वनगरी, स्फुटा रुचिः कान्तिर्यस्याः सा तथा, कुवलयैः पुष्पैरयोध्या, योद्धुं वशीकर्तुं अशक्या, अथ कुवलयैः पृथ्वीमण्डलैरयोध्या, अयोध्या रघुनाथनगरी, कृपाधारायाः करुणाप्रवाहस्य आधारा अधिकरणभूता, अथ च कृपाया आधारभूता धारा नाम नगरी । आधारयतीत्याधारा, पचाद्यचि रूपम् । घबन्तत्वे पुंलिङ्गत्वापत्तेः, अजहल्लिंगत्वादिति बोध्यम् । किमपि मधुरा, अनिर्वचनीयमनोहरतायुक्ता, अथ च श्रीकृष्णनगरी । मधुरा मथुरा कृष्णनगरी मधुनिर्मिता इति विश्वरूपकोशात् । भोगः सुखं तद्वती जनकतया, स्वार्थे कः । अथ च पाताळनगरी, भोगः सर्पशरीरं तद्वतीति व्युत्पत्तेः । भोगः सुखे स्त्र्यादिभृतौ अहेश्च फणकाययोरित्यमरः । अवन्ती भक्तान्पालयन्ती, अवन्ती नाम उज्जयिनी नगरी ॥ ४९ ॥

**कवीनां सन्दर्भस्तबकमकरन्दैकरसिकं[1]**
**कटाक्षव्याक्षेपभ्रमरकलभौ कर्णयुगलम् ।**
**अमुञ्चन्तौ दृष्ट्वा तव नवरसास्वादतरलौ**
**असूयासंसर्गादलिकनयनं [2]किंचिदरुणम् ॥ ५० ॥**

கவீநாம் ஸந்தர்ப ஸ்தபக மகரந்தைக ரஸிகம்
1 3 4 131 1 31 1

கடாக்ஷ வ்யாக்ஷேப ப்ரமர கலபௌ கர்ணயுகலம் ।
11 14 1 4 1 3

அமுஞ்சந்தௌ த்ருஷ்ட்வா தவ நவரஸாஸ்வாத தரளௌ
1 1 3 1 1 31

அஸூயா ஸம்ஸர்காதலிகநயநம் கிஞ்சிதருணம் ॥
3 3 1 1 1 3

कवियों के उत्तम कविता सुमगुच्छों का मकरन्द पिये
छके हुए दोनों कानों का संग न क्षण को त्याग किये ।
तिरछी चितवन के मिस नवरसलोलुप बने नेत्रयुग लख
ईर्ष्यावश तेरा निटिलनयन भगवति! बना अरुण लो टुक ॥

---

1 भरितं 2 किंस्विदरुणम् ।

लक्ष्मीधरा

कवीनां कवीश्वराणां, सन्दर्भस्तबकमकरन्दैकरसिकं सन्दर्भः काव्यसन्दर्भः स एव स्तबकः पुष्पगुच्छं तत्र मकरन्दे एकं मुख्यं रसिकं मुख्यरसिकं काव्यामृतास्वादैकरसिकमित्यर्थः । कटाक्षव्याक्षेपभ्रमरकलभौ कटाक्षावेव व्याक्षेपौ व्याजौ ययोस्तौ, तौ च तौ भ्रमरकलभौ चेति समासः । भ्रमरकलभौ द्विरेफडिम्भौ । अत्र यद्यपि कलभशब्दः करिडिम्भवचनः, महाकविप्रयोगप्राचुर्यवशात् विशेषणसामान्यलक्षणा भ्रमरकलभाविति । कर्णयुगलं कर्णयोः श्रवणयोः युग्मं, अमुञ्चन्तौ रसास्वादलम्पटतया अत्यजन्तौ दृष्ट्वा, तृतीयस्य नयनस्य ऊर्ध्वस्थितत्वात् । तव नवरसास्वादतरलौ नवरसाः शृङ्गारादयः नवत्वसङ्ख्यायुक्ताः रसाः नवरसाः शाकपार्थिवादित्वादुत्तरपदलोपः; अन्यथा 'द्विगोः' इति ङीपि कृते नवरसी इति स्यात् । नवरसानामास्वादे भोगे तरलौ लम्पटौ, असूयासंसर्गात् असूया ईर्ष्या तस्याः संसर्गः सम्बन्धः तस्मात्, अळिकनयनं निटिलनेत्रं, किञ्चिदरुणं किञ्चित्कोपादिवारुणम् । अत्रेत्थं पदयोजना— हे भगवति! कवीनां सन्दर्भस्तबकमकरन्दैकरसिकं तव कर्णयुगलं कटाक्षव्याक्षेपभ्रमरकलभौ नवरसास्वादतरलौ अमुञ्चन्तौ दृष्ट्वा असूयासंसर्गात् अलिकनयनं किञ्चिदरुणम् ।। अयमर्थः— नयनत्रयमध्ये द्वयोरमृतपाने सिद्धे एकस्य नयनस्य असूया युज्यते । आकर्णान्तनेत्रा भगवती इति वस्तुध्वनिः । अत्र अतिशयोक्तिरलङ्कारः; श्रवणयोः (नेत्रयोः श्रवणगत) काव्यामृतास्वादसंबन्धाभावेऽपि सम्बन्धकथनात् । भ्रमरकलभावित्यत्र अपह्नवालङ्कारः । यद्वा—रूपकं, कटाक्षव्याक्षेपः कटाक्षात्मतया अवस्थितिरिति व्याख्येयम् । अतिशयोक्त्यन्तरमपि, भ्रमरकलभयोः मकरन्दास्वादासम्बन्धेऽपि संबन्धकथनात् । कविकृतवस्तुकृतसौन्दर्ययोरभेदाध्यवसायात् अतिशयोक्त्योरनुप्राण्यानुप्राणकभावस्सम्बन्धः । अपह्नवस्तु अङ्गाङ्गिभावेन सङ्कीर्णः ॥

सौभाग्यवर्धनी

कवीनामिति । कवीनां वाल्मीकिव्यासप्रभृतीनां संदर्भस्तबकः गद्यपद्यादिरचनाविशेषः, तेषां मकरन्दाः शृङ्गारादिरसभावाः, तैः एकभरितं पूर्णं कटाक्षव्याक्षेपभ्रमरकलभौ, कटाक्षच्छलमधुकरशिशू कर्णयुगलं अमुञ्चन्तौ सदा कर्णोपान्ते स्थितौ दृष्ट्वा असूयासंपर्कात् परोत्कर्षासहत्वात् अलिकनयनं फालनयनं किञ्चिदरुणम् । अत्र रूपकहेत्वलङ्काराभ्यां स्वाभाविकोऽरुणिमा अपह्नुयते इत्यपह्नुत्यलङ्कारो व्यङ्ग्यः ॥ ५० ॥

अरुणामोदिनी

ललाटनयनस्यारुण्यमुत्प्रेक्षते—कवीनामिति । हे देवि! तव भवत्याः अलिकनयनं ललाटसंस्थितं नयनं वह्न्यात्मकं नेत्रं कर्तृ, कटाक्षयोः, 'यद्रुतागतिविश्रान्तिवैचित्र्येण

विवर्तनम्। तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षते' इत्युक्तलक्षणयोः अपाङ्गदर्शनयोर्व्याक्षेपो विलास एव भ्रमरकलभौ द्विरेफडिम्भौ, कलभशब्दः करिशिशुवचनोऽपि सामान्यलक्षणया प्रयुक्तो न दुष्ट इत्युक्तं प्राक्। यद्वा—कलेन कान्तिविशेषेण भात इति वा कलभत इति वा भ्रमरौ कलभभ्रमराविति वा, 'वाहिताग्न्यादिषु' इति साधुः। भ्रमरौ कलभाविवेति वा। कवीनां कवयितृश्रेष्ठानां विष्ण्वादीनां संदर्भः वर्णनात्मा काव्यप्रबन्धः, स एव स्तबकः गुच्छः ललितरसात्मकपद्यमयः, तत्र यो मकरन्दरसः रसभावादिः तस्मिन्, तदास्वाद एवैकस्मिन् रसिकं शृङ्गाररसभरितकाव्यप्रबन्धाकर्णनोत्सुकमित्यर्थः। एतेन भगवत्याः काव्यप्रबन्धादरः सूचितः। कर्णयोर्युगलं श्रवणयुगं नवो नूतनो रसः शृङ्गारः, तस्य रसे आस्वाद्ये तरलावतिचपलौ, अत एव अमुञ्चन्तौ अत्यजन्तौ श्रवणपर्यन्तगामिनौ सन्तौ, दृष्ट्वा अवेक्ष्य, असूया परोत्कर्षा-सहिष्णुत्वं, तस्याः संसर्गात् संपर्कादिवेति गम्या हेतूत्प्रेक्षा। स्वस्योर्ध्वस्थितत्वेन कर्णयुगल-समीपव्याप्त्यभावात्तत्पर्यन्तगामिनयनद्वये ईर्ष्यासंयोगादेवेत्यर्थः। किंचिदीषदरुणं रक्तवर्णं जातमिति शेषः। अत्र समानेषु केषाञ्चित्सौख्यलाभे, तत्समानस्य अलब्धसौख्यस्य असूया-जन्यनयनारुणत्वप्रसिद्धेः, अग्निरूपत्वेन स्वभावारुणस्यापि ललाटलोचनस्य, नयनत्वेन समानानां त्रयाणां मध्ये, द्वयोस्तयोः कर्णान्तविश्रान्तिरसास्वादलाभे, अलब्धतद्रसस्य आरुण्यमुत्प्रेक्ष्यते। सा च कवीनां संदर्भेत्यादिरूपकानुप्राणिता। तथा च स्वाभाविकारुण्यतिरोधानस्य प्रतीतेः अलङ्कारेण अलङ्कारध्वनिः। ५०॥

## आनन्दगिरीया

कवीनामिति। परमेश्वर्या लोचनत्रयं, द्वयं त्वधः सोमसूर्यात्मकं एकं भालदेशे तृतीयमग्न्यात्मकं, तेनाधिकोऽरुणिमा तस्येत्यत्र निमित्तमाह। हे मातः तवालिकनयनं ततो हेतोररुणं अलिकं भालदेशः, स एव ललाटः, तत्र स्थितं तन्नयनमलिकनयनं, तत्किञ्चिदरुणं असूयासंपर्कादिति। परोत्कर्षासहिष्णुत्वमसूया तद्वशात्। असूयाहेतुमाह—किं कृत्वा, कटाक्ष-व्याक्षेपभ्रमरकलभौ तव कर्णयुगलममुञ्चन्तौ दृष्ट्वा। कटाक्षयोर्यौ व्याक्षेपौ कटाक्षप्रभेदौ तावेव भ्रमरकलभौ भूत्वा तव कर्णयुगले नियमेन मग्नौ दृष्ट्वा। त्रयाणां सरूपाणां मध्ये एको द्वौ वा प्रभोः कर्णे निरन्तरं लगति। अन्यस्तु दूरतोऽवमानित इव तिष्ठति। तदा तदुत्कर्षासहिष्णुत्वरूपा असूया भवत्येवेति। एतावता कर्णोपान्तस्पर्शित्वेन लोचनयोर्विशालता कटाक्षच्छद्मना वा यौ भ्रमरकलभाविति वा। कलभशब्देन यद्यपि करिकलभः; तथाप्येकदेशलक्षणया शावकमात्रं कटाक्षयोर्भ्रमरकलभत्वेन निरूपणे हेतुः। किंलक्षणौ कलभौ, नवरसास्वादतरलौ नवानां रसानां यत्र स्वतन्त्रेणास्वादः तत्र तरलौ लोलुपौ। भवत्या महाराज्ञ्याः कर्णयोश्चेदालापः क्रियते सर्वे रसाः प्राप्यन्ते। तत्र रसाः कुत्रत्या इत्यत आह। किंलक्षणं कर्णयुगलं, कवीनां

सन्दर्भस्तबकमकरन्दैकरसिकं, कवीनां व्यासवाल्मीकिपराशरप्रभृतीनां यः सन्दर्भः रसप्रधानो वाग्गुम्भो वाग्विलासः स एव स्तबकः कुसुमगुच्छः, तत्र यो मकरन्दः शृङ्गारादिरसाः तेनैकेन भरितं पूर्णं पूरितम्। अयं भावः – व्यासवाल्मीकिपराशरप्रभृतयो महाकवयोऽहर्निशं नवरस-प्रधानं स्तुतिप्रतिपादकं सन्दर्भं भक्तिपूर्वं पठन्ति। परमेश्वरी तु भक्त्योपपन्नानां तेषां स्तुतिं करुणया सादरं शृणोतीति रसावस्थानं, तत्र रसप्राप्तिकामनयेव कर्णमाश्रित्य कटाक्षौ तिष्ठत इति। तत्रत्यं रसमेतौ गृह्णीतः, अहं तु दूर इत्यसूया। अथवा परमेश्वर्या ललाटपटले भाग्यालये रक्ताक्षररूपमहमेव वेधसा लिखितमिति विद्यमाने, एतयोः कर्णस्य स्पर्शे को वाऽधिकारः इत्यसूया। कवीनामिति श्लोकस्य व्याख्या – अत्र भगमालिन्या उद्धारः। कवीनामिति। भगमालोद्धार-मन्त्राक्षरबाहुल्यात्सूचनामात्रम्; भगमालाया न तु मन्त्रोद्धारः। तथा कवीनां साधकानां सन्दर्भः – आश्रयः कामोल्लासविशेषः। तदेव स्तबकभूतं तस्य माया मकरन्दस्य चैकेन भरितं पूरितम्। तथा च भगमालाजापकस्य तदावश्यकं योगं विना न फलदात्री। तं साधकं दृष्ट्वा द्रवन्ति योषितः। भ्रमरकलभौ स्तनकुम्भौ। कर्णयुगलं कर्णे श्रुतौ वेदे युगलं द्वे विद्ये वेदितव्ये इति। नवरसः संभोगः तस्यास्वादः सहजानन्दलाभः ततस्तरलौ पीनौ अमुञ्चन्तौ अन्तररहितौ वारंवारं लालनात्। असूयासंसर्गात् कर्तव्यताज्ञानरहितात्। अलिकनयनं कर्तव्यताज्ञानरहितं पशुनिकरं किञ्चिदरुणं नेति शेषः, नानुरागवान्। अत्रागमोक्तविधाने पशुः। तत्र भगमालापूजाया योगापेक्षा, अन्यत् नावश्यकमिति। षोडशनित्यानां मध्ये अत्र भगमालिनीति। मन्त्राभावः॥ ५०॥

तात्पर्यदीपिनी

कटाक्षवर्णनमवतारयति कवीनामिति – हे मातः, तव अलिकनयनं प्रान्त-सञ्चारचतुरं नयनं, असूयासंसर्गात् किञ्चिदरुणं जातमिव। असूयया रोषस्य संसर्गः। तस्मात्सदोज्ज्वलं ते नयनं क्रोधवशादरुणं जातमित्यर्थः। अत्र क्रोधे कारणमाह – किं कृत्वा, कटाक्षव्याक्षेपभ्रमरकलभौ दृष्ट्वा, कटाक्षयोः व्याक्षेपौ गतागतात्मकौ व्यापारौ, तावेव भ्रमर-कलभौ तौ तथोक्तौ। कटाक्षस्य भ्रमरसाम्यमस्ति। तथा हि – 'यद्गतागतविश्रान्तिवैचित्र्येण विवर्तनम्। तारकायाः कलाभिज्ञास्तं कटाक्षं प्रचक्षते' इति। तौ स्वभावमलिनौ दृष्ट्वा, किंविधौ तौ, कर्णयुगलममुञ्चन्तौ आश्रितौ, पुनः नवरसास्वादतरलौ, नव च ते रसाश्च तेषामास्वादः, तेन तरलौ व्याख्यातौ। षट्पदोऽपि वसन्तोद्भवपुष्पमकरन्दास्वादेन तरलो भवति। समकारणेन साम्यम्। कर्णयुगलाश्रयणे हेतुमाह – किंविधं कर्णयुगलं, कवीनां कवीश्वराणां सन्दर्भस्तबकमकरन्दैकभरितं, सन्दर्भ एव स्तबकः वाणीगुम्फः, तत्र यो मकरन्दः तेन भरितं पूर्णम्। कर्णे हि स्तबकः कर्णपूरो भवति॥ ५०॥

### पदार्थचन्द्रिका

ललाटमध्यस्थमग्निनेत्रं स्वभावतोऽरुणमेवोत्प्रेक्षमाणो वर्णयति – कवीनामिति। हे जननि, तव अलिकनयनं ललाटस्थमग्निनेत्रं, किञ्चिदिति वितर्के, किं असूयासंसर्गाद्धेतोररुणमारक्तं जातम्। असूयाशब्दोऽक्षान्तिपरः। असूयार्थं हेतुमाह – कटाक्षेति। शृङ्गारादिनवरसास्वादे तरलौ चञ्चलौ कर्णयुगलममुञ्चन्तौ अत्यजन्तौ कटाक्षव्याक्षेपभ्रमरकलभौ दृष्ट्वा, कटाक्षयोर्व्याक्षेपौ कटाक्षव्याक्षेपौ भ्रमरकलभाविव कटाक्षव्याक्षेपभ्रमरकलभौ। कर्णयुगलं विशिनष्टि, कवीनां व्यासादीनां सन्दर्भाः वाक्यग्रथनानि [illegible] स्तबका इव, तेषां मकरन्दः श्रवणजन्यं सुखं, तस्मिन्नेकं मुख्यं रसिकं रसास्वादपरम्। अयमभिप्रायः – सूर्यचन्द्रनेत्रे निरन्तरं कविसन्दर्भश्रवणजन्यसुखलोलुपं कर्णयुगलं सेवमाने परमसुखमनुभवतः मम त्वन्तरालवर्तिनो नेतीतीर्ष्यया वाऽरुणमिति। किञ्चिदरुणमिति पाठे असूयासंसर्गादितीतिशब्दोऽध्याहार्यः। ५०।

### डिण्डिमभाष्यम्

दक्षिणवामलोचनापेक्षया ललाटलोचनस्य अरुणकान्तिविशिष्टत्वे हेतुमाह – हे परमेश्वरि! कवीनां ब्रह्मविष्ण्वादीनां भवच्चरणस्तोतॄणां सन्दर्भस्तबकः सन्दर्भो वाग्गुम्फो यः स एव स्तबकः पुष्पमञ्जरी तज्जनितो यो मकरन्दः तद्भरितं मुख्यतया सम्भृतं कर्णयुगलं तव श्रोत्रद्वयम्। अमुञ्चन्तौ नवरसास्वादनलोलुपतया अपरित्यजन्तौ कटाक्षव्याक्षेपभ्रमरकलभौ कटाक्षस्य व्याक्षेपः अपाङ्गविस्फुरणं तावेव भ्रमरकलभौ षट्पदबालकौ कर्मभूतौ दृष्ट्वा। पुनः किम्भूतौ, नवरसास्वादतरलौ प्रागुक्तब्रह्मादिकविप्रकाश्यमानसूक्तिसम्पन्नशृङ्गारादिरसास्वादनलोलौ दृष्ट्वा। असूयासंसर्गात् अस्य ललाटदेशसम्पन्नत्वात् कर्णपर्यन्तागमनाभावात् रसास्वादविरहेण असूयासंसर्गो भवति। उभयोः समानाकारयोरेकस्य धनप्राप्तौ अन्यस्य असूया जायते। अत एव हेतोः अलिकनयनं ललाटलोचनं किञ्चिदरुणं पाटलवर्णं दृश्यते, क्रोधासूययोरीषद्भेदात् तत्संसर्गाद् रक्तत्वमुचितमिति भावः॥ ५०॥

### गोपालसुन्दरी

कवीनामिति – तव अलिकनयनं ललाटलोचनं कर्तृ, कटाक्षव्याक्षेपः अपाङ्गविस्फुरणं तावेव भ्रमरकलभौ षट्पदबालकौ कर्णयुगलममुञ्चन्तौ दृष्ट्वा असूयासंसर्गात् स्वस्य ललाटस्थानतया कर्णपर्यन्तगमनाभावेन ईर्ष्यासम्पर्कात् अरुणं रक्तम्। किञ्चिदिति [इत्यपि पाठः। कर्णयुगलं कीदृशं? कवीनां व्यासादीनां सन्दर्भो वाग्गुम्फः स एव स्तबकस्तत्र यो मकरन्दः शृङ्गारादिरसः तेनैकेन भरितं पूर्णं, भ्रमरकलभौ कीदृशौ? नवरसास्वादतरलौ शृङ्गारादिनवरसास्वादलोलुपौ॥ विष्णुपक्षे – नृसिंहमूर्त्यभिप्रायेण ललाटलोचनवर्णनम् –

'माणिक्याद्रिसमप्रभं निजरुचा सन्त्रस्तरक्षोगणं जानुन्यस्तकराम्बुजं त्रिनयनं रक्तोल्लसद्भूषणम्।
बाहुभ्यां धृतशङ्खचक्रमनिशं दंष्ट्रोग्रवक्त्रोल्लसज्ज्वालाजिह्वमुदग्रकेशनिचयं वन्दे नृसिंहं विभुम्।'
इति ध्यानात्॥ ५०॥

आनन्दलहरीटीका

कवीनामिति। तव अलिकनयनं ललाटनेत्रं कर्तृ, कटाक्षव्याक्षेपौ अपाङ्गदर्शन-व्यापारौ तावेव भ्रमरस्य कलभौ शिशू तौ कर्णयुगलं अभुञ्जन्तौ। अन्यत्र किंस्विदिति वा पाठः। किंस्वित् वितर्के। भालनेत्रस्य कर्णयोगाभावादीर्ष्या। कीदृशं कर्णयुगलं, कवीनां सन्दर्भो निबन्धः काव्यं तदेव स्तबकः पुष्पगुच्छः, तत्र ये मकरन्दा नवविधा रसास्तैरेकं केवलं भरितं पूर्णं, तौ कीदृशौ, नवरसानां शृङ्गारादीनां, भ्रमरपक्षे नूतनपुष्परसानां आस्वादे साक्षात्कारे तरलौ सतृष्णौ त्रयाणां नेत्रभृङ्गशिशूनां द्वौ कर्णान्ते मधुपानं कुरुत इति दृष्ट्वा क्रोधाद्रक्तमभूदिवेति भावः॥ ५०॥

शिवे शृङ्गारार्द्रा तदितर[1]जने कुत्सनपरा
सरोषा गङ्गायां गिरिशच[2]रिते विस्मयवती।
हराहिभ्यो भीता सरसिरुहसौभाग्य[3]जननी
सखीषु स्मेरा ते मयि [4]जननि दृष्टिः सकरुणा॥ ५१॥

சிவே ச்ருங்காரார்த்ரா ததிதரஜநே குத்ஸநபரா
3 3 1 3 1 1 1 1

ஸரோஷா கங்காயாம் கிரிசசரிதே விஸ்மயவதீ।
3 3 3 1 1 1

ஹராஹிப்யோ பீதா ஸரஸிருஹ ஸௌபாக்ய ஜநநீ
4 4 1 4 3

ஸகீஷு ஸ்மேரா தே, மயி ஜநநி த்ருஷ்டிஸ் ஸகருணா॥
2 1 3 1 1

शिव के प्रति शृङ्गाररसार्द्र जुगुप्सित अन्यव्यक्तियों पर
रोषाविल गंगा के सन्दर्भ में गिरिशचरित लखकर
विस्मयपूर्ण त्रासकंपित हर के सर्पहार लखने पर
कोकनदों की छवि हारिणी सखी गण के प्रति हास मधुर
तेरी दृष्टि जननि! उठती है दयासिक्त मुझ किंकर पर॥

1 मुखे 2 नयने 3 जयिनी 4 जयति।

लक्ष्मीधरा

**शिवे** सदाशिवे, शृङ्गारार्द्रा शृङ्गारेण शृङ्गाररसेन आर्द्रा आप्लुता, तदितरजने तस्मात् सदाशिवात् इतरजने तद्विषये कुत्सनपरा बीभत्सरसाविष्टा। अत्र कुत्सनं बीभत्सरसास्वादनजन्यान्तःकरणमुकुलीभावः कार्यकारणयोरभेदेन रसत्वेनोपचरितः। सरोषा रौद्ररसाविष्टा, रोषस्य स्थायिभावस्य रसत्वोक्तिरुपचारात्। गङ्गायां सपत्न्यामिति शेषः। गिरिशचरिते त्रिपुरविजयादौ, विस्मयवती अद्भुतरसाविष्टा, 'गिरिशनयने' इति पाठे तृतीयनयनेनैव मन्मथदहनम्, तादृशनयन एव इदानीं साकूतदर्शनमित्यद्भुतमिति ध्येयम्। हराहिभ्यः हरस्य परमेश्वरस्य अहिभ्यः सर्पेभ्यः, भीता भयरसाविष्टा, सरसिरुहसौभाग्यजननी सरसिरुहाणां सौभाग्यं रक्तिमा तस्य जननी उत्पादिका कोकनदकान्तिः, रक्तवर्णा वीररसाविष्टेत्यर्थः। अत्र अनुभावेन नयनरक्तिम्ना वीररसो ध्वनितः। सखीषु वयस्यासु स्मेरा स्तब्धकनीनिका, अत्राप्यनुभावेन हास्यरसो ध्वन्यते। ते तव, मयि जननि! हे मातः! दृष्टिः सकरुणा करुणरसाविष्टा॥ अत्रेत्थं पदयोजना—हे जननि! ते दृष्टिः शिवे शृङ्गारार्द्रा, तदितरजने कुत्सनपरा, गङ्गायां सरोषा, गिरिशचरिते विस्मयवती, हराहिभ्यो भीता, सरसिरुहसौभाग्यजननी, सखीषु स्मेरा, मयि सकरुणा॥ अत्र परस्परविरुद्धानां रसानां एकत्र नयने समावेशकथनात् विरोधालङ्कारः; अवस्थाभेदेन परिहारात् तस्य विरोधस्य आभासत्वम्। तल्लक्षणं—विरोधाभासो विरोधः' इति। विक्रियाजनका एव रसा इति अष्टौ रसाः। भरतमते—'शान्तस्य निर्विकारत्वान्न शान्तं मेनिरे रसम्'। इति शान्तस्य रसत्वाभावात् अष्टावेव रसास्सङ्गृहीताः॥ ५१॥

सौभाग्यवर्धनी

**शिवे** इति। शिवे शृङ्गारार्द्रा शृङ्गाररसाविर्भावसमुल्लसितविभ्रमनिर्भरा, तदितरमुखे शिवादितरे ब्रह्मादयो मुखं प्रधाना यस्य तस्मिन् समस्तेऽपि लोके विनाशित्वेन कुत्सनाजनितबीभत्सरसवती। तथा च ब्रह्मादीनां विनाशित्वं 'विरिञ्चिः पञ्चत्वं' (श्लोको २६) इति पद्ये प्रकाशितम्। अथवा शिवेतराणां मुखेषु त्वगादिधातुनिर्मितत्वेन विचिकित्साविबोधितबीभत्सरसः। मुखे इति जातावेकवचनम्। अथवा शिवेतरमुखे कदर्यताविभावितबीभत्सरसोन्मेषा। सरोषा गङ्गायां सापत्न्यभावात् कलितक्रोधोदितरौद्ररसा। गिरिशनयने एकवचनत्वात् भालनयनमसाधारणमालोक्य विस्मयोल्लासिताद्भुतरसा। हराहिभ्यो भीता कङ्कणादिभूषणीभूतसहस्रफणादिनागानालोक्य कथमयं कण्ठे विषं धत्ते इति गात्रेषु विषधरातिभयाविर्भावितभयानकरसा। सरसिरुहसौभाग्यजयिनी पद्मगतसौभाग्यजयशीलतया प्रोत्साहोदञ्चितवीररसा। सखीषु स्मेरा, 'सखि! कथय कीदृशोऽनुरागः तव शिवे, शिवस्य च त्वयि कीदृगि'ति

सखीवचनाकर्णनोपनीतमन्दस्मितोदितहास्यरसा। मयि जयति दृष्टिः सकरुणा, अयं मद्भक्तः सन् दुःखी भवतीति सानुग्रहोन्मीलितकरुणरसा इति शृङ्गाराद्यष्टरसजुष्टा। शान्तस्तु नवमो रसो नेह प्रतिपादितः। शिवविषयकशृङ्गाररसप्राधान्यादनुपयुक्तः। तथा च दशरूपकम्—'न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा। रसः स शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु शमप्रधानः॥' इति। विशेषतः शृङ्गारविरोधीति। ननु यत्र भिन्नरसा दृष्टिगता वर्ण्यन्ते तत्र दृष्टिभेदेन वर्णनीयाः। यथा; 'एकं ध्याननिमीलनान्मुकुलितं चक्षुर्द्वितीयं पुनः पार्वत्या वदनाम्बुजस्तनतटे शृङ्गारभारालसम्। अन्यद्दूरविकृष्टचापमदनक्रोधानलाद्दीपितं शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः॥' इति। अथवा 'एकेनाक्ष्णा प्रविततरुषा वीक्षितं व्योमसंस्थं भानोर्बिम्बं सजललुलितेनापरेण स्वकान्तम्। अह्नश्छेदे दयितविरहाशङ्किनी चक्रवाकी द्वौ संकीर्णौ रचयति रसौ नर्तकीव प्रगल्भा॥' इति। तस्मादेकदृष्टिगता नानारसा न वर्णनीया इति। सत्यम्। यत्र समप्राधान्यं रसानां तत्रैव अधिको गुणभेदः। यत्र पुनः समप्राधान्यं नास्ति, एकस्यैव मुख्यता, अन्येषां तत्पोषकत्वं, तत्र नायं दोषः। प्रकृते शृङ्गारे रतिप्राधान्यप्रतिपादनात् तस्यैव मुख्यता। अत एव आर्द्रेत्युक्तम्। कदापि तस्याः शोको नास्तीति। अन्ये वीररसादयः तस्य पोषकाः। तस्मादत्र नायं दोषः। यथा 'सक्रोधा दशकन्धरे, सकरुणा तस्यानुजे, सस्मिता प्रोत्फाले च वनौकसां, सकुतुका युद्धे, सनिन्दाम्बुधौ। साश्चर्या हनुमत्कृते, सचकिता ब्रह्मान्वयोच्छेदने, सोद्वेगा दयितास्मृतौ, मुकुलिता रामस्य दृष्टिः स्थिता॥' इति। सोद्वेगा अथ च मुकुलिता स्थिता इति विशेषणत्रयमहिम्ना दयितास्मरणानन्तरं न कश्चिद्दृष्टेर्व्यापारो जातः, स्तम्भाख्यसात्त्विकभावोऽभूत्। तेन विप्रलम्भशृङ्गारस्य प्राधान्यं अन्ये क्रोधादयस्तिरोहिताः। तथापि रौद्रबीभत्सौ शृङ्गारविरोधिनौ कथमत्रेति शङ्कनीयम्। एकविषयत्वे अयं दोषः आश्रयभेदे न दोषः। प्रकृते शृङ्गारविषयोऽन्यः, जुगुप्सादिविषयः अन्यः इति न दोषः। तथा दशरूपके 'एकोनपञ्चाशदमी हि भावाः युक्त्या निबद्धाः परिपोषयन्ति। आलस्यमौग्ध्यं मरणं जुगुप्सा तस्याश्रयाद्वै न विरुद्धमिष्टम्' इति॥

### अरुणामोदिनी

अथैकस्या एव भगवतीदृष्टेरधिकारभेदेन नवरसावासतां संभावयति – शिव इति। हे देवि, ते नवरसावासभूताया भवत्या दृष्टिः वीक्षणम्। शिवो व्याख्यातः, तस्मिन् समस्तकल्याणगुणाधारे सदाशिवे भवदनुग्रहलब्धनाम्नि। शृङ्गं प्राधान्यमियर्ति रसेष्विति शृङ्गारः। प्राधान्यं चोक्तं ध्वनिकृता – 'शृङ्गार एव मधुरः परप्रह्लादको रसः। तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति' इति। तेन सकलजनानन्दकन्दलक्षणकाममूलकेन संभोगात्प्रागिच्छा-

विशेषलक्षणरतिस्थायिकेन कटाक्षवीक्षणहावभावाद्यनुभावेन नवरसप्रधानेन शृङ्गाराख्येन रसेनार्द्रा आप्लुता शृङ्गाररससंपृक्ता भवतीत्यर्थः। शृङ्गारशब्दोऽत्र रत्याख्यस्थायिभावपरो व्याख्येयः। उत्तरत्र स्थायिभावानामेव निरूपणादिति। तस्मादितरस्तदितरः स चासौ जनश्च तदितरजनः तस्मिन् शिवादन्यस्मिन् अशिवे, जने पृथग्जने। मुखे इति पाठे तदन्यमुखे, कुत्सनपरा जुगुप्सासक्ता इति बीभत्सरसोक्तिः। जुगुप्सायाः बीभत्सस्थायित्वात्। एतेन पातिव्रत्यातिशयः सूचितः। तथा गङ्गायां शिवशिरोऽवस्थितायां सपत्न्यां सरोषा रोषेण क्रोधेन सहितेति रौद्ररसोक्तिः। रोषस्य रौद्रस्थायित्वात्। तथा गिरिशस्य परमेश्वरस्य गिरौ शेत इति व्युत्पत्त्या पार्वतीयत्वेन काठिन्यं सामर्थ्याभावश्च सूच्यते। तस्य चरिते दिगम्बरत्वचर्माम्बरत्वशवभस्मविलेपनत्वादिरूपे स्वमहिमोपलब्धत्रिपुरसुन्दरादिरूपे वा विस्मयवती आश्चर्यवतीति अद्भुतरसोक्तिः। विस्मयस्य अद्भुतस्थायित्वात्। गिरिशनयनेति पाठे गिरिशस्य नयने मदनदाहितरि वह्निरूपे नेत्रे विस्मयवतीत्यर्थः। अतिवैराग्यप्रकाशनाय पुरा दाहितमदनेऽपीदानीं अस्मिन् तदुत्पत्तिहेत्वनुभावदर्शनादिति भावः। अनेन शान्तरसोक्तिः। तथा हराहिभ्यः शिवभूषणीभूतसर्पेभ्यो भीता त्रस्ता। भूषणतायामपि दुर्दमविषाग्निदिग्धानां तेषां भीहेतुत्वादिति भयानकरसोक्तिः। भयस्य भयानकस्थायित्वात्। तथा सरसिरुहाणां पङ्केरुहाणां, 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति ह्रस्वः। सौभाग्यं सुभगत्वं 'हृद्भगसिन्ध्वन्ते'—इत्यादिना उभयपदवृद्धिः। जयतीति सेति वीररसोक्तिः। जयस्योत्साहमूलकत्वात्तस्य च वीरस्थायित्वात्। तथा सखीषु समानप्राणासु वयस्यासु स्मेरा मन्दमधुरत्वादिगुणशीलहासविशेषवती। 'अपरिच्छिन्नविषयं मन्दं मधुरमीरितम्। स्फुरद्भ्रूपक्ष्मतारं यत्तत्स्मेरमिति कथ्यते'। इति लक्षणात्। इति हास्यरसोक्तिः। स्मेरस्य हासघटितत्वात् तस्य च हास्यस्थायित्वात्। तथा हे जननि! भक्तजनावनदीक्षिते मातः! देवि! मयि भक्तजने स्वस्मिन् भगवत्पादाभिधान इत्यर्थः। करुणा दया तया सहिता सकरुणा दयारसाप्लुतेति करुणारसोक्तिः। जयतीति शेषः। जयतीति पाठे संबुद्धिपदमध्याहार्यम्। अत्र 'शृङ्गारहास्यकरुणारौद्रवीरभयानकाः। बीभत्साद्भुतशान्ताख्या रसा नव समीरिताः॥' इति वचनोपात्तनवरसस्थायिनां 'रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा। जुगुप्साविस्मयशमाः स्थायिभावाः प्रकीर्तिताः॥' इत्युक्तानां रत्यादिभावानां निबन्धनात् भगवतीदृष्टेस्तत्तदधिकारिभेदेन सर्वरसमयत्वोक्तिद्वारा शिवादिसाधारण्येन भक्ते स्वस्मिन्नपि निरन्तरकरुणामयत्वमुक्तम्। अत्र 'सजातीयैर्विजातीयैरतिरस्कृतमूर्तिमान्। यावद्रसं वर्तमानः स्थायीभाव उदाहृतः॥' इति दशरूपकोक्तसजातीयविजातीयानभिभूततया यावदनुभवावस्थानलक्षणस्थायित्वघटितस्य, 'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः। आनीयमानः स्वादुत्वं स्थायीभावो रसः स्मृतः॥' इत्युक्तलक्षणस्य रसस्य, 'प्रकाशानन्दचिद्रूपरसतां

प्रतिपद्यते। प्रकृष्यमाणो यो भावः स स्थायीति निगद्यते'। इत्युक्तेः स्थायीभूतरत्यादि-भावाव्यतिरेकात् प्रधानानां तेषामेवात्र निरूपणं कृतमित्यवगन्तव्यम्। न च 'शृङ्गार-बीभत्सरसौ तथा वीरभयानकौ। रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः।' इति वचनात् भिन्नोपाधिकत्वेन परस्परविरुद्धानां रसानामेकत्र समावेशविरोधः शंक्यः। रसानां परस्पर-विरोधेऽपि कविप्रौढोक्तिसमाश्रयणेनैकत्र समावेशो न विरुध्यत इति विद्यानाथोक्तेः। देव्या अलौकिकमहिमत्वेन वा तदुपपत्तेः। अथवा शृङ्गारस्यैवेतररसानामपि त्रिवर्गोपयोगित्वात् परस्परसौहार्दमस्त्येवेति केषाञ्चिन्मतेन न विरोधः। यथोक्तं भावप्रकाशे—'यथा कामोप-योग्यत्र शृङ्गारो दृश्यते रसः। अर्थोपयोगी वीरः स्याद्रौद्रोऽपि स्यात् क्वचित्क्वचित्॥ रक्षारूपेण धर्मार्थोपयोगी करुणो भवेत्। अद्भुतोऽपि मनःप्रीतिकरत्वात्काम्यसाध्यकृत्॥ तद्भयानक-बीभत्सहास्याः कार्येषु योजिताः। तत्तन्नेतृमनोवृत्तिवशात्प्रायस्त्रिवर्गगाः॥' इति। यद्यपि 'रसः सर्वोऽपि संपूर्णस्तिरोधत्ते रसान्तरम्' इति वचनादेक एव रसः प्रतीयते, तथापि महाकविप्रसिद्ध्या रससंकरोऽप्यस्तीति विद्यानाथादिभिः सोदाहरणमुक्तं, न तत्र विवादः। महाकविप्रयोगश्च सर्वरसानामेकत्र समावेशरूपो दृश्यते। यथा शृङ्गारतिलके—'शृङ्गारी गिरिजानने सकरुणो रत्यां प्रवीरः स्मरे बीभत्सोऽस्थिभिरुत्फणी च भयकृन्मूर्त्याद्भुतस्तुङ्गया। रौद्रो दक्षविमर्दने च हसकृन्नग्नः प्रशान्तश्चिरात् इत्थं सर्वरसात्मकः पशुपतिर्भूयात्सतां भूतये॥' इति। गिरिशचरित इत्यनेन वैराग्यद्योतकेन शान्तरसस्य संग्रहान्नवापि रसा निरूपिताः॥ यत्तूक्तं लक्ष्मीधरेण, 'भरतमते शान्तरसस्यानङ्गीकारात्, न शान्तं मेनिरे रसम् इति तस्य सत्त्वाभावादष्टावेव रसाः संगृहीताः' इति तद्भ्रान्तोत्तरम्। 'रतिर्हासश्च शोकश्च' इत्यादिना अष्टौ स्थायिनः परिगणय्य च शब्देन शान्तिरसस्थायिनं शमं सूचयतो भरतमुनेरभिप्रायविदां नवरसपक्षं इतरदूषणपूर्वकं सिद्धान्तीकृत्य लक्ष्यलक्षणनिर्वचनपूर्वकं शान्तरसनिरूपणासक्तानां रुद्रटविद्यानाथादीनामसंमतत्वात्। 'न शान्तं मेनिरे रसम्' इत्यत्रापि पृच्छामः। किं शान्तस्य निर्भरानन्दत्वाभावात् न रसता? किं वैतदन्येष्वन्तर्भावात्? ननु त्रिविधो वीरः, दानवीरः, धर्मवीरो युद्धवीरश्चेति। तत्र धर्मवीरेऽन्तर्भाव इति वाच्यम्। अहमेवंविधः इत्युत्साहापरपर्यायाभिमानमयो वीरः, सर्वाहङ्कारप्रशमनैकरूपः शान्तः इति तस्य तत्रान्तर्भावा-भावात्। विस्तरस्त्वस्मत्कृतरसतरङ्गिणीविबुधामोदिन्यामनुसन्धेयः। पदान्तरेण तल्लाभे तदविचार्य निर्धारणापूर्वकसंग्रहणोक्तिरपि चिन्त्या। यच्चोक्तमाश्रमिभिः, शृङ्गारविरोधित्वात् शान्तो न प्रयुक्त इति, तदपि चिन्त्यम्। तद्विरोधित्वस्य बीभत्सादिसाधारणत्वेन तन्निरूपणा-नर्थक्यापत्तेः। वटयक्षन्यायेन गतानुगत्या समागतवीरादिरसप्रसिद्धिनिरासपूर्वकं शृङ्गारप्रकाश-कारमतावलम्बेन तस्यैव निरूपणीयत्वप्रसक्तेश्च, अस्मदुक्तरीत्या विरोधपरिहाराच्च। अतो

नवरसपक्ष एवाचार्याभिमतः। तत्र च देवीदृष्टेः सार्वकालिकं शृङ्गारकरुणरसमयत्वं व्याख्यातुं स्वपदेनाभिधानम्। इतररसानां कादाचित्कतां अभिधातुं स्थायिभिरभिधानमिति रहस्यम्। अत्र रसवदलङ्कारः॥ ५१॥

## आनन्दगिरीया

एकादशीमाह — शिवे इति। हे जननि मयि तव दृष्टिः सकरुणास्तु। करुणया सह वर्तमाना। अयं मदीयो जनः संसारदावानलदह्यमानो दुःखीति मामुद्वीक्ष्य शोकसमुल्लासित-करुणारसा। पतितोर्ध्वपुटा सार्द्रा स्तोकमन्थरतारका सानुग्रहा दृष्टिः करुणारसादिति। किं लक्षणा? शिवे शृङ्गारार्द्रा शिवमुद्वीक्ष्य रतिभावनया शृङ्गाररसालसा स्निग्धा कान्तेत्यर्थः। 'आर्द्रवती दृश्या सुविकाशातिनिर्मला। सुभ्रूक्षेपकटाक्षा च कान्ता मन्मथवर्धिनी। विकाश-स्निग्धमधुरा चतुरे दधती भ्रुवौ। कटाक्षिणो साभिलाषा दृष्टिः स्निग्धाऽभिधीयते।' तदितरमुखे कुत्सनपरा। तस्मात् शिवात् य इतरे इन्द्रवरुणादयः, तेषां मुखे श्लेष्ममेदोमांस-दुर्गन्धबहुले कुत्सनपरा कुत्सनं निन्दनं बीभत्सा तत्परा बीभत्सरसव्यञ्जिका। जुगुप्सिता इत्यर्थः। 'संकोचितपुटा क्षामा दृष्टिर्मीलिततारका। लक्ष्योद्देशात्समुद्विग्ना जुगुप्सायां जुगुप्सिते'ति। पुनः किंलक्षणा, सरोषा गङ्गायां, गङ्गायां सरोषा स्वस्वामिमुकुटमण्डलोपरि वर्तमानां सपत्नीमालोक्य सासूया। 'चकितद्विपुटा स्तब्धतारकोत्पन्नलोहिता। रूक्षा भ्रुकुटि-भीमोग्रा क्रोधदृष्टिरुदाहृते'ति। अलिकनयनेऽतिविस्मयवती। असंभाविते माहेन्द्रजालिककल्पित इव पदार्थे, ललाटलोचने सञ्जाताद्भुतरसा। 'या त्वाकुञ्चितपक्ष्माग्रा साश्चर्याद्भुततारका। सौम्या विकसितान्ता च विस्मया दृष्टिरिष्यते।' अत्र गिरिशनयने इत्यपि पठितम्। तथापि लोचनमेव व्याख्येयम्। पुनः किंविधा? हराहिभ्यो भीता, हरन्ति प्रलयं कुर्वन्ति हराः, ते च तेऽहयश्च, आभरणभूताः शेषादयः, तेभ्यो भीता भयानकरसाकुला। 'विस्फारितो-भयपुटा भयकम्पिततारका। निष्क्रान्तमध्या दृष्टिस्तु भयभावे भयान्विता।' पुनः किंविधा? सरसिरुहसौभाग्यजयिनी, सरसिरुहसौभाग्यं प्रतिभटमाकलय्य तज्जयार्थं नयविनयपराक्रम-शक्तिप्रतापादिभिरुत्पादितवीरोत्साहा। 'औदार्यस्थैर्यगाम्भीर्यमाधुर्यललितान्यपि। तेजः शोभा-विलासांश्च सत्वभेदान्विवृण्वती। अचंचला विकसिता गम्भीरा समतारिका। दीप्ता चाकुञ्चिता-पाङ्गा वीरदृष्टिरुदाहृता'। पुनः किंलक्षणा? सखीषु स्मेरा। प्रातः क्रीडागृहादागत्य दन्तक्षतालिङ्गनादिसुरतचिह्नोद्भासितगात्रचम्पकलतां पर्वतपतिपुत्रीं तां पार्वतीमवलोक्य सुस्निग्धे सखीजने सौभाग्यश्लाघनव्याजेन परिहसति सति, स्वयमपि स्मितसुन्दरवदनविन्यासशोभितां दृष्टिं सखीषु प्रसारयति स्म। तथा 'चला हसितगर्भा च विशत्तारानिमेषिणी। किञ्चिदा-कुञ्चिता हृष्टा दृष्टिर्हास्ये प्रकीर्तिता।' अत्र प्रथमचरणे शृङ्गारबीभत्सौ, द्वितीयचरणे

रौद्राद्भुतौ, तृतीये भयानकवीरौ, चतुर्थे हास्यकरुणौ ॥ ननु 'रसौ शृङ्गारबीभत्सौ मिथो वीरभयानकौ। रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः' इति भरतोक्तेः, कथं विरुद्ध चतुर्युगलमेवोपन्यस्तम्? परस्परविरोधेन एकस्यापि अनुदयात् इति चेदुच्यते – सत्यं, यद्यपि शृङ्गारबीभत्सादेः परस्परवैरं, तथापि परमेश्वरीशरीरमाहात्म्येन विरुद्धयोरपि विरोधत्यागेन परस्परोपकारकत्वमवलम्ब्य परमेश्वरीशरीरनिवाससुखोपभोगः। आश्रयोपभोगसुखलोभेन वैरिणावपि वैरं त्यजतः। तदुक्तं महाकाव्ये – 'विहाय वैरं पुरशम्बरारी विहारसाम्राज्यसुखाय नूनम्। गुणानुरागादिव यस्य देहे स्वरूपमारोपयतः स्म साक्षात्॥ इति। श्रूयते हि महाकाव्ये पुराणे च महामुनीनामागमे त्यक्तवैराः सिंहशार्दूलादयो गवादिना सह भ्रमन्तीति। ननु तथापि सर्वे रसाः पार्वतीशरीरे कथमेकसमये उत्पद्यन्ते? विभावव्यभिचारिसात्विकैः सदस्यरसनीयतां नीतः स्थायीभावो रसः। स्थायीभावश्च 'विरुद्धैरविरुद्धैर्वा भावैः विच्छिद्यते न यः। आत्मभावं नयत्यन्यान् स्थायीव लवणाकरः' इति विरुद्धाविरुद्धभावाव्यवच्छेद्यत्वे सति सर्वत्र स्वात्मतादात्म्यसंपादको रत्यादिर्भावः। तथा चैकस्मिन् रसे उत्पन्ने तस्य स्थायिना सर्वत्रात्मभावे संपादिते तदैव कथं रसान्तरस्थायी लब्धावकाशः? नापि रसः संयोगज्ञानादिवदव्याप्यवर्ती, येनावच्छेदभेदेनाप्येकाश्रयता स्यात्। तदुक्तं 'योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः। शरीरं व्याप्यते तेन शुष्ककाष्ठमिवाग्निना' इति। अत्र वदन्ति रससाङ्कर्यं शबलता अङ्गाङ्गिभावो वेति। तदसत्। विरोधे सति नैकमपि प्रामाणिकम्। अथ चित्रं सोऽप्यविरुद्धाभ्यामविरुद्धैर्वा स्थायिभिरारभ्यते इति न संभवतीति। परे तु अत्र शृङ्गार एव रसः, अन्ये तु तत्पोषकाः व्यभिचारिण इति। वस्तुतस्तु अयं श्लोको नीरसः। अत्रास्मिन् शृङ्गारादौ निरूप्यमाणे अव्यवधानेन तद्विरोधिनामपि निरूपणात्। यथा – 'अन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पलव्यक्तोत्तंसभृतः पिनद्धशिरसो हृत्पुण्डरीकस्रजा। एताः शोणितपङ्ककुङ्कुमजुषः संभूय कान्तैः पिबन्त्यस्थिस्नेहसुरां कपालचषकैः प्रीताः पिशाचांगनाः।' अथवा कामुके रसोत्पत्तिपर्वं तत्, ऐश्वरमेतत्, तेन न विरोधः। परन्तु परमेश्वर्या अतिशयो न लभ्यते। ननु तथापि श्रीमहादेवशरीरे सर्पकपालचर्मादेः बीभत्सोत्पादकस्य सत्वात् कथं पार्वत्यास्तत्र शृङ्गार इति चेदुच्यते। अत्र स्वस्वामिस्वाभाविकाभरणानां सर्पादीनामपि भयबीभत्साविर्भावकत्वाभावात् न भयानकबीभत्सौ। अनभ्यासदशापन्नाकस्मिकाकल्पितसर्पशार्दूलादिदर्शनस्यैव भयादिविक्षोभकत्वात्। अन्यथा अत्यन्ताभ्यासपाटववता सर्पव्याघ्रादिधारिणा गरुडविदा कदाचिदपि शृङ्गारो न स्यादिति भावः। पार्वत्याः शृङ्गारोदये न कोऽपि प्रतिबन्धः। अत एवास्मत्कर्तृकमहिम्नःस्तोत्रे 'ललाटे कालाग्निर्गरलकणिका कण्ठगुहरे कपालं कण्ठाधो भयदभुजगाः कङ्कणपदे। नितम्बे चर्मेति प्रियवपुषि दृष्ट्वापि किमहो शिवायाः शृङ्गाराम्बुधिरधिकमुल्लासमगम'दिति। शिवे

भृङ्गारार्द्रेति पद्यस्य रहस्यार्थः – एकादशी नित्या। शिवे वाणी भृङ्गारार्द्रा लज्जाद्वयं, तदितरमुखे फ्रूं द्वयम्। कुत्सन ब्लूं परा क्रौं सरोषा हूं गङ्गायां श्रां गिरिशचरिते नित्यमदद्रवे विस्मय ब्लूं। अत्र तु तत्क्रमो नास्ति। ऐं ह्रीं फ्रें स्रूं क्रौं श्रां क्लीं ऐं ब्लूं नित्यमदद्रवे हुं फ्रूं ह्रीं। नीलपताकिनी ॥ ५१ ॥

### तात्पर्यदीपिनी

शिवे इति। हे शिवे ते दृष्टिः सर्वरसात्मिका विजयत इति शेषः। ते तव। विशिनष्टि – किंविधा दृष्टिः, शिवे भगवति भर्तरि दृष्टे सति शृंगारार्द्रा शृङ्गाररसेन क्लिन्ना। अत्र संयुक्तशृङ्गारो वर्णितो भवति। अत्र संयुक्तशृङ्गारे कान्तादृष्टिरसूचि। तथाहि – पिबतीव च दृशा सविकाशा निर्मलाश्रुः सुभ्रूक्षेपकटाक्षासौ कान्ता मन्मथवर्धिनीति। ते शृङ्गारार्द्रा दृष्टिः भगवता भवेन सहानन्दनिर्भररसा, सस्मितैर्यदपाङ्गविलोकनैरनलसा विजयते इति संयुक्तशृङ्गारो वर्णितो ज्ञातव्यः। हास्यदृष्टिमवतारयति – पुनः किंविधा, सखीषु स्मेरा प्रान्ताधरक्षतादिदर्शनसमये ईषदन्तदर्शनादधरस्फुरणे विकसद्गल्लस्मेरा। करुणादृष्टिमवतारयति–पुनः किंविधा, मयि सकरुणा, मदीयोऽयं दुःखाभिभूत इति करुणा। अथ रौद्रां दृष्टिमवतारयति – गङ्गायां सरोषा, गङ्गादर्शनेन सपत्नीभावात् क्रोधोद्धता। अथ वीरमवतारयति, पुनः सरसिरुह सौभाग्यजयिनी, सरसिरुहेषु कमलेषु यत्सौभाग्यं तस्य जयिनी जयनशीला। अथ भयानकमवतारयति – पुनः हराहिभ्यो भीता हरगलविधृतसर्पेभ्यः चकितेत्यर्थः। अथ बीभत्समवतारयति, तदितरजने कुत्सनपरा, तस्मात्सदाशिवात् इतरो यो जनः तस्मिन्दृष्टे सति कुत्सनपरा निन्दनपरा। अथाद्भुतमवतारयति – पुनः गिरिशचरिते विस्मयवती अमीलत्तारकेत्यर्थः। एवमष्टावेव रसा वर्णिताः। ननु शान्तः कुतो न वर्णितः। तस्यानधिकारत्वात्। यथाहुराचार्याः – एके तु निर्विकारत्वात् न शान्तं मेनिरे रसमिति। भगवत्या दृष्टिस्तु महादेवस्य शमं नियच्छेदिति न शान्तो वर्णित इति। आचार्याः स्वमतमेवानन्तरं वक्ष्यन्ति–पुरां भेत्तुश्चित्तप्रशमरसविद्रावणफल इति। "शृङ्गारहास्यकरुणरौद्रवीरभयानकाः। बीभत्सश्चाद्भुतश्चैव शान्तश्चेति रसा नवेति ॥ ५१ ॥

### पदार्थचन्द्रिका

इदानीं भवानीदृष्टिं शृङ्गारादिरसाविष्टतया स्तौति। शिवे इति। हे जननि, ते तव दृष्टिर्विजयते इति क्रियापदमध्याहृत्य योज्यम्। विशेषणैः [illegible] समस्तरसाविष्टतया – शिवे शृङ्गारार्द्रा, शृङ्गाररसेन युक्ता, तदितरमुखे शिवेतरपुरुषे कुत्सनं [illegible] तत्परं कर्तव्यं यस्याः सा। अत्र शिवतदितरपदाभ्यां श्रीमहादेवे कल्याणरूपे शृङ्गाररसोदयः, तदितरपुरुषे

अमङ्गलरूपे च, बीभत्सोदय उचित एवेति सूच्यते। अत्र शिवे इत्यादौ सप्तमी विषये। गङ्गायां सपत्नीत्वात्सरोषेति रौद्ररसाविष्कारः। गिरिशचरिते गिरौ पर्वते शेत इति गिरिशस्तस्य चरिते श्मशानवासादौ मङ्गलरूपस्यायममङ्गलव्यवहार इत्यर्थः, विस्मयवतीत्यद्भुतो रसः। हरस्याहयो भूषणरूपास्तेभ्यो भीतेति भयानको रसः। सरसिरुहस्य सौभाग्यं सौन्दर्यं तस्य जयो विद्यते यस्याः सा तथेति वीररसः। अत्र तत्पुरुषपूर्वक इनुप्रत्ययो नित्ययोगाभिप्रायेण। ततश्च सदा विकसितत्वेन सदाऽऽनन्दवत्ता सूचिता। सखीषु स्मेरा इति हास्यरसः। मयीति स्तोता यः शङ्कराचार्यस्तस्मिन् सकरुणेति करुणो रसः॥ ५१॥

डिण्डिमभाष्यम्

शिवे महादेवे शृङ्गारार्द्रा शृङ्गाररसेन सरसा, तदितरमुखे महादेवव्यतिरिक्तानां पुरुषाणां मुखे कुत्सनपरा घृणापरा। अनेन बीभत्सरसो वर्णितः। गङ्गायां गिरिशजटाजूट-वर्तिन्यां मन्दाकिन्यां सरोषा रोषयुक्ता। अनेन रौद्ररसो व्याख्यातः। महादेवस्य चरिते, चर्माम्बर-शवभस्मलेपन-श्मशानवास-भुजगभूषण-भूतप्रेतादिपरिवारकरणादि लोकविरुद्धचेष्टात्मके शिवस्याचारे विस्मयवती अद्भुतरसयुक्ता। हराहिभ्यः हरस्य महादेवस्य भूषणीकृतेभ्यः सकाशाद्भीता। अनेन भयानकरसो व्याख्यातः। सरसिरुहसौभाग्यजयिनी सरसिरुहाणां कमलानां सौभाग्यस्य कान्तिविशेषस्य जयिनी जयशीला। अनेन वीररसो व्याख्यातः। सखीषु जयाविजयाद्यालीगणेषु स्मेरा स्मितगुणयुक्ता। अनेन हास्यरसो व्याख्यातः। स्मेरशब्दे 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' इत्यनेन सूत्रेण रप्रत्ययः। एवंभूता तव दृष्टिर्मयि सकरुणा भवतु। अनेन करुणरसो व्याख्यातः। अत्र श्लोके शृङ्गारादीनामष्टानाम् नाट्यरसानां संसारनाट्यनियोगित्वात् महानटीं प्रकृतिभट्टारिकामेवाश्रित्य वृत्तिरुक्ता, शान्तस्य तु नवमस्य रसस्य प्रबोधचन्द्रव्यज्यमानवपुषः संसारसुखदुःखानुभवात्मकबहुचित्तव्याक्षेपजनितेन निर्वेद-नाम्ना स्थायिभावेन सततमुपेतस्य सकलचेष्टाध्वंसात्मकस्य, निर्वेदव्यतिरिक्तसर्वसंसारभावरहितस्य एकरूपस्याखण्डात्मकस्य महादेवैकाश्रयत्वात् भगवतीति चरित्रैकपाते न प्रतिपादनम्॥ ५१॥

गोपालसुन्दरी

शिवे शृङ्गारार्द्रेति – शिवे शम्भौ शृङ्गाररसेनार्द्रा तदितरमुखे अन्यदेवमुखे कुत्सनपरा अनेन बीभत्सरसः। गङ्गायां शिवशिरसि वर्तमानायां सापत्न्यात् सरोषेति रौद्ररसो व्याख्यातः। गिरिशचरिते हरस्य परस्परविरुद्धानलचन्द्रादिधारणरूपे विस्मयवती, अनेनाद्भुत-रसः। हरस्य शिवस्य अहिभ्यो भूषणीभूतसर्पेभ्यो भीता भयानकरसोपेता। सरसीरुहाणां कमलानां सौभाग्यस्य जयिनीति वीररसः। सखीषु शिवानुरागादिप्रश्नपरासु स्मेरा, ईषद्धास्यवती,

मयि दीने सकरुणा करुणरसाविष्टा ते तव दृष्टिः जयति। जयतीत्यत्र जननीति पाठे हे जननि इति संबोधनम्। विष्णुपक्षे – शिवे शोभने, गोपीजने तदितरमुखे शूर्पणखादिराक्षसीमुखे, गङ्गायामनवरतं जीवान् नारायणतां प्रापयन्त्यां, गिरिशचरिते कामभस्मीकरण – वामाङ्गवामलोचनाधारणादौ। हरन्ति जीवमिति हरा अहयः सर्पाः कालियादयः, तेभ्यो भीता भयाभिनययुक्ता। अभीता इत्यकारप्रश्लेषो वा। ईसखीषु लक्ष्मीसखीषु। जननि दृष्टिरिति पाठे जननं जन्म अमीषामस्तीति जननिनो जीवाः तेषु दृष्टिः जननिदृष्टिः। तवेत्यर्थः। जननि मयीति पाठे जननि इति पूर्ववत् विष्णोरेव संबोधनम् ॥ ५१ ॥

आनन्दलहरीटीका

शिवे इति। ते तव दृष्टिर्जयति सर्वोत्कर्षेण वर्तते। जननीति पाठे संबोधनम्। सर्वरसात्मकत्वरूपमुत्कर्षं दर्शयति, कीदृशी, शिवे शृङ्गाररसेनार्द्रा स्निग्धा, तदितरस्य शिवभिन्नपुरुषस्य मुखे कुत्सनपरा निन्दनासक्ता, तेन बीभत्सरसो दर्शितः। अत्र भोग्यविषयनिन्दनरूपेणान्तर्भावेन शान्तिरसोऽपि सूचित इति आभिप्रेतसर्वरसमयतायां शून्यत्वमिति ध्येयम्। न चाष्टावेव रसा इत्यस्य मतमिति वर्णनीयम्। नवरसस्वादेति पूर्वोक्तेः। गङ्गायां सरोषा सापत्न्यात् तेन रौद्ररसः। गिरिशस्य शिवस्य चरिते विषकण्ठाहिवलयनेत्रज्वलनादौ विस्मयवती, तेनाद्भुतरसः। चरिते इत्यत्र नयने इति पाठे अनलदर्शनाद्विस्मयः। हरस्य शिवस्याहिभ्यः सर्पेभ्यो भीता। हरन्तीति हरा जीवनहारिणो येऽहयस्तेभ्य इति वाऽर्थः। तेन भयानकरसः। सरसिरुहाणां पद्मानां सौभाग्यस्य सौन्दर्यस्य जयिनी विजयशीला इति वीररसः। सखीषु पतिप्रेमादिप्रश्नपरासु स्मेरा इति हास्यरसः। मयि भक्तेऽदीने सकरुणेति नवरसमयी सर्वोत्कृष्टेत्यर्थः ॥ ५१ ॥

**गते कर्णाभ्यर्णं [1]गरुत इव पक्ष्माणि दधती**
**पुरां भेत्तुश्चित्तप्रशमरसविद्रावणफले[2]।**
**इमे नेत्रे गोत्राधरपतिकुलोत्तंसकलिके**
**तवाकर्णाकृष्टस्मरशरविलासं कलयतः ॥ ५२ ॥**

கதே கர்ணாப்யர்ணம் கருத இவ பக்ஷ்மாணி தததீ
8 1 1 4 3 1 1 8 4 1

புராம் பேத்துச் சித்தப்ரசமரஸ வித்ராவண பலே ।
1 4 1 1 1 1 1 1 3 2

---

1 गरुड 2 फलम्

இமே நேத்ரே கோத்ராதரபதி குலோத்தம்ஸ கலிகே
1 3 1 4 1 1 1 1 1 1 1 1

தவாகர்ணாக்ருஷ்ட ஸ்மரசர விலாஸம் கலயத: ॥
1 1 1 1 1 1

धरणीधर कुलकल्पकलिके! तेरे ये नेत्र मदिर
पुरहर--के चितगत शान्ति को भेदन कर शृंगार मधुर
रसवर्षण करने में सदाप कंकपत्र जैसी सज कर
बरो नियों से अनुपम शोभा दर्शाते हैं सुठि सुन्दर
कानों तक खींचे कामदेव के बाणों की छवि धर कर ॥

लक्ष्मीधरा

गते प्राप्ते, कर्णाभ्यर्णं कर्णयोस्समीपं, गरुत इव कङ्कपत्राणीव, पक्ष्माणि दधती। पुरां पुराणां भेत्तुः भेदकस्य, चित्तप्रशमरसविद्रावणफले चित्ते अन्तःकरणे प्रशमरसः [1]नैस्पृह्यमित्यर्थः, तस्य विद्रावणं विनाशनं शृङ्गाररसोत्पादनमिति यावत्, तदेव फलं प्रयोजनं ययोस्ते चित्तप्रशमरसविद्रावणफले। अत्र फलशब्देन अध्यवसितेन अयोमयी बाणाग्रसूची कथ्यते। इमे हृदयाम्बुजे परिदृश्यमाने, नेत्रे नयने, गोत्राधरपतिकुलोत्तंसकलिके! गोत्रा भूमिः, धरतीति धरः पचाद्यच्, गोत्राया धरो गोत्राधरः, अन्यथा गोत्रां धारयतीति विग्रहे कर्मण्यणि प्राप्तौ गोत्राधार इति स्यात्। अनेनैवाभिप्रायेण शक्तिधर इत्यत्र शक्तेः धरः शक्तिधरः इत्युक्तं क्षीरस्वामिना। गोत्राधरपतिः हिमवान् तस्य कुलोत्तंसकलिका कोरकः तस्यास्सम्बुद्धिः। तव भवत्याः, आकर्णाकृष्टस्मरशरविलासं कर्णपर्यन्तमाकृष्टयोः स्मरशरयोः मन्मथबाणयोः विलासं सौभाग्यं कलयतः कुरुतः। लट्परस्मैपदद्विवचनान्तम्। अत्रेत्थं पदयोजना – हे गोत्राधरपतिकुलोत्तंसकलिके! तव इमे नेत्रे कर्णाभ्यर्णं गते पक्ष्माणि गरुत इव दधती पुरां भेत्तुः चित्तप्रशमरसविद्रावणफले आकर्णाकृष्टस्मरशरविलासं कलयतः। अयमर्थः – पञ्चबाणस्य स्त्रीणां कटाक्षष्षष्ठो बाणः। पञ्चबाण इति प्रसिद्धिः प्राचुर्याभिप्रायेण। कटाक्षात्मकबाणो बाणपञ्चकतुल्य इति न षड्बाण इति व्यवहारः। अत्र निदर्शनालङ्कारः; स्मरशरविलाससदृशविलासकरणप्रतिभानाद् प्रतिबिम्बाक्षेपात् ॥ ५२ ॥

सौभाग्यवर्धनी

गत इति। हे गोत्राधरपतिकुलोत्तंसकलिके! हे हिमवद्गिरीन्द्रकुलालङ्करणभूतकर्णाभरणकल्पद्रुमप्रसूनकोरकशोभे! तव नेत्रे, कर्णाभ्यर्णं कर्णान्तविश्रान्तं, गते प्राप्ते, गरुत

---

1 शान्तरस इत्यधिकः।

इव पक्षाणीव, पक्ष्माणि दधती, पुरां भेत्तुः प्रशमरसविद्रावणमेव फलं पुरवैरिशान्तरसोच्चाटनफलं तत्र सामर्थ्यमिति यावत्। फलमिति श्लिष्टं पदम्, शल्यमपि गृह्यते, तेन सारभाग इव द्राव्यतेऽनेनेति व्युत्पत्तिः। तत्र आकर्णाकृष्टस्मरशरविलासं कलयतः, मदनशरलीलां धत्तः। अत्रान्यलीलामन्यो धत्ते, साधर्म्यादिति निदर्शनालङ्कारेण मदनारेरपि प्रशमरसं विद्रावयतः इति भगवत्या अपाङ्गमहिमा पुष्टः सन् शिवविषयकशृङ्गाररसोत्कर्षं व्यनक्ति ॥ ५२ ॥

### अरुणामोदिनी

अथ नयने एव मदनचापत्वेनाह—गते इति। गोत्राधरपतिर्हिमवान् तस्य कुलोत्तंसकलिके वंशशेखरभूषणकल्पवृक्षकोरके देवि! गरुतः कङ्कपत्राणीव पक्ष्माणि लोमानि दधती दधाने, तथा कर्णाभ्यर्णं कर्णोपकण्ठं गते प्राप्ते, आकर्णपूर्णे इत्यर्थः। पुरां भेत्तुः त्रिपुरान्तकस्य, 'तृजकाभ्यां कर्तरी'ति कर्तरि षष्ठी। एतेन अलोकसाधारणदुर्जयशत्रुजयादौ स्थिरप्रयत्नलक्षणोत्साहस्थायिकस्य वीरस्य प्रतीतेः शृङ्गारस्यावकाशाभावः सूचितः। अस्यापि शिवस्य, चेतयते आकांक्षयते विषयादीनीति चित्तं मनः, तस्य प्रगतः शमः शान्तिर्यस्मात् प्रशमः शान्त्यपकर्षकः, स चासौ रसश्च, शान्तविरोधी वीररसः पुरां भेत्तुरित्यनेन सूचितः। प्रशमरसपदस्य शान्तरसपरताव्याख्यानं पुरां भेत्तुरिति वीररससूचनपरकवितात्पर्याननुसारित्वादुपेक्ष्यम्। तस्य विद्रावणमपकर्षणमेव फलं प्रयोजनम्। तदेव फलं बाणाग्रं ययोस्ते, वीररसपलायनीकरणचतुरे इत्यर्थः। यद्वा—पुरां भेत्तुरिति रौद्रतया अनुदितशृङ्गारस्यापि शिवस्य चित्तं प्रशमयतीति भूषयतीति चित्तप्रशमः शृङ्गारोऽतिमधुरः, तथा सर्वप्राणिहृदयङ्गमत्वात्, चित्तजन्ममूलकत्वाच्च। ते नयनविद्रावणं द्रवीकरणं शृङ्गारप्रधानीकरणमित्यर्थः। तदेव फलं ययोस्ते। अनुदितशृङ्गारस्यापि तदुत्पादनकुशले इत्यतिमहत्त्वोक्तिः। तव सकललोकनियमकरणचतुरायाः भवत्याः इमे ध्यायतो मम पुरस्ताद्भात एव परिदृश्यमाने नेत्रे कर्तृणी, आकर्णं कर्णपर्यन्तं आकृष्टयोः स्मरशरयोः मदनबाणयोः परिचितसंमोहनदक्षयोरित्यर्थः। विलासं सौभाग्यं कलयतः आददतः तत्सदृशीभवत इत्यर्थः। गरुद्द्वारा कर्णव्यतिगमनादिना अतिक्रूरत्रिपुरान्तकचित्ताकर्षणेन चाकृष्टमदनबाणवद्भात इत्यभिप्रायः। उपमानिदर्शनयोः संकरः। तथा च भगवतीनेत्रयोरतिदुर्घटकार्यकरणसामर्थ्यं प्रतीयते ॥ ५२ ॥

### आनन्दगिरीया

गते इति। हे गोत्राधरपतिकुलोत्तंसकलिके, तवेमे नेत्रे आकर्णाकृष्टस्मरशरविलासं कलयतः। गोत्राधराः पर्वताः, तेषां पतिः स्वामी हिमगिरिः, तस्य कुलं तस्योत्तंसः पारिजातकल्पवृक्षादिकुसुमनिर्मितं शिरोऽलङ्करणं मुकुटं, तस्य कलिका कोरक इव शोभमाने

हिमगिरिकुलदीपिके, तव इमे लोचने आकर्णमाकृष्टो यः स्मरशरः, कर्णोपान्तपर्यन्तमाकृष्टो यः कन्दर्पबाणः, तस्य विलासं लीलां सादृश्यं कलयतो धत्तः। नेत्रे अपि विशालवशात् कर्णोपान्तगते दीर्घे। बाणोऽपि आकर्षणसमये कर्णोपान्तमायाति। बाणसाधर्म्यमाह—कर्णाभ्यर्णं गते प्राप्ते। पुनः कीदृशे? पक्ष्माणि-गरुत इव दधती। पुनः किंलक्षणे? पुरां भेत्तुः चित्तप्रशमरसविद्रावणफले, पुरां भेत्तुः महादेवस्य यः प्रशमरसोऽवज्ञोद्बोधितः शान्तरसः, तस्य विद्रावणं प्रच्यावनं तत्फलं प्रयोजनं साध्यं ययोः ते। तपस्यायामनुवर्तमानस्य पुरमथनस्य यः शान्तरसः, तं विनाश्य पार्वतीविषयकानुरागाख्यां रतिमुत्पादयितुं खलु कन्दर्पेण कर्णान्तो बाण आकृष्यते। पार्वतीनयनेनापि कर्णान्तपर्यन्तेन महादेवं व्यामोहयित्वा वशंवदीकृत्य शमरसप्रधानं तपस्त्याजयित्वा पार्वतीविषये सानुरागः कृत इति। अथवा विद्रावयति पात्रभेदेन प्रच्यावयति तद्विद्रावणं, एतादृशं फलं लोहनिर्मिता अग्रे वर्तमाना भल्ली ययोस्ते। यथा रसपूर्णपात्रे लग्नं बाणाग्रभागस्य फलं पात्रं विभिद्य उदकरूपरसं प्रच्यावयति एवं मदनबाणेन तव नेत्रेण शान्तरसरूपजलपूर्णं महादेवमनःपात्रं विभिद्य शान्तरसः प्रच्यावित इत्यर्थः। श्रीमहादेवस्यापि मोहाधायकतया निरतिशयं नेत्रसौन्दर्यमिति। गतेति पद्यस्य रहस्यार्थः। गतेति। गते ए, कर्णाभ्यर्णं भ्रमर, पक्ष्माणि य, गरुत उ, दधती ओ क्षां बानुस्वारौ। एं भ्रमरयूआँ विजया। (ऐंभ्म्र्यूं ऐं)॥ ५२॥

## तात्पर्यदीपिनी

दृग्वर्णनमभिधाय नयनयोः कटाक्षं वर्णयति—गते इति। हे गोत्राधरपतिकुलोत्तंसकलिके, तव इमे नेत्रे आकर्णाकृष्टस्मरशरविलासं कलयतः। गोत्रायाः पृथिव्याः धराः पर्वताः तेषां पतिर्हिमाद्रिः, तस्य कुलं, तस्योत्तंसो मुकुटः तत्कलिका अग्रेतनो हीराङ्कुरः, तत्स्वरूपे हिमाद्रिकुलालङ्कारभूते इत्यर्थः। आकर्णमाकृष्टो यः स्मरशरो मदनबाणः तस्य विलासस्तमनुकुरुतः। नेत्राभ्यां कटाक्षा व्यंग्यः। बाणोऽपि कर्णान्तमाकृष्यते। अयमपि कटाक्षः कर्णान्तं स्वभावेन प्राप्तः स्मराकृष्टो बाण इवोत्प्रेक्षा। तदेवाह—किंविधे नेत्रे, कर्णाभ्यर्णं, गते, कर्णयोरभ्यर्णं निकटं गते प्राप्ते, बाणस्य पक्षमन्तरा न गतिः श्रेष्ठा भवतीत्यत आह—पुनः किंविधे, गरुत इव पक्ष्माणि दधती, अत्र या पक्ष्मराजिः सा पतत्राणीव। बाणेषु फलैर्भाव्यम्। अत्र किं फलमिति तत्राह—पुनः किंविधे पुरां भेत्तुः चित्तप्रशमरसविद्रावणफले, पुरां तिसृणां भेत्तुः भेदकस्य श्रीकण्ठस्य यः प्रशमात्मको रसः तस्य विद्रावणं नाशनं तदात्मके फले ययोस्ते तथा। एतत्कटाक्षस्पर्शमात्रेण महायोगिनोऽपि भगवतः प्रशमविद्रावणं भवति॥

पदार्थचन्द्रिका

अथ श्रीभवान्याः सूर्यचन्द्ररूपे नेत्रे स्मरशरत्वेनोत्प्रेक्षमाणो वर्णयति – गते इति। हे गोत्राधरपतिकुलोत्तंसकलिके तवेमे नेत्रे आकर्णाकृष्टस्मरशरविलासं आकर्णमाकृष्टौ यौ स्मरशरौ तयोर्विलासं शोभां कलयतो धारयतः। उत्तंसः कर्णभूषणं तद्रूपा कलिका। स्मरशर-सादृश्यार्थं नेत्रे विशिनष्टि – कर्णाभ्यर्णं कर्णसमीपं गते प्राप्ते। गरुडे यथा तथा पक्ष्माणि लोमानि दधती धारयन्ती, यद्वा गरुडो यथा तथेति। पुरशब्देन स्वर्णरजतलोहमयं नगराकारं दैत्यविमानमुच्यते। तत्स्था दैत्या अपि। ततश्च पुरां भेत्तुः भेदकस्य श्रीमहादेवस्य प्रशमरस-विद्रावणपरे, विषयौदासीन्यपूर्विका मनसः स्वात्मपरता प्रशमः, तन्निरसनपरे। पुरामित्यत्र कर्तरि, भिनत्तीति भेत्ता तस्य भेत्तुः। पक्ष्म सूत्रादिसूक्ष्मांशे किञ्जल्के नेत्रलोमनीति मेदिनीकरः॥ ५२॥

डिण्डिमभाष्यम्

कर्णाभ्यर्णं श्रवणसमीपं गते दीर्घतया, मदनशरस्य तु आकर्णपूर्णाकर्षणसंभवात् कर्णसमीपगमनं भवति। पक्ष्माणि नयनाच्छादकत्वग्विशेषप्रान्तरे स्वमञ्जातानि रोमाणि पक्ष्माणीत्युच्यन्ते। तान्येव गरुतः बाणमूलगोचरान् पक्षान् दधती बाणस्य सपक्षत्वात्, पुरां भेत्तुः अयोरजतहिरण्याख्यानां गगनचारिणामसुराणां भेत्तुः नाशयितुर्महादेवस्य यः प्रशम-रसविद्रावणफले प्रशमरसस्य शान्तिरसस्य अखण्डब्रह्मज्ञानौघशमादितविश्ववैमुख्यरसस्य विद्रावणं दूरीकरणमेव फलं प्रयोजनं ययोस्ते तथाभूतेश्वरस्य फलत्वनियमात् – 'फलं प्रयोजने वृक्षे प्रसवादौ शराग्रके' अत्र फलशब्दच्छलेन बाणाग्रमतितीक्ष्णलोहशलाकां व्यञ्जयति। इमे सर्वलोकरक्षणक्षमे गोत्राधरपतिकुलोत्तंसकलिके तुहिनशैलकुलसन्तानोत्तंसमञ्जरि तव नेत्रे लोचने आकर्णाकृष्टस्मरशरविलासं कलयतः संपादयतः, त्वत्कटाक्षविक्षेपेणैव भगवान् प्रशमरसं विहाय जगत्सृष्टिस्थितिसंहरणे सहायस्तव साहाय्यमाचरन् भवचेष्टादर्शनाख्य-मनुग्रहं कुर्वाणस्तिष्ठति। तस्य महादेवस्य दर्शनं विना समस्तभूतानां भोगान्तं कैवल्यदानं त्वया क्रियते, दर्शनं शिवधर्मः कैवल्यं तव धर्मः। एतत् प्रयोजनं तावत् युवयोः संबन्धः। दर्शनं भगवत्यधीनं न भवति। पुरुषैकधर्मत्वात्। तस्याः कैवल्यदानं पुरुषधर्मो न भवति। प्रकृत्यैकधर्मत्वात्तस्य। अन्योन्यसाधारणं तद्धर्मद्वयमन्योन्यचेष्टैककारणतया अन्योन्यसंबन्ध-हेतुत्वेन पर्यवस्यति॥ ५२॥

गोपालसुन्दरी

गते कर्णाभ्यर्णमिति। हे गोत्राधरपतिकुलोत्तंसकलिके गोत्रा पृथिवी तां धरन्तीति गोत्राधराः पर्वताः, तेषां पतिर्हिमालयः, तस्य कुलं वंशः, तस्योत्तंसकलिके

शिरोभूषणकोरकस्वरूपे, तव इमे नेत्रे, कीदृशे, कर्णाभ्यर्णं कर्णनिकटं गते प्राप्ते, गरुत इव बाणपक्षाणीव पक्ष्माणि दधती धारयन्ती, पुरां भेत्तुः शिवस्य प्रशमरसविद्रावणफले शान्तिरसदूरीकरणं फलं प्रयोजनमेव फलं ययोरिति परंपरितरूपकम्। विष्णुपक्षे हे गोत्राधर! हे पृथ्वीधर! हे पतिकुलोत्तंसकलिकेत, पतिः पालकः, तस्य कुलं समूहः, तस्योत्तंसः शिरोभूषणं तद्रूपा या कलिका कोरकः, तां तस्मादश्यमितः प्राप्तः। वाशब्दः किस्विदर्थे। उ आकर्णेति वा पदच्छेदः। उ वितर्के। अथवा हे पतिकुलोत्तंस पालकसमूहशिरोधार्य। यद्वा गोत्राधरपतिः गोवर्द्धनः, तत्कुलोत्तंस तद्वंशशिरोभूषण। तद्धारणेन तत्कुलप्रतिष्ठेति यावत्। हे कलिकेतो कलेः दुःखस्य कलियुगस्य वा नाशकः, पुरां जाग्रत्स्वप्नसुषुप्त्यवस्थारूपपुरत्रयाणां भेत्तुः नाशकस्य तव इमे गोपीनां प्रशमरसविद्रावणफले नेत्रे आकर्णाकृष्टस्मरशरविलासं कलयत इत्यर्थः॥ ५२॥

आनन्दलहरीटीका

गते इति। हे गोत्राधराणां पत्युर्हिमालयस्य कुलोत्तंसकलिके वंशशिरोभूषणीभूतपुष्पकलिकास्वरूपे, तव कर्णयोः अभ्यर्णं निकटं प्राप्ते इमे नेत्रे आकर्णं कर्णपर्यन्तं, आकृष्टौ सन्धानेनानीतौ यौ स्मरशरौ कामबाणौ तयोर्विलासं शोभां कलयतो धारयतः। कीदृशी नेत्रे, गरुत इव शरस्थितपक्षिपक्षानिव, पक्ष्माणि लोमानि दधती धारयन्ती। पुनः कीदृशे, पुरां भेत्तुः शिवस्य प्रशमरसः शान्तिरसः तस्य विद्रावणं दूरीकरणं फलं प्रयोजनं ययोः ते तथा। शरपक्षे तादृशशरफले लोहनिर्मितशल्ये ययोरिति निग्रहः॥ ५२॥

विभक्तत्रैवर्ण्यं[1] व्यति[2]करित[3]लीलाञ्जनतया
विभाति त्वन्नेत्रत्रितयमिदमीशानदयिते।
पुनः स्रष्टुं देवान् द्रुहिणहरिरुद्रानुपरतान्
रजः सत्त्वं बिभ्रत्तम[4]इति गुणानां[5]त्रयमिव॥ ५३॥

விபக்த த்ரைவர்ண்யம் வ்யதிகரித லீலாஞ்ஜன தயா
4 1 1 1 1 1 1 1

விபாதி த்வந்நேத்ர த்ரிதயமிதமீசான தயிதே।
4 1 1 1 1 1 3 3 1

---

1 त्रैवर्ण्यव्यतिकरित 2 व्यतिकलित 3 नीलाञ्जनतया, नीलांबुजतया, नीलांबुजरुचा
4 इव 5 त्रयमिदम्।

புநஸ் ஸ்ரஷ்டும் தேவாந் த்ருஹிண ஹரி ருத்ராநுபரதாந்
1 1 3 3 3 1 1
ரஜஸ் ஸத்வம் பிப்ரத் தம இதி குணாநாம் த்ரயமிவ ॥
1 3 4 1 1 1 3

परशिवदयिते काजल लगे नेत्र तीनों तेरे लसते
श्वेत अरुण नील वर्णों की छटा दिखाते, लोकहिते।
प्रलयानन्तर विधि हरि ईश्वर को जीवित करनेवाले
सत्व रजस्तम त्रिगुणों से तव सृष्टि कार्य करनेवाले ॥

लक्ष्मीधरा

विभक्तत्रैवर्ण्यं विभक्तं परस्परासङ्कीर्णं त्रैवर्ण्यं त्रयो वर्णाः सितासितरक्ताः यस्येति बहुव्रीहिः, स्वार्थे ष्यञ्। महाभाग्यपुरुषाणां नयने रक्तरेखास्सन्ति, नयनगोलद्वयं श्वेतम्, यद्यपि कनीनिका नीला, तथापि तृतीयनयने कनीनिकायाः नैल्याभावात् इत्याह व्यतिकरित-लीलाञ्जनतया इति। व्यतिकरितं संवलितं लीलार्थं विलासार्थं धृतं अञ्जनं यस्य तत् तस्य भावस्तत्ता तया। तृतीयनयनगोलस्य श्वैत्यमङ्गीकृत्योक्तम्। विभाति विराजते। त्वन्नेत्र-त्रितयं तव नेत्राणां त्रितयं, इदं परिदृश्यमानं, ईशानदयिते ईशानस्य महादेवस्य दयिता प्रेयसी तस्यास्संबुद्धिः, पुनः स्रष्टुं गतब्रह्माण्डानन्तरमस्मिन् ब्रह्माण्डे भूयो निर्मातुं, देवान् देवनधर्मयुक्तान्, [1]द्रुहिणहरिरुद्रानुपरतान् आत्मनि विलीनान्, रजः रजोगुणः, सत्त्वं सत्त्वगुणः, बिभ्रत् दधत्, तमः तमोगुणः, इति एवं गुणानां सत्त्वरजस्तमस्संज्ञिकानां, त्रयं त्रितयं, इव। अत्रेत्थं पदयोजना—हे ईशानदयिते! इदं त्वन्नेत्रत्रितयं व्यतिकरितलीलाञ्जनतया विभक्तत्रैवर्ण्यं उपरतान् द्रुहिणहरिरुद्रान् देवान् पुनः स्रष्टुं रजस्सत्त्वं तम इति गुणानां त्रयमिव बिभ्रत् विभाति। अत्र सत्त्वगुणः श्वेतवर्णः रजोगुणो रक्तवर्णः तमोगुणो नीलवर्णः इति कविप्रसिद्धिः। तम इति निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः; परिगणनस्य प्रायिकत्वादिति निपातेतिशब्देनाभिधानात् रजस्सत्त्वतमश्शब्दाः प्रथमान्ताः। यद्वा—द्वितीयान्ताः; निपाताभिधानस्य प्रायिकत्वात्। यथोक्तं वाग्भटेन—हिंसा स्तेयान्यथाकामं पैशुन्यं परुषानृते। संभिन्नालापव्यापादमभिध्यां दृग्विपर्ययम् ॥ पापं कर्मेति दशधा कायवाङ्-मानसैस्त्यजेत्। इति। अत्र उत्प्रेक्षालङ्कारः; नयनगतस्य श्वेतरक्तनीलरेखात्रितयस्य सत्त्वरज-स्तमोगुणत्वेनोत्प्रेक्षणात्। अत्र भगवत्याः नयनाञ्जनदर्शनादेव सृष्टिस्थितिलया इति महान-तिशयो ध्वन्यत इत्यलङ्कारेण वस्तुध्वनिः ॥ ५३ ॥

1 द्रुहिणहरिरुद्रान् ब्रह्मविष्णुमहेश्वरान् उपरतान्।

सौभाग्यवर्धनी

विभक्तेति। विभक्तत्रैवर्ण्यं त्रयाणां वर्णानां भावः त्रैवर्ण्यं, श्वेतरक्तकृष्णानामित्यर्थः। तस्य व्यतिकरः संपर्कः, स संजातो यत्र, तादृशनीलाम्बुजतया श्वेतरक्तनीलसंपृक्तनीलोत्पलभावेनेत्यर्थः। नीलाम्बुजरुचेति पाठान्तरम्। हे ईशानदयिते, त्वन्नेत्रत्रितयमिदं विभाति। उपरतान् प्रलयं गतान् द्रुहिणहरिरुद्रान् पुनः स्रष्टुं रजः सत्वं तम इति गुणानां त्रयमिव, दक्षिणनेत्रं रजोगुणप्रधानं, वामं नेत्रं सत्वप्रधानं, भालनेत्रं तमःप्रधानं, तैः ब्रह्मविष्णुरुद्रान् उपरतान् स्रष्टुं श्वेतं रक्तं श्याममिति विभक्तत्रिवर्णभावसंयुक्तनीलाम्बुजभावैः, श्वेतरक्तश्यामात्मकगुणत्रयं बिभृष इति पिण्डितोऽर्थः। क्वचित्सर्गे विष्णुर्नाभिकमले एकं ब्रह्माणं सृष्टवान्। भगवती नेत्रोत्पलैः ब्रह्मविष्णुमहेश्वरान् सृजति। लीलाम्बुजेति पाठे नेत्रमहिमा लोकोत्तर इति ध्वनिः। विभक्तत्रैवर्ण्यव्यतिकरितनीलाञ्जनतयेति क्वचित्पाठः। तत्रायं न ध्वनिः। एवं पाठत्रये यदुचितं, तत् सद्भिर्ग्राह्यम्॥ ५२॥

अरुणामोदिनी

एवं नेत्रद्वयमुपवर्ण्य त्रितयमप्येकदा विवर्णयिषुः, त्रिगुणात्मकप्रकृतिरूपिण्यां देव्यां हरिहरद्रुहिणसृष्टिकारणस्य गुणत्रयस्य नित्यनिवासं संभावयति—विभक्तेति। ईशानाख्यश्चतुर्थः पुत्रः द्रुहिणहरिरुद्राणां कारणभूतो दयितः प्रियः प्रेमास्पदः यस्याः सा ईशानदयिता, तस्याः संबुद्धिः, हे ईशानदयिते, ब्रह्मादिकारणे, देवि! व्यतिकलितं संपृक्तं नीलमञ्जनं येषु तानि, तेषां भावस्तत्ता तया, नीलाञ्जनप्रधानतयेत्यर्थः। इदञ्च तृतीयनयने नैल्यसूचनार्थमिति लक्ष्मीधरः। नीलांबुजरुचेति पाठे इन्दीवरकान्त्येत्यर्थः। त्रयो वर्णाः श्वेतरक्तनीलाख्याः त्रैवर्ण्यम्। चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्। अत एव त्रयाणां वर्णानां भावस्त्रैवर्ण्यमिति लक्ष्मीधरव्याख्यानं भ्रान्तम्। विभक्तं प्रत्येकशो विविक्तं त्रैवर्ण्यं यस्मिंस्तत्, नेत्रद्वये श्वेतमण्डलरक्तरेखाणां संयोगतः, अञ्जनकलनावस्थितेः, तृतीयनयनेऽप्यञ्जनसंयोगात् कार्ष्ण्यावस्थानाच्चेति भावः। इदमस्मदनुग्रहदृष्टिमत्। तव भवत्या नेत्रत्रितयं नयनत्रयं कर्तृ, उपरतान् प्रलयान्तरमीशाने निलीनान्, द्रुहिणहरिरुद्रान् रजःसत्वतमोगुणप्रधानान् सृष्ट्यादिकर्तॄन् ब्रह्मविष्णुकालरुद्रान्, पुनः भूयोऽपि, स्रष्टुं सृष्ट्यादिप्रवर्तनाय सर्जनं कर्तुं, रजः सत्त्वं तम इत्येतद्गुणानां त्रयं ब्रह्मादिसर्जनसाधनं रक्तश्वेतनीलत्वेन कविसमयप्रसिद्धं बिभ्रदिव भाति प्रकाशते। रक्तश्वेतनीलैर्गुणैरलंकृतं भवन्नेत्रत्रितयं पुनर्ब्रह्मादिसर्जनाय तत्कारणगुणत्रयधारीव भातीत्यर्थः। उत्प्रेक्षालङ्कारः॥ ५२॥

आनन्दगिरीया

विभक्तेति। हे ईशानदयिते इदं तव नेत्रत्रितयं विभाति वामदक्षिणमध्यस्थम्।

व्यतिकरितनीलाञ्जनतया व्यतिकरितं विजृम्भितं नीलाञ्जनं यत्र तत्तथा, तस्य भावस्तया। किंलक्षणं, विभक्तत्रैवर्ण्यं विभक्तं प्रतिस्वीकृतविभागं प्राप्तं, त्रैवर्ण्यं वर्णत्रयसमूहो यत्र तत्। वर्णत्रयं रक्तश्वेतश्यामरूपं, क्रमेण रक्तवर्णो दक्षिणे, ततो ब्रह्मोत्पन्नः। शुक्लो वामे, ततो विष्णुः। श्यामो मध्ये ततो रुद्रः। अथवा प्रतिनेत्रं त्रैवर्ण्यं कोणे रक्तः, तारकायां श्यामः परितः शुक्लः। यद्यपि त्रयोऽपि वर्णाः प्रतिनेत्रं, तथापि क्वचित् कस्यचित्प्राधान्यं ज्ञातव्यम्। अथवा यद्यपि विभक्तत्रैवर्ण्यं तथापि व्यतिकरितनीलाञ्जनतयापि अत्यन्तं शोभते। अत्र विभक्तत्रैवर्ण्यं व्यतिकरितनीलांबुजतयेत्यपि पठन्ति। त्रैवर्ण्यं कर्बुरितनीलकमलकान्तिवत्कान्त्या। उभयथापि अञ्जनवर्णमुत्प्रेक्षते। प्रलये उपरतान् ब्रह्मविष्णुरुद्रान्देवान् पुनः स्फुटमुत्पादयितुं गुणत्रयं बिभ्रदिव। गुणत्रयमाह-रजः सत्वं तम इति। वामे रजोगुणाख्यस्य प्राधान्यं, दक्षिणे सत्वशुक्लस्य प्राधान्यं, मध्ये तमसः। अत एव तेभ्यः क्रमेण ब्रह्मविष्णुरुद्राणां उत्पत्तिः। अथवा विभक्तत्रैवर्ण्यं उत्पादितब्रह्मक्षत्रियवैश्यवर्णत्रयं, व्यतिकरितं सञ्जातव्यतिकरं यन्नीलमञ्जनमविद्याख्यं यत्र। तथा च गुणत्रयप्रधाना तदापातवत् त्रिविधया दृष्टया क्षोभिता या अविद्या तयेत्यर्थः। शेषं पूर्ववत्। व्यतिकरितनीलाञ्जनं तथापि विभक्तत्रैवर्ण्यमिति विरोधाभासः। एतावता संसारमृत्युशालास्तम्भभूता गुणत्रयमयी आदिशक्तिः प्रकृतिरूपा त्वमिति प्रतिपादितम्। विभक्तेति पद्यस्य रहस्यार्थः–विभक्तेति। वि व सत्वपरा। सों सर्वमङ्गला स्वाहा ॥ ५३ ॥

तात्पर्यदीपिनी

नेत्रोपवर्णनं कटाक्षवर्णनमभिधायेदानीं नेत्राण्येव वर्णयति–विभक्तेति। हे ईशानदयिते, त्वन्नेत्रत्रितयं विभाति। ईशानस्य महेश्वरस्य दयिता प्रिया, तस्याः संबुद्धिः। किंविधं नेत्रत्रितयं, रजः सत्वं तम इति गुणानां त्रयं बिभ्रदिव, किं कर्तुं, उपरतान् महाप्रलयोच्छिन्नान् द्रुहिणहरिरुद्रान् देवान् पुनः स्रष्टुं, द्रुहिणश्च हरिश्च रुद्रश्च तान् ब्रह्मविष्णुमहेश्वरान्, पुनः स्रष्टुं, रजसा द्रुहिणस्य सृष्टिः, सत्वतो हरेः, तमसा रुद्रस्येति। भगवत्या वीक्षणमात्रेण तेषां उत्पत्तिः। कथमत्र गुणत्रितयोत्प्रेक्षा? तत्र हेतुमाह–किंविधं नेत्रत्रितयं, व्यतिकरितनीलाञ्जनतया विभक्तत्रैवर्ण्यं, त्रयाणां वर्णानां समूहस्त्रैवर्ण्यं, विभक्तं त्रैवर्ण्यं यस्मिंस्तत्तथोक्तम्। रक्तशुक्लनीलात्मकं, व्यतिकरितं प्रक्षिप्तं यन्नीलाञ्जनं सहकारि, ततः सर्वोऽपि सृष्टिव्यापारो भवतीत्यसूचि ॥ ५३ ॥

पदार्थचन्द्रिका

पुनरपि प्रकारान्तरेण नेत्रत्रयं स्तौति–विभक्तेति। हे ईशानदयिते, ईष्टे ब्रह्माणमारभ्य पिपीलिकापर्यन्तं जीवजातमिति ईशानो महादेवः, तस्य दयिता तस्याः संबोधनं

तथा। ईशानो दयितो यस्यास्तत्संबोधनं तथेति बहुव्रीहिः। स्वनेत्रत्रयं बुद्धौ सन्निधाप्याहेद-मिति। गुणानां त्रयं बिभ्रदिव विभातीत्यन्वयः। गुणैः सादृश्यं वक्तुं त्रितयं विशिनष्टि—विभक्तेति। त्रयाणां वर्णानां समाहारः त्रिवर्णं, त्रिवर्णमेव त्रैवर्ण्यं, स्वार्थे ष्यञ्। विभक्तं त्रैवर्ण्यं यस्मिंस्तत्। वर्णशब्दोऽत्र रूपवाची। ननु सूर्याग्निनेत्रे लोहिते, चन्द्रनेत्रं शुक्लमेवेति कुतो नीलरूपमाह—व्यतिकरः संपर्कः संजातो यस्मिंस्तत्। व्यतिकरितं लीलया दत्तमञ्जनं लीलाञ्जनं व्यतिकरितलीलाञ्जनं यस्मिंस्तत्तथा। तस्य भावस्तत्तथा। व्यतिकरितनीलाञ्जनतयेति पाठे नीलं च तदञ्जनं चेति समासः। न च नीलपदवैयर्थ्यं व्यावृत्त्यभावादिति वाच्यम्। अञ्ज्यतेऽनेनेत्यञ्जनमिति व्युत्पत्त्या नीलस्याप्रतीतेः। गुणत्रयमेवाह-रज इति। सांख्यशास्त्र-प्रसिद्ध्या बुद्धौ सन्निधाप्याह। द्वितीयमिदमिति किमर्थं गुणत्रयमिदमित्यपेक्षायामाह। पूर्वमेकवारं सृष्टा द्रुहिणादयो देवाः, ते चोपरतव्यापारास्तान्, दृष्ट्या पुनरन्यान् स्रष्टुमित्यर्थः। बिभ्रत्तम इति पाठे गुणप्रदर्शनार्थं इतिशब्दः। द्रुहिणहरिरुद्रानित्यत्र द्वन्द्वे घीति हरिशब्दे प्राक् प्रयोक्तव्ये द्रुहिणपदस्य प्राक्प्रयोगोऽभ्यर्हितं पूर्वमिति अभ्यर्हितार्थताभिप्रायेण। वर्णो द्विजादौ शुक्लादौ यशोगुणकथासु च। स्तुतौ नाना स्त्रियां भेदरूपाक्षरविशेषण इति मेदिनीकरः॥ ५३॥

डिण्डिमभाष्यम्

अस्मिन्श्लोके भगवत्याः परप्रकृतिरूपत्वं वर्णयन्, तत्स्वरूपस्य त्रैगुण्यस्य जगत्सृष्टि-कारणभूतस्य सर्वदा परमेश्वरीशरीरे नित्यावस्थानं वर्णयति। नेत्रत्रयमेव भगवत्याः, त्रैगुण्यात्मना परिणतम्। त्रयो गुणास्तु सत्त्वरजस्तमोनामानः शुक्ललोहितकृष्णस्वभावाः। अत्रापि नेत्रेषु शुक्लत्वं धवलापाङ्गे, रक्तराजिषु लौहित्यं, स्वतःसिद्धदिव्यकालाञ्जनसंपर्कात् कृष्णमिति प्रकारेण भगवतीलोचने त्रैवर्ण्यसिद्धिः। उक्तं च श्रुतौ 'अजामेकां लोहितशुक्ल-कृष्णां' इति। विभक्तत्रैवर्ण्यव्यतिकरितनीलाञ्जनतया विभक्तत्रैवर्ण्येन व्यतिकरितं संबद्धं नीलाञ्जनं येषु तानि तथोक्तानि, तेषां भावः तत्ता, तया कारणभूतया, तव नेत्रत्रितयं तव लोचनत्रयं, हे ईशानदयिते विभाति विशेषेण दीप्तिं प्राप्नोति। केनेत्याह—द्रुहिण-हरिरुद्रान् ब्रह्मविष्णुशिवान्, त्रिदेवान्, उपरतान् सतः, कालधर्मेण त्यक्तशरीरान्, पुनः स्रष्टुं शरीरान्तरेण योजयितुं, रजः सत्त्वं तम इति गुणत्रितयं त्रिगुणसमुदायं बिभ्रद्दधानमिति प्रतिभाति। ब्रह्मविष्णुरुद्राणामन्तकाले तेषां तु मूलभूतानां सत्त्वादिगुणानां न कदाचित्क्षयः। तेषां खलु नित्यायाः शक्तेरूपत्वात्। न हि यत्किञ्चित् वस्तु स्वरूपं न व्यभिचरति। तद्व्यभिचारे तदन्यत्वापत्तिरिति शब्दसामान्यम्॥ ५३॥

गोपालसुन्दरी

विभक्तेति। हे ईशानदयिते शिववल्लभे, त्वन्नेत्रत्रितयमिदं उपरतान् प्रलयं गतान् द्रुहिणहरिरुद्रान् ब्रह्मविष्णुशिवान् पुनः स्रष्टुं रजः सत्वं तम इति गुणानां त्रयं बिभ्रदिव विभाति। कीदृशं नेत्रत्रितयं, व्यतिकरितनीलाञ्जनतया संबद्धश्यामकज्जलतया विभक्तत्रैवर्ण्यं विभक्तं असंबद्धं त्रैवर्ण्यं त्रयो वर्णाः यत्रेत्यर्थः। विभक्तत्रैवर्ण्यव्यतिकरितनीलाम्बुजतयेति क्वचित्पाठः। तत्र, विभक्तेन त्रैवर्ण्येन वर्णत्रयेण श्वेतरक्तनीलरूपेण, व्यतिकरितं संबद्धं यन्नीलाम्बुजं, तद्भावेन, देवान् स्रष्टुं गुणानां त्रयं बिभ्रदित्यन्वयः। विष्णोर्नाभिकमलेन एक एव ब्रह्मा सृष्टः। त्वन्नेत्रकमलेन ब्रह्मविष्णुरुद्राः सृष्टा इति व्यतिरेकालङ्कारः। विष्णुपक्षे – हे ईशान ईश्वर दयिते भक्तजने, तदुपरि त्वन्नेत्रत्रितयं, इदं कामदं गुणानां त्रयं बिभ्रदिव भातीत्यर्थः। हरिरिन्द्रः, नृसिंहमूर्त्यभिप्रायेण नेत्रत्रयवर्णनम्। अन्यत् समानम्॥

आनन्दलहरीटीका

विभक्तेति। हे ईशानदयिते शिवप्रिये, इदं त्वन्नेत्रत्रितयं विभाति। कीदृशं व्यतिकरितं संयुक्तं नीलमञ्जनं कज्जलं यत्र तथाविधत्वेन विभक्तं व्यक्तीभूतं त्रैवर्ण्यं रक्तकृष्णशुक्लरूपवर्णत्रयं यत्र तादृशं, चातुर्वर्ण्यादिवत् स्वार्थे तद्धितः। विभक्तत्रैवर्ण्यव्यतिकरितनीलाम्बुजतयेति पाठे विभक्तेन त्रैवर्ण्येन व्यतिकरितं यन्नीलांबुजं तत्त्वेन तत्सदृशत्वेनेत्यर्थः। पुनः कीदृशं उपरतान् प्रलये तिरोहितान् ब्रह्मादीन् पुनः स्रष्टुं रजः सत्वं तम इति गुणानां त्रयं बिभ्रत् धारयदिव। इवेत्युत्प्रेक्षायाम्। गुणत्रयाणां वर्णत्रयेण साम्यमुत्प्रेक्षितम्॥ ५३॥

पवित्रीकर्तुं नः पशुपतिपराधीनहृदये
[1]दयामित्रैर्नेत्रैररुणधवलश्यामरुचिभिः।
नदः शोणो गङ्गा तपनतनयेति ध्रुवममुं
त्रयाणां तीर्थानामुपनयसि संभेदमनघम्[2]॥ ५४॥

பவித்ரீகர்தும் ந: பசுபதி பராதீனஹ்ருதயே
1 1 1 1 1 1 1 1 4 3

தயாமித்ரைர் நேத்ரைரருண தவள ச்யாம ருசிபி: ।
3 1 1 1 1 4

நதச் சோணோ கங்கா தபநதநயேதி த்ருவமமும்
3 3 3 1 1 1 1 4

த்ரயாணாம் தீர்தாநாம் உபநயஸி ஸம்பேதமநகம் ॥
3 1 2 1 4 3 4

---

1 दयामिश्रैः 2 मनघे

पशुपति पराधीनहृदये माँ! पावन करने हम सब को
अरुण धवल श्याम नेत्र धर कर सदय सकल हरने अघ को।
संपादित करती तू संगम शोणा गंगा जमुना का
तीनों तीर्थों का निश्चय ही अनघ अनोखी नदियों का ॥

लक्ष्मीधरा

एतदेव त्रैवर्ण्यं पुनरुत्प्रेक्ष्यते–पवित्रीकर्तुं अपवित्रान् पवित्रान् सम्पद्यमानान् कर्तुं 'अभूततद्भावे सम्पद्यकर्तरि च्विः'। नः अस्मान्, पशुपतिपराधीनहृदये! हरायत्तचित्ते! दयामित्रैः दयार्द्रैः, नेत्रैः अरुणधवलश्यामरुचिभिः प्रत्येकमिति शेषः। नदः [1]पुंप्रवाहः शोणः हिरण्यवाहः, स तु रक्तवर्णः, गङ्गा भागीरथी श्वेतवर्णा, तपनतनया कालिन्दी नीलवर्णा इति कविप्रसिद्धिः। इति एवं, ध्रुवं सत्यं, अमुं परिदृश्यमानं, त्रयाणां तीर्थानां जलावताराणां, सम्भेदं नदीसङ्गमं, उपनयसि सम्पादयसि। अनघं अघापनोदकम्। अत्रेत्थं पदयोजना–हे पशुपतिपराधीनहृदये! दयामित्रैः अरुणधवलश्यामरुचिभिः नेत्रैः शोणो नदो गङ्गा तपनतनयेति त्रयाणां तीर्थानां अमुं अनघं संभेदं नः पवित्रीकर्तुं उपनयसि ध्रुवम्। भक्तवत्सलत्वाद्देव्या इति भावः। अत्रोत्प्रेक्षालङ्कारः; स्वभावसिद्धस्य नयनगतरेखात्रितयस्य सितासितरक्तवर्णात्मकस्य गङ्गायमुनाशोणसङ्गमत्वेनोत्प्रेक्षणात् ॥ ५४ ॥

सौभाग्यवर्धनी

पवित्रीति। हे पशुपतिपराधीनहृदये! महादेवपरतन्त्रे! दयामित्रैः दयारसनिबद्धसौहार्दैः, अरुणधवलश्यामरुचिभिः विभक्तत्रैवर्ण्यैः क्रमेणेत्यर्थः। शोणो नदः, गङ्गा तपनतनया इति त्रयाणां तीर्थानां संभेदं सङ्गमं नः अस्मान् पवित्रीकर्तुं उपनयसि समीपगतं करोषि। लोके गङ्गायमुनासरस्वतीनां संभेदो दृष्टः। न तु शोणगङ्गायमुनानाम्। नः पवित्रीकर्तुमेतादृशं तीर्थसंभेदमुपनयसि। हे अनघे! अहो तव भक्तेषु दयापरतन्त्रता, असंभावि संभावयसीति भावः। अत एव नद्याः स्वाभाविकनैर्मल्यगुणोल्लसिता त्वम्। यद्यपि प्रत्येकं नेत्रत्रयेऽपि त्रैगुण्यमस्ति तथापि त्रैगुण्यतारतम्यमिह प्रतिपाद्यम्। रजोगुणाधिक्यं दक्षिणनेत्रे, सत्त्वगुणाधिक्यं वामनेत्रे, तमोगुणाधिक्यं फालनेत्रे, सत्त्वगुणाधिक्यं वा ॥ ५४ ॥

अरुणामोदिनी

पुनस्तदेवान्यथोत्प्रेक्षते–पवित्रीकर्तुमिति। पशुपतिः शिवः तेन पराधीनं हृदयं यस्याः सा शिवायत्तचित्ता। पशुपताविवाङ्गतया पशुशब्दवाच्यजनावनपरायणहृदया

1 पुण्यप्रवाहः।

वेत्यभिसंधिः । तस्याः संबुद्धिः हे पशुपतिपराधीनहृदये । नः भक्तजनानस्मान्, पवित्रीकर्तुं शोद्धुमेव । 'कुलिशं भिदुरं पविः' इति कोशात् पविं त्रायत इति पवित्र इन्द्रः तत्समानीकर्तुं चेत्यभिसंधिः । 'सितासिते सरितौ यत्र संगते' इत्यादिश्रुतेः । अरुणधवलश्यामरुचिभिः रक्तशुभ्रनीलकान्तिकलितैः । किं च दयामित्रैः कृपावद्भिः नेत्रैर्नयनैः । शोणस्तदाख्यो रक्तवर्णो नदः पुंप्रवाहः, गङ्गा भागीरथी श्वेतवर्णा, तपनतनया यमुना नीलवर्णेत्येवंरूपाणां त्रयाणां तीर्थानां पुण्यजलानां अनघं हृद्यं 'अनघोऽपापहृद्ययोः' इति धरणिः । अनघे इति पाठे देवी सं* ... ... [पवित्रीकर्तुमिति । हे पशुपतिपराधीनहृदये, श्रीपरशिवायत्तचित्ते दयामित्रैः कारुण्यपूर्णैः, अरुणधवलश्यामरुचिभिः अरुणत्वं रक्तराजिषु, धवलत्वं अपाङ्गभागे, श्यामत्वं कृष्णमण्डल इति त्रिधा वर्णविन्यासेन शोभमानैः नेत्रैः नः अस्मान् पवित्रीकर्तुं नदः शोणः हिरण्यबाहुश्च 'शोणो हिरण्यबाहुः स्यात्' इत्यमरः । गङ्गा जाह्नवी च, तपनतनया कालिन्दी चेति त्रयाणां जगत्प्रसिद्धानां महातीर्थानां संभेदं संसर्गं, अन्योन्यमेलनं उपनयसि । हे अनघे अपापशीले, त्वच्चरणनिरतानां भक्तानां त्वद्व्यतिरेकेण तीर्थोपाश्रयो व्यर्थ एव । यत्त्वदीयावलोकनसंपन्नशांभववेधदीक्षाशुशुक्षणितत्क्षणप्लुष्टसमस्तदुरिततूलपुञ्जतया नित्यशुद्धा एव परिपूर्णा आसते । तथा हि 'तीर्थानि तोयपूर्णानि देवान्पाषाणमृण्मयान् । योगिनो न प्रपद्यन्ते ह्यात्मध्यानपरायणाः ।' इति । 'न वारिणा शुद्ध्यति चान्तरात्मा' इति च ] ॥ ५४ ॥

### आनन्दगिरीया

पवित्रीकर्तुमिति । हे पशुपतिपराधीनहृदये महादेवकामिनि, त्वं नेत्रैः कृपया त्रयाणां तीर्थानां संभेदं सङ्करमपूर्वं प्रयागममुं उपनयसीति दृढं मन्ये । पवित्रीकर्तुं जन्ममरणप्रबन्धान्धकारसंसारसंबन्धनपरमायापटलैः मलिनीकृतान् नः अस्मान् पवित्रयितुम् । परोपकारव्यतिरेकेण तव तीर्थवहने प्रयोजनं नास्तीत्यत आह । अनघे पापात्मताभाववति । तव तु पापसंबन्धो नास्ति, येन स्वार्थं वहसीत्युच्येत । नैरपेक्ष्यमाह—किंलक्षणैर्नेत्रैः दयामित्रैः, दया मित्रं येषां तानि तैः, दयाया मित्रैर्वा दयासहकृतैः । एतावता तव निरुपाधिकृपामन्थरितकटाक्षविक्षेपमात्रेण परमपापिनोऽपि तीर्थराजप्रयागजलकल्लोलक्रीडयेव समवधूतसवासनसकलपापाः सन्तः, स्वर्गापवर्गयोर्लक्ष्मीमपाक्रष्टुमुत्सहन्ते इत्युक्तेन त्वं परमकरुणाकादंबिनीति ध्वनितम् । तीर्थमाह—नदः शोणो गङ्गा तपनतनयेति । तपनतनया यमुना । शोणो नदः, अनेन रजोगुणप्रधाना सरस्वती । शोणो नदो वा । यद्यपि तस्य रक्तरूपता नास्ति तथापि शोणनाम्ना शब्दबलेन रक्तभागवर्णनम् । कीदृशैः नेत्रैः, अरुणादिरुचिभिः । अथवा प्रत्येकं

---

* इतः परं मातृका त्रुटिता । [] चिह्नमध्यगतं डिण्डिमभाष्यपंक्तीः सर्वथानुकरोति ।

रुचित्रयमपि। यद्यपि ब्रह्मविष्णुरुद्रादीनामपि सेव्या स्वतन्त्रा भुवनभयभङ्गव्यसनिनी भुवनेश्वरी, तथापि पतिव्रताधर्मपरायणासीत्याह—पशुपतिपराधीनहृदयेति। स तु पशुपतिः, त्वं च लोकोत्तरसकलव्यवहारचातुरीचमत्कारचत्वरीभूता, तथापि धर्ममार्गप्रवर्तिकेति भावः। पवित्रीकर्तुं नः इति पद्यस्य रहस्यार्थः—चतुर्दशमाह—पवित्री प्रणवः, कर्तुं नमः, पशुपति-पराधीनहृदये भगवति देवदेवि दयामित्रैः नेत्रैः सर्वसंहारकारके, अरुण जातवेदसि, धवल श्याम ज्वल, रुचिभिः इदं पदमाम्रेडितं, नदः शोणो गङ्गा ह्रां ह्रीं ह्रूम् तपनतनया सप्ततनयो रेफः इदं त्रयाणां तीर्थानां ज्वालामालिनी भेद अस्त्रं अनघे स्वाहा। ओं नमो भगवति ज्वालामालिनि देवदेवि सर्वभूतसंहारकारके जातवेदसि ज्वलन्ति ज्वल ज्वल प्रज्वल प्रज्वल ह्रां ह्रीं ह्रूम् र र र र र र र ज्वालामालिनि हुं फट् स्वाहा। ज्वालामालिनी ॥ ५४॥

तात्पर्यदीपिनी

पवित्रीकर्तुमिति—हे अनघे निष्पापे, पशुपतिपराधीनहृदये पशुपतिना पराधीनं हृदयं यस्याः सा तस्याः संबोधनं, हराकृष्टहृदये इत्यर्थः। त्वन्नेत्रैः त्रयाणां तीर्थानां संभेद-मुपनयसि प्रापयसीति ध्रुवं निश्चितमेव। किं तत् तीर्थं, तत्राह—शोणो नदः, गङ्गा विष्णुपदी, तपनतनया यमुना इति त्रयाणां तीर्थानामिति, बहूनां नदानां विद्यमानत्वात्तद्भेदकं शोणपदम्। कथमिति तत्राह—किंविधैर्नेत्रैः, अरुणधवलश्यामरुचिभिः, अरुणा च धवला च श्यामा च रुचिर्येषु तैः, आरुण्येन शोणोपमा, धवलतया गङ्गोपमा श्यामतया यमुनोपमा। किं तीर्थं मया विधीयते, तत्राह—न अस्मान् पवित्रीकर्तुं अतिकृतापराधान् भक्तान् पावयितुं, पुनः किंविधैर्नेत्रैः, दयामिश्रैः दयया मिश्राणि तैः। अमुं स्वसेवाच्युतं कोऽनुकम्पेतेति दयावद्भिः॥

पदार्थचन्द्रिका

परमपावनत्वेन जगत्प्रसिद्धत्रिवेणीरूपकेण नेत्रत्रयं वर्णयति। पवित्रीकर्तुमिति। पराधीनं परतन्त्रं, पशुपतिना पराधीनं हृदयं यस्यास्तत्संबोधनं, तथा हे अनघे, न विद्यते अघं पापं यस्याः स्मरणादिना सा अनघा, तत्संबोधनं तथा। नोऽस्मान्पवित्रीकर्तुं नेत्रैस्त्रयाणां तीर्थानां संभेदं सङ्गममुपनयसि प्रापयसि। ध्रुवं शङ्के। अतिप्रसिद्धया बुद्धौ सन्निधाप्याह—अमुमिति। कानि तीर्थानीत्यपेक्षायामाह—नद इति। नदशब्देनात्र नदी लक्ष्यते। सा च सरस्वती। अत एव शोणशब्दोऽत्र परिचायकः। सरस्वत्या 'सरस्वती रजोरूपा कलिन्दजे'ति पुराणे रजोरूपवर्णनात्। रजश्च लोहितमिति सांख्ये समये प्रसिद्धमेव। अन्यथानुपपत्तिश्च लक्षणाबीजम्। वेणीसादृश्यार्थं नेत्राणि विशिनष्टि—अरुणेति। स्पष्टम्। दया मित्रं येषां तैः। दयामित्रत्वं च तीर्थेऽपि योज्यम्। परमोपकारकत्वात्तीर्थानाम्। अरुणत्वादिकं स्पष्टमेव

वेण्याम्। अथवा शोणो नद एव। तथाचाभूतोपमा। पशुपतिपराधीनहृदये अनघे इति च एदद्वयेन परमपतिव्रतायाः परमपावन्याश्च भवान्या नेत्राणां तीर्थरूपत्वं युक्तमेवेति व्यज्यते ॥ ५४॥

डिण्डिमभाष्यम्

हे पशुपतिपराधीनहृदये! श्रीपरमेश्वरायत्तहृदये, दयामित्रैः कारुण्यसम्पूर्णैः अरुण-धवलश्यामरुचिभिः, अरुणत्वं रक्तराजिषु, धवलत्वमपाङ्गभागे, श्यामलत्वं कृष्णमण्डले इति त्रिधा वर्णविन्यासेन शोभमानैर्नेत्रैः, नः अस्मान् पवित्रीकर्तुं लोकपावनान् कर्तुम्, नदः शोणः हिरण्यबाहुश्च, 'शोणो हिरण्यबाहुः स्यादित्यमरः'। गङ्गा जाह्नवी, तपनतनया कालिन्दी च इति त्रयाणां जगत्प्रसिद्धानां महातीर्थानां सम्भेदं संसर्गं अन्योन्यमेलनं, उपनयसि सम्पादयसि। हे अनघे! अपापशीले, त्वच्चरणनिरतानां भक्तानां त्वद्व्यतिरेकेण तीर्थोपाश्रयः व्यर्थ एव। त्वदीयालोकनस्पर्शशाम्भववेधदीक्षाशुशुक्षणितत्क्षणप्लुष्टसमस्तदुरिततूलपुञ्जतया नित्यपरिशुद्धा एव परिपूर्णास्ते। तथा हि–'तीर्थानि तोयपूर्णानि देवान् पाषाणमृण्मयान्। योगिनो न प्रपद्यन्ते आत्मध्यानपरायणाः।' इति। 'न वारिणा शुध्यति चान्तरात्मा' इति च ॥ ५४ ॥

गोपालसुन्दरी

पवित्रीकर्तुमिति–हे पशुपतिपराधीनहृदये! शिवाधीनमानसे, अनघे निष्पापे, ध्रुवं निश्चितं, नोऽस्मान्, पवित्रीकर्तुं नेत्रैः शोणो नदः, गङ्गा त्रिपथगा, तपनतनया यमुना इति त्रयाणां तीर्थानाममुं सम्भेदं सङ्गममुपनयसि प्रापयसि, नेत्रैः कीदृशैः? दयामित्रैः दयैव मित्रं येषां तैः, पुनः कीदृशैः? अरुणधवलश्यामरुचिभिः रक्तशुक्लकृष्णकान्तिभिः। विष्णुपक्षे–पशुपतिपराधीनहृदिति गङ्गाविशेषणम्। अये! इति सम्बोधनं पदम्। यद्वा पशुपतिपराधीन-हृदयेति गङ्गाविशेषणम्। इदयेति यमुनाविशेषणम्। तत्र इं कामं ददाति इदः श्रीकृष्णस्तं तत्सादृश्यं यातीत्यर्थः। उभयोः कृष्णवर्णत्वात्। अनघे स्थाने मुखरूपे त्रयाणां तीर्थानां सम्भेदमुपनयसीत्यर्थः। अनघे निष्पापे जने दयामित्रैरिति वा अन्वयः॥ ५४ ॥

आनन्दलहरीटीका

पवित्रीकर्तुमिति। अमुं संभेदं संगममुपनयसि प्रापयसि निकटं प्रापयसि। कीदृशैर्नेत्रैः, दयया सह सदा विहारिभिः। मिश्रैरिति पाठे संबद्धैरित्यर्थः। अरुणधवलश्यामा रुचयो येषां तैः। अरुणं रक्तम्। अत एव तीर्थत्रयत्वेनोत्प्रेक्षितम्। शोणस्यारुणत्वाद्गङ्गाया धवलत्वात् यमुनायाः श्यामलत्वात्। 'संभेदः सिन्धुसङ्गमः' इत्यमरः॥ ५४ ॥

**निमेषोन्मेषाभ्यां प्रलयमुदयं याति जगती**
**तवेत्याहुः सन्तो धरणिधरराजन्यतनये।**
**त्वदुन्मेषाज्जातं जगदिदमशेषं प्रलयतः**
**परित्रातुं शङ्के परिहृतनिमेषास्तव दृशः ॥ ५५ ॥**

நிமேஷோந்மேஷாப்யாம் ப்ரளயமுதயம் யாதி ஜகதீ
தவேத்யாஹுः ஸந்தோ தரணிதர ராஜந்யதநயே ।
த்வதுந்மேஷாஜ்ஜாதம் ஜகதிதமசேஷம் ப்ரளயத:
பரித்ராதும் சங்கே பரிஹ்ருத நிமேஷாஸ்தவ த்ருச: ॥

तेरे पलकों के मुँदने खुलने से संत कहा करते
जग के लय उद्भव होते हैं शैलराजतनये धरते
खुले नेत्र पलकों के तव वैसे ही सदा बिना मूंदे
प्रलय समय तवा सारे जग को रक्षित रखने जगवन्द्ये ॥

लक्ष्मीधरा

निमेषो नाम पक्ष्मणां मुकुलीभावः, अत्र उन्मेषो नाम नयने पक्ष्मविकासः, ताभ्यां यथाक्रमं, प्रलयं संहारं, उदयं उद्भवं, याति प्राप्नोति। जगती जगत् तव भवत्याः, इति एवं, आहुः ब्रुवते। 'ब्रुवः पञ्चानामादितः' इत्यादिना आहादेशः। सन्तः सत्पुरुषाः व्यासादयः। दृष्टिसृष्टिवादिमते ज्ञानव्यतिरेकेण ज्ञेयाभावात् निमेषोन्मेषाभ्यामित्युक्ते-राञ्जस्यमिति ध्येयम्। धरणिधरराजन्यतनये! हिमाचलपुत्रिके! त्वदुन्मेषात् तव पक्ष्मस्पन्दात्, जातं जगत् भुवनं, इदं परिदृश्यमानं अशेषं कृत्स्नं, प्रलयतः महासंहारात्, परित्रातुं रक्षितुं, [1]शङ्के। परिहृतनिमेषाः तिरस्कृताक्षिस्पन्दाः, तव दृशः नयनानि। अत्रेत्थं पदयोजना—धरणिधरराजन्यतनये! तव निमेषोन्मेषाभ्यां जगती प्रलयमुदयं यातीति सन्तः आहुः। अतः त्वदुन्मेषात् जातं अशेषं इदं जगत् प्रलयतः परित्रातुं तव दृशः परिहृतनिमेषाः इति शङ्के। अत्रोत्प्रेक्षालङ्कारः। देवतानामनिमेषत्वं स्वभावसिद्धम्; तच्च जगत्संरक्षणार्थमिति फलत्वेनोत्प्रेक्षणात् फलोत्प्रेक्षा। तत्र निमेषोन्मेषदशायां तौ जगदुत्पत्तिलयाविति देव्याः महिमा अवाङ्मनसगोचर इति वस्तु ध्वन्यते। अतः अलङ्कारेण वस्तुध्वनिः ॥ ५५ ॥

---

1 शङ्के मन्ये।

सौभाग्यवर्धनी

हे धरणिधरराजन्यतनये। तव निमेषोन्मेषाभ्यां प्रलयमुदयं याति जगती पृथ्वी, जगतीत्युपलक्षणं, सकलं जगत्। जगतीशब्दः जगद्वाचक इत्यभियुक्तवचनमिति। सन्तः परमार्थदशायां चिद्विलासं विश्वं पश्यन्तः। त्वदुन्मेषात् जातं जगदिदमशेषं प्रलयतः परित्रातुं परिहृतनिमेषाः तव दृशः। उन्मीलनात् जातं जगत् तदानीं च निमीलने जाते उत्पन्नमेव पश्यन्त इति हेतोः अनिमिषनयना त्वमिति भावः। निरतिशयानन्दमय्या एव ब्रह्माविनाभूतचिच्छक्तेः देवताशरीरोपाधिमवलम्बमानायाः स्वाभाविकं तदन्यथा प्रस्तूयत इत्यपह्नुतिरेव॥

अरुणामोदिनी

निमेषेत्यादि। हे धरणिधरराजन्यतनये! शैलराजन्यतनये! निमेषोन्मेषाभ्यां, तव नयनयोः निमीलनोन्मीलनाभ्यां प्रलयं संहारं उदयं सृष्टिं च कर्म, जगती कर्त्री समस्तभुवनावलिर्याति प्राप्नोति। सन्तः भूतभविष्यद्वर्तमानविदः आहुः निगदन्ति। 'ब्रुवः पञ्चानामादित आहो ब्रुवः' इत्याहादेशः। यदित्थं वदन्ति तत्प्रायेण असत्यमिति प्रतिपादयन्ति—त्वदिति। त्वदुन्मेषात् तव लोचनोन्मीलनात् जातं लब्धसत्ताकं जगत् इदं, शिवादिक्षितिपर्यन्ततत्त्वजालविनिर्मितं भुवनसंस्थानं प्रलयकर्मतः संहारतः सकाशात् परित्रातुं रक्षितुं परिहृतनिमेषाः निमीलनरहिताः तव दृश इति शङ्के इति वाक्यार्थः कर्म। अस्मिन्नर्थे कामसिद्धिस्तोत्रे भगवतीभक्तिलोलचूडामणिः श्रीवत्सराजोऽप्याह—'लोकाश्चतुर्दश महेन्द्रमुखाश्च देवाः मूर्तित्रयं मुनिगणाश्च वसिष्ठमुख्याः। सद्यो भवन्ति न भवन्ति समस्तमूर्तेरुन्मीलनेन तव देवि निमीलनेन॥' इति। सर्वासामपि देवाङ्गनानां अनिमिषलोचनत्वं वर्तते। तद्भगवत्या अपि स्वभावसिद्धं। देवजातिप्रसिद्धं अनिमिषलोचनत्वमुत्प्रेक्ष्यते कविनेति मन्तव्यम्। भगवत्या लोचनयोरेवायं प्रभावः यत्कार्यकारणपौर्वापर्यव्यवस्थाव्यतिरेकेण चोपादानकारणपूर्वनियतविद्यमानताव्यतिरेकेण च बुद्धिमत्कर्तृवाङ्मनश्शरीरचेष्टाविरहेण चानेन मन्त्रतन्त्रसाधितैन्द्रजालिकयोगिपुरुषकरतलकलितशुद्धपिञ्छिकाभ्रमणमात्रतत्क्षणसंपादितकपटसमुद्रगन्धर्वनगरादिसादृश्येन स्वात्मस्थितमेव विश्वं प्रपञ्चं भगवत्या लोचनमेव सृजति रक्षति संहरतीत्यागमप्रसिद्ध्या स्वभावोक्तिरेव मन्तव्या। न हि परमार्थवचनवेलायां कविकल्पितमिथ्यारूपोत्प्रेक्षालङ्कारसंभव इति॥ ५५॥

आनन्दगिरीया

निमेषोन्मेषाभ्यामिति। प्रलयतोऽशेषं जगद्रक्षितुं परिहृतनिमेषाः, उन्मेषानन्तरं तदैव निमेषे क्रियमाणे, मुनिवचनस्य प्रमाणत्वात् जगतः प्रलयो भविष्यतीति कृपया परित्यक्त-

निमेषाः। अन्यथा निर्निमेषत्वे कारणान्तरं नास्ति। किंलक्षणं जगत्, त्वदुन्मेषाज्जातम्। एतावता स्वयमुत्पादितस्य स्वस्मादेव नाशे यदनौचित्यं तत्परिहारः। तदुक्तं – 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्'। अनेन पद्येन देवत्वं स्वभावसिद्धं परमेश्वर्या वर्णितम्। देवाः स्वभावात् त्रिदशाः खल्वेतेऽनन्तमन्वन्तरायुषोऽनिमेषचक्षुषो नभश्चारिणः कामगाः त्रिनयनचतुर्भुजादयः। अस्मदादयस्तु दशदशाः शतवर्षपरमायुषः परिभ्रमचक्षुषो भूचराः प्रतिहतगतयो द्विभुजनयनाः। निमेषोन्मेषेतिपद्यरहस्यार्थः – निमेषेति। ते निमेषोन्मेषाभ्यां जगती मन्त्रमयी त्वदर्धमात्राधिष्ठानानधिष्ठानाभ्यां, यत्रैव तवाधिष्ठानं तत्रैवोदयः प्रकाश इतरथा त्वदुन्मेषाज्जातं त्वयार्धमात्रान्तःकरणात्मकतया। कीदृशो दृशः। ततस्तास्त्वदङ्गसंभूतांस्त्रातुं सावधानाः सर्वत्र सन्तीति ॥ ५५ ॥

तात्पर्यदीपिनी

निमेषोन्मेषाभ्यामिति – हे धरणिधरराजन्यतनये, धरणिधरो हिमाद्रिः, स एव राजन्यो राजा तस्य तनये पुत्रि, सन्त इत्याहुः। सन्तो द्वैपायनपुरस्सरा इत्याहुः। इतीति किम्। जगती पृथ्वी तव निमेषोन्मेषाभ्यां प्रलयमुदयं च याति। निमेषश्चोन्मेषश्च ताभ्यां, निमेषो दृष्टिमीलनं, उन्मेष उन्मीलनं ताभ्यां विश्वप्रलयोदयौ भवत इति वदन्ति। अतः कारणादहमिति शङ्के, इति किं, इदमशेषं जगत्परित्रातुं तव दृशः परिहृतनिमेषा भवन्ति। परिहृता निमेषा यासां ताः। निमेषरहिता इत्यर्थः। किंभूतं जगत्, त्वदुन्मेषाज्जातं, तव उन्मेषः निमेषपरिहारः तस्मात् जातस्य जगतः प्रलयो मास्तु इति धिया दृशां निमेषपरिहारः कृत इति भावः ॥ ५५ ॥

पदार्थचन्द्रिका

पुनरपि नेत्राण्युत्प्रेक्षमाणो वर्णयति – निमेषोन्मेषाभ्यामिति। उन्मेषोऽक्षिपक्ष्मविभागजनिता क्रिया। तृतीया हेतौ। जगती त्रैलोक्यं चतुर्मुखरूपधारी श्रीनारायणो यदा निद्राति तदा त्रैलोक्यं नश्यति, यदा च जागर्ति तदा जगदुदेतीति सन्तो व्यासादयो वदन्तीत्यर्थः। भवानी विष्णुरिति पुराणवाक्यान्निर्धारयते, तद्यथा 'एकैव मूर्तिः परमेश्वरस्य भिन्ना चतुर्धा व्यवहारकाले। भोगे भवानी पुरुषे च विष्णुः क्रोधे च काली समरे च दुर्गा' इति शङ्के तर्कयामि। परिहृतो निमेषो याभिस्ताः। स्पष्टमन्यत् ॥ ५५ ॥

डिण्डिमभाष्यम्

हे धरणिधरराजन्यतनये शैलराजनन्दिनि, भूधरेन्द्रतनूजे। निमेषोन्मेषाभ्यां तव लोचनयोः निमीलनोन्मीलनाभ्यां प्रलयं संहारं उदयं सृष्टिं च कर्म जगती कर्त्री समस्तभुवना-

वलिर्याति प्राप्नोति, इति – सन्तो भूतभविष्यद्वर्तमानविदः आहुः निगदन्ति। 'ब्रुवः पञ्चाना-मादित आहो ब्रुवः' इत्याहादेशः। यदित्थं वदन्ति तत्प्रायेण सत्यमिति प्रतिपादयति। त्वदुन्मेषात् तव लोचनोन्मीलनात् जातं लब्धसत्ताकं जगदिदं शिवादिक्षितिपर्यन्तं तत्वजाल-विनिर्मितभुवनसंस्थानं कर्म, प्रलयतः संहारतः सकाशात्परित्रातुं रक्षितुं परिहृतनिमेषाः निमीलनरहिताः तव दृशः इति शङ्के वाक्यार्थकर्म। अस्मिन्नर्थे भगवतीभक्तचूडामणिः श्रीवत्सराजोऽपि कामसिद्धिस्तोत्रेऽपि उक्तवान् – 'लोके चतुर्दशमहेन्द्रमुखाश्च देवा मातस्त्रयी मुनिगणाश्च वसिष्ठमुख्याः। सद्यो भवन्ति न भवन्ति समस्तमूर्तेरुन्मीलनेन तव देवि निमीलनेन॥' सर्वासामपि देवाङ्गनानामनिमेषलोचनं वर्तते तद्भगवत्या अपि स्वभावसिद्धं देवजातप्रसिद्धमनिमेषलोचनत्वमुत्प्रेक्ष्यते कविना इति न मन्तव्यं, भगवत्या लोचनयोरेवायं प्रभावः यत्कर्मकारणपौर्वापर्यव्यवस्थाव्यतिरेकेण च उपादानकारणपूर्वनियतविद्यमानताव्यतिरेकेण हि बुद्धिमत्कर्तव्यवाङ्मनश्शरीरचेष्टाविरहेण अनेकतन्त्रमन्त्रसाधितैः जालिकयोगिपुरुषकरतल-कलितशुद्ध पिच्छाभ्रमणमात्र परिक्षणसंपादितकपटसमुद्रगन्धर्वनगरादिसादृश्येन स्वात्मस्थितमेव विश्वप्रपञ्चं भगवत्या लोचनमेव सृजति रक्षति संहरति इत्यागमशास्त्रोक्तप्रसिद्धस्वभावोक्तिरेव मन्तव्या। न हि परमार्थवचनवेलायां कविकल्पितमिथ्यालङ्कारोत्प्रेक्षालङ्कार इति॥ ५५॥

### गोपालसुन्दरी

निमेषेति – हे धरणिधरराजन्यतनये शैलाधिराजसुते! तव निमेषोन्मेषाभ्यामक्षि-निमीलनोन्मीलनाभ्यां, जगती पृथिवी, प्रलयं नाशं उदयमुत्पत्तिं याति प्राप्नोति इति सन्त आहुः। त्वदुन्मेषात्तव लोचनोन्मीलनात्तत्प्रादुर्भूतमशेषं जगत् प्रलयतः संहारात् परित्रातुं तव दृशः परिहृतनिमेषाः त्यक्तनिमीलनाः इति शङ्के तर्कयामीत्यर्थः। विष्णुपक्षे – हे धरणिधर पृथिवीधर! राजन्यतनयः समुद्रः तस्मिन् तव निमेषोन्मेषाभ्यां जगती प्रलयं लीनतां उदयं व्यक्तिं यातीत्यर्थः॥ ५५॥

### आनन्दलहरीटीका

निमेषोन्मेषाभ्यामिति। हे धरणिधरराजन्यतनये पर्वतराजपुत्रि, तव निमेषोन्मेषाभ्यां नेत्रनिमीलनोन्मीलनाभ्यां जगती त्रिजगती पृथ्वी वा प्रलयं नाशं उदयमुत्पद्य-मानतां यथासंख्यं यातीति सन्तः पण्डिता आहुः। अतः अहमिति शङ्के उत्प्रेक्षे, किमित्याह – त्वदुन्मेषात् तव नेत्रोन्मीलनात् जातं इदमशेषं समस्तं जगत्प्रलयतो विनाशात्परित्रातुं रक्षितुं तव दृशो नेत्राणि किं परिहृतनिमेषाः त्यक्तनिमीलनाः। देवतात्वेन स्वभावतोऽनिमेषत्वमेव-मुत्प्रेक्षितम्॥ ५५॥

**तवापर्णे कर्णेजपनयनपैशुन्यचकिताः**
**निलीयन्ते तोये नियतमनिमेषाः शफरिकाः ।**
**इयं च श्रीर्बद्धच्छदपुटकवाटं कुवलयं**
**जहाति प्रत्यूषे निशि च विघटय्य प्रविशति ॥ ५६ ॥**

தவாபர்ணே கர்ணேஜப நயந பைசுந்ய சகிதா:
1 1 1 1 1 111
நிலீயந்தே தோயே நியதமநிமேஷாச் சபரிகா: ।
1 1 1 2 1
இயம் ச ஸ்ரீர் பத்தச்சத புடகவாடம் குவலயம்
1 334123 111 1 1
ஜஹாதி ப்ரத்யூஷே நிசி ச விகடய்ய ப்ரவிசதி ॥
1 1 1 1 4 1 1 1

तव कर्णों से लगे पिशुननयनों से डर कर छिप बैठीं
जल में मत्स्यरमणियां अनिमिष तव दृशि लक्ष्मी भी तज बैठी ।
मुकुलित इन्दीवर सुम को प्रत्यूष समय में शुभवर्णे
निशि को पुनः पैठती खोल कवाटपटल देवि अपर्णे ॥

लक्ष्मीधरा

तव भवत्याः, अपर्णे! पार्वति! कर्णेजपनयनपैशुन्यचकिताः कर्णेजपे कर्णसमीपं सदा गते नयने ताभ्यां यत्करिष्यमाणं पैशुन्यं पिशुनभावः, मर्मोद्घाटनं तस्माच्चकिताः, निलीयन्ते आकारगोपनेन स्थिताः इत्यर्थः। तोये उदके, नियतं निश्चयः, अनिमेषाः निमेषरहिताः शफरिकाः मीनयोषितः। इयं च परिदृश्यमाना नेत्रगता, श्रीः लक्ष्मीः, बद्धच्छदपुटकवाटं बद्धं संकलितं छदपुटा एव कवाटं यस्य तत् कवाटसङ्घटितगृहमिव वर्तत इत्यर्थः। कुवलयं इन्दीवरं, जहाति त्यजति प्रत्यूषे उषःकाले। निशि च रात्रौ च, विघटय्य प्रविशति संविशति। अत्रेत्थं पदयोजना—हे अपर्णे! तव कर्णेजपनयनपैशुन्यचकिताः शफरिकाः अनिमेषास्तोये निलीयन्ते नियतम्। किञ्च—इयं च श्रीः बद्धच्छदपुटकवाटं कुवलयं प्रत्यूषे जहाति, निशि च तत् विघटय्य प्रविशति। अयमर्थः—लोके नेत्रसमं वस्तु शफरिका इन्दीवराणीति, एतद्द्वितयसमं नेत्रमिति च सुप्रसिद्धं उभयोस्साम्यम्। अत्र कविः नेत्रसौभाग्यं शफरिकासु इन्दीवरेषु च वर्तते, तत्सौभाग्यमाहर्तुकामं नेत्रद्वयं तत्र पैशुन्यं करोतीतीममर्थमवलम्ब्योत्प्रेक्षते। अत्र पूर्वार्धे उत्प्रेक्षालङ्कारः, शफरिकाणां जलाधिवासः, अनिमेषत्वं च स्वभावसिद्धम्, तदन्यथात्वेनोत्प्रेक्षणात्। द्वितीयार्धे अतिशयोक्तिः; नेत्रलक्ष्म्याः नेत्रं विहाय



**श्री मीनाक्षी** ஸ்ரீ மீனாக்ஷீ

इन्दीवरेषु भक्त्यतिशयात् रात्रौ तद्रक्षणार्थं तद्गर्भान्तर्वर्तित्वं, दिवा तद्विहाय नेत्रवर्तित्वं असम्भवीति असम्बन्धे सम्बन्धनिबन्धनात्। इन्दीवरस्य रात्रौ विकासः स्वभावसिद्धः, दिवा मुकुलीभावश्च। एतद्द्वयस्य लक्ष्मीकृतत्वासम्बन्धेऽपि सम्बन्धकथनात् अतिशयोक्त्यन्तरम्। उभयोरनुसृष्टिः। अनुसृष्टिलक्षणं पूर्वमेवोक्तम् (४७ श्लो)। अत्र इन्दीवरस्य रात्रौ विकासः, नेत्रद्वयस्य दिवा विकासः। अतश्च दिवा लक्ष्मीः नेत्रे वसति, रात्रौ कुवलये। एवं लक्ष्मीः नक्तंदिवमुभयत्रैव चरति नान्यत्रेति। शफरीप्रभृतीनां लोके नेत्रोपमानवस्तूनां भगवतीनेत्रतुल्यता नास्तीति शफरिकाणामुदकमध्यविलीनत्वमेव युक्तमिति काव्यलिङ्गध्वनिरित्यलङ्कारध्वनिः॥ ५६॥

सौभाग्यवर्धनी

तवापर्णे इति। हे अपर्णे तव कर्णेजपनयनपैशुन्यचकिताः, कर्णेजपाः दुर्जनाः, सर्वदा कर्णान्तचुम्बिनयनयोः पैशुन्यभीताः स्वसादृश्यमस्मासु विलोक्य भगवत्याः कर्णे सासूये किं वा दौर्जन्यं कथयत इति भीताः शफरिकाः अनिमेषाः सत्यः नियतं ध्रुवं तोये निलीयन्ते। इयं च श्रीः कुवलयश्रीः बद्धच्छदपुटकवाटं कुवलयं निमीलितदलकपाटं कुवलयं प्रत्यूषे जहाति। निशासु विघटय्य उद्घाट्य प्रविशति। कुवलयश्रीरपि कर्णेजपनयनपैशुन्यभीता दिवा कुत्रचिन्निलीय स्थित्वा रात्रौ बद्धच्छदकपाटमुद्घाट्य चोरवत्प्रविशति। अत्र नयनयोः कर्णान्तविश्रान्तत्वं प्रकृतम्। शफरिकाणां तोये वासश्च साध्यत इत्यपह्नुतिः॥ ५६॥

अरुणामोदिनी

तवेति। हे अपर्णे, अपगतर्णसंबन्धे, ऋणशब्देन जगतां सृष्टिस्थितिकर्मण आलस्यवशात् यत्किंचित्कर्मासमापनमुच्यते। तन्नास्ति। तद्यथा जगतः कर्तुमुचितं, तदनवशेषमेव निर्मलतया संपादयसि। कर्णेजपनयनपैशुन्यचकिताः, कर्णेजपयोः कर्णं प्राप्य जपतोः सूचयतोः नयनयोः, पैशुन्यात् पिशुनभावात्, 'हे भगवति, निरुपमलावण्यायास्तव संबद्धयोरावयोः अनुपमशोभायुक्तयोः शोभाविडम्बिकाः शफरिकाः अस्मद्द्रोहिण्यः, एताः पश्य। किं च सर्वदा अस्मत्कान्तिषु कमलेषु या श्रीः वर्तते सा अस्मद्द्रोहिण्येव। तदुभयोरनयोः त्वदाश्रयास्मद्विरुद्धयोः त्वयैव दण्डनं क्रियताम्। न किञ्चिदप्यालस्यमालम्ब्यताम्।' इत्येवंरूपवचनकलापात्मकात् परद्रोहवचनात् चकिता भीताः, चक भये इति धातोर्निष्ठायामिट्। चकिताः सत्योऽनिमेषाः निमेषशून्या भवन्त्यश्च, शफरिका मत्स्यविशेषाः, नियतं निश्चयेन तोये निलीयन्ते जलदुर्गमाश्रयन्ति। महाराजगोचरपिशुनजनोदितानां सामन्तानां दूरं प्रपलाय्य दुर्गाश्रयणं स्वभावः। किं च, इयं च श्रीः कमलकर्णिकासिंहासनारोहेण महादेवी

पदमधिरूढा लक्ष्मीरपि त्वन्नयनपैशुन्यात् भीता सती बद्धच्छदपुटकवाटं, छदाः पत्राण्येव पुटमिव कवाटं अररं, तद्बद्धं संघटितं दत्तार्गलं यस्य तत्, कुवलयं रात्रौ स्थित्वा प्रत्यूषसमये जहाति त्यक्त्वा गच्छति। दिवसे इतस्ततो भ्रमणापदेशेन समयं नीत्वा पुनरपि निशि रात्रौ विघटय्य पूर्वोक्तदलकवाटोद्घाटनं कृत्वा प्रविशति। राजपराधीनः खलु लोके रात्रौ निभृततया स्वगृहे तिष्ठति। प्रातःकाले कवाटेन गृहं मुद्रयित्वा यत्र क्वचिदज्ञातवासाय पलायत इति ॥ ५६ ॥

आनन्दगिरीया

इदानीं नेत्राणां विशालतां सर्वोपमानापेक्षयोत्कर्षभावं च वर्णयति – तवापर्ण इति। हे अपर्णे परमेश्वरि पार्वति, एताः शफरिका नियतं तोये निलीयन्ते जले लीनास्तिष्ठन्ति। तत्राप्यनिमेषाः सावधानतया चतुर्दिक्षु निरीक्षणार्थे त्यक्तनिमेषाः। कथं जले लीना इत्यत आह–तव कर्णेजपनयनपैशुन्यचकिताः, तव कर्णेजपे कर्णान्तविश्रान्ते ये नयने तयोः पैशुन्येनोत्कर्षेण चकिता लज्जिताः। यो लज्जितो भवति स क्वचिन्निलीय तिष्ठति। अथ च कर्णेजपः पिशुनः। यथा राजगृहे कश्चित्पिशुनः स्वस्पर्धिनमुद्दिश्य तस्यानिष्टसाधनं पैशुन्यं कर्तुं राज्ञः कर्णे जपति, तदनु तदालोक्य आत्मनोऽनिष्टमाशंक्य प्रपलाय्य क्वचिज्जलदुर्गादौ लीनो भवति, तद्वत् तव कर्णेजपे पिशुने ये नयने ताभ्यां क्रियमाणं यत्पैशुन्यं पिशुनकर्म एता ध्वस्तव्या मारणीया निःसत्त्वाः कर्तव्याः, स्वामिन्याः सेवकैरस्मदादिभिः सह सदा स्पर्धन्ते, तेन सापराधाः सन्तीत्यादिपैशुन्यं, तेन चकिता भीताः। तथेयं कमलकान्तिर्लक्ष्मीरपि भीता शङ्कमाना सती स्वगृहमालयं प्रत्यूषे जहाति। किं कृत्वा, रात्रौ बद्धच्छदपुटकपाटं प्रत्यूषे विघटय्योद्घाट्य क्वचिद्भूत्वा दिनं परिकलयति। स्त्रीणां रात्रौ गृहत्यागोऽनुचित इति निशि रात्रौ शनैरागत्य सूर्यास्तमनेन मुद्रितदलं विघटय्य पुनः प्रविशति। एतेन तव नेत्रशोभया कमललक्ष्मीरतिभीतेति। तवापर्णे इति पद्यव्याख्या – तवेति। चकिता च, कर्णे क जप बिन्दुः पैशुन्यं औं इति। चं कौं चित्रा। [अं च्कौं अं]॥ ५६ ॥

तात्पर्यदीपिनी

तवेति। हे अपर्णे, शफरिकास्तोय उदके निलीयन्ते मग्ना भवन्ति। तत्र हेतुमाह – किंविधाः शफरिकाः, तव भवत्याः कर्णेजपनयनपैशुन्यचकिताः, कर्णेजपे सर्वदा कर्णसमीपं गते ये नयने नेत्रे ताभ्यां करिष्यमाणं यत्पैशुन्यं मर्मोद्घाटनं, तस्माच्चकिताः भीताः, पुनः, अत एवानिमेषाः, निमेषरहिताश्च। परं इयं श्रीः परिदृश्यमाननेत्रगता लक्ष्मीः प्रत्यूषे प्रभाते कुवलयमिन्दीवरं जहाति त्यजति, रात्रौ च निशि विघटय्य प्रविशति,

संविशति। किंविधं कुवलयं, बद्धच्छदकपाटं, तत्संघटितगृहमवस्थितमित्यर्थः। अयमाशयः—लोके इन्दीवराणि शफरिकाश्चेत्येतत् द्वयं नेत्रसममिति प्रसिद्धम्। नेत्रसौभाग्यं शफरिकासु इन्दीवरेषु च वर्तते। तत्समाहर्तुकामं नेत्रद्वयं तव पैशुन्यं करोतीति शङ्कया शफरिका जलमग्नाः, कुवलयं च दिवा मुकुलितमिवेत्युत्प्रेक्षा॥ ५६॥

### पदार्थचन्द्रिका

पुनरपि प्रकारान्तरेण वर्णयति—तवेति। महादेवप्राप्त्यर्थं तपश्चरन्ती पर्णमपि त्यक्त्वा, अतोऽपर्णा। तत्संबोधनं तथा। अक्षिपक्ष्मणोः संयोगघटिका क्रिया निमेषः। न विद्यते निमेषो यासां ताः शून्यनिमेषाः शफरिकाः, तोये निलीयन्त इति नियतं निश्चितम्। तत्र हेतुः, हे अपर्णे तव कर्णे जपत इति कर्णेजपे ते नयने चेति, तथा तयोः पैशुन्यं परदोषाविष्करणं तेन चकिताः भीताः 'स्तम्बकर्णयोरमिजपो'रित्यनेनाट्प्रत्ययः। 'हलदन्तात्सप्तम्याः संज्ञायामिति' सप्तम्या अलुक्। अयमर्थः—अनिमेषत्वादाह्लादकत्वाच्च शफरीभवानीनेत्राणां परस्परसादृश्यं, सदृशीनां शफरिकाणां च स्पर्धा, स्पर्धया च शत्रुभावः, ततश्च भवानीनेत्रयोः कर्णेजपत्वं दृष्ट्वा निलीयन्ते इत्युत्प्रेक्षाद्वारा नेत्रविस्तारो वर्ण्यत इति। तथेयं श्रीः कुवलयशोभा, प्रत्यूषे प्रातःकाले, बद्धं छदपुटकवाटं यस्मिंस्तत्, पुटशब्दः संकोचवाची। छदानां पुटं कपाटमिव छदपुटकपाटं, बद्धं छदपुटकपाटं यस्यां त्यागक्रियायां इति तथेति वा। निशि च विघटय्य उद्घाट्य कपाटमित्यर्थः। कुवलयस्य दिवा न तथा शोभा मुद्रितत्वात्, रात्रौ शोभा विकसितत्वात्। अत उत्प्रेक्षते कविः, भवानीनेत्रभीता कुवलयलक्ष्मीः दिवा कवाटं दत्वा पलायते रात्रौ चागत्य प्रविशतीति॥ ५६॥

### डिण्डिमभाष्यम्

हे अपर्णे! अपगतऋणसंबन्धे। ऋणशब्देन जगतां सृष्टिस्थितिसंहारकर्मसु आलस्यवशाद् यत्किञ्चित् कर्मासमापनमुच्यते। तन्नास्ति तव। यद्यदा जगतः कर्तुमुचितं तदनवशेषमेव अनलसतया संपादयसि। कर्णेजपनयनपैशुन्यचकिताः कर्णे जपतोः कर्णं प्राप्य जपतोः नयनयोः पैशुन्यात् पिशुनभावात् हे भगवति! निरुपमलावण्यायाः तव संबद्धयोरावयोरनुपमशोभायुक्तयोः शोभाविडम्बकाः शफरिकाः अस्मद्द्रोहिण्यः, एताः पश्य। किञ्च सर्वदा अस्मत्कान्तिषु कमलेषु या श्रीर्वर्तते सा अस्मद्द्रोहिणी एव। तदुभयोरनयोः त्वदाश्रययोरस्मद्विरुद्धयोस्तथैव संबन्धो न क्रियताम्। न किञ्चिदप्यालस्यमालम्ब्यतां इत्येवंरूपवचनं [illegible] परद्रोहवचनाच्चकिताः भीताः। 'चक भये' इति धातोः निष्ठायां इट्। चकिताः सत्यः अनिमेषाः निमेषशून्याः भवन्त्यश्च शफरिका मत्स्यविशेषा नियतं निश्चयेन तोये निलीयन्ते जलदुर्गमाश्रयन्ति। महाराज-

गोचरपिशुनजनोदीरितानां सामन्तानां दूरं प्रपलाय्य दुर्गाश्रयणं स्वभावः । किञ्च इयं श्रीः कमलकर्णिकासिंहासनारोहेण महादेवीपदवीमधिरूढा लक्ष्मीरपि त्वन्नयनपैशुन्याद् भीता सती बद्धच्छदपुटकपाटं छदाः पर्णान्येव कपाटमररं तद्बद्धं सुघटितं दत्तार्गलं यस्य तत् कुवलयम् । रात्रौ स्थित्वा प्रत्यूषसमये जहाति त्यक्त्वा गच्छति, दिवसे इतस्ततो भ्रमणापदेशेन समयं नीत्वा पुनरपि निशि रात्रौ विघटय्य पूर्वोक्तदलकपाटोद्घाटनं कृत्वा प्रविशति । राजपराधीनः खलु लोके रात्रौ निभृततया स्वगृहे तिष्ठति । प्रातःकाले कपाटेन गृहं मुद्रयित्वा यत्र क्वचिदज्ञातवासाय प्रपलायते इति ।। ५६ ।।

गोपालसुन्दरी

तवापर्णे इति—हे अपर्णे ! कर्णे प्राप्य जपतोः कथयतोस्तव नयनयोः पैशुन्यात् चकिता भीताः शफरिकाः प्रोष्ठ्यः नियतं निश्चितं तोये निलीयन्ते जलदुर्गमाश्रयन्ति । इयं च श्रीः कमला कान्तिः तव नयनपैशुन्यचकिता प्रत्यूषे प्रातः बद्धच्छदपुटकपाटं कुवलयं जहाति त्यजति, निशि रात्रौ विघटय्य उद्घाट्य प्रविशति । राजविरुद्धो जनो रात्रौ तु निभृततया तिष्ठति । दिवसे कपाटं दत्त्वा पलायते इति प्रसिद्धम् । वस्तुतस्तु प्रत्यूषे विघटय्य जहाति निशि बद्धच्छदपुटकपाटं प्रविशति इति सम्बन्धः । विष्णुपक्षे—अपगतं ऋणं मातृपितृदेवर्षिऋणं यस्यासावपर्णो धार्मिकः वसुदेवो वा तस्यायं हितः अपत्यं वा आपर्णिः भगवान् तत्सम्बोधनं हे आपर्णे, यद्वा तोये, कीदृशे अपर्णे पत्रादिकालुष्यरहिते । यद्वा समुद्रस्य शयनस्थानस्य कौस्तुभरूपरत्नस्य लक्ष्मीरूपसुतायाश्च दानादपगतऋणे । तथा च जलं त्वन्मित्रमिति त्वद ··· त्या तदाश्रयणं स्वरक्षायै युक्तमिति भावः ।। ५६ ।।

आनन्दलहरीटीका

तवेति । हे अपर्णे तव कर्णेजपं पिशुनं सूचकवत् कर्णलग्नं यन्नयनं तस्य पैशुन्यात् अनिष्टसूचनात् । 'भगवति त्वदीययोरक्ष्णोः कान्तिचौर्यात्कुवलयश्रीरस्मासु स्पर्धते, तन्निग्रहस्त्वया कार्यः' इत्येवंरूपात् चकिता भीताः शफरिकाः प्रोष्ठीमत्स्याः नियतं निरन्तरं तोये जले निलीयन्ते, पलाय्य तिष्ठन्ति, तत्राप्यनिमेषा निमेषेण नेत्रनिमीलनेन रहिताः । स्वभावतो मत्स्यानामनिमेषता, तत्र भयहेतुकत्वमुत्प्रेक्षितम् । 'कर्णेजपः सूचकः स्यादि'त्यमरः । अलुक्समासोऽयम् । इयं च श्रीः कमलानां कान्तिश्च कुवलयं कुमुदं स्वकीयालयं प्रत्यूषे प्रभातसमये जहाति त्यजति । कीदृशं बद्धं मुद्रितं छदपुटरूपं पत्रसंपुटरूपं कपाटं यत्र तत्तथा, निशि रात्रौ च विघटय्य उद्घाट्य अर्थात् छदपुटकवाटं प्रविशति । कुवलयमित्यावृत्त्या पैशुन्यचकितेति

श्रियोऽपि विशेषणमिति सूचनायेयं चेति चकारः । अन्योऽपि पलायनपरो लोकः प्रातर्गृहे कपाटं दत्त्वा यति, रात्रावुद्घाटय प्रविशति तद्वत् ॥ ५६ ॥

दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा
दवीयांसं दीनं स्नपय कृपया मामपि शिवे ।
अनेनायं[1] धन्यो भवति न च ते हानिरियता
वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥ ५७ ॥

த்ருசா த்ராகீயஸ்யா தரதலித நீலோத்பல ருசா
தவீயாம்ஸம் தீநம் ஸ்நபய க்ருபயா மாமபி சிவே ।
அநேநாயம் தந்யோ பவதி ந ச தே ஹாநிரியதா
வநே வா ஹர்ம்யே வா ஸமகர நிபாதோ ஹிமகர: ॥

दीर्घ कटाक्षों के दयमान अधखुले इन्दीवर जैसे
मुझ दूरस्थ रंक को भी नहला दें मां अमृत रस से ।
इस से यह तर जायेगा हानि न कुछ तेरी होती है
वन को ओ भवन को चांद की छटा बराबर मिलतीहै ॥

लक्ष्मीधरा

दृशा कटाक्षदृष्टया, द्राघीयस्या दीर्घतरया, दरदलितनीलोत्पलरुचा दरदलित-मीषद्विकसितं नीलोत्पलं इन्दीवरं तस्येव रुचिः कान्तिर्यस्याः तया, दवीयांसं दूरवर्तिनम् । दूरशब्दस्य 'स्थूलदूर' इत्यादिना सूत्रेण यणो लोपः, पूर्ववर्णस्य गुणे कृते अवादेशे कृते सिद्धं रूपं दवीयानिति ईयसुन्प्रत्ययान्तम् । दीनं दरिद्रं, स्नपय स्नपनं कुरु । कृपया दयया, मामपि इतरजनसाधारण्यमपिशब्दार्थः । शिवे! मङ्गलात्मिके! अनेन एतावन्मात्रेण स्नपने-नापि, अयं जनः अहमित्यर्थः धन्यो भवति । कृतार्थो भवति न च ते तव, हानिः द्रव्यनाशः इयता साधारणदर्शनमात्रेण, वने वा अरण्ये वा, हर्म्ये प्रासादे वा, समकरनिपातः समं तुल्यं यथा भवति तथा कराणां किरणानां निपातः व्यापनं यस्य स तथोक्तः । हिमकरः शीतरश्मिः । अत्रेत्थं पदयोजना—हे शिवे! द्राघीयस्या दरदलितनीलोत्पलरुचा दृशा दवीयांसं दीनं कृपया

1 अनेनाहं ।

मामपि स्नपय अयं अनेन धन्यो भवति। इयता ते हानिर्न च। तथा हि – हिमकरः वने वा हर्म्ये वा समकरनिपातो हि स्वच्छान्तःकरणानां सर्वसाधारण्यं स्वभावसिद्धमिति भावः। अर्थान्तरन्यासोऽलङ्कारः; सामान्येन विशेषसमर्थनात्। सर्वसाधारण्यदर्शनं सर्वोत्कृष्टत्वे हेतुरिति त्वात्मीयतादर्शनापेक्षा अस्तीति ध्वनिः॥ ५७॥

सौभाग्यवर्धनी

दृशेति। हे शिवे! द्राघीयस्या दीर्घतरया दृशा दरदलितनीलोत्पलरुचा ईषद्विकसितनीलोत्पलरुचा दवीयांसं दूरस्थं दीनं संसारक्लेशपर्याकुलमनन्यगतिकं स्नपय आप्लावय! कृपया परिप्लुतदृष्टिपरम्परया मां पश्य। अनेनायं मल्लक्षणो जनो धन्यो भवति। न च ते हानिः इयता; एतावता तावन्मात्रेण न काचित् क्षतिः। अपिशब्दोऽत्र दर्शनविशेषद्योतकः। यथा स्तम्भादिकं पश्यसि, तथा न। किन्तु कृपया। दर्शने कृपामात्रवैशिष्ट्ये सति धन्योऽयं जनः। तव लीलामात्रेण भवति। न कश्चिदायासः। यतः वने वा हर्म्ये वा सौधे वा हिमकरः समकरनिपातः। यथा चन्द्रः, अहमोषधीशः तेन वने अधिकान् करान् किरामि, हर्म्ये स्वल्पानिति पक्षपातवान् न भवति। तथा त्वमपि दूरस्थे समीपस्थे अदर्शने पक्षपातवती न भवसि। विशेषतोऽहं दीनः, मद्विषये पक्षपातोऽप्युचित इति भावः। अत्र प्रतिपादितपदार्थस्य दृढीकरणायार्थान्तरोपन्यासादर्थान्तरन्यासोऽलङ्कारः॥ ५७॥

अरुणामोदिनी

दृशेत्यादि। हे शिवे! शिवभक्तजनकल्याणात्मिके। दरदलितनीलोत्पलरुचा ईषद्विकसितेन्दीवरकाननिन्दाकरकान्त्या द्राघीयस्या दीर्घतरया, दीर्घशब्दादसुनि प्रत्यये प्रियस्थिर–इत्यादिना द्राघादेशः, उगितश्चेति ङीप्, द्राघीयसी। एवंभूतया दृशा दवीयांसं अत्यन्तदूरवर्तिनं, दीनं बहुतरतृष्णाकार्पण्यवशात्सर्वतो याच्ञापरायणं, दीङ् क्षये इति धातोः निष्ठानान्तत्वे दीन इति रूपम्। मां कृपया करणभूतया, स्नपय प्लावय, स्नातेर्णिचि प्रत्यये पुगागमे मित्संज्ञायां, मितां ह्रस्व इति ह्रस्वः। तं मामपि, अपि समुच्चये। ये गुणवन्तः त्वयि भक्तिमन्तः कृतत्वच्चरणपूजाश्च तेषां रक्षणं दयया करोष्येव। तव तद्रक्षणौदासीन्येऽपि कृतसत्कर्मफलावश्यम्भावनियमात् तत्तत्कर्ममाहात्म्यप्रेरितया त्वया तेषां परिपालनं कर्तव्यमेव। नाहं तादृशगुणी, न भक्तः, न चार्चापरः। केवलं बालकवत् अंबाम्बेति दीनाक्रन्दनमात्रपरायणः। तस्य मम रक्षणमेवाद्भुतस्वभावकीर्तये धर्माय च। तान् रक्षस्येव कीर्तिधर्मार्थं, मामपि रक्षेत्यर्थसंगतिरवगन्तव्या। यन्मम दीनस्य परिपालनमस्ति, तेनानेनायं धन्यो भवति। एतच्छब्देन आत्मानमेव घटकुड्यवत् अप्रयोजकतया, अचेतनतया चोत्पन्नं

परामृशति। अहंप्रयोगस्थाने इदंशब्दादयः दैन्याद्यर्थान्तरसहकृताः सन्तो विशिष्टमहमर्थं प्रतिपादयन्ति। अनेन कर्मणा ममापि धन्यता, तवापि हानिरियता नास्ति। स्वेच्छामात्रसाध्यतया मद्रक्षणस्य तव लीलामात्रमेवेति भावः। गुणवत्पुरुषाभ्युपपत्तावेव स्वामिजनस्य रिरक्षिषा सार्थेति चेत्, नायं नियमो गुणवान् रक्ष्यः, निर्गुणस्त्याज्य इति। तथा च-दृष्टं वने वा हर्म्ये वा नायकनायिकासरससंभोगयोग्यप्रदेशेऽपि वा हिमकरश्चन्द्रमाः युगपदेवाविशेषेण समकरनिपातो भवति। समानकिरणप्रचारो भवति। अनायाससाध्ये बहुतरकीर्तिधर्मोपजनके दीनानाथविपन्नसमुद्धरणपण्डितानवधिककारुणिकतोपलम्भसम्भाविते रक्षणात्मके सत्कर्मणि हेलावलम्बनमनुचितमिति भावः॥ ५७॥

आनन्दगिरीया

दृशेति। हे शिवे, त्वं कृपया करुणया युक्तया दृशा मां स्नपय आप्यायय। अथवा किंलक्षणया दृशा, कृपया कृपारूपया। इयं कृपैव तव लोचनाकारेण परिणतेति भावः। किंलक्षणं मां, दवीयांसं अतिशयेन दूरे वर्तमानं तव चरणकमलवृत्तिप्रापकमहाभाग्योत्कर्षाभावेन दूरे वर्तमानं; कृपाया निदानं दैन्यं; महादीनमिति। तर्हि दृष्टिः दूरे स्थितं त्वां प्रति कथमायास्यतीत्यत आह-किंलक्षणया दृशा, द्राघीयस्या अतिशयेन दीर्घतरया। तव दृष्टिः महती दीर्घतरा दूरस्थस्यापि मम समीपमनायासेनायास्यतीति। पुनः किंलक्षणया, दरदलितनीलोत्पलरुचा ईषद्विकसितनीलकमलकान्त्या अर्धोन्मीलदपाङ्गया। एतेन करुणादृष्टिरुक्ता। अपिना दृष्टानामर्थानामन्येषां समुच्चयः। यथा अन्यान्पश्यसि, तथा मामपि पश्येति। अनेन एतावता, युष्मदीयोऽन्यो भविष्यति। तव च इयता प्रयासेन न भविष्यति हानिः। स्वभावसिद्धामृतमयी तव दृष्टिः, तया जगदाप्याययेति। यद्यपि परमेश्वरी त्रैलोक्यमाप्याययितुमेव नयनामृतपुटकमुल्लासयतीति प्रार्थनमनवसरदुःस्थम्। तथापि दैन्योक्तिश्च स्वरूपवर्णनमात्रमेतत्। अर्थान्तरन्यासमाह-वने वा हर्म्ये वा समकरनिपातो हिमकरः। चन्द्रो हि वने वा हर्म्ये वा पक्षपातमकृत्वैव न्यूनाधिकत्वं किरणानामविचार्य करोत्याप्याययति। एतावता चन्द्रस्य जगत्प्रकाशनार्थमेव स्वभावेन प्रवर्तमानत्वात् नाधिकः प्रयासः। पुरोवर्तिनो महत्कार्यं च सिद्ध्यति। दयावतां सर्वत्र दयया समानो व्यवहार इति भावः॥ ५७॥

तात्पर्यदीपिनी

दृशेति-हे शिवे, दृशा दवीयांसं अतिशयेन दूरवर्तिनं, दीनं स्वसुखानभिज्ञं कृपया हेतुभूतया मामपि स्नपय आप्लावय। किंविधया दृशा, द्राघीयस्या अतिशयेन दीर्घा द्राघीयसी, तया दूरप्रसारिण्या। पुनः किं निभाय, दरदलितनीलोत्पलरुचा दरं ईषद्दलितं

विकसितं यन्नीलोत्पलं तस्य रुगिव रुक् यस्याः सा तथा। अपिशब्दः समुच्चये। तेन गुणवन्तः त्वयि भक्तिमन्तः, कृतत्वच्चरणपूजाश्च तेषां त्वया दयया अवश्यं पालनं कर्तव्यमेव। अहं न तादृशो गुणी, न भक्तः, नार्चनपरः, केवलं बालवत् अंबेबेति दीनाक्रन्दनमात्र-परायणः, तस्य मम रक्षणं अद्भुतत्वत्प्रभावकीर्तये धर्माय च भवतीति। तान् रक्षस्व, मामपि रक्षेत्यपिशब्दार्थः। अनेन कर्मणा अयं धन्यो भवतीति मत्वा स्नपयेति पूर्वेण संबन्धः। अनेन मम धन्यता, ते तव च, इयता एतावन्मात्रेण दृक्स्नपनेन न हानिः, अपितु स्वेच्छामात्र-साध्यतया मद्रक्षणाय तव कलामात्रमेवालमिति भावः। गुणवत्पुरुषवत् विपन्ने पुरुषे स्वामि-जनस्य परिरक्षा न स्वार्थं इति चेत् नायं नियमो गुणवान् रक्ष्यो निर्गुणस्त्याज्य इति। तथा च दृष्टं—हिमकरश्चन्द्रमाः वने कानने हर्म्ये वा समकरनिपातः समं अविशेषेण युगपदेव कराणां किरणानां निपातो यस्य एवंभूतो भवति। अनायाससाध्ये बहुतरधर्मकीर्तिजनके दीनानाथविपन्नसमुद्धरणपण्डिते अनुपाधिककारुणिकतोपलम्भासंभाविते रक्षणात्मके सत्कर्मणि न हेलावलम्बनमुचितमिति भावः ॥ ५७ ॥

### पदार्थचन्द्रिका

अतः परं कृपादृष्टिं प्रार्थयमानो भवानीं स्तौति—दृशेति। हे शिवे कल्याणरूपे कृपया दृशा कृपोपलक्षितया दृष्ट्या अवलोकनेन दवीयांसमपि मां स्नपय विषयीकुर्वित्यर्थः। दृशं विशिनष्टि द्राघीयस्या, अतिशयेन दीर्घा द्राघीयसी तया सर्वाधिकेत्यर्थः। दवीयस्त्वमपि देशव्यवधानापेक्षं कालव्यवधानापेक्षं ज्ञानव्यवधानापेक्षं वा। अत्र ज्ञानव्यवधानापेक्षं दवीयस्त्वम्। तथा च दवीयांसं अतिशयेन दूरं त्वदनुसन्धाने इत्यर्थः। अत एव दीनं दुःखितम्। ननु मत्कृपादृशा तव किं स्यात्तदाह—अनेन कृपावलोकनेन अहं धन्यः, स्यामिति शेषः। न त्वन्यस्मिन् कृपादृष्टिं कुर्वन्त्याः क्षतिरपि संभाविता। अत आह—न चेति। इयता कृपावलोकनमात्रेण। कृपावलोकनकर्तुर्हि प्रयत्नानन्तरं क्षतिः संभाविता। तव तु कृपादृक्पातमात्रेणैव पुरुषार्थः सिध्येत्। न तदर्थप्रयत्नापेक्षेति न हानिसंभावनास्तीति भावः। एतत्तु तव स्वाभाविकं, नत्वौपाधिकमित्यत्र दृष्टान्तमाह—वन इति। समः क्षतिलाभशून्यः, कराणां निपातो यस्य सः। वने अमृतकरसेकेनौषधिजीवने क्षतिर्न, हर्म्ये धनिनां गेहे लाभो नास्तीत्यर्थः ॥ ५७ ॥

### डिण्डिमभाष्यम्

हे शिवे भक्तजनकल्याणात्मिके! दरदलितनीलोत्पलरुचा ईषद्विकसितेन्दीवरकानन-निन्दाकरकान्त्या द्राघीयस्या दीर्घतरया, दीर्घशब्दादसुनिप्रत्यये प्रियस्फिरस्थिरेत्यादिसूत्रेण

दीर्घतरशब्दस्य द्राघादेशः उगितश्चेति ङीप्, द्राघीयसी। एवंभूतया दृशा दवीयांसं अत्यन्त-दूरवर्तिनं दीनं बहुतरतृष्णाकार्पण्यवशात् सर्वतो याच्ञापरायणं, दीङ् क्षये इति धातोर्निष्ठानान्तत्वे दीनं, मां कृपया करणभूतया स्नपय आप्लावय, 'स्नातेः कर्मणि' चिण्प्रत्यये पुगागमे मित्संज्ञायां मितां ह्रस्व इति ह्रस्वः। मामपीत्यपिशब्दः समुच्चये। ये गुणवन्तस्त्वयि भक्तिमन्तः कृतत्वच्चरणपूजाश्च तेषां दयया रक्षणं करोष्येव। तद्रक्षण औदासीन्येऽपि कृतसत्कर्म-फलावश्यंभावनियमात् तत्कर्ममाहात्म्यप्रेरितया त्वया तेषां परिपालनं कर्तव्यमेव। नाहं तादृशगुणी, न भक्तो, नार्चापरः, केवलं बालकवत् अंबांबेति दीनाक्रन्दनमात्रपरायणः। तस्य मम रक्षणमेव अद्भुतत्वभावकीर्तये धर्माय च। तान् रक्षस्येव कीर्तिधर्मार्थम्। मामपि रक्षेति अर्थसंगतिरवगन्तव्या। यन्मम दीनस्य परिपालनमस्ति तेनानेनायं धन्यो भवति। एतच्छब्देन आत्मानमेव घटकुड्यादिवदप्रयोजकतया अचेतनतया च उत्पन्नं परामृशति। अहंप्रयोगस्थाने इदंशब्दादयः दैन्याद्यर्थान्तरसहकृताः सन्तो विशिष्टमहमर्थं प्रतिपादयन्ति। अनेन कर्मणा ममापि धन्यता, तवापीयता हानिर्नास्ति। अत्यल्पेच्छामात्रसाध्यतया मद्रक्षणस्य तव लीलामात्रमेवेति भावः। गुणवत्पुरुषाभ्युपपत्तावेव स्वामिजनस्य रिरक्षयिषा सार्थेति चेत्, नायं नियमो गुणवानेव रक्ष्यो निर्गुणस्त्याज्य इति। तथा च दृष्टं वने कानने वा हर्म्ये वा नायकनायिकासरसानन्दसंभोगयोग्ये प्रदेशेऽपि हिमकरश्चन्द्रमा युगपदेवाविशेषेण समकर-निपातो भवति समानकिरणप्रचारो भवति। अनायाससाध्ये बहुतरकीर्तिधर्मोपजनके दीनानाथ-विपन्नसमुद्धरणपण्डितानुपाधिककारुणिकोपलम्भसंभाविते रक्षणात्मके सत्कर्मणि न हेला-वलम्बनमुचितमिति भावः॥ ५७॥

### गोपालसुन्दरी

दृशेति—हे शिवे! कृपया करुणया मामपि दवीयांसं दूरस्थं दीनं दुःखितं द्राघीयस्या दीर्घतरया दरदलितनीलोत्पलरुचा ईषद्विकसितश्यामसरोजकान्त्या दृशा दृष्ट्या स्नपय; अनेन स्नपनेनाहं धन्यः कृतार्थश्च। पुनस्ते तव हानिः क्षतिर्न भवति। वने कानने हर्म्ये गृहे हिमकरश्चन्द्रः समकरनिपातः समानकरप्रसरः। यथा औषधीशस्यापि चन्द्रस्य वने न पक्षपातो हर्म्ये वा न पक्षपातस्तथा तवापि निकटस्थे न पक्षपातो दूरस्थेऽपि च न पक्षपातः समुचित इति भावः। विष्णुपक्षे—शिवे कल्याणार्थे। शेषं समानम्॥ ५७॥

### आनन्दलहरीटीका

दृशेति। हे शिवे कल्याणस्वरूपे, दृशा दृष्ट्या मामपि स्नपय, अमृतमयस्निग्ध-दृष्ट्या मां निस्तापं कुर्विति स्नपयेति पदभावार्थः। अपिकारात्, यथाऽन्यान्भक्तान् स्वनिकटस्थान्

स्नपयसि तथा मामपीति सूचितम्। ननु किमर्थं प्रार्थना, घटायोन्मीलितचक्षुः पटं न हि न बुद्ध्यतीति न्यायेन भक्तेषु दृष्टिपाते त्वय्यपि तन्निकटस्थे दृष्टिपातो भवेदेवेत्यत्राह–दवीयांसं अतिदूरस्थं, त्वद्भक्तानां संगप्रसङ्ग एव मम नास्तीति भावः। तथा चातिदूरस्थे त्वयि मम दृष्टिपातः कथं भवेदिति, दृशं विशिनष्टि–द्राघीयस्या अतिदीर्घतमया, तत्र चक्षुषः स्वभावतो दीर्घतमत्वं तैजसतया बहिस्तेजोऽन्तरयोगेनातिदीर्घतमत्वाच्च। अन्यथा शाखाचन्द्रमसोर्युगपद्ग्रहणं न स्यात्। तदेवोपपादयितुं पुनर्विशेषणान्तरमाह–दरदलितमीषद्विकसितं यन्नीलोत्पलं तद्वत् रुचः शोभाः यस्यास्तया। अथवा तादृशं यन्नीलोत्पलं तत्प्रकाशकतया तत्संबन्धिनी या रुक् सूर्यदीप्तिः, तद्रूपया, त्वन्नेत्रस्य सूर्यरूपत्वात्, सूर्यतेजसश्चातिदूरस्थोत्पलादिप्रकाशकत्वं स्वभावत इति भावः। ननु वैषयिकसुखासक्तस्य तव दुःखमेव नास्ति, किं कृपयेत्यत्राह दीनमिति। अपारसंसारसागरे मग्नं बहुकोटिजन्मस्वपरिचितपरमसुखं बहुविधविषयवासनाग्राहग्रस्तं बलवद्रङ्गत्तुरङ्गनिभाक्षतुरङ्गैः सर्वतः कृष्यमाणं मद्यविषान्नसन्निभविषयजुष्टं भुजङ्गमोपमदुष्टान्तःकरणदुष्ट, कर्मशृङ्खलाप्राप्तबहुकष्टं दुःखवरिष्ठं मां विहाय क्वान्य एतादृशोऽनुकम्पनीयस्त्वया लब्धव्य इति भावः। अस्तु तावत्तव कृपासिन्धोर्वार्ता। अन्येऽपि यत्र स्वस्य हानिर्नास्ति परस्य महान् लाभः तादृशं कर्म कुर्वन्त्येव। यथा भयानके वर्त्मनि बलवन्तो गच्छन्तः कमप्येकं सार्थभ्रष्टं स्वसार्थे नयन्तीत्याह–अनेन कृपादृष्टिस्नपनेन अहं दीनो धन्यः, स्यामिति शेषः। अहमित्यत्रायमिति पाठे भवतीत्यनेनान्वयः। अयं मद्रूप इत्यर्थः। ते तव पुनः इयता दृष्टिपातरूपकर्मणा हानिः क्षतिर्न भवति, चस्त्वर्थे। एतदेवार्थान्तरन्यासेन दृढयति–हिमकरश्चन्द्रः वने वा हर्म्ये प्रासादविशेषे वा समः कराणां रश्मीनां निपातो यस्य तादृशः। न तु स्वस्यौषधीशतया स्वीये वने यत्किंचिच्चैतन्ययुक्ते आधिक्यं तद्विपरीते हर्म्ये न्यूनत्वमिति वैषम्यं करोतीति चन्द्रस्वभावः। तव दृष्टेश्चन्द्ररूपत्वादपि तथोचितमिति ध्वनिः। वाकारद्वयं यत्किञ्चिद्विशेषराहित्यसूचकम्॥ ५७॥

> अरालं ते पालीयुगलमगराजन्यतनये
> न केषामा[1]धत्ते कुसुमशरकोदण्डकुतुकम्।
> तिरश्चीनो यत्र श्रवणपथमुल्लङ्घ्य विलसन्
> अपाङ्गव्यासङ्गो दिशति शरसन्धानाधिषणाम्॥ ५८॥

[1] मादत्ते।

அராளம் தே பாளீயுகளமகராஜந்ய தநயே
1 1 3 3 1
ந கேஷாமாதத்தே குஸுமசர கோதண்ட குதுகம் ।
1 4 1 1 1 1 3 3 1 1 1
திரச்சீநோ யத்ர ச்ரவண பதமுல்லங்ய்ய விலஸன்
1 1 1 1 2 4
அபாங்கவ்யாஸங்கோ திசதி சரஸந்தானதிஷணாம் ॥
1 3 3 3 1 4 4

तेरा टेढा पालीयुगल! शिवे किस भावुक के मन में
कुसुमायुध के धनु की कौतुक उत्पन्न न करता क्षण में।
तिरछी नजरें छूट कनखियों से कानों के हो उस पार
बान छटाने का सा समा बँध देती हैं बारंबार॥

लक्ष्मीधरा

अरालं कुटिलं, ते पालीयुगलं कर्णयुगलनयनयुगलयोर्मध्यं, अगराजन्यतनये! नगेन्द्रतनये! न केषामाधत्ते सर्वेषां करोत्येव। कुसुमशरकोदण्डकुतुकं मन्मथचापसौभाग्यं, तिरश्चीनः तिर्यक्प्रसारितः, यत्र पालीयुगले, श्रवणपथमुल्लङ्घ्य कर्णान्तिकं प्राप्य, विलसन् स्फुरन्, अपाङ्गव्यासङ्गः अपाङ्गस्य कटाक्षस्य व्यासङ्गः दैर्घ्यं, दिशति करोति। शरसन्धान-धिषणां शरसन्धानस्य बाणसंयोजनस्य धिषणां बुद्धिं तद्भ्रान्तिं संहितशरधिषणामिति यावत्। अत्रेत्थं पदयोजना—हे अगराजन्यतनये! ते पालीयुगलमरालं कुसुमशरकोदण्डकुतुकं केषां नाधत्ते। यद्यस्मात् यत्र तिरश्चीनः विलसन् अपाङ्गव्यासङ्गः श्रवणपथमुल्लङ्घ्य शरसन्धानधिषणां दिशति। अत्र भ्रान्तिमदलङ्कारः; अपाङ्गे संहितशरभ्रान्तेरुत्थानात्। पालीयुगले कुसुम-शरकोदण्डबुद्धिः निश्चयात्मिका संशयपूर्विकेति सन्देहालङ्कार एव। अनयोरङ्गाङ्गिभावेन सङ्करः॥

सौभाग्यवर्धनी

अरालमिति। हे अगराजन्यतनये, अरालं कुटिलं ते पालीयुगलं भ्रूयुगलं, न केषामाधत्ते कुसुमशरकोदण्डकुतुकं, अपि तु सर्वेषामाधत्ते। तिरश्चीनः तिर्यगाकृष्टः, श्रवणपथमुल्लंघ्य, विलसन् अपाङ्गव्यासङ्गः कटाक्षविसर्गः, शरसन्धानधिषणां दिशति व्यक्ती-करोतीत्यर्थः। आकर्णाकृष्टशरसन्धानेन मदनधनुः कस्य कौतुकं न करोति। न केषामाधत्त इति व्यतिरेकेण पर्यवसिता निदर्शना। अन्यः कुतुकं यो धत्ते अरालस्य साधर्म्यात् अपाङ्गव्यासङ्गः शरसन्धानधिषणां दिशति। तिरश्चीनः श्रवणपथमुल्लंघ्य विलसन्निति श्लिष्टविशेषणमहिम्ना

समासोक्तिराक्षिप्तोपमा वा। अत्र स्मारेराधत्ते कुसुमशरकोदण्डकुतुकमिति युक्तः पाठः। सर्वेषामित्यनौचित्यात्॥ ५८॥

अरुणामोदिनी

-- -- अरालमिति। हे अगराजन्यतनये न गच्छतीत्यगः पर्वतः, तद्राजन्यः श्रेष्ठः हिमवान्, तत्तनये कुलप्रदीपिके, अरालं वक्राकारं पालीयुगलं श्रवणाभरणविशेषयुग्मं, 'पाली प्रवाली कर्णांगी कर्णकोटिविभूषणे' इति विश्वप्रकाशः। कुसुमशरकोदण्डकुतुकं कुसुमशरस्य कन्दर्पस्य, कोदण्डविशिखपर्यायान्तानि पुष्पाणि सर्वाणि स्मरनामधेयानि। कोदण्डस्य कुतुकं कोदण्डमेवैतदिति कुतूहलाभिनिविष्टमभिप्रायं केषां पुरुषाणां नादत्ते न संपादयति। अपि तु सर्वेषामित्यर्थः। यदिदं पालीयुगलं अनङ्गधनुः स्यात्, तत्र शरसन्धानं कथमित्याशङ्कायामाह–तिरश्चीन इति। यत्र पालीयुगले तिरश्चीनः तिर्यक्तया पतितः, श्रवणपथमुल्लंघ्य कर्णप्रान्तं लङ्घयित्वा विलसन् देदीप्यमानः, अपाङ्गव्यासङ्गः कटाक्षविक्षेपचातुरीविशेषः शरसंधानधिषणां बाणसंयोजनबुद्धिं दिशति संपादयति तत्ते पालीयुगलमिति पूर्वेण संबन्धः॥ ५८॥

आनन्दगिरीया

एकादशश्लोकैर्नेत्राणि वर्णयित्वा इदानीं भ्रुवौ वर्णयति। अरालमिति। हे अगराजन्यतनये पर्वतपतिपुत्रि, ते तव, अरालं पालीयुगलं केषां मनसि कुसुमशरकोदण्डकौतूहलं नाधत्ते, अपि तु द्रष्टॄणां सर्वेषामपीति। अरालं वक्रं, धनुराकारः कर्णाभरणविशेषः पाली, तयोर्युगलं, द्वे इमे पाल्यौ न भवतः, किन्तु कामकोदण्डमेवेति बुद्धिं जनयति। यत्र श्रवणपथमुल्लङ्घ्य तिरश्चीनो विलसन् अपाङ्गव्यासङ्गः कटाक्षसंसर्गः, शरसन्धानधिषणां केषां न धत्ते। तिरश्चीनोऽयं कटाक्षो न भवति, किन्तु कोदण्डे समारोपितो मदनबाण एवेति। अत्र स्मरारेराधत्ते कुतुकमिति पाठो युक्तः; जगन्मातुः पाल्योः सर्वेषां मदनबाणकौतुकमित्युक्ते चिन्त्यमिति केचिद्वदन्ति। वस्तुतोऽनौचित्यं तदा भवति यदा कुसुमशरव्यथा वर्णिता स्यात्। नेह तथा; किन्तु कौतुकमात्रं, तत्तु उदासीनानामपि भवत्येवेति आकर एव पाठः सम्यक्। पाली भ्रूरिति केचित्। अत्रोपमापह्नुत्योः सङ्करः। अरालं ते पालीतिपद्यस्य रहस्यार्थः। चतुरश्चतुराम्नायानां मन्त्रमाह– अरालमिति। पालीयुगलं लज्जायुगलं, उल्लंघ्योपरि गत्वा, मिलित्वा, यद्युतमिति पूर्वाम्नायदेवता उन्मनी ह्स्रीं स्ह्रीं पूर्वाम्नाय उन्मनी। (ह्स्रैं ह्स्क्लीं ह्स्रौः)॥ ५८॥

तात्पर्यदीपिनी

अरालमिति। हे अगराजन्यतनये, अग एव राजन्यस्तस्य पुत्रि, ते पालीयुगलं श्रवणाभरणविशेषयुग्मं कुसुमशरकोदण्डकुतुकं, कुसुमशरो मदनः, तस्य कोदण्डं धनुः, तस्य

कुतुकं कौतुकं, केषां पुरुषाणां नाधत्ते; अपि तु सर्वेषामाधत्त इत्यर्थः। किंविधं पालीयुगलं, अरालं चक्राकारम्। यदीदं पालीयुगलं अनङ्गधनुः स्यात्, तदा तत्र शरसन्धानमपि स्यादित्याशंक्याह – यत्र पालीयुगले अपांगव्यासङ्गः अपाङ्गयोः कटाक्षयोः व्यासङ्गो विक्षेपचातुरीविशेषः, शरस्य सन्धानधिषणां बाणसंयोजनबुद्धिं दिशति संपादयति, तत्ते पालीयुगलमिति पूर्वेण संबन्धः। किंविधोऽपांगव्यासङ्गः, तिरश्चीनः तिर्यक्तया स्थितः शरसन्धानमपि तिर्यग्भवतीति। पुनः श्रवणपथमुल्लंघ्य कर्णप्रान्तं लंघयित्वा विलसन् देदीप्यमानः ॥५८॥

## पदार्थचन्द्रिका

अथ कर्णद्वयाग्रभागद्वयं कामधनूरूपकेण वर्णयति–अरालमिति। न गच्छन्तीत्यगाः पर्वतास्तेषां राजन्यो मूर्धाभिषिक्तो हिमवान्, तस्य कन्ये। ते तव पालीयुगलं, पाल्योः कर्णाग्रभागयोर्द्वयं, केषां द्रष्टॄणां कुसुमशरकोदण्डकुतुकं कामधनुश्चमत्कारं नाधत्ते न करोति। अपि तु सर्वेषामपीत्यर्थः। पालीयुगलं विशिनष्टि–यत्र पालीयुगले श्रवणं पन्था इव श्रवणपथः, तमुल्लङ्घ्यातिक्रम्य विलसन् शोभमानः, अपाङ्गव्यासङ्गः कटाक्षसंसर्गः शरसन्धानधिषणां शरसन्धानविषयां बुद्धिं दिशति ददाति द्रष्टृभ्य इति शेषः। तिरश्चीनो वक्रो वक्रनाभित्वेन। पाली कर्णतलाग्रेऽसौ पंक्तावङ्कप्रदेशयोरिति मेदिनीकरः। ५८ ॥

## डिण्डिमभाष्यम्

हे अगराजन्यतनये! न गच्छन्तीत्यगाः पर्वताः तद्राजन्यः, ततः श्रेष्ठो हिमवान्, तत्तनये कुलप्रदीपिके! अरालं वक्राकारं पालीयुगलं श्रवणाभरणविशेषयुग्मं, 'पाली प्रवाली कर्णाङ्गी कर्णकोटीविभूषणे' इति विश्वः। कुसुमशरकोदण्डकुतुकं कुसुमशरस्य कन्दर्पस्य, कोदण्डविशिखपर्यायान्तानि पुष्पाणि सर्वाणि स्मरनाममयानि। कोदण्डस्य कुतुकं कोदण्डमेवैतदिति कुतूहलाभिनिविष्टमभिप्रायं केषां पुरुषाणां नाधत्ते न संपादयति, अपि तु सर्वेषामित्यर्थः। यदिदं पालीयुगलं अनङ्गधनुः स्यात्, तत्र शरसन्धानं न कथम्? इत्याशङ्कायामाह–तिरश्चीन इति। यत्र पालीयुगले तिरश्चीनः तिर्यक्तया वर्तते, श्रवणपथमुल्लंघ्य कर्णप्रान्तं लङ्घयित्वा विलसन् देदीप्यमानः, अपाङ्गव्यासंगः कटाक्षविक्षेपचातुर्यविशेषः शरसन्धानधिषणां बाणसंयोजनबुद्धिं दिशति संपादयति तत्ते पालीयुगलमिति पूर्वत्र संबन्धः ॥ ५८ ॥

## गोपालसुन्दरी

अरालमिति–हे अगराजतनये पर्वतराजपुत्रि! ते तव अरालं वक्रं पालीयुगलं भ्रूद्वयं केषां जनानां कुसुमशरकोदण्डकुतुकं कामकार्मुककौतुकं न आधत्ते जनयति, अपि तु

सर्वेषां जनयतीत्यर्थः। यत्र पालीयुगले तिरश्चीनो वक्रः श्रवणपथं कर्णप्रान्तमुल्लङ्घ्य विलसन् शोभमानः, अपाङ्गव्यासङ्गः कटाक्षविक्षेपः शरसन्धानधिषणां बाणसंयोजनबुद्धिं दिशति संपादयति इत्यर्थः। विष्णुपक्षे–हे अगराजतनये! अं विष्णुं गच्छतीत्यगः वैष्णवः, तद्राजन्यः स चासौ तनय इति, तनयः परिपालयत्वात्, तस्य इः प्रभावः इति वा। अगराजतनयेति तृतीयान्तं पदम्। अगराजतनयेन वैष्णवेन मैनाकेन वा सह केषां अ आधत्त इति पदच्छेदः। अकारो नकारार्थकः। केषां कुतुकं न धत्ते इत्यर्थः। शेषं समानम्॥ ५८॥

आनन्दलहरीटीका

अरालमिति। हे अगराजन्यतनये पर्वतराजपुत्रि, अरालं वक्रं ते तव पालीयुगलं कर्णाग्रभागद्वयं कुसुमशरस्य यत्कोदण्डधनुः तत्कुतुकं तद्दर्शनजन्यं सुखं केषां जनानां नाधत्ते न जनयति, अपि तु सर्वेषामेवेति भावः। यत्र पालीयुगले अपाङ्गव्यासङ्गो नेत्राङ्गव्यापारः शरसन्धानधिषणां बाणारोपणबुद्धिं दिशति जनयतीत्यर्थः। किंभूतः, तिरश्चीनो वक्रः, शरपक्षे तिर्यक् नियोजितः, श्रवणपथं कर्णवर्त्म, उल्लंघ्य अतिक्रम्य, विलसन् शोभमानः। अपाङ्गौ नेत्रयोरन्तावित्यमरः। पालिः कर्णतलाग्रेऽसौ पंक्तावंकप्रदेशयोः। पाली प्रस्थे च यूकायां जातश्मश्रुस्त्रियामपि इति विश्वप्रकाशः। पाली कर्णाभरणविशेष इति कश्चित्॥ ५८॥

**स्फुरद्गण्डाभोगप्रतिफलिततताटङ्कयुगलं**
**चतुश्चक्रं मन्ये तव मुखमिदं [1]मन्मथरथम्।**
**यमारुह्य द्रुह्यत्यवनिरथमर्केन्दुचरणं**
**महावीरो मारः प्रमथपतये सज्जि[2]तवते॥ ५९॥**

ஸ்புரத் கண்டாபோக ப்ரதிபலித தாடங்க யுகளம்
2 1 3 3 4 3 1 12 1 1 1 1 3
சதுச்சக்ரம் மந்யே தவ முகமிதம் மந்மதரதம்।
1 1 11 1 2 3 2 2
யமாருஹ்ய த்ருஹ்யத்யவநிரதமர்கேந்துசரணம்
3 1 2 1 3 1
மஹாவீரோ மார: ப்ரமதபதயே ஸஜ்ஜிதவதே॥
1 211 1 1

मुकुरों से चिकने गालों में प्रतिबिंबित ताटंकयुगल
लिए चार पहियों वाले मन्मथरथ सा तव वदन विमल

1 मान्मथरथं 2 पतये ऽस्मै जितवते। पतये स्वं जितवते।

लगता मुझे बेट उस पर मां! महावीर स्मर पुरहर के
रवि शशि चक्रों से सज्जित पृथिवी रथ पर बैठे हर के
नाकों दम कर देता है प्रमथगणाधिप उन भव हरके ॥

लक्ष्मीधरा

स्फुरद्गण्डाभोगप्रतिफलिततताटङ्कयुगलं स्फुरन्तौ च तौ गण्डाभोगौ च गण्डस्थले दर्पणवन्निर्मलावित्यर्थः। तत्र प्रतिफलितं प्रतिबिम्बितं ताटङ्कयुगलं यस्य सः। तं चतुश्चक्रं चत्वारि चक्राणि रथचरणानि यस्य तं चतुश्चक्रं, मन्ये शङ्के। तव भवत्याः, मुखं आस्यं, इदं हृदयकमले परिदृश्यमानं, मन्मथरथं मदनस्य स्यन्दनं, यं रथं, आरुह्य अधिष्ठाय, द्रुह्यति अपराध्यति विध्यतीति यावत्। अवनिरथं भूमिरथं, अर्केन्दुचरणं अर्केन्दू सूर्यचन्द्रौ तावेव चरणौ यस्य सः, महावीरः चतुश्चक्ररथारोहणमहिम्ना अप्रतिहतप्रतापः, मारः मन्मथः, प्रमथपतये त्रिपुरान्तकाय, सज्जितवते सज्जं कुर्वते सन्नद्धं कुर्वत इत्यर्थः। अत्रेत्थं पदयोजना— हे भगवति! तव इदं मुखं स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं चतुश्चक्रं मन्मथरथं मन्ये। यमारुह्य मारः महावीरस्सन् अवनिरथमर्केन्दुचरणं सज्जितवते प्रमथपतये द्रुह्यति। 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इति चतुर्थी॥ अत्र पूर्वार्धे उत्प्रेक्षालङ्कारः, भगवत्याः मुखस्य रथत्वेनोत्प्रेक्षणात्। द्वितीयार्धे आरोहणस्य महावीरत्वसम्पादकत्वकथनात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः। परमेश्वरस्य मन्मथेन सार्धं युद्धसन्नाहासम्बन्धेऽपि सम्बन्धकथनादतिशयोक्तिः। काव्यलिङ्गातिशयोक्त्योरङ्गाङ्गिभावेन सङ्करः। उत्प्रेक्षायास्तु काव्यलिङ्गं प्रत्यनुप्राणकत्वेन, न संसृष्टिः, नापि सङ्करः इति ध्येयम्। पृथक्स्थित्या उपकारकमनुप्राणकम्। अपृथक्स्थित्या प्रयोजकं उपसर्जनम्। पृथक्स्थित्या प्रयोजकमङ्गम्। एतद्विलक्षणं संसृष्टिरित्यालङ्कारिकमतरहस्यम्। एतच्च पूर्वमुक्तमपि स्पष्टार्थं पुनः प्रतिपादितमिति॥ ५९॥

सौभाग्यवर्धनी

क्रमप्राप्तं श्रवणाभरणं स्तौति। स्फुरदिति। स्फुरत् नानारत्नदीधितिजालेन प्रकाशमानं दृष्टं गण्डाभोगयोः, कपोलपरिणाहयोः, प्रतिबिम्बितताटङ्कयुगलं, अथवा स्फुरतोः निरुपमनैर्मल्येन देदीप्यमानयोः गण्डाभोगयोः कपोलपरिणाहयोः प्रतिफलितताटङ्कयुगलं चतुश्चक्रं तव मुखमिदं मान्मथरथमारुह्य आश्रित्य अवनिरथं पृथ्वीरथं अर्केन्दुचरणं चन्द्रसूर्यचक्रमारुह्य अस्त्रं परं दैत्यसंघं जितवते प्रमथपतये द्रुह्यति। आरुह्येत्युभयत्र संबन्धः। महावीरः भवन्मुखलक्षणरथाश्रयणप्राप्तामोघविक्रमो मारः। प्रमथपतेरवनिरथः सूर्यचन्द्ररूपद्विचक्रः। भवन्मुखरथः चतुश्चक्रः। अथ चन्द्रसूर्यवह्निरूपनयनत्रयाधिष्ठितः, तमाश्रित्य प्रमथपतिं जेष्यतीति किमाश्चर्यमिति

ध्वनिः। अत्र यमाश्रित्येति युक्तः पाठः। मदनस्य जगदम्बिकामुखारोहणमापाततोऽनुचितमिति। यदुचितं तत्सद्भिर्ग्राह्यम्। प्रकृतमुखस्वरूपमपह्नुत्य मान्मथरथत्वारोपादपह्नुतिः॥ ५९॥

अरुणामोदिनी

स्फुरदिति। स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं *कर्णपाशमण्डलाकाशमरण-विशेषयुग्मं यत्र तत्तथोक्तं, मुखस्य विशेषणं, बिंबयुगलस्य प्रतिबिंबयुगले जाते चतुःसंख्योपलम्भात् चतुर्भिश्चक्रैर्वहनीयं मन्मथरथमेव कन्दर्पस्यन्दनमेव इदं तव मुखं शङ्के। तदेव विशिनष्टि, यं तव मुखलक्षणं रथमारुह्य महावीरो मारः कर्ता, अर्केन्दुचरणं भास्करनिशाकरभास्वरचक्रोज्ज्वलं, अवनिरथं भूमिरथमारुह्य स्वमात्मानं जितवते तिरस्कृतवते प्रमथपतये महादेवाय द्रुह्यति पराभवं करोति। द्विचक्रस्य रथस्य गमनवैकल्यसम्भवात्, अतोऽधिकता चतुश्चक्रसंभवे, तद्रथिनं प्रति तदूनरथिनः पराजयो युक्तः। आरुह्येति दीपिकालङ्कारः। यमारुह्येति कन्दर्पेण संबन्धः। अवनिरथमारुह्येति महादेवेन संबन्धः। संबन्धद्वयमपि दीपकताशब्दस्य, यथा जामात्रर्थो दीपः सर्वं वेश्माभिज्वलति इति कार्यद्वयसाधनद्वारा अर्थद्वयोद्दीपनसंभवात् दीपकत्वम्। अत्र श्लोके महादेवस्योपरि मन्मथजयसंपत्त्या महादेवस्य काममोहितचित्तवृत्तितया, तन्मोहनैकरसिकस्य भगवतीवदनारविन्दस्य समधिकशृङ्गाररसार्द्रभावे संपन्ने महादेवकान्तिलावण्यविशिष्टं लोकोत्तरत्वमुट्टङ्कितमिति भावः॥ ५९॥

आनन्दगिरीया

प्राप्तक्रमं ताटङ्कद्वयं स्तौति—स्फुरद्गण्डेति। हे हिमगिरिकन्ये इदं तव मुखं मन्मथरथं मन्ये। किंलक्षणं रथं, चतुश्चक्रं चत्वारि चक्राणि यस्मिन् असौ तं, चतुश्चरणतया निम्नोन्नतायां भूमावस्खलनात् व्याघाताभावः। महादेवरथापेक्षया दीर्घसन्नद्धत्वं च सूचितम्। महादेवरथस्तु पृथिवी, स च मृत्तिकादिचक्रश्च; अयं तु लावण्यसुधासर्वस्वमयः चतुश्चक्रश्च। अथवा मनो मथ्नातीति मन्मथः, स चासौ रथश्चेति कामः, संग्रामदर्शनमात्रेण यो मनसि वैकल्यापादकः। चतुश्चक्रत्वं समर्थयति—किंलक्षणं मुखं, स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं, स्फुरन्तौ लावण्यकान्तिपूर्णतया निर्मलतरमुकुरायमाणौ यौ गण्डौ कपोलौ, तयोराभोगः परिणाहः, तत्र प्रतिफलितं प्रतिबिम्बितं ताटङ्कयुगलं यत्र तत्तथा। तथा च बिम्बद्वयं प्रतिबिम्बद्वयं चेति मिलित्वा चतुश्चक्रत्वम्। किं च महादेवरथे सूर्येन्दुचक्रे। अत्र तु सूर्यचन्द्राग्नयः पारिपार्श्वकाः। अयमेतादृशं लोकोत्तरं रथमारुह्य महावीरो मारः प्रमथपतये द्रुह्यति। वैरायते। कन्दर्पस्य महावीरत्वात् सन्नाहव्यवसायेन विनयबलपराक्रमशक्तिकीर्तिप्रतापप्रभावा-

---

* अत्र मध्ये व्याख्यानपंक्तिजातं लुप्तमिव भाति। डिण्डिमभाष्यतः त्रुटितो भागः पूरणीयः।

विस्मयाविषादासंमोहदुर्धर्षसैन्यसंपन्नधनाभिजनमन्त्रशक्तिप्रभृतयो वीरभावाः सूचिताः। प्रमथपतय इति संग्रामसमये प्रमथा एव मिलन्ति न तु गजरथतुरगादिघटाघटितं कटकमिति। किंलक्षणाय प्रमथपतये, अवनिरूपं रथं सूर्येन्दुचरणरथमारुह्येत्यत्रापि योजनीयम्। स्वं स्वकीयं त्रिपुरादिकं जितवते इति व्याख्येयं, न तु स्वात्मानं कन्दर्पमिति व्याख्येयम्। कन्दर्पजयावसरे समाधिस्थत्वेन रथानारोहात, युद्धं विनैव लोचनानलज्वालयैव तस्य दाहात्। एतावता ताटङ्कवर्णनं कथं जातमिति चेदुच्यते। यत्तावत्ताटङ्कयुगलं मन्मथरथचक्रीभूय महादेवमपि मोहयतीत्येतादृशमिति। कन्दर्पस्य परमेश्वरीमुखरथारोहणोक्त्या मुखमण्डलस्य परमकमनीयतोक्ता। यत् दृष्ट्वा महादेवस्तपस्त्यक्त्वा तदेकपरतन्त्रो जात इति। 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इत्यनेन संप्रदानत्वम्। अत्रोपमारूपकापह्नुतयोऽलङ्कारा ज्ञातव्याः। मन्ये इति इवार्थे यदा तदोपमा। इदं मुखं रथमेव मन्ये तदा रूपकम्। नेदं मुखं किन्तु मन्मथरथः, तदापह्नुतिः। स्फुरद्गण्डेति श्लोकस्य रहस्यार्थः। स्फुरदिति। स्फुरद्गण्डा वाणी, आभोगः कामबीजं ताटङ्कयुगलं कुल चतुरित्याकारं मन्ये एकारं चक्रं वर्णाः अर्केन्दू चक्रं तेन फ्सौं रथं रेफानुस्वारौ चक्र बीजं, भोगिनी नाम्नेयम्। ऐं क्लीं कुलफ्सौं। दक्षिणाम्नायभोगिनी विद्या। (ओं ऐं ह्रीं क्लिन्ने क्लिन्नमदद्रवे ह्सौः।)॥ ५९॥

तात्पर्यदीपिनी

स्फुरदिति – हे परमेश्वरि, तवेदं ध्यानगोचरीभूतं मुखं वदनं मन्मथरथं मन्ये। मन्मथस्य स्यन्दनं जानामि। कथं स्यन्दनसाम्यमिति तत्राह – किंविधं रथं, चतुश्चक्रं, चत्वारि चक्राणि यस्मिन्स तथा तम्। ननु कानि चक्राणि इति तत्राह – पुनः किंविधं, स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं, स्फुरन् यो गण्डाभोगः, तत्र प्रतिफलितं ताटङ्कयोर्युगलं द्वयं यस्मिन्, तत्तथा। कर्णासक्तताटङ्कयुग्ममेव चक्रद्वयं, तदेव गण्डाभोगे प्रतिफलितं सत् द्वितीयं चक्रयुगलं जातम्। एवं चतुश्चक्रात्मकत्वम्। ननु रथे रथिना भाव्यं, तत्राह। महावीरो मारः जगज्जेयः स्मरो यं रथमारुह्य प्रमथपतये गणाधिपतये रुद्राय द्रुह्यति पराभवं करोति। किंविधाय, स्वं आत्मानं जितवते मारं तिरस्कुर्वते जितेन्द्रियायेत्यर्थः, किंकृत्य, अवनिरथमारुह्य, अवनिर्भूमिः सैव रथस्तं, किंविधरथं, अर्केन्दुचरणं, अर्कश्चेन्दुश्च तौ सूर्याचन्द्रमसौ चरणौ यस्य तं द्विचक्रस्य गमनवैकल्यसंभवात्। अधिकचक्रसंभवात् तद्रथिनः प्रतीपमाररथिना पराजयो युक्तः। अत्र श्लोके महादेवस्योपरि मन्मथजयसंपत्त्या, महादेवस्य काममोहितचित्तवृत्तितया, तन्मोहनैकरसिकस्य भगवतीवदनारविन्दस्य समधिकशृङ्गाररसार्द्रभावे संपन्ने महादेवाधिककान्तिविशिष्टं लोकोत्तरत्वमुचितमिति भावः॥ ५९॥

पदार्थचन्द्रिका

अथ मुखमुत्प्रेक्षमाणो वर्णयति, स्फुरदिति। हे जननि तवेदं मुखं तन्मान्मथरथं, मन्मथस्यायं मान्मथः, तं मन्ये तर्कयामि। रथं विशिनष्टि–चत्वारि चक्राणि यस्मिंस्तं, चतुश्चक्रत्वसंपादनाय मुखं विशिनष्टि–गण्डयोराभोगौ गण्डाभोगौ स्फुरन्तौ च तौ गण्डाभोगौ च, तत्र प्रतिफलितताटङ्कयुगलं यत्र तं, तं कमित्यपेक्षायामाह–यमारुह्य महावीरो मारः प्रमथपतये द्रुह्यति, क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोप इति चतुर्थी। अर्केन्दू चरणौ यस्मिंस्तं अवनिरूपं रथमारुह्य अस्वं शत्रुं त्रिपुरं जितवत इति प्रमथपतिविशेषणम्। जिगायेति जितवांस्तस्मै। जिक्रियापेक्षया चास्वमिति कर्मणि द्वितीया। मारस्य महावीरत्वं सर्वनियन्तृश्रीमहादेवस्य प्रतिस्पर्धित्वेन॥ ५९॥

डिण्डिमभाष्यम्

हे परमेश्वरि! स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं स्फुरतोः लावण्यकान्तिधावल्येन समुन्मृष्टदर्पणोदरवत् प्रतिबिम्बग्रहणे निपुणयोः गण्डाभोगयोः कपोलस्थलयोः प्रतिफलितं सञ्जातसम्भ्रान्ति ताटङ्कयुगलं कर्णपाशमण्डलकाराभरणविशेषयुग्मं यत्र तत्तथोक्तम्। मुखस्य विशेषणम्। बिम्बयुगलस्य प्रतिबिम्बयुगले जाते चतुःसङ्ख्योपलम्भाच्चतुश्चक्रं चतुर्भिश्चक्रैर्वाहनीयं मन्मथरथमेव इदं तव मुखं शङ्के। तदेव विशिनष्टि–यं तव मुखलक्षणं मन्मथरथमारुह्य महावीरो मारः कर्ता, अर्केन्दुचरणं भास्करनिशाकरभास्वरचक्रोज्ज्वलमवनिरथं भूमिरथमारुह्य स्वमात्मानं जितवते तिरस्कृतवते प्रमथपतये महादेवाय द्रुह्यति पराभवं करोति। द्विचक्रस्य रथस्य गमनवैकल्यसम्भवात् तदधिकता चतुश्चक्रसंभवे। तद्रथिनं प्रति तदूनरथिनः पराजयो युक्तः। आरुह्येति दीपिकालङ्कारः, यमारुह्येति कन्दर्पेण सह संबन्धः। अवनिरथमारुह्येति महादेवेन संबन्धः। संबन्धद्वये दीपगतशतशब्दस्य यथा जामात्रर्थो दीपः सर्वं वेश्मामिज्वलयति इति कार्यद्वयसाधनद्वारा अर्थद्वयोद्दीपनसंबन्धाद्दीपकत्वम्। अत्र श्लोके महादेवस्यस्योपरि मन्मथजयसंपत्त्या महादेवस्य काममोहितचित्तवृत्तितया तन्मोहनैकरसिकस्य भगवतीवदनारविन्दस्य समधिकशृङ्गाररसार्द्रभावे संपन्ने, महादेवलावण्यकान्तिविशिष्टं लोकोत्तरत्वमुट्टङ्कितमिति भावः॥

गोपालसुन्दरी

स्फुरद्गण्डेति। स्फुरतोर्गण्डाभोगयोः कपोलस्थलयोः प्रतिफलितं प्रतिबिम्बितं ताटङ्कयुगलं कर्णभूषणविशेषद्वयं, यत्र तदिदं मुखं चतुश्चक्रं मन्मथरथं मन्ये। बिम्बप्रतिबिम्बाभ्यां ताटङ्करूपचक्रचतुष्टयोपलम्भात् यं रथमारुह्य महावीरो मारः कन्दर्पः प्रमथपतये महारुद्राय द्रुह्यति। कीदृशाय अर्केन्दुचरणं सूर्यशशिचक्रद्वयमवनिरथं भूमिरथमारुह्य अस्वं परं

शत्रुं त्रिपुरं जितवते तिरस्कृतवते। अत्र आरुह्येत्युभयत्रान्वेति। अथवा अवनिरथं सुष्ठु अञ्जितवते योजितवते प्रमथपतये इत्यर्थः। चतुश्चक्रं मन्मथरथं, तव मुखं कर्तृ, अर्केन्दुचरणमवनिरथं द्रुह्यति यमारुह्य मारः प्रमथपतये द्रुह्यतीति वा संबन्धः॥ विष्णुपक्षे—सुन्दरीगोपालध्यानाभिप्रायेण मोहिनीरूपाभिप्रायेण वा ताटङ्करूपस्त्रीभूषणवर्णनं, ताटङ्कयुगलान्यनुकरोतीति व्युत्पत्त्या कुण्डलपरं ताटङ्कयुगलपदं वा॥ ५९॥

आनन्दलहरीटीका

स्फुरदिति। तवेदं मुखं मन्मथस्य कामस्य रथं मन्ये उत्प्रेक्षे। कीदृशं चत्वारि चक्राणि यत्र स तथा तम्। तत्र हेतुगर्भविशेषणमाह—स्फुरद्दीप्तिमत् गण्डाभोगयोः प्रतिफलितं प्रतिबिंबितं ताटङ्कयुगलं कर्णाभरणविशेषद्वयं यत्र तादृशं मुखं, आभोगः परिपूर्णतेत्यमरः। कुदमिहित इति न्यायाद्धर्मिपरत्वम्। कर्णयोस्ताटङ्कयुगलं गण्डयोस्तत्प्रतिबिम्बद्वयमिति चतुश्चक्रतेति भावः। यत्त्वन्मुखरूपं रथमारुह्य महावीरो मारः कामः प्रमथपतये शिवाय द्रुह्यति, द्रोहं करोति जनयतीत्यर्थः। द्रुहधातुयोगात्कर्मणि चतुर्थी। कीदृशाय, अवनिरथं पृथ्वीरूपं रथं, अर्केन्दू सूर्यचन्द्रौ चरणौ चक्रे, तं सज्जितवते आरूढाय। योजितवते इति पाठे अवनिरथमारुह्येत्यावृत्तिः। स्वं कामं जितवत इत्यर्थः॥ ५९॥

सरस्वत्याः सूक्तीरमृतलहरीकौशलहरीः
पिबन्त्याः शर्वाणि श्रवण[1]चुलुकाभ्या[2]मविरलम्।
चमत्कारश्लाघाचलितशिरसः कुण्डलगणो
[3]झणत्कारैस्तारैः प्रतिवचनमाचष्ट इव ते॥ ६०॥

*ஸரஸ்வத்யாஸ் ஸூக்தீரம்ருதலஹரீ கௌசலஹரீ:*
1 1 1 1 1
*பிபந்த்யாச் சர்வாணி ச்ரவண சுலுகாப்யாமவிரலம்।*
1 3 1 1 1 4
*சமத்காரச்லாகா சலிதசிரஸ: குண்டலகணோ*
1 1 1 4 1 1 1 3 3
*ஜணத்காரைஸ்தாரை: ப்ரதிவசந மாசஷ்ட இவ தே॥*
4 1 1 1 1 1 1 1 1 1

वाणी की अमृतलहरी कौशल का मद हरनेवाली
वाणी का कर्णपुटों से अनवरत पान करनेवाली

1 चषकाभ्यां 2 मविरतम् 3 रणत्कारैः

शर्वाणी! गीति चमत्कृति श्लाघा सूचक शिर चालन से
मुखरित लोल कुण्डलों की निज ऊँचे सुमधुर फन फन से
अंगीकृति सूचक प्रतिवचन दे रहिं तू वत्सल मन से ॥

लक्ष्मीधरा

सरस्वत्या भारत्याः, सूक्तीः मधुरवचांसि, अमृतलहरीकौशलहरीः अमृतलहर्याः सुधाप्रवाहोत्सेकस्य कौशलं सौभाग्यं हरन्तीति ताः। हरिशब्दः औणादिको निप्रत्ययान्तः, 'कृदिकारादक्तिनो वा ङीष् वक्तव्यः' इति ङीष्। पिबन्त्याः धयन्त्याः, शर्वाणि! शर्वस्य परमेश्वरस्य पत्नि! श्रवणचुलुकाभ्यां चुलुकं प्रसृत्यर्धं श्रवणे श्रोत्रे एव चुलुके ताभ्यां अविरलं यथा भवति तथा, सावधानेनेत्यर्थः। चमत्कारश्लाघाचलितशिरसः चमदित्यव्ययमाश्चर्यानुकरणवाचि। कारशब्दः स्वरूपपरः। यद्वा—सुखदुःखोद्भूतानन्दैः हठोत्थितचित्तविक्रिया चमत्कारः सशीत्कारशरीरोल्लासनादिकृत्। चमत्कारश्लाघासु आश्चर्यानुकरणसन्दोहेषु चलितं शिरो यस्यास्तस्याः, कुण्डलगणः कर्णाभरणसमूहः झणत्कारैः झणदित्यव्ययं भूषणरवानुकरणे। कारशब्दः स्वरूपवाची। झणत्कारैः तारैः अतिबहुलैः उच्चतरैः, प्रतिवचनं प्रतिशब्दं अनुमोदवचनं, आचष्ट इव ते॥ अत्रेत्थं पदयोजना—हे शर्वाणि! ते अमृतलहरीकौशलहरीः सूक्तीः श्रवणचुलुकाभ्यामविरलं पिबन्त्याः चमत्कारश्लाघाचलितशिरसः सरस्वत्याः कुण्डलगणः तारैः झणत्कारैः प्रतिवचनमाचष्ट इव। अत्र उत्तरार्धे उत्प्रेक्षालङ्कारः; झणत्काराणां प्रतिवचनत्वेन सम्भावनात्। पूर्वार्धे अतिशयोक्तिरलङ्कारः; सरस्वत्याः शिरःकम्पनसम्बन्धाभावेऽपि सम्बन्धोक्तेरसम्बन्धे सम्बन्धनिबन्धनात्। उभयोरङ्गाङ्गिभावेन सङ्करः॥ ६०॥

सौभाग्यवर्धनी

ताटङ्कयुगलं प्रस्तुत्य श्रवणयुगलप्रख्यापनद्वारा कुण्डलगणं स्तौति। सरस्वत्या इति। सरस्वत्याः सूक्तीः गद्यपद्यादिगणरूपाः, अमृतपरम्परानिधानसमाः, श्रवणचुलुकाभ्यां अविरतं अनवरतं पिबन्त्याः तव चमत्कारश्लाघाचलितशिरसः सूक्तिश्रवणसमुदितचमत्कारेण या साधुवादोत्सुकता तया कंपितमौलेः कुण्डलगणः प्रतिवचनमाचष्ट इव। ते प्रत्युक्तिः साधु साध्विति कथयतीव। अथवा चमत्कारस्य या श्लाघा साधूक्तिः, तया कंपितशिरसः तव कुण्डलगणः तारैरुच्चैः झणत्कारैः प्रतिवचनं अनुमोदनरूपं आचष्ट इव। न केवलं त्वं श्लाघसे, किं तु अचेतनः कुण्डलगणः अनुमोदत इति ध्वनिः। श्रवणयोश्चुलुकत्वख्यापनं, तच्चामृतास्वादनरूपाकर्णने कारणं, तच्च श्लाघायां कारणं, सा च प्रतिवचनदाने कारणं, प्रतिवचनं चोपमया लभ्यत इति कारणमाला॥ ६०॥

अरुणामोदिनी

सरस्वत्या इति । हे शर्वाणि ! 'इन्द्रवरुणभवशर्वरुद्रहिम' इत्यादिना आनुक् । ङीप् प्रत्ययश्च । शर्वदयिते अमृतलहरीकौशलहरीः, अमृतलहरीणां सुधाप्रवाहाणां 'तरङ्गभङ्गविक्षोभा लहरीवीचिकोर्मयः' इति विश्वप्रकाशः । कौशलं माधुर्यं माधुर्यात्मकं सामर्थ्यविशेषं हरन्ति दूरीकुर्वन्तीति हरीः स्वाधिक्येन तस्या न्यूनतासंपादयित्रीः, सरस्वत्याः वाग्देवतायाः सूक्तीः, सुवचनविन्यासमधुरस्फीता गीः उक्तिः, श्रवणचुलुकाभ्यां कर्णरूपकरतलाभ्यां; करतलेनैव खलु पानीयादि पेयं पीयत इति करतलसाधर्म्यं श्रवणस्य । तेन च सरस्वतीसूक्तीनां अमृतरसात्मकत्वं ध्वन्यते । पिबन्त्या आस्वादयन्त्याः तदर्थविशेषचमत्कारमनुभवन्त्याः, अत एव हेतोः, अविरतं चमत्कारश्लाघाचलितशिरसः कुण्डलगणः, चमत्कारो नाम श्रूयमाणगीतशब्दादिजनितः माधुर्यातिशयः, तस्य श्लाघा उपलालनं, तेन चलितशिरसः कंपितमूर्ध्नः तव कुण्डलगणः, सूक्ष्मकुण्डलसमूहात्मको भूषणविशेषः कर्ता, तारैः अत्युच्चध्वनिविशेषैः झणत्कारैः स्वकीयमणिगणसंघट्टनजनितसंरटनैः प्रतिवचनमाचष्ट इव प्रत्युत्तरं दत्त इव । प्रथमप्रश्नवचनानन्तरसदुत्तरप्रदानसमानमिव शोभत इति सूचितं भवति । कुतः ? सरस्वतीसूक्तेः कलमधुरत्वात् कुण्डलगणझणत्कृतीनामपि माधुर्ये सति तयोः संवादार्थं साम्यमस्तीति भावः ॥

आनन्दगिरीया

सरस्वत्या इति । हे शर्वाणि कुण्डलगणः कर्णाभरणसमूहस्ते तव प्रतिवचनमाचष्ट इव । प्रतिवचनमत्रानुमोदनरूपम् । कैः तारैः माणिक्यझणत्कारैः परस्पराश्लेषणसंजातैः शब्दैः, सरस्वत्याः सूक्तीः, श्रुतिवाक्ये प्रयुज्यमाने सति एवमेव सत्यं इत्याद्यनुमोदनं करोतीति वा । महापुरुषा महाराजादयो यत्र यदा वदन्ति, तत्र तदा तदनुजीविनः तारैः स्वरैरनुमोदनं कुर्वन्तीति लोकव्यवस्थाव्यवहारः । किंलक्षणायास्ते, श्रवणचुलुकाभ्यां सरस्वत्याः सूक्तीः पिबन्त्याः, सादरमाकलयन्त्याः, किंलक्षणाः सूक्तीः, अमृतलहरीकौशलहरीः अमृतस्य पीयूषस्य या लहर्यः कल्लोलाः, तासां यत्कौशलं तद्धरन्ति, तिरस्कारं कुर्वन्ति वा । कौशलमत्रामृतप्रायरसास्वादनेन रञ्जकत्वं, तद्धरणस्वभावाः, ततोऽप्यतिशयितमधुराः, पुनः कीदृश्यः, चमत्कारश्लाघाचलितशिरसः, चमत्कारो नाम श्रवणमात्रेण श्रवणहृदयाह्लाददायी सहृदयमनश्चकोरचर्यमाणार्थ प्रतिपादकलोकोत्तरवर्णनानिपुणतरकोमलवर्णावलीविलसितवाग्विलाससमुद्भूत आनन्दः, तस्य श्लाघा प्रसिद्धामृतपरित्यागेन च वर्णनं, तेन जनितचलनं शिरो यस्याः तस्याः । तथा 'गात्रोद्धूननमानन्दोदयोल्लासनं मत'मिति समीचीनकाव्यश्रवणस्य श्रवणपुटपेपीयमानतया सर्वाङ्गीणाह्लादवर्षणाय प्रारब्धपीयूषपानत्याजनेन मौलिमन्दान्दोलने

हेतुमाह। तदुक्तं 'किं कवेस्तेन काव्येन किं बाणेन धनुष्मतः। परस्य हृदये लग्नं न घूर्णयति यच्छिरः।' एतावता सरस्वतीसूक्तिश्रवणानन्दपूर्णं नानालङ्कारालङ्कृरितं तव कर्णयुगलमिति कर्णोपवर्णनम्। अपरं च तव नाममन्त्रश्रवणमाहात्म्यमेतादृशं यज्जडानामपि वाक्स्फूर्तिदम्। कथमन्यथा सरसे देवीनामाङ्किते काव्ये श्राव्यमाणे कर्णोपान्तस्थितस्य जडस्याभरणस्य प्रतिवचनदानसामर्थ्यमिति। सरस्वत्या इति पद्यरहस्यार्थः। सरस्वत्या इति। सरस्वत्याः स र उक्तीः खः फे रेफः झणत्कार फें कुण्डलगणः ध्वजाकारः हः ह्स्फ्रें भगवति कुब्जिके ह्स्फ्रें। (ह्स्रैं ह्स्रीं ह्स्रौः ह्स्ख्फ्रें भगवत्यम्बे हलक्षमलवरयूं ह्स्ख्फ्रें अघोरमुखि छ्रां छ्रीं किणि किणि विच्चे ह्स्रौः ह्स्ख्फ्रें ह्सौः, पश्चिमाम्नायसमयविद्येश्वरी कुब्जिकादेवी)॥

तात्पर्यदीपिनी

सरस्वत्या इति। हे शर्वाणि मृडानि, ते तव कुण्डलगणः सूक्ष्मकुण्डलसमूहात्मको भूषणगणः, झणत्कारैः स्वकीयमणिगणसंघट्टनजनितशब्दविशेषैः, प्रतिवचनं प्रत्युत्तरमाचष्ट इव दत्त इव। किंविधायाः तव, चमत्कारश्लाघाचलितशिरसः, चमत्कारस्य श्रूयमाणगीतेः शब्दादिजनितमाधुर्यातिशयस्य श्लाघा उपगल्भनं तेन चलितं कंपितं शिरो यस्याः सा तस्याः, पुनः श्रवणचषकाभ्यां श्रवण एव चषके पानपात्रे ताभ्यां सरस्वत्या वाग्देवतायाः सूक्तीः सुवचनोक्तीः, अविरतं निरन्तरं पिबन्त्याः, तदर्थं चमत्कारमनुभवन्त्याः, किंविधाः सूक्तीः, अमृतलहरीकौशलहरीः अमृतस्य लहर्य ऊर्मयः, तासां कौशलं माधुर्यात्मकं सामर्थ्यविशेषं हरन्ति दूरीकुर्वन्ति तास्तथोक्ताः, किंविधैः झणत्कारैः तारैः अत्युच्चध्वनिविशिष्टैः। कल-मधुरत्वात्, कुण्डलगणझणत्कृतीनामिव माधुर्ये सति तयोः संवादार्थं साम्यमस्तीति भावः॥

पदार्थचन्द्रिका

अथ कुण्डलगणमुत्प्रेक्षमाणः श्रीभवानीं स्तौति—सरस्वत्या इति। हे शर्वाणि; अविरतं सरस्वत्या देव्याः सूक्तीः शोभना वाणीः श्रवणचुलुकाभ्यां पिबन्त्याः सादरं शृण्वन्त्याः ते तव कुण्डलगणः कर्णभूषणसमुदायः प्रतिवचनं प्रत्युत्तरमाचष्ट इव कथयतीव। यद्यपि कुण्डलद्वयं एव, तयोः गणता न संभवति, तथापि तदवयवानां शब्दायमानानां बहुत्वाभि-प्रायेण गणशब्दप्रयोगः। अमृतलहर्याः कौशलं कुशलतां हरन्तीति तथा ताः, अमृतवत्सुख-जनिका इत्यर्थः। सरस्वत्या इति षष्ठी संबन्धे। संबन्धश्च प्रयोक्तृप्रयोज्यभावः सूक्ति-सरस्वत्योः। श्रवणे चुलुके इव श्रवणचुलुके ताभ्यां, 'उपमितं व्याघ्रादिभिः सामान्या-प्रयोगे' इति समासः। चमत्कार आश्चर्यबुद्धिः, तेन या श्लाघा स्तुतिस्तया चलितमीषत्कंपितं

शिरो यस्यास्तस्या इति शर्वाणीविशेषणम् । कुण्डलं कर्णभूषायां पाशेऽपि वलयेऽपि चेति मेदिनीकरः । कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः इत्यमरः ॥ ६० ॥

### डिण्डिमभाष्यम्

हे शर्वाणि! 'इन्द्रवरुणभवशर्वरुद्रमृडे' त्यादिनाऽऽनुक् ङीप् प्रत्ययश्च । हे शर्वदयिते! अमृतलहरीकौशलहरीः अमृतलहरीणां सुधाप्रवाहाणां, 'तरङ्गभङ्गविक्षोभा लहरीवीचि-कोर्मयः' इति विश्वप्रकाशः । कौशलं माधुर्यात्मकं सामर्थ्यविशेषं हरन्ति दूरीकुर्वन्ति इति हरीः स्वाधिक्येन तस्याः न्यूनतासम्पादयित्रीः सरस्वत्या वाग्देवतायाः सूक्तीः सुवचनविन्यास-मधुरस्फीतगिरः उक्तीः, श्रवणचुलुकाभ्यां कर्णपूरकरतलाभ्यां, करतलेन पानीयादि पेयं पीयते इति करतलसाधर्म्यं श्रवणस्य । तेन सरस्वतीसूक्तीनाममृतरसात्मकत्वं ध्वन्यते । पिबन्त्याः आस्वादयन्त्यास्तदर्थविशेषचमत्कारमनुभवन्त्याः, अत एव हेतोः अविरतं सदैव चमत्कार-श्लाघाचलितशिरसः कुण्डलगणः । चमत्कारो नाम श्रूयमाणगीतशब्दादिजनितो माधुर्यातिशयः, तस्य श्लाघा उपलालनं तेन चलितशिरसः कम्पितमूर्ध्नः तव कुण्डलगणः सूक्ष्मकुण्डलसमूहात्मको भूषणविशेषः । तारैः अत्युच्चध्वनिविशिष्टैर्झणत्कारैः स्वकीयमणिगणसङ्घट्टनजनितसंरटनैः प्रतिवचनमाचष्ट इव प्रत्युत्तरं दत्त इव । प्रथमप्रश्नवचनसमनन्तरसदुत्तरप्रदानसमं शोभते इति सूचितं भवति । सरस्वतीसूक्तेः कलमधुरत्वात् कुण्डलगणझणत्काराणामपि माधुर्ये सति, तयोः संवादार्थसाम्यमस्तीति भावः ॥ ६० ॥

### गोपालसुन्दरी

**सरस्वत्या इति** । हे शर्वाणि! सरस्वत्याः सूक्तीः गद्यपद्यरूपाः श्रवणचषकाभ्या-मविरतं पिबन्त्यास्ते तव कुण्डलगणः, तारैरुद्भटैः रणत्कारैः शब्दविशेषैः प्रतिवचनं प्रत्युत्तर-माचष्ट इव वदतीव । सूक्तीः कीदृशीः, अमृतलहरीकौशलहरीः अमृतलहरीणां सुधातरंगाणां कौशलं माधुर्यं हरन्तीः न्यूनं कुर्वन्तीः इत्यर्थः । तव कीदृश्याः, चमत्कारेण या श्लाघा साधुवादोत्सुकता अथवा चमत्कारस्य या श्लाघा साधूक्तिः, तया चलितं कंपितं शिरो यस्या इत्यर्थः । विष्णुपक्षे—शर्वस्य शिवस्य अनः प्राणनं जीवनमाकाशरूपं विद्यते यत्र तत् शर्वाणि, श्रवणं कर्णाः, तद्रूपाभ्यां चषकाभ्यां पानपात्राभ्यां ते तव सूक्तीः पिबन्त्याः सरस्वत्याः कुण्डलगणो रणत्कारैः प्रतिवचनमाचष्ट इवेत्यर्थः ॥ ६० ॥

### आनन्दलहरीटीका

**सरस्वत्या इति**—हे शर्वाणि भवानि, सरस्वत्याः सूक्तीः शोभना उक्तीः स्तुतिरूपाः श्रवणौ कर्णाविव चषके पानपात्रे ताभ्यां अविरलं निरन्तरं पिबन्त्याः आस्वादयन्त्यास्ते तव

कुण्डलगणः कर्णभूषणसूक्ष्मकुण्डलविशेषसमूहः तारैरुच्चतरैः झणत्कारैः शब्दविशेषैः प्रतिवचनं प्रत्युत्तरं आचष्टे कथयतीवेत्युत्प्रेक्षा । सूक्तीः कीदृशीः, अमृतस्य लहरीणां तरंगाणां कौशलहरीः माधुर्यरूपशिल्पापहारिणीः ते त्वया सरस्वत्याः साधुवादे कर्णभूषणैः प्रथमत एव साधुवादः कृत इति भावः । चषकाभ्यामित्यत्र चुलुकाभ्यामिति पाठे गण्डूषाभ्यामित्यर्थः । चषकोऽस्त्री पानपात्रमित्यमरः ॥ ६० ॥

**असौ नासावंशस्तुहिनगिरिवंशध्वजपटि**
**त्वदीयो नेदीयः फलतु फलमस्माकमुचितम् ।**
**[1]वहत्यन्तर्मुक्ताः शिशिरकरनि[2]श्वासगलितं**
**समृद्ध्या [3]यत्तासां बहिरपि च मुक्तामणिधरः ॥ ६१ ॥**

*அஸௌ நாஸாவம்சஸ் துஹிநகிரிவம்ச த்வஜ படி*
*த்வதீயோ நேதீய: பலது பலமஸ்மாகமுசிதம் ।*
*வஹத்யந்தர் முக்தா: சிசிரகர நிச்ச்வாஸ கலிதம்*
*ஸம்ருத்த்யா யத்தாஸாம் பஹிரபி ச முக்தா மணிதர: ॥*

कोमल वंशनली सी नासा हिमगिरि कुलकीर्तिपताके!
तेरी हमें प्रदान करे समुचित फल अधिक निकट वाके ।
भीतर धरती है मोती, जो विधु नाडीनिश्वासों से
झड पडते हैं बहुशः नासाग्र को सजा मुक्ताओं से ॥

### लक्ष्मीधरा

असौ परिदृश्यमानः, नासावंशः नासा नासिका वंशः वंशदण्डः रूपकमेतत् । तुहिनगिरिवंशध्वजपटि! तुहिनगिरेः हिमाचलस्य वंशस्य अन्वयस्य ध्वजपटि पताके! त्वदीयः भवदीयः, नेदीयः सन्निकृष्टतरं, फलतु निष्पादयतु । फलं इष्टार्थं, अस्माकं मत्सम्बन्धिनां मम चेत्यर्थः । उचितं क्रियाविशेषणमेतत् यथेप्सितं, वहति धारयति । अन्तः अभ्यन्तरे, मुक्ताः मुक्तामणीन् शिशिरकरनिश्वासगलितं शिशिरकरः चन्द्रः तस्य निश्वासो वामनाडी-

1 वहन्नन्तर्मुक्ताः, 2 शिशिरतरनिश्वासविदिताः, शिशिरतरनिश्वासघटिताः, शिशिरतर-निश्वासजनिताः 3 यत्तासां

मार्गवायुः तेन गलितं सुतं, समृद्धया आधिक्येन, यत् यस्मात्कारणात्, तासां मुक्तानां, बहिरपि च बाह्यप्रदेशेऽपि नासिकाग्रत्रामभागेऽपीत्यर्थः। नासिकाकारितो वंशदण्डः मुक्तामणिधरः मुक्तामणिं धृतवान्। 'मुक्तामणिमधात्' इति सम्यक्पाठः। अत्रेत्थं पदयोजना— हे तुहिनगिरिवंशध्वजपटि! त्वदीयोऽसौ नासावंशः अस्माकं उचितं नेदीयः फलं फलतु। सः अन्तः मुक्ताः वहति। यद्यस्मात्कारणात् तासां समृद्धया शिशिरकरनिश्वासगलितं बहिरपि च मुक्तामणिधरः। अत्र नासिकायाः वंशत्वारोपणात् रूपकम्। वंशत्वसाधकप्रतिपादकं उत्तरार्धम्। वंशगर्भे मौक्तिकानि उद्भवन्तीति लोकशास्त्रमर्यादा। अतो नासावंशदण्डेऽपि अभ्यन्तरे मौक्तिकान्युद्भूतानि वर्तन्ते। नो चेन्नासादण्डस्य बहिः मुक्तामणिधरत्वं कथं सङ्घटत इत्यर्थापत्त्या वंशदण्डाकारो नासिकायाः समर्थित इति रूपकमेव सम्यक्॥ ६१॥

### सौभाग्यवर्धनी

असाविति—हे हिमगिरिवंशध्वजपटि! हिमवंशशब्दः श्लिष्टः, हिमवंशदण्डे ध्वजपटी, ध्वजपताकेत्यर्थः। असौ नासावंशस्त्वदीयः, अस्माकं नेदीयः फलं निकटगतं फलं उचितं फलतु। तव चरणभक्तिभावसदृशं दातुमुद्युक्तं भवतु। वहन्नन्तर्मुक्ताः सुषिरान्तर्मौक्तिकानि दधानः शिशिरतरनिश्वासघटिताः शीतलतरनिश्वासप्रेरिताः समृद्धया यस्तासां बहुत्वेन बहिरपि च मुक्तामणिधरः, अन्तः समृद्धानां मुक्तानां मध्यत उत्सिक्तमेकं बहिर्निर्गतं निश्वासावरुद्धनासाग्रावलम्बि तिष्ठतीति भावः। अत्र स्वभावसिद्धनासाभरणमुक्ताफलमपह्नुत्य अन्यथासिद्धत्वकल्पनात् अपह्नुतिः। कार्येण बहिःस्थितमुक्ताफलेन कारणभूतानां मुक्ताफलानां अन्तः समृद्धिरनुमीयत इत्युपमालङ्कारः॥ ६१॥

### अरुणामोदिनी

नासां वर्णयति—असाविति। हे तुहिनगिरिवंशध्वजपटि! तुहिनगिरिवंशस्य हिमवदन्वयस्य ध्वजपटी, कीर्तिप्रख्यापनमङ्गलवैजयन्ती, चीनांशुकपट्टिके! असौ, अविद्यमानसौन्दर्योपमितिः अतिप्रसिद्धः तव नासावंशः। कोमलवंशरूपेण ऋजुरमणीयतया ललाटोल्लम्बितरूपत्वात्, वंशसाधर्म्यम्। अस्माकं नेदीयः अन्तिकवर्ति, उचितं त्वद्भक्तेः मम च भक्तस्य समुचितं फलं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थलाभरूपं प्रयोजनं, फलतु संपादयतु। वंशकाण्डस्य फलवत्त्वनियमात् कविसमये प्रसिद्धिरस्त्येव। वंशकाण्डान्मुक्तोत्पत्तिः तादृशदेशकालविशेषसंसिद्धिसंभव इति तं प्रमाणीकुर्वन् कविरपि वंशस्तंबान्मुक्ताप्रसूतिमाचष्टे। तव नासावंशे मुक्ताप्रसूतिरस्तीति प्रत्यक्षमेवात्र प्रमाणम्। शिशिरतरनिश्वासजनिताः शिशिरतरेण शीतलेन निश्वासेन श्वसितपवनेन जनिताः संपादिताः तद्रूपिणीरभ्यन्तरमुक्ताः वहन् अयं नासावंशः

तासामभ्यन्तरे वर्तमानानां निश्वासरूपिणीनां देवतानुभावसंपन्नमुक्ताभावानां समृद्ध्या यो नासावंशः, बहिरपि बहिर्देशेऽपि नासाग्रमौक्तिकव्याजेन मुक्तामणिधरो मुक्तामणिं प्रसूतमङ्कं धारयन्निव वर्तते। स नासावंशोऽस्माकं फलमुचितं ददात्विति पूर्वेण संबन्धः॥ ६१॥

आनन्दगिरीया

**असौ नासावंश** इति। हे तुहिनगिरिवंशध्वजपटि, त्वदीयोऽसौ नासावंशः अस्माकमुचितं फलं फलतु। तुहिनगिरिः हिमगिरिः, तस्य वंशः, तत्र ध्वजपटी। वंशशब्दे श्लेषः। वंशः कुलं वंशो वेणुदण्डः। प्रायेण ध्वजपटी वेणुदण्डध्वजे बध्यते। अथ च तुहिनगिरिकुलालङ्करणकीर्तिपताकोज्ज्वलपटि! त्वया पुत्र्या तुहिनगिरेः कुलं सत्कीर्तिमत्, त्वया प्रकाशितमिति भावः। तव नासावंशस्तु रमणीयतया भासमानो नासादण्डोऽस्माकं उचितं सारस्वतसार्वभौमपदवीरूपं फलं नेदीयः निकटं फलतु। तथा च यथा परमेश्वरनिश्वासाद्वेदा निर्गतास्तथा तव नासावंशनिश्वासमात्रेणास्माकं वाग्विलासः समुज्जृम्भतामिति। अथवा वंशः काण्डः, स चाग्रे फलं ददात्येव, सर्वत्र वृक्षादौ दर्शनात्। अथवा तवोचितं स्वात्मसदृशं विविधभोगप्रदं सर्वपुरुषार्थस्वरूपं सायुज्यम्। अथवा किंलक्षणो नासावंशः, अन्तर्मुक्तावत्, अन्तर्मध्ये मुक्ता मौक्तिकानि दधानः, किंलक्षणा मुक्ताः शिशिरतरनिश्वासघटिताः परमशीतलनिश्वासपरंपरारूपाः। तथा च अन्तर्मुक्ताः अन्तःस्थापिता या.. मुक्ता इव वहन्, शिशिरतराः शीतला उज्ज्वला मुक्ता अपि तथैवेति सादृश्यं शब्दबलेनाह—यः तासां मुक्तानामन्तःसमृद्ध्या आधिक्येन बहिरपि मणिरूपमुक्ताधरो भवति। यस्यान्तर्भूयसी समृद्धिरस्ति, स बहिरपि तल्लेशं दधाति। श्वासावरुद्धनासालग्नं मुक्ताफलं वीक्ष्योत्प्रेक्षते। अन्तर्वर्तमानमुक्ताप्रकरात् निःश्वासमार्गेण बहिरागतमेवेदं मौक्तिकं नासावंशो धत्ते। तेनानुमीयते अन्तर्बहूनि सन्तीति। अनुमानालङ्कारः। स्वभावसिद्धं नासालङ्कारभूतं मौक्तिकमपह्नुय सैकदेशत्वप्रतिपादनया अपह्नुतिरपि। असौ नासावंश इति पद्यरहस्यार्थः—उत्तराम्नायकालीमाह—असौ स वंशः ख तुहि ह न फ्रे गिरि रेफः पट ए ध्वजपटे पाठ निर्णयः। नो चेत् तदीय एकारस्तदा बोद्धव्यः। अस्माकं महा चित च अन्तर्हत ण्डय यो मुक्ता ये गे श्वास मणिधर विधेति नवाक्षरी। स्ह्ख्फ्रें ह्स्ख्फ्रूं महाचण्डयोगेश्वरि। उत्तराम्नायः। (ह्स्ख्फ्रें महाचण्डयोगीश्वरि कालिके फट्। उत्तराम्नायसमयविधेश्वरी कालिका)॥ ६१॥

तात्पर्यदीपिनी

**असाविति**। हे तुहिनगिरिवंशध्वजपटि, तुहिनस्य हिमस्य गिरिः, तस्य वंशः कुलं तत्र ध्वजपटी ध्वजपताका तत्संबुद्धिः, त्वदीयोऽसौ नासावंशः अस्माकमुचितं त्वद्भक्तेर्मम

भक्तस्य च समुचितं फलं धर्मार्थकाममोक्षरूपं प्रयोजनं फलतु संपादयतु। कीदृशो नासावंशः, नेदीय इष्टतरः उत्तर इति यावत्। असौ कः, यो मुक्ता मुक्ताफलान्यन्तः वहति धारयति। कथं ज्ञायते मुक्ता वहतीति, तत्र ज्ञापकमाह—किंविधा मुक्ताः शिशिरतरनिश्वासविदिताः अतिशयेन शिशिरः शीतलो यो निश्वासः तेन विदिता ज्ञाताः। मौक्तिकसंपर्काच्छिशिरतरो निःश्वासो भवति। पुनर्यद्यस्मात्कारणात्तासां मुक्तानां समृद्ध्या बहिरपि च मुक्तामणिधरः, मुक्तामणिं धरतीति तथा। अत्र नासिकायां वंशत्वारोपाद्रूपकम्। वंशत्वसाधकप्रतिपादकम्। नासिकावंशदण्डेऽपि अभ्यन्तरे मौक्तिकान्यद्भुतानि वर्तन्ते। नो चेन्नासावंशदण्डस्य मुक्तामणिधरत्वं कथं संपद्यते इत्यथाह। वंशदण्डाकारो नासिकायाः समर्पित इति रूपकमेव सम्यक्॥

## पदार्थचन्द्रिका

नासिकां वर्णयंस्ततः फलं प्रार्थयते। असाविति। तुहिनानि हिमानि तत्प्रचुरो गिरिः, तस्य वंशः सन्ततिः, तस्मिन् ध्वजपटी, पताकेव शोभमाना भवानी तत्संबोधनं तथा। असौ नासावंशः फलं फलतु जनयत्वित्यन्वयः। नासा वंश इवेति नासावंशः उच्चत्वसाम्यात्। नेदीयो निकटवर्ति। आत्मानं सबहुमानमाह अस्माकं परिव्राजकानां उचितं योग्यं फलं अज्ञाननिबन्धनसंसारनिवृत्तिलाभमित्यर्थः। तच्छब्दवददःशब्दोऽपि यच्छब्दमपेक्षत इति अदःशब्दवाच्यं नासावंशमुत्प्रेक्षमाणो विशिनष्टि—योऽन्तर्मध्ये मुक्ताः शिशिरतरैः निश्वासैः घटिता निर्मिता वहन् बिभ्रत्। तासां मुक्तानां समृद्ध्या आधिक्येन, बहिरपि मुक्तामणिधर इत्युत्प्रेक्षा। फलं जातीफले पुष्पहेतुत्वे वृष्टिभाग्ययोरिति मेदिनीकरः॥ ६१॥

## डिण्डिमभाष्यम्

तुहिनगिरिवंशस्य हिमवदन्वयस्य ध्वजपटि कीर्तिप्रख्यापनमङ्गलवैजयन्तीचीनांशुकपटीके। असावविद्यमानसौन्दर्योपमितिरतिप्रसिद्धः। तव नासावंशः। कोमलवंशरूपेण ऋजुरमणीयतया ललाटलम्बित्वात् वंशसाधर्म्यम्। अस्माकं नेदीयः अन्तिकं, उचितं त्वद्भक्तेः मम च भक्तस्य समुचितं, फलं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थलाभरूपं प्रयोजनं फलतु संपादयतु। वंशकाण्डस्य फलवत्त्वनियमात् कविसमये प्रसिद्धिरस्ति, वंशकाण्डान्मुक्तोत्पत्तिः, तादृशदेशकालविशेषसन्निधिसंभव इति, तं प्रमाणीकुर्वन् कविरपि वंशस्तम्बान्मुक्ताप्रसूतिं आचष्टे। तव नासावंशे मुक्ताप्रसूतिरस्तीति प्रत्यक्षमेव प्रमाणम्। शिशिरतरनिश्वासजनिताः शिशिरतरेण शीतलेन निश्वासेन श्वसितपवनेन जनिताः संपादिताः तदभ्यन्तरे मुक्ता वहन् अयं नासावंशः तासां अभ्यन्तरे वर्तमानानां निश्वासरूपिणीनां देवतानुभावसंपन्नमुक्ताभावानां

समृद्धया यो नासावंशो बहिरपि बहिःप्रदेशेऽपि नासाग्रमौक्तिकव्याजेन मुक्तामणिधरः मुक्तामणिं प्रसूतमङ्गे धारयन्निव वर्तते। स नासावंशोऽस्माकं फलमुचितं दधात्विति पूर्वत्र संबन्धः ॥ ६१ ॥

गोपालसुन्दरी

असाविति। हे तुहिनगिरिवंशध्वजपटि, तुहिनगिरिः हिमालयः, तस्य वंशोन्नयनरूपः स एव वंशः, तद्रूपो यो ध्वजः तस्य पटि पताके, त्वदीयोऽसौ नासावंशोऽस्माकं नेदीयो निकटवर्ति समुचितं त्वद्भक्तियोग्यं फलं फलतु। देशविशेषे वंशान्मुक्तोत्पत्तिरिति कविसंप्रदायमनुस्मरन्नाह—अन्तः अभ्यन्तरे शिशिरतरेण शीतलेन निश्वासेन घटितानि निर्मितानि, विदिता इति पाठे ज्ञाताः, मुक्ताः वहन्नासावंशः तासां मुक्तानां समृद्धया संपत्त्या बहिरपि बहिःप्रदेशेऽपि नासाग्रमौक्तिकव्याजेन मुक्तामणिधरो मुक्तामणिधारकः। विष्णुपक्षे—नासावंशः कीदृशः, तुहिनगिरिवंशध्वजपटी गौरीरूपोऽस्यास्तीति तुहिनगिरिवंशध्वजपटी महादेवः, तस्य भावः तुहिनगिरिवंशध्वजपटित्वं तद्ददातीति तुहिनगिरिवंशध्वजपटित्वदः शिवसायुज्यदो विष्णुः तदीयः तत्संबन्धी। शेषं समानम्। 'नासाग्रे गजमौक्तिकं करतले वेणुं करे कङ्कणम्' इत्यादि गोपालध्यानात् नासाग्रमौक्तिकवर्णनमुपपन्नम्। ६१ ॥

आनन्दलहरीटीका

असाविति। हे तुहिनगिरेर्हिमालयस्य यो वंशः कुलं स एव ध्वजः पताकादण्डः तस्य पटी भूषणीभूतपताकारूपे, असौ त्वदीयो नासारूपो वंशः अस्माकमुचितमिष्टं नेदीयः आसन्नं फलं पुरुषार्थं, वंशपक्षे बीजं च फलतु जनयतु। वंशसाधर्म्यमाह—अन्तर्मध्ये मुक्ता वहन्धारयन्। तत्र प्रमाणमाह—शिशिरतरैरतिशीतैः निश्वासैर्विदिता अनुमिताः। निश्वासानां शैत्यविशेषो मुक्तासंयोगानुमापक इति भावः। विदिता इत्यत्र घटिता इति पाठे संघटिताः संभाविता इत्यर्थः। यद्यस्मात्तासां मुक्तानां समृद्धया बाहुल्येन बहिरपि भूषणवान् मुक्तामणिधरः, वंशस्य मुक्तोत्पत्तिस्थानत्वादिदमुक्तम्। क्वचित्पुस्तके निःश्वासगलितमिति च पाठस्तिष्ठति। तत्र वहतीत्यनेनान्वयः ॥ ६१ ॥

**प्रकृत्या रक्तायास्तव सुदति दन्तच्छदरुचेः**

**[1]प्रवक्ष्ये[2] सादृश्यं जनयतु फलं विद्रुमलता।**

---

1 बराकी सादृश्यं कलयतु कथं विद्रुमलता। 2 परोक्षे।

न[3] बिम्बं तद्बि[4]म्बप्रतिफलनरा[5]गादरुणितं
तुलामध्यारोढुं कथमिव [6]विलज्जेत कलया ॥ ६२ ॥

ப்ரக்ருத்யா ரக்தாயாஸ் தவ ஸுததி தந்தச்சதருசே:
1 1 1 11 1 3 1 3 1 2 3 1
ப்ரவக்ஷ்யே ஸாத்ருச்யம் ஜநயது பலம் வித்ருமலதா ।
1 3 1 2 3 1
ந பிம்பம் தத்பிம்ப ப்ரதிபலன ராகாதருணிதம்
3 3 1 3 3 3 1 1 2 3 3 1
துலாமத்த்யாரோடும் கதமிவ விலஜ்ஜேத கலயா ॥
1 3 4 4 1 2 1 1

सहजारुण तेरे ओठों की सुदति कर सकेगी समता
फल विद्रुमलतिका का ही यदि हो तो, और न कुछ जमता।
जिन के प्रतिफलन से 'बिम्ब' कहलानेवाला बिम्बीफल
सोलहवां अंश भी न टिकनेवाला तुलना में कटुफल
लज्जित क्यों न बनेगा उन ओंठों की समता करते खल।

लक्ष्मीधरा

प्रकृत्या स्वभावेन, आरक्तायाः आताम्रायाः, तव सुदति शोभनाः दन्ताः यस्याः तस्याः संबुद्धिः। दन्तच्छदरुचेः दन्तच्छदयोरोष्ठयोः रुचेः सौभाग्यस्य, प्रवक्ष्ये प्रकर्षेण कथये। सादृश्यं सदृशस्य भावः सादृश्यं, जनयतु उत्पादयतु। आशंसायां लोट्। विद्रुमस्य फलं यदि स्यात् तदा सदृशवस्तुसद्भावः न तु विद्रुममात्रं सदृशमिति। फलं पक्वफलं, पीतवर्णाभ्यो लताभ्यः उत्पन्नं फलं अतिरक्तं, रक्तलतोत्पन्नस्य रक्तिमा किमु वक्तव्य इति तदेव सदृशमिति तात्पर्यम्। विद्रुमलता प्रवाललतिका। न बिम्बं बिम्बफलं तद्बिम्बप्रतिफलनरागात् तयोः दन्तच्छदयोः बिम्बस्य प्रतिफलनं प्रतिबिम्बनं तेन रागः रक्तिमा तस्मात्। बिम्बफलमिति व्यवहारः अधरबिम्बप्रतिबिम्बप्रसादासादितः, अन्यथा तस्य बिम्बव्यवहारो न स्यात्, यथा स्फटिकादौ जपाकुसुमादेः प्रतिबिम्बवशादेव स्फटिकादीनां रक्तता एवं बिम्बफलस्यापीति। तद्बिम्बप्रतिफलनरागात्, अरुणितं तुलामध्यारोढुं तुलायां साम्यकथायां स्थातुं कथमिव। इवेति वाक्यालङ्कारे। विलज्जेत व्रीडेत, कलया लेशेन। अत्रेत्थं पदयोजना— हे सुदति! तव प्रकृत्या आरक्तायाः दन्तच्छदरुचेः सादृश्यं प्रवक्ष्ये। विद्रुमलता फलं जनयतु। बिम्बं पुनः तद्बिम्बप्रतिफलनरागादरुणितं कलयापि तुलामध्यारोढुं कथमिव न विलज्जेत।

---

3 क। 4 दर्बिम्ब, त्वद्बिम्ब, क बिम्ब। 5 लाभाद। 6 न लज्जेत।

लज्जधातुरात्मनेपदी। अत्रातिशयोक्तिरलङ्कारः, यद्यर्थोक्तौ कल्पनात्। द्वितीयार्धे असम्बन्धे सम्बन्धनिबन्धनातिशयोक्तिः, बिम्बप्रतिफलनासम्बन्धेऽपि सम्बन्धकथनेनाभेदकथनात्। उभयोरसंसृष्टिः ॥ ६२ ॥

## सौभाग्यवर्धनी

प्रकृत्येति। हे सुदति। प्रकृत्या रक्तायाः स्वभावारुणायाः तव दन्तच्छदरुचेः अधरकान्तेः सादृश्यं प्रवक्ष्ये विद्रुमलता तर्हि फलं जनयतु उत्पादयतु। बिम्बं क्व? बिम्बसादृश्यमुच्यतामिति चेन्न, क्व बिम्बं दृग्बिम्बप्रतिफलनलाभादरुणितम्। दृग्बिम्बः सूर्यबिम्बः, तस्य प्रतिफलनं, तस्य लाभादरुणितम्। तव नयनीभूतबिम्बसूर्यकान्तिप्रतिबिम्बसंजातपाकेनारुणितमित्यर्थः। कलयापि तुलां समतां अध्यारोढुं कथमिव न लज्जेत। त्वद्बिम्बप्रतिफलनलाभादिति पाठान्तरम्। तव कान्तिप्रसारप्रतिबिम्बवशादित्यर्थः। भगवत्याः कान्तेः जगत्प्रसारित्वात् बिम्बच्छदेऽपि प्रतिबिम्बः कान्तेरित्यर्थः। अत्र विद्रुमलता चेत् फलं जनयत्विति अन्वयमुखेन कालत्रयेऽपि विद्रुमलता फलं न जनयति। नापि दन्तच्छदस्याहं सादृश्यं वक्ष्य इति व्यतिरेकः। बिम्बं च तुलामध्यारोढुं कथमिव न लज्जेत। अपि तु लज्जेतैवेति व्यतिरेकमुखेनानन्वये विश्रान्तिः। तस्मात् दन्तच्छदस्योपमा नास्ति। तव दन्तच्छदस्य तव दन्तच्छद एव सदृशः। यथा—'गगनं गगनाकारं सागरः सागरोपमः। रामरावणयोर्युद्धं रामरावणयोरिव' इति। तस्मादुपमानान्तरसंबन्धाभावात् अनन्वयालङ्कारो ध्वनितः। ६२ ॥

## अरुणामोदिनी

दन्तच्छदं स्तौति—प्रकृत्येति, प्रकृत्या स्वभावतः, रक्ताया अरुणायाः न त्वारोपितरक्तिमवत्याः। प्रकृत्यादिभ्य उपसंख्यानमिति। तस्याः तव भवत्या दन्तच्छदरुचेः अधरशोभायाः सादृश्यं सारूप्यं उपमां प्रवक्ष्ये वदितुं शक्नोमीत्यर्थः। कथं चेत्, ... विद्रुमलता रक्तरूपा प्रवालवल्ली फलं स्वानुरूपं रक्तमेव फलं जनयतु उत्पादयतु। आशंसायां लोट्। प्रवाललतायां स्वसदृशफलोत्पत्तिर्भवेच्चेत्, तदा रक्तवर्णभवदधरोष्ठस्य साम्यं वदामीत्यतिशयोक्तिविशेषोऽलङ्कारः। न च वाच्यं, एवं बिम्बफलस्य उपमानीकरणार्हस्य विद्यमानत्वादित्यत्राह—तव भवत्या बिम्बस्य रक्तवर्णस्य शरीरबिम्बस्य यत्प्रतिफलनं संक्रमणं, तस्माद्यो रागः रक्तिमा, तेनारुणितं रक्तीकृतं शोणवर्णीकृतमित्यर्थः। 'यानि सौम्यानि शोणानि शृङ्गाररसभाञ्जि च। तान्याहुः शक्तिपातेन संपन्नानीति निश्चयः ॥' इति वचनादिति भावः। दृग्बिम्बे इति पाठे दृग्बिम्बस्य नेत्रीभूतसूर्यबिम्बस्य प्रतिफलनेन पाचनेन यो रागः, तस्मादरुणितांशलाभावस्थायां रक्तिमाभावादिति भावः। त्वद्बिम्बे इति पाठे बिम्बं बिम्बिकाफलं प्रतिफलनरागात् अरुणितं रक्ती-

कृतम्। अत एव बिंबप्रथाऽस्येति हृदयम्। तत्सादृश्यं नार्हतीत्यर्थः। देवीशरीरबिम्बादनन्यत्वादिति भावः। बिम्बं सादृश्यं नार्हति। यतः त्वद्बिम्बप्रतिफलनरागादरुणितमिति योजना। अत एव तस्या दानेन साम्याकांक्षणमप्यसंभावितमित्याह—तुलामिति। अतो बिम्बं सर्वासां नारीणामधरसाम्येन कविभिर्वर्ण्यमानमुपमानीभावगर्वितं चेत्यर्थः। कथमिव न लज्जेत? कुतो वा न व्रीडेत्? अत्यल्पस्तु तुलामवाप्तुमुत्कटेन ... णो भवतीति भावः। अत्र बिम्बे रागारुणितत्वोत्प्रेक्षान लज्जेतेत्यतिशयोक्तिभ्यां देव्यधरोष्ठस्य निरुपमतासिद्धेरनन्वयो व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः। ६२॥

## आनन्दगिरीया

प्रकृत्या रक्ताया इति। हे सुदति तव दन्तच्छदरुचेः, दन्तच्छदोऽधरः, तस्य रुचिः कान्तिः, तां किंसादृश्येन वर्णयामः? ननु वर्तते विद्रुमलतेति चेत्तत्राह—विद्रुमलता फलं जनयतु, पश्चात्सादृश्यं वक्ष्ये। अधरस्तु सफलो विद्रुमस्तु निष्फल इति नास्ति सादृश्यम्। अथ पक्वबिम्बं चेत्तदपि नेत्याह—क्व बिम्बं, दूरतः प्रत्यस्तमिति। यतस्त्वद्बिम्बं त्वच्छरीरकान्तिसमूहः तस्य प्रतिफलनं प्रतिबिंबग्रहणं तस्य लाभादरुणितं, तवारुणकान्तिप्रतिफलनादरुणम्। तथा च स्वभावतः श्वेतं, तवाधरस्य अपि तुलामारोढुं कथमिव न लज्जेत? अपि तु लज्जेतैव। तेन त्रिभुवने तवाधरोपमा नास्तीति। स्वात्मसादृश्येनानन्वयाकारेणाभूतोपमया वर्णनीय इति। क्व बिम्बं त्वद्बिम्बप्रतिफलनरागादरुणितमिति क्वचित्पाठः। तदा तव यत् त्वद्बिंबं सूर्यस्तस्य प्रतिफलनं सौरप्रभाविस्तारः, तत्संबन्धेन जातपरिपाकतया अरुणितं, न तु स्वभावत इति व्याख्यानम्। प्रकृत्या रक्तस्येति पद्यरहस्यार्थः—प्रकृत्येति। प्रकृत्या रक्ता लज्जा, दन्तच्छद ऐं लज्जेत पार्श्वयोर्लज्जा। अयं वाक्त्रिपुरामनुः। ह्रीं ऐं ह्रीम्॥ ६२॥

## तात्पर्यदीपिनी

प्रकृत्येति। हे सुदति, शोभना दन्ता यस्याः सा तथोक्ता तत्संबुद्धिः, शोभनदन्ते तव दन्तच्छदरुचेः दन्तयोश्छदावोष्ठौ तयोः रुचेः सौभाग्यस्य सादृश्यं साम्यं तदा प्रवक्ष्ये प्रकर्षेण कथये। तदा कदा? यदा विद्रुमलता प्रवालवल्ली फलं जनयति। विद्रुमलतासु न फलोदयः, अतो हेतोः तासु न तवाधरसाम्यमिति। कीदृश्या दन्तच्छदरुचेः, प्रकृत्या रक्तायाः स्वभावतः शोणायाः। ननु बिम्बस्याधरस्य च साम्यं वर्णितमप्यस्ति। तत्रानुचितं वर्णयितुमित्याह—बिंबं बिंबीफलं कलया एकदेशेनापि, तुलामप्यारोढुं, कथमिव महता क्लेशेनापि न लज्जेत लज्जां नाप्नोतीति न, अपि तु प्राप्नोत्येव। त्वद्बिम्बप्रतिफलनरागादरुणितं, तयोर्दन्तच्छदयोर्बिंबस्य मण्डलस्य, प्रतिफलनं प्रतिबिंबनं, तेन रागस्तस्मादरुणितं, तस्मात्

बिम्बफलमिति व्यवहारः अधरबिंबप्रतिबिंबप्रसादादासादितः, अन्यथा तत्र बिंबव्यवहारो न स्यात् । तथा स्फटिकादौ जपाकुसुमप्रतिबिंबवशादेव स्फटिकादीनां रक्तता । एवं बिंब-फलस्यापीति ॥ ६२ ॥

### पदार्थचन्द्रिका

अथ क्रमप्राप्तमधरवर्णनमाह – प्रकृत्येति । शोभमाना दन्ता यस्याः सा सुदती, तत्संबोधनं हे सुदति, तव दन्तच्छदरुचेः वराकी तुच्छा विद्रुमलता सादृश्यं कथं कलयतु प्राप्नोतु । वराकीत्यत्र परोक्षे इति पाठे अपरोक्षे त्वद्दन्तच्छदरुचिप्रतिहतरुचेः विद्रुमलतायाः सादृश्यलाभोऽसंभावित एवातः परोक्षेऽपीत्यर्थः । सादृश्याकलने हेतुं वक्तुं दन्तच्छदं विशिनष्टि – प्रकृत्या स्वभावत एव रक्तायाः विद्रुमलतायास्त्वद्बिंबप्रतिफलनलाभादारक्तेति भावः । तथाविधं बिम्बं त्वद्दन्तच्छदरुचेः तुलामध्यारोढुं प्राप्तुं कथमिव न लज्जेत नेति द्वौ नञौ प्रकृतमर्थं गमयत इति न्यायेन लज्जेतैवेत्यर्थः । कलया षोडशांशेन । तत्र हेतुं वदन् बिम्बं विशिनष्टि – त्वद्बिंबं त्वन्मूर्तिः तत्प्रतिफलनलाभात् तत्संक्रमलाभादरुणितं, न तस्य स्वाभाविकोऽरुणिमेति भावः । कथमपि विलज्जेतेति पाठे शिरश्चालनेन व्याख्येयम् ॥ ६२ ॥

### डिण्डिमभाष्यम्

हे परमेश्वरि, प्रकृत्या स्वभावतो रक्तायाः अरुणवर्णायाः दन्तच्छदरुचेः शोभायाः सादृश्यमुपमानं, हे सुदति, तदा प्रवक्ष्ये निवेदयिष्यामि, यदा कदाचित् विद्रुमलता फलं जनयतु । विद्रुमस्य स्वभावतो रक्तस्य यदि फलजननं भविष्यति, तत्रापि परिपाकेन अतिशयितपाटलकान्तिः भविष्यति, तदैव उपमानं वक्तुं सुकरं नान्यथेत्यर्थः । मध्ये शङ्का ननु सर्वस्त्रीणामधरकान्तेः उपमास्थानं अतिमृदुलस्पर्शं अत्यरुणिमसंपदवस्थानभूतं अखिलेभ्यः फलेभ्योऽप्यतिप्रेक्षणीयकान्तिभरितं बिंबफलं वर्तते खलु । तेन समं कथं बिंबा-धरोपमानसिद्धिः न स्यात्? किमर्थं वा अविद्यमानफलात् फलोत्पत्तिः, विद्रुमोपमितिद्वारा अभूतपूर्वोपमाश्रयणकार्पण्यवैशसमङ्गीक्रियते इत्याशङ्कायामाह–न बिम्बमिति । बिम्बं तावदुप-मास्पदं न भवतीत्यर्थः । कुत इत्याह – त्वद्बिम्बप्रतिफलनलाभादरुणितं, तव बिम्बस्य शरीरस्य प्रतिफलनलाभात् संक्रान्तिलाभादरुणितम् । अत्र फलनं नाम शक्तिपातः । स खलु सर्व-व्यापिन्याः पराशक्तेः किरणकदम्बकानां तत्तत्पदार्थेषु स्फुरणात्मकः प्रतीयते । यावन्त्येव रक्तद्रव्याणि सौम्यानि प्रेक्षणीयानि, तानि तानि सर्वाण्यपि जगद्व्यापमूर्तेः श्रीललितामहा-भट्टारिकायाः सर्वतः प्रसरतां अरुणिमस्रोतसां प्रतिबिम्बभूतानीत्यागमः । पाटलः खलु वर्णः प्रथमोत्पन्नत्वात् अक्षिरञ्जनकारणत्वात् रजस्तत्वं मुख्यतया उक्तं भगवत्या श्रुत्या । 'अजामेका

लोहितशुक्लकृष्णां' इति, 'रक्तशुक्लवर्णपदद्वन्द्वं' इति च वेदागमयोः प्रथमवर्णनीयत्वं पाटलवर्णस्य। आगमश्चात्र 'यानि सौम्यानि शोणानि शृङ्गाररसभाञ्जि च। तान्यम्ब शक्तिपातेन संपन्नानीति निश्चयः।' प्रवालेषु रक्तोत्पलेषु कुसुम्भेषु कुंकुमेषु कमलेषु बालादित्येषु तडित्सु वह्निशिखासु सन्ध्यासु सिन्दूरेष्वन्येषु एतादृशेषु माङ्गलिकसौन्दर्यमङ्गलाकारेषु पदार्थेषु भगवत्याः प्रतिफलनं शक्तिपात इति सकलागमनिश्चितोऽर्थः। अत एव त्वच्छरीरकिरणसंपन्नशक्तिपातमात्रपरिपाटलकान्तिना बिम्बेनापि तवाधरस्य तुलासिद्धिर्नास्त्येव। तत्कुतो हेतोः, त्वच्छक्तिपातसौन्दर्यसंपन्नं त्वत्तो लब्धजीवितं बिम्बफलं पुनः त्वदधरकान्त्या सह उपमानसिद्धिसहचरीं स्पर्धां कर्तुं, अत एव तद्द्वारा तुलामध्यारोढुं कलयापि लेशांशस्पृष्टिकयापि कथं न लज्जेत, अपितु लज्जेतैवेत्यर्थः। अत एव त्वदधरबिम्बमतुलमेव संपन्नमित्यर्थः॥

## गोपालसुन्दरी

प्रकृत्येति—हे सुदति! प्रकृत्या स्वभावेन रक्तायाः लोहितायाः तव दन्तच्छदरुचेः अधरकान्तेः सादृश्यं प्रवक्ष्ये—विद्रुमलता तर्हि फलं जनयतु। प्रवक्ष्य इत्यत्र वराकीति, फलमित्यत्र कथमिति च समीचीनः पाठः। बिम्बं कलया एकदेशेनापि कथमपि कष्टेन तुलामध्यारोढुं न लज्जेत। अपि तु लज्जेतैव। कथमिवेति पाठे इवशब्दो वाक्यालङ्कारे। कीदृशं बिम्बं, त्वद्बिम्बप्रतिफलनलाभादरुणितं त्वन्मूर्तिप्रतिबिम्बवशाद्रक्तम्। दृग्बिम्बप्रतिफलनेति क्वचित्पाठः। तत्र दृग्बिम्बः सूर्यः, तस्य त्वद्दक्षिणनेत्ररूपत्वात्। तत्र प्रतिफलनं पाकः तल्लाभादित्यर्थः। विष्णुपक्षे—सुदति शोभनदन्ते, सादृश्यं प्रकृत्या रक्ताया दन्तच्छदरुचेश्च सादृश्यं प्रवक्ष्ये इत्यर्थः। दन्तच्छदारुण्यवर्णनं गोपालसुन्दरीमूर्त्यभिप्रायेण॥ ६२॥

## आनन्दलहरीटीका

प्रकृत्येति। हे सुदति शोभनदन्ति, प्रकृत्या स्वभावेन रक्तायास्तव, दन्तच्छदयोरोष्ठाधरयोः रुचेरतिलौहित्यस्य सादृश्यं, तदहं प्रवक्ष्ये, विद्रुमलता प्रवालमणिमयी लतिका, फलमतिलोहितं कलयतु दधातु। न त्विदं संभवतीत्यभूतोपमा। क्वचिच्च पुस्तके वराकी सादृश्यं फलयतु कथं विद्रुमलतेति द्वितीयचरणपाठः। तत्र वराकी तुच्छेत्यर्थः। ननु बिम्बफलं प्रसिद्धमुपमानमस्ति। तत्राह—तत्प्रसिद्धं बिम्बफलं कर्तृ कलया लेशेनापि तुलां साम्यमध्यारोढुं प्राप्तुं कथमिव न विलज्जेत, अपि तु विलज्जेतैवेति भावः। कुत इत्याह—बिम्बस्य प्रतिफलनं सूर्यमण्डलेन तेजःसंयोगः पाकरूपः, तल्लाभादरुणं रक्तम्। यद्वा तव बिम्बस्य शरीरस्य प्रतिफलनं कान्तियोगः तल्लाभादित्यर्थः। सिन्दूरादिकं यावदरुणं वस्तु, तत्सर्वं सर्वव्यापिकाया

देव्याः कान्तियोगादित्यागमशास्त्रोक्तम्। यथा—'यानि सौम्यानि शोणानि शृङ्गाररसभाञ्जि च। तान्यस्याः शक्तिपातेन संपन्नानीति निश्चयः'॥ इति। शक्तिपातः स्फटिकादौ जपादेरिव स्वधर्मयोग इति भावः। स्वभावतो रक्तायास्तवाधरस्यातिलौहित्यं स्वाभाविकम्। बिम्बं तु स्वभावतः श्यामं पाकादरुणं कथमुपमानं भवितुमर्हतीति। केचित्तु तस्याधरस्य बिम्बप्रतिफलनलाभात् उपमेयतारूपप्रतिबिम्बलाभादरुणितं तुलामध्यारोढुं उपमानतां प्राप्तुमिति व्याचक्षते। न बिम्बमित्यत्र क्व बिम्बमिति, विलज्जेतेत्यत्र न लज्जेतेत्यपि क्वचित्पाठः। तदा क्वशब्दः संभावनायाम्। बिम्बोऽस्त्री मण्डलं त्रिष्वित्यमरः। ६२॥

स्मितज्योत्स्नाजालं तव वदनचन्द्रस्य पिबतां
चकोराणामासीदतिरसतया चञ्चुजडिमा।
अतस्ते शीतांशोरमृतलहरीमाम्लरुचयः[1]
पिबन्ति स्वच्छन्दं निशि निशि भृशं काञ्जिकधिया॥

ஸ்மிதஜ்யோத்ஸ்நா ஜாலம் தவ வதனசந்த்ரஸ்ய பிபதாம்
1 1 1 3 1 3 1 3 1
சகோராணாமாஸீததிரஸதயா சஞ்சுஜடிமா।
1 1 3 1 1 1 1 3
அதஸ்தே சீதாம்சோரம்ருத லஹரீமாம்லருசய:
1 1 1 1 1
பிபந்தி ஸ்வச்சந்தம் நிசி நிசி ப்ருசம் காஞ்ஜிகதியா॥
1 3 1 1 2 3 4 1 1 4

भगवति! तेरे मुखचन्द्र से निकलनेवाली जुन्हरिया
मुस्कानों की पी पी छककर माधुर्यामृत से बढिया
चोंचें रुचि खो बैठी हैं चकोरगण की तब से लेकर
पीने लगे चांद की अमरितकिरनें खट्टी लगने पर
कांजी समझ उन्हें भ्रमवश रातों में चोंचों में भर कर!

लक्ष्मीधरा

स्मितज्योत्स्नाजालं स्मितमीषद्धसितमेव ज्योत्स्ना तस्याः जालं वितानं, तव वदनचन्द्रस्य वदनमेव चन्द्रः तस्य, पिबतां आस्वादयतां, चकोराणां पक्षिविशेषाणां आसीत्

---

1. मम्लरुचयः, भग्नरुचयः।

अतिरसतया अतिमाधुर्यात्, चञ्चुजडिमा जिह्वाजाड्यम् । अतः कारणात्, ते चकोराः, शीतांशोः चन्द्रस्य, अमृतलहरीं अमृतस्य सुधायाः उत्सेकं ज्योत्स्नामृतमित्यर्थः । आम्लरुचयः आम्ले अम्लरसे रुचिर्वाञ्छा येषां ते आम्लरुचयः, पिबन्ति भक्षयन्ति । स्वच्छन्दं यथेच्छं, निशिनिशि प्रतिनिशं ज्योत्स्नास्विति शेषः । भृशं अत्यर्थं, काञ्जिकधिया आरनालभ्रान्त्या । अत्रेत्थं पदयोजना—हे भगवति! तव वदनचन्द्रस्य स्मितज्योत्स्नाजालं पिबतां चकोराणां अतिरसतया चञ्चुजडिमा आसीत्, अतस्ते आम्लरुचयः शीतांशोरमृतलहरीं काञ्जिकधिया स्वच्छन्दं निशिनिशि भृशं पिबन्ति । अत्र अतिशयोक्तिरलङ्कारः, चञ्चुजडिमनिबन्धनज्योत्स्नापानासम्बन्धेऽपि तत्सम्बन्धकथनात् अतिमधुरस्तन्यपानप्रसक्तजिह्वाजाड्यनिबन्धनाम्लपिपासुभिः बालकैरभेदाध्यवसानस्य प्रतीतेः ॥ ६३ ॥

सौभाग्यवर्धनी

स्मितं स्तौति—स्मितेति । तव वदनचन्द्रस्य स्मितज्योत्स्नाजालं, स्मितमेव ज्योत्स्ना, तत्समूहं पिबतां चकोराणां, अतिरसतया अत्यन्तमधुरास्वादनतया, चञ्चुजडिमा चञ्चुगतारोचकत्वं आसीत् । अतस्ते शीतांशोरमृतलहरीं किरणामृतपरंपरां पिबन्ति । स्वच्छन्दं निरर्गलं, यावत्पर्यन्तं चञ्चुजडिम्नो विश्रान्तिस्तावत्, काञ्जिकधिया अम्लधिया । अत्यन्तमधुरपायसादिभोजनेनारोचके जाते सति अम्लभक्षणं विधाय पुनः पायसादि मधुरं भुञ्जते । तथा, अत्र चन्द्रकिरणस्योपमानस्य काञ्जिकत्वदोषारोपेण तुच्छत्वप्रतिपादनात् उपमेयस्य वदनस्योत्कर्षप्रतिपादनादतिशयोक्तिः । तव वदनचन्द्रस्य स्मितज्योत्स्नाजालमिति रूपकद्वयेन तव वदनचन्द्रः सर्वदा पूर्णः, अकलङ्कः, ह्रासहीनः । तादृशस्य स्मितज्योत्स्नाजालं तत्पिबतां चकोराणां चञ्चुजडिमा जातः । तव स्मितचन्द्रिकासुधात्वं किरणाः सम्वृद्धिं प्रार्थितस्य राकायामेव पूर्णस्य किरणामृतलहरी काञ्जिकायत इति किमद्भुतमिति भावः ॥ ६३ ॥

अरुणामोदिनी

स्मितं वर्णयति—स्मितेति । हे देवि, तव भगवत्याः, वदनचन्द्रस्य मुखेन्दोः संबन्धि, स्मितज्योत्स्नाजालं दरहासकौमुदीगणम् । जालं जलानां समूह इति व्युत्पत्त्या अमृतमयजलराशिं चेति ध्वनिः । पिबतां पानं विदधतां, चकोराणां चन्द्रिकापायिपक्षिविशेषाणां, 'चकोरश्चन्द्रिकापायी' इत्यमरः । अतिरसतया अतिमाधुर्येण । चञ्चुषु कोटिषु जडिमा जाड्यं, अतिमधुरास्वादजन्या रुचिः आसीदभूत् । 'चञ्चुस्त्रोटिरुभे स्त्रियां' इत्यमरः । किं दिवेति शेषः । यतश्चन्द्रिकापानरसिकानां चकोराणां अतिमधुरक्षीणशोभावन्मुखेन्दुज्योत्स्नामृतपानेन मुखरयारुचिरभूत् किम्? अतिमधुरपायिनो मुखजाड्यानुभवदर्शनादिति

भावः। अत्र वदनचन्द्रेत्यादिरूपकसंबन्धकथनातिशयोक्तिभ्यां अनुप्राणिता चकोरचञ्चुजडिम-भावनोत्प्रेक्षा गम्या। कुत एतत् तदर्थत इत्यत्राह–अत उक्ताद्धेतोरेते चकोरा आम्लरुचयः अरुचिनिवृत्त्यर्थमाम्लाकांक्षाः सन्तः, शीतांशोः अमृतांशोः अमृतलहरीं सुधोर्मिकां काञ्जि-कधिया... मधुरमुखपीयूषमयूखम धुर्यं विहाय चन्द्रचन्द्रिकास्वादनलाभः कथमेषां प्रातरा... पूर्वोत्प्रेक्षानुप्राणितोऽयं चन्द्रिकायां काञ्जिकधीनिबन्धनो भ्रान्तिमदलङ्कारः। तेन च देवीवदन-चन्द्र .... तिवत् प्रसिद्धचन्द्रात् अत्यौत्कृष्ट्यं वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः॥ ६३॥

## आनन्दगिरीया

स्मितज्योत्स्नेति। हे परमेश्वरि, स्मितसुन्दरवदने, चकोराणां चञ्चुजडिमा आसीत्। जडिमा जाड्यम्। रसचर्वणायान्तरतद्रसस्य विशिष्यास्वादनज्ञानाभावः। कया अतिरसतया अतिमधुरपानेन। पानं कुत इत्याह–किलक्षणानां तेषां, तव वदनचन्द्रस्य स्मितज्योत्स्नाजालं पिबतां, तव वदनचन्द्रस्य यत्स्मितं ईषद्धास्यं तदेव ज्योत्स्नाजालं सुन्दरतया प्रकाशकत्वात्, तत्पिबताम्। अथवा प्रथमत एव तव वदनचन्द्रस्य स्मितज्योत्स्नाजालं पिबतां चकोराणां चञ्चुजडिमा आसीत् इति योजनीयम्। निरतिशयमधुरिमवशात् तव स्मितं तत्पिबतां चकोराणां चञ्चुः केवलमधुररसमात्रमयी जाता रसान्तरं न वेद। तथा च यथा निरन्तरं मधुराशी कट्वम्लरसप्रधानं बिम्बफलादिकं काञ्जिकं वा पीत्वा मधुरमश्नाति, अतः कारणादम्लरुचयस्ते निशिनिशि काञ्जिकधिया शीतांशोरमृतलहरीं किरणपरंपराद्वारा समागतां पिबन्ति। भृशमतिशयेन, स्वच्छन्दं यथेष्टम्। एतेन परमामृतमयी परममधुरा शीततरा चान्द्री सुधा। सापि यस्या अनम्लाप्यम्ला जाता एतादृशी निरतिशया तव स्मितज्योत्स्नेति। अतिशयोक्तिरलङ्कारः। स्मितज्योत्स्नेति श्लोकस्य रहस्यार्थः–स्मितेति ज्योत्स्नाजालं उं, चन्द्रस्य स, चकोराणां औं शीतांशोः स, चञ्चु औं, स्वच्छन्द उं, अमृतलहरी ईं भृशं ए, परा त्रिपुरामन्त्रः। 'शृणु देवि परामन्त्रं त्रिपुरायाः कलात्मिका। वेदादिश्च परा चैव वेदादि-कमलाप्रिया। न प्रोक्तं गुह्यमेतच्च महासंसारतारकम्। औं सौः उं श्रीं सौः। परात्रिपुरामन्त्रः॥

## तात्पर्यदीपिनी

स्मितेति। हे मातः चकोराणां चञ्चुजडिमा आसीत्, चंचौ जाड्यं बभूव। कीदृशानां चकोराणां, तव वदनचन्द्रस्य तव मुखेन्दोः अतिरसतया स्मितज्योत्स्नाजालं पिबतां अतिशयेन पानं कुर्वताम्। यदा अतिमधुररसाभ्यासातिशयेनास्वादो भवति तदा वदने जाड्यं बन्धो भवति इति भिषजां प्रक्रिया। तन्निवृत्तये चन्द्रज्योत्स्नामसेवन्त इत्याह–हे जननि ते चकोराः अतः चंचुजाड्यात् शीतांशो रजनीशस्य निशि निशि रजन्यां रजन्यां भृशमत्यर्थं

स्वच्छन्दं स्वेच्छया अमृतलहरीं ज्योत्स्नातरंगमालां पिबन्ति। ननु अमृतपानोत्थं जाड्यं कथं तत्पानेन निवर्त्यं भवति, उभयोः समानगुणाक्रान्तत्वादित्यत्राह—काञ्जिकधिया काञ्जिकमिति बुद्ध्या। कीदृशास्ते भग्नरुचयः, भग्ना रुचिर्येषां ते तथा। भग्नकान्तय इत्यर्थः। चकोराणां क्रान्तिः वर्णनीया। रुचिजननार्थं काञ्जिकमयज्योत्स्नापानमिति। लोकेऽप्यरुचिपरिहाराय काञ्जिकं सेव्यते॥ ६३॥

पदार्थचन्द्रिका

अतः परं भवान्या ईषद्धास्यमुत्प्रेक्षया वर्णयति। स्मितेति। अतिशयितो रसो यस्मिन् स वदनचन्द्रः स्मितज्योत्स्नाजालं वा विशेष्यम्। चञ्चुजडिमा तुण्डजडत्वम्। अतश्चञ्चुजडिम्नो हेतोः अम्लरुचिर्येषां ते तथा। काञ्जिकं सौवीरं तद्धिया अमृतलहरीं किरणपरंपरां पिबन्तीत्युत्प्रेक्षते। स्पष्टमन्यत्॥ ६३॥

डिण्डिमभाष्यम्

स्मितेति। तव वदनचन्द्रस्य आननशीतांशोः। 'वक्त्रास्ये वदनं तुण्ड' इत्यमरः। स्मितज्योत्स्नाजालं, स्मितमेव ज्योत्स्नाजालरूपेण वर्तमानं परमामृतं, पिबतां आस्वादयतां, अनवरतं एतद्रसचर्वणानिवृत्त्यैव निरन्तरपानसन्तानकारिणां अतिरसतया चञ्चुजडिमा त्रोटिकोटिजाड्यम्। 'चञ्चुस्त्रोटिरुभे स्त्रियाम्' इत्यमरः। लोके खलु अतिमधुररसास्वादनक्रियासमभिहारेण पुनस्तथा आस्वादनशक्तिवैमुख्यकारि जिह्वाजाड्यं संभवति। तच्छान्तिः, तद्विरुद्धैरेव अम्लादिलोकसामान्यरसैः निवर्तते। पुनरेवंप्रकारेण माधुर्यजनितजिह्वाजाड्ये उपशान्ते, पुनः मधुररसास्वादनपरमानन्दसंपदुत्तम्भनं भवति। तथा चकोरेषु एतद्दृश्यते। अत एव हेतोः। जिह्वाजाड्यविमोचनार्थं, निशि निशि रात्रौ रात्रौ शीतांशोः चन्द्रमसः अमृतलहरीं पीयूषधारामयज्योत्स्नां काञ्जिकधिया मधुरजाड्यनिराकरणामृतरसास्वादहेतोः काञ्जिकधिया सौवीरबुद्ध्या आम्लरुचयः सन्तस्ते चकोराः पिबन्ति आस्वादयन्ति। चकोराणां त्वदाननचन्द्रस्मितपीयूषधारामाधुर्यसंपत्तेः काञ्जिकसमानमेवैतत् चन्द्ररुचिमाधुर्यमिति अनेन भवति। मुखचन्द्रस्य चन्द्रात् कोटिगुणाधिक्यं, अंबिकायाः स्मितमाधुर्यस्य चन्द्रिकारसात् कोटिगुणाधिक्यं च समुट्टंकितं प्रकाशितमित्यवधारणीयम्॥ ६३॥

गोपालसुन्दरी

स्मितेति—तव वदनचन्द्रस्य त्वन्मुखेन्दोः स्मितमीषद्धास्यमेव ज्योत्स्ना, तस्या जालं समूहं, पिबतां चकोराणामतिरसतया अत्यन्तमधुरतया चञ्चुजडिमा अरुचिरासीत्। अतो हेतोः अरुचिनाशार्थं ते चकोराः अम्लरुचयः सन्तः काञ्जिकधिया आरनालबुद्ध्या

निशिनिशि रात्रौ रात्रौ भृशमतिशयेन स्वच्छन्दं स्वेच्छया शीतांशोश्चन्द्रस्य अमृतलहरीं सुधाधारां पिबन्तीत्यर्थः। विष्णुपक्षेऽप्येवम् ॥ १३ ॥

आनन्दलहरीटीका

स्मितेति। तव वदनचन्द्रस्य स्मितरूपा ज्योत्स्ना तस्या जालं समूहं पिबतां चकोराणां पक्षिविशेषाणां अतिरसतया अतिमाधुर्येण चञ्चुजडिमा मुखस्य जाडयं अरुचिकरमासीत्। अतो हेतोस्ते चकोरा अम्ले रसे रुचिर्येषां तथाविधाः सन्तो निशिनिशि प्रतिरात्रि भृशमित्यर्थः, शीतांशोश्चन्द्रस्य अमृतलहरीं अमृततरङ्गरूपं रश्मिसमूहं काञ्जिकधिया चिरसञ्चितसजलौदनविकारबुद्ध्या पिबन्ति। अन्येऽप्यतिमधुरभक्षणेऽरुचिनाशायाम्लवस्तूनि भक्षयन्ति तद्वदिति भावः। एतेन चन्द्रिकातः स्मितस्यातिमाधुर्यध्वनिः ॥ ६३ ॥

अविश्रान्तं पत्युर्गुणगणकथाम्रेडन[1]जपा
[2]जपापुष्पच्छाया तव जननि जिह्वा जयति सा।
यदग्रासीनायाः स्फटिकदृषदच्छच्छविमयी[3]
सरस्वत्या मूर्तिः परिणमति माणिक्यवपुषा ॥ ६४ ॥

அவிச்ராந்தம் பத்யுர் குணகண கதாம்ரேடந ஜபா
1 11 3 3 12 3 1
ஜபாபுஷ்பச்சாயா தவ ஜநநி ஜிஹ்வா ஜயதி ஸா।
1 1 112 1 1
யதக்ராஸீநாயா: ஸ்படிக த்ருஷதச்சச்சவிமயீ
3 3 211 3 31212
ஸரஸ்வத்யா மூர்த்தி: பரிணமதி மாணிக்யவபுஷா ॥
1 11 1 1 1 1

पति के गुणलीलावृत्तों को रटने में दिन रात लगी
तेरी जपाकुसुम सो रसना की जय हो मां सुगुणखनी!
जिसके अग्रभाग पर बैठी स्फटिकोपल सी छविवाली
सरस्वती की मूर्ति प्राप्त करती है मानिक की लाली ॥

लक्ष्मीधरा

अविश्रान्तं अनारतं, पत्युः सदाशिवस्य, गुणगणकथाम्रेडनजपा गुणानां त्रिपुरविजयादीनां गणः समूहः तस्य कथा वृत्तान्तः तस्या आम्रेडनं द्विस्त्रिरुक्तिः तदेव जपो

1 जडा, परा 2 जवापुष्प 3 छविरुचः।

यस्यास्सा अनन्यमनस्केत्यर्थः। जपापुष्पच्छाया जपापुष्पं रक्तपुष्पीपुष्पं तस्य छायेव छाया कान्तिः, यस्यास्सा। तव जननि! हे मातः! जिह्वा रसना, जयति स्फुरति। सा तच्छब्दो वर्तिष्यमाणां प्रसिद्धिं परामृशति। यदग्रासीनायाः यस्या जिह्वायाः अग्रे आसीनायाः निषण्णायाः स्फटिकदृषदच्छच्छविमयी स्फटिकदृषदः स्फटिकोपलस्येव अच्छा छविः कान्तिः तया प्रचुरा। प्राचुर्यार्थे मयट्। स्फटिकधवलेत्यर्थः। सरस्वत्याः भारत्याः मूर्तिः स्वरूपं, परिणमति विकारमापद्यते, रूपान्तरं प्राप्नोतीति यावत्। माणिक्यवपुषा पद्मरागवपुषा। अत्रेत्थं पदयोजना – हे जननि! तव सा जिह्वा अविश्रान्तं पत्युः गुणगणकथाम्रेडनजपा जपापुष्पच्छाया जयति, यदग्रासीनायाः सरस्वत्याः स्फटिकदृषदच्छच्छविमयी मूर्तिः माणिक्यवपुषा परिणमति। जिह्वायां रक्तत्वमात्रं न भवति। तटस्थानां रक्तीकरणे रक्तिम्नः शक्तिरपि। अत एव जयतीति प्रयुक्तम्। 'तद्गुणालङ्कारः, तद्गुणस्स्वगुणत्यागादन्योत्कृष्टगुणाहृतिः' इति लक्षणात्। देव्याः वदनाम्बुजे सर्वदा सरस्वती स्वमूर्त्या वसतीत्यागमरहस्यम्॥ ६४॥

सौभाग्यवर्धनी

रसनां स्तौति – अविश्रान्तमिति। हे जननि अविश्रान्तं अविरतं, पत्युर्महादेवस्य, गुणगणकथाम्रेडनजडा गुणगणानुवादपौनःपुन्येन जडा, हर्षातिरेकपरवशात्। जपापुष्पच्छाया सा तव जिह्वा जयति। यदग्रे आसीनायाः स्फटिकदृषदच्छच्छविवत् निर्मलरुचः सरस्वत्या मूर्तिः माणिक्यवपुषा परिणमति। जिह्वाकान्तिप्रतिफलनेन स्फटिकनिर्मलायाः सरस्वत्या मूर्तिः माणिक्यवदारक्ता जायत इत्यर्थमौपम्यम्। तेन तुल्यार्थोपमा॥ ६४॥

अरुणामोदिनी

रसनां वर्णयति – अविश्रान्तमिति। हे जननि, अविश्रान्तं अनवरतं यथा तथा, पत्युः सदाशिवस्य, गुणगणकथाः त्रिपुरसंहारजलन्धरवधादिसमस्तगुणघटिताः कथा आख्यायिकाः, तासामेव आम्रेडनेन पुनःपुनरभिवाचनेन जडा मन्दा, निरन्तरं पतिगुणवर्णनापरायणा, अस्यैवंरूपाद्रक्तीभूतेत्यर्थः। ते भवत्याः सा जिह्वा रसना जयति सर्वोत्कर्षेण वर्तते। तच्छब्दस्य यच्छब्दाकांक्षायामाह – यदिति। यस्या जिह्वाया अग्रे अग्रभागे, आसीनाया उपविष्टायाः, भवत्पतिगुणवर्णनार्थमित्यर्थः। सरस्वत्या वाग्देवतायाः, स्फटिकदृषदच्छच्छविमयी चन्द्रकान्तशिलाधवलकान्तिप्रचुरा, सरस्वतीदेहस्य स्फटिकवद्धावल्यमागमप्रसिद्धम्। आहुश्च 'स्फटिकसदृशरूपा भारती धातृवक्त्रा' इति। मूर्तिर्देहः। माणिक्यवपुषा परिणमति परिणामं प्राप्नोति रक्तीभवति। आमुक्तपूर्वरूपा रूपान्तरमापन्ना भवतीत्यर्थः।

जपाकुसुमसान्निध्यात्। स्फटिके लौहित्यपरिणामो दृष्ट एवेति न तद्विरोधः। सरस्वतीनित्यनिवासेयं देवीजिह्वेति भावः। अत्र असंबन्धे संबन्धातिशयोक्तिरलङ्कारः॥ ६४॥

आनन्दगिरीया

**अविश्रान्तमिति**।-हे जननि तव जिह्वा जयति। किंलक्षणा, जवापुष्पच्छाया जवाकुसुमसङ्काशा, अतः सा रक्ता। जिह्वाया रक्तत्वं सामुद्रिके गुणत्वेन कथितम्। पुनः किंविधा, अविश्रान्तं पत्युर्गुणगणकथाम्रेडनजडा, पतिः श्रीमहादेवः, तस्य ये गुणगणाः, तेषामविश्रान्तं नैरन्तर्येण या कथा, तस्या आम्रेडनं पौनःपुन्येन कथनं, तेन जडा, तत्संकीर्तनोद्भूतानन्दैकपरतया विगलितान्यज्ञाना। रक्तत्वोत्कर्षमाह यदग्रासीनायाः सरस्वत्या मूर्तिः स्फटिकदृषदच्छच्छविमय्यपि माणिक्यवपुषा परिणमति। तस्मिन् कोऽन्यथाभावः परिणामः? कदापि पुनः सा मूर्तिः श्वेता न जायते। आह—माहात्म्यं जिह्वाया यद्योगेन स्फटिकोऽपि माणिक्यतां प्राप्तः। अतिशयोक्तिः। अविश्रान्तमिति पद्यस्य रहस्यार्थः—अविश्रान्तं श्री, पत्युर्हः आम्रेडितं तेनेन्द्र ए जडा तेन ऐं तेन प्रति ऐं सरस्वत्या सरस्वत्यै आक्षेपा नमः। तेन लज्जा वाणी लज्जा। ह्रीं ऐं ह्रीं सरस्वत्यै नमः। वाक्सिद्धिसरस्वती॥ ६४॥

तात्पर्यदीपिनी

**अविश्रान्तमिति**। हे जननि तव सा जिह्वा जयति। सर्वोत्कर्षेण वर्तते। किंविधा जिह्वा, अविश्रान्तमनवरतं यथा स्यात्तथा पत्युः चन्द्रचूडस्य गुणगणकथाम्रेडनजपा, गुणानां गणः समूहः तस्य कथा तस्या आम्रेडनं द्विस्त्रिरुक्तिः, तया जपोऽक्षरावृत्तिर्यस्याः, सा, पुनः किंभूता, जपापुष्पच्छाया जपायाः पुष्पं तद्वच्छाया यस्याः सा, पुनस्तामेव विशिनष्टि, सा का, यदग्रासीनाया यस्या जिह्वालताया अग्रे आसीनोपविष्टा तस्याः सरस्वत्या भारत्या मूर्तिः स्वरूपं माणिक्यवपुषा माणिक्यस्य शैलोत्पन्नलोहितकरत्नस्य वपुषा स्वरूपेण परिणमति परिणामं प्राप्नोति। स्वभावधवलाकारा सरस्वती त्वज्जिह्वया रक्ततामापन्ना। किंविधा मूर्तिः, स्फटिकदृषदच्छच्छविमयी स्फटिकस्य दृषत् पाषाणस्तद्वदच्छा निर्मला छविर्यस्याः सा। देवीवदनाम्भोजे सर्वदा सरस्वतीमूर्तिर्वसतीत्यागमरहस्यम्॥ ६४॥

पदार्थचन्द्रिका

जिह्वामुत्प्रेक्षमाणो वर्णयति—**अविश्रान्तमिति**। अविश्रान्तमिति क्रियाविशेषणं, निरन्तरमित्यर्थः। गुणगणकथाया आम्रेडनमभ्यास एव परं केवलं यस्या इत्यारक्ततायां हेतुरुक्तः। जवापुष्पं शिवागाराख्यं तस्येव छाया कान्तिर्यस्याः सा। जवेत्यत्र केचित् जपेति

पठन्ति, तन्मन्दं, कोशे वान्तशब्दप्रकरणे जवाशब्दस्य पाठात्। उत्प्रेक्षान्तरमाह — यदिति। यस्यास्तवाग्रे आसीनाया उपविष्टायाः सरस्वत्या मूर्तिः देहो माणिक्यवपुषा माणिक्यरूपेण परिणमतीत्युत्प्रेक्षा। परिणामहेतुं वदन् मूर्तिं विशिनष्टि — स्फटिकरूपा या दृषत्तद्वत् छाया छविः कान्तिस्तन्मयी तत्प्रचुरेत्यर्थः। यद्वा यच्छब्दोऽत्र जिह्वाविशेषणम्। पक्षद्वयेऽपि तच्छब्दाध्याहारेणान्वयः ॥ ६४ ॥

## डिण्डिमभाष्यम्

अविश्रान्तमिति। हे परमेश्वरि! पत्युः स्वामिनो महादेवस्य गुणगणजपाम्रेडितजडा, गुणगणस्य धर्मज्ञानवैराग्यैश्वर्यादिगुणकदम्बकस्य जपस्य कथाया आवर्तनस्य यदाम्रेडनं पुनः पुनरनुष्ठानम्। 'आम्रेडनं द्विस्त्रिरुक्तं' इत्यमरः। तेन जडा इतरशब्दग्रहणवैमुख्येन तदेकनामग्रहणमात्रोपलक्षणशक्तिका। पुनः किंभूता? जपापुष्पच्छाया। 'जपा जवा तथोण्ड्रं स्यान्मन्दारमतिपाटलम्।' इति विश्वप्रकाशः। जपापुष्पस्य छायेव छाया यस्याः सा तथोक्ता तव जिह्वा तालुलता सा सर्वोत्कृष्टसौन्दर्यसाराश्रयभूता सती जयति सर्वोत्कृष्टतया वर्तते। पुनस्तामेव जिह्वां विशिनष्टि — यदग्रासीनायाः यस्या जिह्वालताया अग्रे अञ्चलभागे आसीनाया उपविष्टायाः सरस्वत्याः भगवत्याः भारत्याः, स्फटिकदृषदच्छच्छविमयी विमलोपलधवलशोभासंपूर्णा मूर्तिः शरीरं, माणिक्यवपुषा माणिक्यशैलोत्पन्नलोहितकरत्नस्वरूपेण परिणमति। आमुक्तपूर्वरूपस्य रूपान्तरापत्तिः परिणामः। त्वज्जिह्वालतापाटलिमसंपदः प्रतिबिम्बेन स्वभावधवलाकारा सरस्वतीतनुः अतिरक्ततामापन्ना यतः, तत एव हेतोः तव चक्रसिंहासनतृतीयावरणाष्टारमण्डलस्था वशिन्यादयो वाग्देवता अष्टौ सिन्दूरसौन्दर्यतनुसौन्दर्या इति सकलागमप्रसिद्धिः। त्वज्जिह्वाग्रे या सरस्वती सन्निहिता सैव तत्किरणपाटलाकाररक्तवर्णा वशिन्यादिरूपेण बहिरावरणदेवतात्वेन भगवतीं सेवते। उक्तं च — 'तत एव समुद्भूताः तस्यामेव कृतालयाः। तत्स्वरूपास्तत्प्रतापा नवावरणदेवताः'॥ इति ॥ ६४ ॥

## गोपालसुन्दरी

अविश्रान्तमिति — हे जननि! तव जिह्वा रसना विजयते। पत्युः शिवस्य अविश्रान्तं निरन्तरं गुणगणकथाया धर्मज्ञानवैराग्यैश्वर्यादिजल्पनस्य आम्रेडनेनावर्तनेन जडा इतरशब्दग्रहणवैमुख्येन तदेकनामग्रहणमात्रोपलक्षणशक्तिका जपापुष्पच्छाया ओड्रपुष्पकान्तिः। यस्या जिह्वायाः अग्रे आसीनाया उपविष्टायाः सरस्वत्या मूर्तिः, स्फटिकदृषत् स्फटिकपाषाणं, तद्वदच्छा विमला स्वच्छा छविः कान्तिः तन्मयी तद्युक्ता, माणिक्यवपुषा माणिक्यसमानरूपेण परिणमति, श्वेतं रूपं त्यक्त्वा रक्तं रूपं बिभर्तीति भावः। विष्णुपक्षे — पत्युः पालकस्य तव

जननं प्रादुर्भावो देहपरिग्रहोऽस्यास्तीति जननी तस्य जननिनः कृतदेहपरिग्रहस्य, जिह्वा विजयते। जननीति पूर्ववद्विष्णुसंबोधनम्। शेषं समानम्॥ ६४॥

आनन्दलहरीटीका

अविश्रान्तमिति। हे जननि तव जिह्वा विजयते। कीदृशी – अविश्रान्तं निरन्तरं पत्युर्महेशस्य गुणानामैश्वर्यादीनां गणाः समूहाः, तेषां याः कथास्तासामाम्रेडनेन पुनःपुनः कथनेन जडा अन्यशब्दग्रहणपराङ्मुखी, जपेति पाठे तदेव मन्त्रजपरूपो यस्याः सा तथा। जपापुष्पस्य ओड्रपुष्पस्येव छाया कान्तिः यस्याः सा तथा, अतिरक्तवर्णेति भावः। यस्या जिह्वाया अग्रे आसीनाया उपविष्टायाः सरस्वत्या मूर्तिः शरीरं माणिक्यवपुषा माणिक्य-वल्लोहितस्वरूपतया परिणामं प्राप्नोति। कीदृशी मूर्तिः स्फटिकरूपाया दृषदः पाषाणस्येव या अच्छा शुभ्रा छविः कान्तिः तन्मयी बहुतरतद्युक्ता। आम्रेडनं द्विस्त्रिरुक्तिरित्यमरः। ६४॥

रणे जित्वा दैत्यानप[1]हृतशिरस्त्रैः कवचिभिः
निवृत्तैश्च[2]ण्डांशत्रिपुरहरनिर्माल्यविमुखैः।
वि[3]शाखेन्द्रोपेन्द्रैः शशिवि[4]शदकर्पूर[5]शकलाः
विली[6]यन्ते मातस्तव वदनताम्बूलक[7]बलाः॥ ६५॥

ரணே ஜித்வா தைத்யாநபஹ்ருத சிரஸ்த்ரை: கவசிபி:
1 3 1 1 1 1 1 14
நிவ்ருத்தைச் சண்டாம்ச த்ரிபுர ஹர நிர்மால்ய விமுகை: ।
1 1 1 3 1 1 2
விசாகேந்த்ரோபேந்த்ரை: சசிவிசத கர்பூர சகலா:
2 1 1 3 3 1 1 1
விலீயந்தே மாதஸ் தவ வதந தாம்பூல கபலா: ॥
1 1 1 3 1 3 1 3

रण में जित्वा राक्षसों को लौट, मकुट ले निज हाथों में
दृढवर्माश्रित स्कन्द शचीश उपेन्द्र, नमित हों चरणों में
विमुख बने चण्डेशभोग्य हरनिर्माल्य के जननि! तेरे
मुखतांबूलकवल शशिसम कर्पूरखण्ड सहित घनेरे
चर्वित करते हैं मान अहो भाग्य सुखासन तव घेरे॥

---

1 नुपहृत, न्परिहृत 2 चण्डांशु, चन्द्रांशु 3 विरिञ्चीन्द्रो 4 शिशिर
5 धवलाः 6 विलिप्यन्ते, विलुप्यन्ते 7 शकराः, कणिकाः।

## लक्ष्मीधरा

रणे युद्धे, जित्वा पराजितान् कृत्वा दैत्यान्, अपहृतशिरस्त्रैः अपहृतानि शिरोवेष्टनानि यैस्तैः स्वामिकार्यनिर्वर्तनानन्तरं सेवकानां राजसंमुखे प्रणामवेलायां उष्णीषशिरस्त्रादिकं निर्मुच्य प्रणामः कर्तव्य इति परिपाटी; तां परिपाटीमाश्रित्याह—अपहृतशिरस्त्रैरिति। कवचिभिः वर्मयुक्तैः, निवृत्तैः युद्धान्निवृत्तैः, चण्डांशत्रिपुरहरनिर्माल्यविमुखैः चण्डांशः चण्डभागः चण्डो नाम प्रमथः तस्य भागः स एव त्रिपुरहरस्य निर्माल्यं स्वीकृतावशिष्टं गन्धताम्बूलादि तत्र विमुखैः। 'हरनिर्माल्यं परित्याज्यम्' इत्यादिस्मृतयः चण्डांशरूपहरनिर्माल्यनिषेधपरा इत्यवगन्तव्यमिति बोधयन्ति। विशाखेन्द्रोपेन्द्रैः विशाखः सेनानीः, युद्धेषु तस्यैव प्रामुख्यमित्यग्रे गणना, इन्द्रो महेन्द्रः उपेन्द्रः विष्णुः तैः शशिविशदकर्पूरशकलाः चन्द्रवद्विशदाः कर्पूरशकलाः घनसारखण्डाः येषां ते। विलीयन्ते विलयनं क्रियन्ते। मातः! हे जननि! तव वदनताम्बूलकबलाः वदननिर्गतास्ताम्बूलकबलाः। अत्रेत्थं पदयोजना—हे मातः! रणे दैत्यान् जित्वा अपहृतशिरस्त्रैः कवचिभिः निवृत्तैः चण्डांशत्रिपुरहरनिर्माल्यविमुखैः विशाखेन्द्रोपेन्द्रैः शशिविशदकर्पूरशकलाः तव वदनताम्बूलकबलाः विलीयन्ते॥ अयमर्थः—विशाखेन्द्रोपेन्द्राः दैत्यान् संहृत्य भगवत्याः कुमारं पुरस्कृत्य पादवन्दनार्थमागत्य शिरस्त्राण्यपहार्य पादोपसङ्ग्रहणमकुर्वन्। तदनन्तरं प्रसन्ना भगवती ईषत्खादितान् ताम्बूलकबलान् विततार। तद्गतकर्पूरशकलविलयनपर्यन्तं खादितवन्तः इत्युक्त्या एतादृशोऽनुग्रहः भगवत्याः कुमारस्वामिन्येव। इन्द्रादिष्वपि काचित्कः इत्यभिप्रायः॥ ६५॥

## सौभाग्यवर्धनी

वदनं स्तौति—रण इति। हे मातः, रणे दैत्यान् जित्वा, अपहृतशिरस्त्रैः अवतारितशिरस्त्राणैः, कवचिभिः श्लथीकृतकवचैः, निवृत्तैः, चण्डांशत्रिपुरहरनिर्माल्यविमुखैः चण्डस्यैवांशो भागः तद्रूपं यत् शिवनिर्माल्यं, अतो हेतोः तद्विमुखैः विरिञ्चीन्द्रोपेन्द्रैः, शशिशिशिरकर्पूरधवलाः तव वदनताम्बूलशकलाः विलिप्यन्ते। रणश्रान्तैः विरिञ्च्यादिभिः श्रमपरिहाराय तव वदनकर्पूरमिश्रताम्बूलशकला विक्षिप्यन्त इति स्वभावोक्तिः। कर्पूरशकला इति क्वचित्पाठः। चण्डांशुत्रिपुरहरनिर्माल्यविमुखैरिति पाठः क्वचित्। महादेवशिरःस्थितचन्द्रकौमुदीं शिवनिर्माल्यमिति त्यक्त्वा ताम्बूलशकला एव विलिप्यन्त इति श्लोकार्थः। ताम्बूलगुणवर्णनेन भगवत्या वदनसौभाग्यं स्तुतमेतावता॥ ६५॥

अरुणामोदिनी

वदनसौन्दर्यमभिवदति—रण इति। अत्र 'सकला ब्रह्मविष्ण्वीशाः स्वाधिकारैःकलक्षिताः। तत्सुतास्तत्सुतं विश्वमतः सकलमातृका। ब्रह्मविष्णुमहादेवा अस्याः पुत्रा वरानने'॥ इत्याद्यागमवचनेभ्यो विष्ण्वादीनां देवीपुत्रत्वं सिद्धवत्कृत्याह—हे मातः जननि! जगन्मातृत्वादेव स्वमातृत्वं सिद्धमिति श्लोकतात्पर्यनिर्णयादिदं संबोधनम्। रणे युद्धे, दैत्यान् राक्षसान्, जित्वा विजित्य, उपहृतशिरस्त्रैः उपायनीकृततदीयशीर्षैः; शीर्षण्या च शिरस्त्रं च इत्यमरः। लोके वीरभटा रणाय गताः सन्तः शत्रून् विजित्य, तदीयशीर्षण्यादिकं प्रभुसमीपं प्रत्यानयन्ति स्वपराक्रमप्रकटनार्थमिति प्रसिद्धिः। अपहृतेति पाठेऽप्ययमेवार्थः। यद्वा रणे दैत्यान् जित्वाऽऽगत्य अपहृतशिरस्त्रैः नमस्काराचरणार्थमपनीतस्वकीयशीर्षण्यैः। विजयलब्धारो वीरभटाः प्रभुसमीपे स्वशिरःस्थितशिरस्त्राणमुद्धृत्य अवस्थाप्य नमस्काराणि कुर्वन्तीति प्रसिद्धिः। कवचा येषां सन्तीति कवचिनः तैः, अमुक्तकवचैरित्यर्थः। निवृत्तैः नितरां वृत्तैः बुभुक्षितैरित्यर्थः। अथापि चण्डो नाम प्रमथः, तस्यांशो भागः तद्रूपं यत् त्रिपुरहरनिर्माल्यं शिवसंभुक्तावशेषितद्रव्यं तस्माद् विमुखैः परावृत्तैः; पितुर्महादेवस्य चण्डेश्वरैकांशभूतनिर्माल्यत्वादनर्हं मम नैवेद्यमिति तदितराभोज्यत्वाच्च तन्निर्माल्यादानेऽनादरवद्भिरित्यर्थः। विशाखेन्द्रोपेन्द्रैः कुमारमहेन्द्रविष्ण्वभिधानैः पुत्रैः। शशिविशदकर्पूरधवलाः शशिविशदानि चन्द्रवद्धवलानि कर्पूरशकलानि घनसारखण्डा येषु ते, शशिविशदकर्पूरशकलाः ते भवत्या वदनस्थिताः ताम्बूलकवलाः वीटिग्रासाः विलीयन्ते स्वीक्रियन्त इत्यर्थः। अत्र स्वभावोक्तिरलङ्कारः। तेन च देव्या लोकातिशायितं पुत्रवात्सल्यं तेषामप्यकुण्ठितसामर्थ्यवत्त्वं च सूच्यते॥ ६५॥

आनन्दगिरीया

रणे जित्वेति। हे मातः, एतादृशास्तव वदनताम्बूलशकलाः त्रिविधपरितापनिवर्तनेन सर्वार्थसाधका वात्सल्योपदर्शकाश्च। अतश्च विरिञ्चेन्द्रोपेन्द्रैः स्वाङ्गेषु विलिप्यन्ते। ताम्बूलालेपने हेतुमाह। शशिशिशिरकर्पूरधवलाः, शशिवच्छिशिराः परमशिशिरा ये ताम्बूलान्तर्गतभुक्तकर्पूरखण्डाः तैर्धवलाः। तांबूलमध्ये बहुतरकर्पूरमिश्रणात्ताम्बूलस्य शिशिरत्वमुच्चैर्धवलत्वं च। लेपने निमित्तमाह—किंलक्षणैः विरिञ्च्यादिभिः रणे दैत्यान् जित्वा निवृत्तैः परावृत्तैः पुनः कीदृशैः, अपहृतशिरस्त्रैः संग्रामे मोहनाच्छत्रून् पातयित्वा, तेषां शिरस्त्राणि मकुटानि अपहृतानि यैस्तैः, अथवा कार्यस्य जातत्वात् श्रमोत्पादकत्वाच्च स्वकीयान्येव शिरस्त्राण्यवतारितानि यैस्तैः। पुनः किंविधैः, कवचिभिः सतनुत्रैः, अत एव श्रान्तैरिति ज्ञातव्यः। अयं भावः—सबलशत्रुसूदनाय संग्रामे उपस्थिते संग्रामानुकूलशिरस्त्राणतनुत्राणां शरीरे धारणात्

तद्युक्तं, युद्धे क्रियमाणे शत्रुषु मारितेषु महान् श्रमो जात इति श्रमापनोदाय मातापित्रोः पार्श्वमुपयान्ति पुत्रादयः। तथा शीतोपचारेण श्रमापनोदनमुद्दिश्य पित्रोः कृतकार्यतया सन्तोषमुद्दिश्य तत्कर्तृकं वात्सल्यं चोद्दिश्य ब्रह्मादयः शिवशक्त्योः पित्रोः पार्श्वमागत्य भवत्योत्सृष्टास्तांबूलशकलाः कर्पूरैलादिना मिश्रिता इति परमशीतला उपलभ्य तानेव स्वाङ्गेषु विलिम्पन्तिस्मेति। गुरूच्छिष्टं न दोषः स्यात्। अतस्तत्र विज्ञानं नास्ति। ननु तर्हि महादेवस्य कुतो न? चण्डांशत्रिपुरहरनिर्माल्यविमुखैः, त्रिपुरहरस्य यावन्निर्माल्यभागः, तावान् चण्डनाम्नो गणस्येति ततो विमुखैः, महादेवशरीराद्दूरीभूतः पुष्पादिभागो निर्माल्यं, तत्तु सर्वं चण्डस्यैवेति, अन्यस्यांशः कथं ग्राह्य इति ततो विमुखा इत्यर्थः। क्वचिच्चन्द्रांशुत्रिपुरहरनिर्माल्यविमुखैरिति पाठः, तदा चन्द्रांशवश्चन्द्रकिरणाः यद्यपि शीतलाः आप्यायकाश्च तथाप्यस्पृश्याः, महादेवनिर्माल्यत्वादिति ततो विमुखैः, चन्द्रांशुलक्षणं यत्त्रिपुरहरनिर्माल्यं तस्माद्विमुखास्तैः, निर्माल्यान्नो दत्तम्। रणे जित्वेति पद्यस्य रहस्यार्थः—रण इति। दैत्यान् ऐं शिरः स्वाहा स्त्रैः स्त्रीं कवचिभिः हुं, निर्माल्यविमुखैः उच्छिष्टमातङ्गि विरिञ्चेन्द्रोपेन्द्रैः क्लीं, चण्ड चण्ड वहराह मातर्म शिशिरक विलिप्यन्ते यत्र कर्पूर रेफ शिशिर इति। तेन महाचण्डयोगेश्वर्याः स्वाहान्तो मनुरयं निर्माल्यवासिन्याः इयं तव पूज्यते तेषामिति मतम्। ऐं स्त्रीं हूं उच्छिष्टमातङ्गि चण्डचण्ड महाचण्डेश्वरि स्वाहा। उच्छिष्टमातङ्गीमन्त्रोद्धारः॥

## तात्पर्यदीपिनी

भगवत्या ब्रह्मविष्ण्वादयो देवाः पुत्रा एव, तच्छिष्टोपभोगदर्शनादित्यागमप्रामाणिकमर्थं कथयति—रणे इति। हे मातः विशाखेन्द्रोपेन्द्रैः, विशाखः कार्तिकेयः, इन्द्रः पुरन्दरः, उपेन्द्रो विष्णुः, एभिस्तव भवत्याः वदनताम्बूलकबलाः विलुप्यन्ते अहमहमिकया स्वीकृताः क्रियन्त इत्यर्थः। किंविधास्तांबूलकबलाः, शशिविशदकर्पूरशकलाः शशिवद्विशदानि कर्पूरशकलानि घनसारखण्डानि येषु ते तथोक्ताः, किंभूतैः विशाखेन्द्रोपेन्द्रैः रणे दैत्यान् जित्वा निवृत्तैः परावृत्तैः पुनरपहृतशिरस्त्रैः अपहृतान्यानीतानि शत्रूणां शिरस्त्राणि मुकुटानि यैस्ते, पुनः कवचिभिः वर्मयुक्तैः पुनश्चण्डांशत्रिपुरहरनिर्माल्यविमुखैः, चण्डस्यांशो भागो यस्त्रिपुरहरस्य सदाशिवस्य निर्माल्यं, तत्र विमुखास्तैः हरनिर्माल्यं परित्याज्यमिति। तव वदनान्निर्गतताम्बूलकबलाः स्वीकृता इति भावः॥ ६५॥

## पदार्थचन्द्रिका

श्रीभवान्या वदनतांबूलानि देवदेवानामपि दुर्लभानीति कथयन् भवानीं स्तौति—रणे इति शशिशकलसदृशानि यानि कर्पूराणि तैर्धवला वदनतांबूलशकलाः विलुप्यन्ते, प्रसन्नया

त्वया दत्ता वदनतांबूलखण्डा महाप्रसाद इति बुद्ध्या भक्षयन्त इत्यर्थः। प्रसादेन वदनतांबूलदाने हेतुमाह—रणे जित्वेति। परिहृतं शिरस्त्रं शिरस्त्राणं यैस्ते, तथा तैः। एतेन भगवत्या निर्माल्यमतिपवित्रमनावृतशिरसा भोक्तव्यमिति दर्शितं भवति। निवृत्तैः प्रत्यागतैः चण्डांशुत्रिपुरहरनिर्माल्यविमुखैरित्यनेन भगवत्या एकान्तभक्तत्वं विरिञ्चेन्द्रोपेन्द्राणां दर्शितम्। त्रिपुरहरस्य सर्वेश्वरत्वात्, सर्वोपास्यत्वात् निर्माल्यं भक्षयत्वेन प्राप्तं प्रसादं विमुखपदेन वार्यते। चण्डांशोः सूर्यस्य, महादेवाभिप्रायेण द्रष्टव्यम्। भित्तं शकलखण्डे वा पुंसीत्यमरः॥ ६५॥

## डिण्डिमभाष्यम्

भगवत्या ब्रह्मविष्ण्वादयो देवाः पुत्रा एव, तदुच्छिष्टोपभोगदर्शनात् इत्यागमप्रमाणसिद्धमर्थं वर्णयति—रणे जित्वेति। रणे युद्धे दैत्यान् देवशत्रून् जित्वा परिभूय, अपहृतशिरस्त्रैः अपहृतानि शत्रूणां शिरस्त्राणि मुकुटानि, यैस्तथोक्तैः। रणे शत्रून् जित्वा तदीयमुकुटादिचिह्नापनयनं वीरमाहात्म्यद्योतनं भवतीत्यनेनाभिहितम्। कवचिभिः आमुक्तवर्मभिः, निवृत्तैः समरतः प्रत्यावृत्तैः, अत एव बुभुक्षितैः, पितुर्महादेवस्य चण्डेश्वरैकांशभूतत्वात् उच्छिष्टभोजनाद्विमुखैः, अत एव चण्डांशत्रिपुरहरनिर्माल्यविमुखैः। चण्डस्यांशश्चण्डांशः, त्रिपुरहरस्य निर्माल्यं त्रिपुरहरनिर्माल्यं, तत्र विमुखैः, अन्योपलब्धभागतया निरस्तप्रत्याशैः, विशाखेन्द्रोपेन्द्रैः विशाखश्च कार्तिकेयश्च, इन्द्रश्च पुरन्दरश्च, उपेन्द्रश्च विष्णुश्च, एतैर्महावीरैः शशिविशदकर्पूरशकलाः चन्द्रवच्छुक्लवर्णाः कर्पूरशकलाः हिमवालुकखण्डत्रयोपेताः तथोक्ताः, तव वदनताम्बूलकणिकाः वक्त्रताम्बूलपीयूषविप्लुषः विलुप्यन्ते अहमहमिकया स्वीक्रियन्ते इत्यर्थः। यदुच्छिष्टभोजिनो ये भवन्ति तदङ्गभूतास्ते पुत्रादयस्तद्रूपा एवेति निश्चयः। अत एव सकलजननीत्यागमेषु प्रसिद्धिः। 'सकला ब्रह्मविष्ण्वीशाः स्वाधिकारैकलाञ्छिताः। तत्सुताः तत्सुतं विश्वं अतः सकलमातृका'॥ सर्वातिशायितया ब्रह्मादीनां संपदो भगवत्या उच्छिष्टोपभोगसंपत्त्यैव संपृक्ता जायन्ते॥ ६५॥

## गोपालसुन्दरी

रणे जित्वेति। हे मातः, रणे युद्धे देवशत्रून् जित्वा परिभूय, अपहृतानि त्यक्तानि शिरस्त्राणि मुकुटानि यैः, कवचिभिः अमुक्तवर्मभिः, निवृत्तैः समरतः परावृत्तैः, चण्डस्य चण्डेश्वरस्य योऽंशो भागः त्रिपुरहरनिर्माल्यं तत्र विमुखैः, शिवनिर्माल्यस्याभक्ष्यत्वात्, विरिञ्चीन्द्रोपेन्द्रैः ब्रह्मेन्द्रविष्णुभिः शशिशिशिरकर्पूरधवलाः शशिवत् शिशिरशीतलो यः कर्पूरः, तेन धवलाः श्वेताः; शशिशकलकर्पूरधवला इत्यपि पाठः। तत्र शशिशकलं

चन्द्रखण्डः, कर्पूरश्च तद्वद्धवला इत्यर्थः । तव वदनतांबूलशकलाः विलुप्यन्ते अहमहमिकया गृह्यन्त इत्यर्थः । विष्णुपक्षे – मातः लक्ष्मीतः, निवृत्तैः त्वदङ्कस्थितलक्ष्मीनिर्माल्यं परित्यज्य त्वन्निर्माल्यं उपाददत इत्यर्थः । यद्वा अमा अतः इति छेदः । त्रिपुरहरनिर्माल्यविमुखैः अमा सह यतः शशिशकलकर्पूरधवलाः अतो विलुप्यन्ते इत्यर्थः । उप समीपे इन्द्रो विद्यते यस्यासावुपेन्द्रो जयन्तादिः ॥ ६५ ॥

आनन्दलहरीटीका

रणे इति । हे मातस्तव वदनतांबूलशकलाः मुखसंबन्धिचर्वितपूगफलादिखण्डाः, शकला इत्यत्र कणिका इति पाठे बिन्दव इत्यर्थः । विरिञ्चीन्द्रोपेन्द्रैः ब्रह्मेन्द्रविष्णुभिः विलुप्यन्ते गृहीत्वा निश्शेषीक्रियन्ते इत्यर्थः । विरिञ्चीत्यत्र विशाखेति पाठे कार्तिकेयः । कीदृशैः, रणे युद्धे दैत्यान् जित्वा निवृत्तैः परावृत्तैः, अपहृतानि बलात् गृहीतानि शिरस्त्राणि शत्रूणां मकुटानि यैः, कवचिभिः अत्यक्तसन्नाहैः, चण्डांशः चण्डेश्वरभागरूपं यत् त्रिपुरहरस्य शिवस्य निर्माल्यं तत्र विमुखैः ग्रहणान्निवृत्तैः, चण्डेश्वरं विना शिवनिर्माल्येऽन्यस्यानधिकारात् । सेनापतिस्वभाववर्णनमिदम् । कीदृशाः शकलाः, शशिवत् चन्द्रतुल्यं विशदं निर्मलं यत्कर्पूरं तेन धवलाः शुक्लाः, कर्पूरबाहुल्यात् शुभ्रता । धवला इत्यत्र शकला इति पाठे तादृशस्य कर्पूरस्य शकलाः खण्डा यत्रेति बहुव्रीहिः । शशिशिशिरेत्यपि क्वचित्पाठः, शिशिरं शीतलम् । शशिशकलेति पाठे शशिखण्डतुल्यं यत्कर्पूरं इत्यर्थः ॥ ६५ ॥

विपञ्च्या गायन्ती विविध[1]मपदानं [2]पशुपतेः
त्वयाऽऽरब्धे वक्तुं [3]चलितशिरसा साधु[4]वचने ।
तदीयैर्माधुर्यै[5]रपलपिततन्त्रीकलरवां
निजां वीणां वाणी निचुलयति चोलेन निभृतम् ॥ ६६ ॥

விபஞ்ச்யா காயந்தீ விவிதமபதாநம் பசுபதே:
1 1 3 1 4 1 3 1 1 1
த்வயாரப்தே வக்தும் சலிதசிரஸா ஸாதுவசநே ।
1 3 4 1 1 1 1 4 1
ததீயைர் மாதுர்யைரபலபிததந்த்ரீ கலரவாம்
1 3 4 1 1 1 1 1 1
நிஜாம் வீணாம் வாணீ நிசுலயதி சோலேந நிப்ருதம் ॥
1 1 1 4 1

---

1 मवदातं, मवदानं 2 पुररिपोः 3 स्खलितवचसा, ललितवचसा
4 वदने, वचनैः 5 रुपहसित ।

पशुपति के लीलावृत्तों का विविध गान करनेवाली
वीणा पर अपने वाणी साधुवाद से खुलनेवाली।
तेरी सुधामधुर बोली और शिर चालन के चलते ही
ढक लेती है खोली से तन्त्री को अतिलज्जित देवी! ॥

लक्ष्मीधरा

विपञ्च्या वीणया, गायन्ती गानं कुर्वन्ती, विविधं अनेकप्रकारं त्रिपुरविजय-दक्षयागध्वंसहालाहलधारणजलन्धरवधगजासुरवधादिकं, अपदानं वृत्तं कर्म, पशुपतेः ईश्वरस्य त्वया भवत्या, आरब्धे उपक्रान्ते सति, वक्तुं निगदितुं, चलितशिरसा अन्तस्सन्तोषवशात् स्वयं शिरःकम्पवत्या, साधुवचने मधुरवचने, तदीयैः तस्य वचनस्य सम्बन्धिभिः, माधुर्यैः माधुर्यगुणैः अपलपिततन्त्रीकलरवां अपलपिता अपहसिताः स्वकीयतन्त्रीकलरवाः यस्याः सा तां निजां स्वकीयां, वीणां विपञ्चीं, वाणी भारती, निचुलयति निचुलवतीं करोति। निचुलः कूर्पासः। चोलेन चोलः कूर्पासविशेषः वीणाकूर्पासः। चोलेन निचुलवतीं करोतीति सामान्य-विशेषभावे, न पौनरुक्त्यम्। केचित्तु भोजमतावलम्बिन आहुः – चुलिधातुः तिरोधानवाचक इति। नितरां चुलयति आच्छादयतीत्यर्थः। निभृतं गूढं यथा भवति तथा। अत्रेत्थं पदयोजना–हे भगवति! पशुपतेः विविधं अपदानं विपञ्च्या गायन्ती त्वया वक्तुं चलितशिरसा साधुवचने आरब्धे सति तदीयैः माधुर्यैः अपलपिततन्त्रीकलरवां निजां वीणां वाणी चोलेन निभृतं निचुलयति। अत्रातिशयोक्तिरलङ्कारः, वीणायाः निचोलनासंबन्धेऽपि संबन्धकथनात्, यः पराजितो वैणिकः स्ववीणां चोलेन निचुलयति तेन सहाभेदाध्यवसायप्रतीतेः ॥ ६६ ॥

सौभाग्यवर्धनी

वदनं स्तुत्वा वाणीं स्तौति – विपञ्च्येति। विपञ्च्या त्रितन्त्रीवीणया, विविधम-पदानं पूर्ववृत्तं त्रिपुरदहनादि बहुविधं कर्म, पशुपतेर्गायन्ती। पुररिपोरिति युक्तः पाठः। त्वयारब्धे वक्तुं स्खलितवचसा ईषद्व्यक्तवचनेन त्वया साधुवदने साधुवचने वक्तुमारब्धे सति। ललितवचसेति क्वचित्पाठः। तदीयैर्माधुर्यैः साधुवादमाधुर्यैः अपलपिततन्त्रीकलरवां तिरस्कृत-तन्त्रीमधुरतया, निजां वीणां वाणी सरस्वती निचुलयति चोलं परिधापयति। एतत्साधु-वादमाधुर्येण मम विपञ्चीकलरवध्वनिः अकिञ्चित्कर इति लज्जया चोलेन निभृतं वीणा-माच्छादितवतीत्यर्थः। अत्र स्वभावोक्तिरलङ्कारः ॥ ६६ ॥

अरुणामोदिनी

तदीयं वाङ्माधुर्यं विभावयति–विपञ्च्येति। हे परमेश्वरि, विपञ्च्या वीणया। विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी' इत्यमरः। विविधं नानाप्रभेदं, पशुपतेः महादेवस्य, अपदानं पराक्रमजालं, गायन्ती उपवीणयन्ती, वाणी वाग्देवता कर्त्री, स्वगानानन्तरं, साधुवचनैः 'साधु सम्यग्गीतं भवत्या' इति गीतोपलालनवचनैः सह, चलितशिरसा कंपितमौल्या, त्वया वक्तुमारब्धे सति, 'एतादृशं गीतं अतिमधुरमास्वादितं, अपरमपि वत्से सरस्वति प्रकाश्यतां' इत्येवंरूपेण वचनेन वक्तुमारब्धे सति, तदीयैः तद्वचनवर्तिभिर्माधुर्यैः अपहसिततन्त्रीकलरवां, अपहसितः तिरस्कृतः तन्त्रीणां गुणानां कलोऽव्यक्तमधुरः रवो नादो यस्याः सा, तथोक्तां निजां आत्मीयां वीणां वल्लकीं चोलेन आच्छादनप्रदीपकेन, निचुलयति आवृतां करोति। संगीतसमाप्तिमेव करोतीति यावत्। चुल आच्छादने इत्ययं धातुरावरणार्थे प्रसिद्धः। णिचि सत्यल्लोपस्य स्थानिवद्भावात्, पुगन्तलघूपधस्येति गुणाभावः। निभृतमित्यनेन केनाप्यपरिज्ञाततां वर्णयता कविना लज्जावशात् सरस्वत्या संगीतगोष्ठीभङ्गो व्याजान्तरेण तयैवाकारीति सूचितम्॥ ६६॥

आनन्दगिरीया

यद्वदनान्निर्गतमपि तांबूलमप्येतादृशं, तत्र वर्तमानं वचनं कीदृशं भविष्यतीत्यतो वचनमाधुर्यं वर्णयति विपञ्च्येति। हे मातस्तव वचनमाधुरी केन वर्णनीया। यद्वचनश्रवणसौभाग्यसमुल्लासितया त्वया सरस्वती स्वां वीणां गोपायति स्मेति। एकदा सिंहासनस्थितौ पार्वतीपरमेश्वरावुपवर्णयितुं वागीश्वरी समागता। तया वीणां उरसि निधाय महादेवपुरुषार्थगानानुवादने क्रियमाणे, तदाकर्णनजनितानन्देन मौलिमण्डलमान्दोलयन्त्या त्वया साधु तव गीतं वादितमित्याकारेण साधुवादे प्रशंसारूपे प्रारब्धे, तत्तावदक्षरघटितवचनमधुरिमाणमाकलय्य सरस्वती स्वां वीणां वस्त्रेणाच्छादयति स्म। यस्याः स्वाभाविकवचनेऽप्येतादृशी माधुरी, या परब्रह्मानन्दमयी दुर्लभा, तर्हीदानीं मद्वीणया वाद्यमानया अपत्रपत्वं विना नान्यत्प्रयोजनमिति सा तां वाससा जुगोपेति तात्पर्यार्थः। यथार्थं कथ्यते, वाणी सरस्वती निजां वीणां चोलेन वस्त्रेण निभृतं निचुलयति आच्छादयति। त्वया साधुवादे प्रशंसावादे प्रारब्धे सति। किंलक्षणया त्वया चलितशिरसा आन्दोलितशिरसा। स्खलितवचसेति क्वचित्पाठः। तदपि मौलिमण्डलान्दोलने वदने अव्यक्तवचसा। किंलक्षणां वीणां, तदीयैर्माधुर्यैरपलपिततन्त्रीकलरवां तस्येमानि तदीयानि तैस्तदीयैः साधुवादसंबन्धिभिः, अपलपितो निभृतं अरुचिगोचरीकृतः तन्त्रीकलरवो यस्याः सा तां, किंलक्षणा वाणी, विपञ्च्या वीणया

पुरारेर्विविधमपदानं गायन्ती, पशुपतेरपदानं पौरुषेण कृतं शत्रुसूदनादिकं कर्म। वशिन्या एव वीणादिधारणमुक्तम्। नात्र मन्त्रोद्धारः शंकराचार्याभिप्रायः॥ ६६॥

## तात्पर्यदीपिनी

विपञ्च्येति हे जननि, वाणी चोलेन कूर्पासकेन निजां वीणां निभृतं मन्दं निकुलयति निन्दति। सङ्गीतसमाप्तिं करोतीति यावत्। कस्मिन् सति त्वया पशुपतेर्विविधमनेकप्रकारं त्रिपुरविजय-यागध्वंस-हालाहलधारण-जलन्धरवध-गजासुरवधादिकं अवदानं वृत्तं कर्म वक्तुं निगदितुं आरब्धे उपक्रान्ते सति, किंभूतया त्वया, विपञ्च्या सप्ततन्त्रीवीणया गायन्त्या उपगायन्त्या पुनश्चलितशिरसा अन्तः सन्तोषवशात् स्वयं शिरः कम्पयन्त्या, किंविधां वीणां त्वदीयैः त्वद्वचनसंबन्धिभिः साधुवचनैः मधुवचनैरपलपिततन्त्रीकलरवां, अपलपितः तन्त्रीकलरवो यस्याः सा तां, किंविधैर्वचनैः माधुर्यैः माधुर्यगुणयुक्तैः, निभृतमित्यनेन केनाप्यपरिज्ञाततां वर्णयित्रा कविना लज्जावशात् सरस्वत्याः सङ्गीताङ्गनाट्यभङ्गः व्याजान्तरेण तयैव कारित इति सूचितम्॥ ६६॥

## पदार्थचन्द्रिका

अथ भवान्या वाणीं स्तौति—विपञ्च्येति। वीणया पशुपतेरवदातं निर्मलं चरितं गायन्ती वाणी सरस्वती निभृतं निश्चलं यथा स्यात्तथा चोलेनोपरिवस्त्रेण वीणां निचुलयति गोपायति लज्जयेति शेषः। अत्र हेतुं वदन्वाणीं विशिनष्टि—त्वदीयैर्माधुर्यैः त्वदीयवाणीगतमाधुर्यैः अपलपितो निह्नुतस्तन्त्रीणां वीणागुणानां कलरवो यस्यास्तां, कदेत्यपेक्षायामाह—त्वया साधुवचने वक्तुमारब्धे सति चमत्कारवशात् चलितमीषत्कम्पितं शिरो यस्यास्तया इति भवानी विशेष्यते। संव्यानमुत्तरीयं च चोलः कूर्पासकोऽस्त्रियामित्यमरः॥ ६६॥

## डिण्डिमभाष्यम्

हे परमेश्वरि, विपञ्च्या वीणया विविधं नानाभेदं पशुपतेर्महादेवस्य अवदातं पराक्रमजालं गायन्ती उपवीणयन्ती वाणी वाग्देवता कर्त्री, स्वगानानन्तरं साधुवचनैः 'साधु साधु सम्यग्गीतं भवत्या' इति गीतोपलालनवचनैः सह चलितशिरसा कम्पितमौल्या त्वया वक्तुमारब्धे सति, 'एतादृशं गीतमतिमधुरं आस्वादितमपरमपि वत्से सरस्वति प्रकाश्यतां' इत्येवंरूपेण वचनेन वक्तुमारब्धे, त्वदीयैः त्वद्वदनवर्तिमाधुर्यैः अपहसिततन्त्रीकलरवां, अपहसितः तिरस्कृतः तन्त्रीणां गुणानां कलोऽव्यक्तमधुरो नादो यस्यास्तां तथोक्तां, निजामात्मीयां वीणां वल्लकीं चोलेन 'चुल आच्छादने' इति प्रसिद्धेन निचुलयति आवृतां करोति, सङ्गीत-

समाप्तिमेव करोतीति यावत्। ... निभृतमित्यनेन केनाप्यपरिज्ञाततां वर्णयता कविना लज्जावशात् सरस्वत्याः सङ्गीतगोष्ठीभङ्गो व्याजान्तरेण तयैव कारित इति सूचितम्॥ ६६॥

गोपालसुन्दरी

विपञ्च्येति—विपञ्च्या वीणया विविधं नानाप्रकारं पुररिपोर्महेशस्यावदानं निर्मलचरितं गायन्ती वाणी सरस्वती निभृतं यथा स्यात्तथा चोलेनोपरिस्थवस्त्रेण वीणां लज्जया निचुलयति आच्छादयति। लज्जाहेतुं विशिनष्टि—त्वया चलितशिरसा कम्पितशिरसा साधुवचने साधुवादे वक्तुमारब्धे सति त्वदीयैः साधुवचनसंबन्धिभिः माधुर्यैरपलपितो निह्नुतः तन्त्रीणां कलो रवो यस्याः सा इत्यर्थः। विष्णुपक्षेऽप्येवम्॥ ६६॥

आनन्दलहरीटीका

विपञ्च्येति—चलितं कंपितं शिरो यस्याः, सा तया त्वया साधुवचने साधुवादे वक्तुमारब्धे सति, साधुवदने इति पाठे संबोधनम्। कश्चित्तु साधुवचनैरिति पाठं कल्पयित्वा साधुवचनैः सह चलितशिरसेत्यर्थ इत्याह। तदनादरकरं, वचसां चलनाभावेन साहित्यासंभवात्। तृतीयान्तपाठस्य प्रामाणिकत्वे वक्तुमित्यत्र कथंचिद्योजनीयम्। वाणी सरस्वती निभृतमन्यैरलक्षितं यथा स्यात्तथा निजां वीणां चोलेन वस्त्रेण निचुलयति आच्छादयति लज्जयेति भावः। चुल आच्छादने चुरादिरदन्तः। कीदृशी, पशुपतेः शिवस्य विविधमनेकप्रकारं अवदानं पूर्वकर्म विपञ्च्या सप्ततन्त्रीकवीणया गायन्ती। हेतुगर्भं वीणाविशेषणमाह—त्वदीयैः त्वद्वचनसंबन्धिभिः माधुर्यैरपलपितोऽभिभूतस्तन्त्रीणां गुणानां कलोऽव्यक्तमधुरो रवो ध्वनिर्यस्यास्ताम्। अवदानं कर्म वृत्तं इति, तथा ध्वनौ तु मधुरास्फुटे कलः इति, तथा विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी इति चामरः॥ ६६॥

**करात्रेण स्पृष्टं तुहिनगिरिणा वत्सलतया**
**गिरीशेनोदस्तं मुहुरधरपानाकुलतया।**
**करग्राह्यं शम्भोर्मुखमुकुरवृन्तं गिरिसुते**
**कथंकारं ब्रूमस्तव चुबुकमौपम्यरहितम्॥ ६७॥**

கராக்ரேண ஸ்ப்ருஷ்டம் துஹிநகிரிணா வத்ஸலதயா
1 3 1 1 1 3 1 1

கிரீசேநோதஸ்தம் முஹுரதரபாநாகுலதயா।
3 3 1 4 1 1 1

கரக்ராஹ்யம் சம்போர் முகமுகுரவ்ருந்தம் கிரிஸுதே
1 3 4 2 1 1 3 1
கதங்காரம் ப்ரூமஸ் தவ சுபுகமௌபம்ய ரஹிதம் ॥
1 2 1 3 1 1 3 1 1 1

हिमगिरि की अंगुलियों से लालित वात्सल्यभावविह्वल
गिरिपति के हाथों उन्नमित अधरपानार्थ राग प्रशिथिल।
मुखमुकुर की मूठ सी शिव के करग्राह्य अनुपम शोभन
ठुड्डी का तेरी कर सकता है गिरिसुते कौन वर्णन? ॥

### लक्ष्मीधरा

कराग्रेण अग्रकरेण, स्पृष्टं संमृष्टं, तुहिनगिरिणा हिमाद्रिणा जनकेन, वत्सलतया वात्सल्येन पित्रादीनां पुत्रादिषु प्रीतिः वात्सल्यशब्देनोच्यते। यथोक्तं सर्वज्ञसोमेश्वरेण—'पुत्रादौ वात्सल्यं, पत्न्यादौ प्रेम, शिष्यादावनुग्रहः, अग्रजादौ भक्तिः। अत्र आदिशब्देन गौणपुत्रगौणपत्नीगौणशिष्यगौणाग्रजाः गृह्यन्ते' इति। गौणपुत्रः पुत्रत्वेन कल्पितसम्बन्धः न तु क्रीतादिः, तस्य पुत्रत्वात्। गौणपत्नी भुजिष्या। गौणशिष्यः शिष्यत्वेन कल्पितसम्बन्ध एव, न तु स्वीकृतमन्त्रग्रहणमात्रः। गौणाग्रजः कल्पितभ्रातृसम्बन्धः, न तु क्षेत्रजादिः। गिरीशेन शम्भुना, उदस्तं उन्नमितं, मुहुः अत्यर्थं, अधरपानाकुलतया अधरपानव्यग्रतया अतिप्रेम्णेत्यर्थः। करग्राह्यं करेण ग्रहीतुं योग्यं मुखावलोकनचुम्बनव्यग्रतया, शम्भोः मुखमुकुरवृन्तं मुखमेव मुकुरो दर्पणः तस्य वृन्तं तदाधारदण्डः तं गिरिसुते! हिमाद्रितनये! कथङ्कारं कथंकृत्वा ब्रूमः वर्णयामः। 'विभाषा कथमि लिङ् च' इति लिङर्थे संप्रधारणायां लट्। तव भवत्याः, चुबुकं अधराधःकर्णिकां, औपम्यरहितं उपमारहितम्। उपमाराहित्यं तु कमलकर्णिकादर्पणवृन्तोदयाद्रिशिखरशिलादीनां, शम्भुहिमगिरिकरोपलालनाजनितसौभाग्यातिशयाभावेन भगवतीचुबुकस्य तुलना नास्तीति। अत्रेत्थं पदयोजना—हे हिमगिरिसुते। तुहिनगिरिणा वत्सलतया कराग्रेण स्पृष्टं गिरीशेन अधरपानाकुलतया मुहुरुदस्तं शम्भोः करग्राह्यं औपम्यरहितं तव मुखमुकुरवृन्तं चुबुकं कथङ्कारं ब्रूम इति। अत्रानन्वयालङ्कारो ध्वन्यते, सर्वोपमानिषेधेन स्वस्य स्वयमेव सदृशमित्यनन्वयालङ्कारप्रतीतेः॥ ६७॥

### सौभाग्यवर्धनी

कराग्रेणेति। तुहिनगिरिणा हिमाचलेन अतिप्रीत्या उपलालनादिषु वात्सल्येन स्पृष्टं पुत्रीस्नेहेन कराग्रेण स्पृष्टम्। गिरिशेन उदस्तं उन्नमितं मुहुः वारंवारं अधरपानाकुलतया।

अथ च शम्भोः करग्राह्यं मुखमुकुरवृन्तं मुखदर्पणमण्डलम्। हे गिरिसुते! तव चिबुकमौपम्यरहितं कथंकारं ब्रूमः, केन प्रकारेण ब्रूमः? तं प्रकारं त्वमेव जानासि। स प्रकारो नास्मद्गोचरः। तव चिबुकस्य तवैव चिबुकं सदृशमित्युपमालङ्कार एवालङ्कारः। अत्र मुहुरधरपानाकुलतयेति पित्रोः सुरतवर्णनवदनुचितम्, भगवतः शङ्करावतारस्य शङ्कराचार्यस्य। वदनं इति वा पाठो युक्तः॥ ६७॥

### अरुणामोदिनी

चुबुकं वर्णयति—कराग्रेणेति। हे गिरिसुते! शैलाधिराजनन्दिनि! तुहिनगिरिणा वत्सलतया वात्सल्यरसेन, कराग्रेण हस्ताग्रेण स्पृष्टं जातसंपर्कम्। पित्रादयः पुत्रादीना-मुपलालनसमये चुबुकं स्पृशन्तीति प्रसिद्धिः। गिरीशेन महादेवेन, जगन्मङ्गलमूलभूते संभोग-समये, अधरपानाकुलतया बिम्बाधररसग्रहणपारवश्येन, मुहुः सर्वदा, उदस्तं उत्तोलितम्। लज्जया खलु स्त्रीणां संभोगसमये मुखमवनतमेव जायते। तदुत्तानितमेव सुचुम्बं भवती-त्यभिप्रायः। किं च करग्राह्यं पाणिना उपलालनीयं, शम्भोः महादेवस्य, मुखमुकुरवृन्तम्। भगवत्या मुखे दर्पणायमाने सर्वमेव पश्यति महादेवः। अत एव शम्भोः दर्पणस्थानीयं भगवत्या मुखम्। वृन्तमिव हस्तग्रहणयोग्योऽधोभागनालविशेषः, एवंभूतं तव चुबुकं औपम्य-रहितम्। उपमा तावन्नास्त्येव सर्वावयवेष्वपि समग्रलावण्यसत्वात् चुबुकस्योपमैव नास्ति। नयनबाहुलतादीनां कुवलयशिरीषमालाशिखिपिञ्छाद्युपमानवस्तूनि सुलभानि। निरुपमस्य तु तव चुबुकस्योपमापदार्थः न सुलभ इति सर्वातिशायिगुणगणबृंहितं तव चुबुकं कथंकारं ब्रूमः। केन प्रकारेण वर्णयामः? अनुपमस्य वर्णनमतिदुष्करमेव॥ ६७॥

### आनन्दगिरीया

कराग्रेणेति। हे मातस्तव चिबुकं कथं ब्रूमः। किमुपमानेन वर्णयामः। किंलक्षणं चिबुकं औपम्यरहितं, औपम्यमुपमा तद्रहितं, कीदृशं तुहिनगिरिणा वत्सलतया लालनावसरे कराग्रेण स्पृष्टम्। मातापितरौ यदा बालं लालयतः तदा चिबुके कराग्रेण स्पृशतः। पुनः किंविधं, अधरपानाकुलतया मुहुर्मुहुः वारं वारं गिरीशेनोदस्तं, गिरीशेन श्रीमहादेवेन भर्त्रा वारं वारं उच्चैर्धृतं, कया अधरपानाकुलतया। मुखमुकुलवृन्तमिव शम्भोः करग्राह्यम्। एतावता यदि किमपि वस्तु एतादृशं स्यात् तदा केनोपमीयेत। तत्तु नास्तीत्यभूतोपमाना त्वम्। अथवा गगनं गगनाकारमित्यादि वर्णनीयमिति। कराग्रेणेति श्लोकस्य रहस्यार्थः। कराग्रेणेति। कराग्रेण ङ ञ ण तुहिनगिरिणा नम, गिरीशेन ए, मुहुः म अधर ए, पान फ, कुलतया कुल, कर घभ्र, शम्भो ह, ग्राह्यं रेफ आ गिरिसुते भगवति ब्लुम्। अयं मनुः

कुलभगवती। तथा 'लज्जादौ परमेशानि पञ्चपञ्चभगान्वितम्। रात्रो योनिगतो देवी कुलभगवती च ब्लुमन्तेयमिति। ह्रीं ङञणनमे फें कुलभगवति ब्लुम्। कुलभगवत्या मन्त्रोद्धारः॥

### तात्पर्यदीपिनी

कराग्रेणेति। हे गिरिसुते, तव चुबुकं अधरार्धकणिकां कथङ्कारं कथं कृत्वा ब्रूमः। कथंभूतं, औपम्यरहितं औपम्येन साम्येन रहितं, पुनः, तुहिनगिरिणा जनकेन वत्सलतया कराग्रेण स्पृष्टं, वात्सल्यशब्देन पित्रादीनां पुत्रादिषु प्रीतिः, स्त्रियः पत्यादौ प्रेम, गुरोः शिष्यादावनुग्रहः, ज्येष्ठस्यानुजादौ भक्तिरुच्यते। पुनर्गिरिशेन सदाशिवेन, अधरपानाकुलतया मुहुरुदस्तमुन्नमितं, पुनः शम्भोः करग्राह्यं मुखमुकुरवृन्तमिव, मुखमेव मुकुरं तस्य वृन्तं तत्र मुखे मुकुराकारे गिरिशमुखप्रतिबिम्बनादिति भावः॥ ६७॥

### पदार्थचन्द्रिका

अथ क्रमप्राप्तं चिबुकं वर्णयति – कराग्रेणेति। हे गिरिसुते तव चिबुकं कथंकारं कथंकृत्वा, केन प्रकारेणेत्यर्थः ब्रूमो वर्णयामो न कथमपीत्यर्थः। वर्णनप्रकारविरहे हेतुं वदन् चिबुकं विशिनष्टि–उपमैवौपम्यं स्वार्थे ष्यञ् औपम्येन रहितमौपम्यरहितम्। तथापि स्वरूपमात्रं वर्णनीयमित्यभिप्रायेण विशिनष्टि – वत्सलतया इति स्नेहेन, तुहिनगिरिणा कराग्रेण स्पृष्टमिति गिरेरपि स्नेहजनकत्वेनात्यद्भुतत्वं ध्वन्यते। मुहुर्वारं वारं, अधरपानाकुलतया गिरीशेनोदस्तं उत्क्षिप्तम्। एतेन कामविरोधिनोऽपि महादेवस्य कामजनकत्वेन निरुपमं सौन्दर्यं सूच्यते। एवंभूतं मुखमुत्प्रेक्षते। शम्भोः करेण ग्राह्यं ग्रहीतुं योग्यं, मुखं मुकुर इव मुखमुकुरः, तस्य वृन्तमिवेत्यर्थः। दर्पणे मुकुरादर्शावित्यमरः॥ ६७॥

### डिण्डिमभाष्यम्

हे गिरिसुते, शैलाधिराजतनये, तुहिनगिरिणा हिमवता वत्सलतया वात्सल्यरसेन, कराग्रेण हस्ताग्रेण स्पृष्टं जातसंपर्कम्। पितादयः खलु पुत्रादीनामुपलालनसमये चुबुकं स्पृशन्तीति प्रसिद्धिः। गिरीशेन महादेवेन जगन्मङ्गलमूलभूतेन सम्भोगसमये अधरपानाकुलतया बिम्बाधररसग्रहणपारवश्येन मुहुः सर्वदा उदस्तमुत्तोलितम्। लज्जया खलु स्त्रीणां संभोगसमये मुखमवनतमेव जायते। तदुत्तोलितमेव सुचुम्बनं भवतीत्यभिप्रायः। किञ्च करग्राह्यं पाणिनोपलालनीयं शम्भोर्महादेवस्य मुखमुकुरवृन्तम्। भगवत्या मुख एव दर्पणोपमाने सर्वमेव भगवान्पश्यति महादेवः। अत एव शम्भोर्महादेवस्य दर्पणस्थानीयं भगवत्या मुखं, तस्य वृन्तमिव हस्तग्रहणयोग्योऽधोभागाङ्गविशेषः। एवंभूतं तव चुबुकं औपम्यरहितम्।

उपमानं च नास्त्येव। सर्वावयवेष्वपि समग्रलावण्यसुन्दरत्वात्, चुबुकस्योपमैव नास्ति। नयन-बाहूलकादीनां कुवलयशिरीषमालाशिखिपिञ्छानि उपमानवस्तूनि सुलभानि। निरुपमस्य तु तव चुबुकस्य नोपमापदार्थः सुलभ इति सर्वातिशायिगुणगणबृंहितं तव चुबुकं कथङ्कारं ब्रूमः, केन-प्रकारेण वर्णयामः। अनुपमस्य वर्णनं दुष्करमेव॥ ६७॥

गोपालसुन्दरी

कराग्रेणेति। हे गिरिसुते, तव चुबुकं कथङ्कारं केन प्रकारेण ब्रूमो वर्णयामः। तत्र हेतुः—औपम्यरहितं सादृश्यप्रतियोगिन उपमानस्य विरहात्, तुहिनगिरिणा हिमालयेन, वत्सलतया पुत्रीस्नेहेन, कराग्रेण हस्ताग्रभागेन स्पृष्टम्। गिरीशेन शिवेन अधरपानाकुलतया मुहुः वारंवारं, उदस्तमुत्तोलितम्। करग्राह्यं करग्रहणयोग्यं मुखमुकुरस्य मुखादर्शस्य वृन्तं दण्डमित्यर्थः। विष्णुपक्षे—तुहिनस्य हिमस्य गिरिः पर्वतो यत्रासौ तुहिनगिरिश्चन्द्रः, तेन कराग्रेण किरणाग्रेण स्पृष्टम्। हे वत्सल, गिरीशस्य महेशस्यापि इनः ईश्व तया प्रसिद्धया लक्ष्म्या राधया वा अधरपानाकुलतया मुहुरुदस्तमुत्तोलितं, शम्भोः कल्याणजनकस्य सूर्यस्य करग्रहणयोग्यं, कमलसदृशत्वात्, अथवा शं कल्याणं भवत्यस्मादिति शम्भोस्तव चिबुक-मित्यन्वयः। करग्राह्यमर्थात् लक्ष्म्या राधया वा। कीदृशं चिबुकं, गिरिसुतेकथङ्कारं, गिरिसुता पार्वती, ईः लक्ष्मीः, तयोः कथं इदं सृष्टमिति शब्दाकारकं, औपम्यरहितं ब्रूम इत्यन्वयः। गिरिसुते इति पूर्ववत् विष्णुसंबोधनं वा॥ ६७॥

आनन्दलहरीटीका

कराग्रेणेति। हे गिरिसुते तव चिबुकं अधराधोभागं कथङ्कारं ब्रूमः केन प्रकारेण वर्णयामः। यत औपम्यमुपमा तद्रहितं कुत्राप्येतदुपमा नास्तीत्युपमेयमेव दुर्लभं, दूरे ताव-दुपमा, न वर्तत इति भावः। तुहिनगिरिणा हिमालयेन वत्सलतया वात्सल्येन कन्यास्नेहेनेति यावत्, कराग्रेण स्पृष्टं हस्ताग्रलालितं गिरीशेन शिवेन अधरपानाकुलतया मुहुर्वारंवारं उदस्तं उत्तोलितं शम्भोः करेण ग्राह्यं ग्रहणस्य धारणस्य योग्यं उपचितं मुखरूपस्य मुकुरस्य दर्पणस्य वृन्तं धारणदण्डम्। इदं च त्रितयं यथाक्रमं बाल्ये नवोढतादशायां प्रौढतादशायां च बोध्यम्॥

**भुजाश्लेषान्नित्यं [1]पुरदमयितुः कण्टकवती**

**तव ग्रीवा धत्ते मुखकमलनालश्रियमियम्।**

---

1 पुरविजयिनः

**स्वतः श्वेता काला[1]गुरुबहुलजम्बालमलिना**
**मृणालीलालित्यं वहति [2]यदधो हारलतिका ॥ ६८ ॥**

புஜாச்லேஷாந் நித்யம் புரதமயிது: கண்டகவதீ
4 1 1 3 1 1 1 1 1

தவ க்ரீவா தத்தே முககமலநால ச்ரியமியம் |
1 3 4 1 1 2 1

ஸ்வதச் ச்வேதா காலாகுரு பஹுல ஜம்பால மலிநா
1 1 1 3 3 3

ம்ருணாளீ லாலித்யம் வஹதி யததோ ஹாரலதிகா ॥
1 1 3 4 1 1

सन्तत बाह्वालिंगन के कारण पुरहर के रोमाञ्चित
तेरा गल सोहता है मुखकमलनाल शोभासंयुत
उसके नीचे सहजश्वेत मुक्तामालाएं मलिन बनीं
कालागुरु धूमराशिके जमने से पंकिला बनी
मृदु मृणालिनी की सी शोभा दर्शाती है गुहजननी! ॥

लक्ष्मीधरा

भुजाश्लेषात् भुजाभ्यामालिङ्गनात्, नित्यं सततं, पुरदमयितुः पुरान्तकस्य कण्टकवती सरोमाञ्चा, तव ग्रीवा कण्ठनालः, धत्ते दधाति, मुखकमलनालश्रियं मुखमेव कमलं तस्य नालश्रियं दण्डसौभाग्यं, इयं ग्रीवा, स्वतः श्वेता स्वभावतः स्वच्छा, कालागुरुबहुलजम्बालमलिना कालो नीलवर्णः अगुरुः लघुकाष्ठं कृष्णागुरुरित्यर्थः तस्य बहुलः समृद्धः जम्बालः पङ्कः तेन मलिना मलीमसा, मृणालीलालित्यं बिसलतासौभाग्यं, वहति प्राप्नोति। यत् यस्मात्कारणात्, अधः अधःप्रदेशे, हारलतिका मुक्तावलिः। अत्रेत्थं पदयोजना— हे भगवति! तवेयं ग्रीवा पुरदमयितुः भुजाश्लेषात् नित्यं कण्टकवती मुखकमलनालश्रियं धत्ते, यत् अधः स्वतः श्वेता कालागुरुबहुलजम्बालमलिना हारलतिका मृणालीलालित्यं वहति। पूर्वार्धे निदर्शनालङ्कारः, मुखकमलनालश्रियमित्यत्र श्रीसदृशी श्रीरिति प्रतिबिम्बाक्षेपात्। रूपकमप्यलङ्कारः, मुखकमलमित्यत्र मुखे कमलत्वरूपणात्। अनयोरङ्गाङ्गिभावेन सङ्करः। उत्तरार्धेऽपि निदर्शनालङ्कारः, मृणालीलालित्यमित्यत्र लालित्यसदृशलालित्यमिति प्रतिबिम्बाक्षेपात्। उभयोरङ्गाङ्गिभावेन सङ्करः। ६८ ॥

---

1 गरुबहल, गुरुबहल 2 यदहो, तदधो

### सौभाग्यवर्धनी

भुजेति । भुजाश्लेषात् नित्यं पुरदमयितुः कण्टकवती, रोमाञ्चितवती, तव ग्रीवा मुखकमलनालश्रियं इयं यत्कारणात् धत्ते । स्वतः श्वेता स्वभावतः श्वेता, कालागरुबहुल-जम्बालमलिना कृष्णागरुपङ्कमलिना, मृणालीलालित्यं वहति, यत् यतः, हारलतिका । ग्रीवा मुखकमलनालश्रियं धत्ते कण्टकित्वसाम्यादिति निदर्शनात् हारलतिका मृणालीलालित्यं धत्ते, श्वेतगुणसाम्यात् कृष्णागरुजम्बालकृतमालिन्यसाम्याच्चेति निदर्शनमेव । अहो इति विस्मयः । अत्र रूपकनिदर्शनापह्नुतिहेतुविस्मयतासङ्करः ॥ ६८ ॥

### अरुणामोदिनी

ग्रीवामभिवदति–भुजाश्लेषादिति । हे परमेश्वरि! नित्यं अनवरतं, पुरदमयितुः ईश्वरस्य, भुजाश्लेषात् आलिङ्गनसौभाग्यात्, कण्टकवती पुलकघटिकापूर्णाकारा, तव ग्रीवा मुखकमलनालश्रियं वदननलिनकाण्डसौभाग्यं धत्ते । अधस्तात् कर्दमसंसर्गो मृणालसंसर्गश्च कथं न भवतीत्याह–स्वत इति । स्वतः श्वेता स्वभावादेव शुक्लवर्णा, कालागुरुबहुलजम्बालमलिना कृष्णागुरुसुगन्धचर्चापङ्केन मलिना, सर्वतो दिग्धा, हारलतिका मुक्तामाला, मृणालीलालित्यं मृणालीव लालित्यं पङ्कसंकुलं काण्डाधोभागसंरूढपद्मिन्यङ्कुरसौभाग्यं यद्यस्मात् कारणात् वहति, तेन कारणेन ग्रीवा मुखकमलनालश्रियं धत्त इति संबन्धः । अहो इत्यनेन आश्चर्यपदेन सर्वाश्चर्य-सौन्दर्यलक्ष्मीसंपन्नशरीरयष्टेः तव ग्रीवालतागतं सौन्दर्यमाश्चर्यपरंपराधिरूढं इति मन्तव्यम् ॥

### आनन्दगिरीया

भुजाश्लेषादिति । हे मातः, तवेयं ग्रीवा मुखकमलनालश्रियं वहति धत्ते । मुखलक्षणं यत्कमलं तस्य नालमिव शोभते । कमलनाले कण्टका भवन्ति । पुरदमयितुः श्रीमहादेवस्य भुजाश्लेषात् कण्टकवती । श्रीमहादेवस्य भुजालिङ्गनोत्पादितरोमाञ्चः सात्विकभावः । अहो पार्वति, तत्तस्मात् हारलतिका मृणालीलालित्यं वहति । मौक्तिकानां माला मृणालीव शोभते । मृणालस्य कर्दममालिन्यमाह–स्वतः श्वेतापि कालागुरुबहुलजम्बालमलिना, काला-गुरुप्रमुखकर्पूरादिनिर्मितयक्षकर्दमाङ्गावलेपसंबन्धेन मलिनेति । भुजाश्लेषादिति पद्यस्य रहस्यार्थः–कालनित्यादिविद्यामाह–ग्रीवा षोडशस्वराः, भुजाश्लेषात् व्यञ्जनसंयोगात्, नाल-श्रियं श्रियं विस्तारं आधत्ते त्र्यक्षरात्मकान् नामरूपान्मन्त्राणामाविष्करोति । पुरदमयितुः युगाक्षरा । नित्यं नित्यभूतान् प्रत्यहजातदिनाक्षरान् । मृणालीला आईं हारलतिका परस्पर-ग्रथनेन युगाक्षरदिनाक्षरान् ई परस्पृष्टगन्धानां त्र्यक्षरात्मकत्वम् । अत्र सर्वा विद्याः त्र्यक्षर्य

एव। तथा स्वतः श्वेताः स्वतः सिद्धाः कालागुरुबहलजम्बालमसृणाः स्वतः श्वेतः स्वतः सिद्धः अगुरुः अकार एव गुरुर्मूलभूतं यस्य तत्तथा तत्। बहल षट्त्रिंशत्तत्त्वं तेन जम्बालः तेन अदृश्यस्पष्टभानः। अयमर्थः युगाक्षरदिनाक्षराभ्यां नानारूपविद्या विकाई षट्त्रिंशद्दिनं यावत् युगबाणा यावद्युगः। षट्त्रिंशदक्षराणां मध्ये एकैकमक्षरं तिष्ठति। एवं षोडशस्वरं यावत् एक एव युगाक्षरः। दिनाक्षरे तु षट्त्रिंशत् विंशद्दिनानि यावत् षट्त्रिंशदाम्न-कत्वादित्येवं विंशतिसहस्रसप्तशतषट्त्रिंशन्नामानि कालनित्याविद्यायाः। एतत्सर्वं गुरुमुखा-द्बोद्धव्यम्। अयं पारायणजपः नित्यत्वेन निर्दिष्टः काम्य इति। अत्र रूपकापह्नुतिनिदर्शनाद्य-लङ्कारसांकर्यम्॥ ६८॥

### तात्पर्यदीपिनी

भुजेति—हे मातः, तव ग्रीवा मुखकमलनालश्रियं मुखमेव कमलं तस्य नालं काण्डं तस्य श्रीः, तां धत्ते आश्रयति। ननु कमलनालं श्वेतं अधस्तात् कर्दमसंसर्गो मृणालसंसर्गश्च तत्कथं न भवेदित्याशङ्कायामाह—किंविधा ग्रीवा, स्वतः स्वभावेन श्वेता शुभ्रवर्णा, कालागरु-बहलजम्बालमलिना, कालागरोः कृष्णागरोः बहुलो यो जंबालोऽतिसुगन्धचर्चापङ्कः तेन मलिना सर्वतो दिग्धा पुनः मलीमसा च, तदधः तस्या ग्रीवाया अधः, हारलतिका हारावली मृणालीलालित्यं बिसलतासौभाग्यं वहति। ननु मृणालनालं कण्टकितं भवति, तत्राह—पुरदम-यितुः पुरान्तकस्य भुजाश्लेषादालिङ्गनसौभाग्यान्नित्यं अत्यन्तं कण्टकवती सरोमाञ्चा। अहो सर्वाश्चर्यं लक्ष्मीप्रसन्नशरीरयष्टेः तव ग्रीवागतं सौन्दर्यं आश्चर्यपरंपराधिरूढमिति मन्तव्यम्॥

### पदार्थचन्द्रिका

अथ भवानीग्रीवां वर्णयति—भुजेति। मुखं कमलमिव मुखकमलं तस्य यन्नालं तस्य श्रियं शोभाम्। कमलनालसादृश्यं वक्तुं ग्रीवां विशिनष्टि—कण्टकवती रोमाञ्चवती। नित्यमिति पदमुभयत्र संबध्यते। यस्या अधो हारलतिका मृणालीलालित्यं मृणालशोभां वहति बिभर्ति। मृणालीसादृश्यार्थं हारलतिकां विशिनष्टि—कालागरुः कृष्णागरुः तस्य बहलजंबाल इव, स तथा, तेन मलिना। स्पष्टमन्यत्। जंबालः शैवलः पङ्क इति मेदिनीकरः। ६८॥

### डिण्डिमभाष्यम्

हे परमेश्वरि! नित्यमनवरतं पुरदमयितुरीश्वरस्य भुजाश्लेषात् आलिङ्गनसौभाग्यात्, कण्टकवती पुलकपालिकापूर्णाकारा तव ग्रीवा मुखकमलनालश्रियं वदननलिनकाण्डसौभाग्यं धत्ते आश्रयति। कमलस्य चेन्नालं तत् स्यात्, अधस्तात्कर्दमसंसर्गो मृणालसंसर्गश्च कथं न

भवतीत्याशंकयाह – स्वतः श्वेता स्वभावेनैव शुभ्रवर्णा, कालागुरुबहुलजम्बालमलिना कालागरुसुगन्धचर्चापङ्केन मलिना सर्वतो दिग्धा, हारलतिका मुक्तामाला, मृणालीलालित्यं पङ्कसंकुलकाण्डाधोभागसंरूढपद्मिन्यंकुरसौभाग्यं, यदस्मात्कारणात् वहति, तेन कारणेन ग्रीवा मुखकमलनालश्रियं धत्ते इति संबन्धः। अहो इत्यनेन आश्चर्यवदेन सर्वाश्चर्यसौन्दर्यलक्ष्मीसंपन्नशरीरयष्टेः तव ग्रीवालतागतं सौन्दर्यं आश्चर्यपरंपराधिरूढमिति मन्तव्यम् ॥ ६८ ॥

### गोपालसुन्दरी

भुजाश्लेषादिति। पुरदमयितुः शिवस्य भुजाभ्यामाश्लेषात् आलिङ्गनात् कण्टकवती तवेयं ग्रीवा मुखकमलस्य मुखारविन्दस्य नालश्रियं काण्डशोभां धत्ते। स्वतः स्वभावतः श्वेता, कालागुरुबहलजम्बालेन कृष्णागुरुसमूहपंकेन मलिना हारलतिका। अहो आश्चर्यं, मृणालीलालित्यं बिसशोभां यद्यस्मात् वहति धत्ते। यदहो इत्यत्र तदध इत्यपि पाठः। तत्र तदधो ग्रीवाया अध इत्यर्थः। विष्णुपक्षे – पुरस्य जाग्रत्स्वप्नसुषुप्त्यवस्थात्रयस्य दमयितुः नाशकस्य तव भुजाश्लेषात् लक्ष्मीभुजालिङ्गनात्। यद्वा कण्टकवती ईन व ग्रीवा इति पदच्छेदः। ईः लक्ष्मीः तया इन युक्तः। वकार इवार्थे, उत्प्रेक्षाद्योतकः नालश्रियमित्यनन्तरं योज्यः। अथवा ई लक्ष्मीः तस्यामितं लक्ष्म्यानुगतं विष्णुं वातीति ईतवा, सा चासौ ग्रीवा चेति भगवदाश्लिष्टा लक्ष्म्या ग्रीवेत्यर्थः। कीदृशी पुरदमयितुस्तव भुजाश्लेषात् कण्टकवतीत्यर्थः। शेषं समानम् ॥

### आनन्दलहरीटीका

भुजाश्लेषादिति – पुरविजयिनो महेशस्य भुजाभ्यामाश्लेषात् आलिङ्गनात् नित्यं कण्टकवती, कमलनालपक्षे कण्टकिता, तवेयं ग्रीवा मुखरूपस्य कमलस्य नालश्रियं काण्डशोभां धत्ते धारयति। यदधो यस्या ग्रीवाया अधः, हाररूपा लतिका मृणाल्याः स्वल्पमृणालस्य लालित्यं शोभां वहति धारयति। स्वतः स्वभावात् श्वेता कालागरुरूपैः बहुलजम्बालैः, बहुकर्दमैर्मलिना। यदध इत्यत्र यदहो इति पाठे यत् यस्मात् अहो आश्चर्यमित्यर्थः। स्त्री स्यात्काचिन्मृणाल्यादिर्विवक्षापचये यदीत्यमरः। पुरविजयिन इत्यत्र पुरदमयितुरित्यपि क्वचित्पाठः ॥ ६८ ॥

**गले रेखास्तिस्रो गतिगमकगीतैकनिपुणे**
**[1]विवाहव्यानद्ध[2]प्रगुणगुणसंख्याप्रतिभुवः।**

---

1 विवाद 2 त्रिगुण

विराजन्ते नानाविधमधुर[1]रागाकरभुवां
त्रयाणां ग्रामाणां स्थितिनियमसीमान इव ते ॥ ६९ ॥

கலே ரேகா꞉ஸ் திஸ்ரோ கதிகமக கீதைக நிபுணே
விவாஹ வ்யாநத்த ப்ரகுண குண ஸங்க்யா ப்ரதிபுவ꞉ ।
விராஜந்தே நாநாவித மதுர ராகாகர புவாம்
த்ரயாணாம் க்ராமாணாம் ஸ்திதி நியம ஸீமாந இவ தே ॥

गायन के गतिगमकगीत तत्वों में एकमात्र निपुणे!
तेरी ग्रीवा की रेखाएं तीन सोहती हैं सुगुणे!
उद्वाह गले में बन्धे तीन सूत्रों के बन ज्ञापक
नानाविध रागों के मधुर उद्गम स्थानों के सूचक
तीनों ग्रामों की षड्जादि बनी सीमाएं सुविभाजक ॥

लक्ष्मीधरा

गले कण्ठप्रदेशे, रेखाः भाग्यरेखाः, वलीरूपाः तिस्रः—ललाटे च गले चैव मध्ये चापि वलित्रयम्। स्त्रीपुंसयोरिदं ज्ञेयं महासौभाग्यसूचकम्॥ इति सामुद्रिकम्। गतिगमकगीतैकनिपुणे! गतिः सङ्गीतगतिः सङ्गीतस्य द्वे गती मार्गो देशी चेति। गमकः स्वरस्य कम्पः—'स्वरस्य गमकः कम्पस्स च पञ्चविधस्स्मृतः'। इति भरते। ते च पञ्चप्रकारास्तत्रैव ज्ञातव्याः। गीतं धातुमात्वात्मकं द्विविधम्। 'वाङ्मातुरुच्यते गेयं धातुरित्यभिधीयते। इति॥ तत्र एका मुख्या चासौ निपुणा च तस्यास्सम्बुद्धिः। विवाहव्यानद्धप्रगुणगुणसङ्ख्याप्रतिभुवः विवाहे उद्वाहसमये व्यानद्धाः विशेषेण मङ्गलसूत्रबन्धनानन्तरं तत्समीपे आ समन्तात् कण्ठं कृत्स्नमावृत्य नद्धाः बद्धाः प्रगुणगुणाः बहुतन्तुनिर्मितसूत्राणि। तानि त्रीण्येव यथोक्तं गृह्यकारैः—'माङ्गल्यतन्तुनानेन बध्वा मङ्गलसूत्रकम्। वामहस्ते भरं बध्वा कण्ठे च त्रिसरं तथा॥' इति। इदं चानुष्ठानं देशतो व्यवस्थापितम्। अत एव क्वचिद्देशे मङ्गलसूत्रबन्धनं क्वचिद्देशे सरत्रयबन्धनं च क्वचिदुभयमपि नास्तीति। अस्य मतं सर्वत्रास्तीति। यद्वा—ग्रन्थकृतो देशे एतदुभयानुष्ठानं विद्यत एवेति ज्ञेयम्। प्रगुणगुणानां सङ्ख्या त्रित्वं तस्याः प्रतिभुवः। यथा प्रतिभूः उत्तमर्णस्य अधमर्णं ज्ञापयति एवं सङ्ख्यां ज्ञापयतीति

1 वागाकर

प्रतिभुव इत्युक्तम् । सङ्ख्याज्ञापकाः अस्मदाश्रयकण्ठे शम्भुना पूर्वं भगवतीविवाहसमये सरत्रयमस्मिन् स्थले बद्धमिति द्रष्टॄणां ज्ञापयति वलित्रयमिति भावः । विराजन्ते अतितरां प्रकाशन्ते । नानाविधमधुररागाकरभुवां नानाविधाः अनेकप्रकाराः मधुराः मनोरमा रागाः तेषामाकरभुवः गतिस्थानानि आश्रयभूताः तेषाम् । अयमर्थः—गतयः पञ्च, तदुत्थाः ग्रामरागाः त्रिंशत्, उपरागाः अष्टौ, रागास्तु विंशतिः, जनकरागाः पञ्चदश, भाषारागाः षण्णवतिः, विभाषारागाः विंशतिः, आन्तरा भाषाश्च त्रयः इत्यादिकं रागाध्यायप्रतिपाद्यमत्रावगन्तव्यम् । ते च रागाः प्रसिद्धाः, मध्यमावतीमाळवीश्रीभैरविवङ्गाळीवसन्तधन्यासीदेश्यादिकं रागाङ्गम् । वेळावतीशुद्धवराळीपुन्नागवराळीनाट्यादिकं भाषाङ्गम् । रामक्रियादिकं क्रियाङ्गम् । प्रवीधीधूर्जरीवराळीमलहरीप्रमुखं उपाङ्गं च रागशब्देन संगृहीतं इत्युक्तं नानाविधमधुररागाकरभुवां इति । त्रयाणां ग्रामाणां, ग्रामशब्दः समूहवाचकः सर्वे स्वराः त्रेधा संहताः षड्जग्रामो मध्यमग्रामो गान्धारग्राम इति त्रेधा स्वरसंहतिः । तत्र भूलोके ग्रामद्वयस्यैव प्रसरः । सप्तस्वराणामारोहावरोहक्रमेण मूर्छनाश्रयत्वम् । तच्च मन्द्रमध्यतारात्मना त्रेधा भवति । गान्धारग्रामस्य शिरस्थानत्वान्मन्द्रादिक्रमेणोपक्रमासंभवात् गान्धारग्रामो देवलोके प्रसृतः । यथोक्तं शार्ङ्गदेवेन—'ग्रामस्स्वरसमूहस्स्यान्मूर्छनादेस्समाश्रयः । तौ द्वौ धरातले स्यातां षड्जग्रामस्तथादिमः ॥ द्वितीयो मध्यमग्रामः तयोर्लक्षणमुच्यते । क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम् ॥ मूर्छनेत्युच्यते ग्रामद्वये तास्सप्त सप्त च' ॥ इति ॥ एताः मूर्छनाः शुद्धतानाः इत्युच्यन्ते । अतश्च भगवत्याः कण्ठवलित्रयवर्णनायां ग्रामत्रयकथनं देवलोकव्यवहाराद्युज्यत इत्यनुसन्धेयम् । तेषां ग्रामाणां स्थितिनियमसीमानः स्थितेः अवस्थानस्य नियमार्थं परस्परं ग्रामाणां सङ्करो मा भूदिति तेषामन्ते रचिताः सीमानः सेतव इव ते तव । अत्रेत्थं पदयोजना—हे भगवति! गतिगमकगीतैकनिपुणे! ते गले तिस्रो रेखाः विवाहव्यानद्धप्रगुणगुणसङ्ख्याप्रतिभुवः नानाविधमधुररागाकरभुवां त्रयाणां ग्रामाणां स्थितिनियमसीमान इव विराजन्ते । पूर्वार्धे अनुमानालङ्कारः, रेखागतत्रित्वस्य मङ्गलसरत्रित्वानुमापकत्वात् । अनुमानस्य विच्छित्त्यात्मकत्वं लौकिकालङ्कारवैलक्षण्यादेव । तद्वैलक्षण्यं च पक्षधर्मतामात्रात् व्याप्त्यभाव एव, उभयसद्भावे लौकिकमेव स्यादिति रहस्यम् । विच्छित्तिरलौकिकी शोभा । उत्तरार्धे उत्प्रेक्षालङ्कारः भगवत्याः कण्ठमध्यवर्तिस्वरग्रामत्रितयहेतुचिह्नतया वलित्रयस्य सम्भावनात् । ६९ ॥

### सौभाग्यवर्धनी

गले इति । हे गतिगमकगीतैकनिपुणे! तव गले तिस्रो रेखाः, विवाहव्यानद्धत्रिगुणगुणसंख्याप्रतिभुवः; विवाहसमये ईश्वरेण बद्धत्रिगुणीकृतमाङ्गल्यसूत्रस्य साक्षिणो

विराजन्ते। नानाविधमधुररागाकरभुवां नानाप्रकारषड्जमध्यमादिसप्तस्वरानुबन्धमधुरमाधुर्य-वसन्तमाधवगौडगुर्जरकर्णाटकानां रागादिगीतानां उत्पत्तिस्थानानां भूमीनां, त्रयाणां ग्रामाणां षड्जग्राममध्यमग्रामपञ्चमग्रामाणां, स्थितिनियमसीमान इव, त्वमत्र तिष्ठ, त्वमत्र तिष्ठेति स्थितिनैयत्यकृतः सीमानः स्फुरन्तीत्यर्थः। अत्रोपमा स्पष्टा, रूपकं च ॥ ६९ ॥

## अरुणामोदिनी

कण्ठगतरेखात्रयमुत्प्रेक्षते—गले इति। हे गतिगमकगीतैकनिपुणे! गतिः तेन पदेन सहितः रागसंदर्भः, गमकः स्थायिस्वरस्य पुनः पुनः पोषणम्, गीतं समुचितार्थप्रबन्धसंदर्भः, एतेषु स्थानेष्वेव संगीतशास्त्रं संपन्नम्। 'गतिस्तु रागसंदर्भमालापः परिकीर्तितः। गमको मुख्यनादस्य परिपोषो रसात्मकः। गीतं प्रबन्धरूढार्थं रञ्जकः शक्तिरुच्यते॥' इति। विवाह-व्यानद्धप्रगुणगुणसंख्याप्रतिभुवः; विवाहे महादेवेन कृते पाणिपीडने व्यानद्धो बद्धः प्रगुण-गुणः, यो माङ्गल्यसूत्ररूपः, तस्य संख्यायाः त्रिप्रकाराः प्रतिभुवः सदृश्यः। एतदुक्तं भवति—'विवाहकाले प्रथममेव माङ्गल्यसूत्रमिति कन्यायाः कण्ठे बध्यते। तस्य प्रगुणगुण इति संज्ञा। तेन माङ्गल्यसूत्रेण विना क्षणमपि न तिष्ठति सभर्तृका। 'पत्युः प्राणान् स्वकीयमाङ्गल्य-सूत्राभ्यन्तरे धारयन्ति पतिव्रतास्त्रियः' इति प्रसिद्धिः। अत एव माङ्गल्यसूत्रलक्षणं वसिष्ठेनोक्तम्—'ब्रह्मविष्ण्वीशरूपेषु रन्ध्रेष्वोतं त्रितन्तुकम्। त्रिरत्नं रुक्मजं स्त्रीणां माङ्गल्याभरणं विदुः॥' इति। माङ्गल्यसूत्रस्य गुणानां त्रिसंख्यया समानाः त्रिरेखाः कण्ठस्था इति तत्साम्यम्। ईदृग्लक्षणलक्षिताः तव गले रेखाः कथं विराजन्त इत्यत आह—नानाविधमधुररागाकरभुवां नानाविधानां मधुररागाणां श्रीरागमलहरीललिताभूपालादीनाम्, आकरभुवां उत्पत्तिस्थानभूतानां त्रिसंख्यानां ग्रामाणां गान्धारमध्यमषड्जाख्यानां रागकदम्ब-कानाम्, स्थितिनियमसीमान इव स्थित्यर्थमवस्थानार्थं नियमेन विशिष्टाः सीमानः प्रदेशाः नियमसीमानः, अन्योन्यकलहकारिणां सीमाविवादनिर्हरणाय देशद्वयसंधौ दीयमानवृक्षगर्तखात-शिलातुल्या रेखादयः प्रसिद्धाः। तद्वच्च तव गले सदा वर्तमानानां संगीतग्रामाणां स्थित्यर्थं नियमार्थं सीमान इव ते गले रेखाः दीप्तिं प्राप्नुवन्ति। अनेन संगीतरसिकता भगवत्या उपवर्णिता॥ ६९॥

## आनन्दगिरीया

गले रेखा इति। कण्ठे रेखात्रयं तु स्वभावेन वर्तते। कम्बुग्रीवा सेत्यभिधानात्। परमेश्वर्याः कण्ठे रेखात्रयं वर्ण्यते। हे परमेश्वरि, तव गले कण्ठे तिस्रो रेखा विराजन्ते। सामुद्रिके तु कण्ठस्थरेखात्रयं सुलक्षणत्वेनोक्तम्। किंलक्षणे गले गतिगमकगीतैकनिपुणे,

गतिश्च गमकाश्च गीतं च तानि, तत्रैकोऽसाधारणनिपुणः, यस्मिन् कण्ठे एतेऽनन्यसाधारणतयोत्पद्यन्ते, एतादृशे। अथवा हे गतिगमकगीतैकनिपुणे, आलापस्य मधुरतया प्रवाहन्यायेन प्रसारणं गतिः, 'गीतस्य ख्यालिति भाषा, गमकः गीयमानरागस्य गूढानां भूतस्वराणां मनोहरः कम्पः 'स्वरस्य कम्पो गमकः श्रोतृचित्तसुखावहः। स च पञ्चदशभेदः। तिरय... रितः, कम्पितः, लीनः, आन्दोलितं, वलितं, कुरूलं, अनाहतं, उल्लासः, हसितं, प्लावितः, गुंफितः, नामितः, मिश्रितः। गीतं रञ्जनस्वरसन्दर्शनसन्दर्भकः। गतिगमकप्रधाने गीते एकः, एकोऽसाधारणो वा निपुणः। किंलक्षणा रेखाः, विवाहव्यानद्धप्रगुणगुणसंख्याप्रतिभुवः, विवाहे व्यानद्धं यत्प्रगुणगुणं तस्य या संख्या तत्र प्रतिभुवः साक्षिण्यः। अयमर्थः – कर्णाटादिदेशे कुमारीणां विवाहावसरे कुंकुमारुणसूत्रत्रयनिर्मितं दोरकं माङ्गल्यार्थं गले बध्यते। तस्य नाम प्रगुणगुणमिति। तद्गले बद्धम्। तत्र सूत्राणि कियन्ति? सन्ति त्रीणि। एवं विभवे सति सौवर्णानि भवन्ति। तानि च ब्रह्मविष्णुरुद्रदैवतानि। तदुक्तं 'ब्रह्मविष्ण्वीशरूपं तु त्रिवृत्तं तत्त्रितन्तुकम्। त्रिरत्नं रुक्मजं स्त्रीणां माङ्गल्याभरणं विदुः' इति। तत्र प्रतिभुवः साक्षिण्यः। यदि चतुर्थमपि सूत्रं स्यात्तदा तत्प्रतिबिम्बभूता चतुर्थ्यपि रेखा उत्तिष्ठेदिति। क्वचित् त्रिगुणगुणसंख्याप्रतिभुव इति पाठः। तदा त्रिगुणस्य तस्य या गुणसंख्या, तस्यां संख्यायां प्रतिभुव इत्युत्प्रेक्ष्यते। लोकोत्तरवीणास्वरूपे तव कण्ठे प्रायस्त्रयाणां षड्जमध्यमगान्धारादिमध्यमग्रामाणां स्थितिनियमसीमान इव। अयमर्थः–'ग्रामः स्वरसमूहः स्यान्मूर्छनादेः समाश्रयः' इति सप्तस्वरसमूहात्मको ग्रामः। तत्र षड्जगान्धारमध्यमानां अन्यतमस्य बृहत्त्वे सति तत्तद्ग्रामनामा भवति। तत्रायं ग्रामः एतावति देशे तिष्ठतु, अस्यैतावति प्रदेशे स्थितिः, अस्यैतावति प्रदेशे स्थितिरिति सीमानियमरेखा इव। यत्र सीमानियमः क्रियते, तत्र रेखादिकं क्रियते। अथवा मन्द्रमध्यतारग्रामाणां वा स्थितिसीमनियामिका रेखा इत्यर्थः। किंलक्षणानां ग्रामाणां नानाविधमधुररागाकरभुवां, नानाविधाः षाडवौडवसंपूर्णसंकीर्णादिभेदेन भिन्नाः, ते च मधुराः माधुर्येणालाप्यमानाः ये रागाः श्रीरागमल्लारनाटगौडीबङ्गालप्रभृतयः, तेषामाकरभुवः खनयो ग्रामाः तेषाम्। ग्रामेष्वनेकविधा रागा उत्पद्यन्त इत्यर्थः। अनेन ब्रह्मानन्दादप्यधिको गीतानन्दः, तस्योन्नतेः स्वाभाविकस्त्वाकरः तव कण्ठः, तेन केवलनादब्रह्मरूपा त्वमिति। गले रेखा इति पद्यस्य रहस्यार्थः। चापमन्त्रोद्धारः। गले रेखा इति। गले इति विध स्थिति ध, विध स्थि, विध स्थिति, थधानां द्वयं बिन्दुद्वयम् (थं धं)॥ ६९॥

तात्पर्यदीपिनी

गले इति। हे गतिगमकगीतैकनिपुणे गत्योर्गमकं गतिगमकं यद्गीतं तत्रैका निपुणा तत्संबुद्धिः, सङ्गीतस्य द्वे गती मार्गौ तयोर्गमकः स्वरस्य पञ्चविधः कंपः, तस्य गीतं नाम समुचितार्थसंबन्धसन्दर्भः। एतेषु निपुणे भगवति, ते गले तिस्रो रेखाः विराजन्ते शोभन्ते। किंविधा रेखाः विवाहव्यानद्धत्रिगुणगुणसंख्याप्रतिभुवः, विवाहे उद्वाहसमये व्यानद्धा विशेषेण मङ्गलसूत्रबन्धनानन्तरं तत्समीपे आ समन्तात्कृत्स्नं कण्ठमावृत्य नद्धा बद्धाः त्रिगुणा एतादृशा ये गुणास्तन्तवः, तेषां या संख्या त्रित्वरूपा तस्याः प्रतिभुवो ज्ञापिकाः। यथा चोक्तं गृह्यकारैः, 'माङ्गल्यतन्तुनाऽनेन बध्वा मङ्गलसूत्रकम्। वामहस्ते सरं बध्वा कण्ठे च त्रिसरं स्मृतमिति'। माङ्गल्यसूत्रेण विना सभर्तृकाः क्षणमपि न तिष्ठन्ति। मङ्गलसूत्रं वसिष्ठेनोक्तम्। 'ब्रह्मविष्णवीशरूपेषु रन्ध्रवृत्तत्रितन्तुकम्। त्रिसरं रुक्मजं स्त्रीणां माङ्गल्याभरणं विदुः।' अत्रोत्प्रेक्षते—कथंभूता इव। ते तव तयाणां ग्रामाणां गान्धारमध्यमषड्जाख्यानां रागकदम्बकानां स्थितिनियमसीमान इव स्थिताः। एतेषामवस्थानस्य नियमार्थं ग्रामाणां परस्परं संकरो माभूदिति तेषामन्ते सीमानः प्रदेशा इव। अन्योन्यकलहकारिणां सीमाविवादनिर्हरणाय देशस्य प्रान्तसन्धौ दीयमाना रेखा वृक्षगर्तखातशिलाकुल्यादयः प्रसिद्धाः। तत्तत्र गले सर्वदा वर्तमानानां संगीतग्रामाणां सिद्ध्यर्थं नियमसीमान इव तव रेखाः दीप्तिं प्राप्नुवन्ति। किंविधानां ग्रामाणां, नानाविधरागाकरभुवां नानाविधा नानाप्रकाराः ये मधुररागाः श्रीरागमल्लारभूपालादयः, तेषामाकरभुवः उत्पत्तिस्थानानि तेषां तथोक्तानाम्। अनेन सदा संगीतविद्यारसिकता भगवत्या वर्णिता॥ ६९॥

पदार्थचन्द्रिका

गले लेखात्रयमुत्प्रेक्षमाणो वर्णयति—गल इति। हे गतिगमकगीतैकनिपुणे, तव गले स्थिता लेखा रेखाः विवादव्यानद्धप्रगुणगुणसंख्याप्रतिभुव इति विराजन्त इत्यन्वयः। अत्र ब्राह्मणोऽयं क्षत्रिय इवेत्यत्रेवेवशब्दो द्रष्टव्यः। गतिस्तत्तत्स्वरूपज्ञानं तस्य गमकं प्रापकं सङ्गीतशास्त्रं तत्र यानि गीतानि तेषु एका मुख्या चासौ निपुणा च गतिगमकगीतैकनिपुणा, तत्सम्बोधनं तथा। यद्वा गतीनां तत्फलाभ्युपायानां गमकानि चतुर्दशविद्यास्थानानि तान्येव गीतानि तेष्वेका मुख्या निपुणा, तत्संबोधनं, तथा। एतत्तु समुन्मीलत्संविदित्यत्रोक्तमेव। यस्याः स्त्रियो गले रेखात्रयं, सा प्रकृष्टानेकगुणविशिष्टा भवति, नेति चापरे, इति वराहादिमुनीनां विवादे विषये व्यानद्धा संबद्धा प्रगुणगुणसंख्या प्रकृष्टगुणगणना तस्यां प्रतिभुवो लग्नका निर्णयमध्यस्था इत्यर्थः। विवाहव्यानद्धत्रिगुणगुणसंख्याप्रतिभुव इति पाठे विवाहकर्मणि

व्यानद्धो विशेषेण बद्धस्त्रिगुणो यो गुणः त्रिगुणं यन्मङ्गलसूत्रं तत्र या त्रित्वसंख्या तस्याः प्रतिभुवो निर्णेया इत्यर्थः। पुनरुत्प्रेक्षान्तरमाह – त्रयाणां ग्रामाणां तारमन्द्रघोराणां यः स्थिति-नियमः तत्र सीमा मर्यादेव। नानाविधमधुरवागाकरभुवां, नानाविधमधुरवाचामाकरः स्थानमिति ग्रामविशेषणम्। गतिगमकेत्यत्र तृजकाभ्यां कर्तरीति षष्ठीसमासनिषेधेऽपि तत्प्रयोजको हेतुश्चेति ज्ञापकात्समासः। गतिस्त्रिमार्गे दशायोजनमाताभ्युपाययोः। नाडीव्रणे सरण्यां चेति मेदिनीकरः॥ ६९॥

डिण्डिमभाष्यम्

हे गतिगमकगीतैकनिपुणे! गतिर्येनालापेन रागः सन्दर्भः, गमकः स्थायिस्वरस्य पुनः पुनः घोषणं, गीतं समुचितार्थप्रबन्धसन्दर्भः, एतेषु सर्वेष्वपि निपुणे। एतेषु स्थानेष्वेव सर्वं सङ्गीतशास्त्रं सम्पन्नम्। 'गीतस्तु रागसङ्गीते स आलापः प्रकीर्तितः। गमको मुख्य-नादस्य परिभावो रसात्मकः। गीतं प्रबन्धरूढार्थरञ्जिता रक्तिरुच्यते'॥ विवाहव्यानद्ध-प्रगुणगुणसंख्याप्रतिभुवः, विवाहे महादेवेन कृतपाणिपीडने व्यानद्धो बद्धः प्रगुणगुणो यो मङ्गलसूत्ररूपः, तस्य संख्यायास्त्रिप्रकारायाः प्रतिभुवः सदृश्यः। एतदुक्तं भवति – विवाहकाले प्रथममेव माङ्गल्यसूत्रमिति कन्यानां कण्ठे बध्यते। तस्य प्रगुणगुण इति संज्ञा। तेन माङ्गल्य-सूत्रेण विना क्षणमपि न तिष्ठति सभर्तृका। पत्युः प्राणान् स्वकीयमङ्गलसूत्राभ्यन्तरे सादरं धारयन्ति पतिव्रताः स्त्रिय इति प्रसिद्धिः। मङ्गलसूत्रस्य लक्षणं वसिष्ठेनोक्तम् – 'ब्रह्मविष्ण्वीशरूपं तु लिङ्गचं तत् त्रितन्तुकम्। त्रिरतं रुक्मजं स्त्रीणां माङ्गल्याभरणं विदुः' इति। अत एव माङ्गल्यसूत्रस्य गुणानां त्रिसंख्यया समानाः त्रिरेखाः कण्ठस्था इति तत्साम्यम्। ईदृग्लक्षण-लक्षितास्तव गले रेखाः कथं विराजन्ते इत्यत आह – नानाविधमधुररागाकरभुवां नानाविधानां मधुररागाणाम् श्रीरागलहरीललिताभूपालादीनाम् आकरभुवाम् उत्पत्तिस्थानभूतानां त्रयाणां त्रिसंख्यानां ग्रामाणां गान्धारमध्यमषड्जाख्यानां रागकदम्बकानां स्थितिनियमसीमान इव स्थित्यर्थमवस्थानार्थं नियमेन विशिष्टाः सीमानः प्रदेशाः नियमसीमानः। अन्योन्यकलहकारिणां सीमाविवादनिर्हरणाय देशद्वयसन्धौ दीयमानवृक्षगर्तखातशिलाकुल्यारेखादयः प्रसिद्धाः। तद्वत् तव गले सदा वर्तमानानां सङ्गीतग्रामाणां स्थित्यर्थं नियमसीमान इव गले रेखा दीप्तिं प्राप्नुवन्ति। अनेन सदा सङ्गीतविद्यारसिकता भगवत्या वर्णिता॥ ६९॥

गोपालसुन्दरी

गले रेखा इति। हे गतिगमकगीतैकनिपुणे, गतिः तत्त्वस्वरूपज्ञानं तस्य गमकं ज्ञापकं संगीतशास्त्रं, तत्र यानि गीतानि तत्र निपुणे चतुरे। वस्तुतस्तु, गतिः रागसंगीतं,

गमकं स्थायिस्वरस्य पुनः पुनर्घोषणं, गीतं समुच्चितार्थप्रबन्धसन्दर्भः । तदुक्तं 'गतिस्तु रागसङ्गीतं स आलापः प्रकीर्तितः। गमको मुख्यनादस्य परिभावो रसात्मकः। गीतं प्रबन्धरूढार्थरञ्जिता रक्तिरिष्यते'। इति। एतेष्वेकनिपुणे परमचतुरे। तव गले तिस्रो रेखा विराजन्ते शोभन्ते। कीदृशाः?- विवाहकर्मणि व्यानद्धो विशेषेण--बद्धः त्रिगुणो यो गुणः मङ्गलसूत्रं, तत्र या त्रित्वसंख्या, तस्याः प्रतिभुवो निर्णेत्र्यः। तदुक्तं- 'ब्रह्मविष्ण्वीशरूपेषु रन्ध्रवृत्तं त्रितन्तुकम्। त्रिरत्नं रुक्मजं स्त्रीणां माङ्गल्याभरणं विदुः'। पाठान्तरे, विवाहार्थं व्यानद्धो बद्धो यः प्रगुण उत्कृष्टः, गुणस्तन्तुः, तस्य या संख्या तत्प्रतिभुवः तज्ज्ञापिकाः। यावज्जयं प्रतिवादिनो गुणबन्धनं कुर्वन्तीत्याचारः। नानाविधानां मधुराणां रागाणां षड्जमध्यमादिसप्तस्वरानुबन्धः, वसन्तगौडगुर्जरकर्णाटादिगीतानां, आकर उत्पत्तिः, तस्या भूमिरूपाणां त्रयाणां त्रिसंख्यकानां ग्रामाणां षड्जमध्यमपञ्चमानां ग्रामाणां स्थितिनियमसीमान इव परस्परकलहाविष्टानां ग्रामाणां स्थित्यै यो नियमः, तदर्थं सीमान इव मर्यादाचिह्नरूपा इवेत्यर्थः। विष्णुपक्षे- गतिगमकेत्यादि गलस्य विशेषणम्। शेषं समानम्॥ ६९॥

आनन्दलहरीटीका

गले इति। गतिगमकगीतैकनिपुणे, गतिरालापः, गमकं स्थायिस्वरस्य परितः संचारः, गीतं सदर्थप्रबन्धः, तेषु एका मुख्या निपुणा कौशलवती या तथाविधा। तदुक्तं सङ्गीतशास्त्रे- 'गतिश्च रागः सङ्गीतमालापोऽपि प्रकीर्तितः। गमको मुख्यनादस्य परिभावो रसात्मकः। गीतं प्रबन्धारूढार्थं रञ्जना रक्तिरिष्यत इति। गतिः सङ्गीतं तस्या गमकं बोधकं सङ्गीतशास्त्रं तत्र यानि गीतानि तेष्वेकनिपुणे इत्यर्थः इति केचित्। ते तव गले तिस्रो रेखाः विराजन्ते। कीदृश्यः, विवाहे विशेषेणानद्धो बद्धो यः प्रगुणः प्रकृष्टगुणयुक्तो गुणो मङ्गलसूत्रं तस्य या संख्या त्रिरूपा तस्याः प्रतिभुवो ज्ञापिकाः। प्रगुणेत्यत्र त्रिगुणेत्यपि क्वचित्पाठः। विवाहसमये त्रिगुणतन्तुरूपं मङ्गल्याभरणं कन्याया गले बन्धनीयमिति दाक्षिणात्याचारः। तथा च वसिष्ठ इति पठति-'ब्रह्मविष्ण्वीशरूपेण बद्धं वृत्तत्रितन्तुकम्। त्रिरत्नं रुक्मजं स्त्रीणां मङ्गल्याभरणं विदुः'॥ विवादव्यानद्धेति पाठे विवादार्थं बद्धेत्यर्थः। यावज्जयो न भवति तावत्पर्यन्तं वादिनो गले त्रिगुणसूत्रबन्धनं करोतीति देशविशेषाचारः। पुनः कीदृश्यः, नानाविधानां मधुराणां मनोहराणां रागाणां निषादर्षभादिसप्तस्वरसंबद्धानां वसन्त-गौडगुर्जरप्रभृतीनां आकरभुवामुत्पत्तिस्थलानां त्रयाणां षड्जग्राम-मध्यमग्राम-गान्धारग्रामाणां सङ्गीतशास्त्रप्रसिद्धानां स्थिताववस्थाने यो नियमः एतत्स्थल एवानेन स्थातव्यमित्यादिरूपः तत्र सीमानो मर्यादारूपा इव। इवशब्द उत्प्रेक्षायाम्। ग्राम एकस्मिन्गलेऽवस्थितौ विरोधभञ्जनाय

विधात्रा सीमारेखा इव कृता इत्यर्थः । ग्रामलक्षणमुक्तं सङ्गीतशास्त्रे—'यथा कुटुंबिनः सर्वेऽप्येकीभूता भवन्ति हि । तथा स्वराणां सन्दोहो ग्राम इत्यभिधीयते । षड्जग्रामो भवेदाद्यो मध्यमग्राम एव च । गान्धारग्राम इत्येतत् ग्रामत्रयमुदाहृतम्' । तथा 'नन्द्यावर्तोऽथ जीमूतः शुभदो ग्रामकास्त्रयः । षड्जमध्यमगान्धारास्त्रयाणां जन्महेतव' इति ॥ ६९ ॥

मृणालीमृद्वीनां तव भुजलतानां चतसृणां
चतुर्भिः सौन्दर्यं सरसिजभवः स्तौति वदनैः ।
नखेभ्यः संत्रस्यन् [1]प्रथममथनादन्धकरिपोः
चतुर्णां [2]शीर्षाणां सम[3]मभयहस्तार्पणधिया ॥ ७० ॥

ம்ருணளீ ம்ருத்வீநாம் தவ புஜலதாநாம் சதஸ்ருணாம்
3 1 4 1 1 1
சதுர்பிஸ் ஸௌந்தர்யம் ஸரஸிஜபவ: ஸ்தௌதி வதநை: ।
1 1 4 3 4 1 1 3
நகேப்ய: ஸந்த்ரஸ்யந் ப்ரதம மதநாத் அந்தகரிபோ:
2 4 1 1 2 2 1 4 1 1
சதுர்ணாம் சீர்ஷாணாம் ஸமம் அபயஹஸ்தார்பணதியா ॥
1 1 4 1 1 4

कमलनाल सम मृदु तव चार भुजलताओं की सुन्दरता
गाता है चार मुखों से धाता निजपञ्चमशिरहर्ता
हर के करजों का कर स्मरण पुरासमय के त्रस्त बन कर
बचे सिरों की रक्षा-हित अभयहस्त पाने नत बन कर ॥

लक्ष्मीधरा

मृणाली बिसलता तद्वत् मृद्वीनां मृदूनां, 'वोतो गुणवचनात्' इति ङीप् । तव भवत्याः, भुजलतानां बाहुलतानां चतसृणां चतुर्भिः सौन्दर्यं सौभाग्यं, सरसिजभवो ब्रह्मा, स्तौति प्रस्तौति । वदनैः वक्त्रैः, नखेभ्यः करजेभ्यः सकाशात्, संत्रस्यन् बिभ्यत् 'भीत्रार्थानां भयहेतुः' इत्यपादाने पञ्चमी । प्रथममथनात् पूर्वं मर्दितवतः । कर्तरि ल्युट् । यदाह वृत्तिकारः 'वोतो गुणवचनात्' इत्यत्र 'गुणमुक्तवान् गुणवचनः' इति । ब्रह्मणः पञ्चमशिरो नखाग्रेणाच्छिनद्धरः' इति पुराणम् । तस्मात् प्रथममथनात्, अन्धकरिपोः सदाशिवस्य, चतुर्णां शीर्षाणां शिरसां, समं सकृदेव, अभयहस्तार्पणधिया अभयहस्तान्ग्रहीतुकाम इत्यर्थः ।

1 प्रथमदमनात्, मदनमथनात् 2 वक्त्राणां 3 मभयदाना ।

अत्रेत्थं पदयोजना – हे भगवति! तव मृणालीमृद्वीनां चतसृणां भुजलतानां सौन्दर्यं सरसिजभवः चतुर्भिर्वदनैः प्रथममथनात् अन्धकरिपोः नखेभ्यः संत्रस्यन् समं चतुर्णां शीर्षाणां अभय-हस्तार्पणधिया स्तौति। काव्यलिङ्गमलङ्कारः ब्रह्मैकनियतस्तोत्रस्य नखेभ्यस्संत्रस्यन् इत्यादिना समर्थनात्। वाक्यार्थहेतुकं काव्यलिङ्गमिति ध्येयम्। भुजलतावर्णने ब्रह्मण एवाधिकारो नान्येषामिति काव्यलिङ्गेन ध्वन्यते वस्त्विति अलङ्कारेण वस्तुध्वनिः ॥ ७० ॥

सौभाग्यवर्धनी

मृणालीति। मृणालकोमलानां तव दोर्लतानां चतसृणां सौन्दर्यं ब्रह्मा चतुर्भिः मुखैः स्तौति। अन्धकरिपोः नखेभ्यः संत्रस्यन् प्रथमदमनात् हेतोः, एकं मुखं पुररिपुणा मम निकृत्तम्, अवशिष्टानि चत्वार्यपि छेत्स्यतीति भयेन समं युगपत् अभयदानार्पणधिया चतुर्भिः हस्तकमलैः अभयं मह्यं देहीति वरप्रार्थनबुद्ध्येत्यर्थः। एतावता तव अभयदानेच्छोः, अन्धकरिपोरपि क्रोधो ममातिक्रमे न शक्तः। तस्मात्तवैव प्रसादो मुख्य इति भावः। चतुर्भिर्वदनैः चतसृणां भुजलतानां सौन्दर्यं स्तौतीति परिसंख्यालङ्कारः ॥ ७० ॥

अरुणामोदिनी

भुजान् स्तौति – मृणालीति। हे देवि! सरसिजभवः अब्जयोनिः ब्रह्मा, विष्णुनाभीकमलोत्पन्नत्वात्। तत मधुकैटभपीडितात्मरक्षणाय भवत्स्तोत्रपरायण इति भावः। चतुर्भिः चतुःसंख्यापन्नैः, वदनैः मुखैः, मृणाली बिसलतेव मृद्वीनां म्रदिमवतीनाम्। 'वोतो गुणवचनात्' इति ङीप्। तव भवत्याः, चतसृणां चतुःसंख्यापन्नानाम्, 'न तिसृचतसृ' इति न दीर्घः। भुजलतानां सौन्दर्यं चारुत्वम्, स्तौति वर्णयतीत्यर्थः। स्तवनप्रयोजनमाह– नखेभ्य इति। अन्धकरिपोः रुद्रस्य, पञ्चमी वा। प्रथममथनात् प्रथमस्य शिरसः मथनात् विनाशात्, आदिमथनादिति वा, प्रथममथनमतति गच्छति इति प्रथममथनादिति वा। 'अत सातत्यगमने' इति क्विप्। ब्राह्मीयप्रथमशिरसः पुरा शिवनिहत-त्वादिति भावः। नखेभ्यः कररुहेभ्यः, संत्रस्यन् बिभ्यत्सन्, चतुर्णां शीर्षाणां वर्तमान-चतुःशिरसां, समं यथा तथा, अभयहस्तार्पणधिया; शेषाणामभ्युदयो माभैरित्यभयदाना-काङ्क्षया स्तौतीति संबन्धः। भवदीयभुजलतासौन्दर्यवर्णने चतुर्मुखस्यैव सामर्थ्यं नान्यस्ये-त्यभिप्रायः ॥ ७० ॥

आनन्दगिरीया

मृणालीति। हे नारायणि भुवनेश्वरि, सरसिजभवो ब्रह्मा तव चतसृणामपि भुजलतानां सौन्दर्यं चतुर्भिरपि मुखैः समं स्तौति। किंलक्षणानां, मृणालीमृद्वीनां तव मृणाल-

कोमलभुजलताया वर्णने ब्रह्मातिरिक्तः को वा समर्थः स्यात्। चतुर्भिरपि मुखैरेकसमयावच्छेदेन स्तुतौ किं बीजम्? अत आह – अन्धकरिपोर्नखेभ्यः सन्त्रस्यन्, कस्मात्? तव प्रथमदमनात्। ल्यब्लोपे पञ्चमी। प्रथमदमनं प्राप्येत्यर्थः। अथवा तैरिति शेषः। नखैः प्रथमदमनात्। अयमर्थः – महादेवादित्यापद्यमानं मुखोत्पाटनभयं तदा शाम्यति, यदा भुवनभयभञ्जस्वभावायाः परमेश्वररमण्या अभयं प्राप्यते। तत्तु शिरसि करकमलार्पणेन भवति। तदपि तदा, यदा परमेश्वरी स्तूयते। इति क्रमेण यदा स्तुतिरारभ्यते तदा स्तावकातिरिक्तशिरसां भयविह्वलतया अहमहमिकया सर्वैरपि मुखैः सममेव स्तुतिरारब्धेति। कया, चतुर्णां शीर्षाणां समसमय एव हस्तार्पणधिया। तेन तेन मुखेन तस्य तस्य भुजस्य स्तुत्या, सन्तोषेण तस्य तस्य करस्याभयमुद्राङ्कितस्य तस्मिंस्तस्मिन् शिरसि अर्पणं भविष्यतीति बुद्ध्या। अथवा अन्धकरिपोर्नखाः, तेभ्यो जातं यत्प्रथमदमनं ततः सन्त्रस्यन्निति। परिसंख्यालङ्कारः। 'किञ्चित्पृष्टमपृष्टं वा शब्देन प्रतिपाद्यते। तादृगन्यव्यपोहाय परिसंख्या तु सा मता'। प्रमाणान्तरावगतमपि वस्तु शब्देन चेत्प्रतिपादितं प्रयोजनान्तराभावात् सदृशवस्त्वन्तरव्यवच्छेदाय यत्पर्यवस्यति सा परिसंख्या'। मृणालीति पद्यस्य रहस्यार्थः – पाशस्य मन्त्रमाह – मृणाली आ मृद्वीनां अ, शीर्षाणां ई, वदनैः रेफः, हस्ता ह; एवं आं ह्रीं पाशस्य। (ह्रीं आं)॥

तात्पर्यदीपिनी

अथेदानीं भुजान्वर्णयति – मृणालीति। हे परमेश्वरि, सरसिजभवो ब्रह्मा चतुर्णां चतुःसंख्याविशिष्टानां भुजलतानां बाहुलतानां सौन्दर्यं लावण्यातिशयं चतुर्भिर्वदनैः करणभूतैः स्तौति लोकातिशयगुणगणातिशयोद्घोषणमधुरकलापैश्चर्चयति। किंविधानां भुजलतानां, मृणालीमृद्वीनां मृणालीवत् सरोजिन्यंकुरवत् मृद्वीनां कोमलानां, कथंभूतः सरसिजे भवः। अन्धकरिपो रुद्रस्य नखेभ्यः प्रथममथनात्प्रथमस्य वक्त्रस्य मथनान्निकृन्तनात् संत्रस्यन् भीत इत्यर्थः। चतुर्भिर्मुखैः चतुर्बाहुवर्णने हेतुमाह–चतुर्णां शीर्षाणामवशिष्टानां समं युगपत् अभयहस्तार्पणधिया अभया ये हस्ताः तेषामर्पणं तस्य बुद्ध्या। रुद्राच्छंकितेन विधिना चतुर्णां मुखानां पालनार्थं अभयं ग्रहीतुं तव भुजलताः स्तुता इति भावः॥ ७०॥

पदार्थचन्द्रिका

अथ भुजवर्णनमाह – मृणालीति। मृणालीमृद्वीनां मृणालवत्कोमलानां भुजा लता इव भुजलतास्तासां, चतसृणामित्यत्र न तिसृचतसृ इति सूत्रेण दीर्घनिषेधः। भवानीभुजलताविषयां चतुर्मुखकर्तृकां स्तुतिं सकामामुत्प्रेक्षमाणः सरसिजभवं विशिनष्टि – मदनमथनादन्धकरिपोः नखेभ्यः संत्रस्यन्, समं युगपत्, न विद्यते भयं यस्मात्तदभयं एवंभूतं

यद्वस्तार्पणं तद्धियेति हेतौ तृतीया। नखेभ्यो मदनमथनादन्धकरिपोरित्यत्र पञ्चम्यौ भीत्रार्थानां भयहेतुरित्यनेन। मदनमथनादन्धकरिपोरिति पदद्वयोपादानं रुद्रे भयहेतुत्वं संभावयितुम्। नखानां तु भयहेतुत्वं संभावितमेवास्ति पूर्वमेकेन नखेनैकस्य शीर्षस्य छेदात्॥ ७०॥

### डिण्डिमभाष्यम्

हे परमेश्वरि! मृणालीमृद्वीनां मृणालीवत् सरोजिन्यङ्कुरलताविशेषवत्, मृद्वीनामतिकोमलानां, चतसृणां चतुस्संख्याविशिष्टानां .... तव भुजलतानां बाहुवल्लीनां सौन्दर्यं लावण्यातिशयम्, सरसिजभवः ब्रह्मा कर्ता, चतुर्भिः मुखैः करणभूतैः, स्तौति लोकातिशायि गुणगणोद्घोषणं मधुरशब्दकलापैश्चरति। कथं चतुर्भिर्मुखैः चतुर्बाहुसौन्दर्यस्तवः, तस्य पञ्चमुखत्वात्। एकस्य मुखस्य स्वरूपनाशः कथमिति चेदत्रोच्यते। अवश्यं पञ्चमुख एव प्रथमं ब्रह्मा अभूत्। तदनन्तरं रुद्रोऽपि पञ्चमुखः तृतीयो भ्राता, द्वितीयो विष्णुः। सर्वकनिष्ठस्यापि रुद्रस्य वक्त्रैः वरप्रसादात् षड्गुणा जाताः। ते च सर्वज्ञत्वं नित्यतृप्तत्वं अनादिबोधत्वम् स्वतन्त्रत्वं, अलुप्तशक्तित्वं, अनन्तशक्तित्वं चेत्येवं गुणसंपन्नाः। एतैर्विरहिता ब्रह्मादयः। तत एव हेतोः ब्रह्मणोऽपि महादेवस्य सहस्रगुणाधिक्यम्। अत एव न्यूनगुणेनापि ब्रह्मणा ज्येष्ठत्वमात्रमवलम्ब्य, "अहमपि पञ्चमुखः, अयं रुद्रोऽपि पञ्चमुखः, ततो मत्तः कथमस्याधिक्यमिति। कदाचित् रजोंऽशस्य महतः संभवादवलेपेन हरतिरस्कारे जायमाने तज्जनितेन ब्रह्मणो दर्पतेजसा दह्यमाने, तच्छान्त्यर्थं विरिञ्चेः पञ्चमं शिरः रुद्रेण नखकोट्या विदलितमिति पुराणप्रसिद्धेः चतुर्मुख एव न पञ्चमुखः। तत एवं एकशिरोऽव्यत्ययेन भीतो भूत्वा तस्य महादेवस्यात्यन्तवल्लभायाः तव सेवया पुनर्महादेवसकाशात् अभयं प्रार्थ्यमानः, तत एव सन्त्रस्यन्, अवशिष्टानां चतुर्णां शीर्षाणां सममेव युगपदेव अभयार्पणबुद्ध्या 'माभैषीरहमागता, तव भयं नास्ति, स्वस्थो भव' इत्यादिवचनेन समुत्तोलितो यो हस्तः सोऽभयहस्त इत्युच्यते। तस्यार्पणं प्रकाशनं, तद्धिया तदभिप्रायेण रुद्रात् त्रस्यन् रुद्रसर्वस्वभूतायास्तवाश्रयणेन रुद्राद्भयं त्यक्ष्यामीति भगवतीमुपाश्रितः। येनकेनचित्पीडिताः, तद्वल्लभाशरणप्रवेशेन तन्निवारिततत्पीडाः सन्तः सुखिनः संभवन्तीति लोकप्रसिद्धिरस्ति॥ ७०॥

### गोपालसुन्दरी

मृणालीति। मृणालीवत्सरोजिन्यंकुरवत् मृद्वीनां कोमलानां चतसृणां चतुःसंख्यकानां तव भुजलतानां बाहुवल्लीनां सौन्दर्यं शोभां सरसिजभवो ब्रह्मा चतुर्भिर्वदनैः करणभूतैः स्तौति। प्रथमदमनात्, पञ्चममुखस्य प्रथमकर्तनात्, अन्धकरिपोर्महेशस्य नखेभ्यः

सन्त्रस्यन् बिभ्यत्, अवशिष्टानां चतुर्णां शीर्ष्णां मस्तकानां समं युगपदेव अभयस्य भीत्यभावस्य हस्तैरर्पणधिया दानबुद्ध्या। विष्णुपक्षेऽप्येवम् ॥ ७० ॥

आनन्दलहरीटीका

मृणालीति। मृणालीवन्मृद्वीनां कोमलानां चतसृणां तव भुजलतानां सौन्दर्यं सरसिजभवो ब्रह्मा चतुर्भिर्वदनैः स्तौति। किमर्थमित्याह नखेभ्य इति। प्रथमस्य शीर्षस्य मथनात् छेदनाद्धेतोः अन्धकरिपोः शिवस्य नखेभ्यः संत्रस्यन् भयं प्राप्नुवन् सन्, मथनादित्यत्र दमनादिति पाठे प्राथमिकशिरश्छेदनरूपदण्डादित्यर्थः। अन्धकरिपोः सकाशात् उद्गतेभ्यो नखेभ्य इति पञ्चमीति कश्चिदाह, तन्न, अध्याहारं विनैवोपपत्तेः। अवशिष्टानां चतुर्णां शीर्षाणां सममेकदा अभयाय भयाभावाय हस्तानां अर्थात्त्वदीयानां अर्पणं स्पर्शनं तद्धिया, तद्भवत्विति बुद्ध्या। अभयदायको हस्तोऽभयहस्तः तस्यार्पणमिति कश्चित्। एकं शिरः शिवेन नखैश्छिन्नं, अवशिष्टानामभयार्थं स्तौतीति भावः। चतसृणामित्यत्र नामि दीर्घप्रतिषेधः। अत्र प्रथम-मथनादित्यत्र मदनमथनादिति पाठो न सङ्गतः। भिन्नविभक्त्यन्ततया अन्धकरिपोरित्यनेन सह सामानाधिकरण्येनान्वयासंभवात्। न च मदनमथनादन्धकरिपोः सन्त्रस्यन् अर्थात्तन्नखेभ्यः सन्त्रस्यन् इति योजनीयमिति वाच्यम्। शिवपर्यायशब्दद्वयोपादाने शाब्दपौनरुक्त्यात्। हरात् शिवात् शम्भोरित्यादेरपि तथात्वापत्तेः। तथा शिवनखेभ्यो यस्त्रासः शिवादपि स एव त्रास इति अर्थे पौनरुक्त्यं च। यथा वह्निरुष्ण इत्यादाविति। तस्मात्प्रथममथनादित्यस्यार्था-नभिज्ञेन केनचिद्भ्रान्तेनात्र मदनमथनादिति कल्पितमित्यवधेयम् ॥ ७० ॥

नखानामुद्योतैर्नवनलिनरागं विहसतां
करणां ते कान्तिं कथय कथयामः [1]कथमुमे।
[2]कयाचिद्वा साम्यं भजतु [3]कलया हन्त कमलं
यदि क्रीडल्लक्ष्मीचरणतल[4]लाक्षारसचणम् ॥ ७१ ॥

நகாநாம் உத்யோதைர் நவநலினராகம் விஹஸதாம்
2 3 1 3 1
கராணாம் தே காந்திம் கதய கதயாம: கதமுமே ।
1 1 1 1 12 12 12
கயாசித்வா ஸாம்யம் பஜது கலயா ஹந்த கமலம்
1 13 4 1 1 1 1
யதி க்ரீடல்லக்ஷ்மீ சரணதல லாக்ஷாரஸ சணம் ॥
3 1 3 1 1 1

1 कथममी, कथममुम् 2 कदाचिद्वा 3 विधया 4 लाक्षारुणदलम्।

नख-छवि से नव-विकसित कमलों को लज्जित करनेवाले
तव हस्तों की शोभा का वर्णन कैसे हिमगिरिबाले ।
कर सकते हैं? कह दे! कमल विचारासंभवतः करता
उसकी समता लेश मात्र, यदि लाक्षारस लाली धरता
क्रीडासक्त रमा के चरणतलों की पद्मनिवासरता ।

लक्ष्मीधरा

नखानां नखराणां, उद्योतैः प्रभापटलैः, नवनलिनरागं प्रातर्विकसिताम्बुजकान्ति, विहसतां अपलपतां, कराणां हस्तानां, ते तव, कान्ति शोभां, कथय वद, कथयामः, काव्यप्रबन्धं रचयामः, कथं केन प्रकारेण, उमे! पार्वति! कयाचिद्वा विधया। वेत्यसंशये संशयोक्तिः। केनापि प्रकारेण नास्तीत्यर्थः। साम्यं सादृश्यं, भजतु स्वीकरोतु कलया लेशेनापि, हन्त! वाक्यारम्भे। हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः इत्यमरः। कमलं पद्मं, यदि संशये, तथापि सन्देह इत्यर्थः। क्रीडल्लक्ष्मीचरणतललाक्षारसचणं क्रीडन्त्याः लक्ष्म्याः पद्मालयायाः चरणतलयोः लाक्षारसेन चणं वित्तं युक्तम्। 'तेन वित्त-श्चुञ्चुप्चणपौ' इति चणप्। अत्रेत्थं पदयोजना–हे उमे! नखानामुद्योतैः नवनलिनरागं विहसतां ते कराणां कान्ति कथं कथयामः कथय, कमलं कलयापि साम्यं कयाचिद्वा भजतु। हन्त कमलं क्रीडल्लक्ष्मीचरणतललाक्षारसचणं यदि तदा हि साम्यं भजत्विति। यद्वा कयाचिद्वा साम्यं भजतु विधयेति पाठः। तदा हन्त! कमलं कयाचिद्वा विधया साम्यं भजतु प्राप्नोतु इत्यन्वयः। तामेव विधामाह–यदि क्रीडल्लक्ष्मीचरणतललाक्षारसचणं तदा, नान्यथेत्येक-वाक्यतया अन्वयः। अत्रातिशयोक्तिरलङ्कारः, यद्यर्थोक्त्यातिशयकल्पनात्। पूर्वार्धे तद्गुणा-लङ्कारः, नखकान्तिभिर्तिरस्कृतत्वात् कराणाम्। नवनलिनरागं विहसतामित्यत्र उपमालङ्कारः। उभयोस्संसृष्टिः, अपृथक्स्थित्या प्रयोजकत्वात् उभयोस्संसृष्टिः ॥ ७१ ॥

सौभाग्यवर्धनी

करान् स्तौति–नखानामिति। नखानां कान्तिभिः नवनलिनरागं विहसतां कराणां ते कान्ति हे उमे; हे परमेश्वरि! कथं कथयामः? केन सह साम्यं कथयामः? त्वमेव कथय। प्रसिद्धकमलमस्ति, तेन सह कथयेति चेत्, न, कयाचिद्वा साम्यं भजतु विधया हन्त कमलम्, कयाचिद्विधया कमलसादृश्यं भजतु। हन्तेति वितर्के। यदि क्रीड-ल्लक्ष्मीचरणतललाक्षारुणदलं स्यात्। कमलसाम्यं तव कराणां दूरे तिष्ठतु। तव करसाम्यं

कमलं तदा लप्स्यते, कयाचिद्विधया क्रीडन्त्याः कमलालयायाः चरणतलालक्तकासारुणं यदा स्यात्। तव कराणां कमलसाम्यकथने का संभावनेति भावः। अत्र कमलस्य कदाचिद्दैवयोगेन कमलालयायाः चरणालक्तकारुण्यसंपर्कः संभाव्य इति संभावनालङ्कारः॥

### अरुणामोदिनी

करान् स्तौति– नखानामिति। हे उमे! नखानां उद्योतैः प्रकाशैः, नवनलिनरागं तरुणाब्जरक्तिमानं विहसतां तत्सदृशानामित्यर्थः। कराणां चतुर्णां हस्तानां, कान्ति शोभां, कथय केन प्रकारेण कथयामः वर्णयामः? कथय तदुपायं वदेत्यर्थः। सदृशवस्त्वन्तराभावात् वर्णयितुं न शक्नुम एवेत्यर्थः। ननु सदृशवस्तुनः कमलस्य विद्यमानत्वात् कथं तदसामर्थ्यमित्यत्राह– कयाचिद्वेति। कमलं देवीहस्तोपमानत्वेन स्तोत्रानुमतमब्जं, क्रीडन्ती च सा लक्ष्मीश्च क्रीडल्लक्ष्मीः, 'स्त्रियाः पुंवत्' इत्यादिना पुंवद्भावः। तस्याः चरणतले या लाक्षा तया अरुणा दला यस्य तत् लक्ष्मीपादपङ्कजलाक्षारुणीकृतदलमित्यर्थः। रसचणमिति पाठे, लाक्षारसेन वित्तं चणं तत्सहितं यदि, 'तेन वित्तश्चुञ्चुप्चणपौ' इति चणप्प्रत्ययः। तर्हि तथा चेत्, कयाचिद्वा विधया येन केनापि प्रकारेण। कलयेति पाठे लेशेनापीत्यर्थः। साम्यं सादृश्यं भजेत् प्राप्नुयात्। एतादृग्रूपस्य स्वस्य साम्यावाप्तियोग्यत्वादित्यर्थः। हन्तेत्यनुकम्पायाम्। अत्रातिशयोक्तिविशेषालङ्कारः॥ ७१॥

### आनन्दगिरीया

करान्वर्णयति– नखानामिति। हे नारायणि परमेश्वरि, तव कराणां कान्ति अमी वयं कथं कथयामः कथय। तव करास्तु कल्पद्रुमादीनप्यधः कुर्वन्ति। तेषां कान्ति वयमल्पज्ञाना उपमादृष्टावपि जडाः कथं वर्णयाम इति त्वमेव कथय। अस्मद्दृष्टौ किमप्युपमानं नायाति। नवनलिनं चेद्वदसि तत्राह। किंलक्षणानां कराणां, नखानामुद्योतैः नवनलिनरागं विहसतां, ये नखाः शनैश्शनैर्हेयत्वेन बहिःकृतास्तेषामेवोद्योतैः प्रभापटलैः नवनलिनमपि हस्यते। तस्य करसाम्यं कुतः। अथ सहस्रपत्रं कमलं चेद्वदसि तदपि कयाचिद्विधया प्रकारेण साम्यं भजतु। यदि क्रीडल्लक्ष्मीचरणतललाक्षारुणदलं तदपि साम्यं तदा प्राप्नुयात् यदा सर्वदा विकसितं सत् लक्ष्म्याः सदा क्रीडापात्रं भवति। क्रीडन्त्यास्तस्याः चरणगलितालक्तकरसेन सर्वेष्वपि दलेषु रक्तता यदा स्यात्। इदं तु कदाचिद्विकसति, लक्ष्मीरपि कदाचिद्वसति। तत्रापि न क्रीडति। नापि सर्वदलावच्छेदेनारक्तम्। तव करतलं तु परमारक्तं, दलस्थानीया अंगुलयो नखा वा अत्यारक्ताः। क्रीडन्ती च लक्ष्मीरचञ्चला तत्र नित्यं तिष्ठति।

अंकुशमन्त्रमाह – नखानामिति। कथय कथय करद्वयं, उद्योतैः ओं द्वयं, ते कान्ति बिन्दुद्वयं क्रों क्रों अंकुशमन्त्रः ॥ ७१ ॥

### तात्पर्यदीपिनी

नखानामिति। हे उमे परमेश्वरि, वयं ते कराणां पञ्चशाखानां कान्तिसौन्दर्यातिशयं कथं केन प्रकारेण कथयामो वर्णयामः। तत्कथय त्वमेव कथय, नास्माकं कथावसरः। यत्पञ्चभिर्वदनैर्महादेवः, चतुर्भिर्ब्रह्मा, षड्भिः स्कन्दः, सहस्रैरनन्तः एते त्वां वर्णयितुमारभ्य निजवर्णनावैदग्ध्यदर्पेण स्तुवन्तः खिद्यन्ति। त्वत्कराणां सौन्दर्यवर्णनमस्माकं सुकरं दुष्करं वेति त्वमेव जानासि इति कथयेति भावः। एवमनुपमत्वेन वर्णनावतारः कथं भवतीत्यत्राह – हन्तेति निश्चयेन। कमलं कयाचिद्विधया प्रकारेण साम्यं सादृश्यं भजतु, न कदाचिदित्यर्थः। तत्र हेतुः, किंविधं कमलं, यदि संशये, क्रीडल्लक्ष्मीचरणतललाक्षारसचणं, क्रीडन्ती या लक्ष्मीः तस्याश्चरणतलयोः लाक्षारसेन चणं युक्तं, तदपि संशये इत्यर्थः। किंविधानां कराणां, नखानां नखरागाणां उद्योतैः प्रभापटलैः नवनलिनरागं प्राभातिकाम्बुजानां कान्तिं विहसतामपलपताम् ॥ ७१ ॥

### पदार्थचन्द्रिका

अथ नखवर्णनमाह – नखानामिति। हे भवानि, तव कराणां कान्तिमंशुं कथं केन प्रकारेण कथयामो वर्णयामः, वर्णनसामर्थ्याभावादिति शेषः। कथयेति लोकोक्तिमनुसृत्याह – अमुमित्यत्र अमी इति पाठे अमी वयमिति योज्यम्। नखानामुद्योतैर्दीप्तिभिः, नवनलिनरागं नवरक्तोत्पलशोभां विहसतामिति करविशेषणम्। साम्यमङ्गीकृत्याह – कदाचिदिति। श्रीभवानीचरणकमलध्यानपरमानन्दद्योतको हन्तेति शब्दः। कलया षोडशांशेन, क्रीडन्ती चासौ लक्ष्मीः क्रीडल्लक्ष्मीः, तस्याश्चरणतलस्य लाक्षया अरुणानि दलानि यस्य तत्। स्पष्टमन्यत् ॥ ७१ ॥

### डिण्डिमभाष्यम्

नखानामिति। हे परमेश्वरि! नखानां करजानामुद्योतैः किरणनिकुरुम्बैः नवनलिनरागं नूतनशतपत्रशोभां विहसतां तिरस्कुर्वतां, ते कराणां पञ्चशाखानां, 'पञ्चशाखः शयः पाणिः करो हस्तोऽथ तर्जनी' इति विश्वप्रकाशः। कान्तिं सौन्दर्यातिशयं कथं वा कथयामः, केन प्रकारेण वर्णयामः, त्वमेव कथय, नास्माकं कथनावसरः। यत्पञ्चभिर्वदनैः महादेवः, चतुर्भिर्वदनैर्ब्रह्मा, षड्भिराननैः शक्तिधरः, सहस्राननैः अनन्तो वासुदेवश्च, अन्ये च अनेकमुखा बहवो देवतेश्वरास्त्वां वर्णयितुमारभ्य, निजवर्णनावैदग्ध्यदर्पेण स्तुवन्तः, त्वच्चरणा-

ङ्गुष्ठैकदेशस्य कान्तिमियत्तया वर्णयितुं न पारिताः, तत्र तादृशानां त्वत्कराणां सौन्दर्यवर्णनं अस्मादृशफल्गुजनानां सुकरं वा ? दुष्करमिति त्वमेव जानासि । त्वमेव कथय, एवमनुपमत्वेन वर्णनावतारो वा कथं भवतीति शङ्कायामाह – यथाकथञ्चित्सादृश्यं संपादयति – क्रीडल्लक्ष्मीचरणतललाक्षारुणदलं- क्रीडन्त्या विहरन्त्या लक्ष्म्याः श्रीदेव्याः- चरणतललाक्षया अरुणदलं अरुणीकृतपत्रं यदि भवति कदाचित् कमलं तदा कयाचित् कलया केनापि प्रकारेण साम्यं सादृश्यं भजतु, नान्यथा । लक्ष्म्याः सर्वथा समाश्रयणात् अतिरिक्तं सरसिजं भवति । कमलेषु भगवत्याः शक्तिपातो लक्ष्मीरेव । सा च लक्ष्मीः भगवत्येकजन्मभूमिर्भगवतीरूपेति कृत्वा तच्चरणलाक्षानुलिप्तकमलौपम्यं लोकोत्तरस्य भगवतीकरस्यानुचितमिति मन्तव्यम् ॥ १७ ॥

गोपालसुन्दरी

नखानामिति । नखानां करजानामुद्योतैः प्रभाभिः, नवनलिनरागं नूतनशतपत्रशोभां विहसतां तिरस्कुर्वतां ते तव कराणां कान्तिं सौन्दर्यं कथं केन प्रकारेण अमी वयं कथयामः । अमूमिति पाठे कान्तिविशेषणम् । उमे इति पाठे संबोधनम् । क्रीडन्त्या लक्ष्म्याः चरणतललाक्षया अरुणदलं रक्तपत्रं यदि कदाचित् तदा कमलं कलया एकदेशेन साम्यं सादृश्यं भजति, धत्ते नान्यथेत्यर्थः । कमलसाम्यं तव कराणां दूरे तिष्ठतु, कमलानामेव तव करसाम्यं कादाचित्कमिति भावः । विष्णुपक्षेऽप्येवम् । उमे इति पाठे उत्कृष्टा मा लक्ष्मीः । मानेन प्रमाणेनोपनिषद्रूपं विद्यते, तस्य तस्मिंस्त्वयि विद्यमानानां तव कराणां कान्तिं कथं कथयाम इत्यन्वयः । उत्कृष्टमानं परिमाणं यस्य, तस्मिन्नुमे भूमण्डल इति वाऽर्थः ॥ ७१ ॥

आनन्दलहरीटीका

नखानामिति । हे उमे नखानामुद्योतैः प्रभाभिः, नवनलिनरागं नूतनपद्मरक्ततां विहसतां तिरस्कुर्वतां कान्तिं केन प्रकारेण कथयामो वयं वर्णयामः इति कथयेत्यन्वयः । उमे इत्यत्र अमुं इति पाठे कान्तिविशेषणम् । कमलं यदि क्रीडन्त्या लक्ष्म्याश्चरणतलयोः लक्षितया लाक्षया अलक्तकरसेन अरुणदलं स्यात् । नखप्रभासामर्थ्यमिदम् । तदा कयाचित्कलया किञ्चिदंशेन । कदाचिद्वेति पाठान्तरम् । साम्यमुपमेयतां भजतु प्राप्नोतु । वाकारोऽनास्थायाम् । हन्त खेदे । उपमेयस्येदृशी गतिः, उपमानवार्ता दूरे पराहतेति भावः ॥ ७१ ॥

**समं देवि स्कन्दद्विपवदनपीतं स्तनयुगं**
**तवेदं नः खेदं हरतु सततं प्रस्नुतमुखम् ।**

**यदालोक्याशङ्काकुलितहृदयो हासजनकः**
**स्वकुम्भौ हेरम्बः परिमृशति हस्तेन झटिति ॥ ७२ ॥**

ஸமம் தேவி ஸ்கந்த த்விபவதந பீதம் ஸ்தநயுகம்
3 1 3 3 1 3 1 1 1 3
தவேதம் ந: கேதம் ஹரது ஸததம் ப்ரஸ்னுத முகம் ।
1 3 2 3 1 1 1 1 1 2
யதாலோக்யாசங்கா குலித ஹ்ருதயோ ஹாஸஜநக:
3 1 1 1 1 3 1
ஸ்வகும்பௌ ஹேரம்ப: பரிம்ருசதி ஹஸ்தேந ஜடிதி ॥
1 4 3 1 1 1 4 1 1

झरता हो जिन से दुग्धामृत, वह स्तनयुग तेरे माते
हर ले सारा खेद हमारा जिन का रहते हैं पीते ।
स्कन्द व गजमुख युगपत पय सहसा देख उनहें शंकित बन
हाथों वे अपने कुंभों को तुरत टटोल गणेश विमन
हंसी उगा देते हैं तेरे वत्सल अधरों पर क्षण क्षण ॥

लक्ष्मीधरा

समं तुल्यकालं देवि! भगवति! स्कन्दद्विपवदनपीतं स्कन्दः कुमारः द्विपवदनो विनायकः ताभ्यां पीतं, स्तनयुगं कुचद्वन्द्वं, तव भवत्याः, इदं नः अस्माकं, खेदं क्लेशं, हरतु अपनुदतु। सततं सर्वदा प्रस्नुतमुखं क्षीरस्राविमुखम्, यत् कुचद्वन्द्वं, आलोक्य विलोक्य, आशङ्काकुलितहृदयः आशङ्कायाः मदीयौ कुम्भौ अपहृतवतीत्याशङ्कायाः आकुलितं अवस्कन्दितं व्यग्रतरमित्यर्थः, तादृशं हृदयं मनो यस्य, हासजनकः मातापित्रोः कुमारस्य च। असौ बालिश इति प्रेम्णा हसितवन्तावित्यर्थः। स्वस्य कुम्भौ कुम्भस्थले, हेरम्बः विनायकः, परिमृशति परामृशति। विद्यते न वेति हस्तेन निमार्ष्टीत्यर्थः। झडिति शीघ्रम्। अत्रेत्थं पदयोजना – हे देवि! तव समं स्कन्दद्विपवदनपीतं इदं स्तनयुगं प्रस्नुतमुखं नः खेदं सततं हरतु, यत् आलोक्य आशङ्काकुलितहृदयः हेरम्बः हासजनकः हस्तेन झडिति स्वकुम्भौ परिमृशति। यस्याः पुत्रौ जगत्पूज्यपादौ विनायककुमारस्वामिनाविति देव्यास्सर्वातिशायि माहात्म्यं इति प्रतीयते। देव्याः कुचकुम्भसाम्यं यदि स्यात्तदा विनायककुम्भयोरेव तौल्यमित्यतिशयोक्तिरपि प्रतीयते। विनायकः हस्तेन परिमृशतीत्यनेन विनायककुम्भयोस्तुल्यौ देवीकुचावेवेति उपमेयोपमापि ध्वन्यते। वस्त्वलङ्कारध्वनीनां एकव्यञ्जकानुप्रवेशेन सङ्करः ॥

सौभाग्यवर्धनी

**सममिति**। हे देवि, युगपत् स्कन्दद्विपवदनपीतं स्तनयुगं, सततं प्रस्नुतमुखं अनवरतं पुत्रयोर्वात्सल्येन उत्सिक्तं पयःस्रवन्मुखं नः खेदं हरतु यथा पुत्रे वात्सल्यं तथा मयि वात्सल्येन खेदं हरतु। यदालोक्य आशङ्काकुलितहृदयो हासजनकः, मम कुम्भौ कथमत्रागताविति भ्रान्त्या स्वकुम्भौ हस्तेन झटिति परिमृशति। अत्र तुल्यदर्शनेन स्तनद्वये कुम्भभ्रम इति भ्रान्तिमानलङ्कारः ॥ ७२ ॥

अरुणामोदिनी

**सममिति**। हे देवि! स्कन्दद्विपवदनाभ्यां कुमारगजाननाभ्यां, समं एकदैव, पीतं कृतपानम्। यद्वा समं न्यूनाधिक्यरहितं पतितोर्ध्वत्वादिदोषरहितमित्यर्थः। स्कन्दद्विपवदनपीतं, सततं निरन्तरं, प्रस्नुतमुखं वात्सल्यात् स्वयमुद्गतदुग्धचूचुकं, तव भवत्याः, इदं परिदृश्यमानं स्तनयुग्मं, नः अस्माकं खेदं क्लेशं हरतु वात्सल्यादास्माकीनं दुःखं शमयतु। किमिदमित्यत्राह–यदिति। हेरम्बो गणेशः बाल इत्यर्थः, यत्कुचद्वन्द्वं आलोक्य दृष्ट्वा आशङ्काकुलितहृदयः स्वकुम्भयोः सवितर्कचित्तः सन्, अत एव हासं जनयतीति हासजनकः, स्वमौढ्येनेति भावः। 'ण्वुल्तृचौ' इति ण्वुल्। हस्तेन स्वीयकरेण, स्वकुम्भौ स्वस्यात्मनः कुम्भौ कुम्भस्थले, झटिति शीघ्रं परिमृशति स्पृशति। देवीकुचकुम्भौ स्वभावत एव गजकुम्भनिभाविति भावः। अत्र भ्रान्तिमदलङ्कारेण देवीकुचयोः गजाननकुम्भावेव समौ नान्याविति प्रतीयते ॥ ७२ ॥

आनन्दगिरीया

पद्यचतुष्टयेन कुचौ स्तौति – **समं देवीति**। हे देवि त्रैलोक्यत्राणकारिणि, तवेदं स्तनयुगं अस्माकं खेदं दुःखं हरतु। ततो निर्गतामृतपानेनापगतखेदा भवाम इति। किंलक्षणं, समं स्कन्दद्विपवदनपीतं, स्कन्दः कार्तिकेयः, द्विपवदनो गजमुखो गणेशः, ताभ्यां समं सह एकदा समसमयावच्छेदेन पीतम्। समसमयत्वे हेतुमाह – किंलक्षणं सततं प्रस्नुतमुखं प्रस्नुतं प्रस्नवयुक्तं मुखं यस्य। प्रस्नवो नाम स्त्रीणां स्वापत्यदर्शनोत्पन्नवात्सल्यवशेनोत्सिक्तयोः स्तनयोर्मुखाद् दुग्धस्रावः। समं प्रस्नववशात्सभं पीतम्। यत्स्तनयुगलमालोक्य हेरम्बो गणपतिः करेण स्वकुम्भौ झटिति परिमृशति। स्पृष्ट्वा स्वकुम्भौ स्थानस्थितौ स्त इति निश्चिनोति। किंलक्षणो हेरम्बः। आशङ्काकुलितहृदयः समवृत्तौ पीनोन्नतौ कुचौ दृष्ट्वा गणपतिर्भीतो जातः। एतौ किं मदीयौ कुम्भौ मच्छिरस्त्यक्त्वा अत्रागतौ नु इति शङ्काकुलिततया स्वकुम्भद्वयं स्पृशन्निकटस्थानां हास्यजनको हास्यरसोत्पादकः तद्विभाववान् जातः, विपरीताचारस्यापि हास्यविभावत्वात्। तथा च भरतः, 'विकृताचारैर्वाक्यैः अङ्गविकारैश्च

विकृतवेषैश्च। हासयति जनं च यस्मात्तस्माज्ज्ञेयो रसो हास्ये इति। समं देवि स्कन्देतिपद्य-रहस्यार्थः – बाणस्य मन्त्रमाह – सममिति। वदन द, हरतु रेफ यदा दा पीतं बिन्दु प्र रेफ सततं बिन्दुं आलोक्य कल अत्रापि काः, अः शङ्का वि कुलित लड हेरम्बः वरबिन्दु हास्य-जनकः सः। यां रां लां वां सां द्रां द्रीं क्लीं ब्लूं सः॥ ७२॥

### तात्पर्यदीपिनी

सममिति। हे देवि परमेश्वरि! तवेदं परिदृश्यमानं स्तनयुगं स्तनद्वन्द्वं नः खेदं दुःखं हरतु। किंविधं स्तनयुगं, समं युगपत् स्कन्दद्विपवदनपीतं, स्कन्दः कार्तिकेयः, द्विपवदनो गणेशः, ताभ्यां पीतमास्वादितं, पुनः सततं सर्वदा प्रस्नुतमुखं प्रस्नुतं अपत्यदर्शनात् दुग्धभरितं मुखं यस्य तत्, तदेव विशिनष्टि, हेरम्बो यत् स्तनयुगमालोक्य दृष्ट्वा, हस्तेन करेण झटिति शीघ्रं स्वकुम्भौ परिमृशति, विद्येते नवेति परीक्षते। अत्यन्तमेव गजकुम्भसाम्यं भगवत्याः स्तनयोरित्यभिप्रायः। किंविधो हेरम्बः, शङ्काकुलितहृदयः शङ्कयाऽऽकुलितं हृदयं यस्य सः। पुनः हासजनकः तत्रत्यानां हासं जनयतीति। तव कुचौ दृष्ट्वा स्वकीयमस्तकभ्रान्तिं कृत्वा स्वशिरः स्पृशन् हासजनको जात इति॥ ७२॥

### पदार्थचन्द्रिका

अथ श्रीभवानीकुचकलशौ स्तौति – सममिति। सममित्यव्ययम्। प्रस्नुतं क्षर-त्पयो मुखं यस्य तत्, स्पष्टमन्यत्पूर्वार्धम्। इदमुक्तं स्तनयुगं विशेषेणोत्प्रेक्षमाण आह–यत् स्तन-युगमालोक्य हेरम्बो गणेशः स्वकुम्भौ मूर्धांशौ झटिति शीघ्रं हस्तेन शुण्डादण्डेन परिमृशति स्पृशति। स्वकुम्भस्पर्शने हेतुं वदन् हेरम्बं विशिनष्टि– मातुः स्तनयुगलात्यन्तसादृश्यात् स्वकुम्भभ्रम आशङ्का तया आकुलितं हृदयं यस्य सः। अत एवात्यन्तमुग्धव्यवहारेण निकट-वर्तिनां हासजनकः। कुम्भो राश्यन्तरे हस्तिमूर्धाग्रे राक्षसान्तरे। कार्मुके वारचर्यां च घटे क्लीबे तु गुग्गुलाविति मेदिनीकरः॥ ७२॥

### डिण्डिमभाष्यम्

सममिति। हे परमेश्वरि, समं युगपदेव स्कन्देन कार्तिकेयेन, द्विपवदनेन गणपतिना च पीतं आस्वादितं, सततं प्रस्नुतमुखं, सर्वदा प्रसरत्स्तन्यदुग्धभरितम्। प्रस्नवो नाम प्रसूतानां स्त्रीणां अपत्यदर्शनात् स्तनमुखात् दुग्धस्य निष्यन्दः। एवंभूतं तव स्तनयुगं, नः अस्माकं खेदं हरतु। तदेव विशिनष्टि – यत् स्तनयुगलमालोक्य, आशङ्काकुलितहृदयः आशङ्कया अन्यथावितर्केणाकुलीकृतं हृदयं यस्य स तथोक्तः, हासजनकः अत एव सर्वेषां हासं जनयति। तव कुचौ दृष्ट्वा स्वकीयमस्तकभ्रान्तिं कृत्वा स्वशिरः स्पृशन् हासजनको भवति।

एवंभूतो हेरम्बः। हे इति रंबते गर्जतीति हेरम्बः। रंबि लम्बि गर्जार्थां इति धातोः अच्प्रत्यये, इदितो नुम् धातोः इति नुमागमे हेरम्बः। तेन करेण झटिति शीघ्रं, कुम्भौ निजमस्तकौ परिमृशति, तिष्ठति न वेति स्पृष्ट्वा परीक्षते। अत्यन्तमेव गजकुम्भसादृश्यं भगवत्याः स्तनयोरित्यभिप्रायः ॥ ७२ ॥

गोपालसुन्दरी

समं देवीति। हे देवि द्योतनशीले! समं युगपदेव, स्कन्दः कार्तिकेयः, द्विपवदनो गणेशः, ताभ्यां पीतमास्वादितं, सततं प्रस्नुतमुखं सदाक्षरत्क्षीरमुखं, तव स्तनयुगलं नोऽस्माकं, खेदं दुःखं, हरतु नाशयतु। यत्स्तनयुगलमालोक्य आशङ्कया तर्केणाकुलितं हृदयं मनो यस्य सः, एवं हासजनकः। स्तनयुगे स्वकुम्भभ्रमात् हेरम्बो गणेशः स्वकुम्भौ निजमस्तकौ हस्तेन झटिति शीघ्रं परिमृशति; तिष्ठति न वेति सन्देहेन स्पृशतीति भावः। विष्णुपक्षे—स हेरम्ब इति संबन्धः। हे मन्दे, मन्दो न्यूनः इः कामो यस्यासौ मन्दे। एङ् ह्रस्वादिति संबुद्धौ सुलोपः। हे विस्कन्दद्विपवदन! विगतः स्कन्दो द्विपवदनो यस्मात्स तथा। तव पीतमिदं स्तनयुगं यशोदायाः, नः खेदं हरतु। शेषं समानम्। सुन्दरीगोपालाभिप्रायेण वा स्तनवर्णनम् ॥ ७२ ॥

आनन्दलहरीटीका

सममिति। हे देवि तवेदं स्तनयुगं नोऽस्माकं खेदं दुःखं हरतु। कीदृशं, सममेकदा, स्कन्देन कार्तिकेयेन द्विपवदनेन गणेशेन च पीतं, पीयतेऽस्मिन्निति व्युत्पत्त्या पीतक्षीरमिति भावः। सततं सर्वदा प्रस्नुतं स्रवत्क्षीरं मुखं अग्रभागो यस्य तत्, सततमित्यस्य हरत्वित्यनेन वा संबन्धः। यत्स्तनयुगमालोक्य हेरम्बो गणेशः झटिति शीघ्रं हस्तेन शुण्डेन स्वस्य कुम्भौ परिमृशति। कीदृशः, आशङ्कया, मदीयं कुम्भद्वयमिवेदं दृश्यते, मच्छिरस्यस्ति न वेति संदेहेन आकुलितं व्याकुलीकृतं हृदयं यस्य स तथा। अत एव लोकानां हासजनकः ॥

अमू ते वक्षोजावमृतरसमाणिक्यकुतुपौ[1]
न संदेहस्पन्दो नगपतिपताके मनसि नः।
पिबन्तौ तौ यस्मादविदितवधूसङ्गरसिकौ[2]
कुमारावद्यापि द्विरदवदनक्रौञ्चदलनौ[3] ॥ ७३ ॥

---

1 कलशौ　2 सङ्गमरसौ　3 क्रौञ्चदमनौ।

அமூ தே வக்ஷோஜாவம்ருத ரஸமாணிக்ய குதுபௌ
1 1 1 1 1 1

ந ஸந்தேஹஸ்பந்தோ நகபதி பதாகே மநஸி ந: ।
3 1 3 3 1 1 1 1 1

பிபந்தௌ தௌ யஸ்மாதவிதித வதூஸங்க ரஸிகௌ
1 3 1 1 3 3 1 4 3 1

குமாராவத்யாபி த்விரத வதந க்ரௌஞ்ச தலநௌ ॥
1 3 1 3 3 3 1 1 3

तेरे ये दोनों उरोज माणिक्यकुंभ हैं सुधाभरे
तनिक नहीं सन्देह हमारे मन में नगपतिकीर्तिधरे!
जिन का कर पयपान वधूसङ्गमरस से रह कर अनजान
द्विरदवदन क्रौञ्चदलन अब तक चिर कुमार हैं महिमावान् ॥

लक्ष्मीधरा

अमू परिदृश्यमानौ, ते तव, वक्षोजौ कुचौ, अमृतरसमाणिक्यकुतुपौ अमृतरसस्य माणिक्यकुतुपौ अमृतरसपूरितमाणिक्यकुतुपावित्यर्थः। कुतुपशब्दो यद्यपि चर्मनिर्मितघृततैलाद्याधारभूतघटसन्निभपात्रीवाचकः तथापि तस्याः भगवतीस्तनसादृश्यावगाहने अनधिकारात् तदर्थं माणिक्यरचितत्वमङ्गीकृतं कुतुपयोः। न सन्देहस्पन्दः सन्देहस्य स्पन्दनं लेशमात्रमिति यावत्। नगपतिपताके! मनसि नः अस्माकं, पिबन्तौ तौ माणिक्यकुतुपौ, यस्मात् कारणात् अविदितवधूसङ्गरसिकौ कुमारौ शिशू भूत्वा, अद्यापि इदानीमपि श्लोकरचनाकालेऽपि, द्विरदवदनक्रौञ्चदलनौ द्विरदवदनो विनायकः क्रौञ्चदलनः क्रौञ्चाद्रिभेदनः कुमारस्वामी तौ। अत्रेत्थं पदयोजना—हे नगपतिपताके! अमू ते वक्षोजौ अमृतरसमाणिक्यकुतुपौ। अस्मिन्नर्थे नः मनसि सन्देहस्पन्दो नास्ति। यस्मात्तौ पिबन्तौ अविदितवधूसङ्गरसिकौ द्विरदवदनक्रौञ्चदलनौ अद्यापि कुमारौ भवतः। अत्र वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः स्पष्ट एव। पूर्वपादे रूपकं, वक्षोजयोः कुतुपत्वेनारोपणात्। यद्वा निश्चयान्तस्सन्देहः इमौ वक्षोजौ उत कुतुपाविति सन्देहे कुतुपावेवेति निश्चयः, यतोऽमृतपानात् कुमारयोश्शिशुत्वम्। स्तन्यपानमात्रात् शिशुत्वावस्थैवेति नियमो नास्ति, शैशवानन्तरं यौवनादेरनुभाव्यत्वादिति। विनायककुमारयोस्तु सर्वदा शिशुत्वं अमृतपानवशादेवेति अमृतरसकुतुपसन्देहापनयने साधकं प्रमाणं द्वितीयार्धप्रमेयमिति युक्तं निश्चयान्तस्सन्देह इति। 'कविकल्पितकोटिद्वयस्यावाच्यत्वं नास्ति' इति मङ्खुकः॥ ७३॥

सौभाग्यवर्धनी

अमू त इति। अमू ते वक्षोजौ अमृतरसमाणिक्यकुतुपौ, माणिक्यघटीविशेषौ। न सन्देहस्पन्दः। अत्र पिबन्तौ तौ यस्माद्धेतोः, अज्ञातवधूसंगमरसौ अद्यापि कुमारौ

कौमारावस्थास्थितौ द्विरदवदनक्रौञ्चदमनौ। अत्र स्तनयोः अमृतरसपूर्णमाणिक्यकुतुपत्वसन्देहनिवृत्तेः प्रस्तुतत्वनिश्चयतया सन्देहालङ्कारः। कौमाररूपेण कार्येण अमृतरसपूर्णस्तनतया पानमनुमीयत इत्यनुमानं चालङ्कारः ॥ ७३ ॥

अरुणामोदिनी

स्तनावेवाह– अमू इति। हे नगपतिपताके पर्वताधिपवैजयन्ति! तस्य लोकख्यातिप्रदे देवि! अमू एतौ, ते भवत्याः, वक्षोजौ स्तनौ, अमृतरसमाणिक्यकुतुपौ सुधारसपूर्णमणिमयस्नेहपात्रे। कलशाविति पाठोऽपि क्वाचित्कः समीचीनः। 'कुतूः कृत्तेः स्नेहपात्रं सैवाल्पा कुतुपः पुमान्' इत्यमरः। अत्रार्थे अस्माकं मनसि सङ्कल्पविकल्पात्मके चित्ते, सन्देहस्पन्दो न, कुतुपौ न वेति द्विकोटिकसंशयलेशोऽपि नास्ति, तन्निश्चयादित्यर्थः। तत्र हेतुमाह– पिबन्ताविति। यद्यस्माद्धेतोः द्विरदवदनो गणेशः, क्रौञ्चदलनः कुमारः, तावुभावपि अमृतरसाश्रितौ भवदीयस्तनौ पिबन्तौ स्तन्यपानं कुर्वन्तौ सन्तौ, अविदितवधूसङ्गरसिकौ अविज्ञातस्त्रीसंभोगस्वारस्यौ, रसिकाविति भावप्रधानो निर्देशः। वधूसङ्गमरसाविति पाठे, अविदितो वधूसङ्गमरसः स्त्रीसंभोगजन्यो लौकिकानन्दो याभ्यां तौ, किं तु समवाप्तब्रह्मानन्दरसास्वादावित्यर्थः। यद्वा, ईषद्विदिते अविदिते, आगमपुराणयोरुपासकपरिशीलनेन प्रसिद्धे विदिते लोके ईषद्विदिते इत्यर्थः। ये वध्वौ सिद्धलक्ष्मीदेवसेनाख्ये स्त्रियौ, तयोः सङ्गरसिकौ सास्वादौ, अद्यापि कुमारौ बालकौ अभूतामिति शेषः। कार्यसिद्धिं गताविव ज्यायांसावपि कुमारौ, स्त्रीसंभोगवन्तावपि तदनभिज्ञ्ञाद्योतकब्रह्मचारिपथगामिनौ वा अजायतामित्यर्थः। अतो भवत्कुचयोरमृतरसभरितकुतुपत्वनिश्चय इत्यर्थः। काव्यलिङ्गानुमानाभ्यां सङ्कीर्णोऽत्र कुतुपत्वाध्यवसायरूपोत्प्रेक्षालङ्कारः। तेन च भगवतीस्तन्यस्य समस्ताभीप्सितार्थवितरणशक्तिः प्रतीयते ॥ ७३ ॥

आनन्दगिरीया

अमू न इति। हे नगपतिपताके हिमगिरिकुलोद्योतकरकीर्ते, तवामू वक्षोजौ एतौ स्तनौ अमृतरसमाणिक्यकुतुपौ अमृतरसपूर्णौ आरक्तरत्नघटितौ कुतुपौ कुम्भविशेषौ। कुतुपा सीमा इति लोके प्रसिद्धतमेव वर्तते। अत्रार्थेऽस्माकं मनसि सन्देहस्य लेशोऽपि नास्ति। विश्वासकप्रमाणस्य विद्यमानत्वादित्याह– यस्मात्तौ पिबन्तौ द्विरदवदनक्रौञ्चदमनौ अद्यापि कुमारावेव स्तः। तदपि कस्मात्, यतः अविदितवधूसंगमरसौ, न विदितो न ज्ञानगोचरीकृतो न ज्ञातोऽत एवानपेक्षितः वधूभिः सङ्गमरसो याभ्यां तौ अविदितवधूसङ्गमरसौ स्तनदुग्धामृतपानस्य परमाद्वितीयानन्दतृप्तिजनकतया वधूसङ्गमोत्थितरसादौ तिक्तत्वभासनादुपेक्षावशान्न

विवाहे यत्नः, ततः कुमारावेव स्त इति। द्विरदवदनो गजास्यो गणेशः, क्रौञ्चदमनो बकासुरारिः कार्तिकेयः। अथवा बाल्यावस्थायां स्तन्यामृतपानेनामरभावतया तथावस्थितबाल्यावस्थौ बालकौ स्तः, तेनाविदितवधूसङ्गमरसाविति कृत्वा कुमारावपत्नीकौ। अमृतपानस्यायं स्वभावः यदवस्थायां पीयते, तदवस्थमेवामरीकरोति। अथवा हे नगपतिपताके, ते तवामू वक्षोजौ अमृतरसपूर्णमाणिक्यकुंभौ किं न भवत इति सन्देहस्पन्दः, सन्देहरूपः स्पन्दः। कोटिद्वयावगाहिज्ञानात्माप्युत्कटकोटिकतया अस्माकं मनसि वर्तते। शेषं पूर्ववत्। अत्रानुमानसन्देहावलंकारौ। अमू ते इति पद्यरहस्यार्थः—यस्मात् यद्यौ वक्षोजावमृतरसमाणिक्यकुतुपौ रसमाणिक्य आ या तके आवद्यापि आशानुस्वारमेत्यश्च। यां वां लां वां सां बाणमन्त्रः॥ ७३॥

तात्पर्यदीपिनी

अमू इति। हे नगपतिपताके, नगानां पतिर्हिमाचलः तस्य पताका भाग्यसूचिका तस्याः संबुद्धिः, अमू ते वक्षोजौ अमृतरसमाणिक्यकुतुपौ इति, अमृतमयरसस्य माणिक्यमये आधारपात्रे इत्यस्माकं मनसि सन्देहस्पन्दः सन्देहलेशोऽपि न। कुतुपशब्दो यद्यपि चर्मनिर्मितघृततैलाधारभूतघटसन्निभवाचकः, तथापि तस्य भगवतीस्तनसादृश्याग्राहनेऽनधिकारात्, तदर्थं माणिक्यमयत्वमङ्गीकृतम्। सन्देहाभावे कारणमाह—यस्मात्कारणात् द्विरदवदनक्रौञ्चदलनौ द्विरदवदनो विनायकः क्रौञ्चदलनः कार्तिकेयः, तौ यौ स्तनौ पिबन्तौ सन्तावद्यापि श्लोकरचनाकालेऽपि, कुमारौ शिशू, अत एव शिशुत्वादेव अविदितवधूसङ्गरसिकौ, न विदितो वधूसङ्गो याभ्यां तौ च तौ रसिकौ च। अयमाशयः—अमू वक्षोजौ उत कुतुपाविति सन्देहे कुतुपावेवेति निश्चयः। यतः अमृतपानात्कुमारयोः शिशुत्वं, स्तनपानमात्रे शिशुत्वावस्थैवेति नियमो नास्ति। कुतः? शिशुत्वानन्तरं यौवनादेर्भाव्यत्वादिति। विनायककुमारयोस्तु सर्वदा शिशुत्वं अमृतपानवशादेवेति। अमृतरसकुतुपसन्देहनिरासे साधकं प्रमाणं द्वितीयार्धप्रमेयमिति सूचितम्। ननु महागणेशस्याङ्काधिरूढा काचन शक्तिः सिद्धलक्ष्मीरिति देवी श्रूयते। तथात्वे अविदितवधूसङ्गरसिकाविति विरुद्धम्। सत्यं, देवानां बह्व्यो मूर्तयः प्रसिद्धा देशकालेषु भक्तानामिष्टदायकाः, शत्रुविनाशकाश्च सिद्धिमन्तो वपूंषि धारयन्ति त्यजन्ति च। एकमूर्तिस्वभावो मूर्त्यन्तरे न घटत इति नात्र दोषः। यथा भगवता श्रीरामचन्द्रावताराख्ये शरीरे एकपत्नीव्रतत्वं निर्मलस्वभावत्वं चाङ्गीकृत्य श्रीकृष्णावतारे बहुस्त्रीसंभोगित्वं मायापरायणत्वं च दृष्टमिति॥ ७३॥

पदार्थचन्द्रिका

पुनरपि स्तनकलशावुत्प्रेक्षमाणो वर्णयति—अमू इति। हे नगपतिपताके, नगपतिर्हिमवान् तस्य पताकावच्छोभमाने इत्यर्थः। अमृतरसा माणिक्यानीव अमृतरसमाणिक्यानि,

तैः पूर्णौ च तौ कलशौ चेति मध्यमपदलोपी समासः। अत्र भवत इति क्रियापदमध्याहार्यम्। कनककलशावित्यत्र कुतुपाविति पाठे कुतुपौ चर्ममये स्नेहपात्रे। वक्षोजयोरमृतरसमाणिक्यकलशत्वे सन्देहं निराचष्टे। नोऽस्माकं मनसि सन्देहस्पन्दो न, अल्पोऽपि सन्देहो नास्तीत्यर्थः। स्पदि किंचिच्चलन इति धातुः। सन्देहाभावमेव अर्थापत्त्या द्रढयति, तौ वक्षोजौ यद्वा तौ प्रसिद्धौ द्विरदवदनक्रौञ्चदलनौ। अस्मिन्पक्षे प्रसिद्धवाचित्वात्, यच्छब्दस्य तच्छब्दापेक्षा न। अद्यापि कुमारौ पञ्चवार्षिकौ। अविदितवधूसङ्गमरसाविति विशेषणेनापि सदा कुमारत्वं सूच्यते। सदाकुमारत्वान्यथानुपपत्तिरेवामृतरसमाणिक्यकलशत्वोपयोगं गमयतीत्यर्थः। कुतूः कृत्तेः स्नेहपात्रे सैवाल्पा कुतुपः पुमानित्यमरः॥ ७३॥

## डिण्डिमभाष्यम्

अमू त इति। हे नगपतिपताके, पर्वतश्रेष्ठस्य हिमवतः कुलकीर्तिप्रख्यापननिपुणवैजयन्ति, अमू ते वक्षोजौ स्तनौ अमृतरसमाणिक्यकलशावेव सुधापूरितकुम्भावेव। अत्र न सन्देहस्पन्दः संशयस्य स्पन्दो लेशोऽपि नोऽस्माकं न वर्तते। यतस्ते स्तनमण्डलयोः अतिदृढकारणसद्भावात् अमृतरसकुम्भत्वं न व्यभिचरति। तदेव कारणमाह—तौ कुम्भौ पिबन्तौ, अत एव नित्यकुमारौ, तेनैव कारणेन अविदितवधूसङ्गमरसौ अज्ञातो वधूसङ्गमस्य स्त्रीसंभोगस्य रसः सुखानुभवो याभ्यां तौ तथोक्तौ, द्विरदवदनक्रौञ्चदलनौ द्विरदवदनो गणपतिः, क्रौञ्चदलनः कार्तिकेयः तावुभौ तादृशौ तव कुचकलशप्रसरद्बहुतरपीयूषपानजनितसञ्जातनित्यबाल्यावद्यापि वर्तेते, यस्मात्कारणात्, अतः सुधाघटत्वं तव कुचयोः सिद्धम्। ननु महागणेशस्य अङ्काधिरूढा महालक्ष्मीसिद्धिः काचन देवी श्रूयते। कार्तिकेयस्यापि महेन्द्रकन्या देवसेना नाम अपरा वल्लभेति श्रूयते, तत्कथं विरुद्धमेतदित्याशङ्कायामाह—देवतानां खलु बह्वयो मूर्तयः प्रसिद्धाः, तत्तद्देशकालेषु भक्तानामिष्टप्रदानाय, तत्कार्याय शत्रूणां विनाशहेतवे च बहुधा स्वेच्छया सृष्टाः सिद्धिमत्यो देवता वपूंषि धारयन्ति त्यजन्ति च। एकमूर्तिगतस्वभावो मूर्त्यन्तरे न घटत इति नात्र दोषः। भगवता पुरुषोत्तमेन एकस्मिन् रामाख्यशरीरे एकदारव्रतत्वं निर्माय स्वभावस्थत्वं चाङ्गीकृतम्। कृष्णावतारे बहुस्त्रीसम्भोगित्वं मायापरायणत्वं च स्वीकृतम्॥ ७३॥

## गोपालसुन्दरी

अमू ते वक्षोजाविति। हे नगपतिपताके, ते तव अमू वक्षोजौ अमृतरसस्य मणिनवरत्नकलशौ भवतः अत्र नोऽस्माकं मनसि न सन्देहस्य स्पन्दः लेशः। यस्मात् कारणात् तौ वक्षोजौ पिबन्तौ द्विरदवदनक्रौञ्चदमनौ गणपतिस्कन्दौ अद्यापि कुमारौ, त्वत्स्तनपानादेव

तयोर्न जरेति भावः। कीदृशौ अविदितवधूपङ्कमरसौ अज्ञातस्त्रीसंभोगसुखावित्यर्थः। विष्णुपक्षे—अमू द्विरदवदनक्रौञ्चदमनौ ते तव विराड्रूपे वक्षोजौ स्तनौ। वक्षः हृदयम्। अजौ अजन्मानाविति वा। कीदृशौ अमृतरसस्य माणिक्यकलशौ यस्मात्पिबन्तौ वर्तेते, तस्मादद्यापि तौ कुमारौ। नगपतिपताके, नगानां पतिर्विष्णुः स एव पताका यशःख्यापको यस्मिन् इत्यर्थः॥ ७३॥

आनन्दलहरीटीका

अमू इति। हे नगपतिपताके हिमालयस्य भूषणीभूतपताकास्वरूपे, ते तव अमू वक्षोजौ स्तनौ अमृतरूपरसस्य द्रवस्य माणिक्यमयौ कलशौ। कुतुपाविति पाठे माणिक्यसदृशौ चर्मपात्रविशेषौ इत्यर्थः। कुतूः कृत्तेः स्नेहपात्रं सैवाल्पा कुतुपः पुमानित्यमरः। अत्र नोऽस्माकं मनसि सन्देहस्य स्पन्दो लेशो नास्ति। कुतः, तत्राह—तौ स्तनौ पिबन्तौ तयोः क्षीरपानं कुर्वन्तौ द्विरदवदनक्रौञ्चदलनौ गजाननकार्तिकेयौ तस्मादद्यापि कुमारौ अमृतपानस्येदं फलमिति भावः। कुमारत्वमेव दर्शयति—अविदितो न ज्ञातो वधूसङ्गमरसः स्त्रीसङ्गमसुखं याभ्याम्। यद्यपि गणेशध्यानादौ आगमशास्त्रे सिद्धिसंज्ञा स्त्री श्रूयते, तथा कार्तिकेयस्यापि देवसेना नाम पत्नीति, तथापि तयोर्देव्या अवतारभेदादविरुद्धं बोध्यम्॥ ७३॥

**वहत्यम्ब [1]स्तम्बेरमदनुज कुम्भप्रकृतिभिः**
**समारब्धां मुक्तामणिभिरमलां हारलतिकाम्।**
**कुचाभोगो बिम्बाधररुचिभिरन्तः शबलितां**
**प्रतापव्यामिश्रां [2]पुरदमयितुः कीर्तिमिव ते॥ ७४॥**

வஹத்யம்ப ஸ்தம்பேரம தநுஜ கும்ப ப்ரக்ருதிபி:
1 3 1 3 3 1 4 1 1 1 4
ஸமாரப்தாம் முக்தாமணிபிரமலாம் ஹாரலதிகாம் ।
3 4 1 1 4 1 1
குசாபோகோ பிம்பாதர ருசிபிரந்த: சபலிதாம்
1 1 4 3 3 3 4 4 1 3 1
ப்ரதாபவ்யாமிச்ராம் புரதமயிது: கீர்திமிவ தே ॥
1 1 1 1 3 1 1 1 1

**गज दनुज कुंभों से छूटी नव मुक्ताओं से**
**निर्मित अमलहार लतिका फबती तेरे उर पर ऐसे।**

---

1 स्तंबेरमवदनकुम्भप्रतिकृतिः 2 पुरविजयिनः

ओठों की लाली से शबलित धवलारुण मिश्रित छवि ले
पुरहर का प्रतापमय यश ही हो मानों सद्गुणविमले ॥

लक्ष्मीधरा

वहति दधाति । अम्ब! मातः! स्तम्बेरमदनुजकुम्भप्रकृतिभिः स्तम्बेरमदनुजः गजासुरः तस्य कुम्भस्थलमेव प्रकृतिः जन्मभूमिः येषां तैः । गजकुम्भेषु मुक्तामणय उद्भवन्ति । यथोक्तं सर्वज्ञसोमेश्वरेण—"गजकुम्भेषु वंशेषु फणासु जलदेषु च । शुक्तिकायामिक्षुदण्डे षोढा मौक्तिकसम्भवः ॥ गजकुम्भे कर्बुराभाः वंशे रक्तसितास्स्मृताः । फणासु वासुकेरेव नीलवर्णाः प्रकीर्तिताः ॥ ज्योतिर्वर्णास्तु जलदे शुक्तिकायां सितास्स्मृताः । इक्षुदण्डे पीतवर्णाः मणयो मौक्तिकास्स्मृताः ॥" इति । गजकुम्भप्रकृतयो मौक्तिकमणयः कर्बुरवर्णाः, गजासुरकुम्भ-प्रकृतयस्तु विशेषत एवेति भावः । समारब्धां खचितां, मुक्तामणिभिः मौक्तिकैः, अमलां त्रासादिदोषरहितां न तु श्वेतां, गजकुम्भोद्भवानां कर्बुरत्वात् । हारलतिकां मुक्तावलिं, कुचाभोगः कुचमध्यप्रदेशः, बिम्बाधररुचिभिः बिम्बाकारोऽधरो बिम्बाधरः । शाकपार्थि-वादित्वात्साधुः । बिम्बाधरस्य अधरबिम्बस्येव रुचिभिः, अन्तश्शबलितां सञ्जातचित्रवर्णाम् । 'चित्रकिम्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः । अधरकान्तिसंवलिता शुक्तिमुक्तामणि-मालिकेव भातीति भावः । प्रतापव्यामिश्रां पुरदमयितुः त्रिपुरान्तकस्य, कीर्तिमिव ते तव । प्रतापस्तु रक्तवर्णः कीर्तिस्तु श्वेतवर्णेति महाकविप्रसिद्धिः । अत एवास्य कवेः गजकुम्भोद्भवाः मणयः पाटलवर्णाः, न शबलवर्णाः, अन्तश्शबलितामित्युक्तिरपि पाटलवर्णपरेत्यभिप्राय इत्यनुसन्धेयम् । अत्रेत्थं पदयोजना—हे अम्ब ! ते कुचाभोगः स्तम्बेरमदनुजकुम्भप्रकृतिभिः मुक्तामणिभिः समारब्धां अमलां हारलतिकां बिम्बाधररुचिभिः अन्तश्शबलितां प्रतापव्यामिश्रां पुरदमयितुः कीर्तिमिव वहति । अत्रोत्प्रेक्षालङ्कारः हारलतिकायाः प्रतापसंवलितकीर्तित्वेन संभावनात् । बिम्बाधररुचिभिरित्यत्र उत्प्रेक्षा, स्वभावतो रक्तवर्णेषु बिम्बाधररुचिभिः संवलनादिवेति हेतोरुत्प्रेक्षणात् । उभयोरनुप्राण्यानुप्राणकभावेन संबन्धः, अपृथक्स्थित्या उपकारकत्वात् ॥ ७४ ॥

सौभाग्यवर्धनी

वहतीति । हे अंब, स्तंबेरमदनुजकुम्भप्रकृतिभिः गजकुम्भप्रकृतिभिः, समारब्धां रचितां मुक्तामणिभिरमलां हारलतिकां कुचाभोगः बिंबाधररुचिभिः, अन्तः शबलितां अन्तः प्रतिबिम्बितां, प्रतापव्यामिश्रां प्रतापसंवलितां, पुरविजयिनः कीर्तिमिव वहति । महादेवस्य कीर्तिप्रतापः तव हृदयं गतः सर्वदेति भावः । विमलतरे हारे बिम्बाधररुचिप्रतिबिम्बतया अरुणगुणारोपेण प्रतापसंमिश्रकीर्त्युपमानस्य प्रस्तुतत्वात् अध्यारोपोपमा ॥ ७४ ॥

अरुणामोदिनी

स्तनावधिकृत्यैवाह – वहतीति। हे अंब! जगन्मातः देवि! ते भवत्याः, कुचाभोगः स्तनविस्तारः। आभोगः परिपूर्णतेति विश्वः। स्तम्बे रमते क्रीडतीति स्तम्बेरमः। स्तम्बकर्णयो रमिजपोः इति सप्तम्या अलुक्। स इति दनुजः गजासुरः, तस्य कुम्भौ मस्तकावेव प्रकृतिरुत्पत्तिस्थानं येषां तैः – 'गजकुम्भेषु वंशेषु फणासु जलदेषु च। शुक्तिकायामिक्षुदण्डे षोढा मौक्तिकसंभवः॥' इति वचनात् वेण्वादिवत् गजकुम्भयोरपि मुक्तोत्पत्तिस्थानत्वप्रसिद्धेः, गजाकृतिमतो गजासुरस्यापि कुम्भयोः मुक्तोत्पत्त्यवश्यम्भावादिति भावः। 'प्रकृतिस्तु प्रधाने स्यात्स्वभावोत्पत्तिदेशयोः' इति विश्वः। मुक्तामणिभिः मुक्ताफलैः, समारब्धां गुम्फितां, अमलां निर्मलां, त्रासादिदोषरहितां च। अत एव बिम्बाधररुचिभिः बिम्बिकाफलतुल्यदन्तच्छदकान्तिभिः, अन्तः अभ्यन्तरे, शबलितां कर्बुरवर्णां, अत एव गजासुरकुम्भोद्भूतमुक्तानिर्मितत्वोक्तिः अविरुद्धा। तासां कर्बुरवर्णवत्ताप्रसिद्धेः। यदाहुः रत्नशास्त्रविदः – 'गजकुम्भे कर्बुराभा वंशे रक्तसिता मताः। फणासु वासुकेरेव नीलवर्णाः प्रकीर्तिताः॥ ज्योतिर्वर्णास्तु जलदे शुक्तिकायां सिताः स्मृताः। इक्षुदण्डे पीतवर्णाः मणयो मौक्तिकाः स्मृताः॥' इति। हारलतिकां मुक्तावलीलतां कर्म, प्रतापेन रक्तवर्णतया कविप्रसिद्धेन कोशदण्डजतेजसा। 'स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम्' इत्यमरः। व्यामिश्रां संमिलितां, पुरदमयितुः त्रिपुरान्तकस्य, प्रथितपराक्रमस्यैवेत्यर्थः। कीर्तिं श्वेतत्वेन कवित्वप्रसिद्धमूर्तिं यश इव, वहति धरति। अत्र 'इतराभरणेभ्योऽपि शत्रुमारणलक्षणं। तदाहृतपदार्थेन गुम्भितं भूषणं वरम्' इत्यभियुक्तोक्तेः। अधरकान्तिशबलिता भवदीयकुचाभोगसंस्थिता हारलता जगदेकवीरेण पुरमथित्रा शात्रवगजासुरकुम्भीयमौक्तिकानि आनीय, निर्माय कुचयोर्निक्षिप्ता अभवत्। अतिप्रेयसः प्रतापसंपृक्तमूर्तिमत्कीर्तिधारणमेव पतिव्रताधर्म इति भावः। अत्रोत्प्रेक्षया देवीकुचयोः शिवकीर्त्युत्पत्तिस्थानत्वं द्योत्यते॥ ७४॥

आनन्दगिरीया

वहत्यंबेति। अम्ब हे मातः, तव कुचाभोगः स्तनपरिणाहः, स्तनोपचितिर्हारलतिकां वहति। किंलक्षणां, मुक्तामणिभिः समारब्धां, मुक्ता मौक्तिकानि, तल्लक्षणा मणयः, तैः प्रारब्धां, पुनः किंलक्षणां, अमलां निर्मलमुक्ताफलमालां, पुनः किंभूतां, बिम्बाधररुचिभिरन्तः शबलितां बिम्बवदरुणस्य अधरस्य या रुचयः कान्तयः ताभिरन्तः शबलितां प्रतिबिम्बत्वं प्राप्य पाटलिताम्। उत्प्रेक्षते पुरविजयिनः श्रीमहादेवस्य प्रभापटलपाटलीकृतां कीर्तिस्रजमिव। मुक्ताफलानां प्रतिबिम्बग्रहणार्थे उत्कर्षमाह – किंभूतैः

मुक्तामणिभिः, स्तम्बेरमदनुजकुम्भप्रकृतिभिः स्तम्बेरमदनुजो गजासुरनामा दैत्यः, तस्य कुम्भौ कुम्भस्थलं, तत्प्रकृतिरुत्पत्तिस्थानं उत्पत्तेर्मूलकारणं येषां तैः, कृपाणधारया खण्डशः क्रियमाणगजासुरकुम्भान्निर्गतैरित्यर्थः। षष्टिहायनस्य कुम्भिनः कुम्भस्थले मौक्तिकानि शिष्यन्ते तान्यत्यन्तं स्वच्छानि गुणवन्ति महान्ति वर्तुलानि अनर्घ्याणि भवन्तीति प्रसिद्धिः। अथवा रणाङ्गणे महासमर्थमजेयं गजासुरं स्वपुरुषकारेण हत्वा तत्कुंभस्थले वर्तमाना मुक्ताः स्ववल्लभायाः कुचयोरारोपितवान्। सा हारलतापि कुचौ प्राप्य दिदीपे इति भावः। अथवा एतादृशी परमेश्वरी स्वामिभक्ता यत्स्वामिनः कीर्तिप्रतापौ सदा हृदये धत्ते, अन्तः सन्तोषहेतुत्वेन बहिरलङ्कारत्वेन वेत्युक्तम्। अथवा कामिन्यः प्रियं वस्तु कुचयोरेव दधते। स्वामिनः कीर्तिप्रतापौ चात्यन्तं प्रियौ पुनर्हारत्वेन वर्णितौ। तयोर्धारणं कुचयोरेव युज्यते। यतः तरुणीस्तन एव शोभते मणिहारावलिरामणीयकमित्युक्तत्वात्। श्रीमहादेवेन गजासुरहननावसरे तस्य कुंभस्थलोद्भेदनात्, ततो निर्गताभिर्मुक्ताभिर्मालां कृत्वा हृदये धृतवती। अतः प्रतापव्यामिश्रा कीर्तिरिवेत्युत्प्रेक्षा। अध्यारोपेणोपमा वा। मुक्ताहारेऽरुणगुणाध्यारोपेण प्रतापसंमिश्रकीर्त्युपमानस्य लब्धावसरत्वात्। वहत्यम्बेति पद्यरहस्यार्थः। ताराया मन्त्रमाह— प्रतापव्यामिश्रा स्वाहा, शबलितप्रताप ताद्वयं, स्तंबेरमदनुजकुंभ द्वयं प्रकृति त, हारलतिका रे त कुचा ड पुरविजयिनः रेफ उ पु भोगा रे ओं क्रमज्ञानं गुरोर्मुखात्। ओं तारे तुत्तारे तुरे स्वाहा॥ ७४॥

तात्पर्यदीपिनी

वहतीति। हे अंब तव कुचाभोगः कुचयोराभोगः मण्डलं हारलतिकां मुक्तावलिं वहति दधाति। किंभूतां हारलतिकां मुक्तामणिभिः मौक्तिकैः समारब्धां खचितां पुनरमलां त्रासादिदोषरहितां किंविधैर्मुक्तामणिभिः, स्तंबेरमदनुजकुम्भप्रकृतिभिः, स्तम्बेरमाकारो दनुजो दानवो गजासुरः, तस्य कुम्भौ गण्डौ तावेव प्रकृतिर्जन्मभूमिः येषां तैस्तथोक्तैः। गजकुम्भेषु मुक्तामणयो भवन्ति। तथोक्तं सर्वज्ञसोमेश्वरेण—'गजकुम्भेषु वंशेषु फणासु जलदेषु च। शुक्तिकायामिक्षुदण्डे षोढा मौक्तिकसंभवः॥ गजकुम्भे कर्बुराभं वंशे रक्तसिताः स्मृताः। फणासु वासुकेरेव नीलवर्णाः प्रकीर्तिताः॥ ज्योतिर्वर्णास्तु जलदे शुक्तिकायां सिताः स्मृताः। इक्षुदण्डे पीतवर्णा मणयो मौक्तिकाः स्मृताः'॥ गजकुम्भप्रकृतयो मौक्तिकमणयः कर्बुरवर्णाः। पुनः किंविधाः, बिंबाधररुचिभिः बिम्बतुल्योऽधरः तस्य रुचिभिः दीप्तिभिः, अन्तर्मध्ये शबलिताः चित्रवर्णाः, अधरकान्तिसंवलिताः शुक्तिमुक्ताः मणिमाणिक्येव भान्तीत्यत्रोत्प्रेक्षा। पुरदमयितुः शङ्करस्य कीर्तिमिव। किंविधां कीर्तिं प्रतापव्यानद्धां प्रतापयुक्तां, प्रतापस्तु रक्तवर्णः, कीर्तिः श्वेतवर्णा इति महाकविप्रसिद्धिः। अत एव गजकुम्भोद्भवमणयः पाटलवर्णाः। अन्तः शबलितां

इत्युक्तिः आपाटलवर्णाभिप्रायेणेत्यनुसन्धेयम् । इतराभरणेभ्यः भर्तृप्रतापलक्षणाभरणधारणं वरमिति कृत्वा इतरमुक्तामालाभ्यः स्वभर्तृमर्दितगजासुरमस्तकोत्पन्नहारलतैव धृतेति भावः ॥

### पदार्थचन्द्रिका

स्तनयुगे लुठन्तीं शोभमानां हारलतिकां स्तौति—वहतीति । हे अंब तव कुचाभोगो हारलतिकां वहतीत्यन्वयः । हारलतिकामुत्प्रेक्षमाणो विशिनष्टि—पुरविजयिनः प्रतापव्यामिश्रां कीर्तिमिव । अत्र देहलीदीपन्यायेन पुरविजयिशब्द उभयत्र संबध्यते । बिम्बाकारावधरौ तयोः रुचिभिः कान्तिभिः अन्तर्मध्ये शबलं चित्ररूपं संजातं यस्यां सा । शबलितामिति हारलतिका-विशेषणम् । स्तम्बेरमवदनो गणेशः तस्य कुम्भयोरिव प्रतिकृतिः प्रतिमा मूर्तिर्यस्य स इति कुचाभोगविशेषणम् । समारब्धां निर्मिताम् ॥ ७४ ॥

### डिण्डिमभाष्यम्

हे अम्ब जगज्जालजननि! स्तम्बेरमदनुजकुम्भप्रकृतिभिः स्तम्बेरमाकारस्य हस्तिरूप-धरस्य दनुजस्य दानवोत्तमस्य कुम्भौ मस्तकावेव प्रकृतिः जन्मस्थानं येषां तैस्तथोक्तैः । 'प्रकृतिस्तु प्रधाने स्यात् स्वभावोत्पत्तिदेशयो'रिति विश्वप्रकाशः । 'जनिकर्तुः प्रकृति'रिति पाणिनिसूत्रं च । 'इभः स्तम्बेरमः पद्मी यूथनाथस्तु यूथपः' इत्यमरः । ईदृशैरेव मुक्तामणिभिः समारब्धां ग्रथिताममलां निर्मलां । किञ्च बिम्बाधररुचिभिः अधरबिम्बकान्तिनिकुरुम्बैः मध्ये शबलितां भिन्नवर्णीकृतां, तथा प्रतापव्यामिश्रां प्रतापेन वीरपुरुषविशेषधर्मेण कविसमया-द्रक्तवर्णेन व्यामिश्रां सङ्गतां, पुरविजयिनो महादेवस्य कीर्तिं यशो मञ्जरीमिव । कीर्तेरपि कविसमयप्रसिद्धेः शुक्लवर्णता । जगदेकवीरस्य महादेवस्य अन्यसमस्तसुरवीरावध्यमहागजासुर-मारणद्वारा भगवतो यः प्रतापो या च कीर्तिः समुदपादि, तद्युगलीमिव मूर्तिमतीं तव कुचाभोगः स्तनमण्डलो हारलतिकां वहति । पत्युः कीर्तिप्रतापयोः सन्ततधारणं सङ्कीर्तन-द्वारा पतिव्रतानां प्रसिद्धमिति भावः । तथोक्तं 'इतराभरणेनापि शत्रुमारणलक्षणम् । तदाहृत-पदार्थेन गुम्फितं भूषणं वरम्'इति कृत्वा भगवत्या इतरमुक्तामालाभ्यः स्वभर्तृमर्दितगजासुर-मस्तकोत्पन्नमौक्तिकसंपन्नहारलतैवातिवल्लभेत्यभिप्रायः ॥ ७४ ॥

### गोपालसुन्दरी

वहत्यंबेति । हे अंब मातः, तव कुचाभोगः मुक्तामणिभिः समारब्धां घटिता-ममलां निर्मलां हारलतिकां वहति । मणिभिः कीदृशैः, स्तंबेरमदनुजकुम्भप्रकृतिभिः, स्तंबे-रमदनुजो गजासुरः, तस्य कुम्भ एव प्रकृतिः जन्मस्थानं येषां तैः, तथा बिम्बाधररुचिभिः

अधरबिम्बकान्तिभिः अन्तः शबलितां भिन्नवर्णाकृतिमिव प्रतापेन लोहितवर्णेन व्यामिश्रां सङ्गतां पुरविजयिनो महेशस्य शुभ्रां कीर्तिमिव। तथा च गजासुरमारणेन यः शिवस्य प्रतापो या च कीर्तिः, तमिव कुचाभोगे बिभर्तीति भावः। विष्णुपक्षे – हे अंब, जगन्नेत्र जगज्जनक वा, त्रीणि अंबकानि नेत्राणि यस्य, त्रयाणां लोकानामम्बकः पितेति अमरादिटीकाकृद्भिः अंबकपदव्याख्यानात्। शेषं समानम् ॥ ७४ ॥

आनन्दलहरीटीका

बहतीति। हे अंब ते तव कुचाभोगः स्तनविस्तारः अमलां निर्मलां हारलतिकां बहति धारयति। कीदृशीं स्तम्बेरमदनुजो गजासुरः तस्य कुम्भौ प्रकृतिर्येषां तैः मुक्तामणिभिः समारब्धां ग्रथितां बिम्बतुल्याधरकान्तिभिरन्तर्मध्ये शबलितां चित्रितां प्रतापैर्व्यामिश्रां युक्तां, पुरविजयिनः शिवस्य कीर्तिमिव, प्रतापस्य रक्तत्वात्, कीर्तेः शुभ्रत्वात् तथोक्तिः। गजमुख-वधेन जातौ शिवस्य कीर्तिप्रतापौ तव कुचाभोगो बहतीवेत्यर्थः। उत्प्रेक्षालङ्कारः। चित्र-किर्मीरकल्माषशबलैताश्च कर्बुर इत्यमरः ॥ ७४ ॥

**तव स्तन्यं मन्ये धरणिधरकन्ये हृदयतः**
**[1]पयःपारावारः परिवहति [2]सारस्वतमिव।**
**दयावत्या दत्तं द्रविडशिशुरास्वाद्य तव यत्**
**कवीनां प्रौढानामजनि कमनीयः कवयिता ॥ ७५ ॥**

தவ ஸ்தன்யம் மந்யே தரணிதரகந்யே ஹ்ருதயத:
1 1 4 4 1 3 1
பய:பாராவார: பரிவஹதி ஸாரஸ்வதமிவ ।
1 1 1 1 1
தயாவத்யா தத்தம் த்ரவிடசிசுராஸ்வாத்ய தவ யத்
3 1 3 1 1 3 3 1 1
கவீநாம் ப்ரௌடாநாம் அஜநி கமநீய: கவயிதா ॥
1 1 4 1 1 1

तव हृदयविनिर्गत क्षीरांबुधि ही सारस्वत बन माते!
बहती है स्तन्य के बहाने भक्तों के हित अगजाते!।
तेरा सदय स्तन्य पीकर यह द्रविडशिशु बना कवियों में
प्रौढ प्रौढतर कवि कमनीय काव्यसर्जक सत्कवियों में ॥

---

1 सुधाधारासारः　　2 सारस्वत इव।

लक्ष्मीधरा

तव स्तन्यं स्तनोद्भवं क्षीरं, मन्ये जानामि। धरणिधरकन्ये! हृदयतः हृदयात्, पयःपारावारः क्षीरसमुद्रः। सुधाधारासारः इति वा पाठः। सुधायाः धाराणामासारः, सुधाप्रवाहः परिवहति सारस्वतं सरस्वतीमयमिव, स्तन्यस्य श्वेतवर्णत्वात् सरस्वतीमयत्वेनोत्प्रेक्षणम्, माधुर्यात्सुधारूपत्वेन च। दयावत्या प्रशस्तकृपायुक्तया, दत्तं स्तन्यं, द्रविलशिशुः द्रविलजातिसमुद्भवः बालः एतत्स्तोत्रकर्ता, आस्वाद्य पीत्वा, तव यत् कारणात्, कवीनां कवीश्वराणां, प्रौढानां प्रगल्भानां मध्ये इति निर्धारणे षष्ठी। अजनि जातः। कमनीयः अतिरमणीयः, कवयिता कविः। अत्रेत्थं पदयोजना—हे धरणिधरकन्ये! तव स्तन्यं हृदयतः उत्थितः सुधाधारासारः पयःपारावारः सारस्वतमिव परिवहतीति मन्ये। यद्यस्मात् दयावत्या त्वया दत्तं तव स्तन्यं द्रविलशिशुरास्वाद्य प्रौढानां कवीनां मध्ये कमनीयः कवयिता अजनि। अत्रोत्प्रेक्षाद्वयं पदव्याख्यानावसरे कथितम्। उभयोस्संसृष्टिः। ७५॥

सौभाग्यवर्धनी

तवेति। हे तुहिनगिरिकन्ये! तव स्तन्यं स्तनपरिपूर्णं दुग्धं पयःपारावारः सारस्वतः सरस्वतीविलासरूपः हृदयतः परिवहतीति मन्ये। सरस्वतीरूपः समुद्रः सदा परिवहतीत्यर्थः। दयावत्या दत्तं द्रविडशिशुर्मल्लक्षणः आस्वाद्य यद्यस्मात्, कवीनां प्रौढानां मध्ये कमनीयः कवयिता अजनि॥ अत्रेयं चिरन्तनाख्यायिका—भगवतः शंकराचार्यस्य पिता अत्यन्तं परमेश्वरीभक्तः, ग्रामाद्बहिः परमेश्वर्या आयतनं गत्वा दुग्धेन परमेश्वरीं संस्नाप्य पूजां विधाय नमस्कृत्य अवशिष्टं किंचित् दुग्धं उत्सङ्गगताय सूनवे शंकराचार्याय प्रयच्छति। बालकस्य मनसि 'प्रत्यहं परमेश्वरी स्वयं पिबति, पीतशेषं मह्यं पिता ददातीति' मतिर्जागर्ति। कदाचित् ग्रामान्तरं गच्छन् बालकस्य मातरं प्रत्युक्त्वा गतः, 'प्रत्यहं मदागमनं यावत् तावत्त्वया दुग्धेन स्नापनीया भगवती, पूजनीया सम्यक्' इति। सा तथा कुर्वाणा कदाचित् स्त्रीधर्मिणी जाता। गृहे कोऽपि नास्ति। तदा पुत्रं प्रेषितवती, 'दुग्धेन भगवतीं संस्नाप्य पूजां विधायागम्यता'मिति। बालो गत्वा पूजां विधाय दुग्धं पुरतो निधाय 'परमेश्वरि पिबे'ति गदितवान्। यदा विलम्बो जातः, भगवती च न पिबति, तदा रोदितुमारब्धवान्। ततः परमेश्वरी दयया आविर्भूय दुग्धं पीतवती। पुनः पात्रं रिक्तं विलोक्य सर्वं त्वया पीतं मदर्थे न स्थापितं किमपीति रोदितुं प्रवृत्तः। ततो विहस्य बालकमङ्के समारोप्य स्तन्यं दत्तवती। जगदम्बिकास्तन्यपानेन सर्वा विद्याः पुरःस्फूर्तिका जाताः। कवयन्नेव गृहं गतः। एतस्मिन्नन्तरे पिता समागतः। बालस्याकृतिं वाग्जृम्भितं च विलोक्य

साश्चर्योऽभूत्। स्वप्न आगत्य परमेश्वर्युक्तवती 'अयं बालः शङ्करांशः। अनेन लोकोद्धारो भविष्यति। त्वया चिन्ता न कार्या। मम बालकोऽयम्' इति ॥ ७५ ॥

अरुणामोदिनी

सिंहावलोकनन्यायेन पुनः स्तन्यमहिमानमेवाह– तवेति– धरतीति धरः, पचाद्यच्। धरणेर्धरो धरणीधरः भूधरो हिमवान्, वीच्यादित्वात् धरणिशब्द इकारान्तः, यदाहुः 'वीचिः पङ्क्तिर्महिः केलिरित्याद्या ह्रस्वदीर्घयोः' इति। तस्य कन्या पुत्री, 'कन्याया न' इति न ङीप्। तस्याः संबुद्धिः हे धरणिधरकन्ये, एतेन तस्य गङ्गादिसमस्तापगाप्रकृतित्वेन तत्पुत्रीत्वात् भवत्या अपि तत्प्रसूतत्वं युक्तमेवेति सूचितम्। स्तन्यं स्तनोद्भूतं पयः, शरीरावयवाद्यत्। तव भवत्या हृदयतो वक्षःप्रदेशात् 'उरस्यपि च बुक्कायां हृदयं मानसेऽपि च' इति त्रिकाण्डशेषः। सारस्वतः सरस्वत्या अयं सरस्वतीनदीसंबन्धीत्यर्थः। पयःपारावारः दुग्धपयोधिरेव परिवहति प्रवहतीति मन्ये तर्कयामि। कुत इत्यत्राह– दयावत्येति। द्रविडशिशुः द्रविडजात्युद्भवो बालकः, द्रविडः पितुर्वा नाम। तस्य शिशुः कश्चिदर्भकः परदुःखप्रहाणेच्छा दया, सा अस्या अस्तीति दयावती, तया करुणावत्या भवत्या दत्तं प्रीत्यतिशयेन विश्राणितं, तव भवत्याः स्तन्यं सकलवाग्विलासोत्पत्तिकारणं कुचक्षीरं आस्वाद्य निपीय, प्रौढानां प्रकर्षेणोढानां महताम्। 'प्रादूहोढ'– इत्यादिना वृद्धिः। कवयन्ति वर्णयन्तीति कवयः, तेषाम्। 'शुचिर्दक्षः शान्तः सुजनविनुतः सुश्रुतरतः कलावेदी विद्वान् कलमृदुपदः काव्यचतुरः। कृतज्ञो दैवज्ञः सदयहृदयः सत्कुलभवः शुभाचारश्छन्दोगुणगणविवेकी स हि कविः' इत्युक्तलक्षणानां काव्यकराणां सूरिणां च मध्ये कमनीयः श्लाघनीयः कवयिता वर्णयिता कविश्रेष्ठः, 'ण्वुल्तृचौ' इति तृच्। अजनि जातः। अतस्त्वदीयस्तन्यं सारस्वतपारावारप्रवाह एवेति प्रतिभातीत्यर्थः। अत्र वाक्यार्थहेतुककाव्यलिङ्गानुप्राणितोत्प्रेक्षालङ्कारः। अत्रेयमाख्यायिका श्रूयते। शङ्कराचार्यस्य पिता परमेश्वरीभक्तो ग्रामाद्बहिरवस्थितं अम्बिकायतनं गत्वा दुग्धेन तां संस्नाप्य पूजां विधाय दुग्धोपहारं दत्वा, अवशिष्टं दुग्धं बालकायाचार्याय प्रयच्छति। बालकस्य मनसि प्रत्यहं 'परमेश्वरी दुग्धं पिबति, पीतशेषं मह्यं पिता ददाती'ति वर्तते। कदाचिद्ग्रामान्तरं गच्छन् पिता बालकमातरं पूजायै समादिश्यागात्। सा च तथा कुर्वाणा स्त्रीधर्मिणी सती, गृहेऽन्यस्याभावात्, दुग्धेन भगवतीं संपूज्य आगच्छेति बालकमादिदेश। सोऽपि तथा कृत्वा परमेश्वरीं दुग्धं पिबेत्युवाच। तदा विलम्बात् रोदितुमनेनारब्धे सकलमपि क्षीरं सा पीतवती। स च पुनः पात्रं रिक्तमालोक्य सर्वमपि त्वया पीतं, न किञ्चिदपि मदर्थमवशेषितं इति रुदति। अस्मिन् भगवती सदयहृदया अस्मै स्वस्तन्यमदात्। ततस्तदानीमेव काव्यनाटकादिवाङ्मय-

विशेषाः सर्वाण्यपि च शास्त्राणि प्रादुर्भूतान्निति। केचित्तु-भगवदंशोऽयं शङ्कराचार्यो बालरूपी षण्मासमात्रवयाः पितर्यतिदरिद्रे भिक्षार्थं गते, मातरि च पानीयाहरणाय नदीं प्रति गतायां अतिदारिद्र्यात् दासदासीजनाभावेन एकाकी रुदन् कुत्रापि गन्तुमशक्तः क्षुधापीडितः क्रन्दनासक्तो भवनाङ्कणे परिभ्रमन् यदृच्छया गगनमार्गेण भर्त्रा सह विहरन्त्या पार्वत्या सदयं दृष्टः। तया च भूमाववतीर्य सस्नेहमिमं बालकमुत्तोल्य धूलीपरिमार्जनपुरस्सरं बाष्पमपनीय स्तन्यमस्मै बालकाय प्रदाय भूमौ निक्षिप्यागामि। तदानीमेवास्य निर्दोषकाव्यसहस्राणि सर्वाणि च शास्त्राणि प्रादुर्बभूवुरिति काञ्चीदेशीयोऽयं आभाणक इत्याहुः ॥ ७५ ॥

## आनन्दगिरीया

**तव स्तन्यमिति**। हे मातः, तव स्तन्यं स्तननिस्सृता दुग्धधारा वात्सल्यरूपस्नेहरसार्द्रा हृदयतः प्रवृत्तः सारस्वतः पयःपारावार इति परिवहति। सरस्वत्याः सर्वस्वरूपः सरस्वतीसंपादकः क्षीरसागरः प्रवहति। सरस्वतीसंपादकः कस्मात्, यतः तव स्तन्यं द्रविडशिशुः द्रविडब्राह्मणबालकः श्रीशंकराचार्यस्वरूपः, आस्वाद्य पीत्वा, प्रौढानां कवीनां मध्ये कमनीयः कवयिता अजनि। कमनीयं सुन्दरं कवयति। अथवा एकमेव पदं, कमनीयसः काव्यस्य गुणालङ्कारादिकाव्यलक्षणसंपन्नस्य कवयिता कमनीयःकवयिता। पुनः किंविधं स्तन्यं, दयावत्या त्वया दत्तम्। अत्राख्यायिकात्रयम्। एके वदन्ति 'श्रीमता शंकराचार्येणोपासिता भगवती भुवनेश्वरी दयावतीनाम्न्याः शंकराचार्यमातुर्वेषं धृत्वा स्तन्यं पायितवती, येन एतादृशो महापुरुषो जात इति। अपरे वदन्ति। कश्चिद्द्रविडो ब्राह्मणः परमदरिद्र आसीत्। तस्य भार्यापि परमदारिद्र्याद्दुःखिनी तथा खिन्ना। पुत्रो जातः स बालः षाण्मासिकः। एवं स्थिते कदाचिद्ब्राह्मणो भिक्षार्थं ग्रामान्तरं गतः। ब्राह्मणी बालं गृहे स्थापयित्वा ग्रामाद्बहिः पानीयमानेतुं गता। तदा विलम्बे जाते बालः क्षुधापिपासाभ्यां पीडितः करुणं रुरोद। तस्मिन्नवसरे श्रीपार्वतीपरमेश्वरौ विमानमारुह्याकाशमार्गेण यान्तौ बालं दृष्ट्वा शोकं प्रापतुः। बालं नीत्वा परमेश्वरी कृपया स्तनमपाययत्। ततः स महाकविर्जात इति। स च शापदग्धः कार्तिकेय इति वदन्ति। अत एव रुदन्तं स्वबालमालोक्य स्तनयोः प्रस्नवो धयति। अपरे पुनर्वदन्ति, शंकराचार्यस्य पिता ग्रामाद्बहिःकृतप्रासादस्थां परमेश्वरीं पूजयितुं दुग्धादिसामग्रीमादाय बालं पुत्रं हस्ते धृत्वा प्रत्यहं गच्छति। स्नापयित्वा स्नानावशिष्टं किञ्चिद्दुग्धं पुत्रमादाय पाययति। कदाचिदुत्पन्ने कार्ये ग्रामान्तरं गच्छन् पत्नीं पूजार्थमादिश्य गतः। बालस्तु अवशिष्टत्वस्वभावगत्वेनानुमतः। अस्या अपि रजोदर्शनात्, तया शंकरस्वामी बाल एव पूजासामग्रीं गृहीत्वा पूजार्थं प्रेषितः। तेन बाल्यवशादनभ्यासाच्च

सर्वदुग्धेन भगवती स्नापितेति, पश्चात्पूजान्ते स्वांशं गवेषमाणो न प्रापदिति दुःखेन करुणं रुरोदेति ; परमेश्वरी तदाकर्ण्य दयां कृत्वा शंकरस्वामिनं स्वकीयं स्तन्यं पाययामास। तेनेदृशो महापुरुषो जात इति। अथवा शंकरस्वामी दयावतीनाम्नीं मातरं भुवनेश्वरीरूपेण ध्यायति पश्यति, तेन तस्याः स्तन्यं पीत्वा एतादृशो जात इत्युत्प्रेक्षा। तव स्तन्यं मन्य इति श्लोकस्य रहस्यार्थः—महाशक्तिमन्त्रमाह—तवेति। स्तन्यं कामकला, तुहिनगिरिकन्ये परां, सारस्वतं वाग्भवं, 'बालायाः परमो मन्त्रो मद्दत्तुभ्यं प्रकाशितम्। महाकामकला मध्ये वेदाद्यादिः परात्मकः। महाशक्त्यान्वितं देवि चिद्वाञ्छयफलप्रदः॥ अयं मन्त्र उपासितः आचार्यचरणैरिति प्रथयन्ति गुरुचरणाः। ओं ऐं ईं सौः। (ओं ऐं ईं औः)॥ ७५॥

## तात्पर्यदीपिनी

तवेति। हे धरणिधरकन्ये, तव स्तन्यं स्तनाभ्यामुद्भूतं पयः अहं इति मन्ये एवं जानामि, एवं कथं, हृदयतः सारस्वतः सरस्वतीसंबन्धी पयःपारावार इव क्षीरसमुद्र इव परिवहति। स्तन्यस्य श्वेतवर्णत्वात् सरस्वतीसंबन्धित्वेन, माधुर्यात्सुधारूपत्वेन चोत्प्रेक्षणम्। इति मन्ये। अत्र हृदयत इत्यनेन शब्देन हृदयोद्भूतोऽनन्यदेवतासाधारणः परमैश्वर्यैकवृत्तिः, आत्मीयभक्तजनेषु निरुपाधिकस्नेहरसनिष्यन्द उच्यते। तत्प्रभावादेव स्तन्यस्य लोकातिशायि-चेष्टाविशेषं प्रतिपादयति। यत्तव स्तन्यमास्वाद्य परिपीय द्रविडशिशुः संबन्धनामा काञ्ची-देशोत्पन्नो महाकविः प्रौढानां निर्दोषकाव्यसहस्रकरणे निपुणानां सत्कवीनां वर्णयितॄणां मध्ये कमनीयः स्पृहणीयः समस्तलोकश्लाघनीयवाग्गुम्भः कवयिता महाकविः अजनि सञ्जातः। अत्र खल्वेवं श्रूयते। कार्तिकेय एव कुतश्चिन्मुनिशापान्मनुष्यजन्म गन्तुकामः कस्याश्चिद्ब्राह्मण्या दरिद्राया उदराज्जातः। स बालः षण्मासमात्रवया एव पितरि भिक्षार्थं बहिर्गते, मातरि च पानीयाहरणाय नदीं प्रति गतायां, अतिदारिद्र्यात् दासीदासजनलोका-भावेन एक एव रुदन्कुत्रापि गन्तुमशक्तः क्षुधापीडितः तृषाव्याकुलश्च क्रन्दनातुरोऽभवत् भवनाङ्गणे परिभ्रमन्। यदृच्छया गगनमार्गेण भर्त्रा सह विहरन्त्या पार्वत्या सकरुणं दृष्टम्। तया भूमाववतीर्य सस्नेहकरुणमिमं बालकमुत्तोल्य धूलिं परिमृज्य बाष्पमपनीय स्तन्यमम्बया तस्मै बालकाय प्रत्यपादि। तं भूमौ निक्षिप्य भगवत्यां गतायां तत्क्षणादेव संबन्धकवीश्वरस्य वदनारविन्दादनन्तकोटिकाव्यप्रवाहाः संपन्नाः। इति काञ्चीदेशप्रामाणिकभणितिः प्रसिद्धा। तादृशं स्तन्यं दयावत्या दत्तम्॥ ७५॥

## पदार्थचन्द्रिका

अथ स्तन्यवर्णनमाह—तवेति। हे धरणिधरकन्ये तव स्तन्यं स्तने भवं दुग्धं, सरस्वती वाग्देवी तस्याः अयं सारस्वतः, पयःपारावारः क्षीरसमुद्रः, परिवहतीति हृदयतो

हृदयेन मनसा मन्ये तर्कयामीत्यर्थः। भवानीस्तन्यस्य सारस्वतपयःपारावारत्वं फलबलकल्प्य-मित्याह – दयेति। यद्यस्माद्धेतोः तव स्तन्यं द्रविडदेशे शिशुर्द्रविडशिशुरित्यात्मानमाह। स्वप्ने दयया दत्तं भगवत्या यत्स्तन्यं तदास्वाद्य पीत्वा, प्रौढानां महतां कवीनां मध्ये आत्मानं कविमाचष्टे। कवयतीति कवयिता कविरजनि जातः। अकर्मकोऽत्र जनिः॥ ७५॥

## डिण्डिमभाष्यम्

हे धरणिधरकन्ये! पर्वतराजकुलचन्द्रिके! परमेश्वरि! तव स्तन्यं स्तनोद्भूतं दुग्धं 'शरीरावयवाद्यत्' इति यत् प्रत्ययः, यत् स्तन्यं कर्म सारस्वतः सरस्वतीसम्बन्धी यः पारावारः क्षीरसमुद्र इव परिवहति समन्ततः प्रवहति इति मन्ये; अत्र हृदयत इत्यनेन शब्देन हृदयोद्भूतोऽनन्यदेवतासाधारणः परमेश्वरैकवृत्तिः आत्मीयभक्तजनेषु निरुपाधिकस्नेहरसनिष्यन्द उच्यते, तत्प्रभावादेव स्तन्यस्य लोकातिशायिचेष्टाविशेषं प्रतिपादयति– दयावत्या करुणावत्या त्वया दत्तं प्रतिपादितं यदेव स्तन्यं आस्वाद्य परिपीय द्रविडशिशुः सम्बन्धनामा काञ्चीदेशोत्पन्नः महाकविः प्रसिद्धः। तस्य खल्वेवं श्रूयते– कार्तिकेय एव कुतश्चित् मुनिशापान्मनुष्यजन्म गन्तुकामः कस्याश्चिद्ब्राह्मण्या दरिद्राया उदराज्जातः। स बालकः षण्मासमात्र एव पितरि भिक्षार्थं बहिर्गते, मातरि च पानीयाहरणार्थं नदीं प्रस्थितायामतिदारिद्र्याद् दासदासीजनलोकाभावात् एकः सन् रुदन् कुत्रापि गन्तुमशक्तः क्षुधापीडितः क्रन्दनातुरो भवनाङ्गणोपरि भ्रमन् यदृच्छया गगनमार्गेण भर्त्रा सह विहरन्त्या पार्वत्या सकरुणं दृष्टः। तदा च भूमावतीर्य सस्नेहकरुणमिमं बालकमुत्तोल्य धूलिं परिमृज्य बाष्पमपनीय स्तन्यमम्बया तस्मै बालकाय प्रतिपादितं च भूमौ निक्षिप्य भगवत्यां गतायां तत्क्षणादेव सम्बन्धकवीश्वरस्य वदनारविन्दात् अनन्तकोटिदिव्यकाव्यप्रवाहाः सम्पन्नाः, इति काञ्चीदेशे प्रामाणिकेयं भणितिः प्रसिद्धा। एतदेव यत्तव स्तन्यमास्वाद्य प्रौढानां निर्दोषकाव्यसहस्रकरणनिपुणानां कवीनां वर्णयितॄणां मध्ये कमनीयः समस्तलोकश्लाघनीयवाग्गुम्फमहिमा कवयिता महाकविरजनि जातः। कव उपवर्णन इति धातुरदन्तश्चुरादिगणे पठ्यते। कवयतीति कवयिता प्रबन्धकर्ता तृजन्तः॥ ७५॥

## गोपालसुन्दरी

तव स्तन्यमिति। हे धरणिधरकन्ये, तव स्तन्यं स्तनोद्भूतं दुग्धं, हृदयतः सारस्वतः सरस्वतीसंबन्धी पयःपारावारः क्षीरसमुद्रः परिवहतीति मन्ये। दयावत्या त्वया दत्तं यत्स्तन्यं तव द्रविडशिशुः मल्लक्षणः आस्वाद्य प्रौढानां कवीनां मध्ये कमनीय उत्कृष्टः कवयिता कविराजो जात इत्यर्थः। अत्र पूर्वं काञ्चीदेशे ऋषिशापात् ब्राह्मणः स्कन्दोऽवतीर्णः। स

पितरि देशान्तरं गते मातरि च पानीयार्थं गतायां षण्मासवयस्कः प्राङ्गणे क्षुधया रुदन्नासीत् । एतस्मिन्नेव काले आकाशे शिवेन सह गच्छन्त्या शिवया अतिकारुण्यात् भूतलमागत्य स्तन्यमस्मै दत्त्वाऽन्तर्हितम् । तदवधि स च महाकविर्जात इति वदन्ति । विष्णुपक्षे – हे धरणिधरकन्ये, धरणिधरकन्याया इः कामो वाञ्छितं यस्मात् स तथा । एङ् ह्रस्वादिति सुलोपः । तव हृदयतः दयावति करुणाशालिनि आदत्तं स्तन्यं स्तनोचितं हाररूपं वस्तु सारस्वतः पारावारः कमनीयः परिवहतीति मन्ये । यत्स्तन्यं हाररूपं वस्तु तव द्रविडशिशुरास्वाद्य ध्यात्वा कवयिताऽजनि इत्यर्थः । यद्वा दयावत्या यशोदया दत्तं स्तन्यं तव हृदयतो वहतीति सारस्वतः पारावार इव मन्ये । द्रविडशिशुं रातीति द्रविडशिशुरा, पार्वतीरूपा यशोदायाः कन्या । यत्स्तन्यमास्वाद्य प्रौढानां कवीनामिता अनुगता अनुकूला अजनि । हे कवे ॥ ७५ ॥

आनन्दलहरीटीका

तवेति । हे धरणिधरकन्ये पर्वतपुत्रि, तव स्तन्यं दुग्धं हृदयात् सारस्वतः सरस्वती-संबन्धी पयःपारावारः क्षीरसमुद्रः परिवहति प्रवाहतो गच्छतीत्यहं मन्ये । यत्स्तन्यं दयावत्या त्वया दत्तमास्वाद्य पीत्वा तव द्रविडशिशुः मत्स्वरूपः प्रौढानां प्रकृष्टानां कवीनां मध्ये कमनीयो मनोज्ञः कवयिता कविरजनि जातः । तव यद् दुग्धमित्यपरे । द्रविडदेशे कस्यचिद्ब्राह्मणस्य गृहे स्कन्द एवावतीर्णः । स च पितरि क्वचिद्गते मातरि जलार्थं गतायां अंगणे क्षुत्पीडितो रुदन्नासीत् । देवी समागत्य करुणया तस्मै स्तन्यं दत्वाऽन्तर्हिता । स तु षाण्मासिकस्तदानीं कविर्जातः । स एव शङ्कराचार्य इति लोके प्रसिद्धिः ॥ ७५ ॥

**हरक्रोधज्वालावलिभिरवलीढेन वपुषा**
**गभीरे ते नाभीसरसि [1]कृतसङ्गो मनसिजः ।**
**समुत्तस्थौ तस्माद्चलतनये धूमलतिका**
**जनस्तां जानीते [2]तव जननि रोमावलिरिति ॥ ७६ ॥**

ஹரக்ரோத ஜ்வாலா வலிபிரவலீடேந வபுஷா
1 4 4 4 1
கபீரே தே நாபீஸரஸி க்ருதஸங்கோ மநஸிஜ: ।
3 4 1 4 1 1 3
ஸமுத்தஸ்தௌ தஸ்மாதசலதநயே தூமலதிகா
1 1 2 1 3 1 1 4 1 1
ஜநஸ்தாம் ஜாநீதே தவ ஜநநி ரோமாவலிரிதி ॥
1 1 1 1

1 कृतझम्पो, कृतझङ्गो, ननु मग्नो । 2 जननि तव ।

हर के गुस्से की लपटों से घिर कुसुमायुध झुलस तुरत
तेरे गहरे नाभिसरोवर में कूद पडा बन आरत।
उस से निकली धूमलता ही को कह बैठे सब मानव
तेरी रोमावली अचलराजन्यसुते मैया अविनव ॥

लक्ष्मीधरा

हरस्य क्रोधज्वालावलिभिः अवलीढेन आविष्टेन, वपुषा गभीरे निम्ने, अत एव ते तव, नाभीसरसि नाभ्येव सरः तस्मिन्, कृतसङ्गो मनसिजः मन्मथः, तत्र निमग्न इत्यर्थः। समुत्तस्थौ उद्भूत्। तस्मात् नाभीसरसः, अचलतनये! पार्वति! धूमलतिका धूमावलिः, अङ्गारप्रशमसमयोद्भवा। जनः लोकः, तां धूमलतिकां जानीते वर्णयति। जननि! मातः! तव रोमावलिरिति रोमराजिरिति। अत्रेत्थं पदयोजना—हे अचल-तनये! मनसिजः हरक्रोधज्वालावलिभिः अवलीढेन वपुषा गभीरे ते नाभीसरसि कृतसङ्गः। तस्माद्धूमलतिका समुत्तस्थौ। हे जननि! तां जनः तव रोमावलिरिति जानीते। अत्रो-त्प्रेक्षालङ्कारः, रोमराजेः धूमलतिकात्वेनोत्प्रेक्षणात्। यद्वा जनस्तां जानीते इत्यनेन भ्रान्तिमान् प्रतीयते, रोमरेखादर्शनस्य धूमरेखाभ्रान्तिजनकत्वात्। यद्वा—अतिशयोक्तिः जनस्तां रोमावलिमध्यवस्यतीति प्रतीतेः। यद्वा—निश्चयान्तसन्देहः, तां रोमावलिरिति निश्चिनोतीति। एवं चतुर्णामलङ्काराणां जानीते इति पदादुत्थानात् एकवाचकानुप्रवेशेन सङ्करः॥ ७६॥

सौभाग्यवर्धनी

हरेति। हे अचलतनये, हरक्रोधज्वालावलिभिः अवलीढेन कवलितेन वपुषा, गभीरे ते नाभीसरसि कृतसंगो मनसिजोऽभूदिति शेषः। 'ननु मग्नो मनसिज' इति पाठः क्वचित्। तस्मात् नाभीसरसः समुत्तस्थौ धूमलतिका, तां धूमलतिकां जनो लोको जानीते, हे जननि, तव रोमावलिरिति। इयं रोमावलिर्न भवति, धूमलतिकेति प्रकृतरोमावलिं निषिध्य धूमलतिकायाः प्रतिपादितत्वात् अपह्नुतिः। हरक्रोधज्वालाकुलस्यापि त्वमेव शरणं, त्वदन्यः परित्राणे न समर्थ इति भावः॥ ७६॥

अरुणामोदिनी

रोमावलिं वर्णयति—हरेति। हे अचलतनये! पर्वतराजपुत्रिके देवि! भीतशरण्य इति भावः। मनसिजो मदनः, हरक्रोधज्वालावलिभिः रुद्रकोपाग्निकीलालैः, अवलीढेन वपुषा शरीरेण सह, गभीरे गम्भीरे, अगाधतया निवासार्हे इति भावः। ते भवत्याः,

नाभीसरसि प्राण्यङ्गकासारे, कृतसङ्गः क्रोधान्धहरललाटाग्निदग्धशरीरवेदनापनोदनाय अगाध-भवदीयनाभीसरसि कृतमज्जनः अभूत्, किमिति शेषः। लोके अतिसन्तापतप्तस्य सरोनिमज्जनादि-दर्शनादिति भावः। तस्मात् अङ्गारभावापन्नमदनशरीरात्, धूमलतिका अङ्गारनिर्वापणसमय-समुद्भवा, समुत्तस्थौ ऊर्ध्वमुदभूदिति। लोके अङ्गारनिर्वापणे जलेन कृते धूमोत्पत्तिदर्शनादिति भावः। हे जननि! भीतशरण्ये! मातर्देवि! जनः लोकः कवयिता वा, त्वन्नाभीसरोनिम-ज्जिताङ्गारितमदनदेहोद्भवां धूमलतिकामेव तव भवत्याः रोमावलिः रोमराजिरिति जानीते अध्यवस्यति निश्चिनोतीत्यर्थः। धूमलतैव रोमराजिः नान्येयमित्यभिप्रायः। अत्र मदनस्य देवीनाभीसरोनिमज्जनधूमलतिकासमुत्थानोत्प्रेक्षयोः रोमावलौ धूमलतिकात्वाध्यवसायरूपसंवादो-त्प्रेक्षया सह संकर, तेन रोमावलेरतिरामणीयकत्वध्वनिः ॥ ७६ ॥

### आनन्दगिरीया

हरक्रोधेति। हे अचलतनये अस्मज्जननि, जनो लोको मर्मानभिज्ञः तां धूमलतिकां तव रोमावलिरियमिति जानीते। तां कां, या तस्मात्संयोगात् समुत्तस्थौ जाता। तस्मात् कस्माज्जाता। यदा तव नाभीसरसि हरक्रोधकालानलज्वालावलिभिरवलीढेन कवलीकृतेन दह्यमानेन वपुषा शरीरेण कृतसङ्गो मनसिजो जातस्तस्मादित्यर्थः। किंलक्षणे नाभीसरसि, गभीरे अवगाढुमशक्ये। एतावता शरणयोग्यतोक्ता। उत्प्रेक्ष्यते नेयं रोमराजिः, किन्तु दग्धार्धदेहस्य कामस्य नाभीकुण्डे शरणं, ततो जातधूमलतेव धूपलेखेवोत्प्रेक्ष्यते। हरक्रोधेति पद्यस्य रहस्यार्थः, मनसिजः कामबीजं, तेन पूर्वकूटे योजयित्वा नाभी अङ्कारः ॥ ७६ ॥

### तात्पर्यदीपिनी

हरक्रोधेति। हे अचलतनये, मनसिजः स्मरः हरक्रोधज्वालावलिभिः, हरस्य क्रोधज्वालाः तासामावलयः पंक्तयः ताभिरवलीढेन व्याप्तेन वपुषा शरीरेण सह ते तव गभीरे अत्यन्तगाम्भीर्यगुणयुक्ते नाभीसरसि नाभी एव सरः, तस्मिन्परमानन्दहेतुभूतलावण्यामृत-संपूरिते मध्यविवरे शीतलतडागायमाने प्रायेण कृतसंगो जातः तत्र निमग्न इत्यर्थः, तस्मान्नाभीसरसः धूमलतिका उत्तस्थौ समुत्थिता। तप्तायःपिण्डसंयोगाज्जाता धूमोत्पत्तिः प्रसिद्धा। हे जननि तां धूमलतिकां सर्वोऽपि जनो लोकः तव रोमावलिरिति जानीते वर्णयति। अत्र जननीशब्दसंबोधनात् दोषदर्शिना पित्रा ताडितः पुत्र आक्रन्दन् यथा मातुरंकमभ्युपेत्य हृष्टो भवति, तथा समाधिभङ्गकुपितपिनाकपाणिललाटलोचनशुष्यमाणशरीरः सकल-लोकानन्ददायी मन्मथः त्वां शृङ्गारामृतवेणीपरिपूर्णनाभिकुण्डां प्रस्नुतस्तनीं मातरमिव भगवतीं उपगम्य परित्यक्तसकलपरितापो जात इति व्यज्यते ॥ ७६ ॥

पदार्थचन्द्रिका

अथ रोमावलिमुत्प्रेक्षमाणो वर्णयति – हरक्रोधेति। अवलीढेनास्वादितेन व्याप्तेनेत्यर्थः। नाभी सर इव नाभीसरः। तस्मिन्कृतझम्पः कृतपातः। अत्र बभूवेति क्रियापदमध्याहार्यम्। तस्मान्नाभीसरसः, धूमो लतिकेव धूमलतिका, तां धूमलतिकां जन इति जानीते इतीति किं, रोमावलिरिति। अत्रेत्यर्थप्रकाशनमात्रं क्रियते, तेन जानीत इति क्रियापदसंबन्धाभावात् द्वितीया न। कामस्य नाभिसरसि पतनं धूमलतिकोत्थानं चेति द्वयमुत्प्रेक्षते। स्पष्टमन्यत् ॥ ७६ ॥

डिण्डिमभाष्यम्

हे अचलतनये! पर्वतराजन्यनन्दिनि, अथवा अचलाः अविनाशाः इन्द्रादिलोकपालवत् विनाशरहिताः, तनयाः ब्रह्मविष्णुरुद्राः यस्याः सा अचलतनया तत्संबुद्धौ। हरक्रोधज्वालावलिभिः महादेवकोपपावकहेतिमालाभिः, अवलीढेन व्याप्तेन, वपुषा शरीरेण सह, मनसिजः कन्दर्पः कर्ता, तमात्मनः शरीरसन्तापमसहमानः सन, गभीरे अत्यन्तगाम्भीर्यगुणयुक्ते ते नाभीसरसि परमानन्दहेतुभूतलावण्यामृतसङ्कुरिते मध्यविवरे शीतलतटाकायमाने प्रायेण कृतसङ्गो मग्नो जातः। तस्मात् नाभिप्रदेशात् धूमलतिका काचन समुत्थिता समुत्तस्थौ। तप्तायःपिण्डसंयोगात् धूमोत्पत्तिर्जायत इति प्रसिद्धिः। तां तत्र धूमलतिकां रोमावलिरिति जनः सर्वो लोको जानीते। अत्र जननीशब्दसंबोधनात् दोषदर्शने पित्रा ताडितः पुत्रः यथा क्रन्दन् मातुरङ्कमभ्युपेत्य हृष्टो भवति, तथा समाधिभङ्गकुपितपिनाकपाणिललाटलोचनानलशुष्यमाणशरीरः सकललोकानन्ददायी मन्मथः त्वां शृङ्गारामृतवेणीपरिपूर्णनाभिकुण्डां प्रस्नुतस्तनीं भगवतीं मातरमिवोपगम्य, परित्यक्तसकलपरितापो जात इति व्यज्यते। .... मन्मथं प्रति मातृत्वं च, परमेश्वर्याः कटाक्षविक्षेपादुत्थितो मकरकेतनः एतत्पूर्वं दग्धोऽनेकधा पुनर्जन्म प्राप्तवानिति प्रसिद्ध्या गम्यते। उक्तमम्बास्तवे, 'दग्धं यदा मदनमेकमनेकधा ते मुग्धः कटाक्षविधिरङ्कुरयाञ्चकार। धत्ते तदाप्रभृति देवि ललाटनेत्रं सत्यं ह्रियैव मुकुलीकृतमिन्दुमौलिः ॥' अत्र त्वागमार्थसंवादोऽपि – कामोत्थितो यतो जातस्तस्याः कामेशयोषितः। कामाक्षीति ततः ख्यातिं सा गता काञ्चिकापुरे ॥ ७६ ॥

गोपालसुन्दरी

हरक्रोधेति – हे अचलतनये पर्वतपुत्रि हरक्रोधज्वालावलिभिः शिवकोपपावकज्वालासमूहैः अवलीढेन व्याप्तेन वपुषा शरीरेण, मनसिजः कन्दर्पः स्वरक्षार्थं तव गभीरे नाभीसरसि कृतझंपो जात इति शेषः। तस्मान्नाभीसरसः धूमलतिका काचन समुत्तस्थौ, तप्तायःपिण्डेन

जलाद्धूमलतिकेव। तव रोमावलिरिति जनो जानाति। जननीति संबोधनम्। विष्णुपक्षे–नाभीसरसि कीदृशे। अचलतनये, न चलति वेदमार्गादित्यचलो ब्रह्मा, स एव तनयो यस्य तस्मिन्। नाभीत एव ब्रह्मण उत्पत्तेः। जननमुत्पत्तिरस्यास्तीति जननि, जननि च तद्रोम च जननिरोम तस्यावलिः समूहः नूतनरोमावलिरित्यर्थः। जननीति पूर्ववद्विष्णुसंबोधनं वा॥ ७६॥

आनन्दलहरीटीका

हर इति। हे अचलतनये पर्वतपुत्रि हे जननि, हरस्य याः क्रोधज्वालावलयः क्रोधाग्निशिखासमूहाः तैरवलीढेन वपुषा शरीरेण विशिष्टो मनसिजः नाभीसरोवरे कृतझम्पः कृतपात आसीदिति शेषः। तस्मान्नाभीसरसः सकाशात् धूमरूपा लतिका समुत्तस्थौ उच्छ्रिता। दग्धस्य काष्ठादेर्जलपतनेन धूमलतिका तव रोमावलिरिति जानीते॥ ७६॥

यदेतत्कालिन्दीतनुतरतरङ्गाकृति शिवे
　कृशे मध्ये किञ्चिज्जननि तव [1]यद्भाति [2]सुधियाम्।
विमर्दादन्योन्यं कुचकलशयोरन्तरगतं
　तनूभूतं व्योम प्रविशदिव नाभिं कुहरिणीम्॥ ७७॥

யதேதத் காளிந்தீ தநுதர தரங்காக்ருதி சிவே
3 1 1 1 3 1 1 1 3 1 1
க்ருசே மத்யே கிஞ்சிஜ்ஜநநி தவ யத்பாதி ஸுதியாம் ।
1 4 1 1 1 3 4 1 4
விமர்தாதந்யோந்யம் குசகலசயோரந்தரகதம்
3 3 1 1 1 1 3 1
தநூபூதம் வ்யோம ப்ரவிசதிவ நாபிம் குஹரிணீம் ॥
1 4 1 1 3 4 1

यमुना की लघुतर लहरी सी क्षीणकमर में दिखती हैं,
तेरी जो रोमावलि वह सत्कवि मन को यों लगती है।
उद्धत कुचकलशों के बीच प्रतिस्पर्धी फंस डर कृश बन
गहरी नाभिगुहा में आश्रय ले बैठा हो शिवे गगन॥

लक्ष्मीधरा

यदेतत् पुरः स्फुरत्। यच्छब्दस्य एतच्छब्दसहचरितस्य प्रसिद्धिवाचकत्वं नास्ति। अत एव पुनर्यच्छब्दोपादानम्। कालिन्दीतनुतरतरङ्गाकृति कालिन्द्याः यमुनायाः तनुतरतरङ्गः

---

1 तद्दवि गिरिशे　　2 सुधियः।

अतिसूक्ष्मतरङ्गः तस्याकृतिरिव आकृतिर्यस्य तत्। शिवे! भगवति! कृशे तनुनि, मध्ये अवलग्ने, किञ्चित् जननि! तव यत् भाति स्फुरति, सुधियां विदुषां विमर्दात् सङ्घर्षात्, अन्योन्यं परस्परं, कुचकलशयोः, अन्तरगतं मध्यवर्ति, तनूभूतं सूक्ष्मभूतं, व्योम गगनं, प्रविशदिव प्रवेशं कुर्वदिव। नील नभः इत्याबालगोपालप्रसिद्धम्। गगनस्य नीलिमा च मूर्तत्वं च कविप्रसिद्धम्। नाभिं कुहरिणीं कुहरवतीम्। अत्रेत्थं पदयोजना – हे शिवे! जननि! तव कृशे मध्ये यदेतत्कालिन्दीतनुतरतरङ्गाकृति किञ्चित् रोमावलिरूपं वस्तु सुधियां यद्भाति कुचकलशयोरन्तरगतं तनूभूतं व्योम अन्योन्यं विमर्दादेव कुहरिणीं नाभिं प्रविशदिव भाति। नीलं मूर्तं नभः कुचकलशविमर्दवशात् अधोभागे स्रस्तं नाभिपर्यन्तं जतुलतान्यायेनावतिष्ठते तद्रोमावलिं वदन्तीति भावः। अत्रोत्प्रेक्षालङ्कारः, रोमलतायाः गगनलतिकात्वेन संभावनात्, प्रथमपादे निदर्शनालङ्कारः, तरङ्गाकृतीति बिम्बप्रतिबिम्बभावाक्षेपात्। अनयोस्संसृष्टिः॥

### सौभाग्यवर्धनी

यदेतदिति। हे शिवे! यदेतत् कालिन्दीतनुतरतरङ्गाकृति कृशे मध्ये किञ्चित् तव भाति, सुधियां भक्तजनानां तद्बहिर्भाति, अन्योन्यविमर्दात् तनूभूतं, अतिसूक्ष्मीभूतं कुचकलशयोरन्तरगतं मध्यगतं कुहरिणीं गह्वरवतीं नाभिं प्रविशदिव। यमुनासूक्ष्मतरङ्गोपमानं रोमावलीलक्षणं यदेतत् किंचिद् भाति। इदमित्थमिव वक्तुमशक्यं तत् सुधियां मनसि कुचकलशयोर्मध्ये गतं व्योम तयोः परस्परविमर्दात् सूक्ष्मं सत् नाभिकुहरिणीं प्रविशदिव भाति। एतावता व्यक्ताव्यक्तलक्षणो रोमावल्या ईषत्समुद्भेदो निरूपितः। अत्र 'जननि तव तद्देवि गिरिशे' इति पाठो युक्तः। जगन्मातुः रोमावली सर्वेषामेव भातीति वक्तुमनुचितम्। अथवा सुधिय इत्येकवचनं वा कल्पनीयम्। सुधियो महादेवस्येत्यर्थात् पर्यवस्यति। अन्यस्य लोकजनस्य रोमावलीदर्शनस्यायोग्यत्वात्। अत्रोपमा स्पष्टा॥ ७७॥

### अरुणामोदिनी

पुनरपि च रोमावलीमुत्प्रेक्षते – यदिति। हे जननि! मातर्देवि! यत् प्रसिद्धम्, एतत् परिदृश्यमानम्, कालिन्दीतनुतरतरङ्गाकृति कालिन्द्या यमुनायाः तनुतरः अतिसूक्ष्मः यस्तरङ्गः वीची तस्याकृतिरिवाकृतिर्यस्य तत्। तद्वत्प्रकाशमानं इत्यर्थः। यत्किंचिद्वस्तु नीलाञ्जनलेखासमम्, कृशे कृशिमवति, ते भवत्या मध्ये अवलग्ने भाति प्रकाशते। तदिदं वस्तु, शोभना धीः येषां सुधियां कवयितॄणां, कुचकलशयोः वर्धमानयोः इत्यर्थः। अन्योन्यं परस्परं, संमर्दात् उपमर्दात् परस्परनिरोधादित्यर्थः। कुहरं बिलमस्या अस्तीति कुहरिणीं, गभीरां,

निवासयोग्यामित्यर्थः। नाभिं प्रविशत् नीविमानं तत् प्राप्नुवदित्यर्थः। अन्तरगतं कुचकलशान्तरालवर्ति, अन्तरभ्यन्तरे अगतं अविद्यमानस्थानं वा, तनूभूतं व्यापकमपि सूक्ष्मीभावापन्नं, अन्यथा गमनायोगादिति भावः। व्योम नीलत्वेन कविसमयसिद्धमाकाशमिव भाति। अत्र नीलं नभ इत्यादिप्रयोगात् नीलत्वेन कविसमयसिद्धं वर्ण्यमानमाकाशमेव कुचकलशान्तरालस्थं वर्धमानयोः तयोर्मध्ये निर्बाधावस्थानाभावात् सूक्ष्माकारेण अधोनिःसृतं सन्निरुपद्रवस्थानं नाभीकुहरं प्राप्नुवद् रोमावलिरिति व्यवह्रियत इत्येवं प्रतीयत इत्यर्थः। अत्र उत्प्रेक्षया निदर्शनासहकृतया देवीकुचकलशयोरतिश्लिष्टत्वं भाग्यलक्षणं, रोमावलेरतिसूक्ष्मत्वं प्रकाशमानता च सूच्यते ॥ ७७ ॥

आनन्दगिरीया

यदेतदिति। हे जननि तव कुचयोर्मध्येऽन्तराले उदरोपरिभागे यत्कालिन्दीतनुतरतरङ्गाकृतिर्भाति, कालिन्दी यमुना तस्यास्तनुतरो ह्रस्वतरः सूक्ष्मो यस्तरङ्गो वीचिः, तदाकृति तत्सदृशं रोमराजिरूपं वस्तु भाति। सुधियां सुबुद्धिजनानां अन्यथैव भातीति। अन्यथेति कथं, कुहरिणीं नाभिं प्रविशत् कुचकलशयोरन्तरगतं व्योमैवेति। व्योम तु महत्संभाव्यते, तत्राह — कुचकलशयोः वर्धमानयोः अन्योन्यविमर्दात्तनूभूतम्। तारुण्यबलेन वर्धमानौ कुचौ, अतोऽन्योन्यं बाधेते इत्यन्योन्यबाधायां क्रियमाणायां अन्तरवर्ति व्योमापि बाधितमिव सूक्ष्मरूपेण बहिर्निर्गत्य नाभीकुहरे कन्दरे प्रविशतीति। यदेतत्कालिन्दीति पद्यस्य रहस्यार्थः। मोहिनीत्रिपुरामाह — कालिन्दी क्लीं, कृशा मध्ये स्त्रीं, व्योम ह, कुहरिणीं रेफ ई क्लीं स्त्रीं ह्रीं मोहिनी त्रिपुरा ॥ ७७ ॥

तात्पर्यदीपिनी

हे शिवे भक्तजनकल्याणदायिनि, हे जननि, तत्सुधियां शोभनधियां भाति प्रकाशते। तत्किं, यदेतत् कृशे अतिकृशिमशालिनि मध्ये अवलग्नभागे कालिन्दीतनुतरतरङ्गाकृति कालिन्द्या यमुनायाः तनुतरः सूक्ष्मतरो यस्तरङ्गस्तद्वदाकृतिर्यस्य तत्, एतादृशं वस्तु किञ्चित्प्रतिभासते। तत्किं तद्रूपम्। उत्तरार्धेन वदति—कुचकलशयोरन्योन्यं परस्परं विमर्दात्संघर्षात् तनूभूतं चूर्णीभूतं अधस्तात्पतदञ्जनलोलितसलिलधारान्यायात् व्योमैव आकाश एव, नाभीं कुहरिणीं अतिगम्भीरप्रदेशयुक्तां प्रविशदिव भाति। किंभूतं व्योम यतः कारणादन्तरगतं कुचान्तरे विद्यमानम्। एकत्र प्राप्तोपद्रवस्य ततो निर्गच्छतो निरुपद्रवदेशाश्रयणमुचितमिति। परिमिते ब्रह्माण्डमण्डले तत्कुचमण्डलताण्डवखण्ड्यमानं नभोमण्डलं ब्रह्माण्डसहस्रयोग्यां निरुपद्रवस्थानभूतां तत्र नाभिमेव सुखमनुभवितुं तदुन्मुखं भवतीत्यभिप्रायः ॥

## पदार्थचन्द्रिका

पुनरपि रोमावलीमुत्प्रेक्षमाणो वर्णयति। यदेतदिति। हे जननि हे शिवे तव कृशे मध्ये यदेतत्किञ्चित् अल्पं रोमावलिशब्दवाच्यं भाति, तत्सुधियां सुबुद्धीनां उपमानोपमेयरूपव्यवहारचतुराणां व्योमेव भातीत्यन्वयः। कालिन्द्यास्तनुतरो यस्तरङ्गः तस्येवाकृतिर्यस्यां मानक्रियायां तत्तथा, रोमावलीस्वरूपविशेषणं वा। व्योमविशेषणमुत्प्रेक्षमाण आह—अन्तरगतं कुचकलशमध्यगतं कुचकलशयोरन्योन्यं विमर्दात् संश्लेषाद्धेतोः, तनूभूतं कृशीभूतं, अत एव कुहरिणीं प्रशस्तकुहरां नाभिं प्रविशदिवेति त्रयमपि व्योमविशेषणम्। तनु काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे इति मेदिनीकरः॥ ७७॥

## डिण्डिमभाष्यम्

यदेतदिति। हे शिवे, भक्तलोककल्याणदायिनि, कालिन्दीतनुतरतरङ्गाकृति, यमुनायाः सूक्ष्मवीचीमवगाहमानं यदेतत् किञ्चिन्नीलरेखात्मकं वस्तु, तव कृशे मध्ये अतिकृशिमशालिनि अवलग्नभागे भाति दीप्तिपूर्वकमात्मसत्तां लभते। तद्वस्तु रोमावलीरूपं किमिव किंभूतमिव सुधियां शोभनबुद्धीनां भाति प्रतिभासते, तत् किञ्चिद्रूपं उत्तरार्धेन वदति। अन्योन्यं परस्परं कुचकलशयोः स्तनमण्डलयोः विमर्दात्संघर्षणात् तनूभूतं चूर्णीभूतं अधस्तात् पतदञ्जनलोहितसलिलधारान्यायात् व्योमेव आकाश इव। आकाशस्य कविसमयप्रसिद्धं नीलवर्णत्वम्। कुहरिणीं अभ्यन्तरगम्भीरप्रदेशयुक्तां नाभिं शरीरमध्यस्थानावटभूमिं प्रविशदिव भाति। एकत्र प्राप्तोपद्रवस्य, ततो निर्गत्य गच्छतो निरुपद्रवदेशाश्रयणं उचितमेवेति भावः। यतः परिमिते ब्रह्माण्डमण्डले त्वत्कुचमण्डलताण्डवखण्ड्यमानं नभोमण्डलं, ब्रह्माण्डसहस्रधारणयोग्यां निरुपद्रवस्थानभूतां तव नाभिमेव सुखमनुभवितुं तदुन्मुखीभवतीति अभिप्रायः॥

## गोपालसुन्दरी

यदेतदिति। हे शिवे हे जननि, तव कृशे मध्ये कालिन्द्या यमुनायाः तनुतरोऽतिसूक्ष्मो यस्तरङ्गो वीचिः, तदाकृति तदनुकारि यदेतत् किञ्चित् नीलरेखात्मकं वस्तु, तदन्योन्यं परस्परं कुचकलशयोर्विमर्दात् सङ्घर्षणात् तनूभूतं चूर्णीभूतं व्योम आकाशः कुहरिणीं अभ्यन्तरगभीरदेशयुक्तां नाभिं प्रविशदिव सुधियां भातीत्यर्थः। विष्णुपक्षे—मध्ये, कीदृशे शिवे शोभने, व्योम कीदृशं जननमुत्पादनमस्यास्तीति जननि, जगज्जनकमित्यर्थः। जननीति पूर्ववद्विष्णुसंबोधनं वा। अन्योन्यं लक्ष्मीनारायणयोर्विमर्दात् आलिङ्गनात्, तनूभूतं कुचकलशयोः, अर्थाल्लक्ष्म्याः, अन्तरगतं मध्यवर्ति शेषं समानम्॥ ७७॥

आनन्दलहरीटीका

यदेतदिति – हे शिवे, हे जननि, तव कृशे मध्ये कालिन्द्या यमुनायास्तनुतरोऽत्यल्पो यस्तरङ्गः, तदाकृति तादृशं यदेतत् किञ्चिद्वस्त्वस्तीति शेषः। तत्कुचरूपयोः कलशयोरन्योन्य-विमर्दाद् संघर्षात् तनूभूतं चूर्णितं व्योम-आकाशं कुहरिणीं गर्तवतीं नाभिं प्रविशदिव सुषिरां भाति प्रतिभाति इत्यन्वयः। आकाशस्य श्यामत्वं कविसंप्रदायात्। इवेत्युत्प्रेक्षायाम्॥

स्थिरो गङ्गावर्तः स्तनमुकुलरोमावलिलता-
[1]कलावालं कुण्डं कुसुमशरतेजोहुतभुजः।
रतेर्लीलागारं किमपि तव नाभि[2]र्गिरिसुते
बिलद्वारं सिद्धेर्गिरिशनयनानां विजयते॥ ७८॥

ஸ்திரோ கங்காவர்த: ஸ்தநமுகுல ரோமாவலிலதா-
2 3 3 1 1 1 1
கலாவாலம் குண்டம் குஸுமசரதேஜோ ஹுதபுஜ:।
1 1 3 1 1 1 4
ரதேர் லீலாகாரம் கிமபி தவ நாபிர் கிரிஸுதே
1 3 1 1 1 4 3 1
பிலத்வாரம் ஸித்தேர் கிரிசநயநாநாம் விஜயதே॥
3 3 3 4 3 1

भँवर अचंचल गङ्गा का आधार स्तनमुकुल रोमावली-
लतिका का हवन कुण्ड सुमशर अनलशिखा का [3]गृहकेली
रति का है तव नाभि गिरिसुते अव्यक्त विभव पाती है
बिलद्वार सिद्धि का ईशनयनों की सी छवि पाती है॥

लक्ष्मीधरा

स्थिरः विनाशरहितः गङ्गावर्तः गङ्गायाः अम्भसां भ्रमः, आवर्तस्य क्षणिकत्वात् तद्व्यतिरेकः स्थिर इति। स्तनमुकुलरोमावलिलताकलावालं स्तनावेव मुकुलौ पुष्पकोरकौ तयोः रोमावलिरेव लता आधारभूता जनयित्री, तस्याः कला रेखा तस्याः आबालं आलवालम्। कुण्डं होमार्थं संपादितं वृत्तं अग्निस्थानं, कुसुमशरतेजोहुतभुजः कुसुमशरस्य मन्मथस्य तेजः दीप्तिरेव हुतभुक् वह्निः तस्य रतेः मदनपत्न्याः, लीलागारं विलासगृहं, तत्रैव सर्वदा मन्मथसद्भावात् तत्प्रेयसी तत्रैव वर्तत इति। किमपि अनिर्वाच्यं अतिसुन्दरमित्यर्थः। तव नाभिः

1 निजावालं, जलावालं, कुलावालं, तलावालं। 2 नाभीति गिरिजे।

गिरिसुते! पार्वति! बिलद्वारं, गुहाद्वारं, सिद्धैः तपस्विवृन्दैः, गिरिशनयनानां सदाशिवचक्षुषां विजयते सर्वोत्कर्षेण स्फुरति। अत्रेत्थं पदयोजना – हे गिरिसुते! तव नाभिः स्थिरो गङ्गावर्तः स्तनमुकुलरोमावलिलताकलावालं कुसुमशरतेजोहुतभुजः कुण्डं रतेर्लीलागारं गिरिशनयनानां सिद्धेर्बिलद्वारं किमपि विजयते। अत्रोल्लेखालङ्कारः, एकस्या नाभेरनेकरीत्या उल्लेखात्। नायमतिशयोक्तिः, एकस्यानेकत्वेनोल्लेखनादेव। नाप्यतिशयोक्तिमाला, किमपीत्यध्यवसितुमशक्यत्वात् किमपीत्यनेन सार्धं मालात्वस्यानुचितत्वादिति रहस्यम्॥ ७८॥

### सौभाग्यवर्धनी

नाभिं स्तौति – स्थिर इति। हे गिरिसुते! गङ्गावर्तः स्थिरः निश्चलः, स्तनकुमुलरोमावलिलताकलाशालम्; स्तनकोरकलतायाः स्तनावेव मुकुलौ कोरकौ तयोः रोमावलिरिति लता, तस्याः कलावालं, आलवालभूतं कलाशालो गर्तविशेषः, कुण्डं कुसुमशरतेजोहुतभुजः, मन्मथस्य कान्तेरिति। रतेः लीलागारं रतेः विलासगृहं, किमपि अनिर्वाच्यं, परमेश्वरस्याम्बकानां सिद्धेर्बिलं अनर्घ्यगुणसौन्दर्यबिलविवरद्वारं सिद्धेः इति गिरिशनयनानां विजयते सर्वोत्कर्षेण वर्तते। नान्यस्य तव नाभिं विलोक्य एतादृशः चमत्कारो गिरिशनयनानामिव भाति। त्रिलोचनव्यतिरिक्तनयनागोचरत्वात्। अत्रैकस्या एव नाभेः गङ्गावर्तादिभिः अभेदारोपात् मालारूपकोऽलङ्कारः॥ ७८॥

### अरुणामोदिनी

नाभिं वर्णयति – स्थिर इति। हे गिरिसुते! पर्वतराजपुत्रि! देवि! भवत्याः, 'तेमयावेकवचनस्य' इति युष्मच्छब्दषष्ठ्येकवचनस्य ते इत्यादेशः। नाभीस्थो ह्रदः अविनाशीत्यर्थः। गङ्गाया मन्दाकिन्या आवर्तः अम्भोभ्रमः, 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः। आवर्तस्य आशुतरविनाशित्वेन एतदुपमानानर्हत्वात् तदुपयोगाय स्थिरविशेषणम्। तथा स्तनावेव मुकुलौ कुड्मलौ यस्याः सा स्तनमुकुला, सा च सा रोमावली च रोमराजिरेव लता, तस्याः कलावालम् उत्पत्तिस्थानीभूतमालवालम्; केदार इत्यर्थः। 'स्यादालवालमावालमावापः –' इत्यमरः। अत्र सहस्रनामोक्तिः 'नाभ्यालवालरोमालिलताफलकुचद्वयी' इति। किं च कुसुमशरः मदनः, तस्य तेजो दीप्तिरेव हुतभुक् अग्निः विरहिदाहकत्वात्तस्य कुण्डं होमस्थानवेदिः। किं च रतेः मदनप्रियायाः, लीलागारं क्रीडागारम्, तस्यान्तरालिकापवरकत्वात् गभीरत्वाच्च। तथा गिरिशनयनानां शिवनेत्राणां, अनेन गिरिशस्तव्यतया गुहोद्वीक्षणरसिकता सूचिता। सिद्धेः योगस्य, किमपि अनिर्वचनीयं, बिलद्वारं गुहाद्वारं, तपःसिद्धिस्थानमित्यर्थः। एवं विजयते सर्वोत्कर्षेण वर्तते। समस्तरूपेण योग्यत्वादिति भावः,

किमपि तव नाभीति गिरिजे इति पाठे, हे गिरिजे! तव नाभी देहमध्यावयवः, 'कृदिकारादक्तिनो ङीष्वा वक्तव्यः' इति ङीष्। गिरिशनयनानां स्थिरो गङ्गावर्त इत्याद्यनेकरूपेण किमप्यनिर्वचनीयं प्रतीयते विजयते इति योजना। अत्र एकस्या एव नाभेः अनेकधा रूपणात् निरवयवं मालारूपकमलङ्कारः। यद्यप्यत्र गिरिशनयनानामिति पदस्वारस्यादुल्लेख एव वक्तव्यतया एषां प्रतिभाति। स चात्र ग्रहीतृभेदाभावात् तस्य चोल्लेखे अवश्यवक्तव्यत्वात् न विद्यानाथादिमतानुसारिणां सरणिं अध्यारोहतीत्युपेक्ष्यः। तेन च नाभेः गिरिशान्यनेत्राविषयत्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः॥ ७८॥

आनन्दगिरीया

स्थिर इति। हे अचलतनये, पार्वति, नाभीत्याकारेण वितर्कनाद्विजयते। केन व्यापारेण, अयं किं स्थिरो निश्चलो गङ्गावर्तः, गङ्गापयसां भ्रमः। अथवा स्तनमुकुलरोमावलिलताजलावालं, स्तनौ मुकुलौ यस्याः सा स्तनमुकुला, सा चासौ रोमावलिलता च, तस्या जलपूर्णमावालं पानीयं स्थापयितुमालवालम्। अथवा कुसुमशरस्य मदनस्य यस्तेजोहुतभुक् तस्य कुण्डं, यथा आहवनाग्नेरेकं कुण्डं भवति तथा मदनतेजोऽग्नेः अवस्थापनाय कुण्डम्। अथवा किमप्यनिर्वाच्यं, रतेः कामकामिन्या लीलागारं क्रीडामण्डलं नु। अथवा गिरिशनयनानां विषयिणी या सिद्धिः, तस्या आगमनाय बिलद्वारं वा। यत्र श्रीमहादेवः कृपाकटाक्षं धत्ते, तत्र तदैव सर्वापि सिद्धिरायातीति तस्या आगमनाय बिलद्वारमिव। अथवा भुवनमातुर्भुवनेश्वर्याः नाभीदर्शनं सुधिया वर्ण्यमानमनुचितम्। नहि कुचोदररोमराजीरवेक्ष्य नाभिदर्शनं भवतीति प्रकारान्तरेण योजनीयम्। तव नाभी विजयते, कीदृशी, गिरिशनयनानामेवं विकल्पमादधाना। ननु गिरिशस्य श्रीमहादेवस्य तत्त्वपरिच्छेदात्कथमेतादृशो विकल्पः संभविष्यतीति चेत्, रसमार्गे शरीरिण इव तत्वज्ञानिनोऽपि संशयविपर्यासावस्था वर्ण्यते। यथा 'द्विधाकृतात्मा किमयं दिवाकरः' इति श्रीकृष्णस्य, 'वत्सैतन्नु सेव्यतां तरुतलं चण्डांशुरुज्जृंभते' इत्यादौ श्रीरामस्य च भ्रमवर्णनात्। स्थिरो गङ्गावर्त इति श्लोकस्य रहस्यार्थः—गणेशस्य मन्त्रमाह—स्थिर इति। स्थिरः प्रणवः, गङ्गा स्वरूपं, कुसुमशर क्लीं, रतेर्लीलागारं ऐं गिरिश ह, गिरिसुते रेफः, ओं गां गीं क्लीं ऐं ह्रीं। महागणेशमन्त्रः। (ओं गं गां क्लीं ऐं ह्रीं)॥

*पदार्थचन्द्रिका

अथ बहुधोत्प्रेक्षमाणो नाभिं वर्णयति—स्थिर इति। हे गिरिजे, तव नाभी इत्येवंप्रकारेण विजयते सर्वोत्कर्षेण वर्तत इत्यन्वयः। सर्वोत्कर्षप्रकारानेवाह—परम-

* अस्य श्लोकस्य तात्पर्यदीपिनी व्याख्या नोपलभ्यते। आदर्शपुस्तके मूलश्लोकमात्रं लिखितमुपलभ्यते।

पावनत्वात्परमाह्लादकत्वाच्च सर्वस्येति। स्थिरो गङ्गावर्तः इवेति शेषः। गङ्गावर्तः कदाचिदित्यतो विशेषणं स्थिर इति, अभूतोपमा। स्तनौ मुकुलाविव स्तनमुकुलौ स्तनमुकुलविशिष्टा चासौ रोमावलिलता चेति, तथा तस्या जलावालं जलसेकार्थं आलवालमिवेत्यर्थः। कुसुमशरस्य तेजः प्रतापः हुतभुगिवेति तथा तस्य कुण्डं स्थानमिव। रतेः काममार्यायाः किमप्यनिर्वचनीयं लीलागारमिव कौतुकागारमिव। अन्ये हि सिद्धाः सिद्धिं गह्वरे साधयन्ति। तथा गिरिश-नयनानां सिद्धेः पुरुषार्थसाधनस्य बिलद्वारं गह्वरमिवेत्यर्थः। कुण्डमग्न्यालये माने भेदे देवजलाशये इति मेदिनीकरः॥ ७८॥

## डिण्डिमभाष्यम्

स्थिर इति। हे गिरिजे पार्वति, तव नाभीति प्रख्यातं नाभिरूपेण वर्तमानं, गिरिशनयनानां महादेवलोचनानां आनन्दसिद्धेः सौष्ठवकारणभूतं गुहारूपं बिलद्वारं यत्तव तिष्ठति, तद् गृहीत्वा नानाप्रकारेण कवयः प्रामाणिकतया एवमुत्प्रेक्षन्ते। लौकिकोत्प्रेक्षा तु वर्णनात्मकत्वात् अप्रामाणिक्येव। भगवत्यां तु उत्प्रेक्षया वर्णयितुमसंभव एव। विद्यमानमेव तद्वर्णयितुं ब्रह्मविष्णुरुद्रादिभिरशक्यम्। ताश्चोत्प्रेक्षाः क्रमेण दर्शयति–स्थिरो गङ्गावर्तः, स्थिरोऽचलः, गङ्गायाः सलिलावर्तः सलिलविभ्रमणम्, किमेतदिति। अन्या उत्प्रेक्षा, स्तनावेव मुकुलौ यस्याः, स्तनमुकुला रोमावलिलता, रोमराजिरूपिणी वल्लरी, तस्यास्तलेऽधःप्रदेशे आवालं पानीयप्रदानाय मृत्तिकारूपा विष्टा वा। अथोत्प्रेक्षान्तरमाह–कुसुमशरतेजोहुतभुजः कन्दर्पप्रतापाग्नेरनवरतप्रज्वलनार्थं वर्तुलाकारं कुण्डं वा। किमिति इति पदद्वयं सर्वत्रोत्प्रेक्षासु विजयतेशब्देन संबध्यते। पुनरुत्प्रेक्षान्तरं, रतेः कामदेवस्य पत्न्या लीलागारं क्रीडामन्दिरं वा लीलानगरं वा खलु द्वारप्रदेशे सुघटितं संकुचितम्, अभ्यन्तरे गभीराभोगसुन्दरं नाभि-पुटमिति तथैवोत्प्रेक्ष्यते॥ ७८॥

## गोपालसुन्दरी

स्थिरो गङ्गावर्त इति। हे गिरिजे! तव नाभी इत्यनेन प्रकारेण विजयते सर्वोत्कर्षेण वर्तते। प्रकारमेवाह–स्थिरः स्थैर्यशाली गङ्गाया आवर्तः भ्रमिः, तथा स्तनावेव मुकुलौ जलधारणार्थं गर्तविशेषः, निजावालमिति क्वचित्पाठः। तत्र निजं स्वीयमावालं, 'तदेव स्यादालवालमावापोऽथ नदी सरित्' इत्यमरः। तथा कुसुमशरः कामस्तस्य तेजो-हुतभुजः प्रतापाग्नेः कुण्डं अग्न्यालयः। तथा रतेः कामपत्न्याः किमप्यनिर्वचनीयं लीलागारं क्रीडामन्दिरं, तथा गिरिशनयनानां आनन्दरूपायाः सिद्धेः कारणीभूतं बिलद्वारमित्यर्थः। विष्णुपक्षे हे गिरिजे, गिरिजायाः पार्वत्या इः कामः वाञ्छितं यस्मात्। विः पक्षी गरुडः,

तं लात्यनुगृह्णाति इति हि विल! यद्वा गिरिजा पार्वती, ईः लक्ष्मीः, विः गरुडः, तान् लात्यनुगृह्णाति इति किं हे गिरिजेविल, गिरिशनयनानां सिद्धेः, कामभस्मीकरणदूरदर्शनादिरूपाया द्वारं, त्वन्नामध्यानादेव दूरदर्शनादिसिद्धिर्महेशस्येति भावः। शेषं समानम्॥ ७८॥

आनन्दलहरीटीका

स्थिर इति। हे गिरिजे, तव नाभिरित्यनेन प्रकारेण विजयते। केनेत्याह— स्थिरो निश्चलो गङ्गाया आवर्तो जलभ्रमिः, तथा स्तनावेव मुकुलौ कुड्मलौ यस्यास्तादृशी या रोमावलिरूपा लता सैव कल्पवल्ल्यादिसदृशरूपा तस्या आवालं जलधारणार्थगर्तविशेषः। 'कला स्यान्मूलदे वृद्धौ शाल्यादावंशमात्रके। षोडशांशे च चन्द्रस्य कलनाकालयोः कले'ति विश्वप्रकाशः। कलेत्यत्र कुलेति पाठे कुलं समूह इत्यर्थः। तलेति पाठेऽधोभाग इत्यर्थः। जलेति पाठे जलधारणार्थत्वात् जलसंबन्धीत्यर्थः। 'स्यादालवालमावालं' इत्यमरः। तथा कुसुमशरस्य कामस्य तेजः प्रताप एव हुतभुगग्निः तस्य कुण्डं होमार्थगर्तः, तथा किमप्यनिर्वचनीयं रतेः कामपत्न्या लीलागारं, कामेन सह क्रीडागृहं, तथा गिरिशनयनानां शिवनेत्राणां सिद्धेः परमानन्दस्य बिलद्वारं गर्तरूपं कारणमित्यर्थः॥ ७८॥

निसर्गक्षीणस्य स्तनतटभरेण क्लमजुषो
नमन्मूर्ते[1]र्नारीतिलक शनकैस्त्रुट्यत इव।
चिरं ते मध्यस्य त्रुटिततटिनीतीरतरुणा
[2]समावस्थास्थेम्नो भवतु कुशलं शैलतनये॥ ७९॥

நிஸர்க க்ஷீணஸ்ய ஸ்தநதட பரேண க்லமஜுஷோ
நமந்மூர்தேர் நாரீதிலக சநகைஸ் த்ருட்யத இவ।
சிரம் தே மத்யஸ்ய த்ருடித தடிநீதீர தருணா
ஸமாவஸ்தா ஸ்தேம்நோ பவது குசலம் சைலதநயே॥

कुशल रहे तेरी सहज क्षीण कमर शैलतनये जी है
स्तनकुम्भों से बोझिल क्लान्त नमित तव टूटेगी सी है।
तटिनी के टूटे कगार पर खडे वृक्षा की सी समता
करती जो नारीतिलक! सदा रहे सुदृढ तनुमध्यलता॥

1 नाभौ वलिषु 2 समावस्थ

लक्ष्मीधरा

निसर्गक्षीणस्य स्वभावेन क्षीणस्यातिकृशस्य, स्तनतटभरेण स्तनतटयोः कुचतटयोः भरेण, क्लमजुषः क्लान्तिमतः नमन्मूर्तेः नारीतिलक! स्त्रीरत्नभूते! शनकैः स्तोकं, त्रुट्यत इव भिद्यमानस्येव; चिरं बहुकालं, ते तव, मध्यस्य अवलग्नस्य, त्रुटिततटिनीतीरतरुणा त्रुटिते भग्ने तटिन्याः वाहिन्याः तीरे तरुः वृक्षः तेन, समावस्थास्थेम्नः समायां तुल्यायां अवस्थायां स्थेमा स्थैर्यं यस्य तस्य, भवतु भूयात्। कुशलं क्षेमं त्रुटनाभावः, शैलतनये पार्वति। अत्रेत्थं पदयोजना — हे शैलतनये! नारीतिलक! निसर्गक्षीणस्य स्तनतटभरेण क्लमजुषः नमन्मूर्तेः शनकैः त्रुट्यत इव त्रुटिततटिनीतीरतरुणा समावस्थास्थेम्नः ते मध्यस्य चिरं कुशलं भवतु। मध्यस्येत्येवमादिप्रयोगाः सहृदयहृदयाह्लादकारिणो महाकविशिक्षाभ्याससमासादिताः। एतादृशप्रयोगनिपुणः महाकविरित्युच्यते। अत्रोपमालङ्कारः, भग्ननदीकूलवर्तिमहीरुहशिखामूलिकासाम्यं मध्यस्येति ॥ ७९ ॥

सौभाग्यवर्धनी

मध्यं स्तौति — निसर्गेति। स्वभावक्षीणस्य स्तनतटभरेण ग्लानिजुषः नमन्मूर्तेः नाभौ नाभिप्रदेशे वलिषु शनकैः मन्दं भङ्गुरतया त्रुट्यन्निव प्रतिभातीत्यर्थः। चिरं ते मध्यस्य; एतादृशस्य, त्रुटिततटिनीतीरतरुणा; त्रुटितश्चासौ तटिनीतीरतरुश्चेति कर्मधारयः। समावस्थस्थेम्नः; समा अवस्था यस्य सः समावस्थः, एतादृशः स्थेमा स्थैर्यं यस्य। हे शैलतनये! चिरं कुशलं भवतु। स्वभावत एव क्षीणः स्तनभरेण ग्लानः नाभीनमन्मूर्तिः वलिषु निम्नोन्नतभावेन त्रुट्यन्निव एतादृशस्य तव मध्यस्य त्रुटता नदीतीरतरुणा सह समानावस्थस्थैर्यस्य कुशलं भवतु। भक्तिभावेनाशंसा। एतादृशोऽपि मध्यः भक्तानुग्रहाय शरीरभृतः तव न त्रुटति। अहो आश्चर्यमिति ध्वनितः। अथवा एतादृशोऽपि मध्यः महादेवभाग्यवशात् तिष्ठतीति भक्तिरसोन्मेषितहासोक्तिः ॥ ७९ ॥

अरुणामोदिनी

मध्यं वर्णयति — निसर्गेति। हे शैलतनये! पर्वतपुत्रि! एतेन च देहदार्ढ्यं सूचितम्। निसर्गात् स्वभावादेव क्षीणस्य कृशस्य वेदिरिव, शातरूपस्येत्यर्थः। अत एव स्तनतटस्य भरेण, 'भरोऽतिशयभारयोः' इति रत्नमाला। क्लमं श्रमं जुषतीति, तस्य भारासहत्वादिति भावः। अत एव नमन्मूर्तेः. अत एव नमत्कायस्य नमनव्रतस्वरूपस्य वा, अत एव नाभौ गभीरबिलरूपतया भारवहनासामर्थ्यकारिण्या वलीषु तत्रत्यत्वक्संकोचेषु च भङ्गीरूपास्वित्यर्थः। शनकैः मन्दं, त्रुट्यत इव छेदनं प्राप्नुवदिव स्थितस्य मध्यस्य कार्यात् स्तन-

भाराधिक्येन नमनात् नाभौ वलिषु च भङ्गुरीभवदिव भासत इत्यर्थः । नाभीवलिष्विति पाठे नाभीस्थितासु वलिष्वित्यर्थः । अत एव त्रुटनमस्य संजातं त्रुटितः प्रवाहकृतमूलोत्खननादर्धावनतः सन् वर्तमान इत्यर्थः । तटिन्याः स्वर्नद्यास्तीरे यस्तरुः वृक्षः तेन समावस्था समानदशा स्थेमा स्थैर्यं यस्य तस्य तद्दशापन्नस्येत्यर्थः । ते भवत्याः, मध्यस्य अवलग्नस्य, मध्यमावस्थापन्नस्य चेत्यर्थः । कुशलं क्षेमं त्रुटनाभावरूपः, भवतु भूयात्, क्षेमं प्राप्नोत्वित्यर्थः । अत्र मध्यत्रुटनस्य सकलजगद्विलयहेतुत्वात् सकलजगत्सर्जनहेतुभूतदेवीवलग्नस्य त्रुटनाभावो जगत्क्षेमलाभाय आशास्यते । तव मध्यस्य अतिसूक्ष्मत्वेऽपि अतिसारवत्वं सूचितम् । ७९ ॥

आनन्दगिरीया

निसर्गेति । हे शैलतनये तव मध्यस्यावलग्नस्य कुशलं भवतु । कुशलं किमिति प्रार्थ्यते इत्याशङ्क्य अकुशलकारणं निरूपयति । किंलक्षणस्य निसर्गक्षीणस्य स्वभावकृशस्य, अथ च साहससिद्धराजयक्ष्मणः तत्रापि स्तनतटभरेण क्लमजुषः, स्तनभारेण क्लमं मूर्छामापन्नस्येव अत एव नमन्मूर्तेः । लज्जादिभावः प्रदर्शितः सौष्ठवावस्थानाङ्गवत्याः । अथ च भारोद्वहनवशेन विनमच्छरीरस्य नाभौ वलीषु च त्रुट्यत इव । यथा गगनं खण्डीभूतमेघमण्डलावच्छेदेन त्रुटितं खण्डमिवाभाति तद्वत् । अथवा नाभौ वलिषु चान्तः सारविहीनतया अवलम्बनाभावात् त्रुट्यते । पुनः किंभूतस्य त्रुटिततटिनीतीरतरुणा समावस्थास्थेम्नः, प्रवाहस्य बलवदाघातवशेन त्रुटितं यत्तटिन्या नद्यास्तीरं, तत्र विद्यमानो यस्तरुः, छिन्नमूलत्वादचिरस्थायी, तत्समा अवस्था, यस्यैतादृशो यः स्थेमा, स्थितेर्भावः स्थैर्यं यस्य तस्य । विनश्यदवस्थस्यैतादृशी विनाशकारणपरंपरा । कुशलं भवत्विति । निसर्गक्षीणस्येति पद्यस्य रहस्यार्थः । कामत्रिपुरामाह – निसर्गेति । क्षीणस्य क्लम क्लीं मूर्तेः लज्जा वलिषु शनकैः क्लीं तटिनी स्वाहा । क्लीं ह्रीं क्लीं स्वाहा । कामत्रिपुरामन्त्रः ॥ ७९ ॥

तात्पर्यदीपिनी

निसर्गक्षीणस्येति । हे शैलतनये गिरिपुत्रि, ते मध्यस्य चिरं कुशलं भवतु । किंभूतस्य मध्यस्य निसर्गक्षीणस्य निसर्गेण स्वभावतः क्षीणः, तस्य अतिकृशस्येत्यर्थः । पुनः स्तनतटभरेण क्लमजुषः स्तनयोस्तटं तस्य भरः तेन क्लमः, तं जुषति स तस्य क्लान्तिमतः, अत एव नाभौ नमन्मूर्तेः नमन्ती मूर्तिर्यस्य तस्य, पुनर्वलिषु त्रिवलिषु शनकैर्मन्दं मन्दं त्रुट्यत इव भङ्गुरीभावं भजत इव पुनः त्रुटिततटिनीतीरतरुणा त्रुटितो मुक्ताधारमण्डलः एवंविधो यस्तटिनीतीरे नदीकूले तरुस्तेन समावस्थास्थेम्नः समाना या अवस्था तद्वत्स्थेमा स्थितिर्यस्य तस्य तथोक्तस्य । तदनुकूलत्वेऽपि अनन्तकोटिब्रह्माण्डमण्डलानामवस्थानप्रदेशा-

भावात् जगत्सृष्टिरपि भवत्या कर्तव्यैव न स्यात् । सृष्ट्यभावे सर्वेषामनन्तकोटिसंख्याना- मात्मनां लिंगशरीरपरिग्रहपूर्वकनानायोनिशरीरोपभोगं विना भोगमोक्षादिसिद्धिरपि अकुड्यचित्र- वदविद्यमानैव स्यात् । तद्दोषपरिहारार्थं सकललोकसावित्र्या मध्यस्य कल्याणाशंसन- मुचितमिति भावः ॥ ७९ ॥

## पदार्थचन्द्रिका

अथ मध्यं कुशलप्रार्थनाच्छलेन वर्णयति–निसर्गेति । हे शैलतनये ते तव मध्यस्य कुशलं भवत्विति कुशलप्रार्थनाच्छलेन अतिशोभा वर्ण्यते । मध्यस्य कुशलप्रार्थनं अकुशलसंभावनायां सत्यां भवेत् । अतः अकुशलहेतून् वदन् मध्यं बहुधा विशिनष्टि निसर्गे- त्यादिना । क्लमं खेदं जुषत इति तस्य क्लमजुषः, जुषि प्रीतिसेवनयोरिति धातुः । नमन्ती मूर्तिः स्वरूपं यस्य तत्तथा तस्य । अत्र तादात्म्युक्तपुंस्कं पुंवद्वेति सूत्रेण पक्षे पुंवद्भावात् नुमभावः । यद्वा तव नाभौ नमन्ती चासौ मूर्तिश्च तस्या मध्यस्य कुशलं भवत्विति संबन्धः । अधिकरणा- श्चात्र षष्ठ्या द्रष्टव्याः । शनकैर्मन्दं मन्दम् । वलिषु त्रिवलिषु त्रुट्यत इव । त्रुट्यतीति तद्वत् । तस्य त्रुटितः किञ्चिद्भग्नः स चासौ तटिनीतीरतरुश्चेति तेन समः तुल्य अवस्थास्थेमा यस्य तत्तथा तस्य । स्थिरस्य भावः स्थेमा । नाभौ वलिष्वित्यत्र विषयसप्तम्यौ ॥ ७९ ॥

## डिण्डिमभाष्यम्

हे शैलतनये पार्वति! निसर्गक्षीणस्य स्वभावत एव कृशिमशालिनस्तदुपरि स्तनतट- भरेण क्लमजुषः क्लान्तियुक्तस्य अत एव हेतोः नमन्मूर्तेः भारसहिष्णुताविरहेण प्रह्वीभूतवपुषः नाभौ अन्तःशून्यतया सुदृढावलम्बनदेशरहितायां वलिषु च अन्योन्यमसंसर्गेण दृढाश्लेषविरहितासु अत एव दुर्बलासु शनकैर्मन्दं मन्दं त्रुट्यत इव भङ्गुरीभावं भजत इव । अनेन क्रमेणात्यन्त- मस्थिरतामापन्नस्य तदा त्रुटिततटिनीतीरतरुणा प्रावृषेण्यप्रबलजलप्रवाहसाटोपमोटितच्छिन्नमूल- बन्धनदीतटसंरूढवृक्षेण सह समा अवस्था देहधारणात्मिका दशैव दशा यस्य स्थेम्नः स्थिरत्वस्य तस्य समावस्थास्थेम्नः मध्यस्य तव मध्यभागस्य सर्वदा कुशलं भवतु । तदकुशलत्वे हि अनन्त- कोटिब्रह्माण्डमण्डलानामवस्थानप्रदेशाभावात् जगत्सृष्टिरपि भगवता न कर्तव्यैव स्यात् । सृष्ट्यभावे च सर्वेषामनन्तकोटिसङ्ख्यानामात्मनां लिङ्गशरीरपरिग्रहपूर्वकनानायोनिशरीरभोगं विना भोगमोक्षादिसिद्धिरपि अकुड्यचित्रवत् अविद्यमानैव स्यात् । तद्दोषपरिहाराय सकललोक- सवित्र्याः पार्वत्याः मध्यस्य कल्याणाशंसनमवश्यमुचितमेवेति भावः ॥ ७९ ॥

## गोपालसुन्दरी

निसर्गेति । हे शैलतनये, ते तव मध्यस्य कुशलं भवतु । कीदृशस्य निसर्गेण

स्वभावेन क्षीणस्य कृशस्य तत्रापि स्तनतटभरेण कुचाभोगभरेण क्लमजुषः क्लेशयुक्तस्य तत एव नमन्मूर्तेः भारसहिष्णुताविरहेण प्रह्वीभूतवपुषः, नाभौ वलिषु च शनकैर्मन्दं मन्दं त्रुट्यत इव। त्रुटितश्चासौ तटिनीतीरतरुश्च तेन समा समाना अवस्था दशा, तस्याः स्थेमा स्थितिर्यस्येत्यर्थः। विष्णुपक्षे – हे शैलतनये, शैलतनयायाः ई लक्ष्मीः संपत्तिः यस्मादित्यर्थः। यद्वा शैलतनयस्य ई लक्ष्मीः यस्य स तथा, उभयोः समुद्रशायित्वात् अर्धलक्ष्मीहरे। सुन्दरीगोपालस्य वा वर्णनाभिप्रायेण। स्तनतटभरेणेत्यादि, स्तनवत्तटं विद्यते यस्यासौ स्तनतटो गोवर्धन इति वा। शेषं समानम्॥ ७९॥

आनन्दलहरीटीका

निसर्गेति। हे शैलतनये तव मध्यस्य चिरं कुशलं भवतु। कीदृशस्य निसर्गेण स्वभावेन क्षीणस्य स्तनतटयोर्भरेण क्लमजुषः क्लेशयुक्तस्य अत एव नमन्ती नम्रा मूर्तिर्यस्य स तथा, नाभौ वलिषु च शनकैः मन्दं त्रुट्यतो भङ्गं प्राप्नुवत इव। त्रुटितं भग्नं यत्तटिन्या नद्यास्तीरं तत्र यस्तरुः तेन समौ अवस्थास्थेमानौ दशास्थैर्ये यस्य स तथा तस्य॥ ७९॥

कुचौ सद्यः [1]स्विद्यत्तटघटितकूर्पासभिदुरौ
　कषन्तौ दोर्मूले कनककलशाभौ [2]कलयता।
तव त्रातुं भङ्गा[3]दलमिति वलग्नं तनुभुवा
　त्रिधा नद्धं देवि त्रिवलि लवलीवल्लिभिरिव॥ ८०॥

குசௌ ஸத்யஸ் ஸ்வித்யத் தட கடித கூர்பாஸ பிதுரௌ
1 1 3 3 1 1 1 4 1 1 1 1 4 3
　கஷந்தௌ தோர்மூலே கநககலசாபௌ கலயதா।
　1 1 1 1 1 1 4 1 1
தவ த்ராதும் பங்காதலமிதி வலக்நம் தநுபுவா
1 1 1 1 3 3 1 3 1 4
　த்ரிதா நத்தம் தேவி த்ரிவலி லவலீ வல்லீபிரிவ॥
　1 4 3 4 3 1 4

भीगे हुए पसीने से क्षणक्षण कञ्चुक का भेदन कर
बाहुमूल तक उभरे कुच कुंभों का स्वर्णिम सर्जन कर।
बढनेवाले सुमशर से बचने को कमर देवि! तेरी
त्रिवली मिस लवलीवल्ली से बन्धी त्रिधा और घनेरी॥

1 स्विद्यत्स्तनघटित, सद्यस्तटतटित स्विद्यत्तटघटित　2 कलयतः　3 दवलग्नवलग्न

लक्ष्मीधरा

कुचौ स्तनौ, सद्यः तदानीमेव, स्विद्यत्तटघटितकूर्पासभिदुरौ स्विद्यन्तौ स्वेदवन्तौ तटौ पार्श्वौ तयोर्घटितस्य कूर्पासस्य भिदुरौ भेदकरौ। 'कर्मकर्तरि कुरच्' इत्यत्र कर्तर्यपि कुरच्। रक्षितस्तु—'कर्मणि कर्तरि च कुरच्' इति व्याचष्टे। 'सद्यस्तनघटितकूर्पासभिदुरौ' इति पाठे सद्यस्तनं तदानीन्तनं नूतनत्वेन घटितं कूर्पासकं तस्य भिदुरौ। प्रतिक्षणं प्राणेश्वरस्य सदाशिवस्य रूपानुसन्धानेन उत्सिक्तावयवैर्भिद्यते सन्धिबन्धेषु कञ्चुलिकेति भावः। कषन्तौ निकषन्तौ दोर्मूले कक्षप्रान्तदेशे, कनककलशाभौ कनककलशयोर्हेमकुम्भयोरिव आभा सौभाग्यं ययोस्तौ, कलयता रचयता निर्मिमाणेन, तव भवत्याः, त्रातुं रक्षितुं, वलग्नमिति शेषः। यद्वा—प्रथमान्तस्य वलग्नशब्दस्य अत्र कर्मत्वेनान्वयः। भङ्गात् स्तनभारजनितात्, अलमिति अलंशब्दोऽत्र वारणार्थः। भङ्गो मा भूदित्यर्थः। वलग्नं मध्यप्रदेशं, तनुभुवा मन्मथेन, त्रिधा त्रिप्रकारेण, नद्धं बद्धं, देवि! दीव्यन्ति! भगवति! त्रिवलि तिस्रो वलयो विभङ्गाः यस्य तत्। लवलीवल्लिभिरिव लवलीनां वल्लयः ताभिः। पीतवल्ली लवली, तत्पुष्पाणि श्वेतानि। अकारादिनिघण्टौ तु—लवलीत्युक्त्वा तल्ला वनकुळत्थलतेत्युक्तम्। यथारुचि स्वीकार्यम्। इवशब्दस्सम्भावनायां, ध्रुवमित्यर्थः। इवशब्दस्य सम्भावनाद्योतकत्वमप्यस्तीति पूर्वमेवोक्तम्। अत्रेत्थं पदयोजना—हे देवि! सद्यः स्विद्यत्तटघटितकूर्पासभिदुरौ दोर्मूले कषन्तौ कनककलशाभौ कुचौ कलयता तनुभुवा भङ्गादलमिति वलग्नं त्रातुं त्रिवलि तव वलग्नं लवलीवल्लिभिः त्रिधा नद्धमिव। अत्र उत्प्रेक्षालङ्कारः, त्रिवलीनां लवलीवल्लीत्वेन संभावनात्। पूर्वार्धे अतिशयोक्तिरलङ्कारः, भगवत्याः कुचनिर्माणे मन्मथस्यैवाधिकारो न जरद्ब्रह्मण इति जरद्ब्रह्मनिर्माणसंबन्धेऽप्यसंबन्धोक्त्या अभेदाध्यवसायः कविकृतवस्तुकृतयोः सौन्दर्ययोरेवेति। उभयोरङ्गाङ्गिभावेन सङ्करः। नन्वेवं कुचौ रचयता मन्मथेनेत्यनुवाद्यविशेषणमहिम्ना मन्मथकर्तृत्वस्य सिद्धवदनुवादात् कुचनिर्माणे वर्तमानसंबन्धाभावात् असम्बन्धे संबन्धोक्तेरप्याज्ञस्यमेवेति चेत्—मैवम्; कुचौ कनककलशाभौ कलयतेति शतृप्रत्ययेन वर्तमानार्थेन कुचकरणस्य वर्तमानकालसंबन्धप्रतीतेरसम्बन्धे संबन्धोक्तिराज्ञसीति न वाच्यम्। भूतकालसंबन्धेऽपि भूतकालक्रियावाचकाख्यातान्तधातुप्रयोगे युज्यते संबन्धेऽप्यसंबन्धकथनं न त्वनुवाद्यगतत्वेन सिद्धवदनुवादे ॥ ८० ॥

सौभाग्यवर्धनी

वलित्रयं वर्णयति—कुचाविति। कुचौ सद्यःस्विद्यत्तटघटितकूर्पासभिदुरौ, महादेवविषयकानुरागसमुदितस्वेदलक्षणसात्विकभावाकलिततटसंसक्तकञ्चुकभेदोन्मुखौ, दोर्मूले कषन्तौ घृष्यन्तौ, अथ च कनककलशाभौ कलयता तनुभुवा कामेन, अवलग्नं मध्यं, भङ्गात् त्रातुं,

त्रिवलिलवलीवल्लिभिः, त्रिवल्ल्य एव लवलीवल्ल्यः, ताभिः, कुरपारेवरी इति कान्यकुब्जभाषोक्त-लताभिः, उदरं त्रिधा नद्धमिव। अनेनोपकारेण मयि सानुग्रहो महादेवो भविष्यतीति ध्वनिः। अत्र स्वभावोक्त्युपमालङ्कारौ स्पष्टौ॥ ८०॥

अरुणामोदिनी

पुनर्वलित्रयमेव वर्णयति—कुचाविति। हे देवि! प्रकाशरूपे! भगवति! सद्यः तदानीमेव, स्विद्यतोः महादेवविषयकानुरागातिशयात् उदितस्वेदाख्यसात्त्विकभाववतोः। यद्वा सदं सदाशिवमर्हतीति यत्प्रत्ययः। अत एव स्विद्यतोः तटयोरुपरिभागयोः घटितो दृढनद्धो यः कूर्पासः चोलः, 'चोलः कूर्पासकोऽस्त्रियाम्' इत्यमरः। तस्य भिदुरौ भेदनशीलौ न त्रुटनकृतावित्यर्थः। 'विदिभिदिच्छिदेः कुरच्' इति कुरच् प्रत्ययः। अनुरागातिशयादद्धा सत्यं, नद्धनिचोलच्छेदकावित्यर्थः। अत एव दोर्मूले बाहुमूले, कषन्तौ निकषन्तौ, अत एव कनककलशयोः सुवर्णघटयोः, आभेवाभा ययोस्तौ, कुचौ स्तनौ, कलयता विदधता सृजतेत्यर्थः। स्तनौ कनककलशाभौ सौवर्णकुम्भप्रतिमौ कलयता विचारयतेति वा। तनुभुवा मदनेन तद्योगक्षेमविधानाय देहे नित्यवास्तव्येनेति ध्वनिः। तव भवत्या वलग्नं मध्यभागः, 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यकारलोपः। भङ्गात् त्रुटनात्, त्रातुं रक्षितुमलं अत्यन्तं वलित्रयमेव समर्थमिति विचार्य वा। तिस्रश्च ते वलयश्च त्रिवलयः, तिस्रस्त्वक्-संकोचाः, ता एव लवलीवल्ल्यः, लवली पाण्डुरतिमनोहरः श्वेतपुष्पीसमाख्यो लताविशेषः, ताभिर्नहनसमर्थाभिः, त्रिधा त्रिप्रकारेण नद्धं बद्धमिव भातीत्यर्थः। भवद्देहवास्तव्येन युक्तायुक्तविचारचतुरेण प्रवर्धमानसौवर्णकलशनिकाशकुचभारेण अतिशातवलग्नभागमाकलयता मदनेन तत्स्थैर्यसंपादनाय त्रिवलीभिरेव लवलीलताभिः बद्धवत्प्रकाशत इत्यभिप्रायः। अत्र चोक्तं सहस्रनामसु 'स्तनभारदलन्मध्यपट्टबन्धवलित्रया' इति। अत्र असंबन्धे संबन्धरूपाति-शयोक्त्यनुप्राणितेयं नहनोत्प्रेक्षा। तया च वाताद्युपद्रवासहिष्णुबालतरुस्थैर्याय लतादिभिः तन्मध्य-बन्धनमाचरतां वनपालानां वृत्तान्तस्य प्रतीतेः, समासोक्तिर्व्यज्यत इत्यलङ्कारेणालंकारध्वनिः॥

आनन्दगिरीया

कुचावेताविति। हे देवि तव वलग्नं मध्यं तनुभुवा कामदेवेन त्रिवलिलवली-वल्लिभिः त्रिधा बद्धमिवोत्प्रेक्ष्यते। किं कृत्वा, भङ्गादेनं वलग्नं त्रातुं बन्धनमेवालं समर्थमिति, विचार्येति शेषः। त्रिवलय एव लवलीवल्ल्यः मधुरसुन्दररसोज्ज्वला वल्ल्यः ताभिस्त्रिधा बद्धं, किंलक्षणेन तनुभुवा, तावेतौ कुचौ मध्यभञ्जकौ कलयता शङ्कमानेन, एताभ्यां कुचाभ्यां कृशस्यास्य भङ्गो भविष्यतीति शङ्कमानेन, कीदृशौ कुचौ सद्यस्तटघटितकूर्पासभिदुरौ,

परमेश्वरीशरीरस्यारूढयौवनतया प्रतिक्षणं कुचयोर्वर्धमानतया, सद्यः तत्कालं, तटतटितं वाद्यमानमिव तटतटाशब्दं कुर्वाणं एतादृशं यत्कूर्पासं कञ्चुकं तद्भिदुरौ तत्पातयित्वा बहिर्गत-चूचुकावित्यर्थः। तटतटेति पाटनशब्दानुकरणम्। क्वचित्सद्यः स्विद्यत्तटघटितकूर्पासभिदुराविति पाठः। तदा यौवनोद्भेदवत्याः परमेश्वर्याः यत्कञ्चुकं, तद्भिदुरौ तद्भेदनोन्मुखौ। तेन तीक्ष्णत्वम्। पुनः किंलक्षणौ दोर्मूलं कषन्तौ वर्धमानतया बाहुमूलमुत्पीडयन्तौ। अनेन प्रौढत्वम्। पुनः किंभूतौ कनककलशाभौ अनेन काठिन्यं कान्तिमत्त्वं च। कुचौ सद्यः स्विद्यदिति पद्यस्य रहस्यार्थः। कामकन्दर्पोपासितामाह– मूले कामराजमूलस्य मूले, तनुभुवा कामबीजं पञ्चदशी क्लीं हंसः। आचार्याणां मते इयमुपासिता कामेन वा ॥ ८० ॥

तात्पर्यदीपिनी

**कुचाविति।** हे देवि, तनुभुवा तनोः शरीरात् भवति तेन मन्मथेन तव वलग्नं मध्यभागं भङ्गात्दत्यर्थं त्रातुं त्रिवलिलवलीवल्लिभिः त्रिवलिरूपा या लवली वसन्तलता तस्या वल्ल्यः तन्तवः ताभिस्तथोक्ताभिः, इति हेतोः त्रिधा नद्धमिव त्रिप्रकारं बद्धमिव। भारोद्वहनाद्भङ्गो भवति, तत्राह। किंविधेन तनुभुवा कुचौ स्तनौ सद्यः तदानीमेव कलयता पश्यता। किंविधौ कुचौ, स्विद्यत्तटघटितकूर्पासभिदुरौ स्विद्यन्तौ यौवनमदोष्मणा स्वेदजलं मुञ्चन्तौ यौ तटौ तयोर्घटितं विनिवेशितं यत्कूर्पासं कञ्चुकाख्यं तस्य भिदुरौ भेदशीलौ। पुनः किंविधौ दोर्मूले बाहुमूले कषन्तौ यौवनवेगेन व्याप्नुवन्तौ, पुनः कनककलशाभौ, कनकस्य सुवर्णस्य यौ कलशौ कुम्भौ तद्वदाभा ययोस्तौ तथोक्तौ। तेन खलु एवं विचारितं, भगवत्याः स्तनौ स्वभावतः कठिनौ यौवनारूढगम्भीरौ तदुपरि सुवर्णकलशवद्गुरुतरौ एतयोर्भारेण मध्यस्य यदि भङ्गो भवति, तर्हि सर्वमेव मम शृङ्गारसर्वस्वं अपहारितं स्यात्, एतदुपलब्धत्वादेव सर्वकामिनीशृङ्गारसंपत्तेः। अतः एतन्मध्यसंरक्षणं अवश्यं कर्तव्यमिति त्रिरेखाभिरेव वलग्नं बद्धमिति भावः॥ ८० ॥

पदार्थचन्द्रिका

अथ पूर्वार्धेन कुचकलशवर्णनपूर्वकं मध्यवर्णनमाह – कुचाविति। देवि, तव कुचौ कनककलशाभौ कलयतः गृह्णतः। कलिशब्दो गृह्णातीत्यर्थेऽपि च। सद्यः परिधानसमय एव, स्विद्यच्च तत्तटं च स्विद्यत्तटम्, तत्र घटित इव कूर्पासः चोलः तद्भिदुरौ तद्भेदनशीलौ दोर्मूलं कषन्तौ भारातिशयेन हिंसन्तौ। एवं कुचौ निर्वर्ण्य मध्यमुत्प्रेक्षमाण आहोत्तरार्धेन। हे देवि इति पूर्वोक्तप्रकारेण कुचकलशद्वयेन यो भङ्गस्तस्मात्, त्रातुं रक्षितुं तनुभुवा कामेन तव वलग्नं मध्यं त्रिवलिलवलीवल्लिभिः त्रिधा नद्धमिव। अलमतिशयेन, लोके लवलीति गङ्गामध्ये

प्रसिद्धा लता। इवशब्दोऽत्र भिन्नक्रमः। वलग्नं तु स्त्रिया मध्ये स्त्रिषु स्यात्कुम्भमाल्कम् इति मेदिनीकरः॥ ८०॥

डिण्डिमभाष्यम्

-- हे देवि! तस्य महादेवस्य पट्टमहिषि,-सद्यस्तत्क्षणादेव स्विद्यतोः यौवनमदोष्मणा स्वेदजलं मुञ्चतोः तटयोः कुचतटयोः घटितस्य निवेशितस्य कूर्पासस्य चीनांशुककञ्चुकस्य भिदुरौ, दोर्मूले बाहुमूले, कषन्तौ यौवनारम्भवेगेन व्याप्नुवन्तौ तव कुचौ पयोधरभारौ, कनककलशाभौ गुरुतरसुवर्णकुम्भप्रतिमौ कलयता, तनुभुवा कामेन। 'तनुभूस्तनये कामे' इति विश्वः। तेन खल्वेवं विचारितं, भगवत्याः स्तनौ खलु स्वभावतः कठिनौ यौवनारम्भगम्भीरौ, तदुपरि सुवर्णकलशवत् गुरुतरौ। एतयोर्भारेण मध्यस्य भङ्गो यदि भविता, सर्वमेव मम शृङ्गारसर्वस्वमपहृतं स्यात्। एतदुत्पन्नत्वादेव समस्तलोककामिनीशृङ्गारसंपत्तेः। एतन्मध्यसंरक्षणं अवश्यं कर्तव्यं मम। एतत्कुचभारपीडनात् वलग्नं मध्यभागं त्रातुं रक्षितुं इदं त्रिवलीमयरज्जुबन्धनमेवालं समर्थं इति विचार्य। हे देवि, तेनैव कामदेवः त्रिवलिलवलीवल्लिभिः तिसृभिर्मध्यरेखाभिरेव लवलीवल्लिभिः। लवली नाम लावण्यपाण्डुरवर्णः कोमलः प्रेक्षणीयकान्तिः लताविशेषः प्रसिद्ध एव। ताभिः त्रिवलीवल्लिभिः तद्वलग्नं बद्धमिव तथा च उद्यानादौ बालवृक्षाणां प्रथमप्रथमविटपोद्भेदसमये वातादुपद्रवसहिष्णुभावाय उद्यानपालकैः रज्जुबन्धनं क्रियते। तथा बालवृक्षकोमलविटपिनां दृढावस्थानं उपरि बन्धनौन्मुख्यं च प्रसिद्धं, तत्साधर्म्यमत्रापि इत्यभिप्रायः॥ ८०॥

गोपालसुन्दरी

कुचाविति। हे देवि, सद्यस्तत्क्षणादेव स्विद्यतोः यौवनोष्मणा शिवविषयकानुरागेण वा स्वेदं मुञ्चतोस्तटयोः कुचतटयोर्घटितस्य निवेशितस्य कूर्पासस्य चीनांशुककञ्चुकस्य भिदुरौ भेदनशीलौ दोर्मूले बाहुमूलद्वयं कषन्तौ व्याप्नुवन्तौ तव कुचौ कनककलशाभौ स्वर्णकुंभप्रतिमौ कलयता जानता तनुभुवा कन्दर्पेण वलग्नं उदरं भङ्गात्त्रातुं रक्षितुं, त्रिवलिलवलीवल्लिभिः तिसृभिर्मध्यरेखाभिरेव लवलीसंज्ञकाभिः वल्लिभिः लताभिर्बद्धमिवेत्यर्थः। विष्णुपक्षे— कान्तायाः कुचौ कनककलशाभौ उन्मत्तबीजपरिपूर्णकुम्भद्वयसमौ मदहेतुकतया, जानता, तनुभुवा तनुः शरीरं भूराश्रयः यस्य तेन जीवेन, तवोदरं त्रिधा श्रवणमनननिदिध्यासनरूपप्रकारत्रयाणां त्रिवलिलवलीवल्लिभिरवबद्धं ... ध्यानमित्यर्थः। किमर्थं, भङ्गाद् भ्रंशात् अवलग्नं तत्रैव संबद्धमात्मानं त्रातुम्। उदरं कीदृशम्? देवो ब्रह्म अस्मिन्नस्तीति देवि। इन्नन्तनपुंसकमिदं पदम्। अथवा तनुभुवा स्वशरीरोत्पन्नब्रह्मणा वलग्नं संयुक्तं, देवि सकलदेवाश्रयमित्यर्थः॥ ८०॥

आनन्दलहरीटीका

कुचाविति। हे देवि सद्यस्तत्क्षणात् स्विद्यत्सु स्वेदांबुयुक्तेषु तटेषु प्रान्तभागेषु घटितं मिलितं यत्कूर्पासं सूक्ष्मवस्त्रं तस्य भिदुरौ भेदनशीलौ, तथा दोर्मूले बाहुमूले कषन्तौ कनककलशाभौ स्वर्णकुम्भतुल्यौ कुचौ कलयता जानता मनोभुवा कामेन अबलं क्षीणं तवावलग्नं मध्यभागं भङ्गात् भञ्जनात्त्रातुं रक्षितुं त्रिवलिरूपाभिः लवलीनां वल्लीभिः लताविशेषैः त्रिधा नद्धं बद्धमिवेत्युत्प्रेक्षा। अवलग्नं मध्यलग्नयोरिति विश्वप्रकाशः। भङ्गादलमिति पाठे अलं अत्यर्थमिति हेतौ। वलग्नं मध्यमित्यर्थः। वलग्नं मध्यलग्नयोरिति विश्वः। स्विद्यदित्यत्र खिद्यत् इति पाठे खेदयुक्त इत्यर्थः। अनुक्षणं वर्धमानतया वस्त्रेण स्तनतटयोः खेदजननात्॥

गुरुत्वं विस्तारं क्षितिधरपतिः पार्वति निजात्
नितम्बादाच्छिद्य त्वयि [1]हरणरूपेण निदधे।
अतस्ते विस्तीर्णो गुरुरयमशेषां वसुमतीं
नितम्बप्राग्भारः स्थगयति लघुत्वं नयति च॥ ८१॥

குருத்வம் விஸ்தாரம் க்ஷிதிதரபதி: பார்வதி நிஜாத்
3 1 1 1 4 1 1 1 1 1

நிதம்பாதாச்சித்ய த்வயி ஹரணரூபேண நிததே।
1 3 3 1 2 3 1 3 4

அதஸ் தே விஸ்தீர்ணோ குருரயமசேஷாம் வஸுமதீம்
1 1 1 3 1

நிதம்பப்ராக்பார: ஸ்தகயதி லகுத்வம் நயதி ச॥
1 3 1 3 4 2 3 1 4 1 1 1

क्षितिधरपति ने निजविस्तार और गुरुता को है गिरिजे
निजकटकों से काट तुझे दे दिया हरण में हिमगिरिजे।
सो तेरी भारी विस्तृत नितम्ब दोनों ढक लेते हैं
पृथिवी को साथ ही साथ लघुता भी उसको देते हैं॥

लक्ष्मीधरा

गुरुत्वं गौरवं, विस्तारं आयामपरिणाहं, क्षितिधरपतिः हिमवान, पार्वति! शैलतनये! निजात् स्वकीयात्, नितम्बात् नितम्बप्रदेशात्, आच्छिद्य अवयुत्य, त्वयि भवत्यां, हरणरूपेण हरणात्मना, निदधे समर्पितवान्। हरणं नाम स्त्रीधनं—अध्यग्न्यध्या-

---

1 भरणरूपेण

वाहनिकम्। यथोक्तं हारीतेन – अध्यग्न्यध्यावाहनिकं हरणं स्त्रीधनं स्मृतमिति। अस्यार्थः – अग्निमधिकृत्य दत्तमध्यग्नि, विवाहसमये अग्निसमीपे पित्रादिभिर्यद्दत्तं तदध्यग्नि, विवाहानन्तरं वधूं गृहीत्वा स्वगृहं प्रतिजिगमिषावसरे पित्रादिभिर्यद्दत्तं तदध्यावाहनिकमिति। एतदुभयं हरणशब्दवाच्यमिति मन्वादिभिस्स्मृतमिति। अतः- तस्मात्कारणात्, ते तव, विस्तीर्णः आयामतः, गुरुः पृथुः, अयं परिदृश्यमानः, अशेषां कृत्स्नां, वसुमतीं पृथ्वीं नितम्बप्राग्भारः नितम्बस्य प्राग्भारः अतिशयः, स्थगयति छादयति। लघुत्वं लाघवं नयति प्रापयति च। चकारः शङ्काच्छेदे, अस्मिन्नर्थे न शङ्कितव्यमित्यर्थः। अत्रेत्थं पदयोजना – हे पार्वति! क्षितिधरपतिः गुरुत्वं विस्तारं निजात् नितम्बादाच्छिद्य त्वयि हरणरूपेण निदधे। अतः ते अयं नितम्बप्राग्भारः गुरुः विस्तीर्णस्सन् अशेषां वसुमतीं स्थगयति लघुत्वं नयति च। विस्तारेण स्थगनं गुरुत्वेन लाघवापादनमित्यर्थः। प्रपञ्चे वसुमत्यामेव गुरुत्वविस्तारौ एकत्र स्थितौ। तयोस्तिरस्करणमेकत्रस्थिताभ्यां गुरुत्वविस्ताराभ्यामेव विधेयमिति हिमाद्रिगतगुरुत्वविस्तारौ हिमाद्रेः भूधरत्वात् भूमिगतगुरुत्वविस्ताराभ्यामधिकाविति भावेन गृहीत्वा तत्तिरस्करणमिति क्षितिधरपतिः अशेषां वसुमतीमिति च पदं प्रयुञ्जानस्य भावः। अत्रातिशयोक्तिरलङ्कारः, हिमाद्रिगतगुरुत्वविस्तारयोः पार्वतीनितम्बगतगुरुत्वविस्तारयोर्भेदेऽप्यभेदेनाध्यवसानात्। सेयं भेदे अभेदनिबन्धनादतिशयोक्तिरलङ्कारः॥ ८१॥

सौभाग्यवर्धनी

नितम्बं वर्णयति – गुरुत्वमिति। हे पार्वति, क्षितिधरपतिः हिमवान्, गुरुत्वं विस्तारं च निजात् नितम्बादाच्छिद्य हरणरूपेण निदधे। दुहित्रे देयो दायो हरणं, दायिजमिति लौकिकभाषा। अतस्ते नितम्बप्राग्भारः गुरुर्विस्तीर्णः अशेषां वसुमतीं स्थगयति आच्छादयति। विस्तारेण गुरुत्वेन च वसुमतीशोभां तिरस्करोतीत्यर्थः। लघुत्वं च नयति च। तव नितम्बबिम्बशोभया सकलभूबिम्बोऽतिलघुर्जातः इत्यर्थः। भरणरूपेणेति क्वचित्पाठः। भरणमायुधादिदानम्। अयमर्थः – सकलदेवताशरीरसमुत्थिततेजोराशिरूपशरीरोपाधि महिषासुरवधायावलम्बमानायां त्वयि भरणरूपेण, 'शूलं शूलाद्विनिष्कृष्य ददौ तस्यै पिनाकधृक्' इत्यादिदेवतानामायुधादिभरणसमये, 'हिमवान्वाहनं सिंहं रत्नानि विविधानि च' दत्वा, स्वनितम्बात् गुरुत्वं विस्तारं च निष्कृष्य भरणरूपेण निदधे निक्षेपीकृतवान्। देवा यथा स्वस्वायुधादिभरणं कृतवन्तः, तथा हिमवानपि नितम्बभरगुरुत्वविस्तारभरणं कृतवानित्यर्थः। अतस्ते नितम्बप्राग्भारः आकृतिविशेषः अशेषां वसुमतीं स्थगयति, लोकत्रयं व्याप्य स्थितायाः आच्छादयावनमतीत्यर्थः। तदुक्तं मार्कण्डेये – 'स ददर्श ततो देवीं व्याप्य लोकत्रयं त्विषा।

पादाक्रान्त्या नतभुवं किरीटोल्लिखिताम्बराम्। क्षोभिताशेषपातालां धनुर्ज्यानिःस्वनेन ताम्। दिशो भुजसहस्रेण समन्ताद्व्याप्य संस्थिताम्॥' इति। लघुत्वं नयति च, अतिलघुर्जाता पादाक्रान्तावनता भूरिति भावः॥ ८१॥

अरुणामोदिनी

नितम्बं वर्णयति—गुरुत्वमिति। पर्वतस्यापत्यं स्त्री पार्वती। तस्याः संबुद्धिः हे पार्वति, पर्वतराजपुत्रि, महाराजसुततया हरणानयनयोग्यत्वं व्यंग्यम्। क्षितिधरपतिः पर्वताधीश्वरो हिमवान् समस्तराजन्याधिपतिः पार्थिवश्च। निजादात्मीयात्, 'निजमात्मीय-नित्ययोः' इति विश्वः। नितम्बात्कटकात्, राजधान्याश्चेति ध्वनिः। गुरोर्भावो गुरुत्वं, महत्त्वं संश्लिष्टत्वं च, विस्तारं वैपुल्यं च। 'विस्तारो विग्रहो व्यासः' इत्यमरः। आच्छिद्य, पुत्र्यां प्रेमातिशयात् अभेद्यमपि भित्वा, त्वयि हरणरूपेण विवाहकाले देयरूपेण। विवाहादौ देयं कन्यायै हरणमुच्यते। यथाहुः—'यौतकादिषु यद्देयं स्वदायो हरणं च तत्' इति। कालिदासोऽप्याह—'सत्वानुरूपं हरणीकृतश्रीः' इति। निदधे निहितवान् किम्? 'वारुणेन च जङ्घोरू नितम्बस्तेजसा भुवः' इति मार्कण्डेयोक्तेः भूतेजोनिर्मिते भवदीयनितम्बे स्वाभाविक-गौरवादिमति हिमवान् विवाहवेलायामत्युत्कटावात्मीयगुरुत्वविस्तारौ स्वनितम्बादाच्छिद्य निहितवान् किमित्यर्थः। भरणरूपेणेति पाठे भरणमायुधादिदानं तद्रूपेण समस्तदेवतेजोरूपायाः भवत्याः 'शूलं शूलाद्विनिष्कृष्य' इत्यादिना देवैः समस्तायुधप्रदानवेलायां, 'हिमवान् वाहनं सिंहं रत्नानि विविधानि च' इत्युक्तेः, सिंहवाहनमिव हिमवान् तुभ्यं स्वीयनितम्बवर्ति-गुरुत्वविस्तारावप्याच्छिद्याददत् किमित्यर्थः। लोके यथा कश्चित् प्रियपुत्रः सार्वभौमः पुत्रादिभ्यो वात्सल्यात् अवितार्यमपि वस्तु वितरति तद्वदित्यर्थः। अतः कारणादेव विस्तीर्णो विस्तारगुणयुक्तः, गुरुः गुरुत्वगुणयुक्तः, ते भवत्याः नितम्बप्राग्भारो नितम्बातिशयः, 'प्राग्भारश्चातिभारश्च भवेदतिशयार्थकः' इति विश्वः। अशेषां समस्तां वसुमतीं भुवं, वस्वादि-गुणपरिपूर्णतया गुरुत्वादिगुणाक्रान्तामपीत्यभिसन्धिः। स्थगयत्याच्छादयति, आवृणोतीत्यर्थः। लघुत्वं निस्सारतां नयति प्रापयति च। हिमाद्रेः भूधरपतित्वात्, तन्नितम्बस्य गुरुत्वादि-गुणावश्यंभावात्, तत्प्रदत्तगुरुत्वादिगुणेन भवन्नितम्बेन च वसुमतीस्थगनं लाघवनयनं च युक्तमेवेत्यर्थः। अत्र आगमप्रसिद्धवसुमतीव्यापभगवतीनितम्बवैपुल्यादेः हिमाद्रिप्रदत्तहरणत्वाध्य-वसायात् अतिशयोक्तिसङ्कीर्णेयमुत्प्रेक्षा। तथा च देव्याः सर्वतः परिपूर्णता प्रतीयते॥ ८१॥

आनन्दगिरीया

गुरुत्वमिति। हे अनघे पार्वति तव नितम्बप्राग्भारः अशेषां वसुमतीं स्थगयति

लघुत्वं च नयति। नितम्बप्राग्भारः विवक्षितगुणाडम्बरयुक्तो नितम्बः, अशेषां पृथ्वीमाच्छादयति, लघुत्वं च प्रापयति, इयं पृथिवी अस्याग्रे न किञ्चिदिति मतिमुत्पादयति। किंलक्षणो नितम्बः, अतः कारणाद्विस्तीर्णो गुरुश्च, विस्तीर्णो विशालत्वगुणवान् गुरुत्ववांश्च। अतः, कुतः, यतो हेतोः क्षितिधरपतिर्हिमाद्रिः विस्तारगुणं गुरुत्वं च स्वस्य नितम्बादाच्छिद्य आकृष्य निष्कास्य, त्वयि निदधे। गुणद्वयमपि स्वीयं त्वयि न्यस्तम्। न्यासे कारणमाह— हरणरूपेण विवाहसमये वधूवराभ्यां कन्यापितृभ्यां दीयमानं वस्तु हरणमित्युच्यते। तद्रूपेण दायत्वेनेत्यर्थः। 'यौतकादि तु यद्देयं स दायो हरणं च तत्' इत्यमरः। अतः कारणात् हे पार्वति, तव नितम्बः विशालत्वेन पृथिवीं स्थगयति। पृथ्वीतोऽपि विशालः, पृथ्वी यस्याग्रे लघुर्लोष्ट इवाभाति। तव नितम्बाग्रे भूमिरसारेव। मार्कण्डेयेऽपि 'नितम्बस्तेजसा भुवः' इति भूविस्तारस्तव नितम्ब एव स्थित इत्युक्तम्। क्वचित् त्वयि भरणरूपेण। भरणमायुधम्। तथा च महिषासुरादिवधार्थे सर्वैर्देवैः स्वायुधे तुभ्यं समर्प्यमाणे 'हिमवान् वाहनं सिंहं रत्नानि विविधानि चे'ति हिमवता पित्रा विविधरत्नमध्ये विशालत्वं गुरुत्वं च स्वनितम्बादादाय दत्तम् स्वनितम्बेऽपि वर्तते, तथापि नित्यसिद्ध इव वर्तत इत्यद्भुतमासाद्योत्संकासनेन साधुवादोक्तिः॥

## तात्पर्यदीपिनी

**गुरुत्वमिति**। हे पार्वति, अतः कारणात्ते नितम्बप्राग्भारः जघनभारः, अशेषां समग्रां वसुमतीं भूमिं स्थगयत्यावृणोति। च इत्यपरं, लघुत्वं लाघवाधारं नयत्यापादयति। किंविधः, विस्तीर्णो विशालः पुनर्गुरुः गौरवगुणशाली, एतेनेदृशगौरववैशाल्यशाली तव जघनभारः प्रसिद्ध एवेति सूचितम्। अतः कुतः, यत् क्षितिधरपतिः हिमवान् विवाहसमये निजात्स्वकीयात् नितम्बात् कटिप्रदेशात् गुरुत्वं निबिडावयवत्वं विस्तारं विशालभावमाच्छिद्य पृथक् त्वयि भवत्यां हरणरूपेण यौतकरूपेण निदधे निहितवान्। कन्यानां परिणये पित्रा भ्रातृभिर्बन्धुजनैर्वा यत्स्त्रीधनरूपं देयं तद्धरणमित्याचार्या वदन्ति। न केवलं तव नितम्बः पित्रा हरणीकृतगुणतया प्रसिद्धः। अपि तु सर्वदेवतेजःसम्भवां त्वां कथयता मार्कण्डेयमुनिना 'वारुणेन च जङ्घोरू नितम्बस्तेजसा भुवः' इति भूमिदेव्यास्तेजसा संपादितं तव जघनमिति प्रतिपादितम्। एतेनापि प्रकारेण त्वन्नितम्बेन भूमिरात्तसारा कृतेति निश्चितम्॥ ८१॥

## पदार्थचन्द्रिका

अथ नितम्बं वर्णयति— **गुरुत्वमिति**। गुरुत्वं गौरवं विस्तारं विशालतां, निजान्नितम्बात् स्वकीयात्तदाच्छिद्य गृहीत्वा जघनरूपेण निदधे स्थापितवान्। प्राक् चासौ भारश्च

प्राग्भारः । नितम्बः प्राग्भार इव नितम्बप्राग्भारः । स्थगयति आच्छादयति स्पष्टमन्यत् । एतेनात्युक्तिवचनेन अतिगुरुत्वविशालते नितम्बस्य सूचिते । जघननितम्बशब्दौ च पर्यायौ । 'जघनं स्यात्स्त्रियः श्रोणिपुरोभागे कटावपि ।' 'नितम्बं स्कन्धरोधसोः । स्त्रियाश्च पश्चाद्भागेऽद्रेः कटके कटिमात्रके' इति मेदिनीकरः । यद्वा जघनशब्देन कटिपुरोभाग एव गृह्यते । तथा च सति नितम्बस्य कटेः प्राग्भागः पुरोभाग इति व्याख्येयम् । न च जघनस्य गुरुत्ववर्णनं न क्वचिदपि दृष्टमिति वाच्यम् । काव्येषु बहुतरमुपलब्धेरिति ।' ८१ ॥

डिण्डिमभाष्यम्

हे पार्वति पर्वतराजपुत्रि ! क्षितिधरपतिः हिमवान् पर्वताधिपतिः कर्ता विवाहसमये निजात् नितम्बात् कटकप्रदेशात् आच्छिद्य बहिःकृत्य । किं तत् ? गुरुत्वं निबिडावयवत्वं विस्तारं विशालभावत्वं नितम्बात् पृथक्कृत्य त्वयि भवत्यां हरणरूपेण यौतकरूपेण 'विवाहादिषु यद्देयं स दायो हरणं च तत्' इत्यमरः । 'कन्यानां परिणये पित्रा वा भ्रातृभिश्च बन्धुभिः स्त्रीधनरूपं यद्देयं तन्निगदन्ति हरणमित्याचार्याः' इति रुद्रभट्टः । तथा च रघुवंशे कालिदास इन्दुमतीविवाहप्रसङ्गे–सत्त्वानुरूपं हरणीकृतश्रीः' इति । त्वयि हरणरूपेण निदधौ यौतकाकारेण निवेशितवान् प्रायेणेति उत्प्रेक्ष्यते । अत एव कारणान्नितम्बप्राग्भारः जघनभारः 'प्राग्भारश्चैव भारश्च तथार्थान्तः समार्थकः' इति विश्वप्रकाशः । विस्तीर्णः विशालगुणयुक्तः गुरुः गौरवगुणशाली सन् अशेषामपि वसुमतीं सर्वामपि भूमिमाच्छादयति आवृणोति, लघुत्वं नयति च लाघवाधारतामापादयति, अयमीदृशगौरवशाली तव जघनभारः प्रसिद्ध एवेति यावत् । न केवलं तव नितम्बं पित्रा हरणीकृतगुणतया प्रसिद्धम्, अपि तु देवीमाहात्म्ये सर्वदेवतेजःसंभवां त्वां कथयता भगवता मार्कण्डेयमहामुनिना 'वारुणेन च जङ्घोरू नितम्बस्तेजसा भुवः ।' इति भूमिदेव्यास्तेजसा संपादितं तव जघनमिति प्रतिपादितम् । तेनापि प्रकारेण त्वन्नितम्बेनात्तसारा भूमिः कृतेति उभयथा त्वन्नितम्बाद् भूमेर्लाघवं विशालताहानिश्च संपन्न इति द्वयमपि द्योतितम् ॥ ८१ ॥

गोपालसुन्दरी

गुरुत्वमिति । हे पार्वति, क्षितिधरपतिर्हिमालयः, निजात्स्वकीयात्, नितम्बात् कटकप्रदेशात्, गुरुत्वं विस्तारं चाच्छिद्य पृथक्कृत्य त्वयि भवत्यां हरणरूपेण विवाहसमये दायकरूपेण निदधे निवेशितवान् । विवाहादिषु यद्देयं स दायो हरणं च तत् इत्यमरः । अतो हेतोस्ते नितम्बप्राग्भारः जघनभारः । प्राग्भारश्चैव भारश्च तथार्थान्तः समार्थकः इति विश्व-

कोशात्। विस्तीर्णगुणगौरवशाली, अशेषां सर्वां वसुमतीं पृथ्वीं, स्थगयत्याच्छादयति, लघुत्वं लाघवाधारतां च नयति प्रापयतीत्यर्थः। विष्णुपक्षे—गुरुत्वं कीदृशम्? पर्वतस्येदं पार्वति। ङिप्रत्ययान्तं नपुंसकपदमेतत्। त्वयि गुरुत्वं निदधे। हे हरणरूपेण, हरणं मनोहारि रूपं यस्याः सा हरणरूपा लक्ष्मीः, तस्या इनः ईश्वरः। टतवर्गीयणकारनकारयोः श्लेषो भेदः। हरणरूप! इन! इति सम्बोधनद्वयं वा। ते तव वामनमूर्तिः। शेषं समानम् ॥८१॥

आनन्दलहरीटीका

गुरुत्वमिति। हे पार्वति, क्षितिधराणां पर्वतानां पतिर्हिमालयः, निजान्नितम्बात् कटकादाच्छिद्य गृहीत्वा गुरुत्वं गौरवं, विस्तारं विस्तीर्णतां त्वयि हरणरूपेण सुदायरूपेण निदधे दत्तवान्। विवाहादिषु यद्देयं सुदायो हरणं च तदित्यमरः। अतो हेतोस्ते तव विस्तीर्णो गुरुश्च नितम्बस्य जघनस्य प्राग्भारो भारः अशेषां वसुमतीं सर्वां पृथ्वीं स्थगयति संवृणोति स्वल्पं करोतीत्यर्थः। प्राग्भारश्चैव भारश्च तथार्थान्तः समार्थक इति विश्वरूपकोशः ॥ ८१ ॥

करीन्द्राणां [1]शुण्डान् कनककदलीकाण्डपटलीं
उभाभ्यामूरुभ्यामुभयमपि[2] निर्जित्य भवति[3]।
सुवृत्ताभ्यां पत्युः प्रणतिकठिनाभ्यां गिरिसुते
[4]विधिज्ञे जानुभ्यां [5]विबुधकरिकुम्भद्वयमसि[6] ॥ ८२ ॥

கரீந்த்ராணும் சுண்டாந் கநககதலீ காண்ட படலீம்
1 3 3 1 113 1 3 11
உபாப்யாமூருப்யாம் உபயமபி நிர்ஜித்ய பவதி।
4 4 4 4 1 1 4 1
ஸுவ்ருத்தாப்யாம் பத்யு: ப்ரணதி கடிநாப்யாம் கிரிஸுதே
11 4 11 1 1 12 4 3 1
விதிஜ்ஞே ஜாநுப்யாம் விபுதகரிகும்பத்வயமஸி ॥
4 4 341 1 43

करिवरशुण्डों को सोने के कदलीकाण्डों को अपने
ऊरुद्वय से जीत चुकी है एक साथ भगवती अपने
वृत्ताकार सुघड घुटनों से कठिन बने जो बारंबार
पति को करने से प्रणाम, सकल विधिज्ञे माँ सुषमासार
ऐरावतगज के भी कुम्भों का कर बैठी गर्व अपार ॥

1 शुण्डां, शुण्डाः, 2 उभयमसि 3 भवती 4 विजिग्ये 5 विविध 6 द्वयमपि

लक्ष्मीधरा

ऊरू जानुनी च सकृदेव वर्णयति – करीन्द्राणां गजेन्द्राणां, शुण्डान् करदण्डान्, शुण्डाशब्दस्य पुल्लिङ्गताप्यस्ति इति रक्षितमतम्। कनककदलीकाण्डपटलीं सुवर्णरम्भास्तम्भसंहतिं, उभाभ्यामूरुभ्यां उभयं करिकररम्भास्तम्भात्मकं अपि निर्जित्य विजित्य, भवति! एवं सुवृत्ताभ्यां शोभनाभ्यां वर्तुलाभ्यां, पत्युः परमेश्वरस्य, प्रणतिकठिनाभ्यां प्रणतिभिः कठिनाभ्यां प्रणतिदशायां जान्वोः भूमिस्पर्शादित्यर्थः। गिरिसुते! हिमाद्रितनये, विधिज्ञे! विधिं वेदार्थं जानातीति विधिज्ञा सर्वज्ञेत्यर्थः। यद्वा वेदार्थानुष्ठात्री। अत एव पत्युर्नमस्कारः प्रतिदिनं वैध इति कृतः न तु तस्याधिक्यानुरोधादिति नर्मवचनम्। तस्यास्सम्बुद्धिः। जानुभ्यां विबुधकरिकुम्भद्वयं दिग्दन्तिकुम्भस्थलद्वितयं, असि भवसि। अत्रेत्थं पदयोजना – हे विधिज्ञे! गिरिसुते! भवति! करीन्द्राणां शुण्डान् कनककदलीकाण्डपटलीं उभाभ्यामूरुभ्यां उभयमपि निर्जित्य सुवृत्ताभ्यां पत्युः प्रणतिकठिनाभ्यां जानुभ्यां विबुधकरिकुम्भद्वयमपि निर्जित्य असि वर्तसे स्फुरसीति यावत्। अत्र भवच्छब्दयोगेऽपि असीति मध्यमपुरुष एव भवति, तस्य सम्बोधनमात्रपरत्वात्। अत्रेदं तत्त्वम् – भवच्छब्दो द्विविधः संबोध्यपरः संबोधनमात्रपरश्चेति। संबोध्यपरत्वे भवच्छब्दस्य युष्मदर्थत्वाभावात् 'युष्मद्युपपदे' इत्यादिना प्राप्त्यभावात् शेषे प्रथम एव तद्योगे। यथा – सूते जगन्ति भवती भवती बिभर्ति जागर्ति तत्क्षयकृते भवती भवानि' (चर्चास्तवे) इत्यादि। यदा – संबोधनमात्रपरत्वं भवच्छब्दस्य तदा युष्मदर्थत्वात् मध्यमपुरुषः स्यादेव। यथा 'भवति भिक्षां देहि' इति। तत्र संबोधनमात्रपरत्वेऽपि ङीष्प्रत्ययः गौरादौ भवतेः प्रातिपदिकस्य पाठात् सिद्धः। अत एव रक्षित आह – 'भवतु प्रातिपदिकसामर्थ्यात् स्त्रीलिङ्ग एव भवच्छब्दस्य संबोधनमात्रपरत्वम्' इति। अयमाशयः – भवच्छब्दस्य सर्वनामसु 'भवतु' इति प्रातिपदिकग्रहणात् 'उगितश्च' इति ङीप् सिद्ध एवेति अत्र गौरादौ पठितस्य भवच्छब्दस्य वैयर्थ्यात् स्त्रीत्व एव संबोधनमात्रपरत्वमिति ज्ञापयतीति। नन्वेवं रक्षितेनैव 'युष्मदस्मदोः स्त्रीपुन्नपुंसकेषु तुल्यलिङ्गत्वं, संबोधनमात्रपरत्वात् युष्मदस्मदोः, एकद्विबहुत्वपरत्वं तु संबोध्यलक्षणया। न च लिङ्गलक्षणा, आकांक्षाभावात्' इत्युक्तम्। तद्वद्भवच्छब्दस्याप्यलिङ्गत्वं प्राप्नोतीति। मैवं, दत्तोत्तरत्वादित्यलमतिविस्तरेण। यत्तु 'त्वामस्मि वच्मि विदुषां' इति श्लोकव्याख्यानावसरे काव्यप्रकाशिकाटीकाकारेण भास्करेणोक्तं तदमूलमिति नोपन्यस्य दूषितम्। अत्रोपमालङ्कारः स्पष्ट एव। ८२॥

सौभाग्यवर्धनी

ऊरुजानुनी युगपदेव वर्णयति – करीन्द्राणामिति। हे गिरिसुते! करीन्द्राणां

शुण्डां कनककदलीकाण्डपटलीं च उभाभ्यां ऊरुभ्यामुभयमपि करीन्द्रशुण्डां कनककदलीकाण्ड-समूहं च निर्जित्य, पत्युः महादेवस्य, प्रणतिकठिनाभ्यां, प्रतिदिनं शिवपादार्चानन्तरं कृतप्रणामकठिनाभ्यां, भवति विबुधकरिकुम्भद्वयमपि विजिग्ये। शुण्डामित्येकवचनं एक-हेलया जिताः सर्वा इति द्योतनार्थम्। एकशुण्डेन सर्वाः शुण्डाः जिताः इति भावः। जात्येकवचनं वा ॥ ८२ ॥

अरुणामोदिनी

ऊरुजानुनी च युगपदेव वर्णयति—करीन्द्राणामिति। हे गिरिसुते। पर्वतराजपुत्रि! 'हिमवद्विन्ध्यमलया गजानां प्रभवा मताः' इति वचनात् गिरिप्रभूतकरिशुण्डा-विजयार्थोपयोगीदं संबोधनम्। भवती, त्वम्; उभाभ्यां द्वाभ्यामपि; ऊरुभ्यां सक्थिभ्यां, 'सक्थि क्लीबे पुमानूरुः' इत्यमरः। करीन्द्राणां गजश्रेष्ठानां शुण्डान् हस्तान् उपमानतया प्रसिद्धान्, तथा कनककदलीकाण्डानां सौवर्णरम्भातरुप्रकाण्डानां उपमानतया प्रसिद्धानां पटलीं समूहं चेति, उभयं द्वयमपि, एकदैव निर्जित्य विजित्य, तस्मादपि अतिसौन्दर्यादिति भावः। अत एवाह कालिदासः—'नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात्कदलीविशेषाः। लब्ध्वापि लोके परिणाहिरूपं जातास्तदूर्वोरुपमानबाह्याः ॥ इति। तथा पत्युः भर्तुः शिवस्य, प्रणतिकठिनाभ्यां प्रणत्या साष्टाङ्गं दण्डवत् पतनरूपेण प्रणामेन, पूजानन्तरजेनेति भावः। कठिनाभ्यां भूस्पर्शादतिमृदुलतरं कमठपृष्ठमिव समतासवर्ण्याभ्यां सुवृत्ताभ्यां शोभने च ते वृत्ते वर्तुले च सुवृत्ते ताभ्यां, मणिमयमुकुरसन्निभाभ्यामित्यर्थः। जानुभ्यां जङ्घोर्ध्वभागस्थ-पिण्डकाभ्यां, विबुधकरिकुम्भद्वयमपि विबुधकरिणः ऐरावतस्य, विद्वत्करिणश्चेति ध्वनिः। कुम्भद्वयं मस्तकद्वयमपि; विजिग्ये जितवती। करीन्द्रशुण्डसौवर्णकदलीस्तम्भैरावतकुम्भदम्भ-दमनी त्वदीयोरुजानुरमणीयतासंपत्तिरिति भावः। उक्तं च सहस्रनामसु—'कामेशज्ञात-सौभाग्यमार्दवोरुद्वयान्विता। माणिक्यमुकुटाकारजानुद्वयविराजिता।' इति। 'विपराभ्यां जेः' इत्यात्मनेपदं, लिटि रूपमेतत्। 'शेषे प्रथमः' इति प्रथमपुरुषः। अत्र व्यतिरेकालङ्कारेण तयोरत्यौत्कृष्ट्यध्वनिः ॥ ८२ ॥

आनन्दगिरीया

करीन्द्राणामिति। हे गिरिसुते, ... ... ... मूरुभ्यामुभयमपि निर्जित्य स्थिता सती अन्यदपि द्वयं विजिग्ये त्व ... ... ... भयजयसन्तोषो नास्तीति सर्वे रिपवो जेतव्या इति। असन्तुष्ट ... ... जेति वचनादिति भावः। उभयं किं? करीन्द्राणां शुण्डान्, शुण्डा न वा तदा जाताः कन .. ... कदलीति। द्वयं किं? विबुधकरिकुम्भयोर्द्वयं कुम्भद्वयम्। केनेकृतान्वा जितं तदा ... ... ... (मध्ये त्रुटितम्) ॥ ८२ ॥

### तात्पर्यदीपिनी

करीन्द्राभ्यामिति। गिरिसुते भवती उभाभ्यां ऊरुभ्यां करीन्द्राणां गजेन्द्राणां शुण्डाः हस्तान् कनककदलीकाण्डपटलीं कनकस्य सुवर्णस्य कदल्यो रम्भाः तासां काण्डानि स्तम्भाः, तेषां पटली समूहः, तां च एतदुभयमपि निर्जित्य असि स्फुरसीत्यर्थः। तथा हे विधिज्ञे विधिं विधेयार्थं जानाति सा तस्याः संबोधनं, हे सर्वज्ञे भवती त्वमुभाभ्यां सुवृत्ताभ्यां जानुभ्यां विबुधकरिकुम्भद्वयमपि निर्जित्य असि स्फुरसि। किंविधाभ्यां जानुभ्यां, पत्युर्महेशस्य प्रणतिकठिनाभ्यां प्रणत्या नमस्कारेण कठिने ताभ्यां, पञ्चाङ्गप्रणामवेलायां अन्योन्यं संश्लिष्टतया कठिनाभ्याम् ॥ ८२ ॥

### पदार्थचन्द्रिका

अधुनोरुद्वयं जानुद्वयं वर्णयति—करीन्द्राणामित्येकेन श्लोकेन। हे गिरिसुते भवती उभाभ्यां उभयं निर्जित्य जानुभ्यां विविधकरिकुम्भद्वयमपि विजिग्य इत्यन्वयः। विशिष्टो विधः प्रकारो यस्य यस्य तद्विविधं तच्च तत्करिकुम्भद्वयं चेति तथा। किं तदुभयमित्यपेक्षायामाह—करीन्द्राणां शुण्डा हस्तान्, कनककदलीनां काण्डानि स्तम्भास्तेषां पटलो समूहः। कौ च तौ कुम्भावित्यपेक्षायामाह—ऊरुभ्यामिति। सुष्ठु शोभनं यथा स्यात्तथा वृत्ते वर्तुले इति सुवृत्ते ताभ्यां, पत्युर्महादेवस्य प्रणत्या प्रणामेन कठिनाभ्यामीषत्कठोराभ्यामिति जानुविशेषणम् ॥ ८२ ॥

### डिण्डिमभाष्यम्

हे गिरिसुते धरणिधरतनये! करीन्द्राणां गजश्रेष्ठानां शुण्डान् कर्मभूतान् हस्तान्, किञ्च कनककदलीकाण्डपटलीञ्च सुवर्णरम्भास्तम्भसमूहञ्च उभाभ्यामूरुभ्यां सक्थिदण्डाभ्यां 'सक्थि क्लीबे पुमानूरुः' इत्यमरः। उभयमपि करिहस्तकदलीकाण्डद्वयमपि निर्जित्य सुवृत्ताभ्याम् शोभनवर्तुलाकारयुक्ताभ्यां पत्युः महादेवस्य प्रणतिसमये कठिनाभ्यां कठिनभूमिसम्पर्कात् सञ्जातकाठिन्यगुणाभ्यां प्रणामकठिनाभ्यां जानुभ्यां ऊरुजानुमध्यसपिण्डकाभ्यां विबुधकरिकुम्भद्वयमपि ऐरावतमस्तकयुगलमपि भवती कर्त्री विजिग्ये जितवती, 'विपराभ्यां जेः' इति विपूर्वस्य जयतेरात्मनेपदे लिटि रूपम्—विजिग्ये इति। कवयः खलु उत्तमस्त्रीणां जानुपिण्डकौ सुघटिततया वर्तुलाकारेण पञ्चाङ्गप्रणामवेलायामन्योन्यसंस्पृष्टतया करिकुम्भसमौ वर्णयन्ति। गुणतः कान्तितः आकारतो वा समुचितैर्वा व्यस्तैर्वा काव्येषु कामिन्यवयवानामुपमानेन सह उपमेयभावः प्रसिद्धः ॥ ८२ ॥

गोपालसुन्दरी

करीन्द्राणामिति । हे गिरिसुते, उभाभ्यामूरुभ्यां करीन्द्राणामैरावतादीनां, शुण्डाः हस्तान्, तथा कनककदली स्वर्णरम्भा, तस्याः काण्डपटलीं स्तम्भसमूहं, इत्युभयमपि निर्जित्य सुवृत्ताभ्यां शोभनप्रकारेण वर्तुलाभ्यां, पत्युर्महेशस्य प्रणतिभिः कठिनाभ्यां जानुभ्यां विबुधकरिकुम्भद्वयमपि ऐरावतमस्तकयुगलमपि भवती बिजिग्ये जितवतीत्यर्थः । विष्णुपक्षे-गिरिसुताया इः कामो वाञ्छितं, ई लक्ष्मीः संपत्तिर्वा यस्मात्, हे गिरिसुते! भवति त्वयि वर्तमाना ई लक्ष्मीः शोभा, उभयमपि उक्तं निर्जित्य विबुधकरिकुम्भद्वयमपि विजिग्य इत्यर्थः विबुधकरिणः पत्युरिन्द्रस्य प्रणत्यापि कठिनाभ्यां विबुधकरिकुम्भद्वयजयत्यागरहिताभ्यामित्यर्थः । शेषं समानम् ॥ ८२ ॥

आनन्दलहरीटीका

करीन्द्राणामिति । गिरिसुते, भवती उभाभ्यामूरुभ्यां करीन्द्राणां ऐरावतादीनां शुण्डाः हस्तान्, कनककदलीनां स्वर्णरम्भाणां काण्डपटलीं स्तम्भसमूहं इत्युभयमपि निर्जित्य निःशेषेण जित्वा, जानुभ्यामूरुजङ्घयोः सन्धिभ्यां, विबुधकरिण ऐरावतस्य कुम्भद्वयमपि विजिग्ये जितवती । कीदृशाभ्यां सुवृत्ताभ्यां शोभनप्रकारेण वर्तुलाभ्यां पत्युः शिवस्य प्रणत्या प्रणामेन भूमिनिपातेन कठिनाभ्यां कठोराभ्याम् । केषुचित्पुस्तकेषु विजिग्य इत्यत्र विधिज्ञे इति, उभयमपीत्यत्रोभयमसीति पाठः । तत्रायमर्थः—हे विधिज्ञे शास्त्रज्ञे प्रणतिः प्रणामः कार्यः इत्यादिशास्त्रार्थविधानविज्ञे वादे भवति । अत्राप्येतन्मते हस्वपाठः । ऊरुभ्यां पूर्वोक्तमुभयं निर्जित्य जानुभ्यां विबुधकरिकुम्भद्वयमपि निर्जित्य त्वमसीति । केचिद्दाक्षिणात्यटीकाकारा इममेव प्रकृतपाठं मन्यन्ते । काण्डं नाळे तरुस्कन्धे बाणेऽवसरनीरयोः । कुत्सिते रहसि स्तम्बे काण्डवर्गमुदाहृतमिति, तथा शुण्डापि जलहस्तिन्यां मदिराकरिहस्तयोरिति च विश्वप्रकाशः ॥ ८२ ॥

[1]पराजेतुं रुद्रं द्विगुणशरगर्भौ गिरिसुते
　निषङ्गौ जङ्घे ते विषमविशिखो बाढमकृत ।
यदग्रे [2]दृश्यन्ते [3]दशशरफलाः पादयुगली-
　नखाग्रच्छद्मानः सुर[4]मकुट[5]शाणैकनिशिताः ॥ ८३ ॥

---

1 पुरां जेतुं　2 लक्ष्यन्ते　3 शितशरफलाः　4 मुकुट　5 शाणौघ

பராஜேதும் ருத்ரம் த்விகுண சரகர்பௌ கிரிஸுதே
1 1 3 3 3 3 4 3 1
நிஷங்கௌ ஜங்கே தே விஷமவிசிகோ பாடமக்ருத ।
3 4 1 2 3 4 1 1
யதக்ரே த்ருச்யந்தே தசசரபலா: பாதயுகளீ-
3 3 3 1 3 2 1 3 3
நகாக்ரச்சத்மாந: ஸுரமகுட சாணைகநிசிதா: ॥
2 3 2 3 1 1 1 1

सुमशरने रुद्र को हराने निश्चय ही माँ! बना लिये
तेरी जांघों के तरकस पाँच सुन्दर बाण लिये।
जिन के ऊपर पदयुग के नख दस शराग्र से लगते हैं
सुरकिरीट घर्षण से चढे सान पर ज्यों खर लगते हैं ॥

लक्ष्मीधरा

पराजेतुं तिरस्कर्तुं, रुद्रं हरं, द्विगुणशरगर्भौ द्विगुणीकृताः शराः पञ्चबाणाः गर्भे ययोस्तौ। गिरिसुते! पार्वति! निषङ्गौ तूणीरौ, जङ्घे जङ्घाकाण्डौ, ते तव, विषमविशिखः पञ्चबाणः, बाढं ध्रुवं, अकृत कृतवान्। यदग्रे ययोः निषङ्गयोरग्रे, दृश्यन्ते। दशशरफलाः दशानां शराणां द्विगुणितानां पञ्चानामित्यर्थः तेषां फलाः अयोमुखानि, पादयुगलीनखाग्रच्छद्मानः पादयोः प्रपदयोः युगली द्वितयं तस्याः नखाग्राणां दशानां छद्म व्याजो येषां ते, सुरमकुटशाणैकनिशिताः सुराणां इन्द्रादीनां मकुटेष्वेव शाणेषु एकनिशिताः मुख्यतया उत्तेजिताः। अत्रेत्थं पदयोजना—हे गिरिसुते! विषमविशिखः रुद्रं पराजेतुं द्विगुणशरगर्भौ निषङ्गौ ते जङ्घे अकृत बाढम्। यदग्रे पादयुगलीनखाग्रच्छद्मानः सुरमकुटशाणैकनिशिताः दशशरफला दृश्यन्ते। अत्र उत्प्रेक्षालङ्कारः, जङ्घयोः तूणीरतया सम्भावनात्। अपह्नवालङ्कारश्च, नखाग्राणां फलत्वेनापह्नवात्। अनयोस्संसृष्टिः, अपृथक्स्थित्या प्रयोज्यप्रयोजकभावावगतेः। विषमविशिखो बाढमकृतेत्यत्र अतिशयोक्तिरलङ्कारः, साधारणब्रह्मसृष्टिव्यतिरिक्तत्वेन प्रतीतेः। एतच्च पूर्वमेव स्पष्टीकृतं 'कुचौ सद्यस्स्विद्यत्' इति श्लोकव्याख्यानावसरे। अलङ्कारेण अलङ्कारध्वनिरपि, द्विगुणशरगर्भौ दशशरफला इति पदद्वयेन पादाङ्गुलीनां शराणां च अभेदाध्यवसायप्रतीतेरित्यलम्॥ ८३॥

सौभाग्यवर्धनी

जङ्घे वर्णयति पुरेति जेतुमिति। हे गिरिसुते! रुद्रं पुरा जेतुं जङ्घे निषङ्गौ द्विगुणशरगर्भौ अन्तर्गूढदशशरगर्भौ बाढं विषमविशिखः कामः अकृत। यत् यतः अग्रे

निषङ्गीभूतजङ्घयोरग्रे दशशरफलाः अग्रभागाः शल्यानि लक्ष्यन्ते। नखाग्रच्छद्मानः नखाग्रच्छलाः सुरमुकुटशाणैकनिशिताः चरणानतसुरमुकुटान्येव शाणाः तैर्निशिताः संमार्जिताः। पूर्वं पञ्चशरः, अधुना तव जङ्घे निषङ्गौ दशशरगर्भौ कृत्वा रुद्रं जेष्यामीति दशशरः सन्निति किमाश्चर्यमिति भावः। अत्र एते नखाः न भवन्ति किंतु द्विगुणीकृतशरशल्यानीति प्रकृतनिषेधादपह्नुतिः॥ ८३॥

अरुणामोदिनी

जङ्घे वर्णयति – पराजेतुमिति। हे गिरिसुते! विषमा विशिखा बाणा यस्य सः विषमविशिखः पञ्चबाणः, अविधेयकुण्ठितपरिमितास्त्रत्वाद् दुर्बल इत्यभिसन्धिः। मदनः रुद्रं त्रिपुरान्तकं पराजेतुं पराङ्मुखीकर्तुं विजेतुमित्यर्थः। पुरा जेतुमिति पाठे पुरा पूर्वं मदनो रुद्रं जेतुं स्वदर्पहारिणं तमभिभवितुं, वैरनिर्यातनस्य वीराणामवश्यविधेयत्वादिति भावः। अत्र असह्यार्थत्वाभावात्, 'पराजेरसोढः' इति न पञ्चमी। ते भवत्याः जङ्घे प्रसूते कर्मणी 'जङ्घा तु प्रसृता' इत्यमरः। द्विगुणाः द्विरावृत्ताः शराः पञ्चबाणाः गर्भे ययोस्तौ द्विगुणशरगर्भौ। अतिक्रोधान्धत्रिपुरान्तकपराजये परिमितानां विषमसंख्यापन्नानां विगतशिखानां च शराणामपर्याप्तत्वात् तानेव द्विरावृत्त्या समसंख्यतां, शृणाति हिनस्तीति व्युत्पत्तेः शर इत्यन्वर्थनामतां चापन्नां विधाय धृता ये शराः तद्गर्भावित्यर्थः। निषङ्गौ इषुधी 'तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः' इत्यमरः। अकृत कृतवान्। बाढं एतदेव सत्यमित्युत्प्रेक्षा। शरान् पञ्चसंख्याकान् द्विगुणीकृत्य भवदीयजङ्घे एव निषङ्गौ विधाय, तत्र प्रत्येकं शरपञ्चकं निहितवान् मदनः। तदन्येषुधेः रुद्रविजयसाधनतानर्हत्वादिति भावः। उक्तं च सहस्रनामसु 'इन्द्रगोपपरिक्षिप्तस्मरतूणाभजङ्घिका' इति। कुत इत्येवमुत्प्रेक्ष्यत इत्यत्राह – यदग्र इति। ययोः जङ्घयोः अग्रे मुखे, सुराणां पादाग्रे प्रणमतां देवानां मकुटानि किरीटान्येव शाणाः निकषाः, 'शाणस्तु निकषः कषः' इत्यमरः। तेष्वेकेषु निशिताः उत्तेजिताः तीक्ष्णीकृता इत्यर्थः। पादयोः युगली युगलम् तत्रस्थानि यानि नखाग्राणि नखराञ्चलानि तानीति छद्म च्छलं येषां ते पादयुग्मावस्थितनखाग्रमिषा इत्यर्थः। दश दशसंख्याकाः, शरफलाः बाणाग्राणि; 'फलं प्रयोजने क्लीबं तरूणां प्रसवेऽपि च। शराग्रे तु फलः पुंसि कृते लोहशलाकया' इति विश्वः। दृश्यन्ते प्रेक्ष्यन्ते। यतः पादयुगलसंस्थितनखाग्रव्याजापन्ना निशिताः शरफलाः अग्रभागे दृश्यन्ते, अतः त्वदीयजङ्घे मदनेन स्वीयशरान् द्विगुणीकृत्य पूरितौ निषङ्गावेवेति प्रतिभातीत्यर्थः। अत्र द्वितीयार्धसंस्थितायाः सापह्नवोत्प्रेक्षायाः निषङ्गकरणोत्प्रेक्षाहेतुत्वादुभयोः सङ्करः। तथा च देवीप्रसृतयोः मदनेषुध्योरिवातिरम्यत्वं द्योतते॥ ८३॥

*तात्पर्यदीपिनी

पुरा जेतुमिति। हे गिरिसुते हिमगिरिवंशदीपिके विषमविशिखः, विषमा विशिखा यस्य स स्मरः पुरा पूर्वस्मिन्काले रुद्रं जेतुं पराभवितुं ते जङ्घे निषङ्गौ तूणीरौ गाढं यथा-स्यात्तथा अकृत कृतवान्। किंविधौ निषङ्गौ- द्विगुणशरगर्भौ द्विगुणशरा गर्भे ययोस्तौ तथोक्तौ पञ्चशरत्वादुभाभ्यां दशशरतेत्यर्थः। तत्र हेतुः, यदग्रे दशशरफला दृश्यन्ते। ययोर्जङ्घयोरग्रे दशायोमुखानि दृश्यन्ते। तेषां लिङ्गमाह—किंविधा दशशरफलाः पादयुगली-नखाग्रच्छद्मानः पादयोर्युगली द्वयं तस्या नखाग्राणि तेषां छद्म व्याजो येषां ते तथोक्ताः, पुनः सुरमुकुटशाणौघनिशिताः सुराणां देवानां मुकुटाः त एव शाणाः कषणोपलाः, तेषामोघाः तेषु निशिता उत्तेजिताः। नमस्कारसमये महेन्द्रादिमुकुटकोटीषु कषणात् तीक्ष्णीभूताः॥ ८३॥

पदार्थचन्द्रिका

अथोत्प्रेक्षमाणो जङ्घे वर्णयति—पराजेतुमिति। हे गिरिसुते तव जङ्घे विषम-विशिखो रुद्रं पराजेतुं निषङ्गावकृतेति बाढमहं शङ्के इत्यर्थः। स्वबाणापेक्षया द्विगुणाः शराः गर्भे ययोस्तौ। जङ्घयोर्निषङ्गत्वे ज्ञापकमाह—यदग्रे ययोरग्रे पादयुगलीनखाग्राणि छद्मानि येषां ते दशसंख्याकाः शरफला दृश्यन्ते। अत्र शराग्रलोहादिवाचकः फलशब्दः। स च पुल्लिङ्गः। सुरमुकुटानि शाणानि च यानि तेषामोघेन निशितास्तीक्ष्णाः॥ ८३॥

डिण्डिमभाष्यम्

पुरा जेतुमिति। हे गिरिसुते! पुरा पूर्वं, रुद्रं शिवं जेतुं विषमविशिखः कामः, ते तव जङ्घे, द्विगुणशरगर्भौ स्वयं पञ्चबाणत्वात्, एतावद्भिः शरैरजेयोऽयमिति द्विगुणानेव निजपञ्चशरान् विधाय, तद्गर्भौ निषङ्गौ तूणीरौ बाढं निश्चयेन अकृत कृतवान्। यदग्रे ययोः अनङ्गनिषङ्गतामापन्नयोः जङ्घयोरग्रे पादयुगलीनखाग्रा एव छद्म व्याजो येषां ते पादयुगलीनखाग्र-च्छद्मानः। येऽग्रभागा दृश्यन्ते कीदृशाः? शितशरफलाः शितानां तीक्ष्णानां शराणां बाणानां फलाः अग्रभागाः 'फलं प्रयोजने क्लीबं तरूणां प्रसवेऽपि च। शराग्रे तु फलः पुंसि कृते लोहशलाकया' इति विश्वः। कथं तेषां शितत्वं जातम्? सुरमुकुटशाणैकनिशिताः, नमस्कार-समये महेन्द्रादिमुकुटकोटिषु शाणात् घर्षणात् तीक्ष्णीभूताः। शरादीनां शाणघर्षणं प्रसिद्धम्। तेनैकैकं निशिताः मुख्यतया तीक्ष्णीभूताः यतो दश शराः दृश्यन्ते, ततो निषङ्गसाधर्म्यं तव

* अस्य श्लोकस्य आनन्दगिरीया व्याख्या मातृकायां नोपलभ्यते।

जङ्घयोरित्यर्थः। पादयुगलीनखाग्रच्छद्मान इत्यनेन नखा इति व्याजमात्रं, शरा एव निःसरन्ति, त्वच्चरणबलादेव त्रिभुवनविजयी तावदनङ्गः प्रसिद्धः॥ ८३॥

गोपालसुन्दरी

पुरा जेतुमिति। हे गिरिसुते, पुरा पूर्वं रुद्रं शिवं जेतुं विषमविशिखः कामः, ते तव जंघे द्विगुणशरगर्भौ, स्वयं पञ्चबाणत्वात् एतावद्भिः शरैरजेयोऽयमिति द्विगुणानेव निजपञ्चशरान् विधाय, तद्गर्भौ निषङ्गौ तूणीरौ बाढं निश्चयेन अकृत कृतवान्। यदग्रे ययोः अनङ्गनिषङ्गतामापन्नयोः जङ्घयोरग्रे पादयुगलीनखाग्रच्छद्मानः दशशरफलाः दशसंख्याकबाणाग्रभागाः दृश्यन्ते। कीदृशाः सुरमकुटशाणैकनिशिताः, नमस्कारसमये महेन्द्रादिमुकुटकोटिषु शाणात् घर्षणात् एकनिशिता मुख्यतया तीक्ष्णा इत्यर्थः। विष्णुपक्षे—गिरिसुताया इः कामः, ई लक्ष्मीर्वा, यस्मादिति संबोधनपदार्थः। शेषं समानम्॥ ८३॥

आनन्दलहरीटीका

पराजेतुमिति। हे गिरिसुते विषमविशिखः कामः ते तव जङ्घे निषङ्गौ इषुधी अकृत कृतवान्। कीदृशौ द्विगुणाः शरा गर्भे ययोस्तौ। किमर्थं रुद्रं पराजेतुं अभिभवितुम्। पुरेति पाठे पूर्वं अकृतेत्यन्वयः। पञ्चशरैः पराजेतुमशक्यत्वात् द्विगुणान् दशसंख्याकान् कृत्वा तव जङ्घयोः स्थापितवानित्यर्थः। बाढं प्रतिज्ञायाम्। यदग्रे ययोः निषङ्गयोः अग्रे पादयुगल्या नखा एव अग्रास्तेषां छद्म व्याजो येषां ते तथाविधा दश शरफला बाणाग्रभागा दशाङ्गुलीरूपा दृश्यन्ते। कीदृशाः सुराणां मुकुटरूपो यः शाणौघः तीक्ष्णीकरणपाषाणसमूहस्तेन निशिता घर्षणात्तीक्ष्णतां प्रापिताः। शाणौघेत्यत्र शाणैकेति पाठे एकं मुख्यं यथा स्यात्तथा निशिता इत्यर्थः। फलं प्रयोजने क्लीबे तरूणां प्रसवेऽपि च। शराग्रे तु फलः पुंसि कृते लोहशलाकया इति विश्वरूपकोशः। भृशप्रतिज्ञयोर्बाढमिति, निषङ्गा इषुधिर्द्वयोरिति चामरः॥ ८३॥

श्रुतीनां मूर्धानो दधति तव यौ शेखरतया
ममाप्येतौ मातः शिरसि दयया धेहि चरणौ।
ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी
ययोर्लाक्षालक्ष्मी[1]ररुणहरिचूडामणिरुचिः॥ ८४॥

---

1 ररुणतरचूडा, ररुणहरचूडा।

ச்ருதீநாம் மூர்தாநோ தததி தவ யௌ சேகரதயா
1 4 3 4 1 1 2 1
மமாப்யேதௌ மாத: சிரஸி தயயா தேஹி சரணௌ।
1 1 1 3 4 1
யயோ: பாத்யம் பாத: பசுபதி ஜடாஜூட தடிநீ
1 1 1 2 1 1 1 1 1 1
யயோர் லாக்ஷாலக்ஷ்மீ ரருண ஹரிசூடாமணி ருசி:॥
1 3 1

जिन का पाद्य हरजटाजूट स्थित सुरतटिनी बन बैठी
जिन का लाक्षारस हरि की चूडामणि की छवि बन बैठा
उपनिषदें धरतीं जिन को शीर्षों पर अपने तव पावन
उन चरणों को रख माँ! मम सिर पर भी कृपया मन भावन ॥

### लक्ष्मीधरा

श्रुतीनां निगमानां, मूर्धानः शिरांसि वेदान्ता इत्यर्थः। दधति धारयन्ति प्रतिपादयन्तीत्यर्थः। तव भवत्याः, यौ चरणौ पादौ, शेखरतया उत्तंसतया। यद्वा—श्रुतीनां श्रुतिवधूनां मूर्धानः श्रुतयः भगवतीपादाब्जं उत्तंसयन्ति। यथोक्तम्—श्रुतिवाक्यं शक्तिं प्रति वसिष्ठेन—'नमो देव्यै महालक्ष्म्यै श्रियै सिद्ध्यै नमो नमः। ब्रह्मविष्णुमहेशानवेदकैः पूजिताङ्घ्रये॥' वेदकैरित्यत्र वेदानां कैःशिरोभिरिति। 'नमस्त्रिपुरसुन्दर्यै शिवायै विश्वमूर्तये।' इत्यादि। 'एवं स्तुता महादेवी श्रुतिभिः प्रीतमानसा। प्राह ताः प्रति तादृग्भिः वचोभिरमरेश्वरी॥' इत्यादि वसिष्ठसंहितायाम्। ममापि एतौ चरणौ, मातः! जननि! शिरसि मूर्धनि, दयया कृपया कृपाविष्टचित्तेनेत्यर्थः। धेहि निधेहि। चरणौ पादौ, ययोः चरणयोः संबन्धि, पाद्यं पाथः पादनिर्णेजनजलम्। यद्यपि पाद्यमित्युक्ते पादसंबन्धः प्रतीयते, तथापि पाद्यमित्युक्ते पादप्रक्षालनार्हं पाद्यमित्यर्हतामात्रप्रतीतौ विशेषाकारेण ययोरित्यस्यान्वय इति न पौनरुक्त्यम्। पशुपतिजटाजूटतटिनी पशुपतेः शिवस्य जटाजूटे कपर्दे तटिनी गङ्गा। ययोः चरणयोः, लाक्षालक्ष्मीः लाक्षारसकान्तिः, अरुणहरिचूडामणिरुचिः अरुणश्चासौ हरिचूडामणिश्च कौस्तुभः तस्य रुचिः रक्तिमा। अयमर्थः—प्रणयकोपशान्तये प्रणतस्य पशुपतेः जटाजूटवर्तिनी गङ्गा पादाग्रवर्तिनी आसीदिति गङ्गायाः पाद्यजलत्वं कथितम्। प्रतिदिनं सायम्प्रातः सेवार्थं नमस्कुर्वाणस्य विष्णोः मकुटघटितकौस्तुभमणेः श्वेतवर्णस्य लाक्षारसप्रसादजन्योऽरुणिमेति ध्येयम्। अत्रेत्थं पदयोजना—हे जननि! तव यौ चरणौ श्रुतीनां मूर्धानः शेखरतया दधति, हे मातः! एतौ चरणौ ममापि शिरसि दयया धेहि। ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी ययोः लाक्षालक्ष्मीः अरुणहरिचूडामणिरुचिः। एतदुक्तं भवति—भगवत्याः पादाम्बुजद्वितयस्य वेदमूर्धनि सदाशिव-

मूर्धनि विष्णुमूर्धनि च सञ्चार इति मूर्धसञ्चारस्वाभाव्यमस्ति । अतो मम मूर्धन्यपि सञ्चरतु पादाम्बुजमिति प्रार्थनासामञ्जस्यमिति कवेरभिप्रायः । यद्वा—प्रपञ्चजनयित्र्याः सादाख्यायाः प्रपञ्चान्तःपातिनः हरिविरिञ्चिपशुपतिवेदान्ताः पादाम्बुजं शिरसि धारयन्ति तन्निर्णेजनजलेन पवित्रितगात्राः तत्महिम्ना तत्तदधिकारान् भजन्त इति युज्यत एवेति । अत्र रूपकालङ्कारः स्पष्टः ॥ ८४ ॥

सौभाग्यवर्धनी

श्रीदेवीचरणकमलयोः सर्ववेदान्तप्रतिपाद्यत्वमुखेन स्वशिरोनिधापनमाशास्ते-श्रुतीनामिति। हे मातः! श्रुतीनां मूर्धानः उपनिषदः, यौ तव चरणौ शेखरतया दधति मूर्धन्यतया बिभ्रति, तावेतौ ममापि शिरसि धेहि । ययोः पाद्यं पाथः पाद्यजलं पशुपतिजटाजूटतटिनी गङ्गा, ययोः लाक्षालक्ष्मीः अलक्तकरागः अरुणहरिचूडामणिरुचिः विष्णोः शिरोभूषणमणिकान्तिः। मानापनोदने शिवशिरोधार्यं गङ्गाजलं ययोः पाद्यजलायते, प्रणमतश्च हरेर्मुकुटे विजृम्भमाणा दिव्यरत्नरुचिरलक्तकरागायते, तौ मम मौलौ निधाय कृतार्थीकुरु मां इत्यर्थः । गङ्गाजलचूडामणिरुच्योः पाद्यत्वलाक्षालक्ष्मीत्वारोपात् आरोपकविशेषः ॥ ८४ ॥

अरुणामोदिनी

अथेदानीं देवीचरणयोः अखिलवेदान्तप्रतिपाद्यतावर्णनापूर्वकं स्वशिरोनिधापनमाशास्ते—श्रुतीनामिति । हे मातः! पुत्रजनवत्सले! देवि! श्रुतीनां मूर्धानः वेदान्ताः जगत्कारणभूतदेवताप्रतिपादका इत्यर्थः। तव भवत्याः संबन्धिनौ यौ पादौ चरणौ शेखरतया शिरोभूषणतया दधति स्थापयन्ति । मूर्ध्नां शिरोभूषणेन प्रकाशातिशयसद्भावात् श्रुत्याख्यस्त्रीणामपि मूर्धसु शिरोभूषणाभिलाषात् अतिसुन्दरभवत्पादावेव भूषणं स्थापयन्तीत्यर्थः । समस्तवेदान्तप्रतिपाद्याविमौ भवत्पादाविति भावः। 'लोकस्य द्वारमर्चिमत् पवित्रम्' इत्यादिश्रुतेरित्याशयः। सकलवेदान्तप्रतिपाद्यावेतौ इमावपि चरणौ पादौ दयया दीनानुकम्पया अनुग्राह्योऽयमिति निधेहीत्यर्थः । ममात्मनोऽपि श्रुतीनामिवेत्यर्थः । यद्वा—शिवादिवदनुग्राह्यस्य वेत्यर्थः । शिरसि शीर्षे, नपुंसकतया दौर्बल्येन श्रुतिमूर्धापेक्षया प्रधाने इत्यर्थः । धेहि निधेहि स्थापयेत्यर्थः। भवत्याश्च 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् । अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्त वा उ' इति श्रुतेः भक्तवात्सल्यात्, तव अतिमहत्त्वसंपादिकात्वादस्य भक्तस्य श्रुतिवन्निष्कलङ्कतया अनुग्राह्यत्वात्, भवत्पादातिरिक्तातिपवित्रवस्त्वन्तरालाभात्, तौ शिरसि निधाय तेनैवायमनुग्राह्यः इत्यभिसन्धिः। ननु पतितपवित्रीकरणचतुराणां मन्दाकिनीपयःप्रभृतीनां विद्यमानत्वात्, अभीष्टदानचतुराणां देवतान्तराणां

वेदप्रतिपाद्यानां चोपलम्भात्, कुत एतदेव प्रार्थ्यते इत्याशङ्क्य भवच्चरणादन्यत्पावयितमीष्टदात् वा कृत्स्नवेदान्तप्रतिपाद्यं न लभ्यत इत्याशयेनाह — ययोरिति। पशुपतिजटाजूटतटिनी सकललोकपावयित्री शिवजटास्थितमन्दाकिनी ययोश्चरणयोः पाद्यं पादाय हितं, 'पादार्घाभ्यां च' इति यत्प्रत्ययः। 'पाद्यं पादार्थवारिणि' इत्यमरः। पाथः जलं, मन्दाकिनीजलं भवत्पाद्यजलमेव इत्यभिप्रायः। अत्र प्रणयकुपितायाः भगवत्याः प्रसादनार्थं प्रणतस्य परमेशितुः जटाजूटवर्तिन्या गङ्गायाः तत्पादारविन्दावस्थानात् तस्याः पाद्यत्वं भगवतीचरणयोः प्राशस्त्यं चोक्तं इत्यवगन्तव्यम्। न चैवं चेत् 'पत्युः प्रणतिकठिनाभ्यां' इति शिवस्य भगवतीकृतप्रणामसंप्रदानताकथनविरोधः। 'समप्रधानौ समसत्त्वौ समौजसावुभा दाताराविह सौभगानाम्' इति श्रुत्या उभयोः समप्राधान्योक्तेरिति। एवञ्च प्राङ्निरूपितमेवास्माभिः इत्युपरम्यते। तथा ययोः चरणयोः अरुणस्य पद्मरागनद्धतया अरुणवर्णस्य हरिचूडामणेः विष्णुशिरोमुकुटस्य रुचिः अरुणशोभा, लाक्षालक्ष्मीः अलक्तकसंपत्तिः लाक्षारसारुणिमेति केचित्। एवं अलौकिकक्षालनलाक्षावन्तौ शिवविष्णुभ्यां नित्यप्रणतौ सकलवेदान्तप्रतिपाद्यौ चरणौ मन्मस्तके स्थापय। तावन्मात्रेण वा अहं कृतार्थो भवानीति तात्पर्यार्थः। एतेन च सर्वदेवतानमःशेषित्वं भगवतीचरणयोरेवेति सिद्धम्। 'सर्वदेवनमस्कारः केशवं प्रतिगच्छति' इति स्मृतेश्च भगवत्या नमःशेषित्वप्रतिपादकबहुश्रुत्युपलम्भात् विरोधाधिकरणन्यायेन अप्रमाणता वर्णनीया। अत्र रूपकालङ्कारेण देवीचरणयोः सर्वोत्कर्षताध्वनिः॥ ८४॥

आनन्दगिरीया

श्रुतीनां मूर्धान इति। ... ... ... जूटोत्था तटिनी नदी गङ्गा सा ययोः पादोदकं पादक्षालनोदकं; मानापनोदनसमये चरणलग्नमुकुटतया प्रणमति, महादेवमुकुटस्थितया गङ्गया पादप्रक्षालनादित्यर्थः। एवमेव प्रणमतो हरेः श्रीकृष्णस्य मुकुटे यः चूडामणिः, तस्य या रक्ततरा कान्तिः सापि प्रणामावसरे चरणलग्नेति सैव ययोः लाक्षालक्ष्मीः लाक्षावदारक्ततया अरुणा अवभासते। एतावता श्रीकृष्णमहादेवयोरपि निजमुकुटघृष्यमाणं नखं यथा स्यात्तथा यौ चरणारविन्दौ अहर्निशं प्रणमतः, तौ चरणौ मम शिरसि निधेहि। अहमपि कृतार्थो यथा भवामीति प्रार्थ्य, नानादुःखनिवेदनम्। गङ्गायां रत्नप्रभायां च पाद्योदकत्वारोपात् लक्ष्मीत्वारोपाच्च रूपकम्। तव चरणयोः अयमेव स्वभावो यत् सर्वेषां मूर्धन्यतेति स्वभावोक्तिरपि। तव चरणपार्षदस्य शिरोलग्नं सवेदविष्णुमहेशानामल्पतारूपो भवतीत्यपि॥ ८४॥

तात्पर्यदीपिनी

श्रुतीनामिति। हे मातः, त्वमेतौ चरणौ ममापि शिरसि दयया कृपया धेहि निवेशय, मम शीर्षिण पादारोपणं कुरु, यतो दुर्लभमित्याह — एतौ कौ, श्रुतीनां वेदानां

मूर्धान उपनिषल्लक्षणाः अग्रभागाः यौ तव चरणौ शिरःशेखरतया उत्तंसरूपेण दधति वहन्ति। सर्वासामुपनिषदां तात्पर्यार्थः खलु भगवतीचरणारविन्दस्तुतिरेव। अतो मम शिरसि धेहीति प्रार्थना। पुनः, ययोश्चरणयोः पशुपतिजटाजूटतटिनी पशुपतेर्जटाजूटे तटिनी गङ्गा पाद्यं पाथः पादार्घ्यजलं, ययोर्लाक्षालक्ष्मीः यावकशोभा अरुणहरचूडामणिरुचिः, अरुण आरक्तो यो हरचूडामणिः बालशशाङ्कः तस्य रुचिरिव रुचिः यस्याः सा तथोक्ता। अयमभिसन्धिः, ययोः पाद्यं जलं प्रणयेनोपशान्तये प्रणतस्य पशुपतेर्जटाजूटतटिनी गङ्गा पादाग्रवर्तिनी सती पाद्यजलत्वमापन्ना लाक्षा च हरेण चन्द्रेखारञ्जनार्थं ध्रियते। एवं श्रुतिभिरप्ययं दुर्लभो-ऽभ्यर्थ्यते मया, तत्त्वया संपादनीयम्॥ ८४॥

### पदार्थचन्द्रिका

अथ चरणौ वर्णयति—श्रुतीनामिति। हे मातः, श्रुतीनां मूर्धान उपनिषदः शेखरतया शिरोभूषणतया यौ चरणौ दधति, तावेतौ ममापि शिरसि धेहीत्यन्वयः। चरणयोः परमपावनत्वमाह—पशुपतिजटानां जूटः समूहस्तत्र तटिनी गङ्गा ययोः पाद्यं पाथः पादप्रक्षालनार्थं जलम्। पादार्घाभ्यां चेति तद्धितो यत्प्रत्ययः। प्रकृत्यर्थश्चात्र विवक्षितः। लक्ष्मीरिन्दिरा ययोर्लाक्षा शोभार्थं लाक्षाद्रव्यमित्यर्थः। अरुणतरा चूडामणीनां रुचिः कान्तिर्यस्याः सेति लक्ष्मीविशेषणम्। यद्वा निरन्तरं नमस्कुर्वतां देवानां अरुणतरा चूडामणि-रुचिः लाक्षाशोभा ययोरित्यर्थः। अरुणहरिचूडामणिरिति पाठे स्पष्ट एवार्थः। तथा हरीत्यत्र हरेति पाठोऽपि स्पष्टार्थः॥ ८४॥

### डिण्डिमभाष्यम्

श्रुतीनामिति। हे मातः, त्रिभुवनजननि, श्रुतीनां वेदानां मूर्धानः अन्तभागाः उपनिषल्लक्षणाः यौ तव चरणौ पादारविन्दे कर्मणी, शेखरतया उत्तंसरूपेण दधति वहन्ति। सर्वासां उपनिषदां तात्पर्यार्थः खलु भगवतीचरणारविन्दस्तुतिरेव। अत एव शेखरतया प्रतिपादनम्। तावेतौ चरणौ यथा श्रुतिशिरसि न्यस्तौ, तथा ममापि शिरसि दयया कारुण्य-वशात् धेहि निवेशय। अनादिसिद्धानां परब्रह्मस्वरूपाणां वेदान्तवाक्यानां साधर्म्यं मम त्वद्भक्तस्य परमार्थतः कथमिति चेत् अत्रोच्यते। यादृशी वेदे तव दया तादृश्येव भक्तजने, न विशेषः कोऽप्यत्र। अयमर्थो देवीसूक्ते प्रतिपादितः—'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्। अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्त वा उ।' भगवत्याः प्रतिज्ञेयं 'यं भक्तमहं महात्मानं कर्तुं कामये इच्छामि तमुग्रं महादेवं करोमि। किंच तं ब्रह्माणं करोमि, किंच तमृषिं बदरिकाश्रमवासिनं अनादिमुनिं नारायणमपि करोमि।

यदि वा मोहयामि लोकं, ब्रह्माणं कीटकमपि भ्रममेव मोहयामि। इति। नमस्कार-वेलायामेव चरणयोः मुकुटमणिसंपर्क इति द्योत्यते। न केवलं महादेव एव नमति, अपि तु 'सर्वदेवनमस्कारः केशवं प्रति गच्छति।' इति पुराणप्रामाण्यात् सर्वलोकनमस्कार्यो भगवान् पुरुषोत्तमोऽपि स्वकार्यसंपत्तिहेतवे भगवतीं प्रणमति॥ ८४॥

गोपालसुन्दरी

श्रुतीनामिति। हे मातः श्रुतीनां वेदानां मूर्धानोऽन्तभागाः उपनिषल्लक्षणाः, यौ तव चरणौ कर्मणी, शेखरतया तत्वरूपेण दधति वहन्ति। सर्वासां श्रुतीनां त्वच्चरणे तात्पर्यात्। एतौ चरणौ ममापि शिरसि दयया धेहि, निवेशय। ययोश्चरणयोर्लाक्षालक्ष्मीः यावकसंपत्, अरुणो रक्तो हरेर्विष्णोः यश्चूडामणिः मुकुटरत्नं तस्य रुचिर्दीप्तिरित्यर्थः। विष्णुपक्षे – मात इत्यत्र मा अत इति छेदः। दयया अधेहि इति छेदः। अतो हेतोः ममापि शिरसि मा अधेहि अपितु धेहि इत्यर्थः। ममापि शिरसि मातः परिमाणं प्राप्नुत इति द्विवचनान्तं वा। ययोः पाद्यमिति वामनस्य द्वितीयचरणोपरि ब्रह्मणा पूजार्थं यत्पाद्यमावर्जितं, सैव गङ्गेति पुराणप्रसिद्धेः। हरिरिन्द्रः। शेषं समानम्॥ ८४॥

आनन्दलहरीटीका

श्रुतीनामिति। हे मातः यौ तव चरणौ श्रुतीनां मूर्धानः प्रधानभूता उपनिषदः शेखरतया शिरोभूषणतया दधति वहन्ति। सर्वोत्तमतया प्रतिपादयन्तीति भावः। एतौ चरणौ दयया ममापि शिरसि धेहि अर्पय। ययोश्चरणयोः पाद्यं पादप्रक्षालनार्थं पाथो जलं पशुपतेः शिवस्य जटाजूटस्था तटिनी नदी गङ्गेत्यर्थः। शिवस्य त्वच्चरणप्रणिपातदशायां गङ्गा पादोदकवद्भवतीति भावः। विष्णोरपि त्वद्रूपतया विष्णुपादोदकरूपा या गङ्गा तस्यास्त्वत्पादोदकरूपत्वमिति वा। हरिययोश्चरणयोर्लाक्षालक्ष्मीः यावकशोभा अरुणाया रक्ताया चूडामणेर्मुकुटरत्नस्य रुचिः कान्तिः सैवेत्यर्थः॥ ८४॥

[1]नमोवाकं ब्रूमो नयनरमणीयाय पदयोः
तवास्मै द्वन्द्वाय स्फुटरुचिरसालक्तकवते।
असूयत्यत्यन्तं यदभिहननाय स्पृहयते
पशूनामीशानः प्रमदवनकङ्केलितरवे॥ ८५॥

---

1 नमोवाचं, नमो वा किं।

நமோவாகம் ப்ரூமோ நயந ரமணீயாய பதயோ:
1 3 1 3
தவாஸ்மை த்வந்த்வாய ஸ்புடருசி ரஸாலக்தகவதே।
1 3 3 2 1 1 1 1 1 1
அஸூயத்யத்யந்தம் யதபிஹநநாய ஸ்ப்ருஹயதே
1 1 1 3 4 1 1
பசூநாமீசாந: ப்ரமதவந கங்கேளிதரவே ॥
1 1 3 1 1 1

नमन! नमन! हे जननि! तेरे नयनमनोहर चरणों में
नमन! नमन! लाक्षारसच्छविशोभित दोनों श्रीचरणों में
जिन के आघात को तरसते तरु अशोक को लखने पर
ईर्ष्यावश जल उठते हैं पशुपति असहनशील बने हर ॥

## लक्ष्मीधरा

नमोवाकं नम इति वाक्यम्। नमोवाकशब्दो निपातनात्साधुः। ब्रूमः वदामः, नमस्कुर्म इत्यर्थः। नयनरमणीयाय नेत्रयोः प्रियकराय, पदयोः चरणयोः, तव अस्मै परिदृश्यमानाय, द्वन्द्वाय युग्माय, स्फुटरुचिरसालक्तकवते स्फुटरुचये स्फुरत्प्रभाय रसालक्तकवते सार्द्रालक्तकाय, विशेषणसमासः। असूयति ईर्ष्यति। अत्यन्तं नितरां, यदभिहननाय येन पदयुगेन अभिहननं ताडनं तस्मै, अभिहननं न सहत इत्यर्थः। अशोकश्चरणाहतिव्यक्तपुष्प इति दोहदकौतुके। स्पृहयते स्पृहां कुर्वते, पशूनामीशानः पशुपतिः, प्रमदवनकङ्केळितरवे प्रमदवनं उद्यानवनं तत्र कङ्केळितरुरशोकः तस्मै असूयति ईर्ष्यति। उभयत्र 'क्रुधद्रुह' इत्यादिना 'स्पृहेरीप्सितः' इत्यनेन च संप्रदाने चतुर्थी। अत्रेत्थं पदयोजना—हे भगवति! तव नयनरमणीयाय स्फुटरुचिरसालक्तकवते पदयोरस्मै द्वन्द्वाय नमोवाकं ब्रूमः। पशूनामीशानः यदभिहननाय स्पृहयते प्रमदवनकङ्केळितरवे अत्यन्तं असूयति। प्रणयकलहसमये अनुग्रहात्मा पादाघातो न कस्यापि संभाव्यत इति अचेतनवस्तुनोऽपि कङ्केळितरोः कथं स्यादिति तत्रैवासूया नान्यत्रेति भावः। अनेनात्यन्तं पातिव्रत्यं पार्वत्याः प्रतिपादितम्। एतादृशं पातिव्रत्यं लक्ष्मीसरस्वत्योर्नास्तीति व्यज्यते। अत्रातिशयोक्तिरलङ्कारः, पशुपतेरीर्ष्ययाऽसंबन्धेऽपि संबन्धकथनादभेदाध्यवसायप्रतीतेः। ८५॥

## सौभाग्यवर्धनी

तादृशचरणकमलयोर्नमस्कारं करोति—नमोवाकमिति। हे मातः! नयनरमणीयाय तव अस्मै पदद्वन्द्वाय नमोवाकं ब्रूमः नमस्कारयुक्तं ब्रूमः वाचनिकं नमः कुर्मः स्तुम इत्यर्थः।

स्फुटरुचिरसालक्तकवते प्रकाशमानकान्तिद्रवयावकवते । यदभिहननाय स्पृहयते प्रमदवनकङ्केलितरवे क्रीडावनरक्ताशोकाय 'अशोकश्चरणाघाताज्जायते पुष्पवत्तरः' इति दोहदं वाञ्छते । पशूनामीशानः महादेवः असूयति जगदम्बिकाचरणाघातं वाञ्छनीयं त्वं कथं वाञ्छसि? पुष्पसमृद्धिस्तव ममानुग्रहादेव भविष्यतीति । एतावता परमेश्वरीचरणस्पर्शं यत्र शिवोऽपि वाञ्छति, तत्रास्मदादीनां जन्मान्तरसुकृतं विना जगदम्बिकायाश्चरणसेवा न लभ्यत इति भावः ॥ ८५ ॥

अरुणामोदिनी

तादृशचरणयोः नमस्कारं करोति—नमोवाकमिति । हे देवि! स्फुटरुचिरसालक्तकः विशदशोभार्द्रयावकः अलक्तकरसो वा अस्यास्ति प्रसाधकत्वेनेति तद्वते प्रकाशमानयावकाङ्किताय । तथा नयनयोः नेत्रयोः रमणीयाय, दर्शयायेत्यर्थः । तव भवत्याः अस्मै प्रकाशमानाय पदयोः चरणयोः द्वन्द्वाय श्रुतिमूर्धीव मच्छिरस्यपि निहितायेत्यर्थः । नमोवाकं, उच्यत इति वाकः, 'अकर्तरि च कारके संज्ञायाम्' इति घञ् । नमसो वाकः नमोवाकः, तं नमस्कारवाक्यं ब्रूमो वदामः । नमस्कारं कुर्म इत्यर्थः । नमःस्वस्ति इत्यादिना चतुर्थी । भगवतीपादयोः परमेश्वरस्य भक्त्यतिशयं प्रकटयन् तयोर्महिमानमाह—असूयतीति । पशूनामीशानः पशुपतिः अनभिव्यक्तगृहपतितुल्यस्थानकोऽपि चेति ध्वनिः । यस्य पादद्वन्द्वस्य अभिहननाय ताडनाय स्पृहयते वाञ्छते । 'स्पृहेरीप्सितः' इति संप्रदानत्वात् चतुर्थी । 'पादाहतः प्रमदया विकसत्यशोकः' इत्यादिकविवचनात् उत्तमाङ्गनापादताडनस्य अशोकदोहदत्वादिति भावः । उक्तं च रामकविना—'पादाहत्याप्यशोकः वदनमदिरया केसरः पाणिमर्शाच्चूतो वीक्षाहसाभ्यां तिलकतरुनमेरू प्रियालुश्च गीत्या । संलापात्कर्णिकारः कुरवकतरुरालिङ्गनात्सिन्दुवारः श्वासात्स्त्रीणां विकासं भजति च मदरागेण चम्पश्च शाखी ॥' इति । प्रमदानां वनं प्रमदवनं क्रीडावनमित्यर्थः । 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति ह्रस्वः, कालिदासवत् । 'प्रमदावनं प्रमदवनं' इति द्विरूपकोशः । तत्र यः कङ्केलितरुः अशोकवृक्षः तस्मै, 'कङ्केलिः कामकेलिः स्यादशोको रक्तपुष्पकः' इति विश्वः । अत्यन्तं अतिमात्रं, असूयति कुप्यति । विकासनाय देवीपादताडनरूपदोहदं आकाङ्क्षमाणाय अशोकाय वृक्षाय । प्रणयकलहावसरे मदनुग्रहात्मा अतिसुन्दरदेवीपादघातः अनेन रसानभिज्ञेन अचेतनेन किमर्थं आकांक्ष्यत इत्यनभिज्ञपरिपालकत्वात् विशेषानभिज्ञोऽयं निरन्तरं कुप्यति । न ह्यतिकामुकाः स्वकान्तान्यस्पर्शं स्वसाम्यतापादकं संमन्यत इति भावः । 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इति चतुर्थी । एवंविधाय शिवाद्यभिकांक्षितपादघाताय सर्वोत्तमाय पदद्वन्द्वाय नमस्कारं कुर्म इत्यर्थः । अत्र ब्रूम इति बहुवचनेन नमोवाके भक्तिश्रद्धातिशयो द्योत्यते । तथा च श्रुतिः—

'भूयिष्ठां ते नमउक्तिं विधेम' इति। अत्र अशोकपशोशानयोः पादताडनाभिलाषासूययोर-संबन्धेऽपि तत्संबन्धकथनरूपातिशयोक्तिद्वयेन देव्या लक्ष्मीवाण्याद्यपेक्षया अतुलितपातिव्रत्य-रूपवस्तुनः स्वजायायाः पादेनापि अन्यपुरुषसंस्पर्शमसहमानपुरुषवृत्तान्तस्य च प्रतीतेः समा-सोक्तिर्व्यज्यत इत्यलङ्कारेण वस्त्वलङ्काररूपो ध्वनिः॥ ८५॥

आनन्दगिरीया

नमोवाकमिति। हे मातः तवास्मै पदयोः द्वन्द्वाय नमोवाकं ब्रूमः। वाको वाक्यं नमस्काररूपं, वाचनिकं नमस्कारं, परमेश्वरीचरणद्वन्द्वाय नम इत्याकारं ब्रूमः। किंलक्षणाय नयनरमणीयाय मनोनयनमोहनाय। रमणीयत्वमाह—स्फुटरुचिरसं च तदलक्तकं च तद्विद्यते यस्मिन् तद्वत्तस्मै याव ... वेत्यर्थः। अथवा स्फुटरुचिरं सालक्तकं उदकं विद्यते यत्र .. मानीय क्षालितवते इत्यर्थः। तस्यातिशयमाह ... कङ्केलितरवे पशूनामीशानो महादेवोऽत्यन्तं असूयति ... 'पादाहतः प्रमदया विलसत्यशोकः शोकं जहाति बकुलो मुखसीधुसिक्तः। आलोकितः कुरबकः कुरुते विलासं आलोलितस्तिलक उत्कलिको विभाति इति वाक्यगतं तद्दौहदम्। अत्रापि महाराजस्य राज्ञी त्रिपुरसूदनस्यान्तः ... ... मवादिकानतयः कङ्केलितरुरशोकः। स तु तस्य कुसुमोल्लासाय भग ... दा महादेवः तस्मै क्रुध्यति, यत्परमेश्वरीचरणाघातपात्रं तत्र च म .... व को वा तद्वाञ्छायामधिकन्यकारः। अयं भावः परमेश्व ..ग्रात्यपराधमालोक्य कलहान्तरितायामीशान्यां जा ... मेश्वरीचरणयोर्मुकुटं यथा स्पृशति, ततः प्रियतमे श्रीमहादे . र्या शिरसि चरणप्रहारः क्रियते तेनापि प्रकारेण महादेवः सकलभुवनानां मूर्धाभिषिक्तो जात इति यत्र वै ता...नने तरुस्तत्र नेदमुचितमित्यसूयति। तव कुसुमोद्भवस्य .... यूसंसर्गादपि भविष्यतीति। चरणाघातं मा कामयेति .... रूपोऽपि स्पर्शः। चतुर्दशभुवनेश्वर्यप्रदत्तेन हि सानन्द ... योऽपि निरूपयितुमविद्वांस इति सूचितम्। अथ च यत्पश्यन् ... ष्यति तद्युक्तमेव। अथवा अहो विषयमाहात्म्यं पश्यतु यत्काष्ठरूप ... णयोरभिहननं तत्स्पर्शं वाञ्छति। तदा पशूनां मध्ये ईशानो महापशुरपि .... वत्याः तव चरणयोरेतादृशं प्रीतिपात्रं काष्ठमपि न ... नमन्तः पू ... विनमित्यमरः कङ्केलिः कामकलि .... ... (मध्ये मध्ये त्रुटितम् असंपूर्णं च)॥ ८५॥

तात्पर्यदीपिनी

नमोवाकमिति। हे मातस्तवास्मै परिदृश्यमानाय पदयोः चरणयोर्द्वन्द्वाय नमोवाकं नम इति वाक्यं ब्रूमो वदामो नमस्कुर्मः। अन्यत्किञ्चिद्वर्णनस्तवने न जानीमः। किंभूताय द्वन्द्वाय, नयनरमणीयाय नयनयो रमणीयं तस्मै, पुनः स्फुटरुचिरसालक्तकवते

स्फुटा रुचिर्यस्य तद्य तद्रसालक्तकवञ्च तस्मै साद्रालक्तकाय। हे मातः, विचित्रं पश्य। पशूनामीशानः पशुपतिः प्रमदवने यः कङ्केलितरुर्नाम अशोकः, तस्मै अभ्यर्यति कुप्यति। कीदृशायाशोकाय, यदभिहननाय येन अभिहननं ताडनं तस्मै अत्यन्तं नितरां स्पृहयते स्पृहां कुर्वते, अत एव हर एतस्मै कुप्यति। कथमेष एतत्स्पृहात्मकसौभाग्यं प्राप्नोतीति। प्रमदावनं नाम स्त्रीवनं, तत्रेयमाख्या—एकदा भगवता सह क्रीडमानायां भवान्यां विगलितवसनायां सत्यां, महर्षयः महेशं नन्तुं समागताः। तदा कुपितया भवान्या शप्तं 'अद्यप्रभृति हरं ऋते यः कश्चित्पुमान् एतद्वनं प्रविशति स स्त्री भवतु,' इति। तत्कालादारभ्य प्रमदावनं जातमिति प्रसिद्धम्॥ ८५॥

पदार्थचन्द्रिका

अथ चरणद्वन्द्वं नमस्कुर्वन्प्रकारान्तरेण वर्णयति नम इति। हे जननि, तवास्मै पदयोर्द्वन्द्वाय नमो वा किं ब्रूमः। नमः किमिव सदृशं ब्रूमः। निरुपमं तव पदद्वन्द्वनमनमित्यर्थः। नमसो निरुपमत्वं नम्यनिरुपमत्वेनेति निरुपमत्वं वक्तुं पदद्वन्द्वं विशिनष्टि—स्फुटरुचिः रसो यस्य तत्तथालक्तकः तद्वते। अत्र कर्मधारयपूर्वको मतुप्प्रत्ययो नित्ययोगविवक्षया। नमोवाचमिति पाठे नमोरूपां वाचमित्यर्थः। अस्मिन्पक्षे पदयोर्द्वन्द्वायेति चतुर्थी क्रियार्थोपपदस्य च कर्मणि स्थानिनः इत्यनेन। तव पदयोर्द्वन्द्वं प्रसादयितुं नमोरूपां वाणीं ब्रूम इत्यर्थः। तच्छब्दवदिदंशब्दोऽपि यच्छब्दसापेक्ष इति यच्छब्देन पदद्वन्द्वं विशिनष्टि यदिति। यस्याभिहननं यदभिहननं तस्मै यत्पदकर्तृकताडनायेत्यर्थः। स्पृहेरीप्सित इति सूत्रेण चतुर्थी। स्पृहयतीति स्पृहयन् तस्मै प्रमदवनमन्तःपुरोचितं वनं तस्मिन् कङ्केलितरुरशोकवृक्षः तस्मै। क्रुधद्रुहेति सूत्रेण चतुर्थी। न चात्र कङ्केलिशब्देन तरुत्वप्रतीतेः तरुशब्दो न विशेषणमिति, विशेषणं विशेष्येणेति प्राप्तस्य समासस्य निषेधः। कङ्केलिशब्देन फलस्यापि प्रतीतेः तरुशब्दस्य विशेषणत्वात् समासोपपत्तेः। मद्योग्यं पदद्वन्द्वताडनं असौ अशोकवृक्षः स्पृहयतीति पशुपतिः तस्मै असूयतीति भावः। स्त्रीचरणताडनेन अशोकवृक्षस्तत्कालमेव पुष्पितो भवतीति पशुपतिस्तस्मै असूयतीति काव्ये सिद्धमेव। वा स्याद्विकल्पोपमयोरिति मेदिनीकरः॥ ८५॥

डिण्डिमभाष्यम्

हे परमेश्वरि! नयनरमणीयाय लोचनानन्दजनकाय स्फुटरुचिरसालक्तकवते स्फुटया रुच्या निजचरणकान्त्या रसातिशयो यस्य तद्व्यापकमलक्तकम् अलक्तकस्य यो रसः भगवत्याश्चरणरुचिरेव। तव चरणरुच्यैव यावकस्य रसो द्योत्यते। तद्युक्ताय निजकान्तिसमधिकसौन्दर्यलक्ष्म्या रञ्जिताय, तव चरणयोर्द्वन्द्वाय पदारविन्दयुगलाय नमोवाकं ब्रूमः नमस्कारवाक्यं ब्रूमः संपाद-

यामः। एतदेव चरणद्वयं विशिनष्टि—यदभिहननाय ययोश्चरणयोरभिहननाय दोहदमंपादक-लीलावघाताय संप्रदानाय स्पृहयते स्पृहां कुर्वे प्रमदवनकङ्केलितरवे लीलोद्यानमध्यवर्तिने अशोक-वृक्षाय। 'कङ्केलिः कामकेलिः स्यादशोको रक्तपुष्पकः' इति विश्वः। अत्यन्तमसूयति मात्सर्यं करोति। कः पशूनामीशानः। अशोकवृक्षः खलु उत्तमाङ्गनानां चरणाघातेन बहुतरकुसुम-समृद्धिमान् भवतीति कविसमयः। तथा चोक्तं मयैवालङ्कारचूडामणौ 'पादाहत्या त्वशोको वदनमदिरया केसरः पाणिमर्शाच्चूतो वीक्षाहसाभ्यां तिलकतरुनमेरू प्रियालश्च गत्या। सँल्लापात् कर्णिकारः कुरबकतरुरालिङ्गनात्सिन्दुवारः श्वासात्स्त्रीणां विकाशं विदधति मदरागेन चम्पश्च शाखी'॥ अत्र भगवत्या इतरोत्तमाङ्गनाभ्योऽपि असाधारणं चरणसौन्दर्यं यत पशूनामीशानस्यापि उद्धतसमस्तदुर्गुणस्यापि मात्सर्यदोषसंभवः। एतच्चरणसौभाग्यातिशयो मयैव ज्ञातव्यः, त्वया अचेतनेन निरर्थकं ज्ञायत इति परमेश्वरस्य अशोकं प्रति मात्सर्यं, तेनैव तत्सौभाग्यध्वनिः॥ ८५॥

## गोपालसुन्दरी

**नमोवाचमिति**। तवास्मै पदद्वन्द्वाय, नमोवाचं नम इति वचनं, ब्रूमो वदामः। कीदृशाय, नयनयोः रमणीयाय लोचनानन्दजनकाय, तथा स्फुटरुचिरसालक्तकवते स्फुटौ रुचिरसौ कान्तिद्रवौ यस्य तादृशालक्तवत् इत्यर्थः। यदभिहननाय, येन पदद्वन्द्वे-नाभिहननं, 'अशोकः चरणाघातात् जायते पुष्पवत्तरः' इति वचनात् दोहदरूपं ताडनं, तस्मै स्पृहयते स्पृहां कुर्वते। प्रमदवनं लीलोद्यानं तत्र यः कङ्केलितरुरशोको वृक्षस्तस्मै। 'कङ्केलिः कामकेलिः स्यादशोको रक्तपुष्पकः' इति विश्वः। पशूनां जीवानामीशानः शिवः, अत्यन्तमसूयति मात्सर्यं करोति। त्वच्चरणसुखं कथमन्येनापि लभ्यमित्याशयेनेति भावः। विष्णुपक्षे—स्फुटरुचिरसालक्तवते प्रकाशमानकान्तिद्रवात्मकवावकयुक्ताय, यस्य पद-द्वन्द्वस्याभिहननाय पल्लवद्वारा अधिककान्तिमत्तया तिरस्काराय स्पृहयते अशोकवृक्षाय शिवः असूयति, कथमयं क्षुद्रो मदाराध्यस्य भगवच्चरणद्वन्द्वस्य शोभां तिरस्कर्तुमुद्यत इत्याशयेनेति भावः॥ ८५॥

## आनन्दलहरीटीका

**नमोवाकमिति**। तवास्मै पदयोर्द्वन्द्वाय नमोवाकं नम इति वचनं ब्रूमः। वचनं वाकः। भावे घञ्। वाचमिति पाठे वाणीमित्यर्थः। कीदृशाय नयनयोश्चक्षुषोः रमणीयाय मनोहराय। स्फुटरुचिः ज्वलत्कान्तिः रसो द्रवो यस्य तादृशं यदलक्तकं तद्वते तद्युक्ताय। येन पदद्वन्द्वेन अभिहननं ताडनं तस्मै स्पृहयते, दोहदरूपतया स्वपुष्पार्थमपेक्षमाणाय, प्रमदवनं

लीलोद्यानं तत्संबन्धिकङ्केलितरवे अशोकवृक्षाय, पशूनामीशानः पशुपतिः शिव इति यावत्, अत्यन्तमसूयति मात्सर्यं करोति त्वच्चरणस्पर्शसुखं अन्येनापि कथं लब्धव्यमित्याशयादसूयेति भावः । स्पृहधातुयोगात्कर्मणि चतुर्थी, स्पृहेरीप्सितः, क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोप इति सूत्राभ्यां संप्रदानसंज्ञाविधानात् । उत्तमस्त्रीचरणाघातेन अशोकः पुष्पितो भवतीति कविसंप्रदायः । कङ्केलिः कामकेलिः स्यादशोको रक्तपुष्पक इति विश्वरूपकोशः ।। ८५ ।।

मृषा कृत्वा गोत्रस्खलनमथ वैलक्ष्यनमितं
ललाटे भर्तारं चरण[1]कमले ताडयति ते ।
चिरादन्तःशल्यं दहनकृत[2]मुन्मूलितवता
तुलाकोटिक्वाणैः किलिकिलितमीशानरिपुणा ।। ८६ ।।

ம்ருஷா க்ருத்வா கோத்ரஸ்கலநமத வைலக்ஷ்யநமிதம்
லலாடே பர்தாரம் சரணகமலே தாடயதி தே ।
சிராதந்தச்சல்யம் தஹநக்ருதமுந்மூலிதவதா
துலாகோடிக்வாணை: கிலிகிலிதமீசாநரிபுணா ।।

करके गोत्रस्खलन अचानक तेरे पति मां नमित हुए
खा तेरे चरण कमल का आघात भाल पर शमित हुए ।
देखा दशा वह दहनजनितशल्य हृदय का चिर तुरत भुला
स्मर हररिपु किलक पडा तव नूपुररुनझुन में स्वरव मिला ।।

लक्ष्मीधरा

मृषा अकस्मादेव, कृत्वा गोत्रस्खलनं गोत्रस्य स्खलनं नाम नायिकायामनुरागं प्रकटयतस्तत्समीप एव प्रमादात् नायिकान्तराविष्टचित्तस्य तन्नामोच्चारणम् । अथ गोत्रस्खलनानन्तरं वैलक्ष्यनमितं वैलक्ष्येण इतिकर्तव्यतामौढ्येन नमितं । अत्र नमितमिति वैलक्ष्यप्राधान्यात् वैलक्ष्येणैव नमितः न तु स्वयं वैलक्ष्यान्नमितः अत्युत्कृष्टं वैलक्ष्यमासीदिति नमितशब्दं प्रयुञ्जानस्य भावः । ललाटे निटिलदेशे, भर्तारं पशुपतिं, चरणकमले पादाम्बुजे, ताडयति प्रति

1 युगले 2 मुन्मीलितवता, मुत्कीलितवता ।

सति चरणकमलेन भर्तुर्ललाटं ताडितवत्यां भवत्यामित्यर्थः। ललाटताडनं भर्तृपर्यन्तं गच्छतीति भर्तारं ताडयतीत्युक्तिराज्ञकीति एतादृशप्रयोगाः महाकविशिक्षावशादायाताः सहृदयहृदयाह्लादकाः। ते तव, चिरात् चिरकालमनुस्यूतं, अन्तश्शल्यं, वैरमित्यर्थः। दहनकृतं नयनाग्निना प्लोषणकृतं, उन्मूलितवता तुलाकोटिक्वाणैः तुला नूपुरं तस्य कोटयः अग्राणि, तैरन्तर्गता मणयः क्षुद्रघण्टादयः लक्ष्यन्ते, तेषां क्वाणैः शिञ्जितैः, किलिकिलितम् किलिकिलेत्यनुकरणं विजयिनः सुप्रसिद्धम्। किलिकिलिरवः कृत इत्यर्थः। ईशानरिपुणा मन्मथेन। मन्मथस्य ईशानं प्रति रिपुत्वं तदा सिद्धमिति भावः। अत्रेत्थं पदयोजना—हे भगवति! मृषा गोत्रस्खलनं कृत्वा अथ वैलक्ष्यनमितं भर्तारं ते चरणकमले ललाटे ताडयति सति ईशानरिपुणा चिरात् दहनकृतं अन्तश्शल्यं उन्मूलितवता तुलाकोटिक्वाणैः किलिकिलितम्। अत्रातिशयोक्तिरलङ्कारः, तुलाकोटिक्वाणानां किलिकिलितध्वनित्वेनाध्यवसनात् भेदे अभेदनिबन्धनातिशयोक्तिः॥ ८६॥

सौभाग्यवर्धनी

पुनरपि द्वाभ्यां पादावेव वर्णयति—मृषेति। हे परमेश्वरि। मृषा कृत्वा गोत्रस्खलनं मिथ्यासपत्नीनामग्रहणं विधाय अथ वैलक्ष्यनमितं साध्वसभावेन नमितं भर्तारं शिवं रोषात् ते चरणयुगले ललाटे ताडयति सति, चिरात् अन्तश्शल्यं दहनकृतं उन्मीलितवता फालनयनविहितदाहदुःखं उन्मीलितवता उद्गीर्णवता ईशानरिपुणा, तुलाकोटिक्वाणैः किलिकिलितं किलिकिलध्वनिना उपहसितं, 'पूर्वमहं त्वया दग्धः, इदानीमहं मातरं शरणं गतः, किं कर्तुं समर्थोऽसि? इति। एते तुलाकोटिक्वाणा न भवन्ति, किन्तु ईशानरिपुणा सन्तोषेण किलिकिलितध्वनिः कृत इति अपह्नुतिः। अत्र ईशानः रिपुर्यस्येति बहुव्रीहिः। न तु तत्पुरुषः। तत्पुरुषे सति कामस्यैव वध्यस्योत्कर्षः स्यात्। यतः मृषा गोत्रस्खलनं विधायापि शिवः जगदम्बिकाचरणस्पर्शं वाञ्छितवान्, अतः अस्मदादीनां परदेवतायाः चरणसेवा पुण्यैर्विना न लभ्यत इति ध्वनिः॥ ८६॥

अरुणामोदिनी

पादाघातवर्णनापूर्वकं पादवर्णनमेवाह—मृषेति। हे देवि! मृषेत्ययमलीके। अलीकमेव गोत्रस्खलनं भवत्सपत्नीनामग्रहणं कृत्वा विधाय, भवच्चरणताडनजनितशृङ्गाररसानुशुभूषया, कोपेन विना तदलाभात्, तदुद्भावनहेतुभूतं सपत्नीनामग्रहणरूपं अपराधं अलीकरूपमेव विधायेत्यर्थः। अथ विलक्षस्य भावः वैलक्ष्यं, तेन लज्जया नमितं नम्रं, सपत्नीनामग्रहणापराधात् लज्जया प्रह्वीभूतं इत्यर्थः। गोत्रस्खलनविधानफलं देवीचरणप्रहारसौभाग्यमिदानीमेव प्राप्स्यतीत्याशयेनेति भावः। भर्तारं, अलीकमेव सपत्नीनामानूच्य त्वदीयपादपङ्कज-

प्रहाराभिलाषिणं पतिं शिवं, भर्तृत्वात् शृङ्गारशास्त्रविरोधेऽपि शास्त्रान्तराविरोधात् पादप्रहार-योग्यमित्यभिसंधिः। ते भवत्याः चरणकमले पादपङ्कजे, अभिन्ने मृदुले भूषणतासंपादके चेत्यभिसंधिः। ललाटे अलिके ताडयति प्रहरति सति, सपत्न्यलीकगोत्रोच्चारणापराधात् स्वस्याः तात्पर्यपरिज्ञानसामर्थ्यप्रदर्शनायाकास्मेदेऽपि तच्छब्दवाच्यालिकस्थानमेव विध्यति सतीति भावः। दहनेन ललाटाग्निना, कृतं विहितं, कोपावेशेन स्वभस्मीकरणरूपं, चिरात् चिरकालमारभ्य, अन्तरे स्थितं शल्यं शल्यप्रायं वैरं, उन्मीलितवता वैरनिर्यातनस्य वीरधर्मत्वात् तत्समयलाभात् तत्प्रकटयता। उन्मूलितवतेति पाठे चिरधृतं शल्यमिदानी-मपनयता ईशानरिपुणा स्मरेण, तुलाकोटेः पादाङ्गदस्य क्वाणैः ध्वनिभिः 'पादाङ्गदं तुलाकोटिः' 'निक्वाणो निक्वणः क्वणः' इति चामरः। 'तुलाया नूपुरस्य कोटयः अग्राणि। तैः अन्तर्गताः मणयः क्षुद्रघण्टिकाः लक्ष्यन्ते इति लक्ष्मीधरोक्तं कोशविरोधादु-पेक्ष्यम्। किलिकिलितं, किलिकिलध्वनिविधायि जातं, देवीपादेन अलिके ताडिते तत्र स्थितस्य वह्नेः ताडनात् त्वदाश्रयेण मदनेन शात्रवदर्पनिवारणपूर्वकं सिंहनादो विरचितः। किलिकिलीत्यनुकरणशब्दात् भावे क्तः। 'जितशात्रवदर्पस्य प्रतिज्ञापूरणे कृते। वीरस्य गर्जितः सिंहनादः किलिकिलारवः' इति विश्वः। गोत्रस्खलनं विधायापि शिवेनाभ्यर्चनीयो यश्चरण-घातः तस्मै नमस्कारं कुर्म इत्यर्थः। अत्र सापह्नवोत्प्रेक्षातिशयोक्तिभ्यां देव्याश्रितभक्तजनलाघ-वासहनं वस्तु द्योत्यते ॥ ८६ ॥

### आनन्दगिरीया

मृषाकृत्वेति। हे परमेश्वरि ते तव चरणयुगले भर्तारं श्रीमहादेवं .... कन्दर्पेण किलिकिलितम्। किलिकिलाशब्दं कृत्वा अपहसितम्। किलक्षणं भर्तारं, गोत्रस्खलनं कृत्वा मृषावैलक्ष्यनमितं कृत्रिमभयमुत्पाद्य नमितं, आहार्यं भयं मुग्धपुरुषस्य नीचस्य स्वाभाविक-मिति। तथा च भरतः—'वास्तवं कृत्रिमं चेति भयं द्वेधा निगद्यते। स्त्रीणां च नीचप्रकृतेः पुंसः स्याद्वास्तवं भयम्। उत्तमं मध्यमं पुंसि कृत्रिमं तदुदाहृतम्। स्वभावादभयावेत्य स्त्रीनरौ भयसंयुतौ' इति। एकदा श्रीमहादेवः पार्वत्यां समीपे विद्यमानायां अनवधानेन गङ्गादिसपत्नी-नाम गृहीतवान्। पश्चात्, मृषा कृत्रिमं भयमुत्पाद्य स्थिते, तदनु क्रुद्धा तं भीतं चरणयुगलेन ललाटे प्रहारं कृतवती। तदा कन्दर्प उपहासं कृतवान्। तुलाकोटिक्वाणैः नूपुरशब्दच्छलेनेत्यर्थः। किलक्षणेन ईशानरिपुणा, दहनकृतमन्तःशल्यं चिरादुन्मूलितवता। पूर्वमहमनेन नेत्राग्निना दग्धः, तदनु जगदंबिकाचरणं शरणमाश्रितोऽहम्। मन्मातृचरणाभ्यां च ताडितः। इदानीमनेन किमस्माकं भवतीत्युपहासं कृतवता। परे तु मृषा गोत्रस्खलनं कृत्वेति योजयन्ति। तदायमर्थः—

ईश्वरस्य मनसि इच्छा जाता, यत्परमेश्वरीपादप्रहारः कथं अस्माकं भवेत्? अपराधं विना न भवतीति। मिथ्यैव सपत्नीनाम उच्चारयन् पार्वत्या पादप्रहारेण हत इति। अतो मिथ्या गोत्रस्खलनं कृत्वापि शिवो यस्याः चरणस्पर्शं वाञ्छितवान्, अस्मदादीनां महापुण्यं विना तव सेवा कथं घटेतेति भावः। ननु अत्र परमेश्वरी स्वकीया उत्तमा नायिका। तस्यास्तु चेष्टा शीलरक्षा अलौल्यं क्षमा पतिशुश्रूषा चेति। यथा मत्कृतायां शृङ्गारमञ्जर्यां स्वकीयनायिका-नायकयोरुदाहरणे—'कान्ता मन्दिरदेहली न चरणन्यासो महासाध्वसः, पत्रस्पृक् फलभुक् क वा क च न वा संकेतकौतूहलम्'। तथा 'कान्तः प्रातरुपागतः प्रियवधूवैदग्ध्यमुद्राङ्कितः प्रत्युत्थाय सुलालितश्चतुरया फुल्लैर्दृगम्भोरुहैः। संस्नाप्य स्मितसुन्दरप्रतिवचःपीयूषपाथोधरैः प्रालेयद्रवशीतले स्तनतटे हारादिमारोपमः'॥ तत्कथं महोत्तमायाः कुलाङ्गनायाः त्रिभुवने-श्वर्याः भवरक्षायाः कमनीयतमे कान्ते ललाटे परमात्माधिष्ठानभूतेऽपि जघन्यावयवस्य चरणस्या-घातो युज्येतेति। यदा श्रीमहादेवस्येच्छा जाता यदहं पत्नीलब्धप्रहारजनितं सुखमनुभवामीति, तदा कृतकापराधमात्मनि प्रकाश्य भगवत्या हति प्राप्तवानिति यत्तत्सङ्कीर्त्यमानमपि ग्राम्यता-मापादयति। किञ्च स्वकीया कीदृक्स्वभावा वास्तु, परं तु स्वकीयोत्तमायाः स्वभावपरित्यागो न युज्यते। स्वभावश्च कामशास्त्रे—एकान्ते कृतागसि न हि प्रियमप्रियं वा वक्ति क्रुद्धापि खलु योषिदिति। वीक्ष्यते च, स्वल्पेऽपि तुष्यति अनुनये, निगूढलज्जा मनोहरतरं रमते रतेऽपि। अन्ये तु वदन्ति सर्वासां नायिकानामवस्थास्ववस्थिता भगवती तेन तस्या नायिकाया अवस्था-मादर्शयति। तद्वदत्राधमनायिकाचेष्टा स्वात्रस्थिता प्रदर्शितेति, नचेदं सत्यं, तत्वे कापि नायिका तत्तदवस्थाभेदेन भिन्ना भवति इति तु अष्टविधनायिकाभिप्रायात्। यथा एकैव नायिका वासकसज्जा भूत्वा विप्रलब्धा भवति, तदनु सा अभिसारिका, तदनु खण्डिता, कलहान्तरितापि भवति। तथाविधास्तु नोत्तमादयः। उत्तमत्वादयो धर्मास्तु यावद्द्रव्यभाविनः। अन्यथा सीतासावित्रीलोपामुद्रारुक्मिण्यरुन्धतीप्रभृतीनामपि कदाचिदेवं श्रूयेत। न हि तासां प्रियतमा भिन्नरसास्वादविमुखाः, ता वा रसानभिज्ञा इति। तस्मात्, या उत्तमा सा याव-च्छरीरमुत्तमैव। तस्मात्पण्डितैरेतद्विचारणीयमेव। अन्यथा यथोत्तमात्वत्यागस्तथा स्वकीया-त्वत्यागोऽपि तस्याः। तच्च न घटते यतो 'महादेवं हित्वा तव सति सतीनामचरमे कुचाभ्या-मासङ्गः कुरवकतरोरप्यसुलभः' इति वक्ष्यमाणत्वात्॥ ८६॥

## तात्पर्यदीपिनी

क्षुषेति। हे मृडानि, ईशानरिपुणा कामदेवेन तुलाकोटिकाणैः तुलायां नूपुरस्य कोटयः तदन्तर्गतमणयः, तेषां काणाः शब्दाः तैः किलिकिलितं किलिकिलिरावः कृतः

शब्दाडम्बरं विना किलिकिलिरावः सिंहनादो न सिध्यतीति। कस्मिन्सति, पुरा कदाचित्संभोगसमये ते तव चरणकमले पादसरोरुहे भर्तारं ललाटे ताडयति सति प्रहरति सति। कामदेवेन विजृम्भमाणानन्देन तेनैव हेतुना 'पूर्वं महातपस्वी मां जितवान्। स त्विदानीं मम मातुश्चरणताडनस्य पात्रं जातः। मयैव शृङ्गाररसेन विजितः स्त्रीचरणाघातपात्रं जात' इति वचनानि कृत्वा किलिकिलितमिति पूर्वेण संबन्धः। किंविधं भर्तारं, मृषा मिथ्या, गोत्रस्खलितं कृत्वा गोत्रस्य नाम्नः स्खलितं व्यत्यासं सपत्नीनामग्रहणं कृत्वा, अथानन्तरं वैलक्ष्यनमितं वैलक्ष्येण नमितं लज्जया विनीतं, इदानीमेव मयि चरणताडनसौभाग्यं भविष्यतीति आशङ्क्यैव विनतं प्रह्वीभूतं, किंविधेन ईशानरिपुणा चिरात् चिरकालं दहनकृतं शल्यं दुःखमन्तः उत्कीलितवता स्मृतवता, अद्य यावन्न केनाप्ययमभिहतः इदं साधु जातं यल्ललाटेऽभिहतमिति जानता। अत्रेदं रहस्यं, कामदेवस्य गर्जितमुभयथा भवति। शत्रुदर्पक्षयेण प्रतिज्ञापूरणेन च। तदुभयमपि भगवत्याः प्रसादात्संपन्नम्। यो मां जितवान्, स मया जित इति शत्रुतिरस्कारेण किलिकिलिरावः। अथ रतिरमणेन मम सर्वमोहन इति प्रसिद्धिः। सा शिवेन मम कुण्ठिता। पश्चात्तस्यापि मोहनेन सर्वमोहनप्रसिद्धिर्मया प्राप्ता। अत एवानन्दलाभाद्विस्मृतदुःखेन किलिकिलिरावः कृत इति भावः॥ ८६॥

## पदार्थचन्द्रिका

पुनरपि किञ्चिदुत्प्रेक्षमाणश्चरणं वर्णयति – मृषेति। हे जननि, ते तव चरणकमले भर्तारं श्रीमहादेवं ललाटे ताडयति सति, ईशानरिपुणा कन्दर्पेण तुलाकोटिक्वाणैर्मञ्जीरशब्दैः किलिकिलितम्। शत्रुपराजयमालक्ष्योच्चैः शब्दः कृत इत्यर्थः। तुलाकोटिक्वाणैरित्यत्र प्रकृत्यादिभ्यस्तृतीयेति तृतीया। दहनकृतं दाहजन्यं अन्तःशल्यं हृदयशल्यमिव वैरमुन्मूलितवता उत्सादितवता इति ईशानरिपुविशेषणम्। भर्तुस्ताडने हेतुं वदन् भर्तारं विशिनष्टि – गोत्रे नाम्नि स्खलनं अन्यथोच्चारणं कृत्वा, अथ मृषा वैलक्ष्यं तेन प्रयोजककर्त्रा नमितम्। चिरादव्ययम्। बहुकालमित्यर्थः॥ ८६॥

## डिण्डिमभाष्यम्

हे परमेश्वरि! तव चरणसौभाग्यं पुनः किं वर्णयामः? तथापि श्रूयताम्। पुरा कदाचित्संभोगसमये महादेवः त्वच्चरणताडनजनितशृङ्गारमनुबुभूषुः, तल्लाभः कोपेन विना नास्तीति मृषैव गोत्रस्खलनं कृतवान्। तत्कृत्वा, अथ अनन्तरं वैलक्ष्यनमितं लज्जया विनतं, इदानीमेव मम चरणताडनसौभाग्यं भविष्यतीत्याशङ्कया एवं विनतं प्रह्वीभूतं महादेवं भर्तारं कर्म, ते तव चरणकमले पादसरोरुहे ताडयति सति ललाटे प्रहरति, कामदेवेन

विजृम्भितानन्देन, तेनैव हेतुना पूर्वं महातपस्वी मां जितवान्, स तु इदानीं मम मातुः चरणताडनस्य पात्रं जातः, अधुना मयैव भृङ्गारबाणेन विजितः, स्त्रीचरणाघातपात्रं जातः इति वचनानि उक्त्वा ईशानरिपुणा कामदेवेन किलिकिलितं किलिकिलारावः कृतः। केन करणेन, तुलाकोटिक्काणैः नूपुरशब्दैः करणभूतैः। शब्दाडम्बरं विना किलिकिलारावो न सिध्यति। किलिकिलारावो नाम सिंहनादः। 'जितशात्रवदर्पस्य प्रतिज्ञापूरणे कृते। वीरस्य गर्जितं सिंहनादः किलिकिला तथा'॥ इति विश्वः। कामस्य गर्जितं उभयथा भवति, शत्रुदर्पक्षयेण प्रतिज्ञापूरणेन च। कामस्य तदुभयमपि भगवत्याः प्रसादात्संपन्नम्। यो मां जितवान् स मया जितः, स्त्रीपरायणो जात इति शत्रुतिरस्कारेणैव च किलिकिलारावः। मम प्रतिज्ञापूरणे च सर्वमोहनेन सर्वमोहनप्रसिद्धिः। अहं शिवेन कुण्ठितः, पश्चात्तस्यापि मोहनेन सर्वमोहनप्रसिद्धिः मया प्राप्ता। वीरस्यातिशयः खलु स्वप्रतिज्ञापूरणम्। आनन्दलाभे सति पूर्वानुभूतस्य दुःखस्य विस्मरणमेव भवति। यतः कामेन महादेवलोचनकृतेन दहनेन कृतं संपादितमन्तःशल्यं अभ्यन्तरे पराभवकीलितमुन्मीलितं, अत एव एतदुन्मूलितवता कामदेवेनानन्दलाभात् विस्मृतदुःखेन किलिकिलारावः कृतः॥ ८६॥

## गोपालसुन्दरी

मृषा कृत्वेति—तव चरणकमले भर्तारं शिवं ललाटे ताडयति सति तुलाकोटिक्काणैः नूपुरध्वनिभिः ईशानरिपुणा कामेन किलिकिलितं शौर्येण गर्जितम् – 'जितशात्रवदर्पस्य प्रतिज्ञापूरणे कृते। वीरस्य गर्जितं सिंहनादः किलिकिला तथा'। इति विश्वः। भर्तारं कीदृशं? मृषा मिथ्या इव गोत्रस्खलनं त्वदन्यस्त्रीनामग्रहणं कृत्वा अथानन्तरं वैलक्ष्येण लज्जाकृतेन नमितं नम्रम्। ईशानरिपुणा कीदृशेन? चिराद् बहुकालमारभ्य दहनकृतं शिवललाटलोचनानलसंपादितं शल्यं दुःखमुन्मूलितवता दूरीकुर्वता, उन्मीलितवतेति पाठे आविष्कृतवता पूर्ववैरस्य निष्क्रयं कुर्वतेत्यर्थः। विष्णुपक्षे – चरणकमले भृगोश्चरणाम्बुजे लमिन्द्रं लाति अनुगृह्णाति इति ललो विष्णुस्तमटति उपसर्पतीति ललाटा ईः लक्ष्मीस्तस्या भर्तारं विष्णुं त्वां ताडयति सति, दहति प्रलयकाले जगदिति दहनो महारुद्रः तत्कृतमन्तः शल्यमपमानरूपम्, उन्मीलितवता ते तव ईशानरिपुणा भृगुणा, हे अतुल! देवान्तरैरतुल्य! आ सम्बोधने, कोटिक्काणैः कोटिशब्दैः किलिकिलितं गर्जितं, ललाटे भर्तारं, कीदृशं स्खलनं? स्वमार्गात् प्रच्यवरूपं, अत्रास्मिन् भृगौ आगः अपराधं मृषा कृत्वा तवायमपराधो न भवतीति इत्यादिवचनेनापराधशान्तिं कृत्वा अथानन्तरं वैलक्ष्येण मदीयकठिनहृदयाभिघातेन तव चरणकमलमतिकोमलं व्यथितमिति विषादाद् विकारेण नमितं नम्रमित्यर्थः। अत्र पूर्वं भृगुः ब्रह्मविष्णुरुद्राणां मध्ये कः श्रेष्ठतम

इति जिज्ञासितुं ब्रह्मणो निन्दां कृत्वा ततोऽपमानं प्राप्य रुद्रनिकटे गतः तेनालिङ्गितुमारब्धेन भवान् पिशाचादिसखः श्मशानवासी न मयालिङ्गनीय इति तन्निन्दामकरोत्, ततस्त्रिशूलेन रुद्रेणाभिहतो वैकुण्ठे लक्ष्म्या सह सुप्तस्य विष्णोर्वक्षसि चरणघातमदात्। ततो भगवता सबहुमानं, अहो कठोरे मदीये वक्षसि दुर्बलस्य तव पादस्य स्पर्शो महद्दुःखमुत्पादयिष्यतीति अभिधाय तत्पादसंवाहनमारब्धं, ततोऽतिशमावन्तं लक्ष्मीकान्तमेव सर्वाधिकं भृगुरमन्यतेति पौराणिकी कथा।' ८६॥

आनन्दलहरीटीका

मृषेति। ते तव चरणकमले, युगले इत्यपि पाठान्तरम्। भर्तारं शिवं ललाटे ताडयति सति ईशानरिपुणा कामेन तुलाकोटिक्वाणैः नूपुरध्वनिभिः किलिकिलितं सिंहनादः कृतः। कीदृशं भर्तारं, मृषा मिथ्याबुद्धिपूर्वकमिति यावत्। गोत्रस्खलनं त्वदन्यस्त्रीनामग्रहणं कृत्वा, स्थितमिति शेषः। अन्यथा क्त्वाप्रत्ययादानन्तर्येण अथेत्यस्य वैयर्थ्यात्। अथ त्वत्कोपदर्शनानन्तरं वैलक्ष्येण लज्जया नमितं नम्रम्। कामेन कीदृशेन, दहनेन फालाग्निना कृतं अन्तःशल्यं दाहजन्यमनोदुःखं चिरादुन्मूलितवता दूरीकुर्वता येन शिवललाटाग्निना अहं दग्धः तस्येदानीं मया पादप्रहारः कारित इति हर्षाद्विचारयतेत्यर्थः। उन्मीलितवतेति पाठे प्रकाशितवतेत्यर्थः। पूर्वं त्वं मां दग्धवानसि। इदानीं मत्कृतं तिरस्कारमनुभवेत्येवं क्रमेणेत्यर्थः। 'जितशात्रवदर्पस्य प्रतिज्ञापूरणे कृते। वीरस्य गर्जितं सिंहनादः किलिकिला तथेति' विश्वरूपः। उत्प्रेक्षार्थं केवलशब्दोऽत्राध्याहार्यः॥ ८६॥

हिमानीहन्तव्यं हिमगिरि[1]निवासैकचतुरौ
निशायां निद्राणं निशि [2]चरमभागे च [3]विशदौ।
[4]वरं लक्ष्मीपात्रं श्रियमतिसृजन्तौ [5]समयिनां
सरोजं त्वत्पादौ जननि जयतश्चित्रमिह किम्॥ ८७॥

ஹிமாநீ ஹந்தவ்யம் ஹிமகிரி நிவாஸைக சதுரௌ
1 3 1 1 1

நிசாயாம் நித்ராணம் நிசி சரமபாகே ச விசதௌ।
3 1 4 3 1 3

வரம் லக்ஷ்மீ பாத்ரம் ச்ரியமதிஸ்ருஜந்தௌ ஸமயிநாம்
1 1 1 1

ஸரோஜம் த்வத்பாதௌ ஜநநி ஜயதச் சித்ரமிஹ கிம்॥
1 1 1 3 1 1 1 3

---

1 तटाक्रान्तिचतुरौ, तटाक्रान्तिरुचिरौ 2 च परभागे च, च परभागेन 3 रुचिरौ 4 परं 5 प्रणयिनाम्।

यदा तुहिनगिरि वासचतुर निशि चरमभाग में फुल्ल बने
समयी भक्तों के हित लक्ष्मीवितरण का स्थल विमल बने
तव पद माँ! ओलों से गलनेवाले रातों में मुकुलित
-- . . लक्ष्मी का क्षण भर आवास बने कमलों का मद विदलित -- . .
कर देते हैं तो आश्चर्य क्यों करे कोई प्रभावलित ॥

लक्ष्मीधरा

हिमानीहन्तव्यं हिमान्या हिमसंहत्या हन्तव्यं नाशितव्यं, हिमगिरिनिवासैकचतुरौ सर्वदा हिमगिरावेव वसन्तावित्यर्थः। निशायां शर्वर्यां, निद्राणं मुकुलितं, निशि चरमभागे च विशदौ प्रसन्नौ, चैतन्नाशक्तेः तत्रैवोत्पत्तेरिति भावः। चकारात् दिवापि प्रसन्नावित्यर्थः। वरं ईप्सितं, लक्ष्मीपात्रं लक्ष्म्या अधिष्ठितमित्यर्थः श्रियं लक्ष्मीं, अतिसृजन्तौ उत्पादयन्तौ, समयिनां स्वभक्तानां, समयस्वरूपं 'तवाधारे मूले' (४७ श्लो) इति श्लोके निरूपितम्। सरोजं कमलं कर्मभूतं, त्वत्पादौ जननि! हे मातः! जयतः विजयेते। चित्रं आश्चर्यं, इह अस्मिन्नर्थे, किं न किमपीत्यर्थः। अत्रेत्थं पदयोजना – हे जननि! हिमगिरिनिवासैकचतुरौ निशि चरमभागे च विशदौ समयिनां श्रियमतिसृजन्तौ त्वत्पादौ हिमानीहन्तव्यं निशायां निद्राणं वरं लक्ष्मीपात्रं सरोजं जयतः; इह किं चित्रं, आधिक्यस्य स्फुटत्वादित्यर्थः। अत्र व्यतिरेकालङ्कारः स्फुटः॥ ८७॥

सौभाग्यवर्धनी

हिमानीति। हे जननि! तव पादौ सरोजं जयतः। इह किं चित्रम्? यतः सरोजं हिमानीहन्तव्यं, हिमगिरितटाक्रान्तिचतुरौ तव पादौ। निशायां निद्राणं मुकुलितं, निशि च परभागे च विशदौ, रात्रिंदिवं विकस्वरौ। परं लक्ष्मीपात्रं, लक्ष्म्या आधारभूतं; समयिनां मच्चरणभक्तिभावप्रतिपादकशास्त्रनिष्ठानां श्रियमतिसृजन्तौ। एतादृशौ तव पादौ सरोजं जयतः। अत्र को विस्मयः? अत्रोपमानं तुच्छीकृत्योपमेयस्यातिशयप्रतिपादनादतिशयोक्तिः॥ ८७॥

अरुणामोदिनी

पादावेव वर्णयति – हिमानीति। हे जननि, समस्तजगन्मातः, देवि! हिमप्रधानो गिरिः हिमगिरिः, तत्र निवासे स्थितौ एकस्मिन् चतुरौ कुशलौ निरन्तरं हिमवत्कृतसञ्चाशवपि हिमबाधारहितौ अक्षीणशोभौ चेत्यर्थः तथा निशि रात्रौ, चरमभागे पश्चाद्भागे च विशदौ प्रसन्नौ विकसितावित्यर्थः। निशि च परभागे च विशदाविति पाठे, रात्रौ परभागे

गुणोत्कर्षे च । 'परभागो गुणोत्कर्षे' इत्यमरः । यद्वा 'परभागो भवेद्वर्णद्वयसंसर्गजा रुचिः' इत्यभियुक्तोक्तेः, रात्रेस्तमःप्रधानत्वात् नीलकान्त्याः, पादयोररुणत्वात्तत्कान्त्याश्च मेलनेन मिश्रवर्णे च सति विशदावित्यर्थः । तथा, समयः देवीचरणभक्तिभावप्रतिपादकं शास्त्रं आन्तरपूजाप्रधानमेषामस्तीति समयिनः । अत इनिठनौ - इति मत्वर्थीय इनिः । तेषां समयाचारतत्पराणाम् । 'आविर्भवत्पुलकसंहतिभिः शरीरैः निष्यन्दमानसलिलैर्नयनैश्च नित्यम् । वाग्भिश्च गद्गदपदाभिरुपासते ये पादौ तवाम्ब भुवनेषु त एव धन्याः' ॥ इत्यम्बास्तवोक्तेः । एवमुपासनया धन्यतां प्राप्तानां, श्रियं वाञ्छिताधिकां लक्ष्मीं महदैश्वर्यमतिसृजन्तौ । उपासितयोः भवत्पदाब्जयोश्च वाञ्छिताधिकफलप्रदातृत्वं देवीमाहात्म्ये – 'तामुपैहि महाराज शरणं परमेश्वरीम् । आराधिता सैव नृणां भोगस्वर्गापवर्गदा' ॥ इति साकल्येन देवीमाहात्म्यं वदतो मुनेरनुज्ञया यथाशास्त्रं तपस्यतोः अनन्यमनस्कतया त्रिवर्षपर्यन्तं भगवतीपादाम्बुजमाराधयतोः सुरथसमाधिनामधेययोः राजवैश्ययोः अत्युत्कटमभीष्टं, 'स्वल्पैरहोभिर्नृपते स्वं राज्यं प्राप्स्यते भवान् । हत्वा रिपूनस्खलितं तव तत्र भविष्यति ॥ मृतश्च भूयः संप्राप्य जन्म देवाद्विवस्वतः । सावर्णिको नाम मनुर्भवान्भुवि भविष्यति ॥ वैश्यवर्य त्वया यश्च वरोऽस्मत्तोऽभिवाञ्छितः । तं प्रयच्छामि संसिध्यै तव ज्ञानं भविष्यति ॥' इत्यादिवचनैः मन्वन्तराधिपत्यनिष्कलङ्कज्ञानरूपं ददत्या त्वयैवाविष्कृतमिति भावः । उक्तं च चर्चास्तवे – 'पृथ्वीभुजोऽप्युदयनप्रवरस्य तस्य विद्याधरप्रणतचुम्बितपादपीठः । तच्चक्रवर्तिपदवीप्रणयः स एष त्वत्पादपङ्कजरजःकणजः प्रसादः ॥ लक्ष्मीवशीकरणकर्मणि कामिनीनामाकर्षणव्यतिकरेषु च सिद्धमन्त्रः । नीरन्ध्रमोहतिमिरच्छिदुरप्रदीपो देवि त्वदंघ्रिजनितो जयति प्रसादः ॥ इति । आचार्यैश्च प्रागेव निरूपितं, 'भयात् त्रातुं' इत्यादिना देवीचरणयोरत्युत्कटफलदातृत्वमित्यलम् । यद्वा, समयिनां भवत्पादाम्बुजं, 'लोकस्य द्वारमर्चिमत्पवित्रं' इत्यादिश्रुतिप्रामाण्यादभ्युपेत्य हृदये उपासतां भक्तानां श्रियं सर्ववितर्कविलयपूर्वकं स्वप्रकाशनरूपां लक्ष्मीमतिसृजन्तौ । भगवतीचरणध्यानं विना समयितर्कजालच्छेदनाभावादिति भावः । यथोक्तमम्बास्तवे – 'यावत्परं पदसरोजयुगं त्वदीयं नाङ्गीकरोषि हृदयेषु जगच्छरण्ये । तावद्विकल्पजटिलाः कुटिलप्रकारास्तर्कग्रहाः समयिनां प्रलयं न यान्ति ॥ इति । एवंविधौ त्वत्पादौ, भवत्याश्चरणौ । 'हिमानी हिमसंहतिरि'ति अमरः । 'इन्द्रवरुणभवे'त्यादिना 'हिमारण्ययोर्महत्त्वे' इति ङीषानुकौ । तथा क्षणविनाशिन्या [illegible]ण चेति ध्वनिः । हन्तुमर्हं हन्तव्यं, हिंसितुमर्हं, विनाशयुक्तमित्यर्थः । अत एव नित्यहिमवत्प्रदे[illegible]शचरिष्णुभवत्पदपङ्कजोपमानीभवितुं न प्रभवतीत्यभिप्रायः । कदा, निशायां रात्रौ कस्याश्चित्स्त्रीसमा[illegible] चेति ध्वनिः । निद्राणं मुकुलनशीलं रात्रिन्दिवं प्रफुल्लभवत्पदसाम्यानर्हं इति भावः । परं अत्यन्तमीषद्वा लक्ष्म्याः पात्रं रमाया अधिष्ठानभूतं, न तत्

भवत्त्वादवदखिलेष्टार्थवितरणधुरीणमिति भावः। एवंविधं सरोजं उत्पत्तितोऽप्यतितुच्छतया न्यूनगुणवत्तया च विजयप्रतिभटीभवितुमनर्हमिति भावः। जयतो विजयेते। इह किं चित्रं आश्चर्यम्? उक्तप्रकारेणोत्कृष्टगुणवद्भ्यां हीनगुणस्यपराजयो नाद्भुतकरः इति भावः। अत्र व्यतिरेकालङ्कारेण देवीचरणयोः सर्वदा भजनीयता द्योत्यते॥ ८७॥

आनन्दगिरीया

हिमानीति। हे जननि तव पादौ चरणौ सरोजं कमलं जयतः। अत्र किं चित्रं किमाश्चर्यम्? तव पादावत्यन्तं सातिशयौ, सरोजं न्यूनगुणं, तेन न समम्। जयपराजयविचारोऽप्यघटमानः समत्वाभावात्। समत्वाभाव एव किंलक्षणः? सरोजं हिमकलिकयापि हन्तव्यम्। यद्यपि हिमानी हिमसंहतिः, तथापि छन्दोऽनुरोधात्, हिमानीपदं लक्षणया एकदेशपरम्। तव चरणौ कीदृशौ, हिमगिरितटाक्रान्तिरुचिरौ, यदा त्वं पितृगृहे बालिका सती अतिष्ठः, तदैव हिमगिरितटे क्रीडार्थं चलन्ती हिमसमूहानामपि मूर्ध्नि पदं दत्वा खेलसि, तदतिहिमाक्रान्त्यापि रुचिरावेव तव चरणौ। इदानीं तु यौवनोन्मदादिना सकलसौन्दर्यसमृद्धिसमृद्धौ। बाल्यावस्थायामेव जितं हिमं दूरे परास्तं कथं स्प्रष्टुमपि समीहते। पुनः किंविधं सरोजं निशायां निद्राणं, परमतरलैश्चन्द्रकिरणैरपि पराजितत्वात्संकुचितम्। तव चरणौ कीदृशौ निशि च परभागेन विशदौ, निशि रात्रौ परभागेन गुणोत्कर्षेण विशदौ भास्वरौ। परभागो गुणोत्कर्ष इत्यभिधानात्। अथवा निशि परभागे दिने च विशदौ, नक्तंदिवं विकस्वरौ। कीदृशं कमलं, परं लक्ष्मीपात्रं लक्ष्म्याः स्थानं, तदाश्रित्य लक्ष्मीस्तिष्ठति, परं तु न दानादिव्यवहारसामर्थ्यं, लक्ष्म्या आसनमात्रम्। तव चरणौ कीदृशौ समयिनां कवीनां कालपीडितानामकिंचनानामपि स्मरणमात्रेण श्रियं सृजन्तौ। अथवा समयिनां संकेतवतां, 'भवानीचरणयोरग्रे गन्तव्यं तत्र श्रीर्लब्धव्ये'ति विहितसंकेतानामित्यर्थः। समयः संकेतः। अथवा यथासमयमनुवर्तमानानां समयिनामित्यर्थः। परमेश्वरीसिद्धान्तमाश्रितानामित्यर्थे क्रियमाणे परमेश्वर्याः पक्षपातप्रसङ्गेन जगदम्बिकात्वं व्याहन्येतेति। एवं सर्वप्रकारेण तव चरणयोरेव सातिशयत्वादिति। अत्रातिशयोक्तिरलङ्कारः। हिमानीति पद्यरहस्यार्थः। हिमानीति श्लोके श्रियमपीति पदेन तद्बीजोद्धारः॥ ८७॥

तात्पर्यदीपिनी

हिमानीति। हे जननि त्रिभुवनसवित्रि, त्वत्पादौ त्वच्चरणौ समग्रगुणसंपन्नौ न्यूनगुणं सरोजं जयतः। इदमस्मिन्नर्थे चित्रं किं किमाश्चर्यं, न किञ्चिदित्यर्थः। कुतः? कीदृक्

सरोजं, हिमानीहन्तव्यं हिमान्या हिमवर्षेण हन्तव्यं नष्टकान्ति, किंविधौ चरणौ हिमगिरिनिवासैकचतुरौ हिमप्रधानो यो गिरिः, तत्र निवासः, तत्र चतुरौ निपुणौ। पुनः कीदृक्, सरोजं निशायां रजन्यां निद्राणं संकुचितम्। पुनः कीदृशौ चरणौ निशि च परभागेन विशदौ गुणोत्कर्षेण निर्मलौ। कीदृक् कमलं, परं केवलं लक्ष्मीपात्रं लक्ष्म्याः श्रियः पात्रं अवस्थानस्थलम्। न तु दानवचने भोगे वा क्षमम्। यत्कृपणः बहुतरं धनं प्राप्य केवलं निक्षिप्यैव रक्षति, न विनियुंक्ते न भुंक्ते, तद्धनं त्यागभोगहीनं परगामि नष्टं वा भवति। नित्याप्यनुगता लक्ष्मीः कस्याप्यनुपकारिणी भूत्वा नश्यति। कीदृशौ त्वत्पादौ समयिनां परमेश्वरीसिद्धितन्मार्गप्रवेशिनां श्रियमैश्वर्यं संपदं अति अत्यन्तं सृजन्तौ ददानौ, यन्मनसा कांक्षितं ततोऽप्यधिकतरमभ्युदयं ददानाविति अतिशब्देन प्रतिपाद्यते। तथा च सुरथनाम्ने राज्यप्राप्तिः अधिकं मनुत्वं च चण्डिकायाः प्रसादाज्जातमिति देवीपुराणे श्रूयते॥ ८७॥

### पदार्थचन्द्रिका

पुनरपि चरणौ वर्णयति—हिमानीति। हे जननि त्वत्पादौ सरोजं जयत इतीह किं चित्रं किमाश्चर्यमित्यर्थः। न किमपीत्यर्थः। जयहेतुभूतान्वक्तुं पादौ विशेषयन् अभिभवहेतुभूतान् दोषान्वक्तुं सरोजमपि विशिनष्टि हिमानीति। हिमान्या हन्तव्यं हिमानीहन्तव्यं निद्राणं मुकुलितं परभागे दिवसे च विशदौ अम्लानावित्यर्थः। प्रणयिनां भक्तानां श्रियमपि सृजन्तौ ददतौ॥ ८७॥

### डिण्डिमभाष्यम्

हे जननि त्रिभुवनसवित्रि! त्वत्पादौ तव चरणौ समग्रगुणसंपन्नौ न्यूनगुणसरोजं जयत इति किं चित्रम्। कुतः? सरोजं कीदृक्, चरणौ कीदृशौ इत्याह—सरोजं तु हिमानीहन्तव्यं तुहिनवर्षणेन नष्टकान्ति। 'हिमानी हिमसन्ततिः' इत्यमरः। तव चरणौ तु हिमगिरितटाक्रान्तिरुचिरौ हिमप्रधानस्य गिरेः तटाक्रान्तावपि कण्टकसञ्चारेऽपि रुचिरौ अनुपहतसौभाग्यौ, पुनः कमलं निशायां रात्रौ निद्राणं निमीलितं, तौ तु निशि च रात्रावपि परभागेन विरुद्धकान्तिसंसर्गात् विशदौ कमनीयौ, रात्रिः खलु तमोबहुलत्वात् श्यामवर्णा। चरणयोः सहजपाटलकान्तिसंबन्धात् विरुद्धवर्णविन्यासे सति यः कमनीयः कान्तिविशिष्टः स 'परभाग' इत्युच्यते। पर उत्कृष्टश्चासौ भागो भक्तिश्चेति परभागः। 'परभागो भवेद्वर्णद्वयसंसर्गजा रुचिः' इति मम्मटाचार्यः। अत एव रात्रौ विशेषेण सुन्दरौ। कमलन्तु परं केवलं लक्ष्म्याः श्रियः पात्रं अवस्थानस्थलं, न तु तस्य दाने वा विनियोगे वा क्षमम्। यः कृपणो बहुतरधनं प्राप्य केवलं निक्षेपादेव रक्षति न विनियुङ्क्ते न भुङ्क्ते। भोगत्यागहीनं च

तद्धनमन्यैर्वा नीयते, नष्टं वा भवति, इत्यनित्या सा पद्मगता लक्ष्मीः कस्यापि अनुपकारिणी भूत्वा हेमन्ते हिमवर्षेण नश्यति। त्वत्पादौ तु समयिनां समयवर्तिनां परमेश्वरीसिद्धान्तमार्गप्रवेशिनां श्रियमैश्वर्यसंपदश्च अतिसृजन्तौ अत्यन्तमेव ददानौ। यन्मनसा काङ्क्षितं ततोऽप्यधिकतरमभ्युदयवृन्दं ददानावित्ययमर्थोऽतिशयेन प्रतिपाद्यते। चण्डिका खलु सुरथनाम्ना राज्ञा—'तेन वव्रे ततो राज्यमविभ्रंश्यन्यजन्मनि। अत्रैव च निजं राज्यं हतशत्रुबलं बलात्॥' इत्यनेन श्लोकेन कोलाविध्वंसिभिर्यवनैः शत्रुभिर्यद् राज्यमाक्रान्तं पुरुषक्रमागतं तदेवान्यस्मिन् जन्मनि अविभ्रंशि शत्रुभिरनष्टाधिकारमेव याचमानेन प्रार्थिता परमेश्वरी त्वमिन्द्रसमानाधिकारसौभाग्यैकसप्ततिचतुर्युगपरिमितमन्वन्तरदीर्घकालसुखसम्भोगोचितपञ्चाशत्कोटिविस्तीर्णभूमण्डलैकाधिपत्यसूचकसाम्राज्यच्छत्रशोभितमहाभ्युदयं मनुत्वराज्यमेव दत्तवती। अत एव चिन्तिताधिकप्रदानचतुरौ तव चरणौ, न सन्देह इति निश्चितम्॥ ८७॥

## गोपालसुन्दरी

हिमानीहन्तव्यमिति। हे जननि, त्वत्पादौ समग्रगुणसंपन्नौ, न्यूनगुणं सरोजं जयत इति किं चित्रं, न किमपीत्यर्थः। कीदृशं सरोजं, हिमानीहन्तव्यं, तुहिनसमूहेन नष्टकान्ति। तव चरणौ तु हिमगिरितटाक्रान्तावपि कटकसंचारेऽपि रुचिरौ, अनुपहतशोभौ। तथा सरोजं निशायां रात्रौ निद्राणं मुद्रितं, पादौ तु निशि रात्रौ परभागे दिने च विशदौ निर्मलौ। परभागेनेति पाठे रात्रौ परभागेन विरुद्धकान्तिसंसर्गेण विशदौ निर्मलौ, रात्रेस्तमोबाहुल्येन श्यामत्वात् चरणयोः सहजपाटलकान्तिविरुद्धत्वम्। 'परभागो भवेद्वर्णद्वयसंसर्गजा रुचिः' इत्यभिधानात्। तथा सरोजं परं केवलं लक्ष्म्याः श्रियः पात्रं भवति, स्थितिस्थापनं भवति, न तु तस्य दाने भोगे वा समर्थम्। त्वत्पादौ तु समयिनां त्वद्भक्तिमार्गप्रवेशिनां श्रियमैश्वर्यं सृजन्तौ ददानावित्यर्थः। विष्णुपक्षे, जननिनां समस्तजीवानां, जयतः पराजयतः। त्वत्पादावुक्तलक्षणौ सरोजं चोक्तलक्षणं इति किं चित्रमित्यर्थः॥

## आनन्दलहरीटीका

हिमानीति। हे जननि त्वत्पादौ बहुगुणौ सरोजं न्यूनगुणं जयतः पराभवतः। इह किं चित्रमाश्चर्यं, न किञ्चिदित्यर्थः। तदेवोपपादयति। कीदृशं सरोजं हिमानीभिः हिमसमूहैः हन्तव्यं नाश्यशोभं, चरणौ तु हिमगिरेस्तटेषु हिमालयप्रदेशविशेषेषु आक्रान्तौ चतुरौ कुशलौ। तत्राप्यनुपहतशोभाविति भावः। तथा सरोजं निशायां रात्रौ निद्राणं मुद्रितम्। एतौ निशि च परभागे च रुचिरौ, रात्रौ दिने च सशोभौ, विशदाविति पाठे निर्मलौ।

चद्वयं तुल्ययोग्यतासूचनार्थम्। परभागेनेति पाठे रात्रेस्तमोमयतया श्यामत्वेन, पादयोः स्वाभाविकरक्तत्वेन च वर्णद्वयसंबन्धेन मनोहराविल्यर्थः। तदुक्तं विश्वरूपकोशे—परभागो भवेद्वर्णद्वयसंसर्गजा रुचिरिति। तथा तत् परं केवलं लक्ष्म्याः पात्रं भाजनं अवस्थितिः। एतौ सृजन्तौ ददानौ त्वत्तन्त्रोक्ताचारवतां त्वद्भक्तानां येषां केषामपि त्वच्चरणौ संपादकाविति भावः। पात्रं तु भोजने योग्ये पात्रं तीरद्वयान्तरे इति, तथा समयः शपथाचारकाले सिद्धान्तसंविदोरिति विश्वप्रकाशः॥ ८७॥

पदं ते [1]कीर्तीनां प्रपदमपदं देवि विपदां
कथं नीतं सद्भिः कठिनकमठी[2]कर्परतुलाम्।
कथं वा [3]बाहुभ्यामुपयमनकाले पुरभिदा
यदादाय न्यस्तं दृषदि दयमानेन [4]मनसा॥ ८८॥

பதம் தே கீர்தீநாம் ப்ரபதமபதம் தேவி விபதாம்
1 3 1 1 1 1 1 3 1 3 3 1 3
கதம் நீதம் ஸத்பி: கடிந கமட கர்பரதுலாம்।
1 2 1 3 4 1 2 1 2 1 1 1
கதம் வா பாஹுப்யாம் உபயமநகாலே புரபிதா
1 2 3 4 1 1 1 4 3
யதாதாய ந்யஸ்தம் த்ருஷதி தயமாநேந மநஸா॥
3 3 1 3 3 3

तेरा प्रपद देवि सुयशों का पद है अपद संकटों का
अनुचित है कच्छप खप्पर का साम्य कठिन सत्कवियों का।
उसके लिए विवाह समय में पुरहर उठा उसे दयया
निज हाथों कैसे रख पाये परुष शिला पर प्रबल मिया!॥

लक्ष्मीधरा

पदं स्थानं ते तव, कीर्तीनां यशसां, प्रपदं पादाग्रं, अपदं अस्थानं, देवि! द्योतनशीले! भगवति! विपदां आपदां, कथं कथङ्कारं नीतं प्रापितं, सद्भिः कवीन्द्रैः, कठिनकमठीकर्परतुलां कठिनस्य कमठीकर्परस्य कूर्मपृष्ठकपालस्य तुलां, कथं वा कथंकृत्वा, बाहुभ्यां हस्ताभ्यां, उपयमनकाले विवाहसमये, पुरभिदा सदाशिवेन, यत् पदं आदाय गृहीत्वा, न्यस्तं क्षिप्तं, दृषदि उपलाधारभूता शिला दृषत्, उपलं हरिद्रादिद्रव्यस्य

1 कान्तीनां 2 खर्पर 3 हस्ताभ्यां 4 वपुषा।

पेषणिका शिला। तदाधारभूता शिला दृषत्। सा विवाहसमये अश्मस्थापनानुष्ठानार्थं पात्रत्वेन प्रयुक्ता। तस्यां दृषदि दयमानेन दयान्वता, मनसा। दयां विहायातिमृदुलं पादाम्बुजं दृषदि कथं स्थापितं शम्भुना। अमृतस्यन्दिनीभिः वाग्विलासैः कवीश्वराः कमठपृष्ठेन तुल्यतया कथम्? एतदुभयमयुक्तमित्यर्थः। अत्रेत्थं पदयोजना — हे देवि! कीर्तीनां पदं विपदामपदं ते प्रपदं सद्भिः कठिनकमठीकर्परतुलां कथं नीतम्? दयमानेन मनसा पुरभिदा उपयमनकाले बाहुभ्यां यदादाय कथं वा दृषदि न्यस्तम्? अत्रानन्वयालङ्कारो ध्वन्यते, सदृशान्तरनिषेधात् असदृशस्य पादाम्बुजवस्तुनः स्वयमेव स्वस्य तुल्यमिति प्रतीतेः॥ ८८॥

सौभाग्यवर्धनी

पादाग्रं स्तौति पदमिति। हे देवि! ते प्रपदं पादाग्रं, कान्तीनां पदं स्थानं, विपदां अपदं अनधिकरणं, कालत्रयेऽपि विपत्संभवविधुरं, सद्भिः पुरातनकविभिः, कठिनकमठीखर्परतुलां कठोरकच्छपीपृष्ठखर्परसाम्यं, कथं नीतं 'गूढगुल्फपदद्वन्द्वां प्रपदाजितकच्छपाम्' इत्यादौ पुरभिदा हस्ताभ्यां, उपयमनकाले विवाहसंप्रयुक्ताश्मारोपणकाले, दयमानेन मनसा दयाशबलचेतसा, यदादाय दृषदि कथं विन्यस्तम्? परशुधनुराकर्षणकिणहस्ताभ्यामादाय दृषदि कथं न्यस्तम्? अहो चिरन्तनकवीनां पुरभिदश्चाविवेक इति भावः॥

अरुणामोदिनी

पादाग्रं वर्णयति — पदमिति। हे देवि! प्रकाशमानविग्रहे, कीर्तीनां प्रशंसानां स्तुतीनां, 'कीर्तिः प्रशंसायशसोः' इति रत्नमाला। पदं स्थानं, निरन्तरप्रशंसावर्णनयोः स्थानमित्यर्थः। कुत एतदित्यत्राह — विपदां आध्यात्मिकादीनां सांसारिकदुःखानां, अपदं अस्थानं, समस्तापद्रहितम्। तन्निवारकं चेत्यर्थः। ते भवत्याः प्रपदं पादाग्रं, 'पादाग्रं प्रपदं' इत्यमरः। सद्भिः, उपमानीकरणचातुरीधुरीणैः प्राचीनकविभिः उपमादोषविधानज्ञैः असूयादिदोषादूषितैश्चेत्यभिसन्धिः। कठिनकमठीकर्परतुलां, कठिनोऽतिपरुषः यः कमठीकर्परः डुलीपृष्ठभागः। 'वर्षाभ्वी कमठी डुली' इत्यमरः। तेन परुषतया उपमानानर्हेण तुलां साम्यं कथं केन प्रकारेण वा नीतं प्रापितम्। सत्स्वभावैरप्यादिकविभिः, दुर्हृदयैरिव अतिमार्दवकाठिन्याभ्यां परस्परसाम्यानर्हयोः विपदनभिज्ञभवत्पादाग्रकमठीपृष्ठयोः, 'स्वपादाग्रनिर्धूतकूर्मेशपृष्ठां' 'गूढगुल्फा कूर्मपृष्ठजयिष्णुप्रपदान्विता' इत्यादिना निर्दयं कथं साम्यमुक्तमित्यर्थः। अतस्तद्विचार्यमेवेति भावः। विपदनभिज्ञत्वज्ञापनपूर्वकमुक्तार्थमेव द्रढयति — कथं वेति। किं च उपयमनकाले पाणिग्रहणसमये, पुरभिदा त्रिपुरान्तकेन, अतिकठिनहृदयेनेत्यभिसन्धिः। हस्ताभ्यां पाणिभ्यां, यत्पदं, तदेकदेशमङ्गुष्ठमित्यर्थः। आदाय परिगृह्य, 'आतिष्ठम-

अश्मानमश्मेव त्वं स्थिरा भव' इति मन्त्रेण परिगृह्य, दयमानेन करुणाविष्टेन, मनसा मृदुलेनान्तःकरणेन, दृषदि उपलाधारभूते पिष्टादिपेषणसाधनेऽश्मनि, अनुचितस्थान इत्यभिसन्धिः। कथं केन प्रकारेण वा न्यस्तं निहितम्। विवाहसमये गृहिधर्माणां धर्मार्थादीनां सर्वेषां गृहे गृहिण्यधीनत्वेन, अन्नवस्त्रपशुपुत्रादिसमृद्धिमत्या त्वया कदाचिदपि मदनुकूल्यरूपाद्धर्मात् न चलितव्यमित्यभिप्रायेण, 'सोमः प्रथमो विविदे गन्धर्वः' इत्यारभ्य 'मह्यं त्वाऽदुर्गार्हपत्याय देवाः' इत्यन्तेन मन्त्रजातेन कन्यायाः स्वीयतां प्रतिपाद्य, ततश्च 'मन्मनसं कृणोतु' इत्यन्तमानुकूल्यं संप्रार्थ्य ततश्च तस्याः पशुपुत्रादिसमृद्धिप्राप्त्याशंसनरूपं, 'एकमिषे' इत्यादिमन्त्रजातेन सप्तपद्यनुक्रमणं विधाय, चरणग्रहणपूर्वकं अश्माधिरोहणस्य लौकिककन्याया विहितत्वात्, एवमलौकिककन्याया देव्या अप्यवश्यंभावात्, जगत्कुटुम्बभरणभारं भवत्यां विन्यस्य, स्वयमुदासीनवत् भाररहितो भवानि इति, पादोपग्रहणं कृत्वा, अतिकठिने दृषत्प्रदेशेऽधिरोहणं कथं वा अनेनातिमृदुलेन कारितम्? इत्यर्थः। त्रिपुरान्तकस्यापि दयारससंपादकं भवच्चरणाग्रं वैधदृषत्प्रदेशनिवेशवेलायामपि इत्यतिसौकुमार्यं सूचितम्। अत्रातिशयोक्त्यनुप्रासयोः संसृष्टिः * ॥ ८८ ॥

## तात्पर्यदीपिनी

पदमिति। हे परमेश्वरि तव चरणं किं वर्णयामः। यत्कीर्तीनां यशसां पदं स्थानं अनुपममिति प्रसिद्धम्। तत्रोपमादानं महदनुचितमेव। ततोऽपि ते प्रपदं कठिनकमठीखर्परतुलां कठिनं अतिकठोरं कमठ्याः खर्परं पृष्ठं तस्य तुलां साम्यं कथं केन प्रकारेण नीतं प्रापितम्। एतेन ते सन्त एव न भवन्तीत्याक्षेपः। अतुलस्य तव प्रपदस्य तुला साम्यं विपदेव। कीदृक् प्रपदं विपदामपदं, आपदामस्थानं, अतो विपत्संपादनमनुचितमिति भावः। एवं प्रपदस्य सौभाग्यं वर्णयित्वा तदेव विशिनष्टि, पुनः कीदृक्, पुरभिदा महादेवेन उपयमनकाले विवाहकाले दृषदि विवाहकर्मोचिते प्रस्तरे दयमानेन दयां कुर्वता मनसा सह उभाभ्यां हस्ताभ्यां यच्चरणमादाय कथमिवातिदुःखेन न्यस्तमारोपितं, कर्मलङ्घनं साहसिकं अकृत्वा शनैः मृदुतरं यत्नेन न्यस्तम्। अस्यार्थः—विवाहवेलायां प्रथमत एव सर्वाचारोपदेशिकेन महादेवेन यत्तव चरणार्हणं क्रियते, तत्प्रार्थनैव। हे परमेश्वरि ब्रह्माण्डगृहेऽहं गृही, त्वं गृहिणी, गृहिणा मया मायानिरासेन निश्चेष्टेन परब्रह्मानुसन्धानं क्रियते, त्वयैव सर्वे लोकाः पोषणीयाः, ममापि कार्यं त्वयैव कर्तव्यम्। लोके गृहकार्यं गृहिण्या गृहिणा च क्रियते। गृहिण्या तावदत्यन्तं गृहे रम्यते भुज्यते, सर्वपुत्रमित्रादिभिः समम्। अहं तु केवलं मध्यस्थः,

* अस्य श्लोकस्य आनन्दगिरीयव्याख्या नोपलभ्यते।

त्वयि विन्यस्तभारः, त्वल्लीलानाट्यदर्शी तिष्ठामि । त्वयैव सर्वोऽपि संसारनिर्वाहः कर्तव्य इति चरणग्रहणस्य वासना । ननु स्त्रीणां भर्तुश्चरणग्रहणं समुचितं, पुरुषेन स्त्रीचरणग्रहणमिति चेत्सत्यम् । तत्रैव स्मृतिवचनं 'सर्वांगेषु स्त्रियो मेध्यास्तीर्थभूताश्च ता यतः । अश्वास्तु मुखतो मेध्या गावो मेध्यास्तु पृष्ठतः । ब्राह्मणाः पादतो मेध्याः स्त्रियो मेध्यास्तु सर्वतः ।' इति स्मृतिप्रामाण्यात् संभोगे ओष्ठाधरचुम्बनादौ न दोषः । ननु स्त्रीमुखं सदा शुचि इति वचनादधरचुम्बनमेवाचारो भवतु, इतरचुम्बने प्रामाण्याभाव इति चेन्न । स्त्रियो मेध्यास्तु सर्वत इति वचनबलेन सर्वाङ्गपवित्राणां स्त्रीणां नयनदोर्मूलकुचाग्रनाभिमूलचरणाग्रचुम्बनानि कामशास्त्रप्रसिद्धानि महाकविभिरपि काव्येषु प्रयुक्तानि प्रामाणिकान्येतानि स्त्रीणां सर्वाङ्ग पवित्रतां विना न संभवन्ति । इत्थं पवित्राणां स्त्रीणां विवाहसमये चरणग्रहणं न दोषः इत्यलमतिप्रसङ्गेन ॥

पदार्थचन्द्रिका

अथ पादाग्रं वर्णयति—पदमिति । हे देवि ते प्रपदं पादाग्रं सद्भिः कठिनकमठीकर्परतुलां कथं नीतम् । उपयमनकाले विवाहकाले पुरभिदा बाहुभ्यामादाय दृषदि न्यस्तमिति, यत्तत्कथम् । एतद्द्वयमनुचितमित्यर्थः । कठिनकमठीकर्परतुलां कठोरकच्छपकपालोपमाम् । दयमानेन दयायुक्तेन मनसोपलक्षितेन पुरभिदा महादेवेन । वपुषेति पाठे एष एवार्थः । मनसोऽपि सूक्ष्मवपुःशब्दवाच्यत्वात् । प्रपदं विशिनष्टि – कान्तीनां पदं स्थानं परमसुन्दरत्वात् । विपदामपदमस्थानम् । नीधातोः द्विकर्मकत्वेनैकस्मिन् कर्मणि उक्तेऽपि द्वितीयं कर्मानुक्तमिति कठिनकमठीकर्परतुलां इत्यत्र द्वितीया । कर्परः स्यात्कपाले च शस्त्रभेदकटाहयोरिति मेदिनीकरः । खर्परतुलामिति क्वचित्पाठः ॥ ८८ ॥

डिण्डिमभाष्यम्

पदं त इति । हे परमेश्वरि सहजललितं सौभाग्यसुन्दरं तव चरणं पदं स्थानं कान्तीनामनुपमितमिति, तस्य चरणारविन्दस्य प्रपदं कठिनेन कर्कशेन कमठीखर्परेण तुलयन्ति । तदेव तेषामनुचितकरणम् । अत एव कमठीखर्परतुलां कमठ्याः कच्छपवध्वाः खर्परेण पृष्ठभागेन तुलामुपमानं सद्भिः कथं नीतम् ? सन्त एवं न भवन्तीत्यस्याक्षेपः । हे देवि तव खलु प्रपदस्यातुलस्यापि तुलासंपादनं विपदेव । विपदामपदे तव प्रपदे विपदुत्पत्तिरनुचितेति भावः । अत एवोक्तं विपदामपदमिति । एवं प्रपदस्य सौभाग्यं वर्णयित्वा तदेव विशिनष्टि, पूर्वं उपयमनकाले विवाहसमये पुरभिदा महादेवेन दृषदि विवाहकर्मोचिते प्रस्तरे 'आरोहेममश्मानमश्मेव त्वं स्थिरा भव' इति मन्त्रेण वरेण कन्यायाश्चरणमस्मिन् निधीयते वैदिककर्मस्वातन्त्र्यात् । अत एव दयमानेन दयां कुर्वता मनसा सह पुरभिदा महादेवेन

पाणिभ्यामुभाभ्यामपि गृहीत्वा दृषदि त्वच्चरणं न्यस्तम्। कथं, शुचीति वचनात्, अधरचुम्बनमात्रमेवाचारो भवतु, इतरचुम्बनेषु प्रामाण्याभाव इति चेत् न 'स्त्रियो मेध्यास्तु सर्वतः' इति मेध्यतावचनबलेन सर्वाङ्गे पवित्राणां स्त्रीणां नयनदे मूलकुचाग्रनाभिमूलचरणाग्रचुम्बनानि कामशास्त्रप्रसिद्धानि महाकविभिरपि काव्येषु प्रयुक्तानि प्रामाणिकान्येतानि स्त्रीणां सर्वाङ्गपवित्रतां विना न संभवन्ति। इत्थं पवित्राणां स्त्रीणां विवाहसमये चरणग्रहणं न दोषः। स्त्रियो महतीभिर्देवताभिः कृतानुग्रहा नित्यपवित्रा एव जायन्ते। तां खलु कन्यां विवाहादिचतुर्दिवसेषु प्रथमरात्रौ सोमनाथो भुङ्क्ते। भुक्त्वा गच्छन् वरं ददाति, किं? शुचितां नित्यशुद्धताम्। स्नानेऽपि अस्नानेऽपि स्त्रियः सर्वदा पवित्रा एव 'सोमः शौचं ददौ तासाम्' इति वचनात्। द्वितीयरात्रौ तां कन्यां गन्धर्वराजो भुङ्क्ते 'सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः' इति वचनात्। स तु विश्वावसुर्गन्धर्वराजस्तां कन्यां भुक्त्वा गच्छन् वरं ददाति, स्त्रियः खलु सोमवत्योऽपि शुद्धकण्ठस्वना भवन्ति किमुत आलपन्त्यः किमुत गायन्त्यः? तृतीयरात्रौ भगवान् यज्ञपुरुषो वह्निस्तां कन्यां भुक्त्वा गच्छन् वरं ददाति 'सर्वभक्ष्या भव' इति। अतः स्त्रीणां सर्वभक्षणे दोषो नास्ति। भक्ष्याभक्ष्यविचारशून्यास्तथापि पवित्रा एव, वरप्रदानार्थं भोगोऽपि वेदेन 'तृतीयोऽग्निष्टे पतिः' इति। एवमेव महतीनां देवतानामनुग्रहे सति गृहिणीजनस्य गृहिजनेन क्रियमाणे तच्चरणग्रहणे दोषशङ्काकलङ्कोऽपि दूरापास्तः॥ ८८॥

गोपालसुन्दरी

पदं त इति। हे देवि! ते तव प्रपदं पादाग्रं कान्तीनां पदं स्थानम्, विपदामपदमस्थानम्। कठिना या कच्छपी तस्या यत्खर्परं पृष्ठकपालं तस्य तुलां साम्यं सद्भिः कथं नीतम्? प्रपदस्यातिकोमलत्वादित्यर्थः। अकोमलत्वे च उपयमनकाले विवाहसमये दयमानेन दयाकुलेन मनसा कारणभूतेन पुरभिदा शिवेन बाहुभ्यामादाय दृषदि विवाहकर्मोचिते पाषाणे तत् प्रपदं कथं न्यस्तमित्यर्थः। विष्णुपक्षे—देवा अस्मिन् सन्तीति देवि, सकलदेवाश्रयमिति प्रपदविशेषणम्। दृषदि रत्नसिंहासनरूपे उपयमनकाले दर्शनार्थमागतस्य विष्णोरतिदयया रत्नसिंहासने प्रपदं शिवेन न्यस्तमित्याशयः॥ ८८॥

आनन्दलहरीटीका

पदमिति। हे देवि ते तव प्रपदं पादाग्रं कान्तीनां पदं स्थानं तथा विपदामपदं, न विद्यते पदं स्थानं यस्मात्तदपदं विपत्तिनिवारकमिति यावत्। एतादृशमपि सद्भिस्तान्त्रिकैः कठिनं यत्कमठ्याः कर्परं पृष्ठकपालं तेन सह कथं तुलां साम्यं नीतं प्रापितम्। तथा तव ध्याने

गूढगुल्फपदद्वन्द्वप्रपदाजितकच्छपामिति। पुरभिदा महादेवेन उपयमनस्य विवाहस्य काले बाहुभ्यां तत्प्रपदं आदाय गृहीत्वा दृषदि शिलायां कथं वा न्यस्तमर्पितम्। कीदृशेन दयमानेन दयायुक्तेन मनसा विशिष्टेन, विशेषणे तृतीया। मृदुकुसुमाद्युपरिस्थापनार्हस्य तस्य कठोरशिलायामर्पणे किं तस्य दया न जातेति भावः। पाणिग्रहणकाले वरो वधूमश्मानमाक्रामयतीति गृह्योक्तत्वादित्थं वर्णितम्। आक्षेपालङ्कारः। स्योत्कर्परः कपालोऽस्त्रीत्यमरः॥ ८८॥

**नखैर्नाकस्त्रीणां करकमलसङ्कोचशशिभिः**
**तरूणां दिव्यानां हसत इव ते चण्डि चरणौ।**
**फलानि [1]स्वःस्थेभ्यः किसलयकराग्रेण [2]ददतां**
**दरिद्रेभ्यो भद्रां श्रियमनिशमह्नाय ददतौ॥ ८९॥**

நகைர் நாகஸ்த்ரீணாம் கரகமல ஸங்கோச சசிபி:
2 1 1 1 1 1 1 4
தருணாம் திவ்யாநாம் ஹஸத இவ தே சண்டி சரணௌ ।
1 3 1 1 1 3 1
பலாநி ஸ்வஸ்ஸ்தேப்ய: கிஸலய கராக்ரேண தததாம்
2 2 4 1 1 3 3 3 1
தரித்ரேப்யோ பத்ராம் ச்ரியமநிசமஹ்நாய தததௌ ॥
3 3 4 4 3 3 1

तुरत दरिद्रों को सन्ततमङ्गल बरसाने में तत्पर
तेरे चरण चण्डि हंसते से हैं नख गणसे निज भास्वर
किसलय उङ्गलियों से स्वस्थ जनों को फल देने वाले
कल्पकवृक्षों को दिवि के औ मुकुलित कर देने वाले
नाकरमणियों के कर कमलों के शशिसम शुचि नखरों से
शोभा पाते हैं भक्तों का बन सर्वस्व शुभवरों से॥

लक्ष्मीधरा

नखैः नखरैः, नाकस्त्रीणां सुराङ्गनानां शच्यादीनां, करकमलसङ्कोचशशिभिः करा एव कमलानि तेषां सङ्कोचे मुकुलीभावे शशिनः चन्द्रात्मकाः पाददर्शनवेलायां नखकान्तयः चन्द्रकिरणा इव तत्करान् मुकुलयन्ति अञ्जलिसन्धानं कारयन्ति। तरूणां वृक्षाणां, दिव्यानां दिवि भवानां, हसतः। तरूणां हसत इति कर्मणि षष्ठी। हसन्तौ इव ते तव, चण्डि!

1 स्वस्थेभ्यः, 2 दधतां।

भगवति! चरणौ फलानि स्वस्स्थेभ्यः स्वर्गस्थेभ्य एव न तु दरिद्रेभ्य इति विशेषणवशात्प्रतीयते। किसलयकराग्रेण किसलया एव कराः तेषामग्रं तेन, ददतां दिशतां, दरिद्रेभ्यो दीनेभ्यश्च, भद्रां अमन्दां श्रियं लक्ष्मीं, अनिशं सर्वदा, अह्नाय शीघ्रं, ददतौ। अयमर्थः—कल्पवृक्षः किसलयकरैः स्वस्स्थेभ्य एव आशानुसारेण शनैश्शनैः फलं ददति। ते पादाम्बुजं तु स्वस्स्थेभ्यो दरिद्रेभ्यश्च शीघ्रं भद्रां श्रियं ददातीति व्यतिरेकः। अत्रेत्थं पदयोजना—हे चण्डि! किसलयकराग्रेण स्वस्स्थेभ्यः एव फलानि ददतां दिव्यानां तरूणां दरिद्रेभ्यो भद्रां श्रियं अनिशमह्नाय ददतौ ते चरणौ नाकस्त्रीणां करकमलसङ्कोचशशिभिः नखैः हसत इव। अत्र व्यतिरेकालङ्कारः स्फुट एव। स च स्वस्स्थेभ्य इत्यत्र श्लेषानुप्राणित इत्यनुसन्धेयम्॥ ८९॥

सौभाग्यवर्धनी

श्रीदेव्याश्चरणकमलयोः भक्तजनाभीष्टप्रदानप्रवणत्वमाह—नखैरिति। हे चण्डि, भक्तजनविपद्विभञ्जनप्रचण्डे, नाकस्त्रीणां देवाङ्गनानां, करकमलसङ्कोचशशिभिः, प्रणामसमये देवाङ्गनानां करकमलमुकुलीकरणे शशिरूपैर्नखैः, तव चरणौ दिव्यानां तरूणां हसत इव। कर्मणि षष्ठी। कल्पतरून् हसतः इत्यर्थः। हासे हेतुमाह—फलानीति। फलानि इष्टानि स्वस्थेभ्यः सुखेन तिष्ठद्भ्यः, अथवा स्वर्गस्थेभ्यः, किसलयकराग्रेण ददतां किसलयाकारकराग्रेण प्रयच्छतां, दरिद्रेभ्यः श्रियमनिशं अह्नाय सर्वदा अत्यर्थं, भद्रां अनश्वरां, वितरन्तौ। कल्पतरवः मरणानन्तरं स्वर्गस्थेभ्यः सुखेन तिष्ठद्भ्यो देवेभ्यश्च फलानि किसलयकराग्रेण ददतः। तव चरणौ, हे चण्डिके, चमत्कारकारिकान्तिकल्लोलदिगन्तैः नखशशिभिः कल्पतरून् हसत इत्यर्थः। अत्र स्वस्थेभ्य इति श्लिष्टपदसामर्थ्यात् कल्पतरुहासोऽभिद्योतित इति समासोक्तिः। स्वर्भवास्तरवः कराग्रेण स्वर्गवासिभ्यः कतिपयदिनैर्नश्वरां श्रियं कदाचित् ददति, तव चरणौ चैहिकामुष्मिकसुखसन्तानसमुल्लसितां श्रियं वितरन्तौ हसत इति किमाश्चर्यमिति भावः॥ ८९॥

अरुणामोदिनी

चरणयोरिष्टार्थप्रदानप्रवणत्वमेवाह—नखैरिति। चण्डत इति चण्डी कोपना, तस्याः संबुद्धिः, हे चण्डि भजद्भक्तजनविपद्व्राजनदूरीकरणनैपुण्येन अन्वर्थाभिधाने देवि। इदं च मार्कण्डेये प्रसिद्धम्। अनिशं निरन्तरं, दरिद्रेभ्यो दीनेभ्यः, भद्रां समृद्धां, समस्तकल्याणास्पदां वा, श्रियं पदं, अह्नाय शीघ्रमेव। 'द्राग्झटित्यञ्जसाह्नाय' इत्यमरः। ददतौ सर्वदा वितरन्तौ, शत्रन्तेन वर्तमानार्थकलडादेशेन सर्वेष्टप्रदानप्रवणता सूच्यते। ते

भवत्याः, चरणौ पादौ, तरुभ्यः तज्ज्ञाविति ध्वनिः। नाकस्त्रीणां सुराङ्गनानां शच्यादीनां, करकमलसंकोचशशिभिः करा एव कमलानि पङ्कजानि, तेषां संकोचे मुकुलने शशिभिः चन्द्रैः, देवाङ्गनानां देवीसेवावसरे अंजलिकरणेन करसंकोचादिति भावः। नखैः नखरैः, अतिधवलैरित्यर्थः। किसलयान्येव कराः, तेषामग्रेण, स्वस्स्थेभ्यः स्वर्गस्थेभ्यः, न त्वितरलोकवासिभ्यः, सुखेन तिष्ठन्तीति स्वस्थाः, तेभ्यो धनिकेभ्यश्च, न तु दरिद्रेभ्य इत्यभिसन्धिः। फलानि मनोरथान्, ददतां वितरतां, दिव्यानां दिविभवानां, तरूणां कल्पवृक्षाणां, हसतः स्मयत इव। भवच्चरणौ च अतिदरिद्रसमृद्धश्रीप्रदानपरायणौ, सकललोकसर्वेष्टदानक्षमौ सन्तौ, देवतानामेव इष्टार्थदानप्रवणान् श्रवणपथमात्रगतान् दीनजनावनविमुखान् कल्पतरून् हसत इवेत्यर्थः। कर्मणि षष्ठी। रूपकद्वयानुप्राणितेयमत्र हसनोत्प्रेक्षा। तया च सकललोकसाधारण्येन इष्टार्थवितरणासक्ताभ्यां चरणाभ्यां, स्वर्गवासिभ्य एव कतिपयदिनवर्तिनश्वरश्रीप्रदातॄणां कल्पतरूणां न्यूनता, तयोश्च व्यतिरेको व्यज्यते॥ ८९॥

आनन्दगिरीया

नखैरिति। हे नारायणि, तव चरणौ सरोजं जयतः, तत्र किं चित्रमित्युक्तम्। इदानीं तु तव चरणौ दिव्यान् कल्पद्रुमादीनपि जयत इत्युच्यते। हे चण्डि, (पादा चण्डिपि विनाश क्वचित्पाठः) तव चरणौ दिव्यानां तरूणां कल्पद्रुमादीनां हसतः। अत्र कर्मणि षष्ठी। तरूनुपहसतः। कैः नखैः, किंलक्षणैर्नखैः, नाकस्त्रीणां करकमलसंकोचशशिभिः, देवाङ्गना यदा परमेश्वरीचरणौ नमस्कुर्वन्ति, तदा तच्चरणसमीपमागत्य मुकुलितहस्तैः प्रणमन्ति। तत्रोत्प्रेक्षा क्रियते। अयं यो देवाङ्गनानां करकमलेषु मुकुलभावो जातः, स परमेश्वरीचरणनखरूपचन्द्रप्रभासंसर्गादिनेति। नाकस्त्रीणामिति अलुक्समासः। नाकस्त्रीणां यानि करकमलानि तेषां यः संकोचो मुकुलीकरणं तत्र शशिनः चन्द्राः, तैः, दिव्यानां दिवि स्वर्गे भवा दिव्यास्तेषां, मन्दारपारिजातकल्पद्रुमादीनां किसलयलक्षणास्तु नखाः, स्वच्छन्दार्थं नाकस्त्रीणां करकमलानि विकाशयन्ति। सुन्दरं किसलयं दृष्ट्वा स्त्रियोऽलङ्कारायापचिन्वन्ति। तेषामपकर्षमाह — किंविधानां, स्वस्स्थेभ्यः किसलयकराग्रेण, किसलयं पल्लवं तल्लक्षणं यत्कराग्रं तेन, भुक्त्यादि ददतः, स्वस्थेभ्यो निराकुलेभ्यः स्वर्गस्थेभ्य एव वा। मृत्वा पूर्वदेहत्यागेन स्वर्गो गम्यते। हस्तं प्रसार्य यदा प्रार्थ्यते हस्तप्रसारणं कारयति, तदा फलं प्रयच्छति। चरणयोरुत्कर्षमाह — कीदृशौ, दरिद्रेभ्यो भद्रां श्रियं कल्याणसहचरीं अनिशं सकलकालावस्थाव्यापिनीं, अह्नाय साक्षादिहैव लोके नमस्कारनान्तरीयकहस्तसंकोचं कारयित्वा ददतौ, दरिद्रेभ्यो दुःखितेभ्योऽस्वस्थेभ्य इति। किं च तेषां किसलयरूपाणि कराग्राण्य-

प्रकाशकानि । तव चरणनखास्तु सकलदिक्चक्रवालापवरकान्धकारनाशकचन्द्रिकाचमत्कार-चातुरीं दधाना इति। किं च तव चरणौ ऐहिकामुष्मिकफलदानसमर्थौ तान् हसतीति किं चित्रम्। समासोक्तिरलङ्कारः ॥ ८९ ॥

तात्पर्यदीपिनी

नखैरिति। हे चण्डि तव चरणौ नखैर्दिव्यानां तरूणां कल्पवृक्षादीनां हसत इव तरून्हसत इत्यर्थः। कर्मणि षष्ठी। कथंभूतैः, नाकस्त्रीणां शच्यादीनां सुरांगनानां करकमल-संकोचशशिभिः, करा एव कमलानि तेषां संकोचो मुकुलीभावः, तत्र शशिनश्चन्द्रात्मकाः, पाददर्शनवेलायां नखचन्द्रकान्तयः, चन्द्रकिरणा इव तत्करकमलानि मुकुलयन्ति अञ्जलिबद्धानि कुर्वन्ति। कथंभूतौ चरणौ, दरिद्रेभ्योऽनिशं निरन्तरमह्नाय झटिति श्रियं ददतौ। कथंभूतानां तरूणां, स्वस्स्थेभ्यो न तु दरिद्रेभ्यो फलानि किसलयकराग्रेण किसलया एव करास्तेषामग्राणि तैर्ददतां दिशतां दरिद्रेभ्योऽभद्रां अलक्ष्मीं दिशताम्। अयमर्थः—कल्पवृक्षाः किसलयकरैः स्वर्गस्थेभ्य एवाशानुसारेण शनैः शनैः श्रियं ददति। पदांबुजं तु स्वस्थेभ्यो दरिद्रेभ्यश्च श्रियं ददाति ॥ ८९ ॥

पदार्थचन्द्रिका

अथ पादपद्मनखान्वर्णयति—नखैरिति। हे चण्डि ते तव चरणौ नखैर्दिव्यानां तरूणां हसत इव। नाकस्त्रीणां स्वर्गे वर्तमानानां देवाङ्गनानां करकमलसङ्कोचशशिनः चन्द्रा-इति नखविशेषणम्। भवानीचरणनखान् नमस्कुर्वतीनां देवाङ्गनानां करकमलानि मुकुलितानि भवन्तीति नखानां शशित्वम्। स्वस्थेभ्यः स्वर्गिभ्यः। दिव्यवनेभ्यो विशेषं वक्तुं चरणौ विशिनष्टि—दरिद्रेभ्यो भद्रां कल्याणरूपां श्रियं लक्ष्मीं अनिशं निरन्तरं अह्नाय शीघ्रं ददतौ प्रयच्छन्तौ। तरूणामिति मतभेदेन कर्मण्यपि षष्ठी। यद्यपि चरणयोरत्र वर्णनं प्रतीयते तथापि करणत्वेन नखानामपि वर्णनम् ॥ ८९ ॥

डिण्डिमभाष्यम्

हे चण्डि! महायोगिनां योगसिद्धये तत्तद्धृदयसञ्जातयोगनियमविरोधिभूतकामक्रोध-लोभमोहमदमात्सर्याख्यारिषड्वर्गरूपमधुकैटभमहिषासुररक्तबीजशुम्भनिशुम्भषड्दैत्यमल्लदर्पविमोच-नाय चण्डनतया क्रोधनतया गृहीतदुर्गावेषा चण्डी त्वमेव निर्विण्णमोक्षदायिनीति, तन्नाम्ना सम्बुद्धि-बोधिते, न त्वप्रयासे, स्वस्स्थेभ्यः स्वर्गवासिभ्यः पूर्णधनेभ्यः किसलयकराग्रेण पल्लवहस्तेन फलानि ददतां कल्याणकल्पतरूणां तव चरणौ हसत इव। अनेन प्रकारेण गुणाधिक्यात्। किं तद्गुणाधिक्यं नाम? ते खलु कल्पतरवः स्वस्थेभ्यः संपूर्णधनेभ्यः धनं प्रयच्छन्ति। तव

चरणौ तु दरिद्रेभ्यः अकिञ्चनेभ्यः भद्रां संपूर्णां श्रियं धनसंपदमनिशं सर्वदैवाह्लाय वेगेन 'द्राग् झटित्यञ्जसाह्लाय सद्यः स्राङ् मङ्क्षु च द्रुतम्' इति विश्वः। ददतौ सर्वदा दातुमुद्युक्तौ, शत्रन्तस्य वर्तमानकालसंबन्धात्। तव चरणयोः दानकर्मविरहो नास्ति। एवंभूतौ तव चरणौ नाकस्त्रीणां देवाङ्गनानां करकमलसंकोचशशिभिः करकमलसंकोचकर्मणि चन्द्रायमाणैः। देवस्त्रियाः खलु अञ्जलिं कृत्वा नमस्कारवेलायां करकमलस्य संकोचो भवति ईदृशैर्नखैः चन्द्रप्रकाशैरिव दिव्यानां देवतरूणां हसत इव। देवतरूनुपहसत एवेत्यर्थः। 'विवक्षातः कारकाणि भवन्ति' इति वररुचिसूत्रन्यायात् कर्मणि षष्ठीति विवक्षा॥ ८९॥

गोपालसुन्दरी

नखैरिति। ते चरणौ दिव्यानां तरूणां कल्पवृक्षाणाम्। हसत इव, स्वस्य गुणाधिक्यादिति भावः। तरूणामिति कर्मणि षष्ठी। नखैः कीदृशैः? नाकस्त्रीणां स्वर्गाङ्गनानां करकमलसंकोचे हस्तपङ्कजमुकुलीकरणे शशिभिः चन्द्रायमाणैः, प्रणामसमये इति भावः। हासहेतुमाह–फलानीति। किसलयकराग्रेण नवदलरूपहस्ताग्रेण, स्वस्थेभ्यः स्वर्गस्थितेभ्यः, अथ च धनादिमत्तया सुखितेभ्यः। फलानि ददतां, तरूणामित्यस्य विशेषणम्। चरणौ विशिनष्टि, दरिद्रेभ्यो दुर्गतेभ्यः, भद्रां संपूर्णां, श्रियं लक्ष्मीं, अनिशं निरन्तरं, अह्नाय झटिति, ददतौ प्रयच्छन्तौ इत्यर्थः। विष्णुपक्षे–चण्डाः प्रचण्डाः फलदाने, रुद्रादयः देवा अस्य भक्ताः सन्तीति, चण्डी चासौ चरणश्च चण्डिचरणः, तौ चण्डिचरणौ, प्रौढफलददेवाश्रितावित्यर्थः। शेषं समानम्॥ ८९॥

आनन्दलहरीटीका

नखैरिति। हे चण्डि, ते तव चरणौ नखैः करणैर्दिव्यानां दिवि स्वर्गे जातानां तरूणां कल्पकवृक्षाणां हसतो हासं कुरुत इव, स्वापेक्षया न्यूनगुणत्वादिति भावः। हासस्य शुक्लतया वर्णनीयत्वादियमुत्प्रेक्षा। तरूणामिति हसधातुयोगात् कर्मणि षष्ठी। कीदृशैर्नखैः नाकस्त्रीणां करकमलस्य हस्तपद्मस्य सङ्कोचे मुद्रणे शशिभिश्चन्द्रतुल्यैः प्रणामाय कृताञ्जलितादशायामिति भावः। तरूणां कीदृशानां, स्वःस्थेभ्यः स्वर्गस्थेभ्यः, अथ च सुखिभ्यः किसलयं पल्लवस्तद्रूपो यः करो हस्तस्तस्याग्रेण फलानि ददतां, दधतामिति पाठे धारयतामित्यर्थः। इदं च हास्ये कारणम्। उत्कर्षे हेतुगर्भं विशेषणमाह–तौ कीदृशौ अह्नाय झटिति दरिद्रेभ्यो भद्रां अतिशयितां श्रियं संपदं ददतौ॥ ८९॥

*ददाने दीनेभ्यः श्रियमनिश[1]माशानुसदृशीं
अमन्दं सौन्दर्य[2]प्रकरमकरन्दं विकिरति।
तवास्मिन्मन्दारस्तबकसुभगे यातु चरणे
निमज्जन्मज्जीवः करण[3]चरणः षट्चरणताम् ॥ ९० ॥

ததாநே தீநேப்ய: ச்ரியமநிசமாசாநுஸத்ருசீம்
3 3 3 4 3
அமந்தம் ஸௌந்தர்யப்ரகர மகரந்தம் விகிரதி ।
3 3 1 1 1 3 1 1
தவாஸ்மிந் மந்தாரஸ்தபக ஸுபகே யாது சரணே
1 3 1 3 1 4 3 1 1
நிமஜ்ஜந் மஜ்ஜீவ: கரண சரண: ஷட்சரணதாம் ॥
1 1 1 1 1

दीनों को इच्छानुसार संतत लक्ष्मी देनेवाले
सुन्दरताओं का मकरन्द अमन्द बहा देनेवाले।
मन्दारस्तबकों सम सुन्दर सुरभित तेरे चरणों में
करणषट्कयुत मैं षट्पद बन विहरूं माँ श्रीचरणों मे ॥

लक्ष्मीधरा

ददाने ददति, दीनेभ्यो दरिद्रेभ्यः, श्रियं लक्ष्मीं, अनिशं आशानुसदृशीं वाञ्छानुरूपां, अमन्दं अधिकं, सौन्दर्यप्रकरमकरन्दं सौन्दर्यस्य लावण्यस्य प्रकरः समूह एव मकरन्दः पुष्परसः तं, विकिरति क्षिपति, तव भवत्याः, अस्मिन् दृश्यमाने, मन्दारस्तबकसुभगे कल्पवृक्षगुच्छसौभाग्यवति, यातु प्राप्नुयात्। चरणे पादाब्जे, निमज्जन् नितरां मज्जनं कुर्वन्, मज्जीवः अहं चासौ जीवश्च मज्जीवः, करणचरणः करणानि पञ्चेन्द्रियाणि मनष्षष्ठानि तान्येव चरणा यस्य सः षट्चरणतां भ्रमरत्वम्। अत्रेत्थं पदयोजना—हे भगवति! दीनेभ्यः आशानुसदृशीं श्रियं अनिशं ददाने अमन्दं सौन्दर्यप्रकरमकरन्दं विकिरति मन्दारस्तबकसुभगे अस्मिन् तव चरणे करणचरणः मज्जीवः निमज्जन् षट्चरणतां यातु। अत्रातिशयोक्तिरलङ्कारः, चरणस्य

*जपो जल्पः इति (२७) श्लोकसमनन्तरं पठितोयं श्लोकः सौभाग्यवर्धनीपदार्थचन्द्रिकाव्याख्याकाराभ्याम्। ततस्ताभ्यां तदनुसारिणी अवतारिका दत्ता दृश्यते।

1 मीशानसदृशीं 2 स्तबक 3 चरणैः

कमलत्वेन निगीर्याध्यवसानात्। मन्दारस्तबकसुभग इत्यत्र उपमालङ्कारः। अनयोस्संसृष्टिः। करणचरण इत्यत्र रूपकं, करणानां चरणत्वेन रूपणात्। मज्जीवष्षट्चरणतां यात्वित्यत्र परिणामालङ्कारः स्पष्टः। अनयोरङ्गाङ्गिभावेन सङ्करः। सौन्दर्यप्रकरमकरन्दं विकिरतीत्यत्र रूपकं निगीर्याध्यवसाने निमित्तम्। अत एव नैकदेशरूपकम्, अवयवानां प्रतिपादनात्। करणचरणष्षट्चरणतां यात्विति फलत्वेनोद्देशात् अवयवत्वं तस्य। अतोऽस्मिन् चरण इति आरोपविषयतया चरणमुपादाय कमलमारोप्यमाणबुद्ध्या निगीर्णमिति सम्यक्। एवं परिणामातिशययोः सङ्कर एव न तु संसृष्टिरिति ध्येयम्॥ ९०॥

### सौभाग्यवर्धनी

इत्थं भावमभिधाय एतस्या एव भावनाया हेतुभूतं भक्तिविशेषं प्रार्थयति—ददाने इति। हे देवि! दीनेभ्यः आशानुसदृशीं श्रियं अनिशं ददाने, पुनः अमन्दं यथा भवति तथा, सौन्दर्यसमूहरसान्, विकिरति सति, अस्मिन् तव चरणे, कल्पवृक्षकुसुमस्तबकमनोहरे मम जीवात्मा करणचरणैः मनसा सह षडिन्द्रियचरणैः, षट्चरणतां यातु। किं कुर्वन्, नितरां मज्जन्, तव चरणमन्दारगुच्छभक्तिरससहितानन्दमेदुरः सन्, विषयान्तरव्यापाररहितभवत्पादयुगलध्यानवशंवदो भवतु। तेन पूर्वोक्तभावनाफलरूपो जपो जल्पः इत्यादिसिद्धिः भविष्यतीति भावः॥ ९०॥

### अरुणामोदिनी

एवं चरणावुपवर्ण्य तत्रात्ममनसोरनवरतासक्तिं प्रार्थयते—ददान इति। हे देवि! अनिशं निरन्तरं, दीनेभ्यः दरिद्रेभ्यः आशानुसदृशीं वाञ्छानुरूपिणीं, श्रियं ऐश्वर्यं, ददाने वितरति, भक्तजनसंपन्नतमीकरणपरायण इत्यर्थः। किं च अमन्दं अधिकं यथा तथा, सौन्दर्यप्रकर एव मकरन्दः पुष्परसः, तं विकिरति विक्षिपति। मन्दारेऽपि दीनवाञ्छानुसरणं सौन्दर्यप्रकरस्य मकरन्दस्य च विशेषः प्रसिद्ध एव। मन्दारस्य पारिजाततरोः स्तबको गुच्छः तद्वत्सुभगे सुन्दरे, सर्वाभीष्टप्रदत्वसौन्दर्याभ्यामिति भावः। तव भवत्याः, अस्मिन् पूर्वोक्तगुणे मदनुग्रहाय पुनः प्रसारिते चरणे पादपङ्कजे भवदधिष्ठानभूतसंविच्चरणसंविच्चक्रे चेति ध्वनिः। निमज्जन् मग्नः सन्, मज्जीवः ममात्मनो जीवो जीवात्मा, यद्वा, अहं चासौ जीवश्च मज्जीवः, करणचरणः षडिन्द्रियैरेव षट्पदैः सहित इत्यर्थः। षट्चरणतां षडंघ्रितां भृङ्गायमानत्वं यातु प्राप्नोतु, निरन्तरं भवत्पदांबुज एव सक्तो भूयासमित्यर्थः। अत्रारोप्यमाणस्य षट्चरणत्वस्य देवीचरणावस्थितेः प्रकृतस्योपयोगात् परिणामालङ्कारः। स च सौन्दर्यप्रकरेत्यादिरूपकानुप्राणितः॥ ९०॥

आनन्दगिरीया

ददान इति। हे परमेश्वरि परमाणामपीश्वरि, अतस्तव चरणकमले मम जीवो जीवात्मा आध्यात्मिको देहः षट्चरणतां भ्रमरतां यातु प्राप्नोतु। तव स्वरूपानुभवानन्द-मकरन्दकामनया भृङ्गायमाणो भवत्वित्यर्थः। कैः करणचरणैः घ्राणरसनाचक्षुःश्रोत्रत्वङ्मनोभिः षड्भिरपि ज्ञानेन्द्रियैः, करणान्येव चरणाः, जिगमिषितदेशप्रापकत्वाच्चरणत्वमिन्द्रियाणां, चरतिरत्र गत्यर्थकतया प्राप्त्यर्थः चक्षुषा साक्षात्कारः, रसनेन गुणकीर्तनं चरणामृतपानं, घ्राणेन निर्माल्यपरिमलोपभोगः, श्रोत्रेण गुणश्रवणं, मनसा ध्यानानुसन्धानं, एवं भवत्प्राप्ति-साधकव्यापारपरायणैः षड्भिरपीन्द्रियैः चरणैरित्यर्थः। जीवस्य भ्रमरतां स्थापयितुं चरण-विशेषणमाह—किंलक्षणे चरणे मन्दारस्तबकसुभगे पारिजातकुसुमगुच्छायमाने। भ्रमरं प्रति तस्य लोभनीयतामाह—पुनः किंलक्षणे, दीनेभ्य आशानुसदृशीं श्रियं अनिशं निरन्तरं ददाने, इच्छानुरूपां लक्ष्मीं ददतीत्यर्थः। किंलक्षणो जीवः, निमज्जन्, तत्रेत्यनुषङ्गात्, निरन्तर-मतिशयेन मज्जन् आसक्तिं कुर्वन्। ददाने दीनेभ्य इति पद्यस्य रहस्यार्थः। भवत्कृपाकटाक्षा-वलोकितानां साधकानां निर्वाणचरणाम्भोधिनिमग्नानां नेदं कृत्यमित्याह—मन्दारस्तबकसुभगे ईशः स्वप्रकाशाख्यं प्रकाशविमर्शाख्यं निर्वाणाख्यं एते स्वकीयस्तबकीभूतं यत्तदणिमाद्यष्टैश्वर्यत्वं अमन्दं न मन्दं, अनित्यं न नित्यं सौन्दर्यं संवित् ज्ञानसमूहवितरणशीले। तथा यो वै तादृशः स शम्भुरेवेति भावः॥ ९०॥

तात्पर्यदीपिनी

ददाने इति। हे जननि मज्जीवः अहमिव जीवः प्राणिमात्रं, न तु मदीयो जीव इति विग्रहः, तव भगवत्या अस्मिन् प्रत्यक्षतो दृश्यमाने चरणे निमज्जनं कुर्वन् करणचरणैः करणानीन्द्रियाणि मनःषष्ठानि तान्येव चरणास्तैः षट्चरणतां षट् चरणा येषां तेषां भावस्तत्तां भ्रमरत्वं यातु प्राप्नोतु। किंभूते चरणे, दीनेभ्यो दरिद्रेभ्यः पूर्णाहंताविरहितेभ्यः। उभयत्रापि दरिद्रत्वं, अन्तर्दरिद्रता बाह्यदरिद्रता च। तत्रान्तर्दरिद्रस्वभावोऽपि मायया मोहितः सन् विश्वेश्वरतां परित्यजते। बहिर्दरिद्रस्तु बाह्यभोगार्थधनधान्यस्रक्चन्दनसौगन्धभवनक्षेत्रपुत्र-कलत्रगजतुरगपदातिगणविरहितः केवलमखण्डानन्दबोधपरिपूर्णः। तेभ्य उभयेभ्यः श्रियमाशानु-सदृशीं आशया अभ्यन्तरे वर्तमानया सदृशीं आशानुसदृशीं आशातुल्यरूपां श्रियं पूर्णाहन्ता-माभ्यन्तरीं, धनादिरूपां बाह्यां उभयं च लक्ष्मीं अनिशं नित्यं ददाने दातरि। पुनः किंविधे, अमन्दं भूयिष्ठं सौन्दर्यप्रकरमकरन्दं सौन्दर्यस्य लावण्यस्य प्रकरः समूहः स एव मकरन्दः पुष्परसः, तं विकिरति क्षिपति। पुनः किंविधे अत एव मन्दारस्तबकसुभगे, मन्दारस्य सुरतरु-

विशेषस्य स्तबको गुच्छः तद्वत्सुभगः कमनीयः तस्मिन् त्वदीये चरणाख्ये सुरतरुस्तबके अम्लाने-ऽपर्युषिते अपर्यन्तपरमानन्दाख्ये मधुररसदायिनि मम जीवात्मा भृङ्गः सततं सङ्गीभवत्वित्यर्थः ॥

पदार्थचन्द्रिका

एवं तावत्स्थूलदेहव्यापारमात्रस्य भवानीपूजाप्रकारतां प्रार्थ्य इदानीं लिङ्गशरीराधिष्ठातुः स्वात्मनोऽपि श्रीभवानीचरणरूपध्येयाकारतां प्रार्थयते ददान इति। हे भवानि, मज्जीवो ममात्मा तव चरणे षट्चरणतां भ्रमररूपतां यातु प्राप्नोतु। भ्रमररूपतामेव नामतोऽर्थतश्च वदन् स्वात्मानं विशिनष्टि। करणानि पञ्च ज्ञानेन्द्रियाणि षष्ठं मनश्च तानि चरणानीव तद्विषयप्राप्तिहेतुत्वात्। तैः सह निमज्जन् बहिरुपरतव्यापारो भूत्वा चरण एव तिष्ठन्नित्यर्थः। मज्जीव इत्यत्र चैतन्यस्य स्वरूपं राहोः शिर इतिवच्च भेदमारोप्य षष्ठीसमासे बोद्धव्यः। यथा भ्रमरो नानागन्धलोभेन नानापुष्पेषु भ्रमन् शोभनगन्धरसलोभेन कमल एव तिष्ठति, तथा संसाराद्यटवीषु परिभ्रमणपरिश्रान्तो मज्जीवस्त्वच्चरण एव तिष्ठत्वित्यर्थः। चरणस्य परमोदारतामाह—ददान इति। दत्त इति ददानं तस्मिन्, दीनेभ्यः सकामकेभ्य इत्यर्थः। अनिशमिति दानाविच्छेदमाह। श्रियं विशिनष्टि, ईशानस्य सदृशीं ईश्वरस्य स्वसंपत्त्यनुसारेण दातुमुचितामित्यर्थः। भक्तिहेतुत्वेनापि चरणं विशिनष्टि—अमन्दमनल्पं यथा स्यात्तथा। सौन्दर्यं स्तबक इव सौन्दर्यस्तबकः। तस्य मकरन्दमिव विषयसुखं विकिरति विशेषेण क्षिपति, एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः। परमसौन्दर्यमाह—मन्दारस्य देववृक्षस्य स्तबकः, तद्वत्सुभगे सुन्दरे ॥ ९० ॥

डिण्डिमभाष्यम्

ददान इति। हे परमेश्वरि दीनेभ्यो दरिद्रेभ्यः पूर्णाहन्ताविरहितेभ्यः,। उभये खलु दरिद्राः अन्तर्दरिद्रा बाह्यदरिद्राश्च। अन्तर्दरिद्राश्च स्वयं परिपूर्णस्वभावा अपि परमात्मनः स्वयैव मायाख्यया शक्त्या परमोहितत्वात् जनिताभिः कलाविद्यारागकालनियतिभिः अविशिष्टतया विश्वशरीरतापं परित्यज्य सर्वकर्तृत्व-सर्वकामसमृद्धत्व-नित्यत्व-स्वतन्त्रत्वानि स्वतःसिद्धानि परित्यज्य, तद्विरुद्धधर्मान् किञ्चित्कर्तृत्व-कामुकत्व-मरणधर्मत्व-विधिनिषेधविषयत्वाख्यान् गृहीत्वा शिवत्वपरित्यागपूर्वकं पशुत्वं गृहीत्वा, संसारिणो वर्तमाना ये भवन्ति ते। बहिर्दरिद्राः बाह्यभोगार्थं धनधान्यस्रक्चन्दनसौधभवनक्षेत्रपुत्रकलत्रगजतुरङ्गपदातिगणविरहिताः। तेभ्य उभयेभ्यो दरिद्रेभ्यः आशानुसदृशीं अभ्यन्तरे वर्तमानाया आशाया अनुसदृशीं तुल्याकारां श्रियं परिपूर्णाहन्तां अभ्यन्तरीयां धनादिरूपां बाह्यां च लक्ष्मीमुभयीं ददाने नित्यं प्रयच्छति। कल्पवृक्षस्तबकसाधर्म्यं चरणे खलु वर्तते। यतः कल्पकवृक्षोऽपि याचकेभ्यः श्रियं ददाति।

अमन्दं भूयिष्ठं सौन्दर्यप्रकरमकरन्दं लावण्यसमूहमधुरसंकर्षणयुक्तं, अत एव मन्दारस्तबक-सुभगे, मन्दारस्य सुरतरुविशेषस्य स्तबकवत् पुष्पगुच्छवत् सुभगे कमनीये तवास्मिन् चरणे, मज्जीवो जीवात्मा, निमज्जन् निर्व्याजमेव निलीय, तथा आस्वादरसमनुभवन्। किञ्च करण-चरणः, करणानि मनःषष्ठानि पञ्च ज्ञानेन्द्रियाणि श्रोत्रत्वक्चक्षुर्घ्राणरसनाख्यानि एव षट् चरणाः षट् पदानि यस्य स तथोक्तः। भृङ्गोऽपि षट्चरणो भवति। एवं त्वदीयचरणाख्ये सुरतरुस्तबके अम्लाने अपर्युषिते अपर्यन्तपरमानन्दकारके मधुरसान्विते मम जीवात्मा भृङ्गः सततं सङ्गीभवत्वित्यर्थः॥ ९०॥

गोपालसुन्दरी

ददान इति। दीनेभ्यो दरिद्रेभ्यः आशानुसदृशीं श्रियं लक्ष्मीं ददाने प्रयच्छति सति, अमन्दं भूयिष्ठं, सौन्दर्यस्तबकमकरन्दं लावण्यसमूहमधुरसं विकिरति, मन्दारस्य सुरतरुविशेषस्य स्तबको गुच्छः, तद्वत्सुभगे शोभने अस्मिन् तव चरणे, निमज्जन् निलीय आस्वादरसमनुभवन्, मल्लक्षणो जीवो जीवात्मा, करणचरणैः मनःसहितश्रोत्रादिज्ञानेन्द्रियात्मकैः चरणैः पादैः षट्चरणतां षट्पदत्वं यातु इत्यर्थः। विष्णुपक्षेऽप्येवम्॥ ९०॥

आनन्दलहरीटीका

ददाने इति। तवास्मिंश्चरणे निमज्जन् निमग्नीभवन् मज्जीवः मत्स्वरूपो जीवः करणचरणैः चक्षुःश्रोत्रत्वग्घ्राणरसनामनोरूपैः इन्द्रियैरेव षड्भिः षट्चरणतां भ्रमरत्वं यातु प्राप्नोतु। कीदृशे, अस्मिन्मन्दारस्य देवतरुविशेषस्य यः स्तबको गुच्छः वृन्तस्थपुष्पसमूहः तद्वत्सुभगे सुन्दरे, दीनेभ्यः आशानुसदृशीं वांछानुरूपां श्रियं संपदं ददाने। द्विविधा दीना भवन्ति। अन्तर्दरिद्रा बहिर्दरिद्राश्च। ज्ञानवैराग्यहीना आद्याः, धनसंपत्तिहीना द्वितीयाः। तत्र यस्य यद्दैन्यनाशे आशा तस्मै तदुपयोगिसंपदं प्रदायेत्यर्थः। अमन्दं उत्तमं सौन्दर्यप्रकरः समूहः तद्रूपं मकरन्दं पुष्परसं विकिरति। सौन्दर्यस्तबकेति पाठेऽप्ययमेवार्थः॥ ९०॥

***पदन्यासक्रीडापरिचयमिवा[1]रब्धुमनसः**
**[2]स्खलन्तस्ते खेलं [3]भवनकलहंसा न जहति।**

---

*कदा काले मात इति श्लोकसमनन्तरपठितोऽयं श्लोकः सौभाग्यवर्धनीकारैः। ततस्तदनुसारिण्यवतारिका दृश्यते।

1 रब्धुं 2 चलन्तस्ते, चरन्तस्ते 3 शरणं

[1]अतस्तेषां शिक्षां सुभगमणिमञ्जीररणित-
च्छलादाचक्षाणं चरणकमलं[2] चारु[3]चरिते ॥ ९१ ॥

பதந்யாஸ க்ரீடா பரிசயமிவாரப்துமநஸ:
3 1 8 1 1 3 4
ஸ்கலந்தஸ்தே கேலம் பவநகலஹம்ஸா ந ஜஹதி ।
2 1 1 2 4 1 1
அதஸ்தேஷாம் சிக்ஷாம் ஸுபகமணி மஞ்ஜீர ரணித-
1 1 4 3 1
ச்சலாதாசக்ஷாணம் சரணகமலம் சாருசரிதே ॥
1 2 3 1 1 1 1 1 1

शुभचरिते! सुन्दरगति का शिक्षण पाने की इच्छा से
तव गृह के कलहंस साथ तजते ना तेरा दीक्षा से
भूलें करते रहने पर भी उनको पाठ पठाता है
चरण कमल तव मणिमञ्जीरों के रव मिस सिख देता है ॥

लक्ष्मीधरा

पदन्यासक्रीडापरिचयं पदयोर्न्यासः तस्मिन् क्रीडा विनोदः तस्य परिचयमिव अभ्यासमिव। इवशब्दः संभावनावचनः नूनमित्यर्थः। आरब्धुमनसः संपादयितुकामाः, स्खलन्तः स्खलद्गतयः, ते तत्र, खेलं खेलनं विलासं सञ्चारं, भवनकलहंसाः भवने परिपोषिताः कलहंसाः हंसविशेषाः, न जहति न परित्यजन्ति त्वदनुसरणं न कदाचिदपि त्यजन्तीत्यर्थः। अतः कारणात्, तेषां कलहंसानां, शिक्षां खेलनशिक्षां, सुभगमणिमञ्जीररणितच्छलात् मणिमञ्जीरो मणिप्रधाननूपुरः स चासौ सुभगः रम्यतरः। यद्वा—सुभगैः मणिभिः पद्मरागादिभिः युक्तः, तस्य मञ्जीरस्य रणितानां शिञ्जितानां छलात् व्याजात्। आचक्षाणं उपदिशत्, चरणकमलं पादाम्बुजं, चारुचरिते! शोभनगमने! अत्रेत्थं पदयोजना—हे चारुचरिते! पदन्यासक्रीडापरिचयं आरब्धुमनसः भवनकलहंसाः स्खलन्तः ते खेलं न जहति; अतः चरणकमलं सुभगमणिमञ्जीररणितच्छलात् तेषां शिक्षां आचक्षाणमिव। अत्रोत्प्रेक्षालङ्कारः—मञ्जीररणितानां शिक्षावचनात्मतया सम्भावनात्। पूर्वार्धे अतिशयोक्तिः, भवनकलहंसानां स्वाभाविके पोषकजनानुसरणे पदन्यासक्रीडापरिचयार्थत्वेन अध्यवसानात् असम्बन्धे संबन्धनिबन्धनातिशयोक्तिः। उभयोरङ्गाङ्गिभावेन सङ्करः ॥ ९१ ॥

---

1 स्खविक्षेपे, सुविक्षेपे 2 युगलं 3 चारुचरितम्

## सौभाग्यवर्धनी

एवं पादोदकं प्रस्तुत्य तद्गतिवर्णनमाह – **पदन्यासेति** । हे चारुचरिते, पदन्यासक्रीडापरिचयमारब्धुमनसः चरणविक्षेपलीलाचातुर्यमारब्धुं कामयमानाः, खेलं चरन्तः, क्रीडामाचरन्तः, स्वविक्षेपे स्वस्य विक्रमे सुभगमणिमञ्जीररणितच्छलात् शोभमानमणिनूपुरनिक्वाणच्छलेन शिक्षामाचक्षाणमिव, ते तव चरणकमलं भवनकलहंसा न जहति न त्यजन्ति । अद्यापि प्रतिदिनमभ्याप्यमानाः तव चरणविन्यासलीलां न लभन्त इति भावः ॥ ९१ ॥

## अरुणामोदिनी

एवं पादावुपवर्ण्य तद्गतिवर्णनापूर्वकं आगमार्थं सूचयति – **पदन्यासेति** । चारुचरिते! चारु सुन्दरं चरितं संचारो गमनं चरित्रं वा यस्याः सा चारुचरिता, तस्याः संबुद्धिः हे चारुचरिते, सुन्दरलीलागमने देवि, 'चरितं तु पवित्रे स्यात्संचारे व्रतकर्मणि' इति विश्वः । भवनकलहंसाः भवने गृहे स्थिताः कलहंसाः गृहपोषिता राजहंसाः, 'राजहंसास्तु ते चंचुचरणैर्लोहितैः सिताः' इत्यमरः । यत इति शेषः । यतः कारणात्, ते भवत्याः पदन्यासक्रीडापरिचयं, पदयोर्न्यासो विन्यासः, तस्य क्रीडायां परिचयं अभ्यासमालब्धुं प्राप्तुं मनो येषां ते, आलब्धुमनसः, भवदीयपदपङ्कजविलासाभ्यासमाकांक्षन्त इवेत्यर्थः । अत्र यद्यपि आलम्भनं विशसनमित्यमरात्, 'पशुमालभेत' 'पश्वालम्भः,' 'तदा पादावालभसे मघोनः' इत्याद्यभियुक्तश्रीहर्षप्रयोगात् लोकवेदयोः आङ्पूर्वोऽयं लभिधातुः हिंसावचनः । तथाऽपि, 'निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः । अनेकार्थाः स्मृतास्तज्ज्ञैः पाठस्तेषां निदर्शनम् ॥' इति वचनात्, धातूनामनेकार्थत्वाङ्गीकारात् प्राप्त्यर्थकत्वं युक्तम् । लभेरनेकार्थत्वं श्रीहर्षस्याभिमतं च, 'काचित्समालब्धुमसंवृतोरुं' इति तत्प्रयोगात् । यद्वा समारब्धुमनस इत्येव पाठः । समारब्धुं कर्तुं मनो येषामित्यर्थः । तुं काममनसोरपि इति मकारलोपः । खेलं विलासं यथा तथा स्खलन्तः, संचरन्तः पदयुगलं न जहति । अथवा स्खलन्तः संचरमाणाः खेलं गतिं न जहति, न त्यजन्ति । भवदीयपदाम्बुजगमनाभ्यासाभिलाषयैव लीलागमनं कुर्वन्तीत्यर्थः । 'अदभ्यस्तात्' इति झेरदादेशः । अतः कारणाच्चरणकमलं भवत्पादपद्मं, चरणयुगलमिति क्वचित्पाठः । सुभगः सुन्दरो मणिमयो यो मञ्जीरो नूपुरः, मञ्जीरः नूपुरोऽस्त्रियाम् इत्यमरः । तस्य रणितस्य छलात् क्वणनव्याजात् तेषामनुसरतां हंसानां शिक्षां गतेषु अभ्यासपाटवमाचक्षाणमुपदिशत् वर्तत इति शेषः । मञ्जीररणितव्याजेन तेषां गमनान्यभ्यासयन्तीत्यर्थः । आगमार्थस्तु-भवने श्रीचक्राख्ये गृहे वर्तमानाः कलहंसाः, कलोऽव्यक्तमधुरः कण्ठे वर्तमानो हंसोऽिति मन्त्रो येषां ते कलहंसाः पञ्चाशद्भेदभिन्नाः गणप्रवराः चक्रेश्वरगणपति-

कमलनाथ–द्वीपनाथ-वसन्तादयः, श्रीचक्राधिष्ठानदेवता उच्यन्ते। ताश्च रामकविकृतव्याख्याने विस्तरेणोक्ता द्रष्टव्याः। पदन्यासक्रीडापरिचयं, पदानि चतुर्दश भुवनानि स्थानानि, तेषां न्यासः सृष्टिः, क्रीडा रक्षणं, परिचयः संहारः, चिञ् चयने इति धातोः संहारस्याप्यर्थत्वात्। सर्वेषां-द्वन्द्वे-सत्येकवद्भावः। 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इति शास्त्रात्। आलब्धुमनसः प्राप्तुमिच्छन्तः, तेषां भुवनसृष्ट्यादिकरणसामर्थ्यमाशासाना इति भावः। खे चिदाकाशे अलमत्यन्तं स्खलन्तः चरन्तः सन्तः, ते त्वदीयं चरणकमलं न जहति। अतो हेतोः तेषां हंसानां सुभगः शोभनकीर्तिः, अविद्यामुक्तत्वादिति, कामेश्वरः। मणिवत्प्रकाशत इति मणिः सुभगमणिः, निष्कलं ब्रह्म, मञ्जु मृदुलः ईरः समीरणः हंसः सोऽहमिति निरन्तरजपो यस्य स मञ्जीरः अविद्यासंवलितो जीवः, तद्विषयं यद्रणितं व्याख्यातम्। तस्य छलात् मिषात् तव चरणकमलं शिक्षामाचक्षाणं चक्षणशीलं तत्प्रकाशकमित्यर्थः। अत्र निरन्तरसंचरिष्णुपद-विन्यासक्रीडाभ्यासशीलत्वं उत्प्रेक्ष्यते। स चोत्तरार्धोक्तच्छलादिशब्दैः असत्यत्वप्रतिपादन-रूपापह्नवसहितोत्प्रेक्षाहेतुरिति द्वयोः संकरः। तया च विद्याभ्यसनाय नैरन्तर्येण गुरुपाद-पङ्कजसेविशिष्यवृत्तान्तप्रतीतेः अलङ्कारेणालङ्कारध्वनिः। ९१॥

### आनन्दगिरीया

पदन्यासेति–हे चारुचरिते, भवनकलहंसा अद्यापि तव चरणं न जहति, न त्यजन्ति। भवनस्थाः कलहंसाः किंलक्षणाः पदन्यासक्रीडापरिचयमारब्धुमनस इव, चरण-चरणलीलाचातुरीचमत्कारं कामयन्ति, अतः सञ्चारचातुर्याध्ययनकामा इव। पुनः किंलक्षणं अध्यापयन्तं, कथं स्वस्य विक्षेपसुविक्षेपसुभगमणियुक्तमञ्जीररणितच्छलात्, शोभमानमणियुक्त-नूपुरझणत्कारच्छलात्। प्रतिदिनमेवमध्याप्यमाना अपि तव चरणलीलामलभमानाश्चरणारविन्दं न त्यजन्ति। विद्याऽपूर्णा। पूर्णभावे गुरुकुलस्थानं न घटेत। पदन्यासश्लोकस्य रहस्यार्थः– आत्माष्टाक्षरमन्त्रोद्धारः पदेति–पद हं क्रीडा रेफः ईं हंसो हंसः शिक्षा सोऽहं चरणमणि-मञ्जीररणनच्छलात् स्वाहेति। ओं ह्रीं हंसः सोऽहं स्वाहा॥ ९१॥

### तात्पर्यदीपिनी

पदेति। हे जननि भवनकलहंसाः भवने परिपोषिताः कलहंसाः हंसविशेषास्ते तव खेलं क्रीडारूपं चलनं न जहति न त्यजन्ति। तदनुसरणं कदाचिदपि न त्यजन्तीत्यर्थः। किंविधा हंसाः, पदन्यासक्रीडापरिचयमारब्धुमनस इव, पदयोर्न्यासो विलासस्तस्मिन् क्रीडा विनोदः तस्य परिचयोऽभ्यासः तमारब्धुं संपादितुं मनश्चित्तं येषां ते, तथा। पुनरत एव

स्खलन्तः स्खलद्गतयः सलीलगमनेनैषामेतदनुमीयत इत्यर्थः। अत एवं तर्क्यते, हे चारुचरिते शोभनगमने तव चरणकमलं सुभगमणिमञ्जीररणितच्छलात् सुभगा मणयो यस्मिन्नेतादृशो यो मञ्जीरः नूपुरः, तस्य रणितानां शिञ्जितानां छलाद्व्याजात्, तेषां कलहंसानां शिक्षां स्खलन-शिक्षां आचक्षाणमिव स्थितम्। मञ्जीरझंकारविषेणोपदिशतीत्यर्थः। यद्वा हे चारुचरिते-सुन्दर-चरिते हंसास्तवाराधने निपुणा जीवाः तव चरणकमलं न जहति। किंभूताः, पदन्यासक्रीडा-परिचयमारब्धुमनस इव, पदानां भुवनानां न्यासोऽवस्थानं क्रीडा परिचयश्च तेषां समाहारः, तं समारब्धुमनस इव सृष्टिस्थितिप्रलयसामर्थ्यं संपादयितुं प्रवृत्ता इत्यर्थः। पुनः खेलं स्खलन्तः कृतसंचाराः। किंविधं चरणकमलं, तेषां तदाराधकानां शिक्षां मूलाविद्यानिरसनरूपां विद्या-माचक्षाणं कथयमानम्। कथने प्रकारमाह- सुभगमणिमञ्जीररणितच्छलात् सुभगानां श्रेष्ठानां मणिः श्रीकामेश्वरभट्टारकः, मन् मनस्तस्माज्जायते इति मञ्जः कामः, स विद्यते येषां ते मञ्जिनः संसारिणः तानीरयति प्रेरयति दूरीकरोतीति मञ्जीरः शुद्धज्ञाननिधिः परमहंसो निष्कल, तयोः रणितं शब्दितं, तच्छलात्तद्व्याजात् सकलनिष्कलातिगं तुरीयातीतं ब्रह्मैव शिक्षमाणमित्यर्थः॥

### पदार्थचन्द्रिका

अथ चरणयोर्लीलागतिं वर्णयति-पदेति। हे मातस्तव चरणयुगलं भवनकलहंसा न जहतीत्यन्वयः। कलहंसानुत्प्रेक्षमाणो विशिनष्टि-खेला विद्यन्ते यत्र तत्खेलं सलीलं चलन्तोऽपि, यद्वा खे आकाशे अलमतिशयेन चलन्तोऽपि, तत्र पदयोर्न्यासक्रीडा प्रक्षेपलीला तस्याः परिचयः शिक्षितानां, आरब्धुमनस इव। लुम्पेदवश्यम इत्यनेन तुमुनो मलोपः। चरण-युगलमुत्प्रेक्षमाणो विशिनष्टि-पुविक्षेपे शिक्षां आचक्षाणं उपदिशदिवेत्यर्थः। चलन्त्या इति पाठे भवानीविशेषणम्। स्पष्टमन्यत्॥ ९१॥

### डिण्डिमभाष्यम्

हे परमेश्वरि! त्वत्पदन्यासक्रीडापरिचयं, चरणविन्यासलीलाभ्यासमालब्धुमनस इव आ समन्तात् लब्धुं मनो येषां ते तथोक्ताः। आङ्पूर्वो लभिर्यद्यपि हिंसायां वर्तते, तथाप्यत्र प्राप्त्यर्थो वेदितव्यः, अनेकार्थत्वाद्धातूनाम्। आलब्धुमिति तुमन्ते मकारलोपः। 'लुम्पे-दवश्यमः कृत्ये तुं काममनसोरपीति वचनान्मकारलोपः। खेलं लीलारसं यथा भवति, तथा चरन्तः संचारं कुर्वाणाः, शरणकलहंसाः शरणे गृहे वर्तमानाः कलहंसाः। 'शरणं गृह-रक्षित्रोः' इत्यमरः। कलहंसाः राजहंसाः। 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः' इत्यमरः। तव चरणं न जहति न परित्यजन्ति। ओहाक् त्यागे इति धातोः लटि बहुवचने रूपम्। जहाति जहीतः जहति। किमर्थं न जहति? शिष्या यथा गुरुं विद्याभ्यासिनः सेवन्ते,

तथा गतिलीलार्थं तव चरणं सेवन्ते हंसाः। सुभगमणिमञ्जीररणितच्छलात् सुभगस्य मनोहरस्य मणिमञ्जीरस्य रत्ननूपुरस्य रणितच्छलात् शब्दव्याजात्, स्वविक्षेपे स्वस्य चरणस्य विक्षेपे विन्यासे शिक्षामभ्यासवचनमाचक्षाणं ब्रुवाणम्। उपाध्यायः शिष्याणां स्वयं प्रथमत आचष्टे। तच्छ्रुत्वा शिष्याः पठन्ति। पुनः किंभूतं चरणं? चारुचरितं मनोहरसौभाग्यम् 'चरितं तु चरित्रं स्यात् सञ्चारे व्रतकर्मणि' इति विश्वः। एवंभूतं चरणं गुरुस्थानीयं शिष्यीभूताः कलहंसा न जहति इत्यन्वयः। अत्र श्लोके महाकविना कर्त्रा शङ्करेणैव आगमशास्त्रप्रसिद्धस्य शरणस्य देवीभवनस्य श्रीचक्रराजधान्याः स्थाने वर्तमानाः कलहंसाः चक्राधिदेवाश्चक्राधिदेव्यश्च प्रोच्यन्ते। कलहंसत्वं तेषामुच्यते — कलः अव्यक्तमधुरः कण्ठे वर्तमानः हंस इति मन्त्रो येषां ते कलहंसाः पूर्वोक्ताश्चक्राधिदेवतास्ते च पञ्चाशद्भेदभिन्ना भवन्ति। तत्र प्रथमं गुरुश्चक्रेश्वरः, अनन्तरं गणपतिः सर्वद्वारनिविष्टः अष्टोत्तरशतधा भिन्नः। उक्तं चक्रावलिस्तोत्रे 'कलश्रीपुर-गोपुरचिन्तामणिगृहमुखद्विपार्श्वेषु। अष्टोत्तरशतधास्थितप्रथमप्रणामे महागणेशान'मिति। नाना-वृक्षमहोद्याने कालनाथः, ततः पूर्वं कालायस-कल-चतुर्द्वारपालकौ द्वीपनाथः। कल्पतरुवाटिकायां वसन्तः। सन्तानवाटिकायां ग्रीष्मनाथः, हरिचन्दनवाटिकायां वर्षानाथः, मन्दारवाटिकायां शरदृतुनाथः, पारिजातवाटिकायां हिमर्तुनाथः, कदम्बवाटिकायां शिशिरर्तुनाथः, तत्रैव श्यामाम्बा, पुष्परागवाटिकायां मृत्युञ्जयनाथः, पद्मरागवाटिकायामम्बिकादेवी, गोमेदवाटिकायां श्रीकलासङ्कर्षिणी, हीरकतरुवाटिकायां विश्वावसुर्गन्धर्वपतिः, वैडूर्यमणिवाटिकायामनन्तनाथः, हरिन्मणिवाटिकायां वेदमाता गायत्री, मुक्तामणिवाटिकायां पूर्वभागे देवेन्द्रनाथः, तस्याः दक्षिणे भगवान् वैश्वानरः, तस्या याम्याशायां यमनाथः, तस्या दक्षिणपश्चिमे निर्ऋतिनाथः, तस्याः पश्चिमदिग्भागे वरुणः, तस्या वायव्ये मारुतनाथः, तस्या उत्तरे कुबेरनाथः, तस्याः प्रागुत्तरे विधिवद्रुद्रः देवदारुवाटिकायां वार्ताली, विद्रुमलतावाटिकायां ब्रह्मनाथः, माणिक्य-मण्डपे श्रीविष्णुः, सहस्रस्तम्भमण्डपे शम्भुनाथः, अमृतवाटिकायां तारादेवी, आनन्दवाटिकायां वारुणी देवी, विमर्शनवाटिकायां कुरुकुल्लादेवी, बालातपच्छायायां मार्तण्डभैरवः, चन्द्रि-कोद्गारकच्छायायां सोमनाथः, भृङ्गारपरिखायां मन्मथनाथः, महापद्माटव्यामन्नपूर्णा, चिन्तामणिगृहराजप्राग्द्वारे दुर्गाभट्टारिका, तस्य दक्षिणद्वारे सरस्वतीभट्टारिका, तस्य पश्चिम-द्वारान्ते महात्रैपुरसिद्धान्तसमयनाथः, तस्योत्तरद्वारे सम्पत्करी भट्टारिका, चिन्तामणिगृहा-भ्यन्तरे कुमारकामेश्वरः, पञ्चब्रह्ममहामञ्चाधस्तात् श्रीबालाम्बिका, चिन्तामणिगृहराजं परितो महाशम्भुनाथः, चिन्तामणिगृहराजतूलिकापीठे श्रीपूर्णाम्बा, चिन्तामणिगृहराजपूर्वद्वारोत्तर-मणिधिष्ठिता मन्त्रवक्त्रमातङ्गी, तस्या एव दक्षिणभागमणिधिष्ठिता मन्त्रवाराही, चक्रराज-महारथशृङ्गे समानभट्टारिका, श्रीचक्रस्थाने श्रीश्रीकामेश्वरभट्टारकः, इत्थं पञ्चाशच्चक्रभाग-

नायिकाः कलहंसशब्दवाच्यास्ते सर्वे श्रीनगरे किं कर्तुं तिष्ठन्तीत्याह—पदन्यासक्रीडापरिचयमिव। पदानि स्थानानि चतुर्दश भुवनानि तेषां न्यासः सृष्टिः, क्रीडा रक्षाविधानं, परिचयः संहारः, 'चिञ् चयने' इति धातुः संहारेऽपि वर्तते, न्यासः क्रीडा परिचयश्च न्यासक्रीडापरिचयम्। सर्वो द्वन्द्वो विभाषयैकवद्भवति। एतदालब्धुमनसः प्राप्तुमनसः। एतदुक्तं भवति—स्वेच्छयैव पदानां भुवनानां सृष्टि-स्थिति-संहारसामर्थ्यं सम्पादयितुं प्रवृत्ता इति। अत एव खेलं चरन्तः खे चिदाकाशे त्वच्चरणध्यानसमये अलमत्यर्थं चरन्तः कृतसञ्चाराः तव चरणं न जहति। कीदृशं तव चरणम्? स्वविक्षेपे स्वस्यात्मनः विक्षेपे विविधतया भिन्नीकृत्य निरसने। अविद्यायाः खलु शक्तिद्वयम्—आवरणशक्तिर्विक्षेपशक्तिश्च। सा खलु एकरूपं ब्रह्मावृत्य नानात्वेऽपि विक्षिपतीति वेदान्तसिद्धान्तिनः, अतः स्वस्य विक्षेपे भेदज्ञाने संसारमूले जाते तस्य निरसनशिक्षामाचक्षाणमिव। अथवा स्वविक्षेपे—शोभनश्चासौ अविक्षेपश्च स्वविक्षेपः अविक्षेपो निर्विकल्पः ब्रह्मज्ञानं तस्मिन् स्वविक्षेपे विषये इति विषयसप्तमी, तदर्थमित्यर्थः। सुभगमणिमञ्जीररणितच्छलात्—सुभगानां मणिः सुभगमणिः सुभगश्रेष्ठः श्रीकामेश्वरभट्टारकः। मञ्जीरः मनसो जायते इति मञ्जः कामः। स एषामस्तीति मञ्जिनः संसारिणस्तान् ईरयति प्रेरयति दूरीकरोतीति मञ्जीरः शुद्धज्ञाननिधिः परमहंसो निष्कलः। सुभगमणिश्च मञ्जीरश्च उभौ सुभगमणिमञ्जीरौ सकलनिष्कलब्रह्मणीत्यर्थः, तद्विषयं रणितं व्याख्यानं तच्छलात् तद्व्याजात् सकलनिष्कलातिगं तुर्यातीतं तव चरणकमलम्, अत्र चरणशब्देन महाप्रकाशविमर्शद्वयमुच्यते—परब्रह्मैव शिक्षारूपमाचक्षाणं तव चरणकमलं चारुचरितं मनोहरवृत्तान्तं, तदेव चरणं अज्ञानभक्षकं 'चर गतिभक्षणयो'रिति धातुः। कमलत्वञ्च विकाससङ्कोचधर्मित्वात्, तस्य जगद्रूपेण संकोचः, स्वस्वरूपेण विकासश्च। कमलस्यापि विकाससङ्कोचौ स्वभावसिद्धौ। इत्थं तव महाप्रकाशविमर्शरूपं चरणात्मना परिणतं न जहति। एतत्खलु परब्रह्मप्रतिपादकमागमनामधेयमथर्ववेदसारं महादर्शनं प्रवर्तयितुमेव भगवती स्वसीमन्तस्थसिन्दूरपरागादेकदेवता परमेश्वरपरमेश्वरी 'अम्बा ससर्जादिगुरूत्तमाम्' इति वचनप्रामाण्यात् परमेश्वरपरमेश्वरी नाम आदिशक्त्या सृष्टौ स्वसमयसम्प्रदायसिद्ध्यर्थं काचन देवता सृष्टा, तस्याः शिष्यो मित्रेशः, तच्छिष्यः षष्ठीशः, तच्छिष्य उड्डीशः, तच्छिष्यश्चर्यानाथः, तस्य लोपामुद्रा, तस्या अगस्त्यः, एताः सप्तगुरुपादुका भगवतीविद्यायां देवलोके दीक्षाकारिण्यः। अगस्त्यस्य शिष्यः कालतापनः, तस्य शिष्यो धर्माचार्यः, तस्य शिष्यो मुक्तकेशीश्वरः, तस्य शिष्यो दीपकलानाथः, एते चत्वारो गुरवः देवयोनीनां विद्याधरादीनां परमेश्वरी-श्रीविद्यादीक्षाप्रदातारः। तच्छिष्यो विष्णुदेवः, तच्छिष्यः प्रभाकरदेवः, तच्छिष्यस्तेजोदेवः, तस्य मनोजदेवः, तस्य कल्याणदेवः, तस्य रत्नदेवः, तस्य वासुदेवः, तस्य शिष्यः श्रीरामानन्दः, इत्यष्टौ गुरवो मनुष्याणां

श्रीविद्यादीक्षकाः। एतेषामेकोनविंशतिभेदानां शिष्यप्रशिष्यसन्तानपरम्परावहुलीभूतं त्रैपुरसिद्धान्तरत्नं प्रवर्तते। तदेते गुरवः कलहंसशब्देनोच्यन्ते। एते चान्ये च श्रीचक्रनगरवासिनस्त्वच्चरणपरिचर्यां कदाचिदपि न परित्यजन्ति इत्यलमतिविस्तरेण॥ ९१॥

गोपालसुन्दरी

पदन्यासेति। ते तव चरणयुगलं खे आकाशे अलमतिशयेन चरन्तः भवनकलहंसा न जहति न त्यजन्ति। कीदृशाः, पदन्यासक्रीडापरिचयं चरणविन्यासलीलाभ्यासं आसमन्ताल्लब्धुं मनो येषां ते आलब्धुमनसः इव चरणयुगलं कीदृशं, सुभगस्य मणिमञ्जीरस्य रत्ननूपुरस्य यद्रणितं तस्य छलात्कपटात् स्वस्य चरणस्य विक्षेपे विन्यासे शिक्षामाचक्षाणं ब्रुवाणं, पुनः कीदृशं चारुचरितं, मनोज्ञसंचारं, 'चरितं तु चरित्रे स्यात् संचारे व्रतकर्मणि।' इति विश्वः। चारुचरिते इति पाठे संबोधनम्। विष्णुपक्षे—स्वविक्षेपकाले चारुचरिते उत्कृष्टगमनरूपचरिते शिक्षामाचक्षाणमित्यन्वयः। शेषं समानम्। वस्तुतस्तु—भवने श्रीचक्रपक्षे पूजायन्त्रे कलोऽव्यक्तमधुरः हंसः इति मन्त्रः कण्ठे येषां ते कलहंसाश्चक्राधिदेवतास्ते चरणकमलं चरणमज्ञानभक्षकं कमलं सङ्कोचविकासशालि द्वैतप्रपञ्चजगद्‌–अद्वैतात्मकब्रह्मरूप-द्वैताद्वैतपदद्वन्द्वमिति कुलार्णववचनात् न जहति न त्यजन्ति। पदानि स्थानानि चतुर्दशभुवनानि, तेषां न्यासः सृष्टिः, क्रीडा रक्षा, परिचयः संहारः, आलम्भं कर्तुं मनो येषां ते, तथा सृष्ट्यादिकरणसामर्थ्यप्राप्त्यर्थं त्वच्चरणोपासनं कुर्वन्तीत्यर्थः। खे हृदयाकाशे त्वच्चरणं चरन्तः आस्वादयन्तः ध्यायन्त इत्यर्थः। शोभनश्चासावविक्षेपश्चेति स्वविक्षेपो निर्विकल्पकरूपं ब्रह्मज्ञानं, तस्मिन् शिक्षामाचक्षाणम्। कीदृशे? चारुचरिते मोक्षदानरूपशोभनचरित्रयुक्ते। भवानीपक्षे-संबोधनपदमिदम्। सुष्ठु भग ऐश्वर्यमस्यास्तीति सुभग ईश्वरः, मणिवत् मञ्जु करोतीति मञ्जी जीवः टिलोपे ईरन्प्रत्ययान्तमिदम्। तयोर्जीवेश्वरयोः रणितं व्याख्यानं तच्छलात्, तथा च तत्त्वमस्यादिवाक्येन जीवब्रह्मणोरैक्यच्छलाज्जहदजहल्लक्षणया निर्विकल्परूपं ब्रह्मज्ञानमाचक्षाणं द्वैताद्वैतरूपं त्वच्चरणद्वयं सृष्ट्यादिकरणसामर्थ्यलाभार्थं त्वद्भक्ता न त्यजन्ति इत्युभयपक्षेऽप्यर्थः। भवानीपक्षे—भवनकलहंसाः श्रीचक्रस्था देवताः पञ्चाशत्सङ्ख्यकाः; तथा हि—प्रथमं गुरुचक्रेश्वरः, ततो गणपतिः सर्वद्वारनिविष्टः, ततो नानावृक्षमहोद्याने कालनाथः, चतुर्द्वारपालको द्वीपनाथः। कल्पतरुवाटिकायां वसन्तः, सन्तानवाटिकायां ग्रीष्मनाथः, हरिचन्दनवाटिकायां वर्षानाथः, मन्दारवाटिकायां शरदृतुनाथः, पारिजातवाटिकायां हिमर्तुनाथः, कदम्बवाटिकायां शिशिरर्तुनाथः तत्रैव श्यामाम्बा, पुष्परागवाटिकायां मृत्युञ्जयनाथः, पद्मरागवाटिकायामम्बादेवी, गोमेदवाटिकायां श्रीकालसङ्कर्षणी, हीरकतरुवाटिकायां

विश्वावसुर्गन्धर्वपतिः, वैदूर्यवाटिकायामनन्तनाथः, हरितमणिवाटिकायां वेदमाता गायत्री, मुक्तामणिवाटिकायां पूर्वभागे देवेन्द्रनाथः, तस्या दक्षिणे भगवान् वैश्वानरः, तस्या याम्याशायां यमनाथः, तस्या दक्षिणपश्चिमे निर्ऋतिनाथः, तस्याः पश्चिमे वरुणनाथः, तस्या वायव्ये मारुतनाथः, तस्या उत्तरे कुबेरनाथः, तस्याः प्रागुत्तरभागे रुद्रः, देवदारुवाटिकायां वार्ताली, विद्रुमवाटिकायां ब्रह्मनाथः, माणिक्यमण्डपे श्रीमहाविष्णुः, सहस्रस्तम्भमण्डपे शम्भुनाथः, अमृतवाटिकायां तारादेवी, आनन्दवाटिकायां वारुणीदेवी, विमर्शवाटिकायां कुरुकुल्लादेवी, बालातपच्छायायां मार्तण्डभैरवः, चन्द्रिकोद्गारकच्छायायां सोमनाथः, शृङ्गारपरिखायां मन्मथनाथः, महापद्माटव्यामन्नपूर्णा, चिन्तामणिगृहराजप्राग्द्वारे दुर्गाभट्टारिका, महामञ्चाधस्तात् श्रीबालाम्बिका, चिन्तामणिगृहराजपरितो महाशम्भुनाथः, चिन्तामणिगृहपूर्वद्वारे अमृतेश्वरी, चिन्तामणिगृहराजतूलिकापीठे श्रीपूर्त्यम्बा, चिन्तामणिगृहराजपूर्वोत्तरमणिधिष्ण्ये मन्त्रचक्रमातङ्गी, तस्यैव दक्षिणभागमणिधिष्ण्ये मन्त्रचक्रवाराही, चक्रराजमहारथशृङ्गे समाननाभट्टारिका, श्रीचक्रस्थाने श्रीकामेश्वरभट्टारकः ॥ ९१ ॥

## आनन्दलहरीटीका

पदन्यासेति। हे चारुचरिते शोभनचारित्रे तव चरणकमलं भवने गृहे ये कलहंसास्ते न जहति न त्यजन्ति। कीदृशाः, पदन्यासे पादविक्षेपे या क्रीडा सैव परिचीयते विशेषतो ज्ञायत इति परिचयः शास्त्रादिकं आरब्धुं आरंभविषयीकर्तुं, आलब्धुमिति पाठे ज्ञातुं मनो येषां ते तथाविधा इव इत्युत्प्रेक्षायाम्। खे आकाशे अलं अत्यर्थं चरन्तो गच्छन्तः। चरणकमलं कीदृशं, सुभगौ यौ मणिमयौ मञ्जीरौ तयोर्यद्रणितं ध्वनिः, तच्छलात् स्वस्य चरणस्य विक्षेपे विन्यासे शिक्षामुपदेशं आचक्षाणं कथयन्तं तव चरणकमलं राजहंसानां पदविन्यासाध्यापकमिति पर्यवसितम्। चारुचरितमिति पाठे चरणकमलविशेषणं, चारु मनोहरं चरितं गमनं यस्य तदित्यर्थः। कमलमित्यत्र युगलमित्यपि क्वचित्पाठः। चरितं तु चरित्रे स्यात् संचारे व्रतकर्मणीति विश्वरूपकोशः। केचिदिदं पद्यमन्यथापि वर्णयन्ति। भवने श्रीचक्रे स्थिताः। कलहंसाः कले अव्यक्तमधुरे त्वन्मन्त्रजपरूपे हंसा इव हंसाः, ते ते त्वन्मन्त्रजापिनो गुरुप्रभृतय इत्यर्थः। तेषां श्रीचक्रमध्ये पूजाविधानात् भवनस्थत्वम्। ते तव चरणकमलं न जहति। सदैव भजन्तीत्याशयः। ते कीदृशाः, खे अलं चरन्तः खेचरसिद्धिमन्तः। पदानां स्थानानां चतुर्दशभुवनानां न्यासः सृष्टिः क्रीडा पालनं परिचयः सर्वतोभावेनावचयः संहारः। समाहारद्वन्द्वैकत्वम्। पदन्यासक्रीडापरिचयमारब्धुं कर्तुं मनो येषां ते, तथा चतुर्दशभुवनसृष्ट्यादिकरणार्थिन इवेत्यर्थः। कीदृशं तत् सुभगानां शोभनकामानां

मणिश्चिन्तामणिः सगुणः, मनसो जायत इति पृषोदरादित्वान्मञ्जुः कामः, स एषामस्तीति मञ्जिनः सकामा जीवाः, तानीरयति प्रेरयति अन्तर्यामितया तत्तत्कर्मणि प्रवर्तयतीति मञ्जीरः, परमात्मा, तयोः सुभगमणिमञ्जीरयोः यद्रणितं चेष्टितं तत्प्रतिपादकं वाक्यं तच्छलात्, स्वविक्षेपे शोभनेऽविक्षेपे विक्षेपाभावे शिक्षामाचक्षाणम्। विक्षेपो नाम मायावशादनात्मन्यात्मावभासः। सगुणनिर्गुणब्रह्मप्रतिपादकवेदवाक्यावबोधस्त्वच्चरणप्रसादाद्भवति। मनोमयाधीनविक्षेपनिवृत्तौ त्वच्चरणकमलमेव निमित्तमिति भावः॥ ९१॥

[1]गतास्ते मञ्चत्वं द्रुहिणहरिरुद्रेश्वरभृतः[2]
[3]शिवः स्वच्छच्छायाघटितकपटप्रच्छद[4]पटः।
त्वदीयानां भासां प्रतिफलन[5]रागारुणतया
शरीरी शृङ्गारो रस इव दृशां दोग्धि कुतुकम्॥ ९२॥

கதாஸ்தே மஞ்சத்வம் த்ருஹிண ஹரி ருத்ரேச்வர ப்ருத:
8 1 1 1 1 3 3 4 1
சிவ: ஸ்வச்சச்சாயா கடித கபட ப்ரச்சத பட: ।
1 2 1 2 4 1 1 1 1 1 1 2 3 1 1
த்வதீயாநாம் பாஸாம் ப்ரதிபலன ராகாருணதயா
1 3 4 1 1 2 3 1
சரீரீ ச்ருங்காரோ ரஸ இவ த்ருசாம் தோக்தி குதுகம் ॥
3 3 3 3 4 1 1 1

तेरे मंचत्व को प्राप्त हो गये ब्रह्म हरि रुद्रेश्वर
धवल कांति के मिल जो बने पलँग के ऊपर की चादर।
शिव वह माँ! तव अरुण रश्मियों के प्रतिबिंबित होने पर
मूर्तिमान शृंगार बने कौतुक पैदा करते भव हर॥

लक्ष्मीधरा

एवं मकुटादिपादान्तं वर्णयित्वा पुनः स्वरूपं प्रस्तौति – गताः प्राप्ताः, ते तव, मञ्चत्वं खट्वारूपत्वं, द्रुहिणहरिरुद्रेश्वरभृतः द्रुहिणो ब्रह्मा हरिर्विष्णुः रुद्रः ईश्वर एते अधिकारिपुरुषाः महेश्वरतत्त्वान्तर्गताः ते च ते भृतश्च। क्विबन्तोऽयं शब्दः बहुवचनान्तः। भृतो भृतकाः। विशेषणसमासः। तेषां कामरूपाणां अत्यन्तसन्निकृष्टसेवार्थं मञ्चस्य पादचतुष्टयरूपता युज्यत एव। शिवः शिवशब्दो व्याख्यातः शिवतत्त्वात्मक एवाधिकारिपुरुषः। यद्वा–

1 गतस्ते 2 भृतः 3 शिवस्वच्छ 4 पदम् 5 लाभारुणतया, लाभादरुणितः।

सदाशिवतत्त्वम् । स्वच्छच्छायाघटितकपटप्रच्छदपटः स्वच्छा चासौ छाया च स्वच्छच्छाया, कान्तिः, सैव घटितः कपटप्रच्छदपटः शुभ्रकान्तिरेव वस्त्रात्मनावस्थित इत्यर्थः । त्वदीयानां भवत्संबन्धिनीनां, भासां कान्तीनां, प्रतिफलनरागारुणतया प्रतिफलनेन यो रागः रक्तिमा संक्रान्तः तेनारुणो रक्तवर्णः तस्य भावस्तत्ता तया । शरीरी मूर्तः, शृङ्गारः शृङ्गाराख्यो रस इव । शृङ्गाररसः रक्तवर्ण इति महाकविप्रसिद्धिः । इवशब्दस्सम्भावनायाम् । दृशां भवद्वीक्षणानां, दोग्धि दुग्धे प्रसूते करोतीति यावत्, कुतुकं आनन्दम् । अत्रेत्थं पदयोजना— हे भगवति! ते मञ्चत्वं द्रुहिणहरिरुद्रेश्वरभृतः गताः; शिवः स्वच्छच्छायाघटितकपटप्रच्छदपटस्सन् त्वदीयानां भासां प्रतिफलनरागारुणतया शरीरी शृङ्गारो रस इव दृशां कुतुकं दोग्धि । अत्रेदमनुसन्धेयम् - आधारस्वाधिष्ठानमणिपूरानाहतविशुद्ध्याज्ञाचक्रात्मकं षट्चक्रसदनं पृथिव्यग्नि-जलवायुगगनमनस्तत्त्वाधिष्ठानं एकादशेन्द्रियाधिष्ठानं च । एवं आज्ञाचक्रान्ते एकविंशति-तत्त्वान्यधिष्ठितानि तदात्मनावस्थितानि । तत उपरि मायाशुद्धविद्यामहेश्वरसदाशिवात्मक-तत्त्वचतुष्टयं ब्रह्मग्रन्थ्यनन्तरभाविचतुर्द्वारात्मकभूपुरत्रितयात्मकश्रीचक्रद्वारचतुष्टये स्थितम् । प्रागादिद्वारदेशेषु मायादीनि चत्वारि तत्त्वानि । तान्येव मञ्चस्य चतुष्पदानि । शुद्ध-विद्यायास्सदाशिवतत्त्वाभिनिवेशात् तच्छायापत्त्या सहस्रकमलान्तर्गतशिवस्सदाशिवात्मा अनुराग-वशात् शुद्धविद्यायास्संवलनात् तादात्म्यं प्रतीयते । सहस्रकमलान्तस्स्थितस्य चतुर्द्वारात्मकस्य कर्णिकारूपस्य श्रीचक्रस्य मध्यवर्तिचतुरश्रात्मकबैन्दवापरपर्यायसरघाशब्दवाच्यसुधासिन्धौ शिव-शक्त्योर्मेलनमिति । अवशिष्टं सर्वं 'सुधासिन्धोर्मध्ये' (श्लो. ८) इति श्लोकव्याख्यानावसरे कथितम् । अत्र तद्गुणालङ्कारानुप्राणित उत्प्रेक्षालङ्कारः, शिवस्यातिधवलस्य कामेश्वरी-तनुकान्त्या ताद्गुण्यात् शरीरी शृङ्गारो रस इवेत्युत्प्रेक्षणादिति ॥ ९२ ॥

## सौभाग्यवर्धनी

इदानीं श्रीदेव्या नित्यशृङ्गारित्वं प्रस्तौति—गता इति । हे मातः, द्रुहिण-हरिरुद्रेश्वरभृतः, पृथिव्यप्तेजोवाताधिपब्रह्मविष्णुरुद्रेश्वरैः मञ्चचरणतां गतैः धृतः शिवः, सदाशिवः व्योमाधिपतिः, स्वच्छच्छायाघटितकपटप्रच्छदपटः, शुभ्रकान्त्या घटितं कपटं छद्म यस्य प्रच्छदपटस्य आस्तरणपटस्य तादृशः, तव मञ्चत्वं गतः, सदाशिवः स्वच्छ-कान्तिरूपः आस्तरणपटः । त्वदीयानां भासां प्रतिफलनलाभारुणतया, त्वत्कान्तिप्रति-बिम्बलाभारुणभावेन शृङ्गारो रसः शरीरीव दृशां कुतुकं दोग्धि । परमशिवनेत्राणां कुतुकं तनोति । तथा च रुद्रयामले—ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः । एते पञ्च महाप्रेताः भूताधिपतयो मताः । चत्वारो मञ्चचरणाः पञ्चमः प्रच्छदः पटः । साक्षी प्रकाशरूपेण

शिवेनाभिन्नविग्रहा। तत्रासने समासीना निर्भरानन्दरूपिणी॥' इति। यद्यपि शृङ्गाररसः श्याम इति सङ्गीतशास्त्रादौ प्रतिपादितः, तथापि शृङ्गाररसस्य अनुरागप्रधानरजोगुणमयत्वा-दरुणगुण इह प्रतिपादितः॥ ९२॥

## अरुणामोदिनी

एवं देवीस्वरूपं, तस्या यथाधिकारमिष्टार्थवितरणं चोपवर्ण्य देवयोरैक्यवर्णनापूर्वकं नित्यशृङ्गारित्वं वर्णयति–गता इति। हे मातः! द्रुहिणहरिरुद्रेश्वरभृतः, ब्रह्मविष्णुरुद्र-महेश्वराः कारणपुरुषाः, त एव बिभ्रतीति भृतः, भृतकाः क्विप्। ते मञ्चत्वं मञ्चभावं गताः प्राप्ताः। ब्रह्मादयः चत्वारः चतुष्पदीभूय भवत्या अत्यन्तमनिकृष्टोपासनार्थं खट्वारूपं प्राप्ता इत्यर्थः। ब्रह्मादीनां भृतकभावापत्तिरागमेषु प्रसिद्धा, प्रकाशिता च पूर्वमेवास्माभिः। उक्तं च सहस्रनामसु, 'पञ्चप्रेतासनारूढा पञ्चब्रह्मस्वरूपिणी' इति। किञ्च स्वच्छच्छायाघटितकपट-प्रच्छदपटः, स्वच्छया निर्मलया छायया धवलकान्त्या घटितः कपटरूपः मायारूपः प्रच्छदपटः कशिपुः, तदुपरिस्थवस्त्रं वा येन सः, 'कशिपुश्च सदाशिवः' इति वचनात्। कशिपुकृत-स्वदेहकान्त्या कल्पितोपरिवस्त्र इत्यर्थः। 'निचोलः प्रच्छदपटः' इत्यमरः। शिवः सदाशिवो भवत्पतिः, त्वदीयानां भवदीयानां भासां अरुणकान्तिप्रतिफलनेन प्रतिबिम्बेन यो रागः, तेनारुणतया, आरुण्यवर्णत्वेन, स्फटिके आरुण्यसंक्रान्तिदर्शनादित्यर्थः। त्वदीयानां दृशां नेत्राणां शरीरी मूर्तिमान् शृङ्गारो रस इव, शृङ्गारो रक्तवर्ण इति कविसमयप्रसिद्धिः। कौतुकं कौतूहलं, दोग्धि आनन्दं जनयतीत्यर्थः। अत्रोक्तं रुद्रयामले–'ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः। एते पञ्च महाप्रेताः भूताधिपतयो मताः। चत्वारो मञ्चचरणाः पञ्चमः प्रच्छदः पटः। साक्षी प्रकाशरूपेण शिवेनाभिन्नविग्रहा। तत्रासने समासीना निर्भरानन्दरूपिणी' इति। अत्र भाविकालंकारानुप्राणितोत्प्रेक्षालङ्कारः॥ ९२॥

## आनन्दगिरीया

गतस्त इति। अत्र ब्रह्मविष्णुरुद्रेश्वरसदाशिवाः पञ्च महाप्रेताः पृथिव्यप्तेजो-वायुव्योम्नामधिपतयः। तत्र शिवः परमेश्वर्या मञ्चकः। ब्रह्मादयश्चत्वारो मञ्चचरणाः। सदाशिवस्य स्वच्छा कान्तिः प्रच्छदपटः आस्तरपटः। तत्रासने समासीनायाः परमेश्वर्याः अरुणकान्त्या प्रतिफलितया आरक्तो जातः सदाशिवो मूर्तिमान् शृङ्गार इव कौतुकमातनोति इति वर्ण्यते। हे मातः शिवः सदाशिवः, शरीरी शृङ्गार इव मूर्तिमाननुराग इवेति दृशां कौतुकं दोग्धि। दृशामिति सप्तम्यर्थे षष्ठी। द्रष्टृकौतूहलं पूरयति। त्वद्द्रष्टॄणां दृक्षु, अथवा परमशिवस्य दृक्षु। किंलक्षणः शिवः ते मञ्चत्वं गतः, मञ्चतां प्राप्तः, मञ्चचरणा-पेक्षायामाह–द्रुहिणहरिरुद्रेश्वरधृतः, द्रुहिणश्च हरिश्च रुद्रश्च ईश्वरश्च एतैश्चरणतामापन्नैः, धृतः।

पुनः किंलक्षणः स्वच्छच्छायाघटितकपटप्रच्छदपटः स्वच्छकान्तिव्याजनिष्पादितप्रच्छादितपटः, स्वच्छः श्वेतः कान्तिसमूहो यः तेन घटितो निष्पादितः एतादृशः कपटप्रच्छदपटः; कान्तिव्याजेन प्रच्छदपट एवास्तीत्यर्थः। तत्र स्थिता त्वमुपास्येत्यर्थः। तथा च रुद्रयामले— 'ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च-सदाशिवः। एते पञ्च महाप्रेताः भूताधिपतयो-मताः। तद्भासा प्रच्छदपटः शिवेनाभिन्नविग्रहा। तत्रासने समासीना निर्भरानन्दरूपिणी।' इति। तत्र स्थितायास्तव भासां कान्तीनां यत्तत्र प्रतिफलनं प्रतिबिंबितत्वं, तस्य लाभेन कृतया अरुणतया रक्तिम्ना, तेनोत्प्रेक्षते शरीरी शृङ्गाररस इव। शृङ्गारशब्देनात्र शृङ्गारमूलभूतोऽनुराग उच्यते, शृङ्गारस्य श्यामवर्णत्वात्। अनुराग एव स्थायितामापद्य विभावानुभावव्यभिचरितः सत्वान्वितः स तु शृङ्गारतामापद्यत इति। केवलानुरागत्वेन यत्र वर्णनं तत्रारुणतया, यत्र तु शृङ्गारत्वेन तत्र श्यामतयेति। गतास्ते मञ्चत्वं इति श्लोकरहस्यार्थः—गता इति एतत्पञ्चदेवकथनेन भौतिकबीजपञ्चकं, त्वदीयानां भासां कामकलाभासा तयैवाधिष्ठिता दृशां मध्ये दर्शनादेव जगदुत्पत्तिं कुर्वन्ति रस इव संसारक्रीडाविशेषः। सृष्टिमनुः, ह् य् व् र् ल् ईं हं यं वं रं लं ईं हँ यँ वँ रँ लँ ओं॥ ९२॥

तात्पर्यदीपिनी

गता इति। हे परमेश्वरि द्रुहिणहरिरुद्रेश्वरभृतः द्रुहिणो ब्रह्मा हरिर्विष्णुः रुद्रः संहर्ता ईश्वरः सहस्राक्षः त एव भृतोऽधिकारिपुरुषाः ते तव मञ्चत्वं मञ्चपादतां गताः प्राप्ताः। तेषां कामरूपाणां अत्यन्तसन्निकृष्टसेवार्थं मञ्चस्य पादचतुष्टयरूपता युज्यत एवेति। किंविधमञ्चत्वं, शिवस्वच्छच्छायाघटितकपटप्रच्छदपटं, शिवा स्वच्छा छाया यस्य स एवंविधः घटितो निर्मितः कपटश्छद्म अधस्तनपालीप्रकाशकः प्रच्छदपटो यस्मिंस्तत्तथा, स त्वदीयानां भवत्संबन्धिनीनां भासां कान्तीनां प्रतिफलनरागारुणतया प्रतिफलनेन यो रागो रक्तिमा तेनारुणो रक्तवर्णः तत्ता तया दृशां दृष्टीनां कुतुकमानन्दं दोग्धि पूरयति। अत्रोत्प्रेक्षा। क इव, शरीरी मूर्तिमान् शृङ्गारः शृङ्गाराख्यो रस इव। शृङ्गाररसो हि दृशां कुतुकं दोग्धि। अत्रेदमनुसन्धेयं—द्रुहिणहरिरुद्रेश्वरभृत इत्यत्र द्रुहिणशब्देन ऋग्वेदः। हरिशब्देन यजुर्वेदः, रुद्रशब्देन सामवेदः, ईश्वरशब्देनाथर्वणवेदः। तदुक्तं शिवतन्त्रे, द्रुहिणस्तु ऋचां नाथो हरिस्तु यजुषो मतः। आसां रुद्रः सामदृष्ट ईशश्चाथर्वणः स्मृत इति। ऋगादिरूपा त्वमेवासीति फलितार्थः। ९२॥

पदार्थचन्द्रिका

ननु ब्रह्मादयो देवा अपि पूज्याः सन्तीति, कथं भवानीचरणयोरेवाराध्यत्वमित्याशंक्य ब्रह्मादीनामपि भवान्याः सेवकत्वमाह—गता इति। द्रुहिणहरिरुद्रेश्वरशब्दान्

वाचकत्वेन बिभ्रतीति तथा द्रुहिणहरिरुद्रेश्वरा देवा इत्यर्थः। रुद्रेश्वरौ महादेवमूर्तिभेदौ। मञ्चत्व पर्यङ्कत्वं। शिवोऽपि ते तव दृशां शरीरी मूर्तिमान् शृङ्गारो रस इव कुतुकं परमसुखं दोग्धि रमयतीत्यर्थः। अत्र पूरणार्थो दुहिः। स्वच्छच्छायया स्वात्मप्रद्योतेन घटितश्चासौ -कपटप्रच्छदपटश्च तत्तथा, कपटेन मायया प्रच्छदपटः कपटप्रच्छदपटः॥ ९२॥

डिण्डिमभाष्यम्

**गतास्त इति।** हे परमेश्वरि, द्रुहिणहरिरुद्रेश्वरभृतः द्रुहिणो ब्रह्मा, हरिर्विष्णुः, रुद्रः संहर्ता, ईश्वरः तिरोधानकृत्, एतैश्चतुर्भिः मञ्चपादत्वं गतैः, ब्रह्ममयैकमञ्चपादाय नम इत्यादिचतुश्चत्वारिंशन्मन्दिरमन्त्रान्तर्गतमन्त्रपञ्चकप्रामाण्यात उपरिफलकरूपस्य सदाशिवस्य एते भर्तारो भारका भवन्ति, इति कृत्वा तैर्भृतो धारितः शिवः सदाशिवः, किंभूतः, स्वच्छच्छायाघटितकपटप्रच्छदपटः, स्वच्छया, छायया सदाशिवस्य छायया, घटितः कपटरूपः मायारूपः प्रच्छदपटः उत्तरीयास्तरणवस्त्रविशेषः यस्य तथोक्तः, सदाशिवस्य विशेषणम्। पुनः किंभूतः शिवः, त्वदीयानां त्वदङ्गसमुद्भूतानां भासां लौहित्यसंज्ञानां प्रतिफलनलाभारुणतया संक्रान्तिलाभेन अत्यन्तपाटलवर्णतया शरीरी शृङ्गारो रस इव मूर्तिमान् उज्ज्वल इव। 'शृङ्गारः शुचिरुज्ज्वलः' इत्यमरः। दृशां कुतुकं दोग्धि। कस्य दृशां, भगवत एव लोचनानां, अन्येषां तत्र प्रवेशाभावात्। भगवत्यास्तु पञ्चशिवमञ्चारोहणं बहुषु स्थलेषु श्रूयते—'ब्रह्मविष्णुशिरोरत्ननिघृष्टचरणाम्बुजे' इति, 'पञ्चब्रह्मप्रपञ्चस्फुटघटितमहामञ्च-सञ्चारकेलीसंभ्रान्तः' इति च, 'पञ्चब्रह्ममहामञ्चपरिष्करणकारिणीम्।' इति पञ्चशिवात्मनि मञ्चे मिलितामिलितेत्यादिषु बहुधा श्रूयतेऽत एव सर्वदेवतासमधिकशीलत्वं लोकोत्तीर्णत्वं च भगवत्याः। न हि तां विना अन्यत्र श्रूयते काचन देवता काश्चन देवता आसनीकृत्य वसतीति॥ ९२॥

गोपालसुन्दरी

**गतास्ते मञ्चत्वमिति।** द्रुहिणो ब्रह्मा सृष्टिकर्ता, हरिर्विष्णुः स्थितिकर्ता, रुद्रः संहर्ता, ईश्वरस्तिरोधानकृत्, एतैश्चतुर्भिः पादरूपैः, भृतो धारितः शिवः सदाशिवोऽनुग्राहकः, ते तव मञ्चत्वं गतः। कीदृशः स्वच्छच्छायया शुभ्रच्छायया घटितः कपटेन छलेन प्रच्छदपटः आस्तरणरूपः, सदाशिवस्य कशिपुरूपत्वात्। एतादृशो दृशां सुखं दोग्धि ददाति। क इव, त्वदीयानां त्वदङ्गसंभूतानां भासां आरक्तकान्तीनां प्रतिफलनलाभेन अरुणतया पाटलवर्णतया शरीरी कृतदेहपरिग्रहः शृङ्गारो रस इवेत्यर्थः। तदुक्तं रुद्रयामले—'ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः। एते पञ्च महाप्रेताः भूताधिपतयो मताः। चत्वारो

मञ्चचरणाः पञ्चमः प्रच्छदः पटः। सच्चित्प्रकाशरूपेण शिवेनाभिन्नविग्रहा। तत्रासने समासीना निर्भरानन्दरूपिणी॥' इति। शृङ्गाररसस्य श्यामत्वं सङ्गीतशास्त्रे, 'शृङ्गारः शुचिरुज्ज्वलः' इत्यादिना शुक्लत्वं कोशे यद्यप्युक्तं, तथापि अनुरागप्रधानरजोगुणमयत्वात् अरुणतयाऽत्र वर्णनमित्यवगन्तव्यम्। विष्णुपक्षे—शिवो गुणत्रयरहितः, शुद्ध आत्मा, तव मञ्चत्वं क्रीडास्थलत्वं गतः आत्मारामत्वात् भवतः। स आत्मा कीदृशः? द्रुहिणहरिरुद्रेश्वरभृतः, हरिरिन्द्रः, एभिर्देवैः हृदये ध्यानावस्थायां भृतो धृतः। पुनः कीदृशः? स्वच्छया अनादिवासनारहितया छायया बुद्ध्या अघटितोऽसंबद्धः, कपटो माया तद्रूपः आवरकत्वात्, प्रच्छदपटो यस्य सः, तथा शुद्धस्य मायारहितत्वात् त्वदीयानामीश्वरसंबन्धिनीनां मायारूपाणां भासां बुद्धीनां प्रतिफलनलाभात् अरुणितो जगत्कर्तृत्वाद्यभिमानित्वात्। अत एव शुद्धचैतन्यस्य मायात उत्प्रेक्षते शरीरी शृङ्गार इति, अरूपोऽपि दृशां कुतुकं दोग्धि रूपवानिव भवतीत्यर्थः। अथवा शिवो महेशः, स्वच्छच्छायाघटितकपटप्रच्छदपटः श्वेतकान्तिकान्तप्रच्छदपटरूपः, अत एव मञ्चत्वेनोक्तः। त्वदीयानां भासां श्यामकान्तीनां प्रतिफलनलाभेन अरुणतया सूर्यतया प्रकाशकतयेति यावत्। शरीरी शृङ्गारो रस इवेति शृङ्गाररस्य श्याममूर्तित्वादिति भावः॥ ९२॥

आनन्दलहरीटीका

गत इति। द्रुहिणो ब्रह्मा तदादिभिश्चतुर्भिः पादरूपैर्भृतो धृतः शिवः सदाशिवः ते तव मञ्चत्वं खट्वारूपतां उपरिस्थितफलकरूपतदेकदेशतामिति यावत्। गतः प्राप्तः। स्वच्छया निर्मलच्छायया कान्त्या घटितो निर्मितः कपटेन छलेन प्रच्छदपटः खट्वाच्छादकवस्त्रं येन स तथा त्वदीयानां भासां कान्तीनां प्रतिफलनं प्रतिबिम्बः तल्लाभाद्धेतोः अरुणितः रक्तीकृतः। एतादृशः स दृशां नेत्राणां अर्थात् त्वत्सहचरीसंबन्धिनां कुतुकं दोग्धि जनयति। लाभारुणतयेति पाठे कौतुकजनने करणत्वेनान्वयः। क इव, शरीरी कृतदेहपरिग्रहः शृङ्गारो रस इवेति। अत्र यद्यपि शृङ्गाररसस्य श्यामतया वर्णनमेव कविसंप्रदायसिद्धम्। तदुक्तं— 'श्यामो भवति शृङ्गारः सितो हासः प्रकीर्तितः' इति। तथापि रजोगुणविकारतया रक्तत्वेनात्र वर्णनं इति संप्रदायः। मम त्वेवं प्रतिभाति, शृङ्गाराख्यो रसोऽत्र न विवक्षितः। तथात्वे रसपदवैयर्थ्यात्। शृङ्गारः स तु मूर्तिमानित्यादौ तथा दर्शनात्। किन्तु रसो राग इत्यर्थः। शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः इत्यमरः। स च शृङ्गारस्य जनकत्वात् शृङ्गारः, आयुर्घृतमितिवत्। शृङ्गमुत्कर्षं ऋच्छति प्राप्नोति इति शृङ्गारः। ऋच्छ गतौ। सर्वे गत्यर्थाः प्राप्त्यर्थाः इति न्यायात्। शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडाम्बुयन्त्रके। विषाणोत्कर्षयोश्चाथ शृङ्गः स्यात्कूर्चशीर्षके इति विश्वप्रकाशः। तस्य च रागस्य रागिककर्ममात्रकरणस्य रजो-

जन्यतया रागपदवाच्यतयाऽत्र रक्तत्वेनैव वर्णनमुचितमिति न विरोधः। अनेनेदं ध्वन्यते, रागस्त्वच्चरणतले तिष्ठन् ब्रह्मादीनामप्युपरि वर्तते। किञ्च तत्कृपया जगच्चेद्वीतरागं भवेत् तदा तस्योच्छेद एव स्यादिति शंकया त्वच्चरणतले सदा तिष्ठतीति सुधीभिर्ध्येयम्। ब्रह्मादीनां मञ्चपादादिरूपतोक्ता यामले — ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः। एते पञ्च महाप्रेता भूताधिपतयो मताः। चत्वारो मञ्चचरणाः पञ्चमः प्रच्छदः पटः। संवित्प्रकाशरूपेण शिवेनाभिन्नविग्रहा। तत्रासने समासीना निर्भरानन्दरूपिणी ॥ ९२ ॥

अराला केशेषु प्रकृति[1]सरला मन्दहसिते
शिरीषाभा [2]चित्ते [3]दृषदुपलशोभा कुचतटे।
भृशं तन्वी मध्ये [4]पृथुरुरसिजारोहविषये
जगत्त्रातुं शम्भोर्जयति करुणा काचिदरुणा ॥ ९३ ॥

அராளா கேசேஷு ப்ரக்ருதி ஸரளா மந்தஹஸிதே
1 1 1 1 3 1
சிரீஷாபா சித்தே த்ருஷதுபலசோபா குசதடே।
4 1 1 1 3 3 1 4 1 1 1 1
ப்ருசம் தந்வீ மத்யே ப்ருதுருரஸிஜாரோஹவிஷயே
4 1 4 1 2
ஜகத் த்ராதும் சம்போர் ஜயதி கருணா காசிதருணா ॥
3 1 1 1 4 1 1 1 1 3

सकल अरिष्टों से जगती का करने संरक्षण तरुणा
वाणी औ मन के भी परे अनिर्वचनीय शंभु करुणा
जगमग जगती है जग में बन तेरी मूर्ति जननि अरुणा
जो है कुटिल शिरोजों में सहज ही सरल मुस्कानों में
सिरिसकनों सी कोमल तन में पत्थर सी कठिन स्तनों में
अतिशय क्षीण कमरे में पृथुल उरोजों मे औ जघनों में ॥

लक्ष्मीधरा

अराला वक्रा, केशेषु नान्यत्रेत्यर्थः। प्रकृतिसरला प्रकृत्या स्वभावेन सरला ऋज्वी, मन्दहसिते मन्दस्मिते, शिरीषाभा शिरीषकुसुमाभा अतिमृद्वीत्यर्थः। चित्ते अन्तःकरणे, दृषदुपल-

1 रसिका 2 गात्रे 3 दृषदिव कठोरा 4 पृथुरपि वरा, पृथुरुरसि चारोह, पृथुरिव वरारोह, पृथुरुरसिजादेश।

शोभा दृषदि य उपलः पेषणिका दृषदुपल इति पूर्वमेवोक्तं तस्येव शोभा यस्यास्सा। कुचतटे स्तनतटे, भृशं अत्यर्थं, तन्वी कृशा, मध्ये वलग्ने, पृथुः स्थूला, उरसिजारोहविषये स्तनविषये नितम्बविषये च। विषयशब्दः स्थानवाची। जगत् प्रपञ्चं, त्रातुं रक्षितुं, शम्भोः सदाशिवस्य, जयति अहमेवेति स्फुरतीत्यर्थः। करुणा कृपात्मिका, काचित् अनिर्वाच्या, अरुणा अरुणाख्या शक्तिः। यद्वा – अरुणवर्णा काचित् करुणा कृपा करुणाया आरुण्यारोपात् मूर्ता करुणेव भातीति वाक्यार्थः। अरुणाख्या शक्तिरर्थादवगता। अत्रेत्थं पदयोजना – शम्भोः काचित् केशेषु अराळा मन्दहसिते प्रकृतिसरळा चित्ते शिरीषाभा कुचतटे दृषदुपलशोभा मध्ये भृशं तन्वी उरसिजारोहविषये पृथुः अरुणा करुणा जगत् त्रातुं जयति। अत्र कामेश्वर्याः अरुणा-करुणाशब्दाभ्यां निगीर्याध्यवसानात् अतिशयोक्तिः॥ ९३॥

## सौभाग्यवर्धनी

निखिलनिगमागमप्रसिद्धं प्रबन्धप्रतिपाद्यं वस्तु विशेषतो वर्णयति – अरालेति। केशेषु अराला कुटिला, प्रकृतिसरला स्वभावसरला मन्दहसिते, शिरीषाभा गात्रे, दृषदिव शिलेव कुचतटे कठोरा, भृशं अत्यर्थं तन्वी मध्ये, पृथुरपि विपुला वरारोहविषये, जगत् त्रातुं शंभोः जयति करुणा काचिदरुणा। वस्तुतः साक्षाच्छिवाविनाभूतचिच्छक्तेः शरीरपरिग्रहो नास्ति। जगत् त्रातुं एतादृशशरीरोपाध्यवलम्बनमिति भावः। कुटिलत्वसरलत्वयोः, कठोरत्व-मृदुत्वयोः, तनुत्वपृथुत्वयोः एकाधिकरणे प्रतिपादनाद्विरोधाभासः। अवयवगतधर्माणां अवयविनि आरोपात् अवयवावयविनोः अभेदः रूपकविशेषः अध्यारोपोपमापरपर्यायः। यथा 'त्याज्यः कुटिलसंसर्गो निस्पृहेणापि यत्नतः। स्वभावनिर्मला गङ्गा तरङ्गैः कुटिलायते॥' इति। जगत्त्राणकरुणया एतादृशशरीरोपाधिं अवलम्बमाना अतर्क्यैश्वर्यधुर्या शंभोः अरुणगुण-विशिष्टा काचिच्चिच्छक्तिः जयतीति वाक्यार्थः॥ ९३॥

## अरुणामोदिनी

एवमेकपञ्चाशच्छ्लोकैः भगवत्याः किरीटादिपादान्तं वर्णितं विस्तरेण। यद्यपि 'मौलितो मानवा वर्ण्या देवाश्चरणतः पुनः' इति काव्यकल्पलतायां वर्णनानियमात् किरीटादि-पादान्तवर्णनस्य विरोध एव प्रतिभाति, तथापि सहस्रनामसु किरीटादिपादान्तवर्णनस्य प्रसिद्धत्वात् न विरोधः। अथ तत्स्वरूपं 'इषुभिः पञ्चभिर्धनुषा च विद्धत्यादिशक्तिररुणा विश्वजन्या' इति श्रुतिप्रसिद्धं प्रबन्धप्रतिपाद्यं निरूपयति अरालेति। केशेषु शिरोरुहेषु, अराला कुटिला; नान्यत्रेत्यभिप्रायः। 'अरालं वृजिनं जिह्मम्' इत्यमरः। गम्यमानस्यैवा-

प्रयोगः। तथा मन्दहसिते स्मिते प्रकृतिसरला प्रकृत्या स्वभावेनैव सरला ऋजुः, तथा गात्रे शिरीषाभा शिरीषस्यामेवाभा यस्याः सा शिरीषपुष्पवत् मृदुलशरीरेत्यर्थः। चित्त इति पाठे मृदुलचित्तेत्यर्थः। तथा कुचतटे दृषदुपलशोभा दृषदुपलस्य पेषणीशिलायाः शोभा यस्याः सा, उपलवत् प्रकाशमानकुचतटेत्यर्थः। तथा मध्ये-वलग्ने- भृशं अत्यन्तं तन्वी कृशा। तथा वरारोहविषये श्रेष्ठनितम्बप्रदेशे पृथुः प्रथिष्ठा। एवंविधा काचित् उद्यदादित्यरक्तत्वात् अरुणा इति प्रसिद्धा शक्तिः, शम्भोः परमेश्वरस्य, करुणा दयैव जगत् त्रातुं रक्षितुं जयति वर्तते। समस्तजगद्रक्षणपरायणस्य परमेश्वरस्य करुणैव अरुणारूपा शक्तिः। शक्तिशक्तिमतोः अभेदादिति तयोरैक्यद्योतनायैवकारप्रयोग इत्यवधेयम्। वस्तुतः शिवाभिन्नायाः चिच्छक्तेः मूर्तिधारणस्य जगद्रक्षणार्थत्वात् एवंविधा देवी मह्यं प्रसन्ना भूयादिति तात्पर्यार्थः॥ ९३॥

### आनन्दगिरीया

अरालेति। हे परमेश्वरि त्वद्रूपा काचिदलौकिकी अनिर्वचनीया शम्भोः करुणा जयति। अनिर्वचनीयत्वमाह–अरुणा रक्तरूपशरीरा। करुणायाः कपोतवर्णत्वात् अरुणरूप-धारणं विस्मयहेतुः। किं कर्तुं जगत् त्रातुं, तथा च सानुरागतया जगत्त्राणाशया कपोतवर्ण-मुत्सृज्यारुणरूपधारणं, केवलानुरागस्य रक्तत्वेनैव वर्णनस्य संप्रदायसिद्धत्वात्। यद्यपि परमेश्वरी चिदानन्दात्मकशिवाभिन्नतया निराकारा तथापि शरीरसाध्यजगद्रक्षामुद्दिश्यैतादृश-शरीरधारणमिति भावः। किंलक्षणा, केशेष्वराला कुटिलापि प्रकृतिसरला मन्दहसिते। कुटिलत्वसरलत्वयोः विरोधेऽप्यर्थतो विरोधाभासः। एवमग्रेऽपि। पुनः किंलक्षणा गात्रे शिरीषकुसुमाभापि, कुचतटे दृषदिव कठोरा। स्त्रीणां गात्राणि कोमलानि कुचौ कठिनौ इति लक्षणम्। पुनः किंभूता, मध्ये वलग्नभागे तन्व्यपि कृशापि वरारोहविषये नितम्बे पृथुर्महती। एतादृशी करुणा मूर्तिः शम्भुनाथस्य सर्वकृष्णा चिकुरकलापादौ। तेन सामुद्रिकोक्तलक्षण-साहित्यं सूचितम्। अरालेति तत्रैव मन्त्रध्यानमिति॥ ९३॥

### तात्पर्यदीपिनी

अरालेति। हे परमेश्वरि, शंभोः सदाशिवस्य काचिदनिर्वचनीया करुणा कृपा जयति, सर्वोत्कर्षेण वर्तते। करुणास्वरूपमाह–किंविधा करुणा, अरुणा आताम्रेत्यर्थः। पुनः केशेषु कुन्तलेषु अराला वक्रा। पुनः मन्दहसिते प्रकृतिसरला, मन्दं स्वल्पं यद्धसितं तस्मिन् प्रकृत्या स्वभावेन सरला ऋज्वी। पुनः चित्ते मनसि शिरीषाभा शिरीषपुष्पवदाभा यस्याः सा तथोक्ता अतिमृद्वीत्यर्थः। पुनः कुचतटे दृषदुपलशोभा दृषदि य उपलः पेषणिका तद्वत्

शोभा यस्याः सा तथोक्ता कठिनगुणयुक्तेत्यर्थः। पुनर्मध्ये वलग्ने भृशमत्यर्थं तन्वी कृशेत्यर्थः। पुनः उरसिजारोहविषये पृथुः, उरसिजयोरारोहो यस्मिंस्तद्विषये नितम्बविषये पृथुर्विशाला। किं कर्तुं करुणा जयति, जगत्त्रातुं विश्वं प्रतिपालयितुम्॥ ९३॥

पदार्थचन्द्रिका

एवं तत्तदवयवनिर्वर्णनद्वारा श्रीमूर्तिं निर्वर्ण्येदानीं श्रीमूर्तिमेव बहुधा विशेषयन् वर्णयति—अरालेति। शम्भोः करुणैव काचित् निरुपमा अरुणा अरुणरूपा श्रीभवानी-मूर्तिर्जयतीत्यन्वयः। मन्दहसिते प्रकृत्या सरला स्वाभाविकमन्दहसितेत्यर्थः। प्रकृति-रसिकेति पाठे प्रकृत्या रसिका अनुरक्तेत्यर्थः। आरोहविषये कटिप्रदेशे। अत्र सर्वत्र विषये सप्तमी द्रष्टव्या॥ ९३॥

डिण्डिमभाष्यम्

**अरालेति**। हे भगवति परमेश्वरि, शम्भोर्मूर्तिरेव करुणा, किंरूपा? केशेषु अराला वक्रा, 'अरालं वृजिनं जिह्मं मूर्तिमत्कुञ्चितं नतं' इत्यमरः। मन्दहसिते अल्पहासे प्रकृतिसरला स्वभावत ऋजुः। पतिव्रतानां प्रथमत्वात्, अन्यस्त्रीणामिव चपलचित्तानां मन्दहसिते अनार्जवं असारल्यं नास्ति। अत एव प्रकृतिसरला। गात्रे शरीरेऽतिकोमलसंपदा शिरीषाभा शिरीषकुसुमवन्मृद्वी। कुचतटे स्तनभारे दृषदिव शिलेव कठोरा काठिन्यगुणयुक्ता मध्ये वलग्ने भृशमत्यन्तं तन्वी तनिष्ठा, वरारोहविषये वरस्य श्रेष्ठस्य आरोहस्य विषये स्थाने 'आरोहो जघनं श्रोणी नितम्बः स्त्रीकटीतटः' इति विश्वः। पृथुः प्रथिमगुणयुक्ता एवमाकारसम्पन्ना जगद् भुवनं त्रातुं शम्भोर्भगवतो मूर्तेव करुणा काचिदरुणा जयति सर्वोत्कर्षेण वर्तते इत्यर्थः॥ ९३॥

गोपालसुन्दरी

**अरालेति**—केशेषु अराला वक्रा, मन्दहसिते ईषद्धासे प्रकृत्या स्वभावेन सरला ऋज्वी, गात्रे शरीरे शिरीषाभा शिरीषकुसुमवत्कोमला, कुचतटे स्तनाभोगे दृषदिव शिलेव कठोरा कठिना, मध्ये उदरे भृशमतिशयेन तन्वी कृशा वरस्य श्रेष्ठस्य आरोहस्य नितम्बस्य विषये स्थाने पृथुः प्रथिमगुणयुक्ता 'आरोहो जघनं श्रोणी नितम्बः स्त्रीकटीतटे।' इति विश्वः। एवंभूता महेशस्य शम्भोः करुणा भवानीरूपा अरुणा आरक्तवर्णा काचिदनिर्वचनीया जगद्भुवनं त्रातुं रक्षितुं जयतीत्यर्थः। विष्णुपक्षे—शं कल्याणं भवत्यस्मादिति शम्भुर्विष्णुस्तस्य करुणा जयति, कीदृशी? अकेशेषु को ब्रह्मा ईशः शिवः तद्विरुद्धेषु अराला वक्रा, अमन्द-मस्वल्पं हसितमुपहासो यस्मात्सोऽमन्दहसितो नारदस्तस्मिन् प्रकृतिसरला स्वभावतो ऋज्वी,

अं विष्णुं गायन्त्यगा वैष्णवास्तान् आ समन्तात् त्रायते रक्षति इत्यगात्रो वैष्णवरक्षकः, यद्वा न गच्छति न नश्यति इत्यगो वेदस्तमा समन्तात् त्रायते रक्षतीत्यगात्रो ब्राह्मणस्तस्मिन् शिरीषवत् कोमला, शिरीषाभा चित्ते इति पाठे अकारप्रश्लेषः, तेन अकारो विष्णुस्तद्विषयिकी चिन्ता यस्य तस्मिन् वैष्णव इत्यर्थः। कामिन्याः कुचौ तटे निकटे यस्यासौ कुचतटः कामी तस्मिन् दृषदिव कठोरा, वरं तपस्विनं आरोहन्तीति वरारोहा दैत्याः तेषु भृशं तन्वी स्वल्पा, ईमध्ये लक्ष्म्या उपरि पृथुर्बहुला, काचित् 'कश्चात्मनि समाख्यातः' इत्येकाक्षरकोषात् क आत्मा तद्विषयकमचिदज्ञानं यस्य वा तस्मिन् देहात्मवादिनि अरुणा अननुकूलेत्यर्थः॥ ९३॥

आनन्दलहरीटीका

अरालेति। केशेषु अराला वक्रा, मन्दहसिते स्मिते प्रकृत्या च स्वभावेन सरला ऋजुः, चित्ते मानसे, गात्रे इत्यपि क्वचित्पाठः। शिरीषपुष्पस्येव शोभा यस्यास्तादृशी अतिकोमलेति भावः। कुचतटे दृषदिव शिलावत्कठोरा कठिना, मध्ये भृशमतिशयेन तन्वी क्षीणा, उरसि आरोहविषये नितम्बदेशे च पृथुः स्थूला, अरुणा रक्ता एतादृशी काचित् शम्भोः करुणा दयारूपा शक्तिः जगत् त्रातुं जयति उत्कर्षेण वर्तते। आरोहो जघनं श्रोणिः नितम्बः स्त्रीकटीतटे इति विश्वरूपः। आदेशविषये इत्यपि क्वचित्पाठः॥

**कलङ्कः कस्तूरी रजनिकरबिम्बं [1]जलमयं**
**कलाभिः कर्पूरैर्मरकतकरण्डं [2]निबिडितम्।**
**अत[3]स्त्वद्भोगेन प्रतिदिनमिदं रिक्तकुहरं**
**विधिर्भूयो भूयो निबिडयति नूनं तव कृते॥ ९४॥**

கலங்க: கஸ்தூரீ ரஜநிகரபிம்பம் ஜலமயம்
1 1 1 1 1 3 3
கலாபி: கர்பூரைர் மரகதகரண்டம் நிபிடிதம்।
1 4 1 1 1 1 1 3 3 3 1
அதஸ் த்வத்போகேந ப்ரதிதிநமிதம் ரிக்தகுஹரம்
1 1 3 4 3 1 1 3 3 1 1 1
விதிர் பூயோ பூயோ நிபிடயதி நூநம் தவ க்ருதே॥
4 4 4 3 3 1 1 1 1

मृगमद है काला कलंक विधु का बिंब ही स्वच्छ जल है
कर्पूर के सकल हैं सकल कलायें जिन से उच्छल (उर्मिल) है

1 जडमयं 2 निविभृतम् 3 स्तद्भोगेन।

पर तेरी मरकतमणियों की मंजूषा भगवति प्रतिदिन
खाली होने पर तेरे भोगोपरांत जिस को तन मन
लगा भर दिया करता है तेरे हित फिर फिर चतुरानन ॥

लक्ष्मीधरा

कलङ्कः लाञ्छनं, कस्तूरी मृगनाभिः रजनिकरबिम्बं चन्द्रबिम्बं, जलमयम्। स्वार्थे मयट्। पन्नीरमित्यर्थः। कलाभिः कलात्मकैः, कर्पूरैः सह मरकतकरण्डं मरकतमणिना रचितम्। मरकतशब्दो वर्णव्यत्ययेन मकरशब्दादुत्पन्नः मकरात् मकरतः। मकरवक्त्राज्जातं मरकतमिति भोजराजः। करण्डं निबिडितं अन्तःपूरितम्। अतः त्वद्भोगेन तव देव्याः उपभोगेनानुभवेन कस्तूरीपन्नीरकर्पूराणां अनुभवेन, प्रतिदिनं दिनेदिने इदं परिदृश्यमानमिन्दुमण्डलं रिक्तकुहरं शून्यान्तरं, विधिः ब्रह्मा, भूयोभूयः प्रतिदिनं, निबिडयति। नूनं तव कृते तुभ्यमित्यर्थः। अर्थे कृते च तादर्थ्ये निपातद्वयमीरितम् इति कृतेशब्दस्तादर्थ्ये निपातितः, तद्योगे षष्ठ्येव। अत्रेत्थं पदयोजना—हे भगवति! कलङ्कः कस्तूरी रजनिकरबिम्बं जलमयं कलाभिः कर्पूरैः निबिडितं मरकतकरण्डम्। अतः इदं प्रतिदिनं त्वद्भोगेन रिक्तकुहरं विधिः भूयोभूयः तव कृते निबिडयति नूनम्। अत्रातिशयोक्तिरलङ्कारः, मरकतकरण्डत्वेन चन्द्रमण्डलस्याध्यवसानात्। यद्वा—अपह्नवालङ्कारः, अयं कलङ्को न भवति अपि तु कस्तूरी; इदं रजनिकरबिम्बं न भवति किन्तु बहिःप्रतिफलितमन्तर्गतं पन्नीरं; इमाः कला न भवन्ति अपि तु कर्पूररजः; इदमिन्दु-मण्डलं अन्तस्स्थितद्रव्यप्रतिफलनवशात् पीतवर्णं प्रतीयते, वस्तुतस्तु श्वेतवर्णमेवेत्याद्यवस्थापह्नव-मालायाः प्रतीतेः। उत्प्रेक्षालङ्कारश्च; प्रतिपदादिदिनेषु वृद्धिक्षयवतः चन्द्रमसः कस्तूर्यादि-द्रव्यव्ययप्रवेशाभ्यां ईषद्रिक्तत्वसंपूर्णत्वयोस्सम्भावनात्। अतः अनयोरनुसृष्टिः अङ्गाङ्गिभावेन पृथक्स्थित्या अवस्थानात् ॥ ९४ ॥

सौभाग्यवर्धनी

इदानीं श्रीदेव्याश्चन्द्रमण्डलं भोगसाधनसंपूर्णकरण्डत्वेनोत्प्रेक्षते—कलङ्क इति। कलङ्कः कस्तूरी, कलङ्को न भवति। जलमयमिदं रजनिकरबिम्बं मरकतकरण्डं, न चन्द्रबिम्बं, अत एव कलाभिः कर्पूरैः, कला न भवति, किं तु कर्पूराः, तैः निबिडितं पूरितम्; अतः त्वद्भोगेन, तव तांबूलभोगेन, प्रतिदिनं इदं रिक्तकुहरं रिक्तमध्यं, विधिः भूयो भूयो निबिडयति पुनः पुनः पूरयति। तव कृते असितपक्षे रिक्तं जलमयं जलवदतिनिर्मलं चन्द्रबिम्बरूपं मरकतकरण्डं कलारूपकर्पूरैः पूरयतीत्यर्थः। अत्रायमभिप्रायः, 'कुबेरः पशुपतिः प्रजापतिः' इति पञ्चदशदेवेषु देवतारूपेणानुस्यूता प्रतिमासमाना एषा शक्तिस्त्वमेव क्रमेण

चान्द्रीः कलाः अमृतमयीः पिबसि। त्वमेव अमृतपानेन तेषु स्वासाधारणशक्तिरूपा स्फुरसि। तदुक्तं मार्कण्डेये, 'यच्च किञ्चित्क्वचिद्वस्तु सदसद्वाखिलात्मिके। तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे मया'॥ इति। मन्त्रदेवताप्रकाशिकायां च 'सर्वत्रानुस्यूतदेवतारूपेण प्रतिभासमाना एकैव चिच्छक्तिरुपाधिभेदेन नाना प्रतिभासते' इति। अतः चन्द्रबिम्बं कर्पूराधारमरकतकरण्डायते, कलङ्कः कस्तूरीयते इति प्रकृतकलाकलङ्कनिषेधेन कर्पूरकस्तूरीत्वप्रतिपादनात् अपह्नुत्यलङ्कारः इति। वस्तुतस्तु, असितपक्षे कामेश्वरी, भगमालिनी, नित्यक्लिन्ना, भेरुण्डा, वह्निवासिनी, वज्रेश्वरी, शिवदूती, त्वरिता, कुलसुन्दरी, नित्या, नीलपताका, विजया, सर्वमङ्गला, ज्वालामालिनी, चित्रा इति पञ्चदशनित्याभिः प्रतिलोमगताभिः तवाधिष्ठानभूतं रजनिकरबिम्बं जलमयं अमृतबीजं वकारात्मकं बिन्दुं रिक्तकुहरं षोडशस्वरसंवित्कलामात्रावशेषितं, भूयो भूयः पौनःपुन्येन, सितपक्षे अनुलोमेन कामेश्वर्यादिचित्रान्ताभिः तत्तत्तिथिनित्यालक्षणकलाभिः पूरयतीति परमार्थः। तथा च श्रीभगवच्छङ्कराचार्यकृतक्रमस्तुतौ, 'लास्यं सदा मनसि मे स्फुरतु त्वदीयं तेजः परं बहुलकुङ्कुमपङ्कशोणम्। भास्वत्किरीटममृतांशुकलावतंसं मध्ये त्रिकोणममृतं परमामृतार्द्रम्'॥ कलङ्कः कस्तूरी, कलङ्कः चिह्नं, 'कलङ्कोऽङ्कापवादयोः' इत्यमरः, वृत्ताकाररेखा, सैव कस्तूरी वासना, सर्वाणि चक्राणि सर्वसिद्धिप्रदादीनि, बैन्दवचक्रवासनया वासितानि यतः। तथा च योगिनीहृदये—'पञ्चशक्तिचतुर्वह्निसंयोगात् चक्रसंभवः। एतच्चक्रावतारं तु कथयामि तवानघे॥ यदा सा परमा शक्तिः स्वेच्छया विश्वरूपिणी। स्फुरत्तामात्मनः पश्येत्तदा चक्रस्य संभवः॥ शून्याकारा विसर्गान्ता बिन्दुप्रस्पन्दबिन्दवः। प्रकाशपरमार्थत्वात् स्फुरत्तालहरीयुतात्। प्रसृतं विश्वलहरीस्थानं मातृत्रयात्मकम्। बैन्दवं चक्रमेतस्य त्रिरूपत्वं पुनर्भवेत्। धर्माधर्मौ तथात्मानौ मातृमेयौ तथा प्रमा। नवयोन्यात्मकं चक्रं चिदानन्दघनं महत्'॥ इत्यस्मिन्पक्ष इत्यर्थः॥ ९४॥

अरुणामोदिनी

एवं पूर्वोक्तं मञ्चमधिरुह्य निर्भरानन्दनन्दितायाः देव्याः चन्द्रमण्डलं भोगसाधनसंपूर्णकरण्डत्वेनाह—कलङ्क इति। हे देवि! जलमयं जलरूपं, स्वार्थे मयट्। अमृतपन्नीरसहितमित्यर्थः। रजनिकरबिम्बं परिदृश्यमानं चन्द्रमण्डलं कलाभिरेव कर्पूरैर्निबिडितं पूरितं, मरकतकरण्डं मरकतमणिनिर्मितः पन्नीरकर्पूरादिभोगसाधनस्थानं, मण्डलाकारः पेटीविशेषः। तत्र स्थितः कलङ्कः कस्तूरी, नीलवर्णत्वात्। अयमाशयः—भगवत्याः सर्वजगत्कारणत्वं ब्रुवतामाचार्याणां समस्तभोगानुभवसमन्वहिताया देव्याः ब्रह्माण्डस्य गृहरूपत्वेन, ऊर्ध्वाण्डस्य वितानरूपत्वेन, मेर्वादीनां विहारस्थानरूपत्वेन, नक्षत्राणां हारावलित्वेन,

गोत्रभिदादीनां पौत्रत्वेन, ब्रह्मादीनां पुत्रत्वेन, मार्तण्डस्य गृहदीपत्वेन च तात्पर्यात्, सकलजगत्प्रकाशकचन्द्रोऽपि संभोगाङ्गसुगन्धिवस्तुस्थापनकरण्डः, तत्र कलङ्क एव मृगनाभिः, जलमेव पन्नीरं, कलाः कर्पूरखण्डा इत्यर्थः। कलङ्कसंबन्धात् मरकतनिरूपणं साधु। चन्द्र-मण्डलस्य जलमयत्वात्, जलस्य धावल्येऽपि समुद्रादौ नैल्यदर्शनात्, मरकतकरण्डत्व-रूपणमिति केचित्। अतः कारणात् त्वत् भवत्या भोगेन, तस्य भोगेनेति वा, रिक्तकुहरं शून्यान्तरच्छिद्रं, इदं चन्द्रबिम्बरूपं करण्डं विधिः ब्रह्मा, प्रतिदिनं दिनेदिने, भूयो भूयः, पुनः पुनः, तव कृते त्वदर्थं, 'अर्थे कृते च शब्दौ द्वौ तादर्थ्येऽव्ययसंज्ञितौ' इति वचनात्। निबिडयति पूरयतीत्यर्थः। ... जान्तःपुरचारी सौविदल्ल एवेति भावः। नूनं ध्रुवम्। रूपकानुप्राणितेयमतिशयोक्त्युज्जीवितोत्प्रेक्षा। तया च करण्डपूरयितृवृत्तान्तप्रतीतेरलङ्कारेणा-लङ्कारध्वनिः। आगमार्थस्तु–कामेश्वरी, भगमालिनी, नित्यक्लिन्ना, भेरुण्डा, वह्निवासिनी, वज्रेश्वरी, शिवदूती, त्वरिता, कुलसुन्दरी, नित्या, नीलपताका, विजया, सर्वमङ्गला, ज्वालामालिनी, चित्रेति पञ्चदशनित्याभिः अनुलोमप्रतिलोमवतीभिः कलाभिरेव कर्पूरैः तवाधिष्ठानभूतं जलमयं जलबीजं वकारात्मकं रजनिकरबिम्बं निबिडितं पूर्णं रिक्तकुहरं बिन्दु-षोडशस्वरसंवित्कलामात्रावशेषितं भूयो भूयः पौनःपुन्येन सितपक्षकलासु त्वया भुक्तास्विति भावः। उक्तं च 'लक्ष्यं सदा मनसि मे भवतु त्वदीयं तेजः परं बहुलकुङ्कुमपङ्कशोणम्। भास्वत्किरीटममृतांशुकलावतंसं मध्ये त्रिकोणममृतं परमामृतार्द्रम्' इति। नन्वत्र 'प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः' इति सोमोत्पत्त्याख्यग्रन्थे चन्द्रकलानां देवताकवलनोक्तेः, देव्युप-भोगाभावरूपार्थकथनविरोध इति चेन्न। देवीव्यतिरेकेण वह्न्यादीनां तत्रत्यदाहकादिशक्तीना-मभावात्, देव्या एव सर्वत्रानुस्यूतत्वात्। तदुक्तमम्बास्तवे–त्वं चन्द्रिका शशिनि तिग्मरुचौ रुचिस्त्वं त्वं चेतनासि पुरुषे पवने बलं त्वम्। त्वं स्वादुतासि सलिले शिखिनि त्वमूष्मा निस्सारमेतदखिलं त्वदृते यदि स्यात्'॥ इति। श्रुतिश्च–'अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यै-रुत विश्वदेवैः' इत्यादि। स्मृतिश्च–यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्'॥ इति॥ ९४॥

## आनन्दगिरीया

कलङ्क इति। हे परमेश्वरि इदं जलमयं रजनिकरबिम्बं त्वदर्थं कर्पूरकस्तूरीभरितं मरकतकरण्डं विधिना निर्मितमित्यहं मन्ये। जलमयं वस्तु दूरतः श्यामं दृश्यते। अतो मरकतोपमम्। ... वर्णनाकारत्वात् करण्डं लोक इवातिप्रसिद्धं प्रभूणां भोगार्थं कर्पूरकस्तूरी-भृडिसेवकेन स्थाप्यते तद्वत्। अत्र का कस्तूरी किं कर्पूरमित्यत आह–कस्तूरी कलङ्कः,

अयं कलङ्को न किन्तु कस्तूरी। अत्र ताः कलाः न, किन्तु कर्पूराः ताभिर्निबिडितं पूरितम्। अथ चन्द्रवत्कृतं जलमयस्य द्रवरूपत्वात्। अथवा जलमयं हिममयं शीतलं जडमयं यत्करण्डं, पश्चात्प्रतिदिनं त्वद्भोगेन त्वया ... पर्णेन तांबूलेन सह कर्पूरकस्तूरीभोगेन रिक्तकुहरं रिक्तमध्यम्। यदा पूर्णपात्रमध्याद्वस्तु निष्कास्य भुज्यते-तदा-रिक्तमध्यं भवति। अधिकारिणा च पुनः पूर्णं कृत्वा स्थाप्यते। तथा तवाधिकारी विधिर्भूयो भूयः प्रतिदिनं पुनः पुनः निबिडयति। असितपक्षरूपायां रजन्यां रिक्तं भवति कलापूर्णावस्थाभोजनात्। सितपक्षरूपे दिने विधिः पूर्णं करोतीति तव कृते तव भोगरूपकार्यायेति मन्ये निश्चितोऽयमर्थः। ननु मया कथं भुज्यते इत्याशङ्कायामुच्यते। असितपक्षे प्रतिपदादितिथिषु क्रमेण वह्नि-रवि-विश्वदेव-वरुण-वषट्कारेन्द्र-देवर्षिगणाजैकपाद्यमवायु-मातृपितृगण-कुबेर-पशुपति-प्रजापतिरूपासु पञ्चदशदेवतासु तेजोरूपेणानुस्यूता प्रतिभासमाना शक्तिस्त्वमेव परमेश्वरी परमामृतमयीश्चान्द्रीः कलाः क्रमेण पिबसि। नवयोन्यात्मकश्रीचक्राभिप्रायेण श्लोकोऽयं योजनीयः॥ ९४॥

### तात्पर्यदीपिनी

कलंक इति। हे भगवति विधिर्ब्रह्मा रजनिकरबिम्बं चन्द्रबिम्बं मरकतकरण्डमिव मरकतमणिविरचितो यः करण्डः तमिव तव कृते तव सपर्यार्थं नूनं निश्चयेन भूयो भूयो वारं वारं निबिडयति। किंविधं रजनिकरबिम्बं, जलमयं जलात्मकं पुनः कलाभिर्निबिडितं व्याप्तम्। ननु मरकतादिमणिनिर्मिते करण्डे कस्तूर्यादि क्षिप्यते, अत्र किं, तत्राह। यत्र चन्द्रमसि कलङ्को लाञ्छनं कस्तूरितया निक्षिप्त इव। ननु मरकतमणिर्नीलरूपो भवति, चन्द्रस्तु शुक्लो भवतीत्युपमाविरोध इति चेत् तत्राह- किंविधं करण्डं, कर्पूरैर्निबिडितं व्याप्तं, अतस्तत्प्रतिफलनात् श्वेतमित्यर्थः। भूयो भूयो निबिडयतीति कोऽर्थः, यतस्त्वद्भोगेन त्वत् तव देव्या भोगोऽनुभवस्तेनेदं चन्द्रबिम्बं दिने रिक्तं कुहरमन्तःप्रदेशो यस्य, एतादृशं भवति, अतः कारणाद्भूयो निबिडयतीत्यर्थः॥ ९४॥

### पदार्थचन्द्रिका

अथ सकलदेवमध्या तत्तद्देवतारूपेण भुज्यमानं चन्द्रमण्डलं भवानीभोगोपकरणकस्तूर्यादिभाण्डत्वेनोत्प्रेक्षमाणो भवानीं स्तौति-कलङ्क इति। कलङ्को लाञ्छनं कस्तूरी कृष्णत्वसाम्यात्। रजनिकरबिम्बं चन्द्रमण्डलं जलमयं जलप्रचुरं, एतत्तु परमार्थतः शुक्लत्वसाम्यात्। कलारूपैः कर्पूरैः निबिडितं परिपूर्णं, मरकतविकारः करण्डं मरकतकरण्डं, मरकतमणिमयं भाजनमिति मेखलाभिप्रायेण। निबिभूतमिति पाठे एक एवार्थः। अत्र सर्वत्र भवतीति क्रियापदं द्रष्टव्यम्। यतः कस्तूर्यादि भाजनं चन्द्रमण्डलं अतः प्रतिदिनं त्वद्भोगेन रिक्तकुहरं

शून्याभ्यन्तरं चन्द्रमण्डलं विधिः पुनः पुनः निबिडयति कस्तूर्यादिभिः पूरयतीति नूनमहं तर्कयामीत्यर्थः। त्वत्कृते त्वदर्थं, कृत इत्यव्ययं प्रयोजनवाचि। ९४॥

डिण्डिमभाष्यम्

हे शिवे! सकलभक्तकल्याणदायिनि! चतुर्दशभुवनपरिपूर्णब्रह्माण्डमण्डलव्यापिन्यास्तदनुरूपवेषधारिण्यास्तदनुरूपभोगकाङ्क्षिण्यास्तव सततमनन्तभोगसंपत्तये सर्वाण्यपि वस्तुजालानि भोगोपकरणानि इति वदन्त्याचार्याः, तव ब्रह्माण्डमेव गृहं, वितानमूर्ध्वाण्डः, मेरुमन्दरविन्ध्यादयः कुचकलशं, नक्षत्राणि हारावलयः, पौत्राः सुत्राममुखाः पुत्राः ब्रह्मविष्णुरुद्रादयः, गृहप्रदीपो मार्तण्डः, रत्नसिंहासनं मेदिनीमण्डलमित्यादि सर्वेषु वस्तुषु शरीरोपकरणतां गतेषु चन्द्रमण्डलस्य कर्पूरकरण्डकत्वं भगवत्याः प्रतिपादयति। करण्डकं नाम-सुगन्धिवस्तुस्थापनाय कलधौतपट्टनिर्मितो मण्डलाकारः पेटकविशेषस्तत्साम्यं चन्द्रमसो वर्तते, रजनिकरबिम्बमेतावत् जलमयं जलरूपमत एव श्यामवर्णत्वान्मरकतनिर्मितं करण्डं, जलस्य धावल्यं प्रसिद्धं, श्यामवर्णता कुत इति चेत् सत्यं, जलस्य धावल्यमेव, अतिगभीरस्य जलपूरस्यान्तर्गततिमिरसङ्घात् श्यामवर्णं यथा सामुद्रमम्भः। तच्च करण्डकं पुनः किम्भूतं कलाभिः षोडशसङ्ख्यैरेव कर्पूरघनसारखण्डैर्निबिडितं, तत्र यो वर्तमानः कलङ्कः स कस्तूरीखण्डस्थाने कर्तव्यः, एवंभूतं कर्पूरकरण्डकं विधिर्धाता भगवत्यास्ताम्बूलकरण्डकग्राहको भूत्वा सेव्यमानस्त्वद्भोगेन पूर्णिमानन्तरप्रतिपदमारभ्य एकैककलाकारकर्पूरखण्डखादनेन प्रतिदिनं भक्षणे ह्रासादमावास्यादिवसे रिक्तकुहरं तत्पात्रं भूयो भूयः कलान्तरकर्पूरखण्डानादायादाय निबिडयति सम्पूरयति, नूनं, अयमर्थो निश्चित एव। ननु सोमोत्पत्तिपुराणग्रन्थांशे—'प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः।' इत्यादिक्रमेण वह्न्यादिभिरेवोपभोगः प्रसिद्धः। अत्र कथं भगवत्या भोग एवेति तद्विरुद्धमुच्यते इति चेत् वह्न्यादयोऽपि देवा भगवत्या विश्वमूर्तेर्जिह्वाद्यवयवा एव, तत्प्रभावाविष्टरूपास्ते वह्न्यादयस्तदवयवतामापन्नाः एव शक्तिमन्तः। तदुक्तं अंबास्तवे—'त्वं चन्द्रिका शशिनि तिग्मरुचौ रुचिस्त्वं, त्वं चेतनासि पुरुषे पवने बलं त्वम्। त्वं स्वादुता च सलिले शिखिनि त्वमूष्मा, निःसारमेव निखिलं त्वदृते यदि स्यात्।' इति। किञ्च भगवता वेदपुरुषेण देवीसूक्ते ऋग्वेदान्ते सर्वदेवतामयत्वं भगवत्याः प्रत्यपादि—स्वयमेव स्वभाववेदिनी ब्रह्मादिभिरप्यतर्क्यमहानुभावा अहमेव सर्वदेवस्वरूपिणीति। तथा हि—अहं रुद्रेभिर्वसुभिश्चरामि अहमादित्यैरुत विश्वदेवैरित्यादि। ९४॥

गोपालसुन्दरी

कलङ्क इति। कलङ्को लाञ्छनं, कस्तूरी मृगमदः, रजनिकरबिम्बं चन्द्रमण्डलं, जलमयं जलस्वरूपं, अत एव मरकतकरण्डं निबिडितं, अतिगभीरस्य जलस्य हरिद्वर्णोपलब्धिः।

कलाभिः षोडशसंख्यैः कर्पूरैरेव घनसारखण्डैर्निबिडितं भरितम् । कृष्णपक्षे त्वद्भोगेन तांबूलास्वादरूपेण प्रतिदिनं प्रत्यहं रिक्तकुहरं शून्याभ्यन्तरं, विधिर्ब्रह्मा तांबूलकरण्डवाहको भूत्वा सेवमानः, भूयो भूयः प्रतिशुक्लपक्षं कलाकारकर्पूरखण्डानादाय तव कृते त्वदर्थं नूनं निश्चितं निबिडयतीत्युभयसमानोऽर्थः । वस्तुतस्तु कलङ्कः अंकः चिह्नं बिन्दुचक्ररूपं, 'कलङ्कोऽङ्कापवादयोः' इत्यमरः । तदेव कस्तूरी वासना । बैन्दवचक्रवासनया वासितस्यैव चक्रस्य सर्वसिद्धिप्रदत्वात् । तदुक्तं योगिनीहृदये – 'शून्याकारादिसर्गान्तात् बिन्दुप्रस्यन्दसंविदः । प्रकाशप्रशमार्थत्वात् स्फुरत्तालहरीयुतात् । प्रसृतं विश्वलहरीस्थानं मातृत्रयात्मकम् । बैन्दवं चक्रमेतस्य त्रिरूपं च पुनर्भवेत् । धर्माधर्मौ तथात्मानौ मातृमेयौ तथा प्रमा । नवयोन्यात्मकं चक्रं चिदानन्दकरं महत्' । इति । पुनः कीदृशं, जलमयं रजनिकरबिम्बं अमृतमयचन्द्रमण्डलरूपं 'मध्ये त्रिकोणममृतं परमामृतार्द्रम्' इत्युक्तेः अमृतबीजवकारात्मकमिति वाऽर्थः । रिक्तकुहरं रिक्तः शून्यो विसर्गः कुहरे रन्ध्रे मध्ये यस्य तत् । अतः अकारमारभ्य कलाबिन्द्वन्तं ईश्वरैः तदधिष्ठातृकामेश्वर्यादितिथिरूपपञ्चदशनित्याभिः कर्पूरैः चक्रान्तर्वासकैः निबिडितं वेष्टितम् । मरकतकरण्डमिति बिन्दुचक्ररूपकमिदम् । बिन्दुचक्रं त्वद्भोगेन त्वच्छरीरभूतेन एकैकनित्यात्मना प्रतिदिनं प्रतितिथौ विधिर्विधिवाक्यं त्वदर्चनार्थं भूयो भूयो निबिडयति योजयति । अयं भावः–पञ्चपञ्चस्वरयुक्तः त्रिकोणे रेखात्रये प्रत्यहं कामेश्वर्यादिचित्रान्तानां नित्यानां मध्ये विसर्गे सुन्दर्याश्च पूजनं, पुनर्मध्येऽनुलोमविलोमक्रमेण शुक्लकृष्णपक्षयोः कामेश्वर्यादिचित्रान्तानां चित्रादिकामेश्वर्यन्तानां तत्तत्तिथावेकैकस्या एव पूजनमित्युक्तेः । अत्रेति भवानीपक्षेऽर्थः ॥ ९४ ॥

आनन्दलहरीटीका

कलङ्क इति । रजनीकरस्य चन्द्रस्य बिम्बं मण्डलं मरकतत्वात्र विशेषणम् । कीदृशं कलारूपैः कर्पूरैः निबिडितं पूरितं, विधिनेति शेषः । जलमयं जलबहुलं, अथ च जाड्यसंपादकत्वात् जडस्वरूपम् । कलङ्करूपा कस्तूरी जलस्य सौरभ्यार्थम् । चन्द्रबिम्बं यतस्तवोदकपानपात्रं, अतो हेतोर्विधिर्ब्रह्मा तव भोगेन पानेन रिक्तकुहरं शून्यमध्यं त्वत्कृते त्वत्पाननिमित्तं प्रतिदिनं प्रतिशुक्लतिथि भूयो भूयो वारं वारं प्रतिमासमिति यावत् । इदं चन्द्रबिम्बं निबिडयति पूरयति । नूनमुत्प्रेक्षायाम् । कृष्णपक्षे प्रतिदिनं देवैः पीतं चन्द्रमण्डलं पुनः शुक्लपक्षे पूर्णं भवतीत्येवमुत्प्रेक्षितम् । भगवत्याः सर्वदेवरूपत्वात् तत्र पानेन शून्यपात्रं पुनः पूरयन् पानीयधारक इव विधिस्त्वां सेवत इति भावः । एतत्पद्यमन्यथापि योजयन्ति तान्त्रिकाः । कलङ्कः चिह्नं, बिन्दुचक्ररूपं, तदेव कस्तूरी चक्रान्तरधिवासकत्वात् । बैन्दवचक्रवासनावासितस्यैव चक्रान्तरस्य फलदायकत्वात् । 'स्फुरत्तालहरीयुतात् । प्रसृतं विश्वलहरी मातृस्थानं

त्रयात्मकम्। बैन्दवं चक्रमेतस्य त्रिरूपं च पुनर्भवे'दित्यादि। त्रयात्मकं त्रिकोणात्मकं, एतस्य त्रिकोणस्य त्रिरूपं कोणमित्यर्थः। तदेव चक्रं जलमयं अमृतमयं, मध्ये त्रिकोणममृतं परमामृतार्द्रमिति तन्त्रोक्तेः। वरुणबीजात्मकवकाराकारमिति वाऽर्थः। रजनिकरबिम्बं चन्द्रमण्डलरूपममृतमयत्वात्। पुनः कीदृशं रिक्तः शून्यद्वयरूपो विसर्गः कुहरे रन्ध्रे मध्यभागे यस्य तत् बिन्दुमध्ये विसर्गे षोडश्या नित्यायाः पूजाविधानात्। अतः, अकारमारभ्य कलाभिः स्वरैः अनुस्वारान्तैः, पञ्चदशभिः कर्पूरैः चक्रान्तरधिवासकैः निबिडितं वेष्टितं दक्षिणरेखायामकारादिपञ्चभिः, पूर्वरेखायां दीर्घोकारादिपञ्चभिः, उत्तररेखायां एकारादिपञ्चभिर्मध्ये विसर्गेणान्विततया ध्यातं त्रिकोणबैन्दवचक्रमित्यर्थः। इदं मरकतकरण्डं रत्नभाण्डरूपं बैन्दवचक्रं विधिर्विधिवाक्यं प्रतिदिनं प्रतितिथौ त्वद्भोगेन त्वच्छरीरभूतेन कामेश्वर्यादिचित्रान्तानां एकैकेन निबिडयति योजयति। तव कृते त्वत्पूजानिमित्तम्। तदुक्तं ज्ञानार्णवे– विभाव्य च महाराज्ञीमग्रे दक्षोत्तरक्रमात्। अकाराद्यमुकारान्तं दक्षिणायां विचिन्तयेत्। ततश्च पूर्वरेखायां दीर्घोवर्णादिपञ्चकम्। विलिख्योत्तररेखायां शक्त्यादि विलिखेन्नरः। अनुस्वारादि मध्ये तु विसर्गे षोडशीं यजेत्। वामावर्तेन देवेशि नित्याः षोडश कीर्तिताः। प्रतिपत्तिथिमारभ्य पौर्णमास्यन्तमद्रिजे। एकैकां पूजयेन्नित्यां महासौभाग्यमाप्नुयात्। कृष्णपक्षे महेशानि पूजयेत्तिथिमण्डलम्। विचित्राद्यां वरारोहे यावत्कामेश्वरी भवेदिति॥ ९४॥

**पुरारातेरन्तःपुरमसि ततस्त्वच्चरणयोः**
**सपर्यामर्यादा तरलकरणानामसुलभा।**
**तथा [1]ह्येते नीताः शतमखमुखाः सिद्धिमतुलां**
**तव द्वारोपान्तस्थितिभिरणिमाद्याभिरमराः॥ ९५॥**

புராராதேரந்த:புரமஸி ததஸ் த்வச்சரணயோ:
1 1 1 1 1 1 1 1 1

ஸபர்யாமர்யாதா தரளகரணாநாமஸுலபா ।
1 3 1 1 4

ததா ஹ்யேதே நீதா: சதமகமுகாஸ் ஸித்திமதுலாம்
1 2 1 1 1 2 2 3 4 1

தவ த்வாரோபாந்த ஸ்திதிபி ரணிமாத்யாபிரமரா: ॥
1 3 1 1 2 1 4 3 4

तू है पुरहर की पटरानी इस से तेरे चरणों की
पूजा अर्चा सुलभ नहीं होगी उन लोगों को जिन की

---

1. तथाऽप्येते।

चंचल रहती हैं इन्द्रियां इसी से इन्द्र आदि सुरगण
तेरे दरवाने पर ही रह जाते खडे जननि! क्षण क्षण
अणिमा आदि सिद्धियाँ उन को लोटाती हैं देव गण ॥

लक्ष्मीधरा

पुरारातेः पुरान्तकस्य, अन्तःपुरं अवरोधः पट्टमहिषीति यावत्। असि भवसि। ततः तस्मात्कारणात्, त्वच्चरणयोः तव पादयोः, सपर्यामर्यादा पूजाप्रकारः तरलकरणानां चञ्चलचित्तानां, असुलभा दुर्लभा। अन्तःपुरप्रवेशः चञ्चलचित्तानां नास्तीति प्रसिद्धम्। अतो निश्चलचित्तैस्तु सौविदल्लैः प्रवेष्टव्यमिति नीतिवाक्यामृते। निर्मलचित्तैरेव सुधाम्भोधिमध्यस्थितायाः पादाम्बुजसेवा ज्ञायते नान्यैरित्यर्थः। तथाहि प्रसिद्धौ। एते नीताः शतमखमुखाः इन्द्रमुख्याः सुरगणाः, सिद्धिं संसिद्धिं, अतुलां असदृशीं, तव भवत्याः द्वारोपान्तस्थितिभिः द्वारसमीपे स्थितयो यासां ताभिः। अणिमाद्याभिः अणिमाप्रमुखाभिः सिद्धिभिस्सह अमराः निर्जराः। अत्रेत्थं पदयोजना – भगवति! पुरारातेरन्तःपुरमसि। ततस्त्वच्चरणयोस्सपर्यामर्यादा तरलकरणानामसुलभा। तथा हि – एते शतमखमुखाः अमराः तव द्वारोपान्तस्थितिभिः अणिमाद्याभिस्सह अतुलां सिद्धिं नीताः। यथा तव द्वारोपान्तमेव अणिमादिसिद्धयस्सेवन्ते एवमिन्द्रादयोऽपि। इयांस्तु विशेषः – अणिमाद्यष्टसिद्धीनां द्वारपालकत्वेन सर्वदा तत्र वासः स्वभावसिद्धः। इन्द्रादीनां तु तरलकरणत्वात् अन्तःपुरप्रवेशानर्हत्वात् दौवारिकानुमत्या द्वारदेशेऽवस्थानं सिद्धिशब्दार्थ इति तात्पर्यम्॥ ९५॥

सौभाग्यवर्धनी

श्रीदेव्याश्चरणसेवामहिमानं प्रस्तौति – पुरारातेरिति। त्वं पुरारातेरन्तःपुरमसि। य एकेन शरेण इन्द्रादिदेवतैरजेयान् पुरत्रयवासिनो दग्धवान्, तस्यावरोधोऽसि। ततः तेन कारणेन, त्वच्चरणयोः सपर्यामर्यादा पूजानिष्ठा, तरलकरणानां अजितेन्द्रियाणां असुलभा दुष्प्रापा। तथाप्येते शतमखमुखाः देवा अतुलां सिद्धिं नीताः। रंभादिस्वर्वेश्यारतिपरतन्त्रा अपि तव चरणस्मरणपूर्वकं पूजामहिम्ना तव द्वारोपान्तस्थितिभिरणिमादिशक्तिभिरेव अतुलां सिद्धिं नीताः। निरुपमभोगसंभावितसांसारिकानन्दतुन्दिलां श्रियं प्रापिताः। साक्षात्तव चरणदर्शनं तेषां कथं भवति? महादेवान्तःपुरत्वादिति भावः॥ ९५॥

अरुणामोदिनी

उक्ताया देव्या अभीष्टार्थदातृत्वं भजतां प्रकटयति – पुरारातेरिति। हे देवि!

त्वं पुरारातेः त्रिपुरान्तकस्य, न कस्यचित्साधुजनस्येति दुराराध्यत्वम् । अन्तःपुरं अवरोधः पट्टमहिषीत्यर्थः । असि अभूः । राजदाराणामसूर्यम्पश्यत्वात् भवत्याश्चान्तःपुराङ्गनात्वात्, तत्रापि रुद्रमहिषीत्वात्, भजज्जनविज्ञापनावकाशो नास्तीत्यभिप्रायः । अतः कारणात् त्वच्चरणयोः भवत्पादयोः अमर्यादा अपरिमिता सपर्या पूजा तरलकरणानां चलितेन्द्रियाणां इन्द्रियनिग्रहरहितानां, असुलभा दुर्लभा । चलचित्ताः परमशिवमहिषीं त्वां पूजयितुं न शक्नुवन्तीत्यर्थः । अथवा हे देवि, पुरारातेः त्वदीयसामर्थ्यात् त्रिपुरसंहारकीर्तिमतो रुद्रस्यान्तरभ्यन्तरे वर्तमानं देहाभ्यन्तरे वर्तमानं पुरं शरीरमसि अभूः । तत्सामर्थ्यरूपत्वादिति । अतस्त्वच्चरणयोः अमर्यादा सपर्या तरलकरणानां मनोनिग्रहराहित्येन ध्यानविधानाशक्तानां असुलभा सुलभा न भवति । किन्तु अकारवाच्यैः ब्रह्मादिभिरेव सुलभेत्यर्थः । उक्तमर्थं समाधत्ते– तथा हीति । उक्तमेवैतत् । शतमखप्रमुखाः एते अमराः, तव भवत्याः द्वारोपान्तस्थितिभिः द्वारोपान्ते स्थितिर्यासां ताभिः अणिमाद्याभिः अणिमा आदिर्यासां ताभिः अणिमामहिमाप्रभृतिभिः, पूर्वोक्ताभिर्दशभिः सह, 'वृद्धो यूना' इति ज्ञापकात् सहप्रयोगे तृतीया । अतुलां सिद्धिं नीताः निरुपमां योगसिद्धिं प्रापिताः । इन्द्रादीनां भवत्प्रसादासादितवैभवत्वेऽपि ऊर्वश्यादिवेश्यासंभोगरसिकतया तरलेन्द्रियत्वात् अन्तःपुरप्रवेशानर्हत्वेन सर्वचक्रबाह्यचतुरश्रवर्त्यणिमादिसिद्धीनामेव दौवारिकतया द्वारोपान्त एव निवासो निर्दिष्ट इति भावः । अथवा अणिमाद्याभिरिति सहार्थयोजनाभावे अणिमादिभिः सिद्धिं इन्द्रादयो नीता इत्यर्थः । लोभिजनवञ्चकत्वेन नानामायाविलासमूलत्वात् सर्वसाधारणगणिकाप्रायत्वात् बाह्यचतुरश्रवर्त्यणिमादिगणावेष्टिता इन्द्रादयः कृता इत्यर्थः ॥ ९५ ॥

### आनन्दगिरीया

पुरारातेरिति । हे मातः, यत्र कुत्रापि तव चरणस्मरणमपि सर्वार्थसाधकं भवतीत्युच्यते । हे मातः तथापि ते अमरा इन्द्रादयः तव द्वारोपान्तस्थितिभिः अणिमाद्याभिरेव अतुलां सिद्धिं नीताः प्रापिताः । एकदा इन्द्रादयः स्वर्गाङ्गनाभोक्तारः परमेश्वरीचरणसाक्षात्कारेण अतुलां सिद्धिं वाञ्छन्तः श्रीमहाराजाधिराजश्रीत्रिपुरसूदनस्य पट्टमहिष्या भुवनेश्वर्याः द्वारोपान्तं गताः, पश्चात् तत्रस्थितप्रतिहारिवेत्रधरीभूताभिः अणिमाद्यष्टसिद्धिभिः निराकृताः कुत्र भवन्तो गच्छन्तीत्याक्षिप्ताः । परमेश्वरीचरणसाक्षात्कारेण वाञ्छितातिशयितफलसिद्धिं प्राप्तुमागताः स्म इत्युत्तरिते ताभिरुक्तं 'महाराजश्रीत्रिपुरसूदनसुन्दर्या दर्शनं भवतां स्वर्गसामान्यवनितालम्पटानां अजितेन्द्रियाणां दुर्लभं, न भविष्यति । यदुद्देशेन यूयमत्रागताः तत्तु तस्याः प्रसादेन वयमपि दातुं क्षमाः' इति । ताभिः ते च कृतार्थीकृता इत्याह–पुराराते-

न्तःपुरमसीत्यादि । हे परमेश्वरि त्वं पुराराते: पुरसूदनस्य । कुष्यत्कटाक्षच्छटामात्रेण यः परमसमर्थं पुरनामानं दैत्यं घातितवान् । तस्यान्तःपुरं स्त्रीयोक्ष... यू महिषी भवसि । ततस्तस्मात्तरलकरणानामजितेन्द्रियाणां कामलम्पटानां तव चरणयोः सपर्यामर्यादा पादपूजापद्धतिः, आवाहनासनस्नानवस्त्रालङ्कारवन्दनादिका असुलभा दुर्लभापि, तथापि मनसि तव चरणं चिन्तयित्वा समागताः शतमखमुखाः अमरा इन्द्रादयो देवाः तव द्वारोपान्तस्थितिभिरेवातुलां सिद्धिं नीताः प्रापिताः । तथा च बाह्योपचारं विनापि मानसैरेवोपचारैः पूजयतामपि वाञ्छितसिद्धिर्भवत्येवेति । पुरारातेरिति श्लोकस्य रहस्यार्थः—अन्तःपुराराति: शिवः पञ्चाक्षरं, पुरं प्रणवः, मूलविद्या सपर्यामर्यादा नमः । असुलभा लज्जा । तथा 'तारं माया मूलविद्या शिवाय हृदयान्तिका । दशार्णेयं महाविद्या सर्वतन्त्रेषु गोपिता । नाख्यातव्या त्वया भद्रे यथा स्तुतिशतं मम । उमामहेश्वरो मन्त्रस्तथायं मनुरुत्तमः । मम प्राणास्तव प्राणा व्याप्तं येन चराचरम् । य एतन्मन्त्रयुगलं पशवे दातुमिच्छति । तस्य प्राणान्क्षणादेव खादिष्यन्ति नमस्कृतः । योगिन्यो याचिताः पूर्वं सत्यं सत्यं वरानने । दशार्णेयं महाविद्या न ख्याता कुलभैरवि । त्वया श्रुत्वा न वक्तव्यं देवेभ्यः कुलनायिके । कलङ्कमिति मन्त्रस्य नोद्धारः कीर्तितस्तु तैरिति । सर्वाङ्गसुन्दरीविद्यामाह ॥ ९५ ॥

तात्पर्यदीपिनी

पुरारातेरिति । हे मातस्त्वं पुराराते: त्रिपुरान्तकस्यान्तःपुरमवरोधः पट्टमहिषीति यावत् । असि भवसि । ततः कारणात् तरलकरणानां तरलानि चपलानि करणानीन्द्रियाणि येषां तेषां प्राणिनां त्वच्चरणयोः त्वत्पादयोः सपर्यामर्यादा पूजाप्रकारोऽसुलभा दुर्लभा । अन्तःपुरप्रवेशश्चंचलचित्तानां नास्तीति प्रसिद्धम् । अतो निश्चलचित्तैः सौविदल्लैः प्रवेष्टव्यमिति नीतिवाक्यान्निर्मलचित्तैरेव समयिभिः सुधांभोधिस्थिताया भगवत्याः पादाम्बुजसेवा ज्ञायते, नान्यैरित्यर्थः । तथाहि तदेव दर्शयति, एते प्रसिद्धाः शतमखमुखाः अमराः सुरगणा अणिमाद्याभिः अणिमासिद्धिराद्या यासां ताभिः सिद्धिभिः सहातुलां असदृशीं उपमारहितां सिद्धिं नीताः प्रापिताः । किंविधाभिरणिमाद्याभिः, तव द्वारोपान्तस्थितिभिः तव भगवत्या द्वारस्योपान्ते समीपे स्थितयो यासां ताभिः, तथोक्ताभिः, यथा त्वद्द्वारोपान्तमेव अणिमादिसिद्धयः सेवन्ते, एवमिन्द्रादयोऽपि इमाः स्तुवन्तीति शेषः । अणिमाद्यष्टसिद्धीनां द्वारपालत्वेन सर्वदा तत्र वासः स्वभावसिद्धः । इन्द्रादीनां तु तरलकरणत्वात् अन्तःपुरप्रवेशानर्हत्वात्, दौवारिकानुसृत्या द्वारदेशे व्यवस्थानं सिद्धिशब्दार्थ इति तात्पर्यम् ॥ ९५ ॥

## पदार्थचन्द्रिका

अथ वर्णितश्रीमूर्तिं भवानीं परमोदारत्वेन स्तौति—पुरारातेरिति। हे मातस्त्वं पुरारातेरन्तःपुरं पट्टमहिष्यसि। ततस्त्वच्चरणयोः सपर्या पूजा तरलकरणानां पूजार्थं व्यग्रेन्द्रियाणां सुलभा न भवति। तथाप्येते शतमखमुखाः इन्द्रादयः, तव द्वारोपान्तस्थितिभिः दौवारिकीभिः अणिमाद्याभिः सिद्धिभिरेवातुलां सिद्धिं नीताः प्रापिताः। सपर्यां विशिनष्टि—मर्यादा अवधिभूता, यद्वा सपर्यामर्यादा इत्येकपदम्। अस्मिन्पक्षे मर्यादा अवधिः। भवानी-चरणयोः सपर्याया अवधित्वं, अतः परमन्यस्य पूज्यस्याभावात् ॥ ९५ ॥

## डिण्डिमभाष्यम्

ननु भगवती खलु श्रीललिताभट्टारिका महादेवमहाराजस्य श्रीकामेश्वरापरपर्यायस्य पट्टमहिषीति प्रसिद्धिः, सा खलु सर्वदा अन्तःपुरे गुप्ता भवति, असूर्यम्पश्याः खलु राजदाराः। सकलमातरं त्वामनाराध्य न कस्यापि जन्तोः कामितफलप्राप्तिः। तस्याश्चान्तःपुरगतत्वात्कथं पूजानिर्वाह इत्याशङ्कायामाह—हे परमेश्वरि! पुरारातेर्महादेवस्य त्वमन्तःपुरमसि प्रधान-महिष्यसि। यतः यस्मात् कारणात् सपर्या अमर्यादा सम्पूर्णा तरलकरणानामुच्चलितचित्त-वृत्तीनामसुलभा लब्धुमशक्या। अस्मिन्नर्थे युक्तिं दर्शयति, तथाहीति—यतो हेतोर्महादेवि त्व-मभ्यन्तर एव स्थिता, तत्तस्मात्कारणात् तव द्वारोपान्तस्थितिभिः चिन्तामणिगृहराजस्यान्तिम-कक्षानिविष्टाभिः बिन्दुचक्रात् बहिः त्र्यश्रं, बहिस्ततोऽष्टारं, ततो बहिरन्तर्दशारं, ततो बहिर्दशारं, ततो बहिर्मन्वश्रं, ततो बहिर्नागदलं, ततो बहिः षोडशदलं, ततो बहिश्चतुरश्र-देशे मुद्राः, ततो मध्यमचतुरश्रे ब्राह्म्याद्याः, सर्वबहिश्चतुरश्र एवाणिमाद्याः स्थिताः। ताः खलु प्रकटा बाह्याः भगवत्याश्चेटिकामयाः लोभिजनवञ्चकत्वात् नानामायाविलासमूलत्वात् अनेक-योगिजनमुक्तत्वात् सर्वसाधारणत्वात् गणिकाप्रायाः। इन्द्रादिबाह्यजनानामुपसर्पणनिवेदनादि-योग्याः ताः खलु भवन्ति। अत एव द्वारोपान्ते सर्वबाह्यचतुरश्रे स्थितिः स्थानं यासां ताः तथोक्ताः, द्वारोपान्तस्थितिभिरणिमाद्याभिः पूर्वोक्ताभिः शक्तिभिः शतमखमुखाः पुरन्दर-प्रमुखाः गीर्वाणाः अतुलामनुपमेयां सिद्धिं भोगैश्वर्यसंपदं नीताः प्रापिताः ॥ ९५ ॥

## गोपालसुन्दरी

पुरारातेरिति। पुरारातेः शिवस्य त्वमन्तःपुरं प्रधानमहिषी असि भवसि, ततो हेतोः तरलकरणानामजितेन्द्रियाणां तव चरणयोः, अमर्यादा संपूर्णा, सपर्या पूजा, सपर्यायाः पूजायाः मर्यादा निष्ठेति वा असुलभा दुष्प्रापा दुःसाध्येति यावत्, तथापि संपूर्णपूजाया

अभावेऽपि असम्पूर्णपूजयैव एते तरलकरणाः रम्भादिपरीरम्भादिसंभावितहृदयाः शतमखमुखा इन्द्रादयोऽमरा देवास्तव द्वारोपान्तस्थितिभिस्त्वदीयचिन्तामणिगृहराजस्यान्तिमकक्षानिविष्टाभिः अणिमाद्याभिर्दशभिः सिद्धिं भोगैश्वर्यसंपदम् अतुलामतिशयितां नीताः प्रापिता इत्यहो त्वत्पूजामाहात्म्यप्रकर्ष इत्यर्थः। विष्णुपक्षे—अन्तःपुरमन्तःपुरे अन्तःपुररूपा वा मा लक्ष्मीर्यस्य स तथा असितत इत्यत्र प्रथमायां तसिः, तेन सिता श्वेता सात्त्विकी त्वच्चरणयोः सपर्यामर्यादा तरलकरणानामिन्द्रादीनां पुरनामकदैत्यभेदनकर्तुः शिवस्य अप्यसुलभा। यद्वा पुराणां जाग्रत्स्वप्नसुषुप्त्यवस्थारूपाणामरातेर्नाकस्य तव द्वारोपान्तस्थितिभिः इत्यनेनान्वयः। अथवा त्वच्चरणयोः सिततः सत्त्वप्रधाना सपर्यामर्यादा तरलकरणानां भोगैकलपनानामिन्द्रादीनामरातेः प्रह्लादस्य पुरा असुलभा प्राणैर्लभ्या जाता। तथापि शतमखमुखा अमरा अणिमाद्याभिः सिद्धिं नीताः। संपूर्णकलावासिर्यद्यपि प्रह्लादस्य तथापीन्द्रादीनामसात्त्विकेनाराधनेनाणिमादिसिद्धिर्जातैवेत्यर्थः॥ ९५॥

आनन्दलहरीटीका

साक्षात्त्वदुपासना इन्द्रादीनामपि दुर्लभेत्याह—पुरारातेरिति। पुरारातेः शिवस्य त्वमन्तःपुरं प्रधानमहिषी असि भवसि, ततो हेतोस्तरलकरणानां चञ्चलेन्द्रियाणां तव चरणयोः अमर्यादा निःसीमा संपूर्णेति यावत्, सपर्या पूजा असुलभा अशक्येत्यर्थः। यद्वा सपर्याया मर्यादा निष्ठा यथाविधि रचनेत्यर्थः। तथापि तादृक्पूजाया अभावेऽपि यत्किंचित्पूजयैवेत्यर्थात्। एते शतमखमुखा इन्द्राद्याः अमरा देवाः तव चिन्तामणिगृहस्य यत् द्वारं तस्योपान्ते निकटे स्थितिर्यासां ताभिः अणिमाप्रभृतिभिः शक्तिभिः सिद्धिं इन्द्रादिपदप्राप्तिरूपां नीताः तव यत्किञ्चित्पूजया बहिर्द्वारस्थितत्वत्परिचारिकाभिरेव इन्द्रत्वादिपदं दीयते। संपूर्णत्वत्पूजाफलं तु वक्तुमेव न शक्यत इति भावः। अणिमादीनां द्वारोपान्ते पूजाविधानात्तत्र स्थितिरुक्ता। तदुक्तं ज्ञानार्णवे—अणिमां पश्चिमद्वारे दक्षभागे प्रयोजयेदित्यादि॥ ९५॥

**कलत्रं वैधात्रं कतिकति भजन्ते न कवयः**
**श्रियो देव्याः को वा न भवति पतिः कैरपि धनैः।**
**महादेवं हित्वा तव सति सतीनामचरमे**
**कुचाभ्या[1]मासङ्गः कुरवकतरोरप्यसुलभः॥ ९६॥**

---

1 माभोगः

களத்ரம் வைதாத்ரம் கதி கதி பஜந்தே ந கவய:
1 1 4 1 11 11 4 1 1
ச்ரியோ தேவ்யா: கோ வா ந பவதி பதி: கைரபி தநை: ।
3 1 4 1 11 1 1 4
மஹாதேவம் ஹித்வா தவ ஸதி ஸதீநாமசரமே
3 1 1 1 1 1
குசாப்யாமாஸங்க: குரவகதரோரப்யஸுலப: ॥
1 1 4 3 1 11 1 4

कितने कवि न प्राप्त करते हैं चतुरानन की गृहिणी को
कितने बनते नहीं श्रियःपति धनपति पा किंचित् धनको
तज कामेश्वर को पतिव्रता सतियों में अचरमे उमे
तेरे वक्षोजों का संग अन्य की क्या गिनती पर में
कुरवकतरु को भी दोहदकांक्षी सुलभ नहीं है चरमे ॥

लक्ष्मीधरा

कश्मलात्त्रायत इति कलत्रं पत्नी। कश्मलं नरकं मध्यवर्णलोपः पृषोदरादित्वात्साधुः। कलत्रं कश्मलात्त्रायत इति रक्षितः। वैधात्रं विधातृसंबन्धि। विधातृशब्दस्य 'तस्येदम्' इत्यणि कृते संबन्धमात्रपरत्वे तद्विशेषजिज्ञासायां कलत्रशब्दस्यान्वय इति। धातुः कलत्रमित्युक्ते तु संबन्धमात्रे विहिता षष्ठी संबन्धिन्येव पर्यवस्यतीति साक्षादन्वय इति भावः। अतो नायं प्रयोगो दोषावहः। वैधात्रं कलत्रं सरस्वतीं कतिकति भजन्ते सेवन्ते। न कवयः के वा कवयो न भजन्ते सर्वेऽपि भजन्त इत्यर्थः। श्रियो देव्याः लक्ष्म्याः, को वा न भवति पतिः कैरपि धनैः। महादेवं सदाशिवं, हित्वा तव भवत्याः, सति! पतिव्रते! सतीनां पतिव्रतानां, अचरमे! अग्रगण्ये! कुचाभ्यां आसङ्गः आलिङ्गः, कुरवकतरोरपि असुलभः सुलभो न भवति। कुचालिङ्गनं दोहदत्वेनापि कुरवकतरोरचेतनस्यापि न संभवति, किमु वक्तव्यं पुरुषान्तर इति पातिव्रत्यं वाचामगोचरमिति भावः। अत्रेत्थं पदयोजना—हे सति! वैधात्रं कलत्रं कतिकति कवयः न भजन्ते। श्रियो देव्याः कैरपि धनैः को वा पतिः न भवति। हे सतीनामचरमे! महादेवं हित्वा तव कुचाभ्यामासङ्गः कुरवकतरोरप्यसुलभः। अयमर्थः—ये मन्त्रजपाद्यासादितसारस्वताः ते सरस्वतीवल्लभा इति गीयन्ते। ये धनधान्याश्वगजादिसमृद्धिमन्तः ते लक्ष्मीपतयः इति गीयन्ते। पार्वतीपतिस्तु महादेव एवेति पातिव्रत्यमहिमा अवाङ्मनसगोचर इति ॥ ९६ ॥

सौभाग्यवर्धनी

अथ श्रीदेव्याः असाधारणं पातिव्रत्यं स्तौति—कलत्रमिति। वैधात्रं कलत्रं

सरस्वतीं, कति कति कवयो न भजन्ते। अपि तु बहवो भजन्ते। श्रियो देव्याः को वा पतिर्न भवति, कैरपि धनैः कतिपयदिनविनश्वरैः कुबेरादिः सुरगणः, महादेवं विहाय। हे सति सतीनामचरमे आद्ये! अनसूयारुन्धतीप्रभृतीनां पतिव्रतानां त्वमेव पातिव्रत्यधर्मनिर्देशिनीति भावः। तव कुचाभ्यामासङ्गः आश्लेषः कुरवकतरोरप्यसुलभः, दोहदत्वेनापि नाश्लेषोऽभूत् कुरवकतरोरित्यर्थः। सरस्वतीलक्ष्मीप्रसादेनोपासकाः मधुरकवित्वधनधान्यादिसुखमनुभवन्ति। तव प्रसादेनाक्षयस्वरूपपरमानन्दमनुभवन्तीति ध्वनिः॥ ९६॥

### अरुणामोदिनी

एवं वर्तमानाया देव्या वाण्याद्यपेक्षया पातिव्रत्यमसाधारणमाह – कलत्रमिति। सतीनां पतिव्रतानां अचरमा आद्या, तस्याः संबुद्धिः, हे अचरमे! हे सति! पतिव्रता दाक्षायणीरूपिणी, देवि! 'सती सती योगविसृष्टदेहा तां जन्मने शैलवधूं प्रपेदे' इति कालिदासः। 'सती पतिव्रतागौर्योः' इति रत्नमाला। कति कति कियन्तः, कवयः, काव्यकरणसमर्थाः सूरयश्च। विधातुः ब्रह्मण इदं वैधात्रं ब्राह्मं कलत्रं ब्रह्मपत्नीं वाणीं न भजन्ते, न प्राप्नुवन्ति, प्राप्नुवन्त्येवेत्यर्थः। तथा श्रियः देव्याः विष्णुपत्न्याः लक्ष्म्याः कैरपि कियत्परिमितैरपि धनैः को वा पतिः स्वामी न भवति, भवत्येवेत्यर्थः। लोके मन्त्रजपपुरश्चरणादिभिः ये ये प्राप्तसारस्वताः ते सर्वेऽपि ब्रह्मणोऽन्येऽपि सरस्वतीवल्लभा इति गीयन्ते; तथा ये वा धनधान्यादिसमृद्धाः ते सर्वेऽपि लक्ष्मीपतय इति गीयन्ते इत्यर्थः। हे सति! दीव्यतीति देवः, महांश्चासौ देवश्च महादेवः, 'आन्महतः समानाधिकरणजातीययोः' इत्यात्वम्। 'सन्महत्' इति समासः। तं सर्वदेवतासार्वभौमतया महादेवशब्दवाच्यं सदाशिवं हित्वा, तव पतिव्रताशिरोमणेः भवत्याः कुचाभ्यां स्तनाभ्यां आसङ्गः संबन्धः कुरवकाख्यस्य तरोः पुष्पोत्पत्त्यर्थं स्त्रीस्तनालिङ्गनरूपदोहदकुतूहलस्याचेतनस्य वृक्षविशेषस्यापि, किमुतान्येषामित्यर्थः; असुलभः, सुलभो न, दुर्लभ इत्यर्थः। अतः पातिव्रत्यरक्षणे सावधाना समस्तमायाविचक्षणा भवती, भवत्सौन्दर्यमोहितः कश्चित्तुच्छमतिः देवगन्धर्वादीनामन्यतमः कुरवकभावं संप्राप्य पातिव्रत्यभङ्गं कुर्यादिति आशङ्कया अचेतनं कुरवकतरुमपि दोहदार्थं नालिङ्गसे। अतो भवत्पातिव्रत्यं न अन्याङ्गनासाधारणं नान्ये च पार्वतीपतयो गीयन्ते। किं तु महादेव एक एव गीयते। अन्ये देवाः, भवत्पतिस्तु महादेवः सर्वत्र अकुण्ठितपराक्रमश्चेति भावः॥

### आनन्दगिरीया

कलत्रमिति। स्वकीया परकीया सामान्यवनिता चेति त्रिविधा नायिका। तत्र पार्वत्याः स्वकीयात्वमुत्तमात्वं विवक्षुः सरस्वतीलक्ष्म्योः क्रमेण परकीयात्वं सामान्यवनितात्वं

शब्दच्छलेनाह—हे सति पार्वति, सतीनामचरमे सीतासावित्र्यरुन्धतीप्रमुखानां महासाध्वीनां मौलिभूते प्रधानरूपे प्राप्ये अन्ते कीर्तनीये, अथवा सती नाम सतीति यत् तत्स्वमेव, चरमे सोमसूर्यानलात्मकैकरूपे, वैधात्रं कलत्रं कति कवयो न भजन्ति। विधातुरिदं वैधात्रं, कलत्रं स्त्रियं, सरस्वतीमित्यर्थः। कवयो मधुरवचनाः कवीन्द्राः कति कति न भजन्ते नोपासते, इति वक्तव्ये कवयो मधुरवाणीं वदन्तः प्रतारकाः कति नो भजन्ते। तेन विधातुः कलत्रस्य अन्योपभोगे प्रकटितपरपुरुषानुरागत्वात् परकीयात्वं अनैकान्तिकत्वं च सूचितम्। सामान्यवनिताया धनलोलुपत्वात् लक्ष्म्या अपि शब्दच्छलेन तदाह—श्रियो देव्या लक्ष्मीदेवताया धनैः कृत्वा को वा पतिर्न जातः, अपि तु सर्वोऽपि इति यो धनं लक्ष्मीं प्राप्नोति स तेन धनेन लक्ष्मीवान् भवतीति वक्तव्ये कैरपि धनैः कृत्वा लक्ष्म्याः स्वामी जातः। अनेकशो वित्तं परमीक्षतेति वित्तमात्रौपाधिकप्रेमत्वात् सामान्यवनितात्वम्। यो धनं दत्ते स सामान्यवनितां भुनक्ति। हे परमेश्वरि, त्वं हि तद्विलक्षणेत्याह, महादेवं विधिवत्परिणीतं हित्वा विहाय तव कुचाभ्यां सहासङ्गः संबन्धः कुरवकतरोरपि न जातः। आलिङ्गितः कुरवकः कुरुतेऽनुवृत्तिमिति, कुरवकतरोः कामिनीकुचसंपर्केण पुष्पोदयो भवति। स तु गृहान्तरवर्तिविहारवाटिकायां वर्तमानस्य कुरवकतरोरपि कुसुमकामनया न जातः। एतावता एतादृशी महासती त्वं यत्कुचाभ्यां ईश्वरं विहाय पुंलिङ्गशब्दवाच्यः काष्ठात्मा तरुरूपोऽपि न स्पृश्यते। अनेन पतिमात्रविषयानुरागवती स्वकीया, सापराधेऽपि कान्ते अपराधमप्यविचार्य, परिचर्यापरायणा त्वमिति सूचितम्। अथवा कलत्रं वैधात्रं सरस्वतीं कति न भजन्ते, बहवोऽपि भजन्ते। परं तु कवय एव भवन्तीति कवित्वमात्रं फलं नान्यत्। ... ... धनैः कृत्वा अतिलक्ष्मीवान् धनवानपि भवति सर्वोऽपि। लक्ष्म्युपासकस्य किञ्चित्कालावस्थायि धनमात्रफलम्। शिवविद्योपासकाः ... तवोपासकास्तु शिवशक्तिसायुज्यं प्राप्नुवन्तीति। हि निश्चये। महादेवं त्वां प्राप्नुवन्तीति शेषः। यद्यपि तव कुचाभ्यामासङ्गः कुरवकतरोरप्यसुलभः, तथापि नोपासकस्य। उपासकातिरिक्तेन तव सायुज्यं प्राप्तुं न शक्यमित्यर्थः॥ ९६॥

तात्पर्यदीपिनी

कलत्रमिति—हे सति पतिव्रते, प्रजापतेः कदाचिदुत्पत्त्या तव सतीति नाम प्रसिद्धम्। न केवलं त्वं नाम्ना सती, अपि तु सतीनामचरमे पतिव्रतानां प्रधानभूते भगवति, कति कति कवयो विबुधाः वैधात्रं विधातुः संबन्धि कलत्रं सरस्वतीं देवीं न भजन्ते न कलत्रीकुर्वन्ति, अपि तु कलत्रीकुर्वन्त्येव। यत्किञ्चित्कवित्वलाभेन सरस्वतीवल्लभः, शारदावल्लभः, वाचस्पतिरित्यादिपदवीं गृहीत्वा निःशङ्कमेव सञ्चरति। अतः सरस्वत्या

बहुपत्नीत्वेन पतिव्रतात्वं दुर्लभम्। तथा देव्याः श्रियोऽपि लक्ष्म्या अपि कैरपि धनैः किञ्चिन्मात्रपरिमितवित्तैः को वा मनुष्यः पतिर्न भवति, अपि तु भवत्येव। अत एव धनवन्तं लक्ष्मीपतिरिति वदन्ति। अतो लक्ष्म्याः बहुतरधनिकपरिग्रहात् पतिदेवतात्वं दुर्लभम्। तव तु कुचाभ्यामासङ्गः महादेवं हित्वा शम्भुं विहाय कुरवकतरोरप्यसुलभः, दुर्लभ एव। उत्तमस्त्रीणामालिङ्गनं दोहदार्थं यस्य स वृक्षः कुरवक इत्युच्यते। ननु कुरवकतरोः तत्कुचासङ्गः कथं दुर्लभस्तत्राह। त्वत्सौन्दर्यदर्शनान्मोहितमतिः कश्चिन्मायावी गन्धर्वः कुरवकवृक्षं गत्वा पतिव्रतायाः पातिव्रत्यभङ्गं करोतीति शङ्कया अचेतनमपि कुरवककदम्बकं दोहदार्थं त्वं नालिङ्गसि। यतः पातिव्रत्यरक्षणे सावधाना भवसीति ॥ ९६ ॥

### पदार्थचन्द्रिका

अथ परमपतिव्रतात्वेन भवानीं स्तौति – कलत्रमिति। वैधात्रं कलत्रं ब्रह्मणो भार्यां सरस्वतीम्। ... कैरपि धनैः सामान्यतः सुवर्णादिभिर्महिष्यादिभिरपि धान्यादिभिरपीत्यर्थः। एवं लक्ष्मीसरस्वत्योर्व्यभिचारं दर्शयित्वा भवान्यास्तदत्यन्ताभावमाह – महादेवमिति। हे सतीनामचरमे गण्यमानानां पतिव्रतानां मध्ये प्रथमतो गण्यमाने, तव कुचाभ्यामाभोगः त्वत्कुचकर्तृका पूर्णता कुरवकतरोरप्यसुलभः, सुलभो न भवति। कुरवकतरोः सामान्यतः स्पर्शनज्ञानेऽपि, विशेषज्ञानशून्यत्वेनात्यन्तजडस्यापि असुलभ इति पातिव्रत्यातिशयोक्तिः। स्त्रीणां निरीक्षणालिङ्गनाभ्यां तिलककुरवकौ सद्यः पुष्पितौ भवत इति काव्यप्रसिद्धिः। आसङ्ग इति पाठः सुगमः। आभोगो वारुणत्वतेः पूर्णतापत्रयोरपीति मेदिनीकरः ॥ ९६ ॥

### डिण्डिमभाष्यम्

कलत्रमिति। हे सति! दक्षः प्रजापतिः कदाचिदुत्पत्त्या तव सतीति नाम चकार। न केवलं नाम्ना प्रसिद्धा, अपि तु सतीनामचरमे सर्वपतिव्रतानां प्रधानभूते भगवति! वैधात्रं विधातृसंबन्धि कलत्रं सरस्वतीदेवीं कति कति कवयो न भजन्ते न कलत्रीकुर्वन्ति, अपि तु सर्वे कवयो यत्किञ्चित्कवितालाभेन सरस्वतीवल्लभः शारदावल्लभो वाचस्पतिरित्यादिपदवीं गृहीत्वा निःशङ्कमेव चरन्ति, अतः कारणात्, सरस्वत्या बहुपत्नीत्वेन पातिव्रत्यं दुर्लभम्। तथा देव्याः श्रियोऽपि सिन्धुराजनन्दिन्याः कैरपि किञ्चिन्मात्रपरिमितैरपि धनैर्वित्तैः। 'हिरण्यं द्रविणं द्युम्नं रुक्मं रिक्थं धनं वसु'। कतिपयधनसंपत्त्या को वा मनुष्यो लोके लक्ष्मीपतिर्न भवति, अत एव धनवन्तं लक्ष्मीभर्तारं वदन्ति। तथा च भारविप्रयोगः, 'विहाय लक्ष्मीपतिलक्ष्मकार्मुकम्' इति। लक्ष्मीपतिः अत्र राजवाचकः। अतो लक्ष्म्याश्च बहुतरधनिकपरिग्रहत्वात् पतिदेवतात्वं दुर्लभम्। तव कुचाभ्यां पयोधराभ्यां आसङ्गः महादेवं हित्वा शम्भुं विहाय

कुरवकतरोरपि उत्तमस्त्रीणामालिङ्गनदोहदिनो वृक्षविशेषस्यापि असुलभो दुर्लभ एव। अत एव त्वं सर्वसतीनां प्रथमा। कुरवकतरोरपि तव कुचासङ्गः कथं दुर्लभ इति चेत्, अत्रोच्यते, त्वत्सौन्दर्यदर्शनान्मोहितमतिः कश्चन मायावी गन्धर्वादिः कुरवकवृक्षं गृहीत्वा पतिव्रताया व्रतभङ्गं कुर्यादित्याशङ्कया अचेतनमपि कुरवकवृक्षं दोहदार्थं त्वं नालिङ्गसि, यतो भवसि स्वपातिव्रत्यरक्षणे सावधाना। सकला अस्या विचारणा च। ९६ ॥

गोपालसुन्दरी

कलत्रमिति – हे सति! दक्षदुहितः न केवलं नाम्ना त्वं सती, सतीनामचरमे, पतिव्रतानां प्रधानभूते, वैधात्रं विधातृसंबन्धि कलत्रं सरस्वतीं कति कवयो न भजन्ति न कलत्रीकुर्वन्ति। यत्किञ्चित्कवित्वेनैव सरस्वतीवल्लभत्वम्। श्रियो देव्या लक्ष्मीदेव्याः पतिः कैरपि किञ्चिन्मात्रैरपि धनैः को वा न भवति। तव कुचाभ्यां पयोधराभ्यामासङ्गः परिष्वङ्गः महादेवं हित्वा शिवं विहाय कुरवकतरोरपि उत्तमाङ्गनालिङ्गनदोहदिनो वृक्षस्यापि असुलभो दुर्लभ इत्यर्थः। विष्णुपक्षे – कलत्रमित्यादिना सरस्वत्याः पुमन्तरसंबन्धमुक्त्वा लक्ष्म्यास्तदभावमाह – श्रिय इति। श्रियो देव्याः पतिः कैरपि धनैरेव न तु वक्ष्यमाणालिङ्गनादिना, महादेवं श्रेष्ठदेवं हि निश्चितं त्वा त्वामालक्ष्यीकृत्य हे अत वसतिसतीनां वसतौ गृहे सतीनां विद्यमानानां मध्ये अचरमा श्रेष्ठा या ईर्लक्ष्मीस्तस्याः कुचाभ्यामासङ्गः कुरवकतरोरप्यसुलभः। तथा च त्वत्समो नान्य इति भावः। अथवा वैधात्रं कलत्रं सरस्वतीं कति कवयो न भजन्ते तस्याः को वा ब्रह्मा वा पतिर्न भवति, अपि तु भवत्येव। तथा च सरस्वत्या अपि पतिद्वयम्। श्रियो लक्ष्म्याः कैरपि धनैः कौस्तुभादिभिः सह कुचाभ्यामासङ्गः महादेवमपि हित्वा तवैव, नान्यस्य। कीदृशः? कुरवकतरोरप्यसुलभः। ननु लक्ष्म्यास्त्वदतिरिक्तानुरागो नास्तीत्यत्र किं विचित्रमत आह – देव्या दिवु क्रीडाद्यर्थधात्वर्थानुसारात् कान्तिशीलायाः क्रीडावत्या गतिशालिन्याश्चञ्चलाया वा चरमे सति चरमे वयसि वार्द्धके सति सतीनाम सतीति संज्ञा भवतीत्यर्थः। क्रीडादिशालिन्या लक्ष्म्या अपि स्थैर्यं त्वय्येवेति त्वत्प्रभावोत्कर्ष इत्याशयः ॥ ९६ ॥

आनन्दलहरीटीका

कलत्रमिति। हे सति सतीनाम्नि दक्षकन्ये, हे सतीनां पतिव्रतानामचरमे अग्रगण्ये। तदेवोपपादयति, वैधात्रं ब्रह्मसंबन्धि कलत्रं स्त्रियं सरस्वतीं कति कवयो न भजन्ते। अपितु भजन्त एव। श्रियो लक्ष्म्या देव्याः को वा कैरपि धनैर्न भवति पतिः, अपि तु

सर्वैरेव सर्वं इति भावः । महादेवं हित्वा त्यक्त्वा तव कुचाभ्यामासक्तः परिष्वक्तः कुरवकतरोः उत्तमाङ्गनादोहदेन पुष्पवतो वृक्षविशेषस्यापि असुलभो दुर्लभः ॥ ९६ ॥

गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो
हरेः पत्नीं पद्मां हरसहचरीमद्रितनयाम् ।
तुरीया कापि त्वं दुरधिगमनिःसीममहिमा
[1]महामाया विश्वं भ्रमयसि परब्रह्ममहिषि ॥ ९७ ॥

கிராமாஹுர் தேவீம் த்ருஹிண க்ருஹிணீ மாகமவிதோ
3 3 3 3 3 3
ஹரே: பத்நீம் பத்மாம் ஹரஸஹசரீமத்ரி தநயாம் ।
11 13 1 3 1
துரீயா காபி த்வம் துரதிகம நிஸ்ஸீம மஹிமா
1 1 1 3 4 3
மஹாமாயா விச்வம் ப்ரமயஸி பரப்ரஹ்ம மஹிஷி ॥
4 1 3

कहते आगमविद् तुझ को धाता की गृहिणी वाग्जाता
कहते हैं हरिपत्नी पद्मा, हर सहचरी अद्रि जाता ।
पर है परे सभी से तू कोई असीम-दुर्गम-महिमा
जग मोहिनी महामाया है परब्रह्ममहिषी है मा ॥

लक्ष्मीधरा

गिरां वाचां, आहुः कथयन्ति । देवीं अधिदेवतां, द्रुहिणगृहिणीं ब्रह्मणः पत्नीं, आगमविदः आगमरहस्यवेदिनः, हरेः विष्णोः, पत्नीं जायां, पद्मां पद्मालयां, हरसहचरीं शम्भुपत्नीं अद्रितनयां पार्वतीम् । तुरीया चतुर्थी कापि अनिर्वाच्या, त्वं दुरधिगमनिस्सीम-महिमा दुःखेन अधिगन्तुं शक्यः स चासौ निस्सीमो महिमा यस्यास्सा, देशतः कालतो वस्तुतश्चापरिच्छेद्येत्यर्थः । महामाया शुद्धविद्यान्तर्गतं मायातत्त्वं, विश्वं प्रपञ्चं, भ्रमयसि विवर्तयसीति विवर्तं ब्रह्मधर्मं मायायामतिदिशति । परब्रह्ममहिषि! परब्रह्मणः सदाशिवस्य महिषि! तथा च श्रूयते—ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति पुरुषसूक्ते । ह्रीः भुवनेश्वरी लक्ष्मीः श्रीविद्या उभे ब्रह्मणस्ते पत्न्यौ । अत्र तयोर्मध्ये श्रीविद्यायाः प्राधान्यं, श्रीविद्यायां भुवनेश्वर्या अन्तर्भावात् ।

1 महामाये

भुवनेश्वर्या न श्रीविद्याया अन्तर्भाव इति चन्द्रकलाप्राधान्येन सैव महिषीति ध्येयम्। अत्रेत्थं पदयोजना–हे परब्रह्ममहिषि! आगमविदः त्वामेव द्रुहिणगृहिणीं गिरां देवीमाहुः, त्वामेव हरेः पत्नीं पद्मामाहुः; त्वामेव हरसहचरीं अद्रितनयामाहुः, त्वं तुरीया कापि दुरधिगमनिस्सीममहिमा महामाया सती विश्वं भ्रमयसि। अयमर्थः–एकामेव भगवतीं नानानामभिः गृणन्त्यागमविदः परब्रह्ममहिषी श्रीविद्यापरनामधेया चन्द्रकला एकैवेति॥ ९७॥

सौभाग्यवर्धनी

अथ भगवत्या अनिर्वाच्यमहिमातिशयं स्तौति–गिरामिति। गिरां देवीं सरस्वतीं, द्रुहिणगृहिणीं आगमविदो वेदविदः, हरेः पत्नीं पद्मां लक्ष्मीं, हरसहचरीं अद्रितनयां हैमवतीं आहुः। स्वमतमाह–तुरीयेति। तुरीया एतत्त्रयातिरिक्ता, दुरधिगमनिस्सीममहिमा सरस्वती लक्ष्मीः पार्वतीति परिच्छिन्नरूपातीता, वेदवादरतादिभिः दुरधिगमा महामाया मायोपाधिमवलम्बमाना विश्वं भ्रमयसि प्रपञ्चं मोहयसि। हे परब्रह्ममहिषि, परब्रह्माविनाभूतचिच्छक्ते, परब्रह्माविनाभूतचिद्विलासस्वभावा अपि, महामायोपाधिमवलम्ब्य सृष्टिस्थितिसंहारव्यसनपरतन्त्रैः विधिहरिहरैः विश्वं भ्रमयसि। भूयो भूयः आवर्तयसि। वस्तुतस्त्वं सर्वसाक्षिणी संविदेव पुरतो विजृम्भसे। वाणी लक्ष्मीः पार्वतीति मायाविलासस्तवेति भावः। तदुक्तं वासिष्ठे–'विश्वनाटकविलाससाक्षिणी संविदेव पुरतो विजृम्भते।' इति। निःसीममहिमेति टावन्तः शब्दः॥ ९७॥

अरुणामोदिनी

ननु काश्च वाण्यादयो देववनिताः? के के च तत्पतयो देवाः, कैषा च प्रबन्धप्रतिपाद्या यदुत्कृष्टा देवतेत्यत्राह–गिरामिति। 'ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः।' इति श्रुतेः सर्वशक्तिः सदाशिवः परं ब्रह्म, तस्य महिषी सर्वशक्तिरूपा तस्य भार्याभावमापन्ना तदङ्कसंस्थिता महालक्ष्मीर्देवी, 'तस्याङ्कमण्डलारूढा शक्तिर्माहेश्वरी परा। महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरी।' इति पुराणवचनात्। 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति श्रुतेश्च। ह्रीः भुवनेश्वरी, लक्ष्मीः श्रीविद्या। उभे ते च ब्रह्मणः पत्न्यौ। तयोर्मध्ये श्रीविद्यायाः प्राधान्यं, भुवनेश्वर्याः श्रीविद्यायामन्तर्भावात्। सैव चन्द्रकला सैव शिवमहिषीति संक्षेपतः श्रुत्यर्थरहस्यम्। उक्तं च आचार्यैः सकलजननीस्तवे 'सुता दक्षस्यादौ' इति। यद्वा–परं ब्रह्म सकलजगत्कारणभूता च सा महिषी च परब्रह्ममहिषी, सकलजगत्कारणभूता सृष्टिस्थितिलयहेतुः महालक्ष्मीसमाख्या देवतेत्यर्थः। 'सर्वस्याद्या महालक्ष्मीः त्रिगुणा परमेश्वरी। लक्ष्यालक्ष्यस्वरूपा सा व्याप्य कृत्स्नं व्यवस्थिता।'

इति मार्कण्डेयपुराणोक्तेः। देव्याः सकलजगत्कारणत्ववादिनां देव्यन्यस्य परब्रह्मणोऽभावादिति भावः। यद्वा—अविद्यादिभावमापद्य परब्रह्मणोऽपि मोहिकेत्यर्थः। तस्याः संबुद्धिः हे परब्रह्ममहिषि! एवंविधाया अपि सृष्ट्यौन्मुख्यमाह—महामाये इति। 'महाविद्या महामाया' इत्यादिवचनात् महती दुरुद्धरा माया सर्वमोहक्षमा शक्तिर्यस्याः सा, सर्वेषामपि संसारवासनाप्रदेत्यर्थः। यद्वा मह्यते पूज्यत इति मह्ा, सर्वैरभ्यर्चनीया, सा च सा न विद्यते माया कपटो यस्याः सा अमाया। पूजयितॄणामकपटमेव समस्तेप्सितदात्रीत्यर्थः। तदुक्तम्—'स्तुता संपूजिता पुष्पैर्धूपगन्धैः सुधूपिता। ददाति वित्तं पुत्रांश्च मतिं धर्मे तथा शुभाम्। सा याचिता च विज्ञानं तुष्टा ऋद्धिं प्रयच्छति। आराधिता सैव नृणां भोगस्वर्गापवर्गदा'। इति। तस्याः संबुद्धिः, हे महामाये! सर्वजगत्कारणभूतमहामायारूपधारिणि! देवि! 'महारात्रि महामाये' इति देवीमाहात्म्योक्तेः महामायायाः तमोरूपदेव्यवतारत्वात्। उक्तं चोत्तरे चतुर्दशाध्याये—'शून्यं तदखिलं लोकं विलोक्य परमेश्वरी। बभार रूपमपरं तमसा केवलेन हि॥ सा भिन्नाञ्जनसंकाशा दंष्ट्राञ्चितवरानना। विशाललोचना नारी बभूव तनुमध्यमा॥ (सा प्रोवाच महालक्ष्मीं तामसीं प्रमदोत्तमाम्। नाम कर्म च मे मातः देहि तुभ्यं नमो नमः॥) तां प्रोवाच महालक्ष्मीस्तामसीं प्रमदोत्तमाम्। ददामि तव नामानि यानि कर्माणि तानि ते॥ महामाया महाकाली महामारी क्षुधा तृषा। निद्रा तृष्णा चैकवीरा कालरात्रिर्दुरत्यया॥ इमानि तव नामानि प्रतिपाद्यानि कर्मभिः'। आगमविदः भागवततत्त्वप्रतिपादकग्रन्थतात्पर्यवेत्तारः गिरां देवीं वाग्देवीं भवदीयसत्त्वगुणावतारभूतां भवत्या वाणीत्यादिनामभिः कृतसंकेतां देवीं, 'गीर्वाग्वाणी सरस्वती' इत्यत्र 'भागुरिमते गिरेत्यप्यस्ति' इति व्याख्यानात् आकारान्तो वा। तां देवीम्। अत्रोक्तं उत्तराध्याये—'तामित्युक्त्वा महालक्ष्मीः स्वरूपमपरं नृप। सत्त्वाख्येनातिशुद्धेन गुणेनेन्दुप्रभं दधौ॥ अक्षमालाङ्कुशधरा वीणापुस्तकधारिणी। सा बभूव वरा नारी नामान्यस्यै च सा ददौ॥ महाविद्या महावाणी भारती वाक् सरस्वती। आर्या ब्राह्मी कामधेनुर्वेदगर्भा सुरेश्वरी'॥ इति। द्रुहिणस्य भवत्सृष्टप्राथमिकमिथुनद्वयोत्पन्नस्य विधातृनामकस्य पुरुषस्येत्यर्थः। यथोक्तं तत्रैव—'इत्युक्त्वा ते महालक्ष्मीः ससर्ज मिथुनं स्वयम्। हिरण्यगर्भौ रुचिरौ स्त्रीपुंसौ कमलासनौ॥ ब्रह्मन् विधे विरिञ्चेति धातरित्याह तं नरम्। श्रीः पद्मे कमले लक्ष्मीत्याह माता स्त्रियं च ताम्'॥ इति। गृहिणीं सधर्मिणीं आहुः वदन्ति। 'ब्रुवः पञ्चानां' इत्यादिना ब्रुव आहादेशः। 'परस्मैपदानाम्' इत्यादिना झेः उसादेशः। तथा पद्मां विधिना सह पूर्वोक्तप्रकारेण संभूतां लक्ष्मीदेवतां हरेः, 'सरस्वतीं स्त्रियं गौरीं कृष्णञ्च पुरुषं नृप। जनयामास नामानि तयोरपि वदामि ते। विष्णुः कृष्णो हृषीकेशो वासुदेवो जनार्दनः। उमा गौरी सती चण्डी सुन्दरी

सुभगा शिवा' ॥ इति मार्कण्डेयोक्तेः तृतीयमिथुनोत्पन्नस्य विष्णोः पत्नीं जायामाहुः। तथा अद्रितनयां कश्चिन्निमित्तवशेन हिमवत्पुत्रिकात्वमापन्नां विष्णुस्वसारमिमां देवीं हरसहचरीम् 'महाकाली भारती च मिथुने सृजति स्म ह। एतयोरपि रूपाणि नामानि च वदामि ते॥ नीलकण्ठं रक्तबाहुं श्वेताङ्गं चन्द्रशेखरम्। जनयामास पुरुषं महाकाली सितां स्त्रियम्॥ स रुद्रः शङ्करः स्थाणुः कपर्दी च त्रिलोचनः। त्रयी विद्या कामधेनुः सा स्त्री भाषाक्षरा स्वरा' इति मार्कण्डेयोक्तेः रुद्राख्यस्य पुरुषस्य सहचरीं जायामाहुः। तथा चोक्तं मार्कण्डेये—'ब्रह्मणे प्रददौ पत्नीं महालक्ष्मीर्नृप त्रयीम्। रुद्राय वरदां गौरीं वासुदेवाय च श्रियम्। स्वरया सह संभूय विरिञ्चोऽण्डमजीजनत्। बिभेद भगवान् रुद्रस्तद्गौर्या सह वीर्यवान्॥ अण्डमध्ये प्रधानादिकार्यजातमभून्नृप। महाभूतात्मकं सर्वं जगत्स्थावरजङ्गमम्॥ पुपोष पालयामास तल्लक्ष्म्या सह केशवः' इति। हे देवि! त्वं विधिविष्णुरुद्राणां तत्पत्नीनां वाणीलक्ष्मीगौरीणां कारणभूता भवती दुःखेनाप्यधिगन्तुमशक्या दुरधिगमा। न हि भगवतीसीमा कस्यापि विज्ञायत इति। निर्गतः सीमायाः निःसीमः परिच्छेदविरहितत्वादिति भावः। महिमा महत्त्वं योगिगम्यं यस्याः सा, ब्रह्मादिदुर्विज्ञेयचरिता। तुरीया सकलदुःखातीता। अर्श आदित्वान्मत्वर्थीयोऽच्प्रत्ययः। अत एव कापि अनिर्वचनीया नामान्तरैरनिर्देश्येत्यर्थः। 'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह' इति श्रुतेः। उक्तं च मार्कण्डेये—महालक्ष्मीर्महाराज सर्वसत्त्वमहेश्वरी। निराकारा च साकारा सैव नानाभिधानभृत्॥ नामान्तरैर्निरूप्यैषा नाम्ना नान्येन केनचित्'। इति। विश्वं समस्तमपि जनं ज्ञानिनमज्ञानिनं चेत्यर्थः। विशत्यज्ञानमिति व्युत्पत्त्या, विशति ज्ञानोद्रेकेण परमार्थमिति व्युत्पत्त्या च विश्वशब्दस्य उभयोरपि वाचकत्वादिति भावः। भ्रमयसि चालयसि। मोहान्धकूपे निपातयसीत्यर्थः। उक्तं च देवीमाहात्म्ये—'ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरे' इत्यारभ्य, ज्ञानिनामपि चेतांसि देवी भगवती हि सा। बलादाकृष्य मोहाय महामाया प्रयच्छति॥ तया विसृज्यते विश्वं जगदेतच्चराचरम्। सैषा प्रसन्ना वरदा नृणां भवति मुक्तये॥ सा विद्या परमा मुक्तेः हेतुभूता सनातनी। संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी'॥ इति। त्रिविधहर्यादिसकलदेवताकारणभूता तत्तन्नामव्यपदेश्या सकलजगत्कारणं परं ब्रह्म त्वमेवेति परमार्थः॥ ९७॥

आनन्दगिरीया

गिरामाहुरिति। हे परब्रह्ममहिषि निराकारानन्दसंविदुल्लासिनि, गिरां देवीं सरस्वतीमागमविदो वेदव्याख्यातारः द्रुहिणगृहिणीं ब्रह्मणो भार्यामाहुः। पद्मां लक्ष्मीं हरेः श्रीकृष्णस्य पत्नीं पाणिगृहीतीं प्राहुः। अद्रितनयां हैमवतीं हरसहचरीं आहुः। त्वं तु

ताभ्यस्तिसृभ्योऽन्या महामाया सरस्वत्यादिपरिच्छिन्नरूपानाक्रान्ता मूलविद्या दुरधिगमनिःसीममहिमा सती विश्वं भ्रमयसि आवर्तयसि वा मोहयसि वा। अयमाशयः—परब्रह्मात्मनि अनादिसिद्धाध्यासेनाध्यस्ता मूलविद्या जगत्साक्षिणी चिच्छक्तिः। तस्याः कार्यभूताः स्थूलविद्यारूपाः सरस्वत्यादयः। तास्तु लीयमानाः सत्यो मूलविद्यायां कारणात्मनि लीयन्ते। मूलविद्या तु नैवम्। ताभ्यो विलक्षणा साक्षाद्ब्रह्मप्रतिबिम्बग्राहिणी तत्तद्गुणोद्रेकसहायेन जगदावर्तप्रवर्तिका तुरीया। महाकाली—महालक्ष्मी—महासरस्वत्यादयः सर्वा अपि तद्विलासमात्रम्। अज्ञानमात्रमवलम्ब्य तां तत्तद्रूपेण वर्णयन्तीति। सा तु केवलाधिष्ठानसाक्षात्कारसाध्या नान्यप्रकारेण। दुरधिगमनिःसीममहिमेत्यनेन सद्विलक्षणस्वरूपं अनिर्वचनीयत्वं द्योत्यते। तथा प्राह वसिष्ठः—'विश्वनायकविलाससाक्षिणी सांबदेव परतो विजृम्भते।' इत्येवं चिद्रूपा त्वमेवेति। गिरामाहुरिति रहस्यार्थः—गिरां देवीं वाग्भवकूटं गृहिणी कामराजकूटं हरेः पत्नी तार्तीयं, पद्माशब्दस्य लक्ष्मीवाचकत्वेन कमलाक्षरप्रतिपादकत्वात् तस्य बिन्दुत्रयात्मकत्वम्। हरेः सहचरीति हकारसकारौ तेन हंसः। तथा 'शिवजामलमूलविद्यान्तं गो... विमरालः कथितः शिवः। सर्वाङ्गसुन्दरी देवी साक्षात् ब्रह्मस्वरूपिणी। भोगमोक्षप्रदा विद्या महात्रिपुरसुन्दरी। अत्र सर्वाङ्गसुन्दरीनाम्ना न पूजा। किन्तु महात्रिपुरसुन्दरीनाम्नैव। तत्तु विद्यानामशतभेदात्। श्रीविद्याया मुख्यभूता। इति श्रीशङ्कराचार्योक्तमेतत्। अत्र सर्वासां पञ्चदशीनां समन्वये सर्वाङ्गसुन्दरीविद्याभेदा भवन्ति इति केचित्। न चाचार्यचरणैस्तथोक्तम्। प्रबोधिका 'षोडशी पञ्चमीदेवी तथा सर्वाङ्गसुन्दरी। नासां भेदबाहुल्यमिति'। परन्तु पञ्चदश्याः सर्वथा भेदः। द्वयोः पञ्चदश्योस्तु भेदद्वयातिरिक्तो नास्तीति संप्रदायानुसारेण ज्ञानमेतासां विद्यानामिति संक्षेपः॥ ९७॥

### तात्पर्यदीपिनी

गिरामिति। हे परमेश्वरि, त्वां अनन्तशक्तिभेदेन वर्तमानां केचित्, परिमितबुद्धयः परिमितध्यानादिव्यवहारेण परिमितदेवपूजादिकर्मणा च परिमितं भोगादिकं फलं प्राप्तुकामाः सन्तो देवतान्तराकारेण भजन्ति। एके आगमविदः सारस्वतवत् कृत्वा पाण्डित्यग्रन्थकर्तृत्वादिवाग्विषयमखिलमैश्वर्यं प्राप्तुकामाः, द्रुहिणगृहिणीं ब्रह्मपत्नीं गिरां देवीं सरस्वतीं त्वामाहुः। त्वयि सरस्वतीरूपभावनामेव कृत्वा तत्फलं प्राप्नुवन्ति। अन्ये तु धनधान्यसुभगकलत्ररथगजतुरगपदातिराज्यैश्वर्यलोभिनो राज्यान्ते नरकं ध्रुवमिति परलोके दुःखानुभवकारणत्वात्, राज्ये तृष्णापराहताः सन्तः त्वां हरेः पत्नीं विष्णोः सहधर्मिणीभूतां पद्मां लक्ष्मीमाहुर्भजन्ति च। अपरे त्वागमविदः नरनारीनृपाणां वशीकरणमोहनस्तम्भनोच्चाटनद्वेषण-

मारणादिकं वाग्देहलोहसिद्धिं बहुकालोपासनया अणिमादिसिद्धिं च वाञ्छन्तः ते खलु हरसहचरीं महादेवसधर्मिणीं अद्रितनयां पार्वतीं त्वामाहुः भजन्ति च। एते त्रयोऽपि परिमितयोगिनः परिमितफलाकांक्षिणश्च प्रतिपादिताः। अपरिमितयोगिभिरपरिमितमानन्दरूपं जीवन्मुक्तिपद-शब्दवाच्यं अत्ययरहितं अक्रियमचिन्त्यमप्रमेयं महासिद्धिमार्गं ये वाञ्छन्ति तेषामाराधनयोग्यां भगवतीं द्वितीयार्धेन प्रतिपादयति। तुरीया तुरीयपदसंपन्ना काप्यनिर्वचनीयासि। किं तुरीयं धाम, जाग्रतः सर्वभेदसंपूर्णात्, ईषद्भेदशबलितात् स्वप्नात्, अभिभूतभेदग्रहणात् अनुन्मूलितभेद-कारणात् इदं अहं त्वमिति त्रिपुरुषविज्ञानाभावेन एकाकारतमस्संछन्नपृथक्प्रथारूपात् सुषुप्तिपदाच्च निःशेषविगलिताज्ञानं परमयोगिनां समाधिरूपमानन्दमयमद्वयं तत्तुरीयमुच्यते। तद्वती सा भगवती तुरीया, तस्मिन्नेव देवी संचिन्त्यते। तथा च श्रुतिः, यतो वाचो निवर्तन्ते। अप्राप्य मनसा सहेति। किंभूता त्वं, दुरधिगमनिःसीममहिमा दुरधिगमो दुःखेनाधिगन्तुं ज्ञातुं शक्यः निःसीमा परिच्छेदरहितः महिमा यस्याः सा तथोक्ता। न हि भगवत्या महिमा केनापि ज्ञायते परिच्छिद्यते वा। अतः कारणाद् हे महामाये महती चासौ अमाया चेति निष्कपटा तस्याः संबोधनम्। अज्ञाने ज्ञानधीः, अभये भयधीः, अत्राणे त्राणबुद्धिः, अनित्ये नित्यभ्रमः, दुःखेषु सुखज्ञानमित्यादिः अनन्तः खलु मायाशब्दव्यवहारः कपटव्यवहारः तद्विरहिता अमाया। एवं भगवत्येव संसारहेतुर्मोक्षहेतुश्च। अत एव त्वं विश्वं संसारिणं जनं योगिनं च भ्रमयसि, अज्ञानवन्तं करोषि। परब्रह्मणो भगवतः महिषी सर्वशक्तिरूपा। एतेन भोगमोक्षहेतुत्वाद्भगवत्याः सर्वदेवताधिक्यं प्रतिपादितम्॥ ९७॥

### पदार्थचन्द्रिका

एवं शिवः शक्त्येत्यारभ्य परब्रह्मत्वेन भवानीं निर्वर्ण्य अध्यासमतमनुवदन् स्वमत-मुपसंहरति — गिरामिति। हे महामाये परब्रह्ममहिषि, त्वं कापि प्रमाणैर्वक्तुमशक्या तुरीया विश्वाद्यपेक्षया, तुरीयशब्दवाच्यब्रह्मरूपा सती विश्वं भ्रमयसि। अरूपेणेति स्वमतोपन्यासः। स्पष्टं पूर्वार्धम्॥ ९७॥

### डिण्डिमभाष्यम्

हे परमेश्वरि! त्वामनन्तकोटिशक्तिभेदेन सर्वमेव जगद्व्याप्य वर्तमानां परिमित-बुद्धयः केचित् परिमितध्यानादिव्यवहारेण परिमितदेवपूजादिकर्मणा च परिमितं भोगादिकं विनश्वरं फलं प्राप्तुकामाः सन्तो देवतान्तराकारेण भजन्ति। एतेषां पक्षत्रयं परिमितमाह — केचिदागमविदः सारस्वतवत् कृत्वा पाण्डित्यग्रन्थकर्तृत्वादिवाग्विषयमखिलमैश्वर्यं प्राप्तुकामाः सन्तः द्रुहिणगृहिणीं ब्रह्मपत्नीं, गिरां देवीं सरस्वतीं त्वामाहुः, त्वयि सरस्वतीरूपपरिच्छेद-

भावनामेव कृत्वा तत्फलं प्राप्नुवन्ति। अन्ये त्वागमविदो धनधान्यसुभगकलत्ररथगजतुरग-पदातिराज्यैश्वर्यलोभिनो 'राज्यान्ते नरकं ध्रुवम्' इति परलोके दुःखानुभवकारणत्वात् हेयेऽपि राज्ये तृष्णापराहताः प्रवृत्ताः सन्तः त्वां हरेः पत्नीं विष्णोः सहधर्मिणीभूतां पद्मां लक्ष्मीमाहुः भजन्ति च। "ब्रूञ् व्यक्तायां वाचि' इति वचनमात्रेण भजनं कथमिति चेत्, उच्यते— तत्तच्छास्त्रेषु सारस्वत्यादिदेवताप्रतिपादकेषु तदुपासनमन्त्रादिकान् न केवलं वदन्ति उपासकाः, अपि तु तैर्मन्त्रैर्जपादिकं यागादिकं वा आचरन्त्येव, अत एवाहुरिति वचनेन समनन्तरभावि नियतभजनमाक्षिप्य प्रतिपद्यत एव। ये त्वागमविदः नरनारीनृपाणां वशीकरणमोहनस्तम्भनो-च्चाटनविद्वेषणमारणादिकं वाग्देहलोहसिद्धिं च बहुकालोपासनया अणिमादिसिद्धीश्च ये वाञ्छन्ति, ते खलु हरसहचरीं महादेवसधर्मिणीमद्रितनयां पार्वतीं त्वामाहुः, वचनानन्तरं भजन्ति च। एवमेते त्रयोऽपि परिमितयोगिनः परिमितफलाकाङ्क्षाश्च प्रतिपादिताः। ब्रह्मपरशब्दवाच्यमपव्ययरहितमशीतोष्णमशेषविश्वात्मताभावनालक्षणं विनश्वरयागादिकर्मानु-बन्धविरहितमक्रियमचिन्त्यं महासिद्धिमार्गं ये वाञ्छन्ति, तेषां समाराधनयोग्यां भगवतीं द्वितीयार्धेन प्रतिपादयति—तुरीयेति। पूर्वगणितानां सारस्वत्यादीनां तिसृणामपि चतुर्थ-सङ्ख्यापूरणी तुरीयेति न वक्तुमुचिता तत्साधारणधर्मत्वे सति तत्साम्यापत्तेः, परिमितानां परिमितैव पूरणीभवितुमुचिता, अपरिमितायास्तत्र पूरणसङ्ख्याविशिष्टत्वाभावात्, किन्तु तुरीयाशब्देन किमुच्यताम्? उच्यते—तुरीया तुरीयपदसंपन्ना। अर्श आदित्वा-न्मतुबर्थाच्प्रत्यये तुरीयेति, तुरीया। किं तत्तुरीयं धाम जाग्रतः सर्वभेदसंपूर्णात्, ईषद्भेदशबलितात् स्वप्नात् अभिभूतभेदग्रहादनुन्मूलितभेदकारणात् इदम्-अहम्-त्वम्-इति त्रिपुरुषविज्ञानाभावेन एकाकारतमःसञ्छन्नप्रथारूपात् सुषुप्तिपदात् च निःशेषविगलिताज्ञानं, परमयोगिनां समाधिरूपमानन्दमयमद्वयं यत्तुरीयमित्युच्यते। तद्वती सा भगवती तुरीया तस्मिन्नेव पदे सा चिन्त्यते। न तु तुरीया या चिन्त्यस्य पदे या चिन्त्यते तस्या नाम-रूपोल्लेखादिकं कथमिति चेन्न। कुतः, नास्या नामरूपोल्लेखादि, अत एव कापि वक्तुमशक्या मनसा चिन्तयितुमप्यशक्या, तथा च श्रूयते 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह।' इति। अत एव कारणात् दुरधिगमनिःसीममहिमा दुरधिगमो निःसीमो महिमा—निर्गता सीमा यस्मात् स निःसीमः परिच्छेदरहितः एवंभूतो महिमा यस्याः सा तथोक्ता, महामाया अनाद्यविद्यारूपेण सर्वेषामपि मोहनक्षमा इति संसारावस्थायाम्। परमयोगिनां तु परमार्थ-ज्ञानावसरे, महामाया महती चासौ अमाया चेति अकारप्रश्लेषः। आर्जवं ब्रह्मणः पदम् इति उक्तवान्। अकपटरूपा, कपटः खलु माया, अन्यस्यान्यभावेन ग्रहणं, स एवाध्यासः, अज्ञाने ज्ञानधीः, अभये भयधीः, अत्राणे त्राणबुद्धिः, अनित्ये नित्यबुद्धिः, दुःखे सुखज्ञानमित्यादि।

अः अनन्तः विष्णुर्मायाशब्दवाच्यः कपटव्यवहारः तद्विरहिता अमाया। एवं च भवत्येव संसारहेतुर्मोक्षहेतुश्च। भोगमोक्षप्रदत्वं भगवत्या महादेवेन मनोभवस्तोत्रे कथितं—'नान्यं निषेवे न हि चान्यमीडे न चापरं दैवतमर्चयामि। ... नाहं परमार्थरूपां श्रीसुन्दरीं चेतसि विस्मरामि।' अत्र च परमार्थरूपाशब्देन परमरूपा, अर्थरूपा इत्यर्थद्वयं सिध्यति। परमो मोक्षः, अर्थः संसारः, उभयस्यापि सैव कारणं। उक्तरीत्या महती चासौ माया चेति संसारे, महती चासौ अमायेति मोक्षे। अत एव सर्वकर्मशक्तत्वात् भगवतः परब्रह्मणः सर्वशक्तिरूपा परब्रह्ममहिषी, श्रीश्रीकामेश्वरमहाभट्टारकस्याङ्कलालिता पट्टमहिषी, अत एव महाश्रीचक्रनगर-साम्राज्ञी प्रसिद्धा विश्वं भ्रमयसि, विश्वं संसारिणं जनं, योगिजनं, विशत्यज्ञानेन संसार-गहनमिति विश्वं संसारिजनं, विशति ज्ञानोद्रेकेण परमार्थज्ञानोद्योगमिति विश्वं योगिजनं च तमुभयविधमपि राशिं भ्रमयसि। अज्ञानवन्तं करोषि, पुनः भ्रमयसि। भ्रमो जगद्व्याप्तिः, विश्वात्मभावना तद्वन्तं करोषि, एतेनापि पूर्ववत् भोगमोक्षहेतुत्वात् भगवत्याः सर्वदेवताधिक्यं प्रतिपादितम् ॥ ९७ ॥

गोपालसुन्दरी

गिरामाहुरिति—हे परब्रह्ममहिषि! महेशपति महामाये अनाद्यविद्यारूपे द्रुहिणो ब्रह्मा तस्य गृहिणीं पत्नीं गिरां देवीं सरस्वतीं त्वामागमविदो वेदविद आहुः, हरेर्विष्णोः पत्नीं श्रियं पद्मां लक्ष्मीमाहुः, हरसहचरीं शिवसहधर्मिणीमद्रेर्हिमालयस्य तनयां पुत्रीमाहुः। स्वमत-माह—त्वं काप्यनिर्वचनीया तुरीया सरस्वत्याद्यतिरिक्ता दुरधिगमो दुर्ज्ञेयः निःसीममहिमा निःसीमोऽपर्यन्तः महिमा प्रभावो यस्याः सा दुरधिगमनिःसीममहिमा विश्वं प्राणिजातं भ्रमयसि सरस्वत्यादिस्वकीयनानारूपं प्रदर्श्य तेन बुद्धिमन्तं करोषीत्यर्थः। अथवा गिरां देवीमैंकाररूपां पञ्चदशीवाग्भवकूटरूपां वा आगमविदस्तान्त्रिका हरेः पत्नीं श्रीबीजरूपां पञ्चदशीतृतीयकूटरूपां वा पञ्चदशीकूटत्रयस्य ब्रह्मविष्णुशिवाधिष्ठितत्वात् तुरीया ईकाररूपा तुर्यान्तैरन्तमापायेति तन्त्र-राजोक्तत्रयोदशाक्षरतुरीयकूटरूपा वेत्यर्थः। विष्णुपक्षे—हे महामाये! महामाया ईर्लक्ष्मीर्यस्ये-त्यर्थात् 'एङ् ह्रस्वादि'ति सुलोपः। त्वां सरस्वतीं लक्ष्मीं भवानीञ्चागमविदो वदन्ति स्त्रीरूपोऽपि त्वमेवेत्यर्थः। वस्तुगत्या कापि दुरधिगमनिःसीममहिमा तुरीया जाग्रत्स्वप्नसुषुप्त्यवस्थातिरिक्ता-वस्था त्वं विश्वं जगत् भ्रमयसि नानात्वेन दर्शयसि, कीदृशं जगत्? परब्रह्मैव महिषो वाहन-माधार उपादानकारणं यस्य तत्परब्रह्ममहिषि, महिषवाहनत्वेन संसारस्यापि वर्णनात् तस्य यमसदृशभयदायकत्वं सूच्यते ॥ ९७ ॥

आनन्दलहरीटीका

गिरामिति। हे परब्रह्ममहिषि, ब्रह्मशक्ते, द्रुहिणो ब्रह्मा तस्य गृहिणीं पत्नीं गिरां वाचां देवीं सरस्वतीमागमविदः शास्त्रज्ञा आहुः वदन्ति। एवमग्रेऽप्यन्वयः। पद्मां लक्ष्मीम्। हरसहचरीं शिवस्य पत्नीं अद्रेर्हिमालयस्य तनयां कन्याम्। वस्तुस्थितिमाह–कापयनिर्वचनीया तुरीया जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयातीता। तदुक्तं ज्ञानार्णवे 'निद्रादौ जागरस्यान्ते स्फुरत्तामात्रलक्षणा। अवस्थापूर्णतां प्राप्ता तुर्यावस्था परा कले'ति। पूर्वोक्तानां तिसृणां त्वं तुरीयेति कश्चित्। दुरधिगमो दुर्विज्ञेयो निःसीमोऽनन्तमहिमा यस्याः सा तथा। डापि टिलोपः। तादृशो यो महिमा अर्थात्परब्रह्मणः, तत्स्वरूपेति वा। महती चासौ माया चेति सा तथा। माया मोहिका शक्तिरविद्यारूपा। मायेत्यत्राकारप्रश्लेषादमाया विद्यारूपेति कश्चित्। महामाये इति पाठे संबोधनम्। ईदृशी त्वं विश्वं जगदेवं भ्रमयसि, लक्ष्मीर्भिन्ना त्वं भिन्ना सरस्वती भिन्नेत्यादिना भ्रान्तं करोषि। वस्तुगत्या त्वं ब्रह्मरूपतया लक्ष्म्यादिरूपा विष्ण्वादिरूपा च। तदुक्तं तन्त्रराजे – कदाचिदाद्या ललिता पुंरूपा कृष्णविग्रहा। वेणुनाद-समारम्भादकरोद्विवशं जगदिति॥ ९७॥

**कदा काले मातः कथय कलितालक्तकरसं**
**पिबेयं विद्यार्थी तव चरणनिर्णेजनजलम्।**
**प्रकृत्या मूकानामपि च कविताकारणतया**
**[1]कदा धत्ते [2]वाणीमुखकमलताम्बूल[3]रसताम्॥ ९८॥**

கதா காலே மாத: கதய கலிதாலக்தக ரஸம்
1 3 1 1 1-2 1 1 1 1 1
பிபேயம் வித்யார்த்தீ தவ சரண நிர்ணேஜந ஜலம்।
1 3 3 2 1 1
ப்ரக்ருத்யா மூகாநாமபி ச கவிதா காரணதயா
1 1 1 1 1 1 1 1 1 1
கதா தத்தே வாணீ முக கமல தாம்பூல ரஸதாம்॥
1 3 4 1 1 2 1 1 3 1

**मां कह दे यह विद्यार्थी आलक्तकरस मिश्रित तेरे**
**चरणों का धोवन पावन पी पाएगा कब बहु तेरे।**

---

1 यदादत्ते 2 वाणीं 3 रसनाम्, रचनाम्।

गूंगों को भी कविताशक्तिप्रदायक बने सहजी वह
वाणीमुखकमल पान की लाली पा लेगा कब कह? ॥

लक्ष्मीधरा

कदा काले जन्मप्रभृत्यवसानपर्यन्त इति शेषः। मातः! जननि! कथय सम्य-गुपदिश। कलितालक्तकरसं कलितं उपदिग्धं अलक्तकरसं लाक्षारसं यावकं वा। स्त्रीणां पादाधरोष्ठरञ्जनार्थं अलक्तकद्रवं उपदिहन्ति सैरन्ध्रयः। पिबेयं प्रार्थनायां लिङ्। विद्यार्थी विद्याः अर्थयत इति विद्यार्थी। यद्वा– अर्थः प्रयोजनमस्य अर्थी विद्याभिः अर्थीति। अत्र रक्षित आह – अर्थशब्दान्मत्वर्थे इनिप्रत्यय इति। अत एव 'तेनार्थवान् लोभपराङ्मुखेन' इति कालिदासेन मतुबेव प्रयुक्तः। माघे 'नितान्तमर्थिनः' इति णिनिरेव। 'अर्थी समर्थो विद्वान्' इत्यादावपि णिनिरेव। अत एव पूर्वव्याख्यैव समीचीना। तव भवत्याः, चरण-निर्णेजनजलं चरणयोः पादयोः निर्णेजनजलं पाद्योदकं, प्रकृत्या स्वभावेन मूकानां, अपिः विरोधे, चकारश्शङ्काच्छेदे, कविताकारणतया कवितायाः हेतुतया, कदा धत्ते वाणीमुख-कमलताम्बूलरसतां वाण्याः सरस्वत्याः मुखकमले यस्ताम्बूलरसः तस्य भावस्तत्ता ताम्। अयं भावः – भगवतीपादारविन्दनिर्णेजनजलं सालक्तकं कविताहेतुः कवीश्वरस्य वदने स्थितं सरस्वती-ताम्बूलरस इव प्रत्यक्षं भाति। स तु कवीश्वरः पुम्भावमापन्ना सरस्वतीवाभातीति। अत्रेत्थं पदयोजना – हे मातः! तव कलितालक्तकरसं चरणनिर्णेजनजलं विद्यार्थी अहं कदा काले पिबेयं कथय। तच्च प्रकृत्या मूकानां अनेडमूकानां वक्तुं श्रोतुं अशिक्षितानामपि च कविता-कारणतया वाणीमुखकमलताम्बूलरसतां कदा धत्ते। अत्रेदमनुसन्धेयम् – भगवत्पादैः अनेड-मूकेभ्यः लघुचर्चास्तोत्रद्वयं हस्तमस्तकसंयोगमहिम्ना अवाचि। तन्महिम्ना भगवती पादारविन्द-निर्णेजनजलं तन्मुखे दत्तवती। तन्निर्णेजनजलं पुनः प्रार्थयत्याचार्यः। अनेन सामीप्यमुक्ति-रुदिता। तद्विशेषानुत्तरश्लोके विवरिष्यामः। चरणनिर्णेजनजलमिति वदता समयिमतमेवोक्तं, कौलमते भुजगाकारेणैव देव्या अवस्थानात् चरणनिर्णेजनजलस्याभावात्। सहस्रकमल एव चरणनिर्णेजनजलमिति पूर्वमेव बहुधा प्रपञ्चितम्। अत एव – सुधाधारासारैश्चरणयुगलान्त-र्विगलितैः प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसः॥ इतीदमर्धं समयमतप्रतिपादकम्। अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं स्वमात्मानं कृत्वा स्वपिपि कुलकुण्डे कुहरिणि॥ इतीदमर्धं कौलमतप्रतिपादकमिति विवेकः। अत्रोत्प्रेक्षालङ्कारः, चरणनिर्णेजनालक्तकरसस्य सरस्वतीताम्बूल-रसत्वेनाध्यवसानात्। समयिनः साक्षात्सरस्वतीस्वरूपत्वेनाध्यवसानाच्च उत्प्रेक्षातिशयोक्त्यो-स्सङ्करः॥ ९८॥

## सौभाग्यवर्धनी

[1]एतावता चरणयोर्महिमानं प्रस्तुत्य तच्चरणनिर्णेजनजलपानं प्रार्थयते–कदेति। हे मातः, कदा काले कस्मिन् समये, कलितालक्तकरसं तव चरणनिर्णेजनजलं चरणक्षालनजलं विद्यार्थी पिबेयम्? यत् प्रकृत्या स्वभावेन, मूकानामपि कविताकारणतया कवितोन्मेषहेतुतया वाणीमुखकमलतांबूलरसतां आधत्ते, सरस्वतीवदनकमलतांबूलरागशोभां करोति। तांबूलाकलित-सरस्वतीवदनवाग्विलाससदृशसूक्तिलहरीसमुन्मेषहेतुः यत् भवति, तत्कदा पिबेयं, कथयेत्यर्थः। यद्यपि पूर्वं स्तन्यदानेनाहं कृतार्थो जातः, किन्तु तदा मम सन्दर्शनानन्तरं पुनः सन्दर्शनं प्राप्य भक्तिभावेन प्रणम्य चरणोदकपानं कदा भावि? कथयेति भूतभाव्यलङ्कारो व्यंग्यः। भक्तिभावेन प्रणम्य चरणोदकपानं नाभूत्। अधुना पानाभावात् तव स्वरूपं न जानीमः॥

## अरुणामोदिनी

[2]एवं पादयोर्महिमानं प्रकटय्य तत्क्षालनजलमाहात्म्यप्रकटनपूर्वकं आत्मनः पादावनेजनजलपानं देव्यनुग्रहलभ्यं प्रार्थयते–कदेति। हे मातः! भक्तजनवत्सले! जननि! विद्यार्थी, विद्याः चतुर्दश अष्टादश चतुःषष्टिर्वा विद्याः। अथवा विद्यां ज्ञानं, अर्थयते याचते इति विद्यार्थी समस्तवेदशास्त्रादिविद्याप्रौढिमाभिलाषी ज्ञानार्थी वा अहं कलितालक्तकरसं, कलितो मिश्रितः अलक्तकरसः लाक्षारसः यस्मिन् तत्, पादे निरन्तरं लाक्षारञ्जनविरहा-भावादिति भावः। तव मूकानामपि मुखरीकरणचतुराया भवत्याः चरणनिर्णेजनजलं, पादप्रक्षालनोदकं, कदा काले कस्मिन् वा काले, सर्वैकान्यकियत्तदः इति दाप्रत्ययः। पिबेयं पास्यामि। संप्रश्ने प्रार्थनायां वा लिङ्। कथय वद। कदा वा भवदावेः संतप्ते दीने अनुग्रहं विधाय चरणौ दर्शयिष्यसि। कदा वा लाक्षारसाङ्कितौ पादौ प्रक्षाल्य यावक-रसमिश्रितं तत्पयः पास्यामि। अयं मनोरथः कदा सिद्ध्येत् वदेत्यर्थः। तन्महिमानमाह–प्रकृत्येति। यच्चरणनिर्णेजनजलं प्रकृत्या स्वभावेनैव, मूकानां कालत्रयेऽप्यभिवदनाशक्तानामपि जनानां, किमुतान्येषामित्यर्थः। कविताकारणतया कवितालतोत्पत्तिहेतुतया वाणीमुखकमल-ताम्बूलरसतां सरस्वतीवदननलिनसंस्थितवीटिकाद्रवरूपत्वं, आधत्ते, भजते। कालिदासादयः महाकवयः सरस्वतीमुखकमलस्थताम्बूलभोजनेन महाकवयो बभूवुरिति प्रसिद्धिः। भवत्पाद-निर्णेजनपाथोऽपि पादार्जितलाक्षारसाङ्किततया भारतीमुखकमलस्थवीटीरूपं सत्कविताहेतुरेव भवति। तत्पा ... लक्षः कदा मम भविष्यतीति भावः। अत्र कदा पिबेयमिति चिन्ताख्यस्य

---

1-2 मखैर्नाकस्त्रीणामिति श्लोकानन्तरं पठितोऽयं श्लोकः, ततस्तदनुसारिणी अवतारिका।

भावस्योक्तिप्रतिबन्धात् प्रेयोऽलङ्कारः। स च उत्तरार्धस्थितवाक्यार्थहेतुककाव्यलिङ्गानुप्राणितः। तेन देवीपादपाथसः सकलविद्यानैपुण्यप्रदत्वं वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः॥ ९८॥

## आनन्दगिरीया

कदा काल इति। हे मातः, त्वं कथय कदा काले तव चरणनिर्णेजनजलं पिबेयम्। कदा मया प्राप्तव्यं नाम? त्वया साक्षादेवोत्तरं वक्तव्यम्। अहं रङ्कस्त्वं तु सकलभुवनभर्तृपदे राजसे, सदा सेवमानदेवदेवीगणावरुद्धं चरणकमलमिति कृत्वा। इन्द्रादयो देवा देवाङ्गनाश्चरणौ क्षालयित्वा निरन्तरं निरञ्जनं निर्णेजनजलं पिबन्ति। मम अवकाशं कथय। निर्णेजनजलं प्रक्षालनजलम्। मया चरणक्षालनं कदा कर्तुं शक्यते। तदैवागत्य पिबेयम्। कीदृशो ऽहं विद्यार्थी विद्याया अर्थी तावता रक्तत्वं अर्थित्वं च तेनावश्यकत्वम्। किंलक्षणं जलं कलितालक्तकरसं कलितः अलक्तकरसो येन। अलक्तकरक्तचरणक्षालनात् कलितालक्तकरसं रक्तवर्णमित्यर्थः। तेन विद्येच्छा प्रधानतयोक्ता। निर्णेजनजलेन विद्या कथमायास्यतीत्यत आह—प्रकृत्या मूकानामपि कविताकारणतया वाग्देवतावदनतांबूलरसतामाधत्ते। नेदमलक्तकरक्तं, अपि तु वागीश्वरीवदनतांबूलरसात्मकं भवति। तेन तत्पानेन निरतिशयवाग्विलासोदयो भविष्यति इति। ननु तर्हि द्रविडशिशुरित्यादौ मया पूर्वं स्तन्यमेव पायितं, तेन वागतिशयो जात एवास्ते। पुनश्चरणनिर्णेजनजल आग्रहः इति। सत्यं मातस्तदाहं बालभावो जनन्याः प्रभावमजानन् जनन्या दयां कृत्वा स्तन्यं पायितः। तेन कृतार्थतमो जात एव। नास्मिन् संशयः। परं तु इदानीं जननीप्रसादेन भक्तिभावपूर्वकचरणकमलनिर्णेजनजलमाधुरीमनुभवितुं मनः समीहते॥ ९८॥

## तात्पर्यदीपिनी

कदेति। हे मातः त्रिभुवनजननि, अहं कदा काले कस्मिन्समये तव चरणनिर्णेजनजलं चरणयोः निर्णेजनमवनेजनं तस्य जलं तत्पिबेयं पास्यामि तत्कथय निवेदय। किंविधोऽहं विद्यार्थी विद्यानामर्थो यस्य स तथा। तवानेन निर्णेजनजलपानेनासावर्थः संभवतीत्यर्थः। तदेव जलं विशिनष्टि—किंभूतं जलं, कलितालक्तकरसं कलितोऽलक्तकरसो येन तत्तथा। पुनः प्रकृत्या स्वभावतो मूकानां वक्तुमशक्तानामपि कविताकारणतया सारस्वतहेतुभूततयां, यन्निर्णेजनजलं वाणीमादत्ते गृह्णाति। किंविधां वाणीं, मुखकमलताम्बूलरसनां मुखमेव कमलं तस्मिन् ताम्बूलमयी रसना जिह्वा तामिव। नेयं वाणी रसनैवेत्युत्प्रेक्षा। मूकानां रसनाभावात् सरागा वाणी भवतीत्यर्थः॥ ९८॥

पदार्थचन्द्रिका

अथ भवानीचरणकमलनिर्णेजनजलपानं प्रार्थयमानः चरणनिर्णेजनजलं स्तौति। कदेति। हे मातस्तव चरणनिर्णेजनजलं कदा काले पिबेयम्। कथयेत्यन्वयः। पुरोवर्तिनीं भवानीं परिकल्प्य पृच्छति—कथयेति। कदेत्यत्र प्रत्ययार्थो विवक्षितः। यद्वा काले संसारचक्रप्रवर्तके महाकाले कदा कस्मिन्वर्षे कस्मिन्मासे कस्मिन्पक्षे कस्मिन्दिने वेत्यर्थः। भवानीचरणनिर्णेजनजलं प्रकृत्या मूकानां वाक्पाटवरहितानामपि कविताकारणतया हेतुना वाणीमुखकमलताम्बूलरचनेव वाणीमुखकमलताम्बूलरचनामाधत्ते करोति। यद्वा वाण्या मुखकमलताम्बूलरचना वाणीमुखकमलताम्बूलरचना ताम्। येन चरणनिर्णेजनजलेन प्रकृत्या मूकानामपि मुखकमलं ताम्बूलं यथा शोभयति तथा वाणी शोभयतीत्यर्थः। शोभा चरणशोभा। रसनामिति पाठे स एवार्थः॥ ९८॥

डिण्डिमभाष्यम्

कदा काल इति। हे मातः त्रिभुवनजननि, कथय सफलः कदा भविष्यामि? यदा यस्मिन् काले कलितालक्तकरसं कलितं प्रक्षालनवेलायां संक्रान्तं अलक्तकरससौभाग्यं यस्य तत्तथोक्तं, तव चरणनिर्णेजनजलं, णिजिर् शुद्धौ इति धातोः निःपूर्वस्य ल्युट्। युवोरनाकौ इत्यनादेशेन निर्णेजनम्। निर्णेजनजलं कदा विद्यार्थी सन् पिबेयम्? तदेव जलं विशिनष्टि। प्रकृत्या मूकानां प्रकृत्या स्वभावत एव मूकानां वक्तुमशक्तानां कविताकारणतया सारस्वतहेतुभूतया यत्प्रक्षालनजलं, वाणीमुखकमलताम्बूलरसतां, वाण्याः सरस्वत्याः, मुखकमलशोणवर्णनागवल्लीदलरससादृश्यं गृहीतम्। एवं खलु श्रूयते—कालिदासादयः कवीश्वराः तपसा सन्तोषितायाः भगवत्याः सरस्वत्या मुखताम्बूलं भुक्त्वा महाकवयो जाता इति। तदर्थसूचनमनेन श्लोकेन कृतम्॥ ९८॥

गोपालसुन्दरी

कदा काल इति। हे मातः, कथय विद्यार्थी सन् तव चरणनिर्णेजनजलं चरणक्षालनजलं, कदा काले कस्मिन् काले पिबेयम्? कीदृशं, कलितः संक्रान्तः प्रक्षालनवेलायामलक्तकरसः यस्मिन् तत्, प्रकृत्या स्वभावत एव, मूकानां वक्तुमशक्तानां, कवितायाः काव्यस्य कारणतया हेतुतया यज्जलं वाण्याः सरस्वत्याः मुखकमलतांबूलरसतां तत्सादृश्यमादत्ते गृह्णाति। यज्जलं मुखकमलतांबूलरसतां वदनकमलतांबूलरागशोभां आदत्ते करोतीत्यर्थः इति केचित्। विष्णुपक्षे—मातः लक्ष्मीतः कलितोऽलक्तकरसो यत्र तदिति निर्णेजनजलविशेषणम्। कौतुकेन लक्ष्म्या अलक्तकरसो दत्त इत्यर्थः। मातो लक्ष्मीतः लक्ष्म्या दत्तं यज्जलं तांबूलरसतां

वाणी आदत्ते इत्यनेनान्वयो वा। यदा सार्वविभक्तिकस्तसिः, तदा माता लक्ष्मीः वाणीमुखकमलतांबूलरसतामादत्त इत्यर्थः। यद्वा अमा अत इति पदच्छेदः। प्रकृत्या प्रकृतिरूपया भवान्या अमा सह वाणी सरस्वती मुखकमलतांबूलरसतां यस्मादादत्ते, अतो हेतोः कदा काले पिबेयमित्यर्थः॥ ९८॥

आनन्दलहरीटीका

कदेति। हे मातः अकाले न विद्यते कालः संहारो यस्यास्तादृशि नित्ये इत्यर्थः। तेन कदेत्यनेन लब्धत्वात् काले इत्यस्य वैयर्थ्यम्। कदा कस्मिन्काले, अहं विद्यार्थी सन्, तव चरणयोर्निर्णेजनजलं प्रक्षालनजलं पिबेयम्। तत्कथय। कीदृशं कलितः संक्रान्तोऽलक्तकस्य रसो यत्र तादृशं यज्जलं कर्तृ, प्रकृत्या स्वभावेन मूकानां शब्दोच्चारणासमर्थानां अपि कवितायाः काव्यस्य कारणतया सरस्वत्या मुखकमलताम्बूलरसनां तत्सादृश्यमादत्ते गृह्णाति। वाणी कर्त्री यत् जलं तादृशरसनामादत्ते तत्प्रार्थयतीत्यर्थः इत्यपि कश्चित्॥ ९८॥

सरस्वत्या लक्ष्म्या विधिहरि[1]सपत्नो विहरते
रतेः पातिव्रत्यं शिथिलयति रम्येण वपुषा।
चिरं [2]जीवन्नेव क्षपितपशुपाशव्यतिकरः
[3]परानन्दाभिख्यं रसयति रसं [4]त्वद्भजनवान्॥ ९९॥

ஸரஸ்வத்யா லக்ஷ்ம்யா விதிஹரிஸபத்நோ விஹரதே
ரதே: பாதிவ்ரத்யம் சிதிலயதி ரம்யேண வபுஷா।
சிரம் ஜீவந்நேவ க்ஷபித பசுபாச வ்யதிகர:
பராநந்தாபிக்யம் ரஸயதி ரஸம் த்வத்பஜநவான்॥

वाणी औ लक्ष्मी का पति बन विधि हरि का रिपु बनता है
सुन्दर वपु से निज सतीत्व स्मर की पत्नी का हरता है
तेरा भक्त जननि जीवन्मुक्त बने सारे पाशों से
छूट कर परानन्द रस पीता रहता है कट क्लेशों से॥

1 सपत्न्या 2 जीवन्नेष 3 परब्रह्माभिख्यं 4 त्वद्भजनभाक्; त्वद्भजमतः

लक्ष्मीधरा

सरस्वत्या भारत्या, लक्ष्म्या पद्मालयया, विधिहरिसपत्नः – यथाक्रममिति शेषः। सरस्वतीपतित्वेन विधेः ब्रह्मणः सपत्नः असूयास्पदम्, लक्ष्मीपतित्वेन हरेः असूयास्पदमित्यर्थः। विहरते विहरमाणः, रतेः काममहिष्याः, पातिव्रत्यं पतिव्रताधर्मं पुरुषान्तरासंपर्करूपं, शिथिलयति, मन्मथाकारतया रतेः मन्मथभ्रान्ति जनयन् संभोगेच्छां जनयतीति भावः। रम्येण अतिसुन्दरेण, वपुषा शरीरेण, तादात्म्यबुद्ध्येति यावत्। एवं सादाख्यायाः कलायाः उपासकस्य ऐहिकफलमुक्त्वा आमुष्मिकमप्याह – चिरञ्जीवन्नेव नित्यजीवनस्सन्। सावयवद्रव्यस्य नित्यत्वं पशुपाशव्यतिकरक्षपणहेतुकम्। अत्र केवलव्यतिरेकि अनुमानं साधनत्वेन प्रयोज्यम् – सावयवं यत् क्षपितपशुपाशव्यतिकरं न भवति, तन्नित्यं न भवति, यथा पश्वादि, इति जीवन्मुक्तिसिद्धिः। सावयवाः कपिलादयः, मार्कण्डेयादयो नित्यसिद्धाः, अतः अन्वयव्यतिरेकि वा भवतु सावयवस्य नित्यतायां साधनम्। एवं नित्यजीवनस्सन् क्षपितपशुपाशव्यतिकरः क्षपितः विनष्टः पशुपाशयोः व्यतिकरः। पशुः जीवः, इन्द्रियैः प्रपञ्चं पश्यतीति। यद्वा – पश बन्धने इत्यस्माद्धातोः पशुः अविद्याबद्धो जीवः, पाशः अविद्या॥

एतच्च श्रूयते – अदि॑तिः पाशं॒ प्र मु॑मोक्त्वे॒तन्नमः॑ प॒शुभ्यः॑ पशु॒पत॑ये करोमि॥ अस्यार्थः – अदितिः आदित्यमण्डलान्तर्गता बैन्दवी शक्तिः। पाशं अविद्याकृतं बन्धं प्रमुमोक्तु प्रकर्षेण अत्यन्तं मोचयतु। एतत् नमः नमस्कारं पशुपतये करोमि। पशुभ्य इति तादर्थ्ये चतुर्थी। तदर्थत्वं निवृत्तिः। पशुत्वनिवृत्त्यर्थम्। अयमर्थः – अदितिः पशुपतिना सदाशिवेन युक्ता पाशविमोचनं करोत्विति। पशुशब्दस्य जीववाचित्वं तैत्तिरीयके सौम्यकाण्डे 'तेषामसुराणाम्' इत्यनुवाके तेषामसुराणामित्यारभ्य 'तस्माद्रुद्रः पशूनामधिपतिः' (तै. सं ६-१-३) इत्यन्तेन प्रतिपादितम्। अतः पशुपाशौ जीवाविद्ये, तयोर्व्यतिकरः संबन्धः, स च क्षपितः विदलितपशुपाशसंबन्धः सदाशिवतत्वात्मनाऽवस्थितः, परानन्दाभिख्यं परानन्दात्मिका अभिख्या ज्योतिर्यस्य सः तं परानन्दाभिख्यं ज्योतीरूपं, रसयति आस्वादयति, रसं सुखं, त्वद्भजनवान् त्वद्भक्तः। तव भजनं सेवा। अत्रेत्थं पदयोजना – हे भगवति! त्वद्भजनवान् सरस्वत्या लक्ष्म्या विधिहरिसपत्नस्सन् विहरते। रम्येण वपुषा रतेः पातिव्रत्यं शिथिलयति। क्षपितपशुपाशव्यतिकरः चिरञ्जीवन्नेव परानन्दाभिख्यं रसं रसयति। अत्रेदमनुसन्धेयम् – जीवन्मुक्तानां अविद्यानिवृत्तावपि कुलालचक्रभ्रमणन्यायेन देहसंबन्धः। यथोक्तं षष्टितन्त्रे सप्तत्याम् – सम्यग्ज्ञानाधिगमाद्धर्मादीनामकारणप्राप्तौ। तिष्ठति संस्कारवशाच्चक्रभ्रमवद्धृतशरीरः॥ इति। अत्र त्वद्भजनवानित्यत्र द्विविधं भजनं – षट्चक्रसेवात्मकं धारणात्मकं

च। आद्यं निरूप्यते—आधारस्वाधिष्ठाने तामिस्रलोकत्वात् नोपास्ये। मणिपूरप्रभृतिसहस्र-कमलपर्यन्तं पञ्च चक्राणि पूज्यानीति। तत्र मणिपूरकपूजापराणां सार्ष्टिरूपा मुक्तिः। सार्ष्टिर्नाम देव्याः पुरसमीपे पुरान्तरं निर्माय सेवां कुर्वाणस्य अवस्थितिः। संवित्कमलपूजारतानां सालोक्यमुक्तिः। सालोक्यं नाम—देव्याः पत्तने निवासः। विशुद्धिचक्रोपासकानां सामीप्य-मुक्तिः। सामीप्यं नाम अङ्गसेवकत्वम्। आज्ञाचक्रोपासकानां सारूप्यमुक्तिः। सारूप्यं नाम समानरूपत्वम्। पृथग्देहधारित्वेनेति सायुज्याद्भेदः। एतत् चतुर्विधं गौणं बाह्यदुःखाति-वर्तित्वमात्रात् मुक्तिरिति व्यपदिश्यते। परं तु सायुज्यात्मिकैव शाश्वती मुक्तिः सहस्र-कमलोपासकानामेवेति। अत एव परानन्दाभिख्यं रसं यथायोग्यं स्वञ्जनवान् रसयति इति। अत्रेदं मततत्त्वम्—षट्कमलभेदमते सुखस्वरूपैव मुक्तिः। सुखं तु लौकिकदृष्टान्तेन स्त्री-संभोगात्मकमेव। लोकेऽपि स्त्रीसंमेलनात् परं सुखं नास्ति। एवमत्यन्तदुःखोच्छेदानन्तरं सायुज्यसंसिद्धौ शिवशक्तिसंपुटान्तर्भावात् तदात्मिकैव मुक्तिरिति॥

तदयमत्र निष्कर्षः—पूर्वं मूलाधारादिषट्चक्राणां त्रिकोणाष्टकोणदशारद्वितयमन्वश्र-शिवचक्रात्मना तादात्म्यं प्रतिपादितम्। एतदेव नादबिन्द्वोरैक्यम्। तथा हि—नादो नाम श्रीचक्रम्। बिन्दुर्नाम षट्कमलगहनं वक्ष्यते। तयोरैक्यं नाम—आधारचक्रं चतुर्दलं, तत्कर्णिका त्रिकोणात्मिका, स्वाधिष्ठानं षड्दलं, तत्कर्णिका अष्टकोणात्मिका, मणिपूरं दशदलं पद्मं, तत्कर्णिका दशकोणात्मिका, अनाहतं द्वादशदलं, तत्कर्णिका द्वितीयदश-कोणात्मिकैव, विशुद्धिचक्रं षोडशदलं, तत्कर्णिका चतुर्दशकोणात्मिका, एतावत्पर्यन्तं शक्ति-चक्रैक्यम्। आज्ञाचक्रं द्विदलं, अष्टकोणमेकत्र षोडशकोणमपरत्रेति द्विधा भिन्ना कर्णिका। अयं भावः—द्विधा भिन्नं चतुरश्रप्रकृतिकं शिवचक्रचतुष्टयात्मकं आधारस्वाधिष्ठानात्मकं चेति प्रपञ्चितम्। वृत्तत्रयं स्वाधिष्ठानान्ते एकं वृत्तं रुद्रग्रन्थ्यात्मकं, अनाहतान्ते एकं विष्णु-ग्रन्थ्यात्मकं, आज्ञाचक्रान्ते एकं ब्रह्मग्रन्थ्यात्मकम्। तत उपरि चतुर्द्वारोपेतं भूपुरत्रितयं द्वारेषु चतुर्षु सोपानयुक्तम्। तच्च सहस्रदलकर्णिका। तस्य कमलस्य दलानि सहस्रम्। बैन्दवस्थानं चतुर्द्वारोपेतं कर्णिकामध्ये। एवं प्रासादन्यायेन श्रीचक्रस्य कमलानां चैक्यमनु-सन्धेयम्। एतच्च नादबिन्द्वैक्यं गुह्यात् गुह्यतमं शिष्यानुग्रहात् उपदिष्टम्। अस्मिन् षट्चक्रे पञ्चाशत्कलानामन्तर्भावः कथितः। चन्द्रखण्डे स्वराः, सूर्यखण्डे स्पर्शाः, अग्निखण्डे अन्तःस्थाः ऊष्माणश्च हकारवर्जिताः, हकारळकारौ बैन्दवे, क्षकारस्सर्वत्रेति सवित्रीभिः (श्लो १७) इति श्लोकेन प्रागेव प्रतिपादितम्। मूलाधारादिदलेषु कलानां अन्तर्भावः प्रागेव प्रतिपादितः। कलानां तिथ्यात्मकत्वं, नित्यानां कलात्मकत्वं, कलानां मूलमन्त्रगतपञ्चदशाक्षरात्मकत्वं,

पञ्चदशाक्षराणां त्रिखण्डत्वं, त्रिखण्डस्य सोमसूर्यानलात्मकत्वं, सोमसूर्यानलानां ग्रन्थित्रयात्मकत्वं, ग्रन्थित्रयस्य मन्त्रगतह्रीङ्कारत्रयात्मकत्वं, ह्रीङ्कारस्य भुवनेश्वरीमन्त्रत्वं, भुवनेश्वरीमन्त्रस्य मूलमन्त्रान्तर्गतत्वं मूलमन्त्रस्य चक्रेणैक्यं, तच्चक्रनवकस्य मूलाधारादिषट्चक्रेषु ब्रह्मग्रन्थ्यादित्रिकेऽपि सहस्रारकमलकर्णिकादौ तादात्म्यम्। एतदेव कलानादयोरैक्यं नाम। अयमत्र निष्कर्षः—नादेन बिन्दोरैक्यं, बिन्दुना कलायाः ऐक्यं, कलायाश्च नादेनैक्यं, एवं त्रितयं, कलया बिन्दोरैक्यं, कलया नादस्यैक्यं, श्रीविद्यया पञ्चकस्यैक्यमिति षड्विधत्वमैक्यस्येति परमरहस्यं गुरूपदेशवशात् ज्ञेयम्। एवं षोढैक्यं भगवत्यास्सपर्येति सम्यगुपवर्णितम्। षोढैक्यानुसन्धानानन्तरं दशभुजा भगवती श्रीविद्या मणिपूरे प्रत्यक्षं परिदृश्यमाना सपर्यया सन्निधेयेति ऐक्यानुसन्धानमेव सपर्येति वदतो ममाशय इति विज्ञेयम्। अधुना बिन्दुस्वरूपं प्रपञ्च्यते—बिन्दुरिति मूलाधारादिचक्रषट्कम्। बिन्दुः जगदुत्पत्तिलयहेतुः शिवस्य शक्तिविशेषः। स च एक एव सहस्रकमलान्तर्गतचतुर्द्वारात्मककर्णिकामध्यगतचतुष्कोणात्मकं शक्तितत्त्वम्। तन्मध्यगतशिवतत्त्वं नाद इत्युच्यते। स चतुर्विध इति प्रागेवोक्तम्। उभयोश्शक्तिशिवयोः शब्दार्थरूपत्वात् कलात्मकत्वं उभयसाधारणम्। अतश्च मेलनं नादबिन्दुकलातीतमिति समयमतरहस्यम्। स च बिन्दुः दशधा भिद्यते। यथोक्तम्—दशधा भिद्यते बिन्दुः एक एव परात्मकः। चतुर्धाऽऽधारकमले षोढाऽधिष्ठानपङ्कजे॥ उभयाकाररूपत्वात् इतरेषां तदात्मता। इति। अस्यार्थः—एक एव बिन्दुः मूलाधारकमलगतचतुर्दलेषु चतुर्धा, स्वाधिष्ठानपद्मगतषड्दलेषु षोढा, एवं दशधा भिद्यते। अयं भावः—मूलाधारं चतुष्पत्रं सरसिजं, स्वाधिष्ठानं षड्दलं, मणिपूरं दशदलं, अनाहतं पद्मं द्वादशदलं, विशुद्धिपद्मं षोडशदलं, आज्ञाचक्रं द्विदलमिति सर्वयोगशास्त्रसिद्धम्। अत्र आधारपद्मस्य दलचतुष्टयं बिन्दुचतुष्टयात्मकम्। ते च बिन्दवो मनोबुद्ध्यहङ्कारचित्ताख्याः प्रकृत्यात्मकाः जगन्निर्माणहेतव इति सर्वयोगशास्त्रसिद्धम्। स्वाधिष्ठानपद्मगतषड्दलानां कामक्रोधलोभमोहमदमात्सर्यात्मकाः षड्बिन्दवः। अत एव ते संहृतिबिन्दव इत्याहुः। तदुक्तं भगवता पतञ्जलिना—'स्वाधिष्ठाने संहारः षड्बिन्दुकृतः' इति। एवं दश बिन्दवः कमलद्वयदलात्मकाः। मणिपूरं मूलाधारस्वाधिष्ठानात्मकमिति कृत्वा दशदलम्। अनाहतचक्रे मणिपूरप्रकृतिकं दशदलं, पूर्वकमलद्वयप्रकृतिकं दलद्वयं द्वादशदलं अनाहतपद्मम्। विशुद्धिपद्मं तु अनाहतचक्रप्रकृतिकं द्वादशदलम्, आधारप्रकृतिकं चतुर्दलं, एवं षोडशदलम्। तथा मणिपूरप्रकृतिकं दशदलं स्वाधिष्ठानप्रकृतिकं षड्दलमिति षोडशदलम्। आज्ञाचक्रं तु आधारस्वाधिष्ठानात्मकमिति द्विदलम्। एवं मणिपूरप्रभृति आज्ञान्तानि चत्वारि कमलानि मूलाधारस्वाधिष्ठानप्रकृतिकानि। अत एव मूलाधारद्विके उत्तरकमलचतुष्कमन्तर्भूतमिति एकस्यैव बिन्दोः दशधात्वं नान्यथेति सिद्धम्॥

यद्यपि कौलानां द्विकानुसन्धानात् षट्कमलानुसन्धानफलं सेत्स्यति, तथापि षड्विधैक्यानुसन्धानाभावात् कुलमार्ग एवेति न देव्या मणिपूरे सान्निध्यं, पञ्चविधमुक्तियुक्त्यभावश्च, नादबिन्दुकलातीतत्त्वमप्यसंभाव्यमेव कौलमते इति। समयिनां तु कार्यभूतचतुष्कानुसन्धानादेव कारणभूतकमलद्वयानुसन्धानफलं सेत्स्यतीति। अत एव पञ्चविधसाम्यसिद्धौ समयसमयिभावः प्रत्यक्षं परिदृश्यते समयसमयिनोः समयिनां सेवकानामिति भगवत्पादमततत्त्वम् ॥

एवं भजनशब्दार्थं प्रतिपाद्य प्रकारान्तरेण भजनशब्दार्थो निरूप्यते—यदाहुः भगवत्पादाः 'धारणापरिज्ञानान्मुक्तिः' इति। अस्यार्थः—धारणाः षष्ट्युत्तरत्रिशतसङ्ख्याकाः। धारणा नाम वायोः कमलेषु नादकलाभ्यां निरोधः। स च षट्कमलेषु षोढा सप्तमे कमले समयशब्दाभिलप्येन सार्धं सप्तविधः। एकैकस्मिन् कमले पञ्चाशदिति षष्ट्युत्तरत्रिशतं धारणाः। ताश्च पृथक् नादबिन्दुकलाभिस्सार्धं मेलनप्रकारैरनन्ता धारणा गुरूपदेशवशादवगन्तव्याः। धारणानां फलं आधारादिचक्रषट्के यथाक्रमं मतिस्मृतिबुद्धिप्रज्ञामेधाप्रतिमासंविद्रूपं दिङ्मात्रं दर्शितम्। अधिकं तु सुभगोदये चरणागमे च सप्रपञ्चं बहुधा प्रतिपादितं तत एवावधार्यं ग्रन्थविस्तरभयान्नोपवर्णितमिहेति। अत एव काळिदासभगवत्पादैः कुलसमयमतभेदप्रतिपादकश्लोकेन सकलजननीस्तोत्रे कथितम्। यथा—चतुष्पत्रान्तष्षड्दलपुटभगान्तस्त्रिवलयस्फुरद्विद्युद्वह्निद्युमणिनियुताभद्युतिलते। षडश्रं भित्त्वाऽऽदौ दशदलमथ द्वादशदलं कलाश्रं च त्र्यश्रं गतवति नमस्ते गिरिसुते ॥ अस्यार्थः—चतुष्पत्रं आधारकमलं अन्तः अन्तस्स्थितं अन्तर्भूतमित्यर्थः, यस्मिन् तत् स्वाधिष्ठानमिति बहुव्रीहिः, न तु तत्पुरुषः, उत्तरस्य पूर्वस्मिन्नन्तर्भावायोगात्। 'षडश्रं भित्त्वाऽऽदौ' इत्युत्तरवाक्यानन्वयाच्च बहुव्रीहिरेव। चतुष्पत्रान्तश्च तत् षड्दलं स्वाधिष्ठानं च चतुष्पत्रान्तष्षड्दलम्। तस्य पुटभगाः पुटात्मकाः संपुटात्मकाः तत्प्रकृतिका इति यावत्, ते च ते भगाः त्रिकोणानि। मणिपूरप्रभृति चतुश्चक्रस्य मूलाधारप्रकृतिकत्वस्योक्तत्वात्। तेषां त्रिकोणात्मकत्वं 'त्रिकोणे बैन्दवं श्लिष्टं अष्टारेऽष्टदलाम्बुजम्' इत्यत्र सम्यङ्निर्णीतम्। पुटभगानां अन्तः मध्ये। त्रिवलयं ग्रन्थित्रयं स्वाधिष्ठानानाहताज्ञान्तेषु अग्निसूर्यचन्द्रात्मकरुद्रग्रन्थिविष्णुग्रन्थिब्रह्मग्रन्थिपर्यायत्वेन स्थितमित्यर्थः। तत्र स्फुरत् स्फुरन्ती। 'स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे' इत्यादिना पुंवद्भावः। विद्युतः सौदामिन्याः वह्नेः अग्नेः द्युमणेस्सूर्यस्य। नियुतशब्दः अगणेयां सङ्ख्यां लक्षयति। तस्येवाभा यस्यास्सा, सा च सा द्युतिलता, नित्या तटिद्वल्ली स्थिरसौदामिनीति यावत्। तस्याः सम्बुद्धिः। आज्ञाचक्रान्ते ब्रह्मग्रन्थिभेदनसमये विद्युन्नियुताभा, स्वाधिष्ठानान्ते रुद्रग्रन्थिभेदनसमये वह्निनियुताभा, अनाहतचक्रान्ते विष्णुग्रन्थिभेदनसमये द्युमणिनियुताभा इति

विवेकः। षडश्रं मूलाधारगर्भितं स्वाधिष्ठानं आदौ भित्त्वा अथ तदनन्तरं दशदलं मणिपूरं भित्त्वा द्वादशदलं अनाहतचक्रं भित्त्वा कलाश्रं विशुद्धिचक्रं भित्त्वा द्व्यश्रं आज्ञाचक्रं भित्त्वा गतवति सहस्रकमलमिति शेषः। हे गिरिसुते! हिमाचलतनये! ते नमः॥

अत्र चतुष्पत्रं मूलाधारं स्वाधिष्ठाने अन्तर्भूतं कौलाः उपासत इति प्रागेव प्रतिपादितम्। समयिनस्तु स्वाधिष्ठानं भित्त्वा मणिपूरं प्रविष्टायाः देव्याः उपासनं कुर्वन्तीति समयमततत्त्वं च प्रतिपादितम्। अत्रेदमुपह्वरं–षट्कमलेषु मनष्षष्ठं भूतपञ्चकं तादात्म्येनावतिष्ठते। तच्च पिण्डब्रह्माण्डयोरैक्यानुसन्धानमहिम्ना षट्कमलानुसन्धानमहिम्ना पञ्चविधसाम्यानुसन्धानमहिम्ना षड्विधैक्यानुसन्धानमहिम्ना पिण्डाण्डं ब्रह्माण्डवदवभासत इति सर्वयोगशास्त्ररहस्यम्। अत एव योगिना चतुर्विधैक्यानुसन्धानं कर्तव्यमेव। तथा च श्रूयते–पिण्डब्रह्माण्डयोरैक्यं लिङ्गसूत्रात्मनोरपि। स्वापाव्याकृतयोरैक्यं क्षेत्रज्ञपरमात्मनोः॥ अयमर्थः–पिण्डाण्डब्रह्माण्डयोरैक्यं ज्ञातव्यम्। तदनन्तरं लिङ्गात्मसूत्रात्मनोरैक्यं अवगन्तव्यम्। लिङ्गात्मा लिङ्गशरीरं एकादशेन्द्रियगणः तन्मात्रापञ्चकं षोडशकं लिङ्गशरीरम्। सूत्रात्मा ब्रह्माण्डावच्छिन्नो वायुः लिङ्गशरीरस्य अर्चिरादिमार्गप्रापकः। तयोरैक्यमवगन्तव्यम्। स्वापाव्याकृतयोः–स्वापः सुषुप्त्यवस्थापन्नः साक्षी प्राज्ञः अव्याकृतः अविद्याशबलितं ब्रह्म तयोरैक्यम्। क्षेत्रज्ञः जीवः, परमात्मा ब्रह्मस्वरूपं तयोरैक्यं ज्ञातव्यम्। एवं संप्रदायरहस्यसंक्षेपः। विस्तरस्तु सुभगोदये शारीरके ज्ञातव्यः। अस्मिन् श्लोके सौन्दर्यलहर्यां यावत्प्रमेयजातं समयसिद्धान्तरहस्यत्वेन कौलसिद्धान्तरहस्यत्वेन च प्रतिपादितमस्माभिः संक्षेपतः तत्सर्वं सूक्ष्मदृशा महात्मभिरनुसन्धेयमिति सर्वमनवद्यम्॥ ९९॥

### सौभाग्यवर्धनी

[1]हरस्य त्वद्भ्रान्ति जनयत इति भावनया सूचितं सारूप्यमधुना विवेचयति–सरस्वत्येति। सरस्वत्या अनवरतसमुन्मीलितगद्यपद्यादिसूक्तिविलाससमुन्नतविद्यया, लक्ष्म्या निरुपमसंपदुल्लाससमुद्भूतविविधविभ्रमेण च विधिहरिसपत्नः ब्रह्मविष्णुप्रतिस्पर्धी, रम्येण वपुषा रतेः पातिव्रत्यं शिथिलयति। एतद्विचारयति–अयमेव कामः कथं न जात इति। चिरं जीवन्नेव चिरञ्जीवी सन्नेव क्षपितपशुपाशव्यतिकरः दूरीकृतः पशुपाशः, पशव इव पशवः, अनादिसिद्धाविद्यातिमिरान्धाः, तेषां पाशः पुनः संसारदुःखं संसारबन्धः जन्ममरणादिदुःखसन्तानबन्धहेतुर्यः संसारपाशः, तस्य व्यतिकरः संपर्कः जीवन्मुक्त इत्यर्थः। परब्रह्माभिख्यं ब्रह्मानन्दतुन्दिलसौभाग्यं रसयति आस्वादयति अनुभवतीत्यर्थः। त्वद्भजनवान्॥ ९९॥

---

1 समुद्भूतस्थूलस्तनभरेति श्लोकसमनन्तरपठितोऽयं श्लोकः। ततस्तदनुसारिण्यवतारिका।

अरुणामोदिनी

अथ देव्युपासकानां वाण्याद्युपासकेभ्यः, चतुर्विधपुरुषार्थसिद्धिं कथयन्नाह—सरस्वत्या इति। हे देवि। तव भवत्याः, भजनमस्यास्तीति त्वद्भजनवान्, भवद्भक्त उपासकः, तदस्त्यस्मिन्निति मतुप्। झयः इति घत्वम्। विधिहरिसपत्नः, विधिः वाणीपतिः ब्रह्मा भवज्ज्येष्ठपुत्रः, हरिर्लक्ष्मीपतिः विष्णुर्द्वितीयपुत्रः, तयो सपत्नः शत्रुः, तत्सदृशः सन्निति यावत्। सरस्वत्या वाण्या, तथा लक्ष्म्या रमया च, विहरति क्रीडति। विधिहरिसमानैश्वर्यमवाप्य पुत्रवत्सलाभवदनुग्रहात् तज्जायाभ्यां तत्समानं विहारं आवासं प्राप्तः सन् वाणीपतिर्लक्ष्मीपतिः इत्येव व्यवह्रियत इत्यर्थः। एवं सरस्वतीपतित्वेन विधेः, लक्ष्मीपतित्वेन हरेश्च असूयास्पदं भवति इति लक्ष्मीधरः। न केवलमेवं संपत्सारस्वतयोरेवावाप्तिः। अपि तु त्रिलोकसौन्दर्यमप्यवाप्नोती त्याह-रतेरिति। रम्येणातिसौन्दर्येण वपुषा देहेन, रतेः मदनप्रियायाः त्रैलोक्यमोहकसौन्दर्यवत्याः तादृशपतिमत्याश्चेति ध्वनिः। पातिव्रत्यं पतिव्रताभावं, एकभर्तृनैयत्यं शिथिलयति दूरीकरोतीत्यर्थः। मन्मथादप्यतिसुन्दरतया रतिदेव्याः संभोगेच्छामात्मनि जनयन् तत्पातिव्रत्यहानिं करोतीत्यर्थः। मदनादप्यतिसुन्दरो भवतीति तात्पर्यार्थः॥

एवं सारस्वतमहदैश्वर्यदेहसौन्दर्यरूपामैहिकफलावाप्तिमुक्त्वा आमुष्मिकफलप्राप्तिमाह—चिरमिति—चिरं बहुकालं, जीवन्नेव, प्राणधारणं कुर्वन्नेव, दीर्घायुष्यतां प्राप्तः सन्नेव, तावत्पर्यन्तं सरस्वतीलक्ष्मीसाहित्यमवाप्तः सन्नेवेत्यर्थः। महदैश्वर्यादिसद्भावेऽपि, दीर्घायुष्मत्ताभावे सर्वमपि निष्फलं भवेदिति देवीभक्तानां तत्संपत्तिरित्युक्ता। क्षपितः अपक्षयीकृतः, पश्यति इन्द्रियैः प्रपञ्चमिति, पश्यते बध्यते कर्मपाशैरिति वा पशुर्जीवः। तस्य पाशं तत्संबन्धिनीमविद्यां, यदा पशवो ज्ञानदुर्विदग्धाः, नास्ति परलोकः नास्ति विद्येति वादिनः, केवलमैहिकसुखमेव मान्यतरं मन्यमानाः, पाशा नाम बन्धहेतवः, 'घृणा शंका भयं लज्जा जुगुप्सा चैव पञ्चमी। कुलं जातिश्च शीलं च अष्टौ पाशाः प्रकीर्तिताः॥ एतैः पाशैः विरहितो निर्विकारो जितेन्द्रियः। विश्वव्याप्ति महाज्ञानं क्रमेण पुरुषोऽश्नुते'॥ इति वचनोक्ताः पाशाः। पशवश्च पाशाश्च पशुपाशाः, तयोः तेषां च व्यतिकरः संपर्को येन सः। पशुपाशविच्छेदद्वारा पशुपतिप्राप्तः सन्नित्यर्थः। परानन्दः, मानुषानन्दनियममारभ्य 'स एको ब्रह्मण आनन्दः' इत्युक्तानन्दादन्यस्याभावात् तादृश इत्यभिख्या नाम यस्य तं, रसं, 'रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति' इति श्रुतिप्रतिपाद्यब्रह्मानन्दमित्यर्थः। रसयस्याह्लादयति भवद्भजनेन दृढतरमविद्याबन्धं छित्वा मोक्षभागपि भवतीति भावः। अत्र भगवत्युपासनायाः सर्वेष्टदातृत्वं प्रथमत एवोपबृंहितमस्माभिरित्युपरम्यते। यथा च सकलदेवताराध्या भवती सर्वदेवताभ्यः

अधिका, यथा च भवत्प्रतिपादिका विद्या हादिकादिरूपेण सकलप्रपञ्चोत्पत्तिमातृका सर्वमन्त्रजालोत्कटा, तथा भवद्भक्ता अपि सपत्नैर्गुणैः ब्रह्मादिभ्योऽपि सर्वोत्कटा भवन्तीति सन्दर्भार्थः॥

आनन्दगिरीया

सरस्वत्येति। हे परमेश्वरि, त्वद्भजनतः पुरुषो विजयते, सर्वोत्कर्षेण वर्तत इत्यर्थः। किंलक्षणः, सरस्वत्या लक्ष्म्या च विधिहरिसपत्नः विधिश्च हरिश्च तयोः सपत्नः, तौ सपत्नौ वा। अतुलां सरस्वतीं लक्ष्मीं च प्राप्तस्य विधिहरी वैरिणौ भवतः, तत्पत्नीस्पर्शात्। अथ चोत्कृष्टोत्कृष्टविद्यावान् भवति, लक्ष्मीवांश्च भवति। मदनादप्यधिकसुन्दरो भवतीत्याह—रतेः पातिव्रत्यमिति। रम्येण वपुषा मनोहरेण वपुषा रतेः पातिव्रत्यं शिथिलयति। परिणीतपतिकन्दर्परूपमात्रविषयकरतिमत्या रतेः पुरुषान्तरविषयकरतिमुत्पादयति। रतिर्जानाति अयमेव कामीभूय मम पतिः कथं न जात इति। चिरञ्जीवी च भवति। क्षपितपशुपाशव्यतिकरः, पशवो देवानां पशवः, ये काम्यकर्मकर्तारः, तेषां पाशः कर्मबन्धः, मिथ्याज्ञानं वा तस्य व्यतिकरः समूहः संक्षपितो येन सः परमेश्वरार्पणबुद्ध्या निष्कामकर्मानुष्ठानजनितधर्मेण प्राचीनपापक्षये उत्पन्ने, अधिष्ठानसाक्षात्कारो ब्रह्मभूयाय कल्पते इत्याह—परब्रह्माभिख्यं रसयतीति। परब्रह्मणोऽभिख्या ब्रह्मभूयाय या अभिख्या तद्वन्तं तादात्म्यं रसं रसयति आस्वादयति। ब्रह्मानन्दानुभवी भवतीत्यर्थः। [1]ननु पूर्वमुपासनमुक्तं हरस्य मनसि त्वद्भ्रान्ति जनयतीति। अनेन स्त्रीत्वप्राप्तिः। इदानीमुच्यते ब्रह्माभिख्यमिति? भावनानुरूपफलदात्री भगवती। ये कामुकाः कामिनीमयमेव सर्वं पश्यन्ति तेषां तदेव फलम्। ये तु ब्रह्मभावनया भजन्ति तेषामिदमिति॥

सरस्वत्या इत्यादिपद्यस्य रहस्यार्थः-सरस्वती वाणी लक्ष्मीः विधिहरसपत्नः कहसल, रम्येण वपुषा लज्जा, तथा वाणीलक्ष्मी विधि शतुश्चन्द्र शक्रो भुवनेश्वरी सप्ताक्षरी महाविद्या विश्वबीजकलात्मिका। तज्ज्ञापकः परं ब्रह्माख्यं रसं स्वीकृत्य स्वात्मानुभवरूपं रसं आद्यं रसयति। तदुल्लासेन यौवनतरुणप्रौढाद्युल्लासविलासेन समनुभूतनिजात्मरसेन सद्यः तत्स्वीकारात् उल्लसिते हृदये मूलाधारगतकुण्डलिन्याः स्पर्शमात्रेण उत्थाय सुषुम्नामार्गेण गम्यते उन्मनावस्थायामुल्लासे तया सहस्रारे समरसं स्थीयते इति साधकशिरोऽलङ्कारं व्याख्यानम्। एतत्सर्वं कुलार्णवात् कुलप्रकाशतन्त्रात् तन्त्रराजाद्बोद्धव्यं गुरुमुखादिति रहस्यार्थोऽयं व्याख्यातः। अत्र पशुपाशविमोचनी विद्या, पाश आं, चिरञ्जीवन् हंसः, एष बुद्धिस्थितमहाविद्या मनुः। अर्थात्पशुपाशं क्षिपन् व्यतिकरः अस्त्रं, तथा 'महाविद्यामनुपान्ते पाशं जुं स इति

---

[1] आनन्दगिरीयव्याख्याने 'समुद्भूतस्थूलस्तनभर' इति श्लोकानन्तरमयं श्लोकः पठितः।

स्मृतम्। पशुपाशं ततः प्रोक्ता मन्त्रदाने महेश्वरि। क्षपयेति द्वन्द्वमन्त्रं पशुपाशविमोचकम्'। अत्र प्रथमं पशुपाशविमोचनी विद्या शिष्याय दीयते। ततो गुरुः पाशत्रयं विमोच्य, तत्त्वं संबोध्य, सर्वतत्त्वं प्रबोध्यानन्तरं दीक्षयेदिति। अत्र यन्त्रमन्त्रो दीयते तदन्ते पशुपाशकमनुः, सर्वत्रायं व्यवहारः। 'पाशत्रयं विमोच्यैनं दीक्षयेदिनतं सुतम्'। इति देवीयामलवचनम्। एतत्तत्त्वत्रयज्ञानी गुरुः। सेवायां लाभः। आं जुं सः कुं दुं सः, पशुपाशं फट्॥ ९९॥

### तात्पर्यदीपिनी

सरस्वत्येति। हे परमेश्वरि त्वद्भजनवान् विधिहरिसपत्नः सन् विहरते। विधिर्ब्रह्मा, हरिर्विष्णुः तयोः सपत्नः समानपत्नीकः विहरते क्रीडते। लोके ब्रह्मविष्णुभक्तेभ्यः विलक्षण-स्वभावो लोकातीतः परैरनभिभावनीयः सन् परब्रह्मानन्दमनुभवति। तत्र हेतुमाह—केन, सरस्वत्याः पतित्वेन विधेः सपत्नो लक्ष्म्याः पतित्वेन विष्णोः सपत्नः असूयास्पदं भवतीत्यर्थः। विवाहकर्तरि भर्तरि सति अन्येन या भुज्यते तया हेतुभूतया विवाहकर्तुरन्यो जारः पतिः सपत्न इत्युच्यते। सरस्वतीभोगेन ब्रह्मसमानोऽधिको वा, लक्ष्मीभोगेन नारायणसमस्तदधिको वा भवतीति भक्तस्य बलमुक्तम्। स्वरूपं कथमित्याह—एष त्वद्भक्तः रम्येण सुन्दरेण वपुषा स्वरूपेण रतेः कामदेवस्य पत्न्याः पातिव्रत्यं पतिव्रताभावं शिथिलयति दूरीकरोति। कामादपि सुन्दरं त्वद्भक्तं दृष्ट्वा कामवधूर्मुह्यति पुरुषान्तरे चित्तसंसर्गात्पातिव्रत्यहानिः। पुनरेष चिरञ्जीवन् ब्रह्मादिभिरनुल्लंघनीयं कालं उल्लंघ्य वर्तमानो भवति। अथ च क्षपितपशुपाशव्यति-करश्च भवति। पशवश्च पाशाश्च तेषां व्यतिकरः संसर्गः स क्षपितः दूरीकृतो येन स तथोक्तः। पशवो गुरुमन्त्रविवर्जिताः, केवलं पुत्रकलत्रमित्रादिनिष्ठा अज्ञानच्छन्नाः। पाशाः, 'घृणा शङ्का भयं लज्जा जुगुप्सा चैव पञ्चमी। कुलं जातिश्च शीलं च अष्टौ पाशाः प्रकीर्तिताः। एतैः पाशैर्विरहितो निर्विकारो जितेन्द्रियः। विश्वव्यापि महाज्ञानं क्रमेण पुरुषोऽश्नुते॥' इति। अथ परब्रह्मामिख्यं परब्रह्मशब्दवाच्यं रसमानन्दातिशयं रसयत्यास्वादयति। यथा त्वं भगवती देवता चक्रेण मञ्चकपादमञ्चकफलकात्मकतां गतेन ब्रह्मविष्णुरुद्रेश्वरात्मकेन मञ्चेन चासनवती सर्वदेवताभ्योऽप्यधिका, एवं त्वद्भक्ता अपि ब्रह्मविष्णुरुद्रादिभ्यो महापुरुषेभ्योऽधिका भवन्ति॥

### पदार्थचन्द्रिका

अथ भवान्येव भजनीयेति वक्तुं तद्भक्तस्य भुक्तिमुक्ती दर्शयन् भवानीं स्तौति। सरस्वत्येति। त्वद्भजनं भजते सेवत इति त्वद्भजनभाक्। त्वद्भक्तो विधिहरि सपत्न्या सरस्वत्या लक्ष्म्या च विजयत इत्यन्वयः। विधौ सरस्वत्येव, हरौ लक्ष्मीरेव, त्वद्भक्ते तु सरस्वती लक्ष्मीश्चेति विजयः। समाना पत्नी सपत्नी तयेति सरस्वत्या लक्ष्म्याश्च विशेषणम्।

विधिश्च हरिश्च विधिहरि। सर्वो द्वन्द्वो विभाषयैकवद्भवतीति परिभाषया समाहारद्वन्द्वः। विधिहरिजयमुक्त्वा कन्दर्पजयमाह—रतेरिति। स्पष्टम्। भवानीभक्तस्य जीवन्मुक्तिमाह—एष भक्तो जीवन्नेन क्षपितः पशुपाशव्यतिकरोऽविद्यासंपर्को येन स ज्ञानी सन्, परब्रह्मणोऽभिख्या प्रकाशो यत्र तं रसमानन्दं रसयति आस्वादयतीत्यर्थः ॥ ९९ ॥

### डिण्डिमभाष्यम्

सरस्वत्येति। हे जननि! तव भक्तस्तु ब्रह्मविष्णुशिवभक्तेभ्योऽपि विलक्षण-स्वभावो लोकातीतः परैरनभिभवनीयः सन् परब्रह्मरसास्वादमनुभवति। कुत इत्याह—सरस्वत्या वर्तमानेपि ब्रह्मणि भर्तरि श्रीश्रीमहाभट्टारिकाचरणारविन्दस्य बलात् हठाद्गृहीत्वा भोग्यया। तद्वत् भर्तरि हरौ तिष्ठत्यपि बलात्कारयोग्यया लक्ष्म्या च कारणभूतया विधिहरिसपत्नो विधेश्च हरेश्च समानपत्नीको भवति। समाना पत्नी यस्य स सपत्नः। समानस्य सभावः। पत्नीशब्दस्य समासान्तः टच् प्रत्ययः। एकपत्नी विवाहकर्तरि भर्तरि तिष्ठति सति, अन्येन या भुज्यते तया हेतुभूतया विवाहकर्तुः अन्यो जारः पतिः सपत्न उच्यते। किं बहुना सरस्वतीभोगेन ब्रह्मसमानो ब्रह्मणोऽधिको वेत्यर्थः। तथा लक्ष्म्या भोगान्नारायण-समानस्तदधिको वेत्यर्थः। विहरते क्रीडति। अत एव भगवतीभक्तस्य बलवत्त्वमुक्तम्। स्वरूपं कथमित्याह – रम्येण वपुषा रूपेण रतेः कामदेवपत्न्याः पातिव्रत्यं पतिव्रता-भावं शिथिलयति दूरीकरोति। कामादप्यधिकसुन्दरं तव भक्तं दृष्ट्वा कामवधूर्यतो मुह्यति, ततः पुरुषान्तरे चित्तसंसर्गात् पातिव्रत्यहानिः। पुनः किंभूतो भक्तः, चिरं जीवन्नेषः, ब्रह्मादिभिरप्यनुल्लङ्घनीयं कालं समुल्लङ्घ्य वर्तमानः, प्रचुरतरपुरुषायुषा भूषितो भवति। अथ च क्षपितपशुपाशव्यतिकरश्च भवति। क्षपिता दूरीभूताः, पशुपाशव्यतिकराः येन स तथोक्तः। पशवः पाशाश्चेति द्वन्द्वसमासः, पशूनामज्ञानात् छन्नानां गुरुवर्जितानां, केवलमिह सुखमेव पुत्रकलत्रादिजनितमुपादेयं, नास्ति परलोकः, नास्ति विद्या, नास्ति मोक्षः इति विचारयतां दुष्टानां व्यतिकरेण संसर्गेण विरहितः। 'संसर्गजा दोषगुणा भवन्ति' इति दुष्टसंसर्गा-द्दोषोत्पत्तिः, साधुसंसर्गात् सद्भावश्च भवति। तव भक्तः पाशैरपि विरहितो भवति। के ते पाशाः? तथोक्तं कुलचूडामणौ 'घृणा शङ्का भयं लज्जा जुगुप्सा चैव पञ्चमी। कुलं जातिश्च शीलं च अष्टौ पाशाः प्रकीर्तिताः। एतैः पाशैर्विरहितो निर्विकारो जितेन्द्रियः। विश्वव्यापि महाज्ञानं क्रमेण पुरुषोऽश्नुते'। परब्रह्माभिख्यं परब्रह्मशब्दवाच्यं रसमानन्दातिशयं रसयति आस्वादयति। 'पद्मजं मधु भृशं रसयित्वा' इति भारविः। 'रस आस्वादने' इति धातुः। त्वद्भजनवान् तदस्यास्त्यस्मिन्निति मतुप्। यथा त्वं भगवती देवता चक्रेण मञ्चकपादमञ्चकफलका-त्मतां गतेन ब्रह्मविष्णुरुद्रेश्वरसदाशिवात्मकेन मञ्चेन चासनवती सर्वदेवताभ्योऽधिका, यथा

च तव विद्या कादिहादिसमष्टिरूपा चतुर्दशभुवनोत्पत्तिहेतुत्वात् सर्वमन्त्रेभ्योऽप्यधिका, तथा तव भक्ता अपि ब्रह्मविष्णुरुद्रादिभ्योऽप्यधिका भवन्ति। ९९ ॥

### गोपालसुन्दरी

सरस्वत्येति—त्वद्भजनवान् त्वद्भक्तः सरस्वत्या गद्यपद्यादिरूपया विद्यया लक्ष्म्या धनसमृद्धया विहरते क्रीडति, विधेः ब्रह्मणः हरेः विष्णोः समानपत्नीकः सन् रम्येण शोभनेन वपुषा शरीरेण रतेः कामपत्न्याः पातिव्रत्यं शिथिलयति दूरीकरोति, चिरञ्जीवन्नेव ब्रह्माद्यनुल्लङ्घनीयं कालमुल्लङ्घ्य वर्तमान एव क्षपितो दूरीकृतः, पशुपाशानां पुत्रकलत्रादीनां व्यतिकरः सङ्गो येन स तथा, यद्वा क्षपिताः पशूनां पाशा घृणाशङ्कादयः तेषां व्यतिकरो येन तथाभूतः सन् परब्रह्माभिख्यं रसं परब्रह्मनामरसं, 'रसो वै सः' इति श्रुतेः, रसयति आस्वादयतीत्यर्थः। तदुक्तं कुलचूडामणौ—'घृणा शङ्का भयं लज्जा जुगुप्सा चैव पञ्चमी। कुलं जातिश्च शीलञ्च अष्टौ पाशाः प्रकीर्तिताः। एतैः पाशैर्विरहितो निर्विकारो जितेन्द्रियः। विश्वव्यापि महाज्ञानं क्रमेण पुरुषोऽश्नुते।' विष्णुपक्षे हरिरिन्द्रः, शेषं समानम् ॥ ९९ ॥

### आनन्दलहरीटीका

इदानीं त्वद्भजनं भोगमोक्षसाधनमिति दर्शयति—सरस्वत्या इति। त्वद्भजनं विद्यते यस्यासौ त्वद्भजनवान्। भजनभागिति पाठे त्वद्भजनं भजत इति त्वद्भक्तिशाली जन इत्यर्थः। सरस्वत्या कवित्वादिरूपया, लक्ष्म्या धनसंपदा विहरते सुखी भवति। विधिहरिसपत्नः ब्रह्मविष्णुसदृशः। समाना पत्नी यस्यासौ सपत्न इति व्याख्यानमशुद्धं असदर्थोपस्थापकत्वात् सपत्नीक इति प्रयोगस्यैवात्रार्थे साधुत्वाच्च। रम्येण मनोहरेण वपुषा शरीरेण रतेः कामपत्न्याः पातिव्रत्यं पतिव्रताधर्मं परपुंरूपसौन्दर्यानवलोकनादिरूपं शिथिलयति दूरीकरोति। एष चिरं जीवन्नेव ब्रह्माभिख्यं त्वन्नामकं रसमास्वाद्यं वस्तु. रसो वै स इति श्रुतेः। रसयति आनन्दयति। कीदृशः, क्षपितो दूरीकृतः पशूनां अज्ञानां ये पाशा इव पाशाः बन्धनहेतवः पुत्रकलत्रादयः तेषां व्यतिकरः समूहो येन स तथा। अथवा पशूनां पाशव्यतिकरो घृणाशङ्कादिरूपः। तदुक्तं कुलचूडामणौ—घृणा शङ्का भयं लज्जा जुगुप्सा चैव पञ्चमी। कुलं जातिश्च शीलञ्च अष्टौ पाशाः प्रकीर्तिताः। एतैः पाशैर्विनिर्मुक्तो निर्विकारो जितेन्द्रियः। विश्वव्यापिमहाज्ञानं क्रमेण पुरुषोऽश्नुत इति ॥ ९९ ॥

**प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः**
**सुधासूतेश्चन्द्रोपलजललवैरर्घ्यरचना[1]।**

---

1 रर्घ्यघटना।

**स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं**
**त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियम् ॥ १०० ॥**

ப்ரதீப ஜ்வாலாபிர் திவஸகர நீராஜந விதி:
1 31 4 8 1 4
ஸுதா ஸூதேச் சந்த்ரோபல ஜலலவைரர்க்ய ரசநா ।
4 1 1 3 1 4 1
ஸ்வகீயைரம்போபி: ஸலிலநிதி ஸௌஹித்ய கரணம்
1 4 4 4 1 1
த்வதீயாபிர் வாக்பிஸ் தவ ஜநநி வாசாம் ஸ்துதிரியம் ॥
1 3 4 3 4 1 1 1 1

दिनकर का नीराजन दीपकमला से देवे कोई
चन्द्रशिलाजलकण से अर्घ्य चन्द्र को देवे ज्यों कोई
जलनिधि का तर्पण उसके ही जल से करते हैं जैसे
तव शब्दों से वाङ्माता! तव स्तुति यह प्रस्तुत है वैसे ॥

लक्ष्मीधरा

प्रदीपस्य करदीपिकायाः, ज्वालाभिः कीलाभिः, दिवसकरस्य सूर्यस्य, नीराजनविधिः नीराजनकृत्यम्, सुधासूतेः चन्द्रस्य, चन्द्रोपलजललवैः चन्द्रोपलानां चन्द्रकान्तानां जललवैः निष्यन्दैः, अर्घ्यरचना, स्वकीयैः आत्मसम्बन्धिभिः, एतत्स्वकीयपदं प्रदीपज्वालाभिरित्यादौ व्यत्ययेनान्वेति स्वकीयाभिरिति। अम्भोभिः जलैः सलिलनिधिसौहित्यकरणं समुद्रस्य तृप्तिहेतुः तर्पणविशेषः। त्वदीयाभिः त्वदुत्पन्नैः, त्वत्स्वरूपैः वाग्भिः वाक्यसंदर्भैः तव भवत्याः, जननि! मातः! सवित्रीत्यर्थः। वाचां वाक्प्रपञ्चस्य स्तुतिरियम्। अत्रेत्थं पदयोजना—हे वाचां जननि! यथा स्वकीयाभिः प्रदीपज्वालाभिः दिवसकरनीराजनविधिः, यथा स्वकीयैश्चन्द्रोपलजललवैः सुधासूतेरर्घ्यरचना भवति, यथा स्वकीयैरम्भोभिस्सलिलनिधिसौहित्यकरणं भवति, तथा त्वदीयाभिः वाग्भिरेव तवेयं स्तुतिः। अत्र इयं स्तुतिरिति यदा पूर्वोक्तप्रदीपज्वालादिवाक्यप्रतिपादितार्थसाम्यपरामर्शः तदा प्रतिवस्तूपमालङ्कारः, उपमानोपमेययोर्वस्तुप्रतिवस्तुभावेनान्वयात्। यदा इयं स्तुतिरिति स्वरूपमात्रं परामृश्यते तदा भिन्नवाक्यत्वेन बिम्बप्रतिबिम्बाक्षेपात् दृष्टान्तालङ्कारः। एवं प्रतिवस्तूपमादृष्टान्तालङ्कारयोः अन्वयभेदेन प्रतीयमानत्वात् वाक्यद्वयाश्रयणात् संसृष्टिरेवेति ध्येयम्। अस्मिन् सौन्दर्यलहरीश्लोकशतके 'समानीतः पद्भ्यां' इति 'समुद्भूतस्थूलस्तनभरम्' इति 'निधे नित्यस्मेरे' इति

श्लोकत्रयं वर्तते। तत्तु भगवत्पादरचितं न भवति केनचित्प्रक्षिप्तमिति न व्याख्यातम्। श्लोकशतकमेव व्याख्यातम्॥ १००॥

इति श्रीलोल्लकुलसंप्रदायप्रवर्तकभ्रमराम्बिकावरप्रसादसमुल्लसितमहासारस्वतभट्टलोल्लपतिग्रन्थविवरणकर्तृ श्रीमहोपाध्यायमहादेवाचार्यसप्तमेन साहित्यपारिजातस्मृतिकल्पतरुप्रबन्धप्रबन्धृलक्ष्मीधरार्यषष्ठेन भरतार्णवपोताद्यसाहित्यमीमांसाग्रन्थद्वयप्रणेतृविरिञ्चिमिश्रपञ्चमेन मीमांसाद्वयजीवातुनिर्मातृपुरुषोत्तममहोपाध्यायनप्त्रा प्राभाकरामृतवाहिनीप्रभावलीखण्डनाद्यनेकप्रबन्धसन्दर्भप्रवर्तकत्रिरुदपदमहोपाध्यायलक्ष्मणार्यपौत्रेण नयविवेकदीपिकाप्रबन्धसंविधातृमहोपाध्यायविद्वत्सार्वभौमनूतनव्यासाद्यनेकबिरुदाङ्कितश्रीविश्वनाथभट्टारककतनयेन अधीतदशशतनयेन पार्वतीगर्भशुक्तिमुक्तारत्नेन बहूकृतकृतधीचिरत्नेन लोल्लकुलकलशाम्बुधिसुधांशुना यशःप्रांशुना हरितगोत्रकल्पशाखिना आपस्तम्बशाखिना षड्दर्शनीपारदृश्वना प्रतिपक्षवृक्षजञ्झामातरिश्वना भ्रमराम्बिकाप्रसादसमासादितप्रतिभाविशेषेण भुवि शेषेण निखिलयामलतन्त्रार्णवावगाहनरुद्रेण आश्रयीकृतगजपतिवीररुद्रेण नीलगिरिसुन्दरचरणारविन्दचञ्चरीकेण वाणीसहचरीकेण सरस्वतीविलासाद्यनेकस्मृतिनिबन्धनलक्ष्मीधराद्यनेकसाहित्यनिबन्धननयविवेकभूषणाद्यनेकगुरुमतनिबन्धनयोगदीपिकाद्यनेकपातञ्जलमतनिबन्धनमहानिबन्धनाद्यमानवधर्मशास्त्रटीकाकर्णावतंसब्रह्मावतंसाद्यनेककाव्यकल्पकेन आश्रितजनकल्पकेन निग्रहानुग्रहकौशिकेन श्रीमहोपाध्यायलक्ष्मीधरदेशिकेन कृतेयं लक्ष्मीधराख्या सौन्दर्यलहरीस्तुतिव्याख्या। अनया सन्तुष्टा भवतु भगवती भवानी॥

## सौभाग्यवर्धनी

किञ्च मया स्तुतिरपि न कृतेत्याह—प्रदीपेति। प्रदीपज्वालाभिः दिवसकरनीराजनविधिः, यथा तेजोनिधेः दीपशिखया नीराजनं, सुधासूतेः अमृतप्रसूतिप्रदस्य चन्द्रोपलजललवैः चन्द्रकान्तनिष्यन्दसलिलबिन्दुभिः अर्घ्यघटना अर्घ्यदानं, स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं समुद्रस्यैव जलैः समुद्रतर्पणं, समुद्रस्तृप्यत्विति। तथा स्वकीयाभिर्वाग्भिः, मातृकास्वरूपा त्वमेव, तवैव मातृकाक्षरैः तवैव स्तुतिः, परापश्यन्तीमध्यमारूपया त्वयैवोल्लसितवैखरीविजृम्भितत्वन्मयमातृकाक्षरैः तवैव स्तुतिरिति मम स्तुतिर्वस्तुत एव नास्ति। त्वमेव सर्वत्रानुस्यूता चेतनारूपा प्रतिभासत इति भावः॥ १००॥

एषा सौन्दर्यलहर्याष्टीका सौभाग्यवर्धनीनाम्नी।
कैवल्याश्रमरचिता विलसतु परदेवताप्रमोदकरी॥

अत्रावद्यं कृतधियः सम्यगालोच्य तत्त्वतः ।
शोधयन्तु विशेषेण बद्धः सन्तोऽयमञ्जलिः ॥

किं विज्ञापनयानया यदि भवेदस्मत्कृतेनक्षरं
ग्रन्थेऽत्र स्वयमेव साधुपुरुषाः दूरीकरिष्यन्ति तत् ।
सन्मार्गे पतितानि कण्टकितुलान्यालोक्य किं साधवो
दूरीकृत्य न यान्ति तानि पथिकाः कर्तुं परेषां हितम् ॥

इति श्रीगोविन्दाश्रमपूज्यपादशिष्यश्रीकैवल्याश्रमविरचितायां आनन्दलहरीव्याख्यायां सौभाग्यवर्धन्यां सौन्दर्यवर्णनाख्यो द्वितीयस्तरङ्गः। सौन्दर्यलहरीटीका सौभाग्यवर्धनी संपूर्णा ॥

अरुणामोदिनी

स्तुतिरपीयं भवदीयैव, नाहमत्र कर्तेत्याह– प्रदीपेति । वाचां गिरां जननी माता तस्याः संबुद्धिः । हे वाचां जननि! वाग्देवीरूपधारिणि! मातृकारूपे देवि! इमाः त्वदीयाः ताभिः, प्रत्ययोत्तरपदयोश्चेति छे त्वादेशः, गीर्भिः रचितेति शेषः। भवत्या मातृकारूपत्वादिति भावः। इयमानन्दलहरी सौन्दर्यलहरीसमाख्या स्तुतिः, विद्यमानगुणवर्णनरूपा नुतिः, तव भवत्याः, प्रदीपज्वालाभिः दीपप्रभाभिः, दिवसकरनीराजनविधिः, दिवसकरस्य सहस्रार्चिषः सर्वतेजोमयस्य सूर्यस्य नीराजनविधिः अग्निज्वालया आरार्तिकविधानं तादृगित्यर्थः। तथा सुधासूतेः अमृतमयस्येन्दोः, आत्रेयो मा सुधासूतिरित्यमरः। चन्द्रोपलजललवैः तदीयैरेव चन्द्रमणिनीरबिन्दुभिः अर्घ्यस्य रचना विधानम् । तथा स्वकीयैः स्वीयैः सामुद्रैरेव अम्भोभिः जलैः सलिलनिधेः समुद्रस्य सौहित्यस्य करणं विधानं तर्पणाञ्जलिः, तत्सदृशीत्यर्थः। सौहित्यं तर्पणं तृप्तिरित्यमरः। अकारादिक्षकारान्तमातृकावर्णरूपिणी इत्यष्टोत्तरशतनामोक्तेः, मातृकाक्षराणां भवद्रूपत्वेन, तद्विकृतिरूपस्य सर्ववाग्व्यवहारस्यापि भवद्रूपत्वात् भवतीमधिकृत्य कृता आगमार्थसंवादिनीयं स्तुतिः भवत्सम्बन्धिमातृकाक्षरादनन्यत्वात्, भवदीयवाग्भिरेव भगवत्याः स्तुतिरियम् । समस्ततेजोनिधेः सकललोकप्रकाशकत्वाच्चाभिकस्य यथा दीपज्वालया आरार्तिकविधानं, यथा वा समस्तजलपूर्णस्य सलिलनिधेः तज्जलैरेवार्घ्यविधानं, तथैवेति भावः। अत्र स्तोत्रस्तुत्यस्तावकभावेन भवत्या एवावस्थितत्वात् अल्पस्य स्तोतुर्मम बालस्य सर्वे अपराधाः क्षम्यन्तामिति सर्वमनवद्यम् ॥ १०० ॥

सत्साहित्यप्रवीणस्त्रिभुवनमहितः कुण्डमुकत्यन्ववाये
वीरो गङ्गाधराख्यः समुदभवदसौ मल्लिनाथात्कवेर्यः ।

तस्य श्रीमृत्युकामेश्वरकविरचिताचार्यदेवीस्तुतीय-
व्याख्यानेऽस्मिन् द्वितीया समजनि लहरिश्चारुणामोदिनीयम् ॥

श्रीविघ्नेश्वरभक्तवत्सलकृपासंवीक्षणप्रेरणात्
ग्रन्थोपक्रमणप्रवृत्तमखिलाभीष्टार्थदानक्षमात् ।
दृष्टया दूरनिरस्तमत्सरमदासूयादिसन्दोहया
सान्द्रानन्दसुधारसस्तुतिजुषा पश्यन्तु मां सूरयः ॥

श्रीश्रीपत्यादिमिथुनैः संसेवितपदाम्बुजम् । तरुणारुणनीकाशं भजता गणनायकम् ॥
कामेश्वरेण विदुषा निर्मितातिमनोहरा । अरुणामोदिनीनाम्नी व्याख्येयमतिशोभना ॥
आमोदितारुणादेव्या राजराजेश्वराह्वया । आतन्वती बुधामोदं जीयादाचन्द्रतारकम् ॥
अरुणामोदिनीनाम्न्या व्याख्यया शुभयानया । सन्तुष्टाभीष्टदा भूयादरुणा करुणावती ॥
मयि प्रसादं विबुधाः पश्यतारुणया कृतम् । येनातिकठिनग्रन्थव्याख्यानोत्सुकतामगाम् ॥

इति श्रीमदखिलविद्यासंप्रदायप्रवर्तकसाहित्यपदसार्वभौम श्रीमत्कोडमर्तिवंशरत्नाकरसुधाकरब्रह्मान्तर्वाणिवर्य-तनूभवस्य विश्वजनीनविद्यावैशद्यस्य विद्वन्मणेर्मल्लेश्वरपण्डितस्य सूनोः गङ्गाधरधीरधुरन्धरस्य तनूभवेन समस्तभजन्मनोरथसन्धानसमवहित श्रीविघ्नेश्वरकरुणाकटाक्षनिरीक्षणलब्धविद्यावैशद्येन अक्कमाम्बागर्भ-रत्नाकरराकासुधानिधिना वेङ्कटेश्वरभागिनेयेन कामेश्वरसूरिणा विरचितासु कृतिषु आचार्यभगव-त्पादकृतदेवीस्तुतिव्याख्यायां अरुणामोदिनीसमाख्यायां सौन्दर्यवर्णनापरः
सौन्दर्यलहर्याख्यो द्वितीयः कल्लोलः। समाप्तोऽयं ग्रन्थः ॥

## आनन्दगिरीया

किं चैषा स्तुतिरपि मया मदीयवचनैर्न कृता, किन्तु त्वदीयैरेव शब्दैः स्तुतिरस्तु ते इत्याह—प्रदीपैरिति। हे मातः परापश्यन्तीमध्यमारूपया समुल्लसिता मातृकामयी वैखरी तया विजृम्भितान्यक्षराणि, तैस्तु क्रियमाणा स्तुतिः त्वयैव कृता न तु मया। तत्र चेतनारूपा-ऽनुस्यूता प्रतिभासेति। तत्र दृष्टान्ताः—प्रदीपज्वालाभिरित्यादयः। तस्य रहस्यार्थः। तथा च तव नामस्मरणशीलानां सद्यः सर्वं प्रकाशते। यथा दीपे स्थिते प्रथमं चानुदीप्तेव भासते देहान्तरे किञ्चिदित्येव स्मरणशीलानां यथा दीपः स्मृतः स्नेहयुक्तः सर्वमवभासयति एवं त्वमिति भावः। हे जगदम्ब तव चरणस्मरणं मम मनसो यत्र यत्रशर्गा न जायते। त्वत्कीयैरम्भोभिः स्वकृतैः जपध्यानपूजादिभिः त एवाम्भोनिचयः, तैः सदा तापरहिताः सदा शीतलः तव स्वभावः। तेषां सुधाजलतर्पणसमुल्लसितहृदयानां चन्द्रामृतजलेनैव अर्घ्यघटना

तर्पणं तदेव भवतीत्यर्थः। जगदम्ब स्वकीयाभिर्वाग्भिः त्वां स्तुवन्तः... सद्य एव जगज्जननी ... वचनस्तुतिरियं इति प्रतिपाद्यते। तथा च स्वयंकृतवाणीविरचनेन स्वकृतिं मन्यमानाः स्तुवन्त एवाज्ञानवन्तो भवन्ति। न ममेयं कृतिः किन्तु जगदम्बावाग्विलसितमेव तदिति पश्यतां तथा च त्वां स्तुवतां वाङ्मयमोक्षसिद्धिः। यद्वा - प्रदीपज्वालाभिः रवेः को नीराजनविधिः सर्वलोकप्रकाशकस्य, जलैरर्घ्यघटना चन्द्रस्य वा सुधासूतेः, स्वयं गतैरम्भोभिः हिमालयादपि किं महोदधेः। अस्मदादिकृतेः का वा स्तुतिः। यत्र वेदेनापि नेति नेतीति कथयमानेन अद्यापि स्थीयत इति ॥ १०० ॥

इति आनन्दवारकृत्स्नश्रीशङ्कराचार्यस्याज्ञया श्रीआनन्दगिरिविरचितः सौन्दर्यलहर्या मन्त्रोद्धारः।

कण्ठे श्लोकशतीं कृत्वा कुलक्षेमाय सत्कृताम्। टीकां मन्त्रमयीं नित्यामाचार्याशयवर्णिनीम् ॥
लब्ध्वा गुरुप्रसादेन स्वभक्त्या पुण्यपुञ्जतः। अवाच्याः परशिष्येभ्यो निधानमिव रक्षिताः ॥

श्रीआनन्दगिरीयसंप्रदायटीका षडाम्नायदेवतानां क्रमेण शैववैष्णवसौरगाणपत्यादिदेवतानां नानामन्त्राणामुद्धारणमस्ति। प्रयत्नेन गोपनीयं यथाशक्ति।

## तात्पर्यदीपिनी

प्रदीपेति। हे वाचां जननि सर्ववाग्रूपे महाविद्यासिंहासनेश्वरि, इयं स्तुतिः त्वदीयाभिर्वाग्भिः समाना रचिता। तव स्तुत्या प्रीतिसंपादनं दुर्लभम्। तत्रानुरूपदृष्टान्तमाह— यथा प्रदीपज्वालाभिः प्रदीपस्य ज्वालाः शिखाः ताभिर्दिवसकरनीराजनविधिः, दिवसं करोति, तस्य तेजोराशेः सूर्यस्य नीराजनविधिः आरार्तिकविधानम्। सूर्यः किं दीपाराधनेन तुष्यति, तथा तव स्तुतिरेषा। यथा च सुधासूतेः सुधाया अमृतस्य सूतिर्यस्मात्स तथा तस्य चन्द्रस्य चन्द्रोपलजललवैः चन्द्रस्योपलाः चन्द्रकान्ताः तेषां लवा निष्यन्दाः तैरर्घ्यरचना तर्पणकृत्यं तथा मे तत्रापि स्तुतिः। तथा स्वकीयैः स्वीयैरंभोभिर्जलैः सलिलनिधिसौहित्यकरणं सलिलानां निधिः समुद्रः तस्य सौहित्यं तृप्तिः, तस्य करणं संपादनं तत्समानैव तव ममैषा स्तुतिः। अत एव मयि भक्ते निरर्थककलमधुरप्रलापिनि बालके पुत्रे यथा मातुरानन्दातिशयः तथा निरर्थकस्तुतिपरायणे मयि तव चरणकिङ्करे परमानन्दमुद्रा विधीयतामिति ॥ शिवम् ॥ १०० ॥

श्रीमत्सुन्दरलहरीव्याख्या तात्पर्यदीपिनी।
वैद्यमाधवरचिता बालव्युत्पत्तिसिद्धये ॥

इति श्रीमदष्टाङ्गयोगसिद्धयवाप्ताखिलसिद्धिमतो महारुद्रस्याङ्गभूतेन महादेवेन विरचिता श्रीसौन्दर्यलहरीस्तोत्रतात्पर्यदीपिका समाप्ता ॥ शिवं भूयात् ॥

शैलाश्राङ्गाब्जमिश्रे गतवति परिघे हायने क्रोधनाख्ये
सूरे सैंहं प्रयाते तपसि च बहुले वासवर्क्षे च शाके।
सौन्दर्याद्याख्यलेख्यादित इह लहरीस्तोत्रतात्पर्यदीपि-
-- - -न्यम्बाभर्तुस्तिराबव्ययमरगुरुदिने नीलकण्ठद्विजेन ॥ --

(शके १६४३ वर्षे वर्तमानप्लवसंवत्सरे उदगयने चैत्रमासे
शुक्लपक्षे तृतीयायां समाप्तिमगमत् ॥)

पदार्थचन्द्रिका

इति सौन्दर्यलहरी समाप्ता। स्तुतिमिमामित्यनेन प्राप्तमात्मनः स्तुतिकर्तृत्वं परिहरन् स्तुतौ न मम स्वातन्त्र्यं, स्तुतिरपि स्वोपकारायैव इत्यभिप्रायेण सदृष्टान्तमाह— प्रदीपेति। हे जननि त्वदीयाभिर्वाग्भिः वाग्विलासैः वाचां तव वाग्देवतायास्तव स्तुतिरित्यर्थः। वाचां तवेत्यत्र संबन्धे षष्ठी, स चाधिष्ठात्रधिष्ठेयभावः। इयं पूर्वोक्ता इयं च स्तुतिः स्वार्था। न तु त्वदीयेत्यत्र दृष्टान्तानाह—प्रदीपेत्यादिना। वस्तुतः सौराभिरेव प्रदीपज्वालाभिः यथा दिवसकरनीराजनविधिः तथा तव स्तुतिरित्यर्थः। नीराजनकृत्यं अन्धकारनिवृत्तिरूपं वा अमङ्गलनिवृत्तिरूपं वा। एतद्द्वयमपि दिवसकरे सूर्ये परममङ्गलस्वरूपे न संभवति। तथापि स्वार्थं सर्वैरपि नीराजनं विधीयते। तथा स्तुतिकृत्यस्यातिशयाधानस्याभावेऽपि अनन्तशक्ति-संपन्नायाः तव स्तुरित्यभिप्रायः। स्पष्टं दृष्टान्तद्वयम्। सौहित्यं तृप्तिः, अग्निसूर्ययोश्चैक्यं अग्निर्ज्योतिरिति मन्त्रे श्रुतावेव प्रसिद्धम् ॥ १०० ॥

इति सौन्दर्यलहरीटीका पदार्थचन्द्रिकाख्या समाप्ता ॥

डिण्डिमभाष्यम्

हे भगवति! वाचां जननि सर्ववाग्रूपमहाविद्यासिंहासनेश्वरि श्रीश्रीसुन्दरीमहाभट्टारिके, यत्तव स्तवनं मया कृतं तन्मम वाक्कृतं न भवति। त्वमेव समस्तजिह्वाग्रेषु वाग्रूपिणी। अत एव त्वदीयाभिर्वाग्भिः तव स्तुतिरेषा कीदृशीत्यपेक्षायामाह— प्रदीपज्वालाभिः दिवसकर-नीराजनविधिः। तेजोराशेः सूर्यस्य नीराजनविधिः, आरार्तिकाविधानं, सूर्यः किं दीपाराधनेन तुष्यति? तथा वस्तु परेषाम्। सुधासूतेश्चन्द्रस्य चन्द्रोपलजललवैः चन्द्रकान्तसलिलनिष्यन्दैः अर्घ्यरचना तर्पणकृत्यं, तथा मे स्तुतिः। अपि च स्वकीयैरम्भोभिः स्वीयैर्जलैरेव सलिलनिधेः समुद्रदेवतायाः सौहित्यजननं तर्पणद्वारा तृप्तिसंपादनं, 'सौहित्यं तर्पणं तृप्तिः' इत्यमरः। तत्समानमेव ममैषा स्तुतिः त्वद्वाग्भिः रचितैव यतः तव स्तुत्या प्रीतिसंपादनं दुर्लभम्।

अत एव त्वं मयि भक्ते निरर्थककेवलमधुरप्रलापिनि बालके पुत्रे यथा मातुरानन्दातिशयः, तथा निरर्थकस्तुतिपरायणे मयि तव चरणकिङ्करे परमानन्दमुद्रा विधीयताम् ॥ १०० ॥

इति सर्वव्याप्यानन्दलहरीस्तोत्रस्य त्वत्प्रसादादेव सर्वार्थप्रकाशिनी टीका मम मुखादुत्पन्ना। नाहं जानामि सद्वाऽसद्वा। टीकाकरणमिदं तवैव। सर्वदोषांशाद् गुणान् गृहीत्वा मां कृतार्थय ॥

सद्वाऽसद्वा किमपि विदितं त्वत्प्रसादानुभावात्
सर्वज्ञत्वं सकलविषये वर्तते लोकमातुः।
वाचागुंफश्चरणकमले तावके पुष्पमालां
अङ्गीकृत्य प्रकटय ममानन्दसाम्राज्यलक्ष्मीम् ॥

इति श्रीपदवाक्यप्रमाणज्ञातिरात्रयाजिमहाभट्टारकारविन्दलोचनाचार्यपुत्र श्रीरामकवि डिण्डिममुकुटराय-महापात्रराशौ आनन्दलहरीभाष्यालोचने द्वितीयमुन्मीलनं संपूर्णम् ॥

काञ्चीदेशसमुद्भवः कविवरः श्रीरामसड्डिण्डिमः
कृत्वा दिग्विजयं कवित्वलहरीकोलाहलैः प्रक्रमैः।
प्राप्य श्रीपुरुषोत्तमं पुरवरं तद्विप्रगोष्ठीमुखे
तेषां हर्षकृते चकार महतीं टीकां भवानीस्तुतेः ॥

गोपालसुन्दरी

प्रदीपज्वालाभिरिति। हे वाचां जननि, मातृकारूपे, त्वदीयाभिरेव वाग्भिः तव स्तुतिरियं, न मद्वाग्भिः इत्यर्थः। यथा प्रदीपज्वालाभिर्दिवसकरस्य सूर्यस्य नीराजनविधिरारार्तिकविधानं, न हि सकलभुवनान्तर्वर्तिध्वान्तध्वंसकस्य भगवतो मार्तण्डस्य प्रदीपज्वालाभिः प्रकाश इत्यर्थः। सुधासूतेश्चन्द्रस्य चन्द्रोपलजललवैः चन्द्रकान्तपानीयविप्रुषैः अर्घ्यघटना अर्घ्यदानं, स्वकीयैर्निजैः अंभोभिर्जलैः सलिलनिधेः समुद्रस्य सौहित्यकरणं तृप्तिसंपादनं, 'सौहित्यं तर्पणं तृप्तिः' इत्यमरः। अत्र यथाशब्दाभावेऽपि प्रदीपेत्यादीनां दृष्टान्तता निदर्शनालङ्काररीत्या 'तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्' इतिवत्। विष्णुपक्षे जननमस्यास्तीति जननी जीवः, जननिनां जीवानां वाक् वचनं, तासां जननिवाचां मध्ये इयं स्तुतिः, त्वदीयाभिरेव वाग्भिः अन्तर्यामितया त्वयैव निर्मिता, मन्मुखान्निःसरणमात्रमेवैतस्या इत्यर्थः। जननीति पूर्ववत् विष्णुपक्षे संबोधनं वा ॥ १०० ॥

अथ मदीयमवलोक्य ततो हि सम्यगर्थान्तरं समधिगम्य विनिन्द्यमेतत्।
अत्यन्तदुर्गमतरे पथि संचरन्तः श्लाघ्या भवन्ति कवयः पुरतः प्रयाताः ॥

भेदो न ते जननि जातु जनार्दनेन वैकुण्ठनाथरतापि कुतोऽत्र तेन ।
मातर्भवानि करवाणि तथापि काकुं मा कुण्ठितोऽस्तु मयि ते करुणाकटाक्षः ॥

इति श्रीमहाभागवतश्रीनरसिंहस्वामिकृतं शक्तिविष्णुपरकं श्रीसौन्दर्यलहरीभाष्यं समाप्तम् ॥

## आनन्दलहरीटीका

प्रदीपेति। हे वाचां जननि मातृकास्वरूपे त्वदीयाभिरेव वाग्भिः तदेयं स्तुतिः यथा प्रदीपस्य ज्वालाभिः कान्तिभिः रात्रौ सूर्येणैव निहिताभिः दिवसकरस्य सूर्यस्य नीराजनं निर्मञ्छनं, यथा वा सुधाया अमृतस्य सूतिरुत्पत्तिर्यस्मात्तस्य चन्द्रस्य चन्द्रोपलजललवैः चन्द्ररश्मिसंयोगाज्जातैः चन्द्रकान्तमणिप्रस्यन्दजलकणैः अर्घ्यस्य घटना विधानं, यथा स्वकीयैः समुद्रसंबन्धिभिर्जलैः सलिलनिधेः समुद्रस्य सौहित्यकरणं तर्पणविधानं तद्वत्। एतत्स्थलत्रये यथा, त्वदीयैरेव स्तुतिभिस्त्वदाराधनं क्रियते तथा। त्वदीयवाग्भिः स्तवनमनन्यगतिकत्वादिति भावः। सौहित्यं तर्पणं तृप्तिरित्यमरः॥ १००॥

मातः शिवे शिवविरिञ्चिहरिस्वरूपे दीने कृपामयि मयि प्रणते प्रसीद ।
दुष्टं मदुक्तमपि ते चरणारविन्दविन्यस्तमस्तु सुधियां हृदये विशुद्धम् ॥

अतीवासौ दुर्गा दुरयणगभीराशयवती निगूढार्थग्राहा गुरुतररसानन्दलहरी ।
अनायासेनास्यां यदि हृदि रुचिः पारगमने तदा धार्या धीरैरलघुपदटीकातरिरियम् ॥

यो नानाविधशास्त्रतर्कनिपुणः चक्रे निबन्धान्बहून्
पूजां भूरि महीभुजां सदसि यो लेभेऽतिधीमान्कविः ।
यो गौडोत्तरदेशदिग्गज इह श्रीसार्वभौमो महान्
भट्टाचार्य इमां स एष विदधे टीकां मुदे वाग्विदाम् ॥

इति श्री गौडीयराढान्वयसच्छ्रोत्रियवंशजगौरीकान्तसार्वभौमभट्टाचार्यविरचिता
आनन्दलहरी नाम टीका संपूर्णा ॥

# अनुबन्धः।

[त्रयः श्लोका अधिकतयोपलभ्यन्ते कासुचित् व्याख्यामातृकासु तद्व्याख्यात-व्याख्याता, लक्ष्मीधरादिभिः केश्चित् अव्याख्याताश्च। लक्ष्मीधराचार्याः तेषां भगवत्पादकर्तृकत्वं नाभ्युपयन्ति। तथापि प्रामाणिकैरन्यैर्व्याख्यातत्वात्, भगवत्पाद-कर्तृकत्वेनाभिमतत्वाच्च, ते श्लोका अत्रोपलब्धाभिर्व्याख्याभिः सह प्रकाश्यन्ते॥]

समानीतः [1]पद्भ्यां [2]मणिमुकुरतामम्बरमणिः
भया[3]दस्यान्तः स्तिमितकिरणश्रेणिमसृणः[4]।
दधाति [5]त्वद्वक्त्रप्रतिफलनमश्रान्तविकचं
निरातङ्कं चन्द्रान्निजहृदयपङ्केरुहमिव[6] ॥१०१॥

ஸமாநீத: பத்மாம் மணிமுகுரதாமம்பரமணி:
1 18 1 1 3
பயாதஸ்யாந்த: ஸ்திமித கிரணச்ரேணி மஸ்ருண: ।
4 3 1 1 1 1
ததாதி த்வத்வக்த்ரப்ரதிபலனமச்ராந்த விகசம்
34 1 1 3 11 1 12 1 11
நிராதங்கம் சந்த்ராந் நிஜஹ்ருதய பங்கேருஹமிவ ॥
1 1 1 3 3 1 1

## सौभाग्यवर्धनी

श्रीभगवत्याः वदनप्रतिबिम्बमहिमानं प्रस्तौति—समानीत इति। मणिमुकुरतां पद्भ्यां मणिमयादर्शरूपां लक्ष्मीं शोभां, समानीतः प्राप्तः अम्बरमणिः, अस्य भयात् अन्तः-स्तिमितकिरणश्रेणिमसृणः, स्वकिरणसंपर्कात् जगदम्बिकावदनस्य ग्लानिर्भविष्यतीति भयात् अन्तः संकुचितकिरणश्रेणिभिः, मसृणः चिक्कणः सन्, त्वद्वक्त्रप्रतिफलनं दधाति। किमिव? अश्रान्तविकचं अनवरतविकस्वरं चन्द्रान्निरातङ्कं, अम्लानं निजहृदयपङ्केरुहमिव, दर्पणीभूते दिनमणौ तव वदनं प्रतिबिम्बितं तस्य हृदयकमलायत इति भावः। समानीतः पद्भ्यां इति क्वचित्पाठः। तव चरणाभ्यां मुकुरतां समानीतः। तादर्थ्ये चतुर्थी। तव चरणार्थं मुकुरतां प्राप्त इत्यर्थः। तव चरणप्रतिफलनयोग्योऽयं, वदनप्रतिबिम्बधारणे का शक्तिरस्य? तथापि तव चरणकरुणया वदनप्रतिबिम्बं दधातीति भावः॥१०१॥

---

1 पद्भ्यां 2 पद्मामणि 3 दस्य स्निग्धस्तिमित, दास्यस्यान्तःस्तिमित 4 मसृणं
5 त्वद्वक्त्रं प्रतिफलितविश्रान्ति 6 भुवः।

आनन्दगिरीया

समानीत इति आदर्शवर्णना। हे मातः, तव चरणयोर्महिमा, किं वाच्यः? अतोऽयं अंबरमणिः सूर्यः तव पद्भ्यां स्वप्रतिबिम्बार्थं मणिमुकुरतां समानीतः प्रापितः, त्वद्वदनप्रतिफलनव्याजेन त्वद्वदनं दधातीत्यर्थः। दैत्यव्यामोहनाय यदा त्रैलोक्यव्यापकं शरीरमङ्गीकृतं, तदा नखाग्रे आदर्शाकारेण सूर्यः स्थित इति, स एव किमयमादर्शाकारेण स्थित इति। यस्तव चरणयोः जघन्यावयवयोः एवं प्रतिबिम्बधारणे योग्यः, तस्यान्याष्टाङ्गभूषणवदनप्रतिबिम्बधारणे कोऽधिकारः का वा शक्तिः। तथापि तव चरणसंपर्कस्य अयं महिमा यत् त्वच्चरणमात्रं सेवमानोऽपि परमोच्चपदवीं प्रापितः, चरणयोग्योऽपि वदनयोग्यो जातः। विरोधाभासोऽपि। यः पद्योग्यः स वदनयोग्यः कथमिति। समानीतः पद्भ्यामिति क्वचित्पाठः। तदा तु आदर्श एव वर्ण्यते। हे मातः अयमादर्शो भवतीमणिमुकुरतां पद्भ्यां शोभां समानीतोऽम्बरमणिः। किमम्बरमणिरेवादर्शरूपतां प्राप्य त्वद्वक्त्रप्रतिफलनं दधाति। ननु अंबरमणेः खरतरकिरणावलीजाज्वल्यमानमण्डलतया कथं त्वद्बिम्बनिधानमासादयेत्। अत आह—भयादस्यान्तःस्तिमित किरणश्रेणिमसृणः, अस्य वदनस्य भयात् अन्तःस्तिमिता स्थापिता स्नेहप्रधाना शीतलकिरणश्रेणिः, तया मसृणतया भासुरः। मम खरतरमण्डलसंपर्कात् परमेश्वरीवदनस्य परममधुरकोमलकान्तिमतो मा कश्चिदपराधो भूदिति भयात् विनयख्यापनं कृतं यत्किञ्चित् कृतमभयम्। तस्मात् हिमकरकादिवदन्तःप्रविष्टपार्थिवावयवस्पर्शाभिभूतेषु स्पर्शः, अत एव स्निग्धो भासुरो जातः। अन्तर्हृदयमध्ये बहिश्च सौम्यो जात इत्यर्थः। क्वचित् भयादास्यस्यान्तःस्तिमितकिरणश्रेणिमसृण इति पाठः। एतत्पाठकल्पने स्निग्धमसृणपदयोः पुनरुक्तं बीजमुत्प्रेक्षते निजहृदयकमलमिव। इदं वक्त्रं हृदयकमलमिवेत्युत्प्रेक्षा। यथा स्वकीयं हृदयकमलमन्तर्दधाति तथेदमपीत्युपमा वा रूपकमिति। किंलक्षणं हृदयपंकेरुहं वक्त्रपंकेरुहं वा। अश्रान्तविकचम्। तदपि कुतः, यतश्चन्द्रान्निरातङ्कम्। न हि परमेश्वरीमुखकमलस्य सूर्यहृदयकमलस्य च चन्द्रादातङ्कयोग्यता। एतावता सूर्येण स्वहृदयं परमेश्वरीमुखकमलध्यानाय प्रयुक्तम्। तद्ध्यानाभ्यासरसवशं तदाकारं भूत्वा पूर्वोत्तरान्तमणिरितीच्छतीत्युक्तम्। समानीतेति पद्यस्य रहस्यार्थः—समानीतेति, पद्भ्यां आद्यन्तकूटाभ्यां, अंबरमणिः कामराजकूटम्। मणिमुकुरतां मणिरेव तेजोनिवहाश्रयं सुहुनिजयाः। वह्निशशिलपकूटता मुकुरता, निजमणिमुकुरहृदयदीपं च तस्यालम्बनता, तथा प्रातः काले कूटत्रयध्याने अस्य कूटद्वयस्य तथा स्तिमितं स्थगितं च किरणं तस्य श्रेणी तेन मसृणं भास्वरं प्रकाशः, भयात् संकोचात् संकीर्णस्थले यथा स्वजः तद्वान् त्वद्वक्त्रप्रतिफलनं वाग्विलासार्थंवद्यथा तथा सहजविकासचन्द्रात्प्रबोधचन्द्रो निजहृदये पङ्केरुहमिव

निजन्मार्थपङ्केरुहमिव निजान्मार्था पङ्केरुहमिव एवेति यावत्। एतादृशः ताभ्यां धृत इत्यर्थः। यच्छुतम्॥ १०१॥

तात्पर्यदीपिनी

समानीत इति। हे जननि, त्वद्वक्त्रं स्निग्धस्तिमितकिरणश्रेणिमसृणं दधाति। स्निग्धा अरूक्षाः स्तिमिता ये किरणास्तेषां श्रेणिः परम्परा सैव मसृणं तदात्मकविच्छुरणं दधाति धत्ते। कथंभूतं वक्त्रं चन्द्रात् चन्द्रमसो निरातङ्कं निर्गत आतङ्क उपमाशङ्का यस्य तत्तथा, चन्द्रेणोपमारहितमित्यर्थः। तत्र हेतुमाह—कीदृशाच्चन्द्रात् निजहृदयपङ्केरुहभुवः निजहृदयमेव पङ्केरुहं कमलं तस्माद्भूः उत्पत्तिर्यस्य तस्मात् यः स्वहृदयकमलात् जातः न तेन स्वोपमानं युज्यते। ननु भानुवत्तेजस्वी भवतीति, नेत्याह—अंबरमणिः रविः पद्मासमाक्रान्तत्वात् मणिमुकुरतां मणिप्रधानो मुकुरः तस्य भावस्तत्ता, तां रत्नादर्शपदवीमानीतः। यस्तु पद्मासमाक्रान्तः स कथं वदनसाम्यं भजेदिति भावः। अतो निरुपमं त्वद्वदनमित्याह—पुनर्भयादस्याम्बरमणिः प्रतिफलितविश्रान्तिविकचं प्रतिफलितस्य प्रतिबिम्बस्य या विश्रान्तिः स्तुतिः तया विकचं सोल्लासम्। अयमाशयः—यत्पतितं भवति तदनुप्रवेशं करोति आश्रयमन्तरा नास्य जीवनमिति। यद्यपि वदनस्य चन्द्रोपमास्ति, न सूर्योपमा, तदपि शुम्भादिदैत्यमर्दनसमये रोषात्करालतां वदनस्याहुराचार्याः। भक्तादिवरदानसमये सोमोपमा भवतीति अवस्थाद्वयस्य निरूपितत्वादिति भावः॥ १०१॥

समुद्भूतस्थूलस्तनभरमुरश्चारुहसितं
कटाक्षे कन्दर्पाः[1] कतिचन कदम्बद्युति वपुः।
हरस्य[2] त्वद्भ्रान्तिं मनसि जनयन्ति[3] स्म विमलाः
[4]भवत्या ये भक्ताः परिणतिरमीषामियमुमे॥ १०२॥

ஸமுத்பூதஸ்தூலஸ்தநபரமுரச் சாரு ஹஸிதம்
3 4 1 2 1 4 1 1
கடாக்ஷே கந்தர்பா: கதிசந கதம்பத்யுதி வபு: ।
11 1 3 1 1 1 1 1 3 3 3 1 1
ஹரஸ்ய த்வத்ப்ராந்திம் மநஸி ஜநயந்தி ஸ்ம விமலா:
1 3 4 1 1
பவத்யா யே பக்தா: பரிணதிரமீஷாமியமுமே ॥
4 1 4 1 1 1 1

1 कटाक्षव्याक्षेपः, 2 हरस्य त्वद्भ्रान्ति 3 जनयामास मदनो, जनयन्तः समतुलां, जनयन्तः सुवदने 4 भवत्याम्।

सौभाग्यवर्धनी

अथ श्रीदेव्युपासनायाः सारूप्यफलमाह—समुद्भूतेति। हे उमे! भवत्या ये भक्ताः विमलाः मनोवाक्कायकर्मभिः भवच्चरणोपासनपराः दम्भादिदोषरहिताः, एतेषामियं परिणतिः उपासनायाः परिणामः। सा का? समुद्भूतस्थूलस्तनभरं उरः, चारु हसितं, कटाक्षे कन्दर्पाः कटाक्षविक्षेपेण बहव उज्जीविता भवन्तीति भावः। कदम्बद्युति वपुः, रोमाञ्चकञ्चुकितं वपुः, महादेवालोकनसमुद्भूतसात्त्विकभाव इति रहस्यम्। मनसि त्वद्भ्रान्ति जनयन्ति। एवंरूपा परिणतिर्भवति। त्वत्सारूप्यं प्राप्य तवैव सन्निधौ सख्य इव वर्तमानाः त्वमिव महादेवस्य मनसि भान्ति। अनेन पूर्वोक्ताया भावनायाः फलमहिमा प्रतिपादितः। अत्र भ्रान्तिमानलङ्कारः॥ १०१॥

आनन्दगिरीया

समुद्भूतेति। हे परमेश्वरि उमे ये भवत्या भक्ताः, तेषामियं परिणतिः परिणामः उपासनायाः फलमित्यर्थः। किंलक्षणास्ते—विमलाः विगतोऽपूर्वरूपो मलो येषां ते, अथवा दम्भविरहिताः। त्वां कामयतो हरस्य मनसि त्वद्भ्रान्ति जनयन्ति, इयं किमु पार्वती इति द्विकोटिकसंशयरूपां भ्रान्तिमुत्पादयन्ति। त्वत्सारूप्यप्राप्त्या त्वमिव भासते इयमित्यर्थः। अथ त्वद्भक्तानामपूर्वो महिमा... प्रमातारं श्रीमहादेवमपि व्यामोहयतीति। भ्रमे तु संस्कारसादृश्यविशेषदर्शनानि त्रिकारणानि। तत्र संस्कारस्तु फलैकोन्नेयः। विमलाः, अनेन प्राचीनासाधारणरूपमलपरित्यागाद्विशेषदर्शनम् सादृश्यमाह—यदुरः समुद्भूतस्थूलस्तनभरं, हसितं चारु, कटाक्षविक्षेपवशादनेके कन्दर्पा उज्जीविताः, एवं अनेके च उत्पद्यन्ते। वपुः कदम्बद्युति कदम्बकुसुमवद्धजूटकं परमप्रियतमश्रीमहादेवदर्शनाभिजातहर्षवशेन प्रादुर्भूतरोमाञ्चरूपसात्त्विकभावम्। एतैर्विशेषणैः त्वच्छरीरसादृश्यम्। तान्दृष्ट्वा महादेवोऽपि त्वामिव दृष्ट्वा मनसि सन्तोषमुल्लासयति। इत्युपासनायाः फलम्॥ १०२॥

तात्पर्यदीपिनी

समुद्भूतेति—हे भगवति, त्वदाकारमेव ये निजाकारं भावयन्ति, ते खलु भ्रमरकीटन्यायेन त्वत्समाना विराजमानाः त्रिभुवनमोहकारिणो भवन्ति इति प्रतिपादयति। ये भवत्यां त्वद्विषये भक्ता भवन्ति तेषां त्वद्ध्यानसंपत्त्या त्वदाकारमापन्नानां परिणतिर्जायते। मुक्तपूर्वावस्थस्यावस्थान्तरगमनं परिणतिस्तामेवाह—कथंभूता भक्ताः, हरस्य शम्भोश्चेतसि मनसि समतुलां समाना तुला साम्यं यस्याः सा तां त्वद्भ्रान्ति त्वमिति भ्रान्ति जनयन्तः संपादयन्तः, महादेवोऽपि त्वद्भक्तांस्त्वदाकारान् दृष्ट्वा विषमशरविह्वलाशयो भवति। तदैव

विवृणोति, यथा तव उरो वक्षः समुद्भूतस्थूलस्तनभरं, समुद्भूतः अत्युत्तुङ्गतयोद्भूतः स्थूलः परिणाहवान् स्तनभरः कुचभरो यस्मिन् तदेतादृशं तथा तेषामपि भवति। हसितं स्मितं चारु अतिमनोहरं तथा तेषामपि। पुनः यथा तव कटाक्षेऽपाङ्गप्रदेशे कन्दर्पाः कं दर्पयन्ति कामातुरं कुर्वन्ति ते कन्दर्पाः, कतिचन भवदेकभावनया क्षणादेव कामकोटिस्रष्टारो भवन्ति तथा तेषामपि। पुनर्यथा तव वपुः शरीरं कदम्बद्युति कदम्बस्य पाटलकदम्बस्य द्युतिर्यस्य तत्। यथा भवत्याः पाटलवर्णं वपुस्तथा तेषामपि। तदेवंभूतास्ते भक्ता भवन्ति। स खलु ध्यानजनितः परिणाममहिमा। उशब्दवाच्यस्य महादेवस्याष्टभिर्मूर्तिभिः समस्तजगद्व्यापकस्य सर्वत्र वर्तमाना मा लक्ष्मीः उमाशब्दार्थः ॥ १०२ ॥

## पदार्थचन्द्रिका

ननु कथं भवानीध्यानेन ब्रह्मसंपत्तिरित्याशङ्क्य, भवानी ब्रह्मैव, स्त्रीत्वप्रतीतिस्तत्र भ्रान्तिरिति इममर्थं हरदृष्टान्तेन दर्शयन् ध्यातृभेदेन भुक्तिमुक्तिदातृत्वेन भवानीं स्तौति — समुद्भूतेति। भवत्या लब्धशक्तिको मदनः हरस्य त्वद्भ्रान्ति त्वद्विषयभ्रमं जनयामासेत्यन्वयः। भ्रान्तिमेव दर्शयति समुद्भूतेत्यादिना। कटाक्षः कन्दर्पः कन्दर्पवन्मनोहारित्वं। महादेवदर्शनेन रोमाञ्चोद्गमेन कुसुमितकदम्बस्येव द्युतिर्यस्य तद्वपुः। हे उमे भवत्या ये भक्ताः तेषामियं स्त्रीप्रधानविषया स्त्रीस्वरूपा परिणतिः परिणामः फलं त्वद्भक्तेरित्यर्थः। अयं भावः। ब्रह्मरूपाया भवान्याः स्त्रीरूपतया ये ध्यानं कुर्वन्ति ते भुक्तिं लभन्ते। ये तु सजातीयविजातीयस्वगतभेदशून्यं ब्रह्मैव भवानीति ध्यायन्ति ते मुक्तिं लभन्त इति 'सैषा प्रसन्ना वरदा नृणां भवति मुक्तये' इत्येवमादिपुराणवाक्यसमूहादवगन्तव्यम् ॥ १०२ ॥

## डिण्डिमभाष्यम्

पूर्वश्लोके (स्वदेहोद्भूताभिः इति श्लोके) भगवत्याः सैवाहं इति भावनया सर्वदेवोत्तमस्य महादेवस्यापि समृद्धिं तृणीकृत्य बहुकल्पकालव्यापिनश्चिरायुषः भवन्ति इत्युक्तम्। तस्यैवार्थस्य काचन विशकलोच्यते। हे भगवति! त्वदाकारमेव निजाकारं भावयन्ति खलु, भ्रमरकीटकन्यायेन त्वत्समानाकारा एव जायमानाः त्रिभुवनमोहनकारिणः भवन्तीति अमुं अर्थं प्रतिपादयति — भगवत्यां ये भक्ताः भवन्ति तेषां खलु ध्यानसम्प्रदायवत्त्वात् तदाकारमापन्नानाममीषामियमेव परिणतिः परिणामो जायते। मुक्तपूर्वावस्थस्य अवस्थान्तरगमनं परिणामः। तामेव परिणतिमाह — समुद्भूतस्थूलस्तनभरमत्यन्तोत्तुङ्गतया उद्गतेन स्थूलेन परिणाहवता कुचभरेण युक्तं भगवत्युरो वक्षःस्थलं, उरो वत्सं च वक्षश्च इत्यमरः। हसितं स्मितं चारु अतिमनोहरं भवति। कटाक्षे अपाङ्गप्रदेशे, कन्दर्पाः — कं ब्रह्माणं दर्पयति कामातुरं

करोतीति कन्दर्पः, ब्रह्मणः कामातुरीकरणं कथमिति चेत् उच्यते—पूर्वं खलु जगत्त्रयकंटकौ सुन्दोपसुन्दनामानौ महासुरौ जातौ। तयोः वरप्राप्तिः ब्रह्मणः सकाशादीदृशी, सर्वैरप्यावामवध्यौ भवावः अन्योन्यवधहेतू इति। तदर्थं देवाः ब्रह्मणः स्थानं गत्वा सुन्दोपसुन्दयोरास्कन्दनमुक्तवन्तः। ब्रह्मा तत्क्षणं गत्वा सर्वेषु लोकेषु समस्तसुन्दरीभ्यः तिलशः तिलशः लावण्यांशं आदाय तिलोत्तमानाम्नीं अप्सरसं सृष्ट्वा मदनातुरो जात इति पुराणकथाप्रामाण्यात् कन्दर्पसंज्ञा कामस्य। कतिचनशब्देन भगवदेकभावनया क्षणादेव कामकोटिस्रष्टारो भवन्ति इत्युक्तं भवति। कदम्बद्युति वपुः—कदम्बस्य पाटलकदम्बस्य द्युतिरिव द्युतिर्यस्य तत् कदम्बद्युति, भगवत्याः यथा पाटलवर्णं तेषामपि, अत एव हरस्य महादेवस्य तुलां समां तां त्वद्भ्रान्ति त्वमिति भ्रान्ति जनयन्तः संपादयन्तः। महादेवोऽपि त्वद्भक्तान् दृष्ट्वा त्वदाकारान् विषमशरविह्वलाशयो भवति यदेवंभूताः ते भक्ता भवन्ति। स खलु ध्यानजनितः परिणाममहिमा। उमाशब्देन उः महादेवः तस्य मा महालक्ष्मीरिति भगवती। अष्टमूर्तिभिः समस्तजगद्व्यापकस्य महादेवस्य सर्वत्र वर्तमाना लक्ष्मीः कदम्बरूपाया भगवत्या अंश एव इत्युक्तम्। इः कामः, उः महादेवः, ई लक्ष्मीः, ऊः चण्डिका इति वर्णनिघण्टुः। जननीशब्देन निरुपपदेन जगत्त्रयमातृत्वं, किं बहुना ब्रह्मविष्णुरुद्राणां मातृत्वं च प्रत्यपादि॥ १०२॥

### गोपालसुन्दरी

समुद्भूतेति। उमे, ये विमलाः पुरुषाः भवत्यां भक्ताः अमीषामुरः वक्षःस्थलं, समुद्भूतस्थूलस्तनभरं, समुद्गतः उत्तुङ्गतया उद्गतः स्थूलः परिणाहवान् स्तनभरः यत्र तत्। हसितं चारु मनोहरं। कटाक्षेऽपाङ्गप्रदेशे कतिचन कतिपये कन्दर्पाः कामाः, वपुः शरीरं कुसुमितकदम्बद्युति प्रफुल्लकदम्बाकारं रोमाञ्चयुक्तमित्यर्थः। इयं परिणतिः परिणामः, त्वद्भक्तास्त्वद्रूपा भवन्तीति भावः। अतो हरस्य शिवस्य मनसि चित्ते मदनः कन्दर्पस्त्वद्भ्रान्ति त्वद्भ्रमं जनयामास, स्मरहरोऽपि त्वद्भक्तान् त्वदाकारान् दृष्ट्वा विषमशरविह्वलाङ्गीभवतीति भावः। विष्णुपक्षे—भवति त्वयि श्रां स्मरणे भवत्यां कीदृशे? उमे उत्कृष्टा मा प्रमा तत्त्वज्ञानरूपा यस्मात्तस्मिन्। उत्कृष्टप्रमाजनकस्यापि शिवमनसि भ्रमजनकत्वेन विरोधालङ्कारः। अमीषां भक्तानामुरो वक्षःस्थलं स्थूलस्तनस्य भरो भारो यस्यासौ स्थूलस्तनभरः कौस्तुभः, समुद्भूतं व्यक्तं स्थूलस्तनभरं कौस्तुभं यत्र समुद्भूतस्थूलस्तनभरं, यद्वा समुद्भूतः स्थूलोऽतिशयितः स्तनशब्दख्यातरूपो यस्यासौ समुद्भूतस्थूलस्तनः श्रीवत्साङ्कस्तं बिभर्तीति समुद्भूतस्थूलस्तनभरमित्यर्थः। शेषं समानम्॥ १०२॥

आनन्दलहरीटीका

समुद्भूतेति। हे उमे ये पुरुषाः भगवत्या भक्ता अमीषां इयं परिणतिः परिणामः। केत्याह – उरो वक्षः समुद्भूतौ सम्यगुन्नततया जातौ स्थूलौ विशालौ यौ स्तनौ तयोर्भरो गुरुत्वं, यत्र तथाविधम्। हसितं हास्यं चारु मनोहरं, कटाक्षविषये कतिचन असंख्याताः कन्दर्पाः कामाः। वपुः शरीरं कदम्बस्य नीपपुष्पस्येव द्युतिः शोभा यस्य तत् तथा पुलकितत्वात्। अत एव मदनो हरस्य त्वद्भ्रान्ति त्वमिति भ्रमं तेषु जनयामास। शिवोऽपि तान्दृष्ट्वा कामवशो भवतीति भावः। जनयामास मदनः इत्यत्र जनयन्तः सुवदने इति क्वचित्पाठः सुगमः॥

निधे [1]नित्यस्मेरे निरवधिगुणे नीतिनिपुणे
निरा[2]घाटज्ञाने [3]नियमपराचित्तैकनिलये।
नियत्या निर्मुक्ते निखिलनिगमान्तस्तुत[4]पदे
निरातङ्के नित्ये [5]निगमय ममापि स्तुतिमिमाम्॥ १०३॥

நிதே நித்யஸ்மேரே நிரவதிகுணே நீதிநிபுணே
4 1 4 3 1 1

நிராகாடஜ்ஞானே நியமபர சித்தைக நிலயே।
4 1 1 1 1 1 1

நியத்யா நிர்முக்தே நிகில நிகமாந்த ஸ்துதபதே
1 · 1 1 2 3 1 1 1 1 3

நிராதங்கே நித்யே நிகமய மமாபி ஸ்துதிமிமாம்॥
1 1 1 3 1 1 1

सौभाग्यवर्धनी

स्वकृतस्तुतिं निगमयति – निधे इति। निधीयते जगदस्यामिति निधिः, हे निधे जगदाधारभूते। तथा च मार्कण्डेये – 'आधारभूता जगतस्त्वमेका' इति। नित्यस्मेरे, सर्वदानन्दनिर्भरोन्मेषलसद्वदने। ननु जगदाधारभूता इति पूर्वं प्रतिपादितम्। अधुना नित्यस्मेरे इत्युच्यते। स्मेरता शरीरधर्मः, जगदाधारभूता शक्तिरशरीरा। अत्र पूर्वोत्तर-संबोधनयोः परस्परं विरोध इत्यत आह– निरवधिगुण इति। निरवधिगुणे, निरवधयः असंख्यातशक्तिविलासाः गुणाः यस्या भक्तानुग्रहशरीरायाः। स्मेरा अचिन्त्यरूपा आधारशक्तिः अशरीरेति न विरोधः। यदि भक्तानुग्रहाय शरीरपरिग्रहः, तर्हि भक्तेषु तारतम्यं कुतः? कश्चिद्राजा, कश्चित्प्रभुः, कश्चिद्दरिद्रः, कश्चिद्विरक्त इत्यत आह – नीतिनिपुणे इति।

---

1 नित्यं 2 घात 3 नियतपरिवित्तैकनिलये 4 स्तुति 5 निशमय

नीतिनिपुणे, नीतौ निपुणा। यादृशो यस्यानुग्रह उचितः अनाद्यविद्यासंवलिततत्कर्मानुबद्धः, तादृगनुग्रहः। तर्हि कर्मपारतन्त्र्यं भगवत्याः, न तु स्वातन्त्र्यमिति अस्मदादिवत् सा जाता इत्यत्राह– निराघाटज्ञान इति। आघाट इयत्तापरिमाणघटना, निराघाटोऽखण्डः, तादृश- संविदुल्लासरूपे, अस्याः सान्निध्यवशात् तत्तच्छक्तिसमवायेन तत्तत्कर्मानुग्रहो भवतीत्यर्थः। एतादृशी कथमुपास्या भवति, ध्यानादिभिराकलयितुमयोग्यत्वादित्यत आह– नियमेति। नियमपरचित्तैकनिलये, ये जपपूजाध्यानादिनियमैरुपासते, तेषां चित्तैकनिलये, तेषां चित्ते आविर्भूय प्रकाशत इत्यर्थः॥

तर्हि भगवत्या नियमपरचित्तैकनिलयप्रकाशमानता नान्यत्रेति नियतिपरतन्त्रता जाता इत्यत आह– नियत्येति। नियत्या निर्मुक्ते, लीलया नियमपरचित्ते प्रकाशते, न तु नियति- परतन्त्रतया। यथा कल्पद्रुमः सर्वसाधारणोऽपि सेवापराणां फलदाता, नान्येषां, यथा वा सूर्यो जलादौ निर्मले वस्तुनि प्रतिबिम्बते, नान्यत्र, तेन न सूर्यस्य नियतिपारतन्त्र्यं, तथेति भावः। एतस्या देवतायाः सद्भावे किं प्रमाणमित्यत आह– निखिलेति। निखिलनिगमान्त- स्तुतपदे, निगमान्ता वेदान्ताः उपनिषदः, ताभिरुपलक्षितपदे, उपनिषदः प्रमाणमित्यर्थः। केन प्रकारेण स्तुतपदा, तमेव प्रकारमाह–निरातङ्के इति। निरातङ्के नित्ये। तथा च श्रुतिः। 'अभयमक्षरममितमनण्वस्थूलमविकारं केवलं चिन्मात्रमयं ब्रह्म' इति। एवंप्रकारेण स्तुते इति। निगमय ममापि स्तुतिमिमां, निगमय निगमीकुरु। तत्करोतीत्यर्थे णिच्। वेदमिव सर्वसंप्रतिपन्नं कुरु। यथा वाल्मीकिव्यासादीनां वाचः स्मृतिपुराणेतिहासादयः निगमवत् सर्व- संप्रतिपन्नास्त्वया कृताः, तथा ममापीयं स्तुतिः, निगमीक्रियतामित्यर्थः। तथा च कौर्मे भगवत्या वचनं हिमवन्तं प्रति– 'वेदरूपा परा शक्तिः मम लोके प्रवर्तते। तयादिष्टानि कर्माणि कुर्वन्ति सुरसत्तमाः॥ देवर्षयो राजर्षयो व्यासादिमुनयस्तथा। तैः प्रणीतानि सर्वाणि कल्पसूत्रमुखानि वै। धर्मशास्त्रपुराणानि सेतिहासस्मृतीनि च। ज्ञेयानि वेदवत्तानि नात्र कार्या विचारणा'॥ इति। अत्र बहुकारणेषु एकक्रियायोगान्मालादीपकालङ्कारः॥ १०३॥

### अरुणामोदिनी

एवं भगवतीं स्तुत्वा स्तुतेः प्रमाणीकरणं प्रार्थयते– निधे इति। निधीयते सर्वं जगदस्यां उपादानत्वादिति निधिः। भक्तानां शेवधिर्वा। तस्याः संबुद्धिः, हे निधे! सर्वजगदाधारभूते सकलेष्टार्थप्रदे च। 'आधारभूता जगतस्त्वमेका' इति मार्कण्डेये। तद्येवं चेदं, 'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यां' इति श्रुतेः ब्रह्मादिसाधारण्यमेव स्यादित्यत्राह–नित्यस्मेरे इति। नित्योऽविनाशी स्मेरः प्रकाशो यस्याः

सा नित्यस्मेरा अविनाशिप्रकाशा तस्याः संबुद्धिः, हे नित्यस्मेरे। ब्रह्मादीनां तत्र तत्र स्मृतिषु जन्यत्वश्रवणात्, भवदुपासनालब्धवैभवत्वाच्च, न नित्यप्रकाशित्वरूपं देवत्वमिति भावः। एवं तर्हि भवदनुग्रहात् शिवस्य नित्यप्रकाशलाभात् तत्साधारण्यं स्यादित्यत्राह– निरवधिगुण इति। निरवधयोऽवधिरहिताः इयत्तापरिमाणरहिता गुणाः, दयादाक्षिण्यादयः, शिवस्य त्रिपुरसंहारादिकालेषु शक्तिप्रदानानुग्रहकारिणो यस्याः सा निरवधिगुणा, शिवस्यानुग्रहकारिणी तस्याः संबुद्धिः हे निरवधिगुणे, 'परोऽपि शक्तिरहितः शक्तः कर्तुं न किञ्चन।' इति न्यायादिति भावः। यद्वा, निरवधयोऽवधिरहिताः अनन्तगुणाः उपासकानामिष्टार्थप्रदानाय कल्पितानि रूपाणि यस्याः सा, 'उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना। रूपस्थानां देवतानां पुंस्त्र्यङ्गास्त्रादिकल्पना।' इति स्मृतेरिति भावः। ननूपासितानां विष्ण्वादिमूर्तीनामेव इष्टार्थदातृत्वात्, किमनेनेति न वाच्यम्। विष्ण्वादिरूपेण सर्वत्र तत्तदुपासकानामीश्वरस्यैवेष्टार्थदातृत्वात्। उक्तं हि गीतासु–'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति। तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्। स तया श्रद्धया युक्तस्तस्या राधनमीहते। लभते च ततः कामान् मयैव विहितान् हि तान्'। इति। बादरायणोऽपि सूत्रयामास फलमतः उपपत्तेरिति। ननु ब्रह्मादिरूपेणेयमेव इष्टार्थदात्री चेत्, कोऽयमुपासकेषु तारतम्यभावः, अत आह– नीतिनिपुणे इति। नीतौ यथार्हं तत्तदुपासकानां केवलानां तरतमभावसहितानां च इष्टार्थप्रदाने निपुणे! नैपुण्यवति सर्वेषामपि देवी इष्टार्थदानपरायणैव। एकत्र तदसमृद्धिः, समृद्धिरन्यत्र, समृद्ध्यसमृद्धी चोपासनायां वैकल्याभाववैकल्याभ्यामेवेति भावः। यद्वा नीतिरिति लुप्तमध्यमकारोऽयं धर्माधर्मवाची नियतिशब्दः। नियती धर्माधर्मावनुसृत्य निपुणे जगत्सर्जनपरायणे। अत एव सुखदुःखादिवैचित्र्ययुक्तजगत्सर्जने, न वैषम्यनैर्घृण्यदोषापत्तिर्देव्या इति भावः। अत एवोक्तं गीतासु–'न मे द्वेष्योऽस्ति न प्रियः।' इति। बादरायणोऽपि सूत्रयामास, 'वैषम्यनैर्घृण्ये न, सापेक्षत्वात्, तथाहि दर्शयति' इति। एवं चेन्मुक्तजनतौल्यं स्यादित्यत आह– निराघाटज्ञान इति। निराघाटं निरर्गलं ज्ञानं यस्याः, तस्याः संबुद्धिः अखण्डसंविदुल्लासस्वरूपे, सर्वस्मिन्नपि वैषम्यनैर्घृण्याभावेन समदृष्टियुक्त इत्यर्थः। एवंविधा देवी कुत्र वा निवसतीत्यत्राह– नियमपरचित्तैकनिलये इति। नियमपराः, न श्रेयो नियमं विनेति न्यायात् जपपूजाध्यानादिनियमासक्ताः, तेषां चित्तान्येव एको मुख्यो निलयो यस्याः, तस्याः संबुद्धिः, हे नियमपरचित्तैकनिलये! 'भक्तहृद्गेहनिलया' इत्यष्टोत्तरशतनामोक्तिः। तर्हि नियमपारतन्त्र्यं स्यादित्यत आह नियत्या निर्मुक्त इति। नियमपारतन्त्र्यरहिते। किन्तु भक्तानुग्रहाय तत्र प्रादुर्भूत इत्यर्थः। यद्वा नियत्या नियमेन निर्मुक्ते, यथा कल्पवृक्षकामधेनुप्रभृतीनां देवानामेवेष्टार्थप्रदाननियमः, तद्वत्तव समस्तजनवत्सलाया इष्टार्थदाने नियमो नास्तीत्यर्थः। एवंविधा देवी कुत्र प्रतिपाद्यते,

तत्सद्भावे च किं प्रमाणमित्याह – निखिलेत्यादि। निखिलैर्निगमान्तैः वेदान्तैः स्तुतं पदं स्थानं पदे अंघ्री वा, तस्याः संबुद्धिः, समस्तवेदान्तप्रतिपाद्य इत्यर्थः। अत एव निरातंके भयरहिते, 'अभयं वै ब्रह्म' इति श्रुतेरिति भावः। हे नित्ये! ध्रुवे! समस्तनित्यानामकदेवीस्वरूपे वा। हे देवि॥

यद्वा हे निधे दयासमुद्रे, नित्यस्मेरे निरन्तरहासमुखतया भक्तयाच्ञादौर्मुख्यरहिते, निरवधिगुणे अनन्तदयादाक्षिण्यादिगुणयुक्ते नीतिनिपुणे न्यायमार्गवर्तिजनानुरागवर्तिनि, निराघाटज्ञाने विज्ञातभक्तजनचित्ते, विज्ञाय च नियमपरचित्तैकनिलये, यो नियमपरो भवत्यस्मादृशः तच्चित्ते नित्यशास्तव्ये, स्थित्वा च नियत्या निर्मुक्ते अपरिमितेष्टार्थदायिनि, निखिलनिगमान्तस्तुतपदे समस्तनिगमागमसंप्रतिपाद्ये। नित्ये! देवि! मम अत्यन्तं भवतीं भजत आत्मनः, इमां भवतीमधिकृत्य कृतां स्तुतिमपि स्तोत्रमपि अतिविशदृशीमपीत्यर्थः। निगमय निगमीकुरु भगवत्या निगमप्रतिपाद्यत्वात्, भवत्प्रतिपादकेनानेन ग्रन्थेन निगमीभावितावश्यम्भावात् अस्माननुगृह्य इमां स्तुतिमपि भवत्प्रतिपादकनिगमतुल्यां कुर्वित्यर्थः। यथा भवदनुग्रहसंपन्नकवितावतारव्यासवाल्मीकिकृतपुराणकाव्यादिप्रबन्धाः वेदवत् सर्वसंप्रतिपन्नाः कृताः, तथा भजतो ममापीमां स्तुतिं सर्वसंप्रतिपन्नां प्रमाणभूतां च विधेहीत्यभिसन्धिः। तथा चोक्तं कूर्मपुराणे हिमवन्तं प्रति भगवत्या – 'वेदरूपा परा शक्तिः मम लोके प्रवर्तते। तयादिष्टानि कर्माणि कुर्वन्ति सुरसत्तमाः। सुरर्षयो राजर्षयो व्यासादिमुनयस्तथा। तैः प्रणीतानि सर्वाणि कल्पसूत्रमुखानि च। धर्मशास्त्रपुराणानि सेतिहासस्मृतीनि च। ज्ञेयानि वेदवत्तानि नात्र कार्या विचारणा॥' इति। निगमयेत्यत्र तत्करोतीति णिच्। केचित्तु निगमय श्रवणपथं प्रापय अत्यादरेण सावधाना सती शृणु इति व्याचक्षते॥ १०३॥

आनन्दगिरीया

इमां मद्वचनद्वाराऽऽविर्भूतां स्वीयां स्तुतिं श्रुतिस्मृतीतिहासपुराणादिवत् प्रचरदवस्थां कुर्विति प्रार्थयते – निधे इति। हे निधे ममापीमां स्तुतिं निगमय पुराणादिवत् सर्ववन्द्यां सर्वादरणीयां कुरु। निधे शेवधिस्वरूपे। परमेश्वरी हि ब्रह्मणः शेवधिः। तथा च श्रुतिः 'विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मी'ति। ब्रह्मणा सर्वा विद्या अत्र निधीयन्ते इति ब्रह्मणः सर्वविद्यामञ्जूषिका त्वं तु सर्वविद्यानिधानभूता। यामेव विद्यां स्वेच्छया प्रकाशयसि सैव प्रकाशत इति विद्याप्रकाशे तव स्वातन्त्र्यमपीति भावः। अथवा निधे जगन्निधे सर्वाण्यपि जगन्ति प्रलये कारणात्मना यत्र निधीयन्ते। त्रिभुवनसत्तावस्थापादनभट्टारिके। ननु वेदादिविद्यानां शब्दब्रह्मरूपतया शापानुग्रहसामर्थ्यात्, तत्प्रतिभटत्वेनैव

अस्यां स्तुतौ प्रकाश्यमानायां तेभ्यो भयसंभावनायामाह-निरातङ्के। निर्गता आतङ्का यस्याः सा तत्संबोधनम्। तव कस्माद्भयं, त्वत्तोऽन्यत्किमपि नास्ति। तथा च श्रुतिः-द्वितीयाद्वै भयं भवतीति। न ते वेदा द्वितीयाः। सर्वा विद्यास्तवैव भेदाः। ताभ्यः का शङ्का। तदुक्तं 'विद्याः समस्तास्तव देवि भेदाः'। वाञ्छन्ति किञ्च वेदा अपि त्वामेव स्तुवन्तः स्वप्रकाशार्थं त्वन्मुखमेवालोकयन्तीति आह निखिलनिगमान्तस्तुतपदे-निखिलाश्च ते निगमान्ताश्च तैः स्तुते पदे चरणौ यस्याः सा तत्संबोधनम् उपनिषत्तात्पर्यरूपे। ननु ममापि काचन नियतिरूपा शक्तिः स्वतन्त्रा नियामिका वर्तते, सोमसूर्यादीनामिव। तथा च श्रुतिः- भीषास्माद्वातः पवते। भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चम इति अत आह-नियत्या निर्मुक्ते। नियत्याऽनियम्ये स्वतन्त्रे। इच्छानुरूपकार्यकर्तृत्वमेवान्तर्यामित्वम्। सर्वनियामिकायास्तव का नियतिः। अथवा अकारप्रश्लेषेण नियत्या अनिर्मुक्ते। नियतिभाग्यम्। अथवा सर्वसौभाग्य सुन्दरी मम स्तोत्रनिगमनेन कीर्तिसौभाग्यमप्यङ्गीकुर्वित्यर्थः॥

ननु सर्वान्तर्यामितया स्थितिनियमाभावात् सर्वत्र कथं स्तुतिर्निगमनीया, सर्वेषामयोग्यत्वात्। अत आह-नियमपरचित्तैकनिलये, सत्यं यद्यपि सर्वान्तर्यामिरूपा, तथापि तत्र व्याप्तिद्वयम्। प्रदीपवत्सामान्यव्याप्तिर्विशेषव्याप्तिश्च। तत्र सामान्यव्याप्त्या सर्वत्र वर्तमानत्वेऽपि विशेषव्याप्त्या तु वर्णकहृदयेष्वेव कृताधिवासा इत्याह-नियमपरचित्तैकनिलये। नियमाः शास्त्रोक्ताः, तत्पराणि यानि चित्तानि, तान्येवैकं निलयमवस्थानं यस्याः सा। यथा प्रदीपः प्रभारूपेण गृहोदरादि व्याप्नुवन्नपि, कलिकारूपेण तु दीपान्तरेव वर्तते तथा त्वमपीत्यर्थः। एवमवस्थानं संकोचवत्। संकोचो नास्तीत्याह-निराघातज्ञाने आघातः प्रतिबन्धः, तद्रहितज्ञाने। ननु ज्ञानस्याप्यसंकुचितत्वात् नियतिनियम्यत्वाभावाच्च परमेश्वर एकाकारं वा अन्यादृशमेव वा जगत् किमिति न करोति। तत्राह-नीतिनिपुणे तत्तत्प्राणिनां प्राचीनकर्मपर्यालोचनया कर्मानुसारिसृष्टिविरचनेन वेदमार्गरक्षणं नीतिः, तत्र निपुणा चतुरा। यद्यपि परमेश्वर्याः सर्वशक्तिमत्त्वं वर्तते, तथापि प्राचीनकर्मानुरोधेनैव सृष्टिरचनेति। निरवद्ययोऽनन्ता गुणा नित्या वा गुणाः यस्याः सा। तस्याः सकलसंसारविरचनेऽपि परिश्रमाभावमाह -नित्यस्मेरे। नित्यमनारतं स्मेरं हास्यं यस्याः सा। यथा हास्ये क्रियमाणे न श्रमः। एवं हास्येनैव सर्वं कर्म करोति श्रमाभावात्। तस्मात् यथा व्यासादिकृतपुराणेतिहासादयो निगमवत् सर्वत्र प्रतिपन्नाः त्वया कृताः तथा ममापि कर्तव्या। व्यासादिकर्तृकपुराणादिप्रवृत्तौ त्वमेव कारणम्। तदुक्तं कूर्मे-'वेदरूपा परा शक्तिः मम लोके प्रवर्तते। ययादिष्टानि कर्माणि कुर्वन्ति मुनिसत्तमाः। देवर्षयो राजर्षयो व्यासादिमुनयस्तथा। तैः

प्रणीतानि सर्वाणि कल्पसूत्रमुखानि वै। धर्मशास्त्रपुराणानि सेतिहासस्मृतीनि च। ज्ञेयानि वेदवचांसि नात्र कार्या विचारणा'॥

निधे इति पद्यस्य रहस्यार्थः—नित्यस्मेरे वाग्भवकूटं, निरवधिगुणे कामराजकूटं, नीतिनिपुणे प्रणवः, निराघातज्ञाने प्रणवः, नियमः प्रणवः, निर्मुक्ते शक्तिकूटम्। तथा स्वतन्त्रतन्त्रे—'वाग्भवः प्रथमा देवी प्रणवान्तः प्रकीर्तितः। कामराजो ध्रुवः शक्तिः प्रणवस्तदनन्तरम्'। इयं सर्वाङ्गसुन्दरी विद्या द्वितीया भवति। 'द्वितीया च महाविद्या प्रोक्ता सर्वाङ्गसुन्दरी। गोपनीया प्रयत्नेन मम प्राणाः प्रिया यदि। पुत्राणां च न वा वाच्या कोटिशः शपथान्मम। अतिप्रीत्या समुक्तं ते रक्षणीया सुगुह्यवत्'॥ अत्र सर्वाङ्गसुन्दरीजापकस्य निष्फलं जपतो नियमानियमो न दृष्टः। यथासुखं जपः। भवती मातृकामयी, वचनानि त्वन्मयानि, त्वया मातृकामयं जगत् संगुप्तमन्त्रकथनेन त्वया पुरा सर्वमनुक्तं सर्वमन्त्रकथनं कृतम्। तदेव तत् क्षन्तव्यं, न मम दोषः। इत्यादिवर्णक्षमापणहृदयम्। कूं ओं हूं सूं ओं॥

तात्पर्यदीपिनी

निधे इति। हे परमेश्वरि तव सकलसृष्टिमूलानां पुत्राणां पुत्रीणां सृष्टिः त्वया कृता। पुत्राः सूर्यमदनगोविन्दलक्ष्मीहंसेश्वरपवनमहादेवदुर्गाकलासरस्वत्याख्याः त्वदपत्यवर्गाः प्रसिद्धा एव। ते तवाज्ञाप्रभावात् त्वत्समानत्वात् सहस्रं सहस्रं भास्करादीन् सृष्टवन्तः। भवत्या अतिप्रियतमपात्राणि एते भगवत्याः सन्निधिं न परित्यजन्ति। एतेषु दशस्वपत्येषु वर्गेषु हरो महेश्वरः परब्रह्मैव श्रीकामेश्वरभट्टारकरूपं गृहीत्वा भगवत्या नायक इति प्रतिपादितः। अशरीरस्याप्यस्य परब्रह्मणः शरीरपरिग्रहणमपि भवत्या मायैव। एते कुमाराः परमेश्वरीमया इति कृत्वा अस्मिन्श्लोके दशभिः संबुद्धिपदैरुक्तक्रमेणोच्यन्ते॥

हे निधे निधिरूपे। तव प्रथमः कुमारः सूर्यो निधिरुच्यते, नितरां धीयन्ते यस्य मण्डले वेदा इति निधिः सूर्यः। तथा च श्रुतिः—वेदैरशून्यस्त्रिभिरेति सूर्यः इति। सूर्यमन्त्रः स्वप्रथमवर्णः स्वाहान्तः। नित्यस्मेरे नित्यस्मेराभिख्यकामदेवस्वरूपे। कामदेवरूपो नित्यस्मेरः भावहावविलासादिशृङ्गारचेष्टासंपन्नहासतया नित्यस्मेरः कामः। तस्य मन्त्रो द्वितीयो वर्णः। पुनर्निरवधिगुणे, अनन्तगुणगम्भीरपुरुषोत्तमस्वरूपे विष्णोः खल्वनन्तवाच्यता प्रसिद्धा। अन्तशून्योऽनन्तः, अत एव निरवधिगुणो विष्णुः स्वत्तृतीयः कुमारः, तस्य मन्त्रस्त्वद्विद्यातृतीयचतुर्थौ वर्णौ। पुनर्नीतिनिपुणे नीतिनिपुणा लक्ष्मीस्तद्रूपा सा खलु लक्ष्मीः राजधान्यां खेलन्ती तस्याश्चाञ्चल्यदोषपरिहारार्थं नीतिशास्त्रं प्रवर्तते। नीतिं दृष्ट्वा स्थिरा, अनीतिं दृष्ट्वा पलायते। अत एव नीतिनिपुणा कमला तस्या मन्त्रस्त्वद्विद्यायाः पञ्चमवर्ण एव। पुनर्निराधार-

ज्ञाने, निराधारं च तत् ज्ञानस्वरूपं ब्रह्म स एव कामेश्वरः यस्या वल्लभत्वेन वर्तते सा निराधारज्ञाना त्वमेव। तस्य मन्त्रः षष्ठसप्तमवर्णौ। पुनर्नियमपरचित्तैकनिलये – नियमपरा योगिनः तेषां चित्तं एको निलयो यस्य सः महासिद्धिप्रदो वायुर्भवत्येव तत्स्वरूपे। वायोः योगिचित्तनिलय इति संज्ञा। अतोऽयं षष्ठः पुत्रः युष्मन्मयः, तस्य मन्त्रो युष्मद्विद्याष्टमवर्णः, तत्स्वरूपे॥

पुनर्नियत्या निर्मुक्ते, नियतित्वेन निर्मुक्तः, अनियतचेष्टितः स्वतन्त्रो लोकविरुद्ध-वेषो महादेव एव सप्तमः तव पुत्रोऽयम्, तत्स्वरूपे। तस्य मन्त्रोऽपि त्वद्विद्यानवमदशम-वर्णाभ्यामुत्पन्नः। पुनर्निखिलनिगमान्तस्तुतिपदे, निखिला निगमान्ताः वेदान्ता एव स्तुतिपदानि यस्याः सा तथोक्ता। सर्ववेदान्तैः प्रकृतिरेव स्तूयते। प्रकृतिरूपा दुर्गा त्वमेव। तस्या मन्त्रस्त्वद्विद्यैकादशवर्णः। पुनर्निरातंके निर्गत आतङ्को द्वन्द्वजनितदुःखं यस्य सः तथा ब्रह्मा सर्वदा सृष्टिपरायणः ब्रह्माण्डे वर्तमानः, तद्रूपे, स तव नवमः पुत्रः। तन्मन्त्रस्त्व-द्विद्याद्वादशत्रयोदशवर्णयोरुत्पन्नः। पुनः नित्ये, सर्वेषु लोकेषु स्थावरजङ्गमेषु महाभूतेषु संहारकाले नष्टेषु, अविनाशस्वरूपिणी ब्रह्मरूपा नित्येत्युच्यते। सर्वशब्दमयी सर्वव्यापिनी सरस्वत्येवाविनाशित्वान्नित्येति सर्वत्र प्रसिद्धम्। 'वर्णात्मकाश्च ये शब्दा नित्याः सर्वगताश्च ते। पृथग्द्रव्यतया ते तु न गुणाः कस्यचिन्मता इति। तथा च श्रुतिः चत्वारि वाक् परिमिता पदानीत्याह। एवंप्रकारेण शब्दमयी सरस्वती नित्यैव। सा तु नित्यत्वात्तव दुहितेति वीरागमप्रसिद्धिः। तद्विद्या तु त्वद्विद्यायां चतुर्दशपञ्चादशाक्षरमय्येव। एवंभूतैः पुत्रैः पुत्रीभिश्च उपपन्ने शरीरे स्तूयमाने तत्स्तुतिचन्द्रपीयूषपानतृप्ता त्वं ममापि तव चरणकिङ्करस्य इमां स्तुतिं निगमय नितरां गमय श्रवणपथं प्रापयेति यावत्। अत्र निशब्दसूचितेनातिशयेन श्रवणप्रापण-मवधानपूर्वकं भवत्वित्याशंसा द्योत्यते॥

### पदार्थचन्द्रिका

एवं विस्तरतः कृतां स्तुतिं बह्वाख्याभिः संबोधयन् भवानीं श्रावयति – निधे इति। हे निधे भक्तेभ्योऽपेक्षितदानेऽपि पद्मादिनिधिवदरिक्ते इत्यर्थः। नित्यं स्मयत इति नित्यस्मेरा तत्संबोधनं तथा। नित्यमिति पाठे नित्यं सर्वकालं स्मेरे ईषद्धास्ययुक्ते, निरन्तरं ब्रह्मानन्दाविर्भावात्। निरवधिगुणेऽनन्तगुणे, निराधातज्ञाने नित्यज्ञाने, नियतः परिविसमेको मुख्यो निलय आश्रयो यस्याः सा तथा तत्संबोधनम्। नियमपरचित्तेति पाठे नियमपराः कृच्छ्रादिव्रतपरा ज्ञानिनस्तेषां चित्तमेको मुख्यो निलयो यस्याः सा तथा तत्संबोधनम्। भवान्याः सर्वचित्तनिलयत्वविज्ञानाभिप्रायेणैवमुक्तम्। नियत्या दैवेन निर्मुक्ते नित्यमुक्तत्वात्।

निखिलनिगमान्तस्तुतिभिः पद्यते ज्ञायत इति निखिलनिगमान्तस्तुतिपदा तत्संबोधनं तत्तथा। निगमान्ता उपनिषदः। निर्गतमातङ्कं भयं यस्याः भक्तानां इति निरातङ्का, तत्संबोधनं तथा। नित्ये विनाशरहिते। यथा ब्रह्मादीनां स्तुतिं निशमयसि तथा ममापीमां निशमय शृण्वित्यर्थः। नियतिर्नियमो दैवैरिति मेदिनीकरः॥ १०३॥

## डिण्डिमभाष्यम्

हे परमेश्वरि! सकलसृष्टिमूलानां तव पुत्राणां च सृष्टिस्त्वया कृता। वीरावली-महागमोक्तप्रकारेण भगवत्या एव जगन्मङ्गलभूताद्देहादुत्थिताः सूर्यमदनगोविन्दलक्ष्मीहंसेश्वर-पवनमहादेवदुर्गाब्रह्मसरस्वत्याख्यास्त्वदपत्यवर्गाः प्रसिद्धा एव, त्वदाज्ञाप्रभावात् स्वसमानान-न्यान् सहस्रं सहस्रं भास्करादीन् सृष्टवन्तस्ते खलु। किरणतन्त्रे सूर्यादिदशकुमारकुमारीवर्गाणा-मेकैकस्मात् सहस्रकिरणा उत्थिताः सूर्याः सहस्रमदनाश्च गोविन्दाश्च लक्ष्म्यश्च हंसेश्वरपवन-महादेवदुर्गाब्रह्माणः सरस्वत्यः सहस्रं सहस्रमिति दशसहस्रकिरणा भक्तस्य सन्निकटे सन्निधाने खेलन्ति, भगवत्या अपि अत्यन्तप्रेमपात्राणि। श्रीविद्यामन्त्रस्य दशखण्डात्मकस्य एकैक-खण्डस्याधिष्ठानदेवताभूता एते सर्वदा भगवत्याः सन्निधिं न परित्यजन्ति, तत्स्वरूपाश्च ते भगवतीस्वरूपाः। एतेषु दशस्वपत्यवर्गेषु हंसेश्वरः परब्रह्मैव श्रीकामेश्वरभट्टारकरूपं गृहीत्वा भगवत्या नायक इति प्रख्यातः, अशरीरस्याप्यस्य परब्रह्मणः शरीरपरिग्रहणमपि भगवत्या माययैव। एते दश कुमाराः परमेश्वरीमया इति कृत्वाऽत्र श्लोके दशभिः सम्बुद्धिपदैरुक्ताः क्रमेणोच्यन्ते॥

निधे निधिरूपे, तव प्रथमः कुमारः सूर्यो निधिरुच्यते, नितरां धीयन्तेऽस्य मण्डले वेदाः इति निधिः सूर्यभट्टारकः। तथा चोक्तं श्रुतौ—'वेदैरशून्यस्त्रिभिरेति सूर्यः' इत्यादि। अत एव त्वं सूर्यरूपासि। सूर्यमन्त्रः त्वत्प्रथमवर्णः स्वाहान्तः। नित्यस्मेरे नित्यस्मेराभिख्य-कामदेवस्वरूपे कामदेवरूपः खलु नित्यस्मेरः। भावहावविलासादिशृङ्गारचेष्टासंपन्नतया नित्यस्मेरः कामः। तस्य मन्त्रस्त्वद्द्वितीयो वर्णः स्वाहान्तः। निरवधिगुणे, अनन्तगुणगम्भीरपुरुषोत्तम-रूपविष्णोः खलु अनन्तत्वाच्यता प्रसिद्धा, कस्मिन्नंशेऽन्तशून्यता? सर्वेषु गुणेष्वेव अन्तशून्यो-ऽनन्तः, अत एव निरवधिगुणो विष्णुस्त्वद्रूपः त्वत्तृतीयकुमारश्च। तस्य मन्त्रस्त्वद्विद्यातृतीय-चतुर्थवर्णौ स्वाहान्तौ। नीतिनिपुणे नीतिनिपुणा लक्ष्मीस्तद्रूपे, सा खलु लक्ष्मीः अत एव नीतौ निपुणा भगवती कमलाभट्टारिका तस्याः मन्त्रस्त्वद्विद्यापञ्चमवर्ण एव वह्निजायान्तः। निराधार-ज्ञाने इति निराधारं च तद् ज्ञानस्वरूपं ब्रह्म स एव कामेश्वरः स यस्याः वल्लभत्वेन वर्तते सा निराधारज्ञाना त्वमेव। तस्य मन्त्रस्त्वद्विद्याषष्ठसप्तमवर्णावेव दहनदयितान्तौ। नियमपरचित्तैक-

निलये, नियमपरा योगिनस्तेषां चित्ते हृदयस्थाने निलयो यस्य, पञ्चप्राणादिरूपेण। स तु व्यक्तो योगिनामष्टमहासिद्धिप्रदो वायुर्भगवानेव, अत एव योगिचित्तनिलय इति वायोः संज्ञा, षष्ठोऽयं पुत्रो युष्मन्मयस्त्वद्रूपः सर्वसृष्टिकर्ता वेदस्थितानुलोमप्रतिलोममन्त्रेश्वरः। स च वायोर्मन्त्रः अनुलोमे विलोमे च तमेव प्राणेश्वरभट्टारकं प्रतिपादयति। स च मन्त्र उच्यते–'यंपेवेंद् षेधिद वदे स्यय मिशामद्यम धो अन्ते पो उ रवाश्ववि तो युनि ते स्रंहस नः पउ पाचिशु षभू यो वा आ॥ अयं प्रतिलोममन्त्रः। आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार। उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम्॥' इत्येतावेव मन्त्रौ देव्या अस्त्रस्य प्रयोगसंहारविधिप्रयुक्तौ तस्य मन्त्रौ स्वाहान्ताद् विद्याष्टमवर्णाद् उद्भूतौ॥

नियत्या निर्मुक्ते, नियत्या निर्मुक्तः अत एवानियतचेष्टितः स्वतन्त्रो लोकविरुद्धवेषोपपन्नो महादेवः, एतद्रूपे, सप्तमस्तव पुत्रोऽयं, तस्यास्य मन्त्रोऽपि त्वद्विद्यानवमदशमवर्णाभ्यां स्वाहान्ताभ्यामुत्पन्नः। निखिलनिगमान्तस्तुतिपदे–निखिला आत्मनि निगमवेदान्ता एव स्तुतिपदानि यस्याः सा तथोक्ता, सर्ववेदवेदान्तैः प्रकृतिरेव स्तूयते इति प्रकृतिरूपा दुर्गा स्तुतिप्रिया भगवती। तथा चोक्तं पुराणेषु–'चण्डिका स्तुतिपाठेन नमस्कारेण भास्करः। अलङ्कारैर्हरिस्तुष्येदभिषेकेण शङ्करः'। अत एव निखिलनिगमान्तस्तुतिपदे इति दुर्गा नाम त्वद्रूपा। तन्मन्त्रश्च त्वद्विद्यैकादशवर्णः स्वाहान्तः। निरातङ्के–निर्गत आतङ्को वन्ध्यत्वजनितदुःखं यस्य स निरातङ्कः ब्रह्मा, सर्वोऽपि तावत् पुन्नामनरकत्राणकारिणः पुत्रस्यालाभात्पुरुषो वन्ध्यो भूत्वा पापहेतुदर्शनः सञ्चरति। 'अपुत्रस्य गतिर्नास्ति दत्तमिष्टं हुतं सर्वं नष्टं भवति'। अत एव निरातङ्के। ब्रह्मा सर्वदा सृष्टिपरायणः। ब्रह्माण्डे वर्तमानाः सर्वे प्राणिनः ब्रह्मण एव पुत्र-पौत्र प्रपौत्र-तत्पुत्रादिरूपाः। अत एव तद्रूपे निरातङ्के। स च ब्रह्मभट्टारको नवमः ते पुत्रः। तन्मन्त्रस्तु त्वद्विद्याया द्वादशत्रयोदशचतुर्दशवर्णैः स्वाहान्तैरुत्पन्नः। बृहत्वाद्बृंहणत्वाद् सर्वजगति मुख्यब्रह्मणो मूलकत्वात् सर्ववेदस्य धारणाद् ब्रह्मा विशिष्टः, अत एव भगवतीविद्याया वर्णत्रयस्याधिपत्यं। नित्ये इति सर्वेषु लोकेषु स्थावरजङ्गमेषु महाभूतेषु संहारकाले नष्टेषु अविनाशस्वरूपिणी नादब्रह्मस्वरूपा सर्वेषामात्मनामन्तः अनाहतध्वनिरूपा परा पश्यन्ती मध्यमा वैखरी सार्थनिरर्थकसर्वशब्दमयी सर्वव्यापिनी सरस्वत्येव नित्या अविनाशित्वान्नित्येत्युच्यते, तद्रूपत्वं नित्यत्वं च सर्वत्र प्रसिद्धम्। 'वर्णात्मकाश्च ये शब्दा नित्याः सर्वगताश्च ते। पृथग्द्रव्यतया ते तु न गुणाः कस्यचिन्मताः'। इति मीमांसाभट्टाचार्याः। तथा च श्रुतिः 'चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति'। इति। सोऽयं गकार इति प्रत्यभिज्ञाबलात्

प्रत्यक्षप्रमाणेनैव वर्णानां नित्यत्वे सिद्धे दुष्टतार्किकैः शब्दोऽनित्यः कृतकत्वात् घटवत् इति वर्णात्मकशब्दानित्यताप्रतिपादकमनुमानं यत् कृतं तद् गलहस्तिकया प्रेरितमित्यवधारणीयम् । एवंप्रकारेण शब्दमयी सरस्वती नित्यैव, तद्रूपा त्वं, सा च दशमी तव दुहिता इति वीरावल्यागमप्रसिद्धिः, तद्विद्या तु स्वाहान्तं स्वद्विद्यापञ्चदशाक्षरमेव । एवंभूतैः पुत्रैः पुत्रीभिश्चोपपन्नशरीरे स्तूयमाने, तत्स्तुतिप्रपञ्चपीयूषपानतृप्ता त्वं ममापि तव चरणकिङ्करस्य इमां स्तुतिं निगमय नितरां गमय, श्रवणपथं प्रापय । अत्र निशब्दसूचितेनातिशयेन श्रवणप्रापणमवधानपूर्वकं भवेत् इत्याशंसा द्योतते ॥ १०३ ॥

## गोपालसुन्दरी

निधे इति – निधीयते जगदस्यामिति निधिः तेन जगदाधारभूत इत्यर्थः, नित्यस्मेरे नित्यस्मितोल्लासवदने जीवानां मिथ्याभूतजगदावेशनिरीक्षणं स्मितकारणं । ननु जगदाधारता शरीरस्य, स्मितयोगश्च शरीरिण इति परस्परविरुद्धं कथमेकत्र त्वयीति अत आह – निरवधिगुणे भक्तानुग्रहाय नानारूपगुणाविष्कारेण सर्वमुपपद्यते तवेति भावः । ननु यदि भक्तानुग्रहाय शरीरादिपरिग्रहस्तत्कथं कश्चिद्राजा कश्चित्तपस्वीत्यादि भक्तेषु तारतम्यमित्यत आह– नीतिनिपुणे भक्त्यनुकूलफलदानदक्षे । तर्हि कर्मपरतन्त्राहमित्यत आह – निराघातज्ञाने निराघातमप्रतिहतमन्यानधीनं ज्ञानमनुग्रहाय यस्याः । ननु स्वातन्त्र्येऽपि क्वचित्स्वल्पफलदातृत्वं क्वचिद्बहुफलदातृत्वं तवेति कथं वैषम्यमित्यत आह–नियमपरचित्तैकनिलये ध्यानपूजादिनियमपरचित्तमात्रस्थिते । तर्हि नियमपारतन्त्र्यमेवागतमत आह–नियत्या निर्मुक्ते नियमादिजन्यादृष्टानपेक्षे । एतादृश्यां मयि किं प्रमाणमत आह – निखिलनिगमान्ताः सकलवेदान्ता उपनिषद्भागा एव स्तुतिपदानि श्रुतिस्थानानि यस्याः । सकलवेदान्तैस्त्वमेव प्रतिपाद्यसे तेनोपनिषद्भागा एव त्वयि प्रमाणतमा इति भावः । 'स्तुतपदे' इति पाठे वेदान्तैः स्तुतं पदं चरणौ यस्या इत्यर्थः । केन प्रकारेण स्तुतपदेत्यत आह – निरातङ्के निर्गत आतङ्को बन्धजनिता भीतिर्यस्याः, नित्ये कालत्रयाबाध्ये । ममापीमां स्तुतिं निगमय निगमीकुरु । तत्करोतीत्यर्थे णिच् । वेदमिव सर्वसंप्रतिपन्नां कुरु इत्यर्थः । विष्णुपक्षे – हे निधे भक्तानां निधिस्वरूपे अन्यानि पदानि सप्तम्यन्तानि, तेन नित्यस्मेरत्वादिगुणयुक्ते त्वयि विषये इमां स्तुतिं निगमय, वेदवदादरणीयां कुर्वित्यर्थः ॥ १०३ ॥

## आनन्दलहरीटीका

इदानीं प्रार्थयते निधे इति । हे निधे शंखपद्मादिनिधिवत्सर्वप्रार्थनीये । ननु सर्वलोकप्रार्थनाभिरत्युद्विग्नाऽहं, त्वं किं प्रार्थयस इत्यत्राह – नित्यं सर्वदा स्मेरे ईषद्धास्ययुक्ते

सदा प्रसन्नमुखीति यावत्। तवोद्वेगो नास्त्येवेति भावः। ननु सर्वेषामिष्टाचरणं एकजनस्या-साध्यं, तदा च कथं सर्वेषु प्रार्थकेषु मम प्रसन्नमुखता स्यादित्यत्राह—निरवधय इयत्तया शक्त्या च अपरिमिता गुणा अनुग्रहादयो यस्यास्तादृशी। अनन्तशक्तिकानन्तगुणतया त्वयि सर्वेष्टदत्वं नानुपपन्नमिति भावः। ननु मम चेत्सर्वेष्टदत्वं, तदा कश्चित्सुखी कश्चिद्दीन इत्यादि वैषम्यं कुत इत्यत आह—नीतौ कर्मानुरूपफलदाने निपुणे चतुरे। यथा कश्चिन्नीतिनिपुणो राजा कर्मानुसारेण कस्मैचिद्ग्राममेकं ददाति, कस्मै तु दश ग्रामान्, तद्वत्। ननु कर्मणा-मतीन्द्रियतया कस्यचित्कर्मास्तीति कथं ज्ञातव्यम्, अत्राह—निराघातं निष्प्रतिबन्धकं सर्वगोचरं ज्ञानं यस्याः तादृशि, सर्वज्ञत्वात् तव अतीन्द्रियज्ञानं नानुपपन्नमिति भावः। ननु भवत्वेवं, तथाप्यतिदूरस्थानां कथं मयेष्टं कर्तव्यम्? तत्राह—नियमपराणां त्वद्भजनरूप-व्रतासक्तानां चित्तमेवैको मुख्यो निलयो वसतिस्थानं यस्याः तथाभूते॥

ननु तर्हि किं ब्रह्मेन्द्रादिवत् कश्चिदुत्तमो जीवोऽहं, नहि नहीत्याह—नियत्या अदृष्टेन निर्मुक्ते निःशेषेण त्यक्ते, अदृष्टात्यन्ताभाववतीत्यर्थः। ते त्वदृष्टवशादेव ब्रह्मादिपदं प्राप्ताः इति भावः। अत्र किं प्रमाणमित्यपेक्षायामाह—निखिलाः सर्वे निगमान्ताः वेदान्ताः उपनिषदः, त एव स्तुतिपदानि स्तवस्थानानि यस्याः, तथाभूते। स्तुतपदेति पाठे तैः स्तुतं पदं यस्या इत्यर्थः। निरञ्जनादिश्रुत्याकर्तृत्वादिप्रतिपादनात् इति भावः। स्तुतिप्रकारमेवाह—निर्गत आतङ्को भयं यस्यास्तादृशि, मृत्युर्धावति यद्भयादिति श्रवणात्। नित्ये उत्पत्ति-विनाशरहिते। एतावद्भिरलमिति स्वप्रार्थनीयमाह—इमां मम स्तुतिमपि मत्कृतस्तोत्रमपि निगमय निगमं वेदं कुरु, तत्करोतीत्यर्थे कारितं तव स्तावकत्वात् वेदो देवीसूक्तादिरूपो यथा सर्वप्रामाणिकसंगृहीतः, तथेमामपि कुर्विति भावः॥ १०३॥

—o—

॥ श्रीः ॥

# सौन्दर्यलहरी – द्वितीयभागः

## श्लोकानुक्रमणिका

# The Wave of Beauty

## ( SAUNDARYA LAHARĪ )

Obeisence to Sri Mahadeva, Sri Sankara and the galaxy of our teachers !

The Saundarya Lahari (Flood of Beauty) is a devotional hymn ***par excellence*** ascribed to the great Advaitic teacher, Śrī Śaṁkara-Bhagavatpādācārya, combining in itself a hymn of devotional prayer, a Mantra Śāstra and a spiritual (meditative) mode of worship of the Supreme Being (tantra). As a hymn of praise, it is suited to the novice in spiritual exercise, as a mantra śāstra it fulfills the material and spiritual needs of the seeker and as a tantra—it elucidates a spiritual discipline, calculated to lead the aspirant to liberation. In short, it is an invaluable vehicle of devotion and meditation for achieving the Puruṣārthas, Dharma, Artha and Kāma leading eventually to the final beatitude (mokṣa),—the ***summum bonum*** of human existence.

The hymn, in one hundred verses in the Śikhariṇī metre (with three more added by some), extols in its first part of fortyone verses, known generally as the Wave of Bliss (Ānanda Laharī), the dynamic aspect of Brahman, as Śakti, Her potency, manifestations for worship, and the modes of meditation internally in the microcosm; the rest of the poem, an exquisite and delicious literary masterpiece, bristling with suggestion and devotion—(styled the Flood of Beauty—Saundarya Laharī) contains a magnificent exposition of the beauties of the charming form of the Divine Mother, from head to foot, with a concluding prayer for her gracious bounty.

Under the guidance and gracious blessings of His Holincss, the Periyaval of Kanchi, a humble attempt is made herein to explain, in brief, the purport of this great hymn, together with a rendering, in English, for the lay reader. The commentaries by learned and experienced upāsakas, in the earlier part of this volume, provide material for a more intensive and detailed understanding of the intricacies of Devi worship explained in this poem.

VERSE—1.

Paramesvara becomes capable of creating the Universe, only when united with Sakti (Thee), but otherwise (when not so joined with Thee), He is incapable of even a stir. How then could one, who has not acquired merit (Puṇya—in this and previous births) worship Thee, or at least praise Thee, who is adored even by Vishnu, Siva, Brahma and others?

Śrī Śankara Bhagavatpāda commences the Ānandalaharī with the auspicious and pregnant expression, 'Śiva', providing therein a benedictory invocation to the Supreme Being.

The reference in this expression 'Śiva' is to Parameśvara, the transcendental, all-pervading, Supreme Parabrahman in his Niṣkala (static) aspect, described in the śrutis thus—"Not that which is conscious of the internal subjective world, not that which is conscious of the external world, nor that which is conscious of both, nor that which is a mass of consciousness, nor that which is simple consciousness, nor is it conscious. It is unseen by any sense-organ, not related to anything, incomprehensible by the mind, uninferable, unthinkable, indescribable, essentially of the self-alone, negation of all phenomena, the peaceful, all bliss and the non-dual." (Māṇdūkya Upaniṣad, VII)

Śakti is the primordial energy latent in this undifferentiated, self-luminous all-pervading consciousness, which manifests itself to create the universe after the great deluge or dissolution (Mahāpralaya). This Sakti is not different from consciousness (*Cit*), their relation being one of inseparable concord (avinābhāva sambandha) as between fire and its burning capacity (dāhakaśakti), a subject (guṇin) and its attributes (guṇāḥ) speech (vāk) and meaning (artha) etc. In other words, the one does not exist without the other; Śakti to create cannot exist without its possessor. The Sakti-bija comprising of 'a' and 'i' is essential in combination with 's' and 'v' for the formation of the name 'Śiva' to be articulated.

The stir (spanda) referred to in this verse is the desire to create and the manifestation of the static energy (Śakti) in its kinetic or dynamic aspect. At this stage, according to Āgama, Śakti becomes two-fold and functions as 'Citśakti' and māyā or jadaśakti, which evolve into the multitudinous animate and inanimate Universe. The following lines from the Sūta Samhitā Yajña (Chapter 13) are quoteworthy in this connection:—

'Cinmātrāśraya māyāyāḥ saktyākāre dvijottamāh;
Anupraviṣṭā yā samvinnirvikalpā svayamprabhā,
Sadākārā parānandā samśāyocchedakāriṇī;
Sā Śivā paramādevī śivābhinnā śivamkarī.
Jagatkāraṇamāpannaḥ śivo yo muktisattamāḥ;
Sā tasyāpi bhavecchaktiḥ tayā hīno nirarthakaḥ.

Obeisance or worship is three-fold;-bodily (Kāyika), Vocal (Vācika) and mental (mānasika). *Pranantum* meaning bowing is a form of bodily worship. To one who is

incapable of all the above three modes of worship, at least praising or stotra (*stotum*) is suggested in the verse.

The word ādi in the third line of the verse has been interpreted to mean (a) the devas, Indra and the other lords of the quarters (directions) or (b) the vedas or (c) the great devotees noted for Devi worship. Specific reference having been made to the Trinity (Hari, Hara and Viriñci) the word 'ādi' is held as denoting the lower rung of celestials like Indra and the lords of the quarters or directions by some scholars. The vedas which reveal the true nature of Brahman and Śakti, may also be indicated by 'ādi'. The verse 'Śrutīnām mūrdhāno (Verse No. 84 of Saundaryalaharī) lends support to this interpretation. The word 'ādi' may also refer to the great galaxy of Devi-worshippers-Devas and seers-among whom the celebrated are Manu, Candra. Kubera, Manmatha, Lopāmudrā, Sage Agastya, Skanda, Dattātreya, Indra and the sage Durvāsas. Some texts add Nandikeśvara, Sūrya, Yama, Saṁkara and Viṣṇu as well.

Commentators have read in this verse, many a mantra used for propitiating Devi. Kaivalyāśrama says that this verse indicates the 'Prāsāda' 'Anuttarā', the matṛkās, 'Vāgvādiñi', 'Śaivapañcākṣarī', 'Pāśādi-tryakṣarī' mantras, while Kāmeśvara Sūri would add 'Kādividyā' and 'Hadividyā'.

In fine, the 35 consonants severally and together representing the tattvas of the Āgama represent Śiva, and need the 16 vewels representing Śakti for their articulation. The matṛkās which are eternal sounds represent the Śiva-śakti Sāmarasya, from which the universe of śabda and artha are evolved.

The Tripurāmahimnopaniṣad says :

"Samapradhānau Samāsatvāu Samotayoḥ,
Samaśaktirajarā visvayoniḥ."

The Compound word 'Harihara viriñcādibhiḥ' iu the verse also indicates the praṇava 'Aum' which is a combine of 'a' 'u' and 'ṃ', representing Viṣṇu, Rudra and Brahmā respectively. Some scholars are of the view that this first verse of Saundaryalaharī indicates the Ṣoḍaśākṣarī mantra (16 lettered Śrīvidyā Mantra) since the author has introduced 16 words in the first half of the verse.

VERSE—2.

Collecting microscopic particles of the dust falling from Thy lotus-feet, Brahma creates the worlds in regular order (intact), Vishnu (in the form of Adisesha) bears them somehow with great effort (might) though with thousand heads and Siva reducing the particles into ashes besmears his body with them(Vibhuti).

In this and in the next verse, the great potency of the lotus feet of Devi is brought forth. The creation, protection and destruction of the entire Universe have become

possible for Brahmā, Viṣṇu and Śiva respectively, only through the power derived by them from Devi. The greatness of the Caraṇa or feet of the Supreme Being is extolled in the Śruti as "Caraṇam pavitram vitatam purāṇam". The worship of Devi's feet has been traditionally enjoined on Devi-worshippers. (Śrīpādukāṃ pūjayāmi namaḥ) This is indicative of the greatness and importance of Devi's lotus-feet.

Commentators refer to Devi's four feet (Caraṇas)-the śukla, rakta, miśra and nirvāṇa-the first two resting on the Ājñā cakra, the third on the Anāhata cakra, and the fourth on the thousand-petalled lotus on the head (Dvādaśānta) with Viṣṇu, Brahmā, Rudra and Sadāśiva as their respective deities. The Rakta and Sukla caranas (feet) stand for creation and protection, the miśra for dissolution and the Nirvāṇa Carana for final beatitude (or eternal supreme bliss). This is perhaps only an esoteric view. Other scholars are of the view that Devi's feet are only two and that Brahmā, Viṣṇu and Rudra derive their respective avocations from the different colours of the dust particles of Devi's lotus-feet (colours such as rakta, śukla, miśra etc.,)

It is significant that Bhagavatpada commences the work with an adoration of Devi's lotus-feet and concludes the Saundaryalaharī with almost similar praise of the greatness of Her lotus-feet (Verse No. 2 and Verse No. 98). The first verse is an introductory or benedictory one , and the last two verses (99 & 100) are phalaśruti or concluding verses. The second and the 98th verses glorify the greatness of Devi's feet.

The Upakrama (beginning) and Upasaṁhāra of this great stotra are typical of Devi Upāsana (worship) in which the Śrīpādukā is the centre of worship.

A great South Indian Scholar explains the meaning of this second verse graphically as follows :—The Divine mother was walking in the pleasure garden of Śrīpuram along with attendants. Brahmā after having had darśan of Devi, gathered the dust from the path on which Devi had trodden. With the aid of this dust Brahmā created the fourteen worlds. Viṣṇu as Ādiśeṣa, having known that all the worlds are only particles of the dust of Devi's feet, bears them on His heads with care and reverence. Rudra awaits the time of the Mahāpralaya (the great Deluge), to have the gains (dust from Devi's feet) derived by Brahmā and Viṣṇu. At that time He reduces the worlds (dust particles of Devi's feet) into ashes and besmears His body with that Vibhūti. 'Avikalān—The protection by Viṣṇu is upto the final dissolution; it also ensures the existence of the Universe in the regular order in which it has been created. Lokān—Fourteen worlds. They are—Bhūḥ, Bhuvaḥ, Suvaḥ, Mahaḥ, Janaḥ, Tapaḥ, and Satya and the nether worlds—Atala, Vitala, Sutala, Rasātala, Talātala, Mahātala and Pātāla. Saṁkṣubhya : with much concern.

## VERSE—3.

The particles of dust of Thy Lotus feet serve to remove the inner darkness of the ignorant (those who have not attained Tatva-jnana or divine knowledge). In other words, the dust is the sun that dispels the inner darkness of the ignorant or the worldly-minded.

The speck of the dust is a flood of fragrance emanating from the bunch of flowers of the Kalpaka tree of caitanya or clear consciousness, awakening the unknowing or dull-witted. To those in the grip of chill penury, they (the dust particles) are a string of gems of the Cintamani variety. And to those drowned in the ocean of earthly existence (Saṃsara—the ocean of births and deaths) that dust becomes the tusk of the wild boar of Muraripu i.e. Vishnu who incarnated as Varaha.

This verse is only a continution of the adoration of the dust of Devi's feet, described in the previous one. In the preceding verse, the importance of the dust to the Devatās has been brought out. In the present one, how the dust dispels ignorance (avidyā), dullness, poverty and attachment to worldly life in the case of mortals, is described.

When the sun does not shine, the world is shrouded in darkness. Light is essential for making things around us perceptible. So also ignorance (Avidyā i.e. lack of knowledge of the Supreme or Paramātman) envelops the soul and makes man incapable of knowing the reality of the soul (Jīva) and its identity with the Supreme Soul (Brahman). At dawn the Sun seems, to one standing on the sea-shore, to rise from an island in the middle of the sea. As the sun rises, darkness is dispelled and the entire world becomes active. The first line of this śloka compares the speck of dust from Devi's feet to the Sun. The imaginary place whence the dust rises is described as a city in the centre of an island in the mid-sea. Timiramihiroddīpanakari : promoting knowledge that dispels ignorance.

In the second line *caitanya*, which is the power that kindles the mind to know and understand the reality of the Jīva, is spoken of as a cluster of flowers of the Kalpaka tree (i.e. the tree of Atmajñāna). In the next line reference is made to the celestial gem, cintāmaṇi, which is capable of satisfying all desires of its possessor. The speck of dust of Devi's feet grants man's earthly desires and spiritual aspirations too. It may be noted that the abode of Devi is known as Cintāmaṇi-gṛha and the Māyā-bīja of Devi is termed 'Cintāmaṇibīja.

The last line of this verse draws a comparison between the particle of dust of Devi's feet and the tusk of Muraripu. *Muraripu* : Mura, a demon, was killed by Krishna, and Muraripu is an epithet of Krishna or Viṣṇu; and in this context, refers to the incarnation of Viṣṇu as Varāha-the wild boar. Hiraṇyākṣa stole the earth (Bhūloka) and disappeared with it into the under-world (Pātāla). At that time, Viṣṇu incarnated as a huge wild boar, reached pātāla, redeemed the earth from him and rose above the sea with the earth in his tusk. Even so, the dust of Devi's feet can salvage human beings from the cycle of births and deaths and lead them to eternal bliss. This verse connotes the importance of the worship of Devi's feet for those who desire worldly happiness, for shedding off the inner darkness of ignorance (avidyā), leading to knowledge of the Self and the consequent attainment of liberation or mokṣa-the supreme goal of mankind.

According to some of the commentators, this verse is indicative of the Kāmarāja-mantra that is to be meditated upon by votaries of Śrīvidyā. To those who lack

knowledge of Ātmavidyā, Devi dispels their ignorance; to the dull-witted, She grants discriminatory powers and to the needy She bestows more than what they desire for. Eventually She is the resurrector from worldly bondage. Hence Devi has been described as.

"Yā bhogadāyinī devī jīvanmuktipradā na sā;
Mokṣadā to na bhogāya Lalitā tūbhāyāpradā."

Anandagiri reads in this verse the Vaiṣṇavī mantra and the Nandikeśvara mantra.

VERSE—4.

Thou, the refuge of all the worlds! All Devas (gods) except Thee, vouchsafe protection to devotees and grant their desires by gestures of their hands. Thou alone doth not show forth the varada and abhaya (granting and protecting) gestures. It is so because Thy feet are by themselves powerful to protect those in the grip of fear and grant more than what is desired for by devotees.

The substance of the two preceding verses is elaborated in this verse. The word '*abhaya*' means freedom from fear. Vara, means grant of desires. One can see the postures of hands of deities (in general) in icons, sculptures or pictures of deities. The right hand of deities (generally) has the abhaya mudrā, with fingers upward denoting protection from fear and the left with the vara mudrā, with fingers pointing downwards (indicating granting of boons). In the case of deities having more than two hands, it is generally found that one of the hands on the right side is in the abhaya pose and one on the left side is in the vara pose. But these poses of hands are not always found in the case of Devi icons (of metal or stone) or even in Devi pictures. It may be noted that Devi is described here as having a sugarcane bow, string, añkuśa and arrows of flowers respectively in Her hands and not with abhaya and vara gestures. The Tantric texts also portray Devi as having the bow, string, añkuśa and arrows in Her four hands.

In this context, the term 'abhaya' means freedom from fear of the cycle of births and deaths. The word 'Vara' connotes satisfaction of all desires or kāma. This verse according to SriŚamkara Bhagavatpāda may imply that worship of Devi's feet (if properly carried out) will grant the fourfold goals of human life—Dharma, Artha, Kāma and Mokṣa, the two former leading to the latter two.

Some scholars are of the view that while even Brahmā, Viṣṇu and Rudra work for creation, protection and destruction, with effort, Devi has no function requiring effort. She is the source of all happiness, temporary or eternal, temporal or spiritual, and is also the refuge from all fear to those who devoutly worship Her feet.

In the Tanjavur District of Tamilnadu there is a sacred place called Āvadayarkoil, famous for its historic, ancient and architectural temple built by the great Tamil Saint

Māṇikkavācakar. Devi Yogāmbikā (inside this shrine) here, has no image-representation as in other temples. Only two feet (carved in stone), placed on a pedestal are worshipped as Devi. It seems that the inner meaning of the fourth verse of Saundaryalaharī is fully exemplified by this symbolic form of Devi in the temple at Āvadayārkoil.

In this verse the superiority of Devi above all gods and the importance of the worship of Devi's feet are brought out. Scholars hold that the Bālā mantra, "Aiṁ, Klīṁ, Sauḥ" is indicated by this verse. According to Ānandagiri, the Kāmakalā mantra, by which happiness in this world and mokṣa at the end, are vouchsafed, is brought forth.

VERSE—5.

Once Vishnu having worshipped Thee—the bestower of all prosperity on those who worship Thee (through mind, speech and body) -concentrated on Thy Divine Form-and assuming the form of a woman, impassioned even Siva, (the Controller of all senses, the destroyer of the three cities and the enemy of Kama). Has not Smara (Kama, the God of Love) because of having bowed before Thee, obtained a personality, pleasingly attractive to the eyes of Rati (his beloved) and become capable of generating passion even in the minds of great sages.

This verse refers to the anecdote of the Mohini incarnation of Mahā Viṣṇu at the time when nectar (amṛta) was got after churning of the ocean of milk by the Devas and Asuras. This Mohini Avatāra was repeated at the desire of Śiva. Śiva the greatest of yogins, who had controlled all senses and passions and burnt Kāma (the God of passion) to ashes, was kindled by passion on seeing the Mohini form of Viṣṇu and lost himself. Viṣṇu was able to get this enticing form because of his worship of Devi. It is also said that Viṣṇu once took the form of a beautiful woman and killed a demon by name Kanakaswami and that Śiva was enticed by this feminine form of Viṣṇu. As already stated, Viṣṇu was one of the great Devi-ūpāsakās and the seer of the Vaiṣṇavī (Devi) mantra.

Another anecdote given in this context is follows :—Lord Śive saved the world by destroying Tripurāsura. The other Asuras feared destruction of their entire community by Śiva. In a group they prayed to Viṣṇu to guard them from Śiva's wrath and protect their clan from total annihilation. Viṣṇu promised to do so, and was thinking about the means of appeasing Śiva. Sage Nārada came there just then. He noticed anxiety writ large on Viṣṇu's face. On knowing the reason for his anxiety, Nārada advised Viṣṇu to worship Devi in the form of Śrīcakra and meditate upon Devi by repeating the Devi Mahamantra which would satisfy all desires. Then Nārada departed. Viṣṇu went in search of a preceptor who could initiate him in the Devi mantra. Not long after, Devi Parāśakthi appeared before Viśṇu and taught him the mantra and the mode of worshipping the Śrī cakra. By prolonged worship and meditation of Devi, Viṣṇu got the power to assume any form that he wished for. And thus he had the all-attractive Mohini Avatara and deceived the asuras while serving amṛta (nectar) got from the churning of the ocean. On a glance at this Mohini, Śiva's mind got stirred and he lost control of his senses.

Smara (the god of love) also worshipped Śrīcakra, meditated on Devi chanting the 'Pañcadaśākṣarī' (15 lettered spell) mantra and thereby got the grace of Devi, for converting himself into such a beautiful person as that anyone on whom he (Kāma) cast his eyes, would be infused with passion instantaneously. Thus Kāma acquired the power to captivate the entire world of living beings. Even great sages like Viśvāmitra had to abandon penance on being kindled by Kāma (passion).

Rati is said to be beauty par excellence among the fair sex. The fact, that she had been attracted by Smara's (Kāma's) personality, indicates that Kāma commonly known as Manmatha is the supreme beauty among men. The words 'ratinayanalehyena vapuṣā' in the verse refers to the anecdote that Kāma, after having been burnt to ashes by the fire that emanated from Śiva's third eye, got back to life by Devi's grace and has since then been invisible to all eyes except his wife's [Rati's] alone. Even with an invisible formless existence Kāma's success is due to Devi's grace.

That sages with long years of penance to their credit, and Lord Śiva, the supreme controller of the senses, were unable to resist the temptation of passion by perceiving Kāma and Viṣṇu [in Mohinī form] respectively, because Kāma and Viṣṇu had been blessed by Devi on being pleased by their worship, are positive proofs of the extraordinary power and greatness of Devi. Indirectly this verse tells about the efficacy and greatness of Śrīvidyā, [the worship of Devi through the tāntric modes of Her worship].

The Vāmakeśvara Tantra also confirms thus :

"Etāmeva purārādhya vidyāṃ trāilokyamohinīṃ;
Trāilokyaṃ mohayāmāsa kāmārim bhagavān Hariḥ.
Kāmadevopi deveśīṃ devīṃ tripurasundarīṃ;
Samārādhyābhavalloke sarvasāubhāgyasundaraḥ.

It may be noted in this context that Viṣṇu and Smara [Manmatha] are the ṛsiṣ [sages] to whom the Kāma and Vaiṣṇavī mantras were revealed. Again in this verse an implied reference to the worship of Devi in the form of 'Śrīcakra' and the greatness of the Pancadaśākṣarī and other Devi mantras is found. According to Acyutānanda and some others this verse contains the 'Sādhya-Siddhāsana-Vidyā, 'H' and 'Ra' in the word Hariḥ 'Ī' and anusvara Ṁ in the word Jananīṁ spell the bija 'Hrīm'. The word Smara [Kāma] indicates the Kāmabīja 'Klīm'; 'Va' in the word Vapuṣā, 'Le' in the word 'lehyena' and anusvāra-Ṁ in the word 'munīnāṃ', spell the bīja 'Blem'. The mantra is 'Hrīṁ, Klīṁ, Bleṁ.

Anandagiri traces in this verse the mantras of the Bhūpura (Trailokyamohanacakra) in the Śrīcakra, Aṁ, Āṁ, Sauḥ.

VERSE—6.

Oh Daughter of the snow-clad Himalaya mountain ! Cupid, the God of Love has only a bow made of flowers, with its string comprised of a cluster of honey-bees, and has arrows barely five. The spring

season is his vassal (assistant) and the Southern breeze, his war-chariot. Yet (with such frail equipment, bodiless and alone though he be, Cupid (Manmatha) subjugates the entire universe, having obtained some favour through Thy benign side-glance.

In this verse the anti-thesis between the inadequacy of the ability and equipment of Kāma (Cupid) and his unfailing all-round success are presented in relief. His weapons have neither the strength nor the fitness to be used or wielded, in his unceasing effort over all sentient beings. Nor has he limbs to enable him to wield them.

It is well known that Kāma was burnt to ashes by the fire of Śiva's third (forehead) eye, when he attempted to kindle passion in Śiva towards Pārvati, and that later, in response to the prayers of Rati, he (Kāma) was restored to life, but without a body. Kama's bow is of tender flowers (short-lived), and hence incapable of being bent. The bow-string of honey-bees, ever unsteady, always on the move in search of honey and in disarray can hardly be strung. The arrows are only five, so few as to be exhausted in no time. Nor have they darts to pierce. These arrows are — Aravinda (lotus), Aśoka (Peepul), Cūta (mango), Navamallikā (Jasmine), and Nīlotpala (blue lotus). Spring season, Kāma's mate is transitory-lasting for only two months in a year—and so of doubtfnl assistance. The southern breeze, not blowing always, nor blowing everywhere, invisible and formless, can hardly be useful as a chariot. Kāma himself—having no body—cannot avail himself of these weapons and assistance. He has no arms to wield weapons, nor the feet to stand in the chariot and fight, no eyes to see, nor mouth to speak to his vassal, Vasanta. But it is a paradox, that with all these disabilities, inadequate and useless weapons, and unreliable assistance, Kāma is able to subjugate the entire world of living beings, nay the universe in its entirety. Undoubtedly this is because of his obtaining the gracious blessing of Devi through her side-glances. That with the omnipotent grace of Devi, even the impossible can be achieved is the purport of this verse.

Manmatha (Kāma) is one of the twelve celebrated devotees of Devi. The Manmatha or Kāma-Vidyā was revealed to him by Devi herself, in response to his prolonged worship and meditation of Devi for three years through the Meru-mantra (Vide Tripurā-rahasya, Māhātmya Khanda Chapter 26). It is related that Devi conferred on Kāma, parts (amśas) of her own bow and arrows.

According to some scholars the Kāma-bīja (Klīṁ) is traceable in this verse—from the letters 'Ka' in 'Kāmapi' 'l' in Malaya, 'ī' in 'Maurvī' and the bindu 'ṃ' in 'Pauṣpam' joined together. Ānandagiri traces in this verse the bījamantra of the Cakreśvarī of the Sarvāśāparipūraka Cakra. viz. 'Aiṁ, Klīṁ, Sauḥ.

VERSE—7.

May Thou with Thy breasts like the temples (mastakas) of a young elephant, with Thy slender waist which is adorned by a jingling girdle-string (belt-like gold waist-ornament called Odyana having small tinkling gold bells attached), with Thy face blooming like the

autumnal full moon (of the Saradritu, withThy four hands holding bow, arrows, noose and goad (ankusa), Thou the pride of Siva (the Ahamkararupini of Siva), manifest Thyself before us.

[The word 'Karikalabha' has been interpreted as the young elephant and as the best of tuskers. The comparison of Devi's face to the autumnal moon is intended to bring out the glory, the calmness and the grace of Her form. While the moon suffers dimunition during the dark fortnight and has an indelible spot, Devi's face is full with all the Kalās and without any blemish as in the following description, 'Kalaṅkakārśyanirmukta Śaraccandranibhānanā. Emphasis is laid on the glorious fullness and the blemishless character of Devi's countenance.

This verse portrays the Divine Mother (Citśakti) in Her gross (sthūla) form as distinguished from the subtle (sūkṣma) and sublime or superb (para or vāsanāmaya) forms. In this gross form, physical features such as hands, feet, face etc., are attributed to the divine form so as to facilitate contemplation by the aspirant (Sādhaka). Followers of the Samayācāra school of Devi worship, meditate on Devi's form and worship Her mentally in the various (cakras) or psychic centres-lotuses inside the human body. At each end of the Merudaṇḍa or the spinal cord that runs from the skull downwards to the anus, there is a thousand-petalled lotus. The one at the lower end is called the Kula-sahasrāra and the other at the upper end, almost at the centre of the head (brain), is known as the Akula-sahasrāra. Between these two thousand-petalled lotuses and along the spinal cord (merudaṇḍa) there are six plexuses or lotuses. They are :—(1) Mūlādhāra-a four-petalled lotus, a little above the anus, (2) Svādhiṣṭhāna, or six-petalled lotus, at the root of the genital organ, (3) Maṇipūraka-a ten-petalled lotus at the navel; (4) Anāhata-a twelve-petalled lotus in the heart region, (5) Viśuddhi-a sixteen-petalled lotus in the region of the neck and (6) Ājñā-a two-petalled lotus between the eye-brows.

Devi manifests Herself to the sādhaka (devotee) in the Maṇipūraka cakra, when the devotee in his internal mental worship makes all kinds of offerings to Devi, and bedecks Her with all varieties of jewels and ornaments made of resplendent rubies, emerald etc. Thence Devi is conducted, to the Anāhata cakra in Her upward move to the Akula Sahasrāra (the upper thousand-petalled lotus). The lustrous and wonderful form of Devi as meditated upon and apparent in the Anāhata cakra, is described in this verse. More information about Samaya form of Devi worship is given in verses 9, 10, 19, and 21. This form of Devi is the most popular one and appealing to most aspirants. The Rudra Yāmala says :—

"Dhyānāśaktau tu sarvāsāṃ dhyānaṃ tattu samaṃ smṛtaṃ". Sage Durvasas in the first verse of his Śaktimahimna stotra describes Devi in similar lines :—

"Ādikṣānta samastavarṇasumaṇiprote vitānaprabhe,
Brahmādipratimābhikīlitaṣadādhārābjakakṣonnate;
Brahmāṇḍābjamahāsane janani te mūrtimbhaje cinmayīṃ,
Sauṣumnāyatapītapaṅkajamahāmadhyatrikoṇasthitāṃ.

